प्राचेतसा नाम धनुर्वेदस्य पारगाः ॥ ११ ॥ अपृथग्धर्म्मचरणास्तेऽतप्यन्त महत्तपः॥ दशवर्षसहस्राणि समुद्रसलिलेशयाः ॥ १२ ॥ प्रजापतित्वं
संप्राप्य भार्य्या तेषां च मारिष ॥ अभवं[1]द्भवशापेन तस्यां दक्षोऽभवत्ततः॥१३॥ असृजन्मनसा दक्षः प्रजाः पूर्वं चतुर्विधाः॥ नावर्द्धन्त च तास्तस्य
अपध्याता हरेण तु ॥ १४ ॥ मैथुनेन ततः सृष्टिं कर्त्तुमैच्छत्प्रजापतिः ॥ असिक्नीमावहद्भार्य्यां वीरणस्य[2] प्रजापतेः ॥१५॥ तस्य पुत्रसहस्रं तु वैरण्यां
समपद्यत ॥ नारदोक्ता भुवश्चान्तं गता ज्ञातुं च नागताः ॥ १६ ॥ दक्षपुत्रसहस्रं च तेषु नष्टेषु सृष्टवान् ॥ शबलाश्वास्तेऽपि गता भ्रातॄणां पदवीं हर !
॥१७॥ दक्षः क्रुद्धः शशापाथ नारदं जन्म चाप्स्यसि॥नारदो ह्यभवत्पुत्रः कश्यपस्य मुनेः पुनः॥१८॥ यज्ञे ध्वस्तेऽथ दक्षोऽपि शशापोग्रं महेश्वरम्॥
स्तुत्वात्वामुपचारैश्च पूजयिष्यंति शंकर ॥१९॥ जन्मान्तरेऽपि वैरेण ते विनश्यन्ति शङ्कर ! ॥ तस्माद्वैरं न कर्तव्यं कदाचिदपि केनचित् ॥ असिक्न्यां
( महिष्यां ) जनयामास दक्षो दुहितरो ह्यथ ॥ २० ॥ षष्टिं कन्या रूपयुता द्वे चैवांगिरसे ददौ ॥ द्वे प्रादात्स कृशाश्वाय दश धर्म्माय चाप्यथ
॥२१॥ चतुर्दश कश्यपाय अष्टाविंशतिमिन्दवे ॥ प्रददौ बहुपुत्राय सुप्रभां भामिनीं तथा ॥ २२ ॥ मनोरमां भानुमतीं विशालां बहुदामथ ॥ दक्षः
प्रादान्महादेव ! चतस्रोऽरिष्टनेमये ( ने ) ॥ २३ ॥ स कृशाश्वाय च प्रादात्सुप्रजां च तथा जयाम् ॥ अरुन्धती वसुर्या( र्जा )मी लम्बा भानुर्मरु
द्वती ॥ २४ ॥ सङ्कल्पा च मुहूर्त्ता च साध्या विश्वा च ता दश ॥ धर्म्मपत्न्यः समाख्याताः कश्यपस्य वदाम्यहम ॥२५॥ अदितिर्दितिर्दनुः काला
ह्यनायुः सिंहिका मुनिः ॥ कद्रूः[3] साध्या इरा क्रोधा विनता सुरभिः खगा ॥ २६ ॥ विश्वेदेवास्तु विश्वायाः साध्या साध्यान्व्यजायत ॥ मरुत्वत्यां मरु
त्वन्तो वसोस्तु वसवस्तथा ॥ २७ ॥ भानोस्तु भानवो रुद्र ! मुहूर्त्तांच मुहूर्त्तजाः ॥ लम्बायाश्चैव घोषोऽथ नागवीथिस्तु या ( जा ) मितः ॥ २८ ॥
पृथिवीविषयं सर्वमरुत्वत्यां व्यजायत ॥ सङ्कल्पायास्तु सर्वात्मा जज्ञे संकल्प एव हि ॥ २९ ॥ आपो ध्रुवश्च सोमश्च धरश्चैवानिलोऽनलः ॥
प्रत्यूषश्च प्रभासश्च वसवो नामभिः स्मृताः॥३०॥आपस्य पुत्रो वेतुण्डिः ( ण्डः ) श्रमः श्रान्तो ध्वनिस्तथा॥ध्रुवस्य पुत्रो भगवान्कालो लोकप्रकालनः
॥ ३१ ॥ सोमस्य भगवान्वर्चा वर्चस्वी येन जायते॥धरस्य पुत्रो द्रुहिणो हुतहव्यवहस्तथा ॥ ३२ ॥ मनोहरायां शिशिरः प्राणोऽथ रमणस्तथा ॥
अनिलस्य शिवा भार्य्या तस्याः पुत्रः पुलोमजः ॥ ३३ ॥ अविज्ञातगतिश्चैव द्वौ पुत्रावनिलस्य तु ॥ अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत
॥ ३४ ॥ तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजः ॥ अपत्यं कृत्तिकानां तु कार्त्तिकेय इति स्मृतः ॥ ३५ ॥ प्रत्यूषस्य विदुः पुत्रमृषिं नाम्ना तु

---

१ अभवत्तनुतस्तेषां० । २ आर्षः प्रयोगः । ३ विश्वा साध्या इरा० पा० ।

देवलम् ॥ विश्वकर्म्मा प्रभासस्य विख्यातो देववर्द्धकिः ॥ ३६ ॥ अजैकपादहिर्बुध्न्यस्त्वष्टा रुद्रश्च वीर्य्यवान् ॥ त्वष्टुश्चाप्यात्मजः पुत्रो विश्वरूपो महातपाः ॥ ३७ ॥ हरश्च बहुरूपश्च त्र्यम्बकश्चापराजितः ॥ वृषाकपिश्च शम्भुश्च कपर्दी रैवतस्तथा ॥ ३८ ॥ मृगव्याधश्च शर्वश्च कपाली च महामुने ! ॥ एकादशैते कथिता रुद्रास्त्रिभुवनेश्वराः ॥ ३९ ॥ अदित्यां कश्यपाच्चैव सूर्य्या द्वादश जज्ञिरे ॥ विष्णुः शक्रोऽर्य्यमा धाता त्वष्टा पूषा तथैव च ॥ ४० ॥ विवस्वान्सविता चैव मित्रो वरुण एव च ॥ अंशुमांश्च भगश्चैव आदित्या द्वादश स्मृताः ॥ ४१ ॥ सप्तविंशतिः सोमस्य पत्न्यो नक्षत्रसंज्ञिताः ॥ हिरण्यकशिपुर्दित्यां हिरण्याक्षोऽभवत्तदा ॥ ४२ ॥ सिंहिका चाभवत्कन्या विप्रचित्तिपरिग्रहा ॥ हिरण्यकशिपोः पुत्राश्चत्वारः पृथुलौजसः ॥ ४३ ॥ अनुह्लादश्च ह्लादश्च प्रह्लादश्चैव वीर्य्यवान् ॥ संह्लादश्चावमस्तेषां प्रह्लादो विष्णुतत्परः ॥ ४४ ॥ संह्लादपुत्र आयुष्माञ्छिबिर्बाष्कल एव च ॥ विरोचनश्च प्राह्लादिर्बलिर्जज्ञे विरोचनात् ॥ ४५ ॥ बलेः पुत्रशतं त्वासीद्बाणज्येष्ठं वृषध्वज ! ॥ हिरण्याक्षसुताश्चासन्सर्व एव महाबलाः ॥ ४६ ॥ उत्कुरः शकुनिश्चैव भूतसन्तापनस्तथा ॥ महानागो महाबाहुः कालनाभस्तथापरः ॥ ४७ ॥ अभवन्दनुपुत्राश्च द्विमूर्द्धा शंकरस्तथा ॥ अयोमुखः शंकुशिराः कपिलः शम्बरस्तथा ॥ ४८ ॥ एकचक्रो महाबाहुस्तारकश्च महाबलः ॥ स्वर्भानुर्वृषपर्वा च पुलोमा च महासुरः ॥ ४९ ॥ एते दनोः सुताः ख्याता विप्रचित्तिश्च वीर्य्यवान् ॥ स्वर्भानोः सुप्रभा कन्या शर्मिष्ठा वार्षपर्वणी ॥५०॥ उपदानवी[1] हयशिराः प्रख्याता वरकन्यकाः ॥ वैश्वानरसुते चोभे पुलोमा कालका तथा ॥ ५१ ॥ उभे ते तु महाभागे मारीचेस्तु परिग्रहः ॥ ताभ्यां पुत्रसहस्राणि षष्टिर्दानवसत्तमाः ॥ ५२ ॥ पौलोमाः कालकञ्जाश्च मारीचतनयाः स्मृताः ॥ सिंहिकायां समुत्पन्ना विप्रचित्तिसुतास्तथा ॥ ५३ ॥ व्यंशः शल्यश्च बलवान्नभश्चैव महाबलः ॥ वातापिर्नमुचिश्चैव इल्वलः खसृमांस्तथा ॥ ५४ ॥ अञ्ज(न्त)को नरकश्चैव कालनाभस्तथैव च ॥ निवातकवचा दैत्याः प्रह्लादस्य कुलेऽभवन् ॥ ५५ ॥ षट् सुताश्च महासत्त्वास्ताम्रायाः परिकीर्त्तिताः ॥ शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिके ॥ ५६ ॥ शुकी शुकानजनयदुलूकी प्रत्यलूककान् ॥ श्येनी श्येनांस्तथा भासी भासान् गृध्रांश्च गृध्र्यपि ॥ ५७ ॥ शुच्यौदकान्[2]पक्षिगणान्सुग्रीवी तु व्यजायत ॥ (अश्वानुष्ट्रान् गर्दभांश्च ताम्रावंशः प्रकीर्त्तितः ॥५८॥) विनतायास्तु पुत्रौ द्वौ विख्यातौ गरुडारुणौ॥ सुरसायाः सहस्रं तु सर्पाणाममितौजसाम् ॥ ५९ ॥ काद्रवेयाश्च फणिनः सहस्रममितौजसः ॥ तेषां प्रधाना भूतेश ! शेषवासुकितक्षकाः ॥ ६० ॥

१ औपदानवीति पा० । २ स्थलोदका०पा० ।

शङ्खः श्वेतो महापद्मः ( शंखः ) कम्बलाश्वतरौ तथा ॥ एलापत्रस्तथा नागः कर्कोटकधनञ्जयौ ॥६१॥ गणं क्रोधवशं विद्धि ते च सर्वे च दंष्ट्रिणः॥ क्रोधा तु जनयामास पिशाचांश्च महाबलान् ॥ ६२ ॥ गास्तु वै जनयामास सुरभिर्महिषांस्तथा ॥ इरा वृक्षलतावल्लीस्तृणजातीश्च सर्वशः ॥ ६३ ॥ खगा च यक्षरक्षांसि मुनिरप्सरसस्तथा ॥ अरिष्टा तु महासत्त्वान् गन्धर्वान्समजीजनत् ॥ ६४ ॥ देवा एकोनपञ्चाशन्मरुतो ह्यभवन्निति ॥ एकज्योतिश्च द्विर्ज्योतिचतुर्ज्योतिस्तथैव च ॥६५॥ एकशुक्रो द्विशुक्रश्च त्रिशुक्रश्च महाबलः ॥ईदृक् सदृक् तथान्यादृक् ततः प्रतिसदृक् तथा ॥ ६६ ॥ मितश्च समितश्चैव सुमितश्च महाबलः ॥ ऋतजित्सत्यजिच्चैव सुषेणः सेनजित्तथा ॥ ६७ ॥ अतिमित्रोऽप्यमित्रश्च दूरमित्रोऽजितस्तथा ॥ ऋतश्च ऋतधर्म्मा च विहर्त्ता वरुणो ( चमसो ) ध्रुवः ॥ ६८ ॥ विधारणश्च दुर्मेधा अयमेकगणः स्मृतः ॥ ईदृशश्च सदृक्षश्च एतादृक्षो मिताशनः ॥ ६९ ॥ एतेनः प्रसदृक्षश्च सुरतश्च महातपाः ॥ हेतुमान्प्रसवस्तद्वत्सुरभश्च महायशाः ॥ ७० ॥ नादिरुग्रो ध्वनिर्भासो विमुक्तो विक्षिपः सहः ॥ द्युतिर्वसुरनाधृष्यो लाभ कामो जयी विराट् ॥ ७१ ॥ उद्वेषणो गणो नाम वायुस्कन्धे तु सप्तमे ॥ एतत्सर्वं हरे रूपं राजानो दानवाः सुराः ॥ ७२ ॥ सूर्य्यादि परिवारेण मन्वाद्या ईजिरे हरिम्॥७३॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे उत्तानपादवंशादिवर्णनं नाम षष्ठोऽध्यायः॥६॥ रुद्र उवाच ॥ सूर्य्यादिपूजनं ब्रूहि कृतं स्वायम्भुवादिभिः ॥ भुक्तिमुक्तिप्रदं सारं व्यास ! संक्षेपतः परम् ॥ १ ॥ हरिरुवाच ॥ सूर्य्यादिपूजां वक्ष्यामि धर्म्मकामादिकारिकाम् ॥२॥ ॐ सूर्य्यासनाय नमः ॥ ॐ नमः सूर्य्यमूर्त्तये ॥ ॐ ह्रां ह्रीं सः सूर्य्याय नमः ॥ ॐ सोमाय नमः ॥ ॐ मङ्गलाय नमः॥ ॐ बुधाय नमः ॥ ॐ बृहस्पतये नमः ॥ ॐ शुक्राय नमः ॥ ॐ शनैश्चराय नमः ॥ ॐ राहवे नमः ॥ ॐ केतवे नमः ॥ ॐ तेजश्चण्डाय नमः ॥ ३ ॥ आसनावाहनं पाद्यमर्घ्यमाचमनं तथा ॥ स्नानं वस्त्रोपवीतञ्च गन्धपुष्पं च धूपकम् ॥ ४ ॥ दीपकं च नमस्कारं प्रदक्षिणविसर्ज्जने ॥ सूर्य्यादीनां सदा कुर्य्यादिति मन्त्रैर्वृषध्वज ! ॥ ५ ॥ ॐ ह्रां शिवाय नमः ॥ ॐ ह्रां शिवमूर्तये शिवाय नमः ॥ ॐ ह्रां हृदयाय नमः ॥ ॐ ह्रीं शिरसे स्वाहा ॥ ॐ ह्रूं शिखायै वषट् ॥ ॐ ह्रैं कवचाय हुं ॥ ॐ ह्रौं नेत्रत्रयाय वौषट् ॥ ॐ ह्रः अस्त्राय नमः ॥ ॐ ह्रां सद्योजाताय नमः ॥ ॐ ह्रीं वामदेवाय नमः ॥ ॐ ह्रूं अघोराय नमः ॥ ॐ ह्रैं तत्पुरुषाय नमः॥ॐ ह्रौं ईशानाय नमः ॥ ॐ ह्रीं गौर्य्यै नमः ॥ ॐ ह्रीं गुरुभ्यो नमः ॥ ॐ ह्रौं इन्द्राय नमः ॥ ॐ ह्रौं चण्डाय नमः ॥ ॐ ह्रां अघोराय नमः ॥ ॐ वासुदेवासनाय नमः ॥ ॐ वासुदेवमूर्त्तये नमः ॥

१ एतदादौ ह्रांह्रीमित्येवमादिक्रमेण बीजपाठः क्वचित् । २ शिरसे नम इत्यादिक्रमेण पाठान्तरम् । ३ अत्र ह्रौंह्रोभित्यादौ सर्वत्र ह्रामिति पाठः ।

ॐ अं ॐ नमो भगवते वासुदेवाय नमः ॥ ॐ आं ॐ नमो भगवते सङ्कर्षणाय नमः ॥ ॐ अं ॐ नमो भगवते प्रद्युम्नाय नमः ॥ ॐ अः ॐ नमो भगवते अनिरुद्धाय नमः ॥ ॐ नारायणाय नमः ॥ ॐ तत्सद्ब्रह्मणे नमः ॥ ॐ ह्रां विष्णवे नमः ॥ ॐ क्ष्रौं नमो भगवते नरसिंहाय नमः ॥ ॐ भूः ॐ नमो भगवते वराहाय नमः ॥ ॐ कं टं पं शं वैनतेयाय नमः ॥[1] ॐ जं खं रं[2] सुदर्शनाय नमः ॥ ॐ खं[3] ठं फं षं गदायै नमः ॥ ॐ वं[4] लं मं क्षं पाञ्चजन्याय नमः ॥ ॐ घं ढं भं हं श्रियै नमः ॥[5] ॐ गं डं वं सं पुष्ट्यै नमः ॥ ॐ धं[6] षं वं सं वनमालायै नमः ॥ ॐ सं दं लं श्रीवत्साय नमः ॥ ॐ ठं[7] चं भं यं कौस्तुभाय नमः ॥ ॐ गुरुभ्यो नमः ॥ ॐ इन्द्रादिदिक्पालेभ्यो नमः ॥ ॐ विष्वक्सेनाय नमः ॥ ६ ॥ आसनादीन्हरेरेतैर्मन्त्रैर्दद्याद्वृषध्वज ! ॥ विष्णुशक्त्याः सरस्वत्याः पूजां शृणु शुभप्रदाम् ॥ ७ ॥ ॐ ह्रीं सरस्वत्यै नमः ॥ ॐ ह्रां हृदयाय नमः ॥ ॐ ह्रीं शिरसे नमः ॥ ॐ ह्रूं शिखायै नमः ॥ ॐ ह्रैं कवचाय नमः ॥ ॐ ह्रौं नेत्रत्रयाय नमः ॥ ॐ ह्रः अस्त्राय नमः ॥ ८ ॥ श्रद्धा ऋद्धिः कला मेधा तुष्टिः पुष्टिः प्रभा मतिः ॥ ॐ ह्रींकाराद्या नमोऽन्ताश्च सरस्वत्याश्च शक्तयः ॥ ९ ॥ क्षेत्रपालाय नमः ॥ ॐ गुरुभ्यो नमः ॥ ॐ परमगुरुभ्यो नमः ॥ १० ॥ पद्मस्थायाः सरस्वत्या आसनाद्यं प्रकल्पयेत् ॥ सूर्यादीनां स्वकैर्मन्त्रैः पवित्रारोहणं तथा ॥ ११ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सूर्य्यादीनां सरस्वत्याश्च पूजनं नाम सप्तमोऽध्यायः ॥ ७ ॥

हरिरुवाच ॥ भूमिष्ठे मण्डपे स्नात्वा मण्डले विष्णुमर्चयेत् ॥ पञ्चरंगिकचूर्णेन वज्रनाभं तु मण्डलम् ॥ १ ॥ षोडशैः कोष्ठकैस्तत्र सम्मितं रुद्र ! कारयेत् ॥ चतुर्थपंचकोणेषु सूत्रपातं तु कारयेत् ॥ २ ॥ कोणसूत्रादुभयतः कोणा ये तत्र संस्थिताः ॥ तेषु चैव प्रकुर्वीत सूत्रपातं विचक्षणः ॥ ३ ॥ तदनन्तरकोणेषु एवमेव हि कारयेत् ॥ प्रथमा नाभिरुद्दिष्टा मध्ये रेखाप्रसंगमे ॥ ४ ॥ अन्तरेषु च सर्वेषु अष्टौ चैव तु नाभयः ॥ पूर्वमध्यमनाभिभ्यामर्थं सूत्रं तु भ्रामयेत ॥५॥ अन्तरा स द्विजश्रेष्ठः पादोनं भ्रामयेद्धर !॥ अनेन नाभिसूत्रस्य कर्णिकां भ्रामयेच्छिव ! ॥ ६ ॥ कर्णिकाया द्विभागेन केसराणि विचक्षणः ॥ तदग्रेण सदा विद्वान्दलान्येवं समालिखेत् ॥ ७ ॥ सर्वेषु नाभिक्षेत्रेषु मानेनानेन सुव्रत ! ॥ पद्मानि तानि कुर्वीत देशिकः परमार्थवित् ॥ ८ ॥ आदिसूत्रविभागेन द्वाराणि परिकल्पयेत् ॥ द्वारशोभां तथा तत्र तदर्द्धेन तु कल्पयेत् ॥ ९ ॥ कर्णिकां पीतवर्णेन सितरक्तादिकेसरैः ॥

१ ॐ कं ठं टं वैन० पा० । २ ॐ सं रं० पा० । ३ खं चं फं वं ॐ नमो गदायै नमः । ४ ॐ वं शं मं क्षं० । ५ ॐ चं ढं० । ६ ॐ वं रं मंतुष्ट्यै नमः । ॐ षं वं रं वन० । ७ ॐ कंतं चं पं० । ८ इदमर्धपद्यमन्यत्र नास्ति । ९ नाभिभ्यामपसूत्रं तु० पा० । १० विद्वान्देवानेवं सदा० पा० ।

अन्तरं नीलवर्णेन दलानि असितेन च ॥ १० ॥ कृष्णवर्णेन रजसा चतुरश्रं प्रपूरयेत् ॥ द्वाराणि शुक्लवर्णेन रेखाः पंचै च मण्डले ॥ ११ ॥
सिता रक्ता तथा पीता कृष्णा चैव यथाक्रमम् ॥ कृत्वैवं मण्डलश्चादौ न्यासं कृत्वार्चयेद्धरिम् ॥ १२ ॥ हृन्मध्ये तु न्यसेद्विष्णुं कण्ठे सङ्कर्षणं तथा ॥
प्रद्युम्नं शिरसि न्यस्य शिखायामनिरुद्धकम् ॥ १३ ॥ ब्रह्माणं सर्वगात्रेषु करयोः श्रीधरं तथा ॥ अहं विष्णुरिति ध्यात्वा कर्णिकायां न्यसेद्धरिम् ॥ १४ ॥
न्यसेत्सङ्कर्षणं पूर्वे प्रद्युम्नं चैव दक्षिणे ॥ अनिरुद्धं पश्चिमे च ब्रह्माणं चोत्तरे न्यसेत् ॥ १५ ॥ श्रीधरं रुद्रकोणेषु इन्द्रादीन्दिक्षु विन्यसेत् ॥ ततोऽभ्यर्च्य
च गन्धाद्यैः प्राप्नुयात्परमं पदम् ॥ १६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपूजोपयोगिवज्रनाभमण्डलनिरूप
णं नामाष्टमोऽध्यायः ॥ ८ ॥ हरिरुवाच ॥ समये ( या ) दीक्षितः शिष्यो बद्धनेत्रस्तु वाससा ॥ अष्टाहुतिशतं तस्य मूलमन्त्रेण होमयेत् ॥ १ ॥
द्विगुणं पुत्रके होमं त्रिगुणं साधके मतम् ॥ निर्वाणदेशिके रुद्र ! चतुर्गुणमुदाहृतम् ॥ २ ॥ गुरुविष्णुद्विजस्त्रीणां हन्ता बध्यस्त्व(श्च)दीक्षितैः ॥ अथ
दीक्षां प्रवक्ष्यामि धर्माधर्मक्षयङ्करीम् ॥ ३ ॥ उपवेश्य बहिः शिष्यान्धारणं तेषु कारयेत् ॥ वायव्या कलया रुद्र शोष्यमाणान्विचिंतयेत ॥४॥ आग्ने
य्या दह्यमानांश्च प्लावितानम्भसा पुनः ॥ तेजस्तेजसि तं जीवमेकीकृत्य समाक्षिपेत् ॥ ५ ॥ प्रणवं चिन्तयेद्व्योम्नि शरीरेऽन्यत्तु कारणम् ॥ एकैकं यो
जयेत्तत्र क्षेत्रज्ञं देहकारणात् ॥ ६ ॥ उत्पाद्य योजयेत्पश्चादेकैकं वृषभध्वज ॥ मण्डलादिष्वशक्तस्तु कल्पयित्वाऽर्चयेद्धरिम् ॥ ७ ॥ चतुर्द्वारं भवेत्त
च्च ब्रह्मतीर्थादनुक्रमात ॥ हस्तं पद्मं समाख्यातं पत्राण्यङ्गुलयः स्मृताः ॥ ८ ॥ कर्णिका तलहस्तन्तु नखान्यस्य तु केसराः ॥ तत्रार्चयेद्धरिं ध्यात्वा सू
र्य्येन्द्वग्न्यन्तरेव च ॥ ९ ॥ तं हस्तं पातयेन्मूर्ध्नि शिष्यस्य तु समाहितः ॥ हस्ते विष्णुः स्थितो यस्माद्विष्णुहस्तस्ततस्त्वयम् ॥ नश्यन्ति स्पर्शनात्त
स्य पातकान्यखिलानि च ॥ १० ॥ गुरुः शिष्यं समभ्यर्च्य नेत्रे बद्धे तु वाससा ॥ देवस्य प्रमुखं कृत्वा पुष्पमेवार्पयेत्ततः ॥ पुष्पं निपतितं यत्र मूर्ध्नो
देवस्य शार्ङ्गिणः ॥ ११ ॥ तन्नाम कारयेत्तस्य स्त्रीणां नामांकितं स्वयम् ॥ शूद्राणां दाससंयुक्तं कारयेत्तु विचक्षणः ॥ १२ ॥ इति श्रीगारुडे महापुराणे
पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुदीक्षानि० नाम नवमोऽध्यायः ॥ ९ ॥ हरिरुवाच ॥ श्र्यादिपूजां प्रवक्ष्यामि स्थण्डिलादिषु सिद्धये ॥ श्रीं ह्रीं
महालक्ष्म्यै नमः ॥ श्रां श्रीं श्रूं श्रैं श्रौं श्रः क्रमाद्धृदयं च शिरः शिखाम् ॥ कवचं नेत्रमस्त्रं च आसनं मूर्त्तिमर्चयेत् ॥ १ ॥ मण्डले पद्मगर्भे च चतु

१ दलानि च सितेन० पा० । २ रेखाः पञ्चममण्डले० पा० । ३ द्विजस्त्रीणां हन्ता वध्यश्च दीक्षि पा० । गुरुविष्णुशिवादीनां होमा वेद्यश्च दीक्षितैः पा० ।
४ आर्षं नपुंसकत्वम् ।

द्वारि रजोऽन्विते ॥ चतुःषष्ट्यन्तमष्टादि खांक्षे खाक्ष्यादि मण्डलम् ॥२॥ खाक्षीन्दुसूर्य्यगं सर्वं खादिवेदेन्दुवर्त्तनात् ॥ लक्ष्मीमंगानि चैकस्मिन्कोणे दुर्गां गणं गुरुम् ॥३॥ क्षेत्रपालमथाग्न्यादौ होमाञ्जुहाव कामभाक् ॥ ॐ घं टं डं हं श्रीमहालक्ष्म्यै नमः॥४॥ अनेन पूजयेल्लक्ष्मीं पूर्वोक्तपरिवारकैः॥ ॐ सौं सरस्वत्यै नमः॥ ॐ ह्रीं सौं सरस्वत्यै नमः॥५॥ ॐ ह्रीं वदवदवाग्वादिनि स्वाहा ॐ ह्रीं सरस्वत्यै नमः॥६॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे लक्ष्म्यर्चननिरूपणं नाम दशमोऽध्यायः॥१०॥ हरिरुवाच॥ नवव्यूहार्चनं वक्ष्ये यदुक्तं कश्यपाय हि॥ जीवमुत्क्षिप्य मूर्द्धन्यं नाभ्यां व्योम्नि निवेशयेत्॥१॥ ततो रमिति बीजेन दहेद्भूतात्मकं वपुः॥ यमित्यनेन बीजेन तच्च सर्वं विनाशयेत्॥२॥ लमित्यनेन बीजेन प्लावयेत्सचराचरम् ॥ वमित्यनेन बीजेन चिन्तयेदमृतं ततः ॥३॥ ततो बुद्बुदमध्ये तु पीतवासाश्चतुर्भुजः ॥ अहं मतस्तथात्मानं ध्यानेन परिचिन्तयेत् ॥ ४ ॥ मन्त्रन्यासं ततः कुर्यात्त्रिविधं करदेहयोः ॥ द्वादशाक्षरबीजेन उक्तबीजैरनन्तरम् ॥ ५ ॥ षडङ्गेन ततः कुर्य्यात्साक्षाद्येन हरिर्भवेत् ॥ दक्षिणाङ्गुष्ठमारभ्य मध्याङ्गुष्ठं दले न्यसेत ॥ ६ ॥ मध्ये बीजद्वयं न्यस्य न्यसेदङ्गे ततः पुनः ॥ हृच्छिरासि शिखावर्म्मवक्त्राक्ष्युदरपृष्ठतः ॥ ७ ॥ बाह्वोश्च करयोर्जान्वोः पादयोश्चापि विन्यसेत् ॥ पद्माकारौ करौ कृत्वा मध्येऽङ्गुष्ठं निवेशयेत ॥ ८ ॥ चिन्तयेत्तत्र सर्वेशं परं तत्त्वमनामयम् ॥ क्रमाच्चैतानि बीजानि तर्जन्यादिषु विन्यसेत् ॥ ९ ॥ ततो मूर्द्धाक्षिवक्त्रेषु कण्ठे च हृदये तथा ॥ नाभौ गुह्ये तथा जान्वोः पादयोर्विन्यसेत्क्रमात् ॥ १० ॥ पाण्योः षडङ्गबीजानि न्यस्य काये ततो न्यसेत् ॥ अङ्गुष्ठादिकनिष्ठान्तं विन्यसेद्बीजपञ्चकम् ॥ ११ ॥ करमध्ये नेत्रबीजमङ्गन्यासेऽप्ययं क्रमः ॥ हृदये हृदयं न्यस्य शिरः शिरसि विन्यसेत् ॥ १२ ॥ शिखायां तु शिखां न्यस्य कवचं सर्वतस्तनौ ॥ नेत्रं नेत्रे विधातव्यमस्त्रञ्च करयोर्द्वयोः ॥ १३ ॥ तेनैव च दिशो बद्ध्वा पूजाविधिमथाचरेत् ॥ हृदये चिन्तयेत्पूर्वं योगपीठं समाहितः ॥ १४ ॥ धर्मं ज्ञानं च वैराग्यमैश्वर्यं च यथाक्रमम् ॥ आग्नेयादौ च पूर्वादावधर्मादींश्च विन्यसेत् ॥ १५ ॥ एभिः परिच्छन्नतनुं पीठभूतं तदात्मकम् ॥ अनन्तं विन्यसेत्पश्चात्पूर्वकायोन्नतं स्थितम् ॥ १६ ॥ ततो विद्यात्सरोजातं दलाष्टसमदिग्दलम् ॥ सिताब्जं शतपत्राढ्यं विप्रकीर्णोर्द्ध्वकर्णिकम् ॥ १७ ॥ ध्यात्वा वेदादिना पश्चात्सूर्य्यसोमानलात्मनाम् ॥ मण्डलानि क्रमादेवमुपर्य्युपरि चिन्तयेत् ॥ १८ ॥ ततः पूर्वादिदिक्संस्थाः शक्तीः केशवगोचराः ॥ विमलाद्या न्यसेदष्टौ नवमीं कर्णिकागताम् ॥ १९ ॥ एवं ध्यात्वा सम

१ खाखेखाक्षादि० पा०। स्वाक्षस्वाक्षादि० पा०। २ लं घं टं भें श्रीमहा० पा०। घं टं भं श्रीमहाल० पा०। ३ ॐ सर०। ४ मध्यांगुलिषु संन्यसेत् । मध्ये बीजं न्यसेदङ्गे सर्वाङ्गेषु ततः पुनः० पा०। ५ जातं दलमष्टदलान्वितम्० पा०।

भ्यर्च्य योगपीठमनन्तरम् ॥ मनसावाह्य तत्रेशं हरिं शार्ङ्गं न्यसेत्पुनः ॥ २० ॥ हृदयादीनि पूर्वादिचतुर्दिग्दलयोगतः ॥ मध्ये नेत्रं तु कोणेषु अस्त्रमन्त्रं न्यसेत्ततः ॥ २१ ॥ सङ्कर्षणादिबीजानि पूर्वादिक्रमयोगतः ॥ द्वारि पूर्वे परे चैव वैनतेयं तु विन्यसेत् ॥ २२ ॥ सुदर्शनं सहस्रारं दक्षिणे द्वारि विन्यसेत् ॥ श्रियं दक्षिणतो न्यस्य लक्ष्मीमुत्तरतस्तथा ॥ २३ ॥ द्वार्य्युत्तरे गदां न्यस्य शङ्खं कोणेषु विन्यसेत् ॥ देवदक्षिणतः शार्ङ्गं वामे चैव सुधीर्न्यसेत् ॥ २४ ॥ तद्वत्खङ्गं तथा चक्रं न्यसेत्पार्श्वद्वयोर्द्वयम् ॥ ततोऽन्तर्लोकपालांश्च स्वदिग्भेदेन विन्यसेत् ॥ २५ ॥ वज्रादीन्यायुधोन्येव तथैव विनिवेशयेत् ॥ ऊर्ध्वं ब्रह्म तथानन्तमधश्च परिचिन्तयेत् ॥ २६ ॥ सर्वं ध्यात्वेति संपूज्य मुद्राः सन्दर्शयेत्ततः ॥ अञ्जलिः प्रथमा मुद्रा क्षिप्रं देवप्रसाधनी ॥ २७ ॥ वन्दनी हृदयासक्तात्सार्द्धं दक्षिणतोन्नता ॥ ऊर्द्धांगुष्ठो वाममुष्टिर्दक्षिणांगुष्ठबन्धनः ॥ २८ ॥ सव्यस्य तस्य चांगुष्ठो यः स ऊर्द्धः प्रकीर्त्तितः ॥ तिस्रः साधारणा ह्येता मूर्त्तिभेदेन कल्पिताः ॥ २९ ॥ कनिष्ठादिप्रमोकेण अष्टौ मुद्रा यथाक्रमम् ॥ अष्टानां पूर्वबीजानां क्रमशस्त्ववधारयेत् ॥ ३० ॥ अंगुष्ठेन कनिष्ठान्तं नामयित्वांगुलित्रयम् ॥ मुद्रेयं नरसिंहस्य न्युब्जं कृत्वा करद्वयम् ॥ ३१ ॥ सव्यहस्तं तथोत्तानं कृत्वोर्द्धं भ्रामयेच्छनैः ॥ नवमीयं स्मृता मुद्रा वराहाभिमता सदा ॥ ३२ ॥ मुष्टिद्वयमथोत्तानमृज्वैकैकेन मोचयेत् ॥ उत्कुञ्चयेत्सर्वमुक्ता अंगमुद्रेयमुच्यते ॥ ३३ ॥ मुष्टिद्वयमथो बद्धा एवमेवानुपूर्वशः ॥ दशानां लोकपालानां मुद्राश्च क्रमयोगतः ॥ ३४ ॥ सुरमाद्यं द्वितीयं च उपान्त्यश्चान्त्यमेव च ॥ वासुदेवो बलः कामो ह्यनिरुद्धो यथाक्रमम् ॥ ३५ ॥ प्रणवस्तत्सदित्येतद् हुं क्षौं भूरिति मन्त्रकाः ॥ नारायणस्तथा ब्रह्मा विष्णुः सिंहो वराहराट् ॥ ३६ ॥ सितारुणहरिद्राभा नीलश्यामललोहिताः ॥ मेघाग्निमधुपिंगाभा वर्णतो नवनामकाः ॥ ३७ ॥ कं टं पं शं गरुत्मान्स्याज्जं खं वं च सुदर्शनम् ॥ षं चं फं षं गदा देवी वं लं मं क्षं च शंखकम् ॥ ३८ ॥ घँ ढँ भँ हँ भवेच्छ्रीश्च गं जं वं शं च पुष्टिका ॥ घं वं च वनमाला स्याच्छ्री वत्सं दं सं भवेत् ॥ ३९ ॥ छं[11] डं पं यं कौस्तुभः प्रोक्तश्चानन्तो ह्यहमेव च ॥ इत्यंगानि यथायोगं देवदेवस्य वै दश ॥ ४० ॥ गरुडोऽम्बुजसंकाशो गदा चैवासिताकृतिः ॥ पुष्टिः शिरीषपुष्पाभा लक्ष्मीः काञ्चनसन्निभा ॥ ४१ ॥ पूर्णचन्द्रानिभः शंखः कौस्तुभस्त्वरुणद्युतिः ॥ चक्रं सूर्य्यसहस्राभं

---

१ पार्श्वे द्वयंद्वयामिति पा० । २ न्यायुधांश्चैव० पा० । न्यायुधादेवं० पा० । ३ आर्षः प्रयोगः । ४ भूतिभे० पा० । ५ तो नरनायकाः । ६ कटपेगं गरुत्मान्स्याज्जस्वरंच० पा० । ७ खंवंफंषंगदादेवी चानो (ली) में क्षेच० । ८ घँढँवँभँ० । ९ गंजंडं० । १० श्रीवत्सवंभभवेत्० पा० । ११ तथैवकौस्तुभः० पा० । ठैतेषांकौस्तु० ।

श्रीवत्सः कुन्दसन्निभः ॥ ४२ ॥ पञ्चवर्णनिभा माला ह्यनन्तो मेघसन्निभः ॥ विद्युद्रूपाणि चास्त्राणि यानि नोक्तानि वर्णतः ॥ ४३ ॥ अर्घ्यपाद्यादि वै दद्यात्पुण्डरीकाक्षविद्यया ॥ ४४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नवव्यूहार्चनं नामैकादशोऽध्यायः ॥ ११ ॥ हरिरुवाच ॥ पूजानुक्रमसिद्ध्यर्थं पूजानुक्रम उच्यते ॥ ॐ नम इत्यादौ संस्मृतिः परमात्मनः ॥ १ ॥ यं रं वं लमिति कायशुद्धिः ॥ ॐ नम इति चतुर्भुजात्मनिर्माणम् ॥२॥ ततस्त्रिविधः करकायन्यासः । ततो हृदिस्थयोगपीठपूजा । ॐ अनन्ताय नमः । ॐ धर्माय नमः । ॐ ज्ञानाय नमः । ॐ वैराग्याय नमः । ॐ ऐश्वर्य्याय नमः । ॐ अधर्म्माय नमः । ॐ अज्ञानाय नमः । ॐ अवैराग्याय नमः । ॐ अनैश्वर्य्याय नमः । ॐ पद्माय नमः । ॐ आदित्यमण्डलाय नमः । ॐ चन्द्रमण्डलाय नमः । ॐ वह्निमण्डलाय नमः । ॐ विमलायै नमः । ॐ उत्कर्षिण्यै नमः । ॐ ज्ञानायै नमः । ॐ क्रियायै नमः । ॐ योगायै नमः । ॐ प्रह्व्यै नमः । ॐ सत्यायै नमः । ॐ ईशानायै नमः । ॐ सर्वतोमुख्यै नमः । ॐ सांगोपांगाय हरेरासनाय नमः ॥ ततः कर्णिकायाम्—अं वासुदेवाय नमः । आं हृदयाय नमः । ईं शिरसे नमः । ऊं शिखायै नमः । ऐं कवचाय नमः । औं नेत्रत्रयाय नमः । अः फट् अस्त्राय नमः । आं सङ्कर्षणाय नमः । अं प्रद्युम्नाय नमः । अः अनिरुद्धाय नमः । ॐ अः नारायणाय नमः । ॐ तत्सद्ब्रह्मणे नमः । ॐ हुं विष्णवे नमः । क्षौं नरसिंहाय भूर्वराहाय कं वैनतेयाय जं खं वं सुदर्शनाय खं चं फं षं गदायै वं लं मं क्षं पांचजन्याय घं ढं भं हं श्रियै गं डं वं शं पुष्ट्यै धं वं वनमालायै दं शं श्रीवत्साय छं डं यं कौस्तुभाय शं शार्ङ्गाय इं इषुधिभ्यां चं चर्मणे खं खड्गाय इन्द्राय सुराय पतये अग्नये तेजोधिपतयेयमायधर्माधिपतयेक्षंनैर्ऋतायरक्षोधिपतये वरुणाय जलाधिपतये यों वायवे प्राणाधिपतये धां धनदाय धनाधिपतये हां ईशानाय विद्याधिपतये ॐ वज्राय शक्त्यै ॐ दण्डाय खड्गाय ॐ पाशाय ध्वजाय गदायै त्रिशूलाय लं अनन्ताय पातालाधिपतये खं ब्रह्मणे सर्वलोकाधिपतये ॐ नमो भगवते वासुदेवाय नमः ॥ ॐ ॐ नमः । ॐ नं नमः । ॐ मों नमः । ॐ ॐ भं नमः । ॐ गं नमः । ॐ वं नमः । ॐ तें नमः । ॐ वां नमः । ॐ सुं नमः । ॐ दें नमः । ॐ वां नमः । ॐ यं नमः । ॐ ॐ नमः । ॐ नं नमः । ॐ मों नमः । ॐ नां नमः । ॐ रां नमः । ॐ यं नमः । ॐ णां नमः । ॐ यं नमः । ॐ नंमों भं गं वं तें वांसुंदेवांयं ॐ नमो नारायणाय नमः । ॐ पुरुषोत्तमाय नमः ॥ ३ ॥ नमस्ते पुण्डरीकाक्ष नमस्ते विश्वभावन ॥

१ कं टं जं शं वैन० । कैवन० । २ आर्षो गुणः । रावि प० ।

सुब्रह्मण्य नमस्तेऽस्तु महापुरुष पूर्वज ॥ ४ ॥ होमकर्मणि चैतेषां स्वाहान्तमुपकल्पयेत् ॥ एवं जप्त्वा विधानेन शतमष्टोत्तरं तथा ॥ ५ ॥ अर्घं दत्त्वा जितं तेन प्रणामं च पुनःपुनः ॥ ततोऽग्नावपि सम्पूज्य तं यजेत यथाविधि ॥ ६ ॥ देवदेवं स्वबीजेन अंगादिभिरथाच्युतम् ॥ पूर्वमुल्लिख्य चाभ्युक्ष्य प्रणवेन तु मन्त्रवित् ॥ ७ ॥ भ्रामयित्वानलं कुंडे पूजयेच्च शुभैः फलैः ॥ पूर्वं तत्सकलं ध्यात्वा मण्डले मनसा न्यसेत् ॥ ८ ॥ वासुदेवाख्यतत्त्वेन हुत्वा चाष्टोत्तरं शतम् ॥ संकर्षणादिबीजेन यजेत्षट्कं तथैव च ॥ ९ ॥ त्रयंत्रयं तथांगानामेकैकान्दिक्पतींस्तथा ॥ पूर्णाहुतिं तथैवांते दद्यात्सम्यगुपस्थितः ॥ १० ॥ वागतीते परे तत्त्वे आत्मानं च लयं नयेत् ॥ उपविश्य पुनर्मुद्रां दर्शयित्वा नमेत्पुनः ॥ ११ ॥ नित्यमेवंविधं होमं नैमित्ते द्विगुणं भवेत् ॥ गच्छगच्छ परं स्थानं यत्र देवो निरञ्जनः ॥ १२ ॥ गच्छन्तु देवताः सर्वाः स्वस्थानस्थितिहेतवे ॥ सुदर्शनः श्रीहरिश्च अच्युतः स त्रिविक्रमः ॥ १३ ॥ चतुर्भुजो वासुदेवः षष्ठः प्रद्युम्न एव च ॥ संकर्षणः पूरुषोऽथ नवव्यूहो दशात्मकः ॥ १४ ॥ अनिरुद्धो द्वादशात्मा अत ऊर्द्ध्वमनन्तकः॥ एते एकादिभिश्चक्रैर्विज्ञेया लक्षिताः सुराः ॥ १५ ॥ चक्रांकितैः पूजितः स्याद्गृहे रक्षेत्सदा नरैः॥ ॐ चक्राय स्वाहा, ॐ विचक्राय स्वाहा, ॐ सुचक्राय स्वाहा, ॐ महाचक्राय स्वाहा, ॐ महाचक्राय असुरान्तकृत् हुं फट् ॐ हुं सहस्रार हुं फट् ॥ १६ ॥ द्वारकाचक्रपूजेयं गृहे रक्षाकरी शुभा ॥ १७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पूजानुक्रमनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥

हरिरुवाच ॥ प्रवक्ष्याम्यधुना ह्येतद्वैष्णवं पंजरं शुभम् ॥ नमोनमस्ते गोविंद चक्रं गृह्य सुदर्शनम् ॥ १ ॥ प्राच्यां रक्षस्व मां विष्णो ! त्वामहं शरणं गतः ॥ गदां कौमोदकीं गृह्ण पद्मनाभ नमोऽस्तु ते ॥ २ ॥ याम्यां रक्षस्व मां विष्णो ! त्वामहं शरणं गतः ॥ हलमादाय सौनन्दे नमस्ते पुरुषोत्तम ॥ ३ ॥ प्रतीच्यां रक्ष मां विष्णो ! त्वामह शरणं गतः ॥ मुसलं शातनं गृह्य पुण्डरीकाक्ष रक्ष माम् ॥ ४ ॥ उत्तरस्यां जगन्नाथ ! भवन्तं शरणं गतः ॥ खड्गमादाय चर्म्माथ अस्त्रशस्त्रादिकं हरे ! ॥ ५ ॥ नमस्ते रक्ष रक्षोघ्न ! ऐशान्यां शरणं गतः ॥ पांचजन्यं महाशंखमनुघोष्यं च पंकजम् ॥ ६ ॥ प्रगृह्य रक्ष मां विष्णो आग्नेय्यां रक्ष सूकर ॥ चन्द्रसूर्य्यं समागृह्य खड्गं चान्द्रमसं तथा ॥ ७ ॥ नैर्ऋत्यां मां च रक्षस्व दिव्यमूर्ते नृकेसरिन् ॥ वैजयन्तीं सम्प्रगृह्य श्रीवत्सं कण्ठभूषणम् ॥ ८ ॥ वायव्यां रक्ष मां देव हयग्रीव नमोऽस्तु ते ॥ वैनतेयं समारुह्य त्वंतरिक्षे जनार्दन ! ॥ ९ ॥ मां रक्षस्वाजित सदा नमस्तेऽस्त्वपराजित॥ विशालाक्षं समारुह्य रक्ष मां त्वं रसातले ॥ १० ॥ अकूपार नमस्तुभ्यं महा

१ देवदेवं सर्वीजानालताद्यादिभि० । देवी सर्वीजं गतमानालाद्यादिभि० । २ द्वादशाक्षरमन्त्रेण विज्ञेया० ।

मीन नमोऽस्तु ते ॥ करशीर्षाद्यंगुलीषु सत्य त्वं बाहुपंजरम् ॥ ११ ॥ कृत्वा रक्षस्व मां विष्णो नमस्ते पुरुषोत्तम ॥ एतदुक्तं शंकराय वैष्णवं पंजरं महत् ॥ १२ ॥ पुरा रक्षार्थमीशान्याः कात्यायन्या वृषध्वज ॥ नाशयामास सा येन चामरान्महिषासुरम्[1] ॥ १३ ॥ दानवं रक्तबीजं च अन्यांश्च सुरकण्टकान् ॥ एतज्जपन्नरो भक्त्या शत्रून्विजयते सदा ॥ १४ ॥ इति श्रीगारुडे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपंजरस्तोत्रं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ हरिरुवाच ॥ अथ योगं प्रवक्ष्यामि भुक्तिमुक्तिकरं परम् ॥ ध्यायिभिः प्रोच्यते ध्येयो ध्यानेन हरिरीश्वरः ॥ १ ॥ तच्छृणुष्व महेशान सर्वपापविनाशनम् ॥ विष्णुः सर्वेश्वरोऽनन्तः षड्भिर्भूपरिवर्जितः ॥ २ ॥ वासुदेवो जगन्नाथो ब्रह्मात्मास्म्यहमेव हि ॥ देहिदेहस्थितो नित्यः सर्वदेहविवर्जितः ॥ ३ ॥ देहधर्म्मविहीनश्च क्षराक्षरविवर्जितः ॥ षड्विधेषु स्थितो द्रष्टा श्रोता घ्राता ह्यतीन्द्रियः ॥ ४ ॥ तद्धर्म्मरहितः स्रष्टा नामगोत्रविवर्जितः ॥ मन्ता मनःस्थितो देवो मनसा परिवर्जितः ॥ ५ ॥ मनोधर्म्मविहीनश्च विज्ञानं ज्ञानमेव च ॥ बोद्धा बुद्धिस्थितः साक्षी सर्वज्ञो बुद्धिवर्जितः ॥ ६ ॥ बुद्धिधर्म्मविहीनश्च सर्वः सर्वगतो मनः ॥ सर्वप्राणिविनिर्मुक्तः प्राणधर्म्मविवर्जितः ॥ ७ ॥ प्राणप्राणो महाशान्तो भयेन परिवर्जितः ॥ अहंकारादिहीनश्च तद्धर्म्मपरिवर्जितः ॥ ८ ॥ तत्साक्षी तन्नियन्ता च परमानन्दरूपकः ॥ जाग्रत्स्वप्नसुषुप्तिस्थस्तत्साक्षी तद्विवर्जितः ॥ ९ ॥ तुरीयः परमो धाता दृग्रूपो गुणवर्जितः ॥ मुक्तो बुद्धोऽजरो व्यापी सत्य आत्मास्म्यहं शिवः ॥ १० ॥ एवं ये मानवा विज्ञा ध्यायन्तीशं परं पदम् ॥ प्राप्नुयुस्ते च तद्रूपं नात्र कार्य्या विचारणा ॥ ११ ॥ इति ध्यानं समाख्यातं तव शङ्कर सुव्रत ॥ पठेद्य एतत्सततं विष्णुलोकं स गच्छति ॥ १२ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ध्यानयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥ रुद्र उवाच ॥ संसारसागराद्घोरामुच्यते किं जपन्प्रभो ॥ नरस्तन्मे परं जप्यं कथय त्वं जनार्दन ॥ १ ॥ हरिरुवाच ॥ परेश्वरं परं ब्रह्म परमात्मानमव्ययम् ॥ विष्णुं नामसहस्रेण स्तुवन्मुक्तो भवेन्नरः ॥ २ ॥ यत्पवित्रं परं जप्यं कथयामि वृषध्वज ! ॥ शृणुष्वावहितो भूत्वा सर्वपापविनाशनम् ॥ ३ ॥ ॐ वासुदेवो महाविष्णुर्वामनो वासवो वसुः ॥ बालचन्द्रनिभो बालो बलभद्रो बलाधिपः ॥ ४ ॥ बलिबन्धनकृद्वेधा ( ११ ) वरेण्यो वेदवित्कविः ॥ वेदकर्त्ता वेदरूपो वेद्यो वेदपरिप्लुतः ॥ ५ ॥ वेदाङ्गवेत्ता वेदेशो ( २० ) बलाधारो बलार्दनः ॥ अविकारो वरेशश्च वरुणो वरुणाधिपः ॥ ६ ॥ वीरहा च बृहद्वीरो वन्दितः परमेश्वरः ( ३० ) ॥ आत्मा च

[1] चामरं महि० ।

परमात्मा च प्रत्यगात्मा वियत्परः ॥ ७ ॥ पद्मनाभः पद्मनिधिः पद्महस्तो गदाधरः ॥ परमः (४०) परभूतश्च पुरुषोत्तम ईश्वरः ॥ ८ ॥ पद्मजङ्घः
पुण्डरीकः पद्ममालाधरः प्रियः ॥ पद्माक्षः पद्मगर्भश्च पर्जन्यः (५०) पद्मसंस्थितः ॥ ९ ॥ अपारः परमार्थश्च पराणां च परः प्रभुः ॥ पण्डितः
पण्डितेड्यश्च पवित्रः पापमर्दकः ॥ १० ॥ शुद्धः (६०) प्रकाशरूपश्च पवित्रः परिरक्षक ॥ पिपासावर्जितः पाद्यः पुरुषः प्रकृतिस्तथा ॥ ११ ॥
प्रधानं पृथिवीपद्मं पद्मनाभः (७०) प्रियप्रदः ॥ सर्वेशः सर्वगः सर्वः सर्ववित्सर्वदः सुरः ॥ १२ ॥ सर्वस्य जगतो धाम सर्वदर्शी च सर्वभृत् (८०) ॥
सर्वानुग्रहकृद्देवः सर्वभूतहृदि स्थितः ॥ १३ ॥ सर्वपूज्यश्च सर्वाद्यः सर्वदेवनमस्कृतः॥ सर्वस्य जगतो मूलं सकलो निष्कलोऽनलः (९०) ॥ १४ ॥
सर्वगोप्ता सर्वनिष्ठः सर्वकारणकारणम्॥सर्वध्येयः सर्वमित्रः सर्वदेस्ववरूपधृक् ॥१५॥ सर्वाध्यक्षः सुराऽध्यक्ष सुरासुरनमस्कृतः ॥ दुष्टानां च सुराणां
च सर्वदा घातकोऽन्तकः (१०१) ॥ १६ ॥ सत्यपालश्च सन्नाभः सिद्धेशः सिद्धवन्दितः ॥ सिद्धसाध्यः सिद्धसिद्धः साध्यसिद्धो (सिद्धिसिद्ध) हृदी
श्वरः ॥ १७ ॥ शरणं जगतश्चैव (११०) श्रेयः क्षेमस्तथैव च ॥ शुभकृच्छोभनः सौम्यः सत्यः सत्यपराक्रमः ॥ १८ ॥ सत्यस्थः सत्यसङ्कल्पः स
त्यावित्सत्य (त्प) दस्तथा (१२१) ॥ धर्मो धर्म्मी च कर्मी च सर्वकर्म्मविवर्जितः ॥ १९ ॥ कर्म्मकर्त्ता च कर्मैव क्रिया कार्य्यं तथैव
च ॥ श्रीपतिर्नृपतिः (१३१) श्रीमान्सर्वस्य पतिरूर्जितः ॥ २० ॥ सदेवानां पतिश्चैव वृष्णीनां पतिरीडितः ॥ पतिर्हिरण्यगर्भस्य त्रिपुरा
न्तपतिस्तथा ॥ २१ ॥ पशूनां च पतिः प्रायो वसूनां पतिरेव च (१४०) ॥ पतिराखण्डलस्यैव वरुणस्य पतिस्तथा ॥ २२ ॥
वनस्पतीनां च पतिरनिलस्य पतिस्तथा ॥ अनलस्य पतिश्चैव यमस्य पतिरेव च ॥ २३ ॥ कुबेरस्य पतिश्चैव नक्षत्राणां पतिस्तथा ॥ ओषधीनां
पतिश्चैव वृक्षाणां च पतिस्तथा (१५०) ॥ २४ ॥ नागानां पतिरर्कस्य दक्षस्य पतिरेव च ॥ सुहृदां च पतिश्चैव नृपाणां च पतिस्तथा ॥ २५ ॥
गन्धर्वाणां पतिश्चैव असूनां पतिरुत्तमः॥पर्वतानां पतिश्चैव निम्नगानां पतिस्तथा ॥ २६ ॥ सुराणां च पतिः श्रेष्ठः (१६०) कपिलस्य पतिस्तथा ॥
लतानां च पतिश्चैव वीरुधां च पतिस्तथा ॥ २७ ॥ मुनीनां च पतिश्चैव सूर्य्यस्य पतिरुत्तमः ॥ पतिश्चन्द्रमसः श्रेष्ठः शुक्रस्य पतिरेव च ॥ २८ ॥
ग्रहाणां च पतिश्चैव राक्षसानां पतिस्तथा ॥ किन्नराणां पतिश्चैव (१७०) द्विजानां पतिरुत्तमः ॥ २९ ॥ सरितां च पतिश्चैव समुद्राणां पतिस्तथा॥
सरसां च पतिश्चैव भूतानां च पतिस्तथा ॥ ३० ॥ वेतालानां पतिश्चैव कूष्माण्डानां पतिस्तथा ॥ पक्षिणां च पतिः श्रेष्ठः पशूनां पतिरेव च ॥ ३१ ॥

महात्मा ( १८० ) मंगलो मेयो मन्दरो मन्दरेश्वरः ॥ मेरुर्माता प्रमाणं च माधवो मलवर्जितः॥३२॥मालाधरो ( १९० ) महादेवो महादेवेन पूजितः॥
महाशान्तो महाभागो मधुसूदन एव च॥३३॥महावीर्य्यो महाप्राणो मार्कण्डेयर्षिवन्दितः( २०० )॥ मायात्मा मायया बद्धो मायया तु विवर्जितः॥३४॥
मुनिस्तुतो मुनिर्मैत्रो ( २१० ) महाना (रा)सो महाहनुः॥ महाबाहुर्महादान्तो मरणेन विवर्जितः॥३५॥महात्रक्त्रो महात्मा च महाकायो महोदरः॥
महापादो महाग्रीवो महामानी महामनाः ॥ ३६ ॥ महागतिर्महाकीर्तिर्महारूपो (२२२) महासुरः॥ मधुश्च माधवश्चैव महादेवो महेश्वरः ॥ ३७ ॥
मखेज्यो मखरूपी च माननीयो (२३०) मखेश्वरः॥ महावातो महाभागो महेशोऽतीतमानुषः॥३८॥मानवश्च मनुश्चैव मानवानां प्रियंकरः॥मृगश्च
मृगपूज्यश्च (२४०) मृगाणां च पतिस्तथा ॥ ३९ ॥ बुधस्य च पतिश्चैव पतिश्चैव बृहस्पतेः॥ पतिः शनैश्चरस्यैव राहोः केतोः पतिस्तथा॥४०॥
लक्ष्मणो लक्षणश्चैव लम्बौष्ठो ललितस्तथा(२५०)॥नानालंकारसंयुक्तो नानाचन्दनचर्चितः ॥ ४१ ॥ नानारसोज्ज्वलद्वक्त्रो नानापुष्पोपशोभितः॥
रामो रमापतिश्चैव सभार्य्यः परमेश्वरः ॥ ४२ ॥ रत्नदो रत्नहर्त्ता च(२६०)रूपी रूपविवर्जितः ॥ महारूपोग्ररूपश्च सौम्यरूपस्तथैव च ॥ ४३ ॥
नीलमेघनिभः शुद्धः कालमेघनिभस्तथा ॥ धूम्रवर्णः पीतवर्णो नानारूपो ( २७० ) ह्यवर्णकः ॥ ४४ ॥ विरूपो रूपदश्चैव शुक्लवर्णस्तथैव च ॥
सर्ववर्णो महायोगी यज्ञो ( याज्यो ) यज्ञकृदेव च॥४५॥सुवर्णवर्णवांश्चैव सुवर्णाख्यस्तथैव च ( २८० ) सुवर्णावयवश्चैव सुवर्णः स्वर्णमेखलः॥४६॥
सुवर्णस्य प्रदाता च सुवर्णेशस्तथैव च॥सुवर्णस्य प्रियश्चैव ( २९० ) सुवर्णाढ्यस्तथैव च॥४७॥सुपर्णी च महापर्णो सुपर्णस्य च कारणम् (२९०)॥
वैनतेयस्तथादित्य आदिरादिकरः शिवः ॥ ४८ ॥ कारणं महतश्चैव प्रधानस्य च कारणम् ॥ बुद्धीनां कारणं चैव कारणं मनसस्तथा ॥ ४९ ॥
कारणं चेतसश्चैव ( ३०० ) अहंकारस्य कारणम् ॥ भूतानां कारणं तद्वत्कारणं च विभावसोः॥ ५० ॥ आकाशकारणं तद्वत्पृथिव्याः कारणं परम्॥
अण्डस्य कारणं चैव प्रकृतेः कारणं तथा॥५१॥ देहस्य कारणं चैव चक्षुषश्चैव कारणम् ॥ श्रोत्रस्य कारणं ( ३१० ) तद्वत्कारणं च त्वचस्तथ॥५२॥
जिह्वायाः कारणं चैव प्राणस्यैव च कारणम् ॥ हस्तयोः कारणं तद्वत्पादयोः कारणं तथा ॥ ५३ ॥ वाचश्च कारणं तद्वत्पायोश्चैव तु कारणम् ॥
इन्द्रस्य कारणं चैव कुबेरस्य च कारणम् ॥ ५४ ॥ यमस्य कारणं चैव (३२०) ईशानस्य च कारणम् ॥ यक्षाणां कारणं चैव रक्षसां कारणं परम् ॥५५॥
नृपाणां कारणं श्रेष्ठं धर्म्मस्यैव तु कारणम् ॥ जन्तूनां कारणं चैव वसूनां कारणं परम् ॥ ५६ ॥ मनूनां कारणं चैव पक्षिणां कारणं परम् ॥ मुनीनां

१ मानवो मनुजश्चैव० । २ त्रातार्यः पर० ।

कारणं श्रेष्ठं ( ३३० ) योगिनां कारणं परम्॥५७॥सिद्धानां कारणं चैव यक्षाणां कारणं परम्॥कारणं किन्नराणां च(३४०) गन्धर्वाणां च कारणम्॥५८॥ नदानां कारणं चैव नदीनां कारणं परम् ॥ कारणं च समुद्राणां वृक्षाणां कारणं तथा ॥ ५९ ॥ कारणं वीरुधां चैव लोकानां कारणं तथा ॥ पाताल कारणं चैव देवानां कारणं तथा ॥ ६० ॥ सर्पाणां कारणं चैव ( ३५० ) श्रेयसां कारणं तथा ॥ पशूनां कारणं चैव सर्वेषां कारणं तथा ॥६१॥ देहा त्मा चेन्द्रियात्मा च आत्मा बुद्धिस्तथैव च ॥ मनसश्च तथैवात्मा चात्माहंकारचेतसः ॥६२॥ जाग्रतः स्वपतश्चात्मा ( ३६० ) महदात्मा परस्तथा ॥ प्रधानस्य परात्मा च आकाशात्मा ह्यपां तथा ॥ ६३ ॥ पृथिव्याः परमात्मा च रसस्यात्मा तथैव च ॥ गन्धस्य परमात्मा च रूपस्यात्मा परस्तथा ॥ ६४ ॥ शब्दात्मा चैव ( ३७० ) वागात्मा स्पर्शात्मा पुरुषस्तथा ॥ श्रोत्रात्मा च त्वगात्मा च जिह्वायाः परमस्तथा ॥ ६५ ॥ घ्राणात्मा चैव हस्तात्मा पादात्मा परमस्तथा (३८०)॥उपस्थस्य तथैवात्मा पाय्वात्मा परमस्तथा ॥६६॥ इन्द्रात्मा चैव ब्रह्मात्मा रुद्रा(शान्ता)त्मा च मनोस्तथा ॥ दक्षप्रजापतेरात्मा सत्या (स्रष्टा)त्मा परमस्तथा ॥ ६७ ॥ ईशात्मा ( ३९० ) परमात्मा च रौद्रात्मा मोक्षविद्यतिः॥यत्नवांश्च तथा यत्नश्चर्म्मी खड्गी मुरान्तकः ॥ ६८ ॥ ह्रीप्रवर्त्तनशीलश्च यतीनां च हिते रतः ॥ यतिरूपी च ( ४०० ) योगी च योगिध्येयो हरिः शितिः ॥ ६९ ॥ संविन्मेधा च कालश्च ऊष्मा वर्षा म(न) तिस्तथा(४१०)॥संवत्सरो मोक्षकरो मोहप्रध्वंसकस्तथा॥७०॥मोहकर्त्ता च दुष्टानां मांडव्यो वडवामुखः॥संवर्त्तः कालकर्त्ता च गौतमो भृगुरंगिराः ( ४२० )॥७१॥अत्रिर्वसिष्ठः पुलहः पुलस्त्यः कुत्स एव च ॥ याज्ञवल्क्यो देवलश्च व्यासश्चैव पराशरः ॥७२॥ शर्म्मदश्चैव(४३०) गांगेयो हृषीकेशो बृहच्छ्रवाः॥केशवः क्लेशहन्ता च सुकर्णः कर्णवर्जितः॥७३॥नारायणो महाभागः प्राणस्य पतिरेव च (४४०)॥अपानस्य पतिश्चैव व्यान स्य पतिरेव च ॥७४॥ उदानस्य पतिः श्रेष्ठः समानस्य पतिस्तथा॥शब्दस्य च पतिः श्रेष्ठः स्पर्शस्य पतिरेव च॥७५॥रूपाणां च पतिश्चाद्यः खड्गपाणि र्हलायुधः(४५०) ॥ चक्रपाणिः कुण्डली च श्रीवत्सांकस्तथैव च॥७६॥प्रकृतिः कौस्तुभग्रीवः पीताम्बरधरस्तथा ॥ सुमुखो दुर्मुखश्चैव मुखेन तु विव र्जितः ॥ ७७ ॥ अनन्तोऽनन्तरूपश्च ( ४६१ ) सुनखः सुरमन्दरः ॥ सुकपोलो विभुर्जिष्णुर्भ्राजिष्णुश्चेषुधीस्तथा ॥ ७८ ॥ हिरण्यकशिपोर्हन्ता हिरण्याक्षविमर्दकः ( ४७० ) ॥ निहन्ता पूतनायाश्च भास्करान्तविनाशनः ॥ ७९ ॥ केशिनो दलनश्चैव मुष्टिकस्य विमर्दकः ॥ कंसदानवभेत्ता च चाणूरस्य प्रमर्दकः ॥ ८० ॥ अरिष्टस्य निहंता च अक्रूरप्रिय एव च ॥ अक्रूरः क्रूररूपश्च ( ४८० ) अक्रूरप्रियवन्दितः ॥ ८१ ॥ भगहा भग

१ चात्माहंकार० ।

वान् भानुस्तथा भागवतः स्वयम् ॥ उद्धवश्चोद्धवस्येशो ह्युद्धवेन विचिन्तितः ॥ ८२ ॥ चक्रधृक् चञ्चलश्चैव ( ४९० ) चलाचलविवर्जितः ॥ अहंकारोपमाश्रित्तं गगनं पृथिवी जलम् ॥ ८३ ॥ वायुश्चक्षुस्तथा श्रोत्रं ( ५०० ) जिह्वा च घ्राणमेव [1]च ॥ वाक्पाणिपादजवनः पायूपस्थस्तथैव च ॥ ८४ ॥ शंकरश्चैव सर्वश्च क्षान्तिदः क्षान्तिकृन्नरः ( ५११ ) ॥ भक्तप्रियस्तथा भर्त्ता भक्तिमान् भक्तिवर्द्धनः ॥ ८५ ॥ भक्तस्तुतो भक्तपरः कीर्त्तिदः कीर्त्तिवर्द्धनः ॥ कीर्त्तिर्दीप्तिः ( ५२० ) क्षमाकांतिर्भक्तश्चैव ( ५३० ) दया परा ॥ ८६ ॥ दानं दाता च कर्त्ता च देवदेवप्रियः शुचिः ॥ शुचिमान्सुखदो ( ५३१ ) मोक्षः कामश्चार्थः सहस्रपात् ॥८७॥ सहस्रशीर्षा वैद्यश्च मोक्षद्वारं तथैव च॥प्रजाद्वारं सहस्राक्षः सहस्रकर एव च(५४०) ॥८८॥ शुक्रश्च सुकिरीटी च सुग्रीवः कौस्तुभस्तथा ॥ प्रद्युम्नश्चानिरुद्धश्च हयग्रीवश्च सूकरः ॥ ८९ ॥ मत्स्यः परशुरामश्च ( ५५० ) प्रह्लादो बलिरेव च॥शरण्यश्चैव नित्यश्च बुद्धो मुक्तः शरीरभृत् ॥ ९० ॥ खरदूषणहंता च रावणस्य प्रमर्दनः ॥ सीतापतिश्च ( ५६० ) वर्द्धिष्णुर्भरतश्च तथैव च ॥ ९१ ॥ कुम्भेंद्रजिन्निहन्ता च कुम्भकर्णप्रमर्दनः ॥ नरांतकांतकश्चैव देवांतकविनाशनः ॥ ९२ ॥ दुष्टासुरनिहंता च शम्बरारिस्तथैव च ॥ नरकस्य निहन्ता च त्रिशीर्षस्य विनाशनः ( ५७० ) ॥ ९३ ॥ यमलार्जुनभेत्ता च तपोहितकरस्तथा ॥ वादित्रं चैव वाद्यं च बुद्धश्चैव वरप्रदः ॥ ९४ ॥ सारः सारप्रियः सौरः कालहन्तृनिकृन्तनः ( ५८० ) ॥ अगस्त्यो देवलश्चैव नारदो नारदप्रियः ॥९५॥ प्राणोऽपानस्तथा व्यानो रजः सत्त्वं तमः (५९०)शरत्॥उदानश्च समानश्च भेषजं च भिषक् तथा ॥९६॥ कूटस्थः स्वच्छरूपश्च सर्वदेहविवर्जितः ॥चक्षुरिन्द्रियहीनश्च वागिंद्रियविवर्जितः(६००)॥९७॥हस्तेंद्रियविहीनश्च पादाभ्यां च विवर्जितः॥पायूपस्थविहीनश्च मरुतापविवर्जितः॥९८॥प्रबोधेन विहीनश्च बुद्ध्या चैव विवर्जितः॥चेतसा विगतश्चैव प्राणेन च विवर्जितः॥९९॥अपानेन विहीनश्च व्यानेन च विवर्जितः (६१० )॥उदानेन विहीनश्च समानेन विवर्जितः॥१००॥ आकाशेन विहीनश्च वायुना परिवर्जितः ॥ अग्निना च विहीनश्च उदकेन विवर्जितः ॥ १०१ ॥ पृथिव्या च विहीनश्च शब्देन च विवर्जितः ॥ स्पर्शेन च विहीनश्च सर्वरूपविवर्जितः ( ६२० ) ॥ १०२ ॥ रागेण विगतश्चैव अघेन परिवर्जितः ॥ शोकेन रहितश्चैव वचसा परिवर्जितः ॥ १०३ ॥ रजोविवर्जितश्चैव विकारैः षड्भिरेव च ॥ कामेन वर्जितश्चैव क्रोधेन परिवर्जितः ॥ १०४ ॥ लोभेन विगतश्चैव दम्भेन च विवर्जितः ॥ सूक्ष्मश्चैव ( ६३० ) सुसूक्ष्मश्च स्थूलात्स्थूलतरस्तथा ॥ १०५ ॥ विशारदो बलाध्यक्षः सर्वस्य क्षोभकस्तथा ॥ प्रकृतेः क्षोभकश्चैव महतः क्षोभकस्तथा ॥ १०६ ॥

१ पाणिपादाविति पा० ।

भूतानां क्षोभकश्चैव बुद्धेश्च क्षोभकस्तथा ॥ इन्द्रियाणां क्षोभकश्च ( ६४० ) विषयक्षोभकस्तथा ॥ १०७ ॥ ब्रह्मणः क्षोभकश्चैव रुद्रस्य क्षोभकस्तथा ॥ अगम्यश्चक्षुरादेश्च श्रोत्रागम्यस्तथैव च ॥ १०८ ॥ त्वचा न गम्यः कूर्मश्च जिह्वाऽग्राह्यस्तथैव च॥ घ्राणेन्द्रियागम्य एव वाचाऽग्राह्यस्तथैव च(६५०) ॥ १०९ ॥ अगम्यश्चैव पाणिभ्यां पदागम्यस्तथैव च ॥ अग्राह्यो मनसश्चैव बुद्ध्याऽग्राह्यो हरिस्तथा ॥११०॥ अहं बुद्ध्या तथा ग्राह्यश्चेतसा ग्राह्य एव च ॥ शंखपाणिश्चाव्ययश्च गदापाणिस्तथैव च ( ६६० ) ॥ १११ ॥ शार्ङ्गपाणिश्च कृष्णश्च ज्ञानमूर्त्तिः परन्तपः ॥ तपस्वी ज्ञानगम्यो हि ज्ञानी ज्ञानविदेव च ॥ ११२ ॥ ज्ञेयश्च ज्ञेयहीनश्च ( ६७० ) ज्ञप्तिश्चैतन्यरूपकः ॥ भावो भाव्यो भवकरो भावनो भवनाशनः ॥ ११३ ॥ गोविन्दो गोपतिर्गोपः ( ६८० ) सर्वगोपीसुखप्रदः ॥ गोपालो गोगतिश्चैव गोमतिर्गोधरस्तथा ॥११४॥ उपेन्द्रश्च नृसिंहश्च शौरिश्चैव जनार्दनः ॥ आरणेयो(६९०)बृहद्भानुर्बृहद्दीप्तिस्तथैव च॥११५॥दामोदरस्त्रिकालश्च कालज्ञः कालवर्जितः ॥ त्रिसन्ध्यो द्वापरं त्रेता प्रजाद्वारं ( ७०० ) त्रिविक्रमः ॥११६॥विक्रमो दण्ड(?)हस्तश्च ह्येकदण्डी त्रिदण्डधृक्॥सामभेदस्तथोपायः सामरूपी च सामगः ॥११७॥ सामवेदो (७१०) ह्यथर्वश्च सुकृतः सुतरूपणः॥अथर्ववेदविच्चैव ह्यथर्वाचार्य्य एव च॥११८॥ऋग्रूपी चैव ऋग्वेद ऋग्वेदेषु प्रतिष्ठितः॥यजुर्वेत्ता यजुर्वेदो(७२०)यजुर्वेदविदेकपात्॥११९॥बहुपाच्च सुपाच्चैव तथैव च सहस्रपात् ॥ चतुष्पाच्च द्विपाच्चैव स्मृतिर्न्यायो यमो बली (७३०) ॥१२०॥ सन्न्यासी चैव सन्न्यासश्चतुराश्रम एव च ॥ ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः ॥ १२१ ॥ ब्राह्मणः क्षत्रियो वैश्यः ( ७४० ) शूद्रो वर्णस्तथैव च ॥ शीलदः शीलसम्पन्नो दुःशीलपरिवर्जितः ॥ १२२ ॥ मोक्षोऽध्यात्मसमाविष्टः स्तुतिः स्तोता च पूजकः ॥ पूज्यो ( ७५० ) वाक् करणं चैव वाच्यं चैव तु वाचकः ॥ १२३ ॥ वेत्ता व्याकरणं चैव वाक्यं चैव च वाक्यवित् ॥ वाक्यगम्यस्तीर्थवासी ( ७६० ) तीर्थस्तीर्थी च तीर्थवित् ॥ १२४ ॥ तीर्थादिभूतः सांख्यश्च निरुक्तं त्वधिदैवतम् ॥ प्रणवः प्रणवेशश्च प्रणवेन प्रवन्दितः(७७०)॥१२५॥प्रणवेन च लक्ष्यो वै गायत्री च गदाधरः॥शालग्रामनिवासी च(७८०)शालग्रामस्तथैव च॥१२६॥ जलशायी योगशायी शेषशायी कुशेशयः ॥ महीभर्त्ता च ( ७९० ) कार्य्यं च कारणं पृथिवीधरः ॥ १२७ ॥ प्रजापतिः शाश्वतश्च काम्यः कामयिता विराट् ॥ सम्राट् पूषा ( ८०० ) तथा स्वर्गो रथस्थः सारथिर्बलम् ॥ १२८ ॥ धनी धनप्रदो धन्यो यादवानां हिते रतः॥ अर्जुनस्य प्रियश्चैव ह्यर्जुनो (८१०) भीम एव च॥१२९॥पराक्रमो दुर्विषहः सर्वशास्त्रविशारदः॥सारस्वतो महाभीष्मः पारिजातहरस्तथा॥१३०॥अमृतस्य प्रदाता च क्षीरोदः क्षीरमेव च (८२०)॥ इन्द्रात्मजस्तस्य गोप्ता गोवर्द्धनधरस्तथा ॥१३१॥ कंसस्य नाशनस्तद्वद्धस्तिपो हस्तिनाशनः॥शिपिविष्टः प्रसन्नश्च सर्वलोकार्त्तिनाशनः

॥१३२॥मुद्रो(८३०)मुद्रा करश्चैव सर्वमुद्राविवर्जितः॥देही देहस्थितश्चैव देहस्य च नियामकः॥१३३॥श्रोत्रा श्रोत्रनियन्ता च श्रोतव्यःश्रवणं तथा॥त्वक्
स्थितश्च(८४०) स्पर्शयित्वा स्पृश्यं च स्पर्शनं तथ॥॥१३४॥रूपद्रष्टा च चक्षुःस्थो नियन्ता चक्षुषस्तथा॥दृश्यं चैव तु जिह्वास्थो रसज्ञश्च नियामकः
(८५०)॥१३५॥घ्राणस्थो घ्राणकृद् घ्राता घ्राणेन्द्रियनियामकः॥वाक्स्थो वक्ता च वक्तव्यो वचनं वाङ्नियामकः॥१३६॥प्राणिस्थः (८६०) शिल्प
कृच्छिल्पो हस्तयोश्च नियामकः॥पदव्यश्चैव गन्ता च गन्तव्यं गमनं तथा॥१३७॥नियन्ता पादयोश्चैव पाद्यभाक्च विसर्गकृत् (८७०)॥विसर्गस्य
नियन्ता च ह्युपस्थस्थः सुखं तथा ॥ १३८ ॥ उपस्थस्य नियंता च तदानन्दकरश्च ह॥शत्रुघ्नः कार्त्तवीर्य्यश्च दत्तात्रेयस्तथैव च॥१३९॥ अलर्कस्य
हितश्चैव कार्त्तवीर्य्यनिकृन्तनः (८८०) ॥ कालनेमिर्महानेमिर्मेघो मेघपतिस्तथा ॥ १४० ॥ अन्नप्रदोऽन्नरूपी च ह्यन्नादोऽन्नप्रवर्तकः ॥ धूमकृ
द्धूमरूपश्च (८९०) देवकीपुत्र उत्तमः ॥ १४१ ॥ देवक्यानन्दनो नन्दो रोहिण्याः प्रिय एव च ॥ वसुदेवप्रियश्चैव वसुदेवसुतस्तथा ॥ १४२ ॥
दुन्दुभिर्हासरूपश्च पुष्पहासस्तथैव च (९००) ॥ अट्टहासप्रियश्चैव सर्वाध्यक्षः क्षरोऽक्षरः ॥ १४३ ॥ अच्युतश्चैव सत्येशः सत्यायाश्च प्रियो वरः ॥
रुक्मिण्याश्च पतिश्चैव रुक्मिण्या वल्लभस्तथा ॥ १४४ ॥ गोपीनां वल्लभश्चैव (९१०) पुण्यश्लोकश्च विश्रुतः ॥ वृषाकपिर्यमो गुह्यो मकुलश्च बुध[1]
स्तथा ॥ १४५ ॥ राहुः केतुर्ग्रहो ग्राहो (९२०) गजेन्द्रमुखमेलकः[2] ॥ ग्राहस्य विनिहन्ता च ग्रामणी रक्षकस्तथा ॥ १४६ ॥ किन्नरश्चैव सिद्धश्च
छन्दः स्वच्छन्द एव च ॥ विश्वरूपो विशालाक्षो (९३०) दैत्यसूदन एव च ॥ १४७ ॥ अनन्तरूपो भूतस्थो देवदानवसंस्थितः ॥ सुषुप्तिस्थः
सुषुप्तिश्च स्थानं स्थानान्त एव च ॥ १४८ ॥ जगत्स्थश्चैव जागर्त्ता स्थानं जागरितं तथा (९४०) ॥ स्वप्नस्थः स्वप्नवित्स्वप्नस्थानं स्वप्नस्तथैव
च॥१४९॥जाग्रत्स्वप्नसुषुप्तैश्च विहीनो वै चतुर्थकः॥विज्ञानं वेद्यरूपं च जीवो जीवयिता तथा(९५०) ॥१५०॥भुवनाधिपतिश्चैव भुवनानां नियामकः॥
पातालवासी पातालं सर्वज्वरविनाशनः॥१५१॥परमानन्दरूपी च धर्म्माणां च प्रवर्त्तकः॥सुलभो दुर्लभश्चैव प्राणायामपरस्तथा(९६०) ॥१५२॥
प्रत्याहारो धारकश्च प्रत्याहारकरस्तथा ॥ प्रभा कान्तिस्तथा ह्यर्चिः शुद्धस्फटिकसन्निभः ॥ १५३ ॥ अग्राह्यश्चैव गौरश्च सर्वः (९७०) शुचिरभि
ष्टुतः ॥ वषट्कारो वषड् वौषट् स्वधा स्वाहा रतिस्तथा ॥ १५४ ॥ पक्ता नन्दयिता (९८०) भोक्ता बोद्धा भावयिता तथा ॥ ज्ञानात्मा चैव देहा
त्मा भू (उ) मा सर्वेश्वरेश्वरः ॥ १५५ ॥ नदी नन्दी च नन्दीशो (९९०) भारतस्तरुनाशनः॥चक्रपः श्रीपतिश्चैव नृपाणां चक्रवर्त्तिनाम्॥१५६॥

१ मङ्गलश्च बुध इति पा०। २ गजेन्द्रमुपखेल०।

ईशश्च सर्वदेवानां द्वारकासंस्थितस्तथा ॥ पुष्करः पुष्कराध्यक्षः पुष्करद्वीप एव च ( १००० ) ॥ १५७ ॥ भरतो जनको जन्यः सर्वाकारवि
वर्जितः ॥ निराकारो निर्निमित्तो निरातंको निराश्रयः (१००८) ॥१५८॥ इति नामसहस्रं ते वृषभध्वज कीर्त्तितम् ॥ देवस्य विष्णोरीशस्य सर्व
पापविनाशनम् ॥ १५९ ॥ पठन्द्विजश्च विष्णुत्वं क्षत्रियो जयमाप्नुयात् ॥ वैश्यो धनं सुखं शूद्रो विष्णुभक्तिसमन्वितः ॥ १६० ॥ इति श्रीगारुडे
महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रीविष्णुसहस्रनामस्तोत्रनिरूपणं नाम पंचदशोऽध्यायः ॥ १५ ॥ ॥ रुद्र उवाच ॥ पुनर्ध्यानं
समाचक्ष्व शंखचक्रगदाधर ॥ विष्णोरीशस्य देवस्य शुद्धस्य परमात्मनः ॥ १ ॥ ॥ हरिरुवाच ॥ शृणु रुद्र ! हरेर्ध्यानं संसारतरुनाशनम् ॥
हशिरूपमनन्तं च सर्वव्याप्यजमव्ययम् ॥ २ ॥ अक्षरं सर्वगं नित्यं महद्ब्रह्मास्ति केवलम् ॥ सर्वस्य जगतो मूलं सर्वगं परमेश्वरम् ॥ ३ ॥ सर्व
भूतहृदिस्थं वै सर्वभूतमहेश्वरम् ॥ सर्वाधारं निराधारं सर्वकारणकारणम् ॥ ४ ॥ अलेपकं तथा मुक्तं मुक्तयोगिविचिंतितम् ॥ स्थूलदेहविहीनं च
चक्षुषा परिवर्जितम् ॥ ५ ॥ वागिन्द्रियविहीनं च प्राणिधर्म्मविवर्जितम् ॥ पादेंद्रियविहीनं च वाग्धर्मपरिवर्जितम् ॥ पायूपस्थविहीनं च सर्वेन्द्रिय
विवर्जितम् ॥ ६ ॥ मनोविरहितं तद्वन्मनोधर्म्मविवर्जितम् ॥ बुद्ध्या विहीनं देवेशं चेतसा परिवर्जितम् ॥ ७ ॥ अहंकारविहीनं वै बुद्धिधर्म्मविव
र्जितम् ॥ प्राणेन रहितं चैव ह्यपानेन विवर्जितम् ॥ ८ ॥ व्यानाख्यवायुहीनं वै प्राणधर्म्मविवर्जितम् ॥ हरिरुवाच ॥ पुनः सूर्य्यार्चनं वक्ष्ये यदुक्तं
भृगवे पुरा ॥ ९ ॥ ॐ खखोल्काय नमः ॥ सूर्य्यस्य मूलमन्त्रोऽयं भुक्तिमुक्तिप्रदायकः ॥ १० ॥ ॐ खखोल्काय त्रिदशाय नमः ॥ ॐ विचिं ठठ
शिरसे नमः ॥ ॐ ज्ञानिने ठठ शिखायै नमः ॥ ॐ सहस्ररश्मये ठठ कवचाय नमः ॥ ११ ॥ ॐ सर्वतेजोऽधिपतये ठठ अस्त्राय नमः ॥ ॐ
ज्वलज्वल प्रज्वलप्रज्वल ठठ नमः ॥ १२ ॥ अग्निप्राकारमन्त्रोऽयं सूर्य्यस्याघविनाशनः ॥ ॐ आदित्याय विद्महे, विश्वभा
वाय धीमहि, तन्नः सूर्य्यः प्रचोदयात् ॥ १३ ॥ सकलीकरणं कुर्य्याद्गायत्र्या भास्करस्य च ॥ धर्म्मात्मने च पूर्वस्मिन्यमा
येति च दक्षिणे ॥ १४ ॥ दण्डनायकाय ततो दैवतायेति चोत्तरे ॥ श्यामपिंगलमैशान्यामाग्नेय्यां दीक्षितं यजेत् ॥ १५ ॥
वज्रपाणिं च नैर्ऋत्यां भूर्भुवःस्वश्च वायवे ॥ ॐ चन्द्राय नक्षत्राधिपतये नमः ॥ ॐ अंगारकाय क्षितिसुताय नमः ॥ ॐ बुधाय सोमसुताय
नमः ॥ ॐ वागीश्वराय सर्वविद्याधिपतये नमः ॥ ॐ शुक्राय महर्षये भृगुसुताय नमः ॥ ॐ शनैश्चराय सूर्य्यात्मजाय नमः ॥ ॐ राहवे नमः ॥

। २ [illegible] पा० । ३ वैवर्णायेति० ।

ॐ केतवे नमः ॥ १६ ॥ पूर्वादीशानपर्य्यन्ता एते पूज्या वृषध्वज ॥ ॐ अनूकाय नमः ॥ ॐ प्रथमनाथाय नमः ॥ ॐ बुद्धाय नमः ॥ १७ ॥ ॐ भगवन्नपरिमितमयूखमालिन् ! सकलजगत्पते ! सप्ताश्ववाहन ! चतुर्भुज ! परमसिद्धिप्रद ! विस्फुलिंगपिंगल ! तत एह्येहि इदमर्घ्यं मम शिरसि गतं गृह्णगृह्ण तेजोग्ररूपम् अनग्न ! ज्वलज्वल ठठ नमः ॥ १९ ॥ अनेनावाह्य मन्त्रेण ततः सूर्य्यं विसर्जयेत् ॥ ॐ नमो भगवते आदित्याय सहस्र किरणाय गच्छ सुखं पुनरागमनायेति ॥ १८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे हरिध्यानसूर्यार्चनयोर्निरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥ हरिरुवाच ॥ पुनः सूर्य्यार्चनं वक्ष्ये यदुक्तं धनदाय हि ॥ अष्टपत्रं लिखेत्पद्मं शुचौ देशे सकर्णिकम् ॥१॥ आवाहनीं ततो बद्ध्वा मुद्रामावाहयेद्रविम् ॥ खखोल्कं स्थाप्य मुद्रां तु स्थापयेन्मन्त्ररूपिणीम् ॥ २ ॥ आग्नेय्यां दिशि देवस्य हृदयं स्थापयेच्छिव ! ॥ ऐशान्यां तु शिरः स्थाप्यं नैर्ऋत्यां विन्यसेच्छिखाम् ॥३॥ पौरन्दर्य्यां न्यसेद्वर्म्ममेकाग्रस्थितमानसः ॥ वायव्यां चैव नेत्रं तु वारुण्यामस्त्रमेव च ॥४॥ ऐशान्यां स्थापयेत्सोमं पौरन्दर्य्यां तु लोहितम् ॥ आग्नेय्यां सोमतनयं याम्यां चैव बृहस्पतिम् ॥ ५ ॥ नैर्ऋत्यां दानवगुरुं वारुण्यां तु शनैश्चरम् ॥ वायव्यां च तथा केतुं कौबेर्य्यां राहुमेव च ॥६॥ द्वितीयायां तु कक्षायां सूर्य्यान्द्वादश पूजयेत् ॥ भगः सूर्य्योऽर्य्यमा चैव मित्रो वै वरुणस्तथा॥७॥ सविता चैव धाता च विवस्वांश्च महाबलः ॥ त्वष्टा पूषा तथा चेन्द्रो द्वादशो विष्णुरुच्यते ॥ ८ ॥ पूर्वादावर्चयेद्देवानिन्द्रादीञ्छ्रद्धया नरः ॥ जया च विजया चैव जयन्ती चापराजिता ॥ शेषश्च वासुकिश्चैव नागांनित्यादि पूजयेत् ॥ ९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सूर्यार्चन विधिर्नाम सप्तदशोऽध्यायः ॥१७॥ सूत उवाच ॥ गरुडोक्तं कश्यपाय वक्ष्ये मृत्युञ्जयार्चनम् ॥ उद्धारपूर्वकं पुण्यं सर्वदेवमयं मतम् ॥ १ ॥ ओङ्कारं पूर्वमुद्धृत्य जु(हु)ङ्कारं तदनन्तरम् ॥ सविसर्गं तृतीयं स्यान्मृत्युदारिद्र्यमर्दनम् ॥ २ ॥ ईशाविष्ण्वर्कदेव्यादिकवचं सर्वसाधकम् ॥ अमृतेशं महामन्त्रं त्र्यक्षरं पूजनं समम्॥जपनान्मृत्युहीनाः स्युः सर्वपापविवर्जिताः॥३॥शतजप्याद्वेदफलं यज्ञतीर्थफलं लभेत्॥अष्टोत्तरशताजाप्यात्रिसन्ध्यं मृत्यु शत्रुजित ॥४॥ध्यायेच्च सितपद्मस्थं वरदं चाभयं करे॥द्वाभ्यां चामृतकुम्भं तु चिन्तयेदमृतेश्वरम॥५॥तस्यैवांगगतां देवीममृतामृतभाषिणी (विनि)म्॥कलशं दक्षिणे हस्ते वामहस्ते सरोरुहम्॥६॥ जपेदष्टसहस्रं वै त्रिसन्ध्यं मासमेकतः॥जरामृत्युमहाव्याधिशत्रुजिच्छिवशान्तिदम्॥७॥आह्वानं स्थापनं रोधं सन्निधानं निवे

१ अनुरुकाय० । २ प्रमथनाथाय० पा० । ३ आर्षः सलोपः । ४ रूपधनग्र० । रूपमलग्र० । ५ हयेद्धरिमिति पा० । ६ नागादित्यादि । ७ हङ्कारं तद० ।

शनम्॥पाद्यमा चमनं स्नानमर्घ्यं स्रगनुलेपनम्॥८॥दीपांबरं भूषणं च नैवेद्यं पानवीजनम्॥मात्रामुद्राजपध्यानं दक्षिणा चाहुतिः स्तुतिः॥९॥वाद्यं गीतं च नृत्यं च न्यासयोगं प्रदक्षिणम् ॥ प्रणतिर्मन्त्रशय्या च वन्दनं च विसर्जनम् ॥ १० ॥ षडंगादिप्रकारेण पूजनं तु क्रमोदितम् ॥ परमेशमुखोद्गीतं यो जानाति स पूजकः ॥ ११ ॥ अर्घ्यपात्रार्चनं चादावस्त्रेणैव तु ताडनम् ॥ शोधनं कवचेनैव अमृतीकरणं ततः ॥ १२ ॥ पूजा चाधारशक्त्यादेः प्राणायामं तथासने ॥ पीठशुद्धिं ततः कुर्याच्छोषणाद्यैस्ततः स्मरेत् ॥ १३ ॥ आत्मानं देवरूपं च करांगन्यासकं चरेत् ॥ आत्मानं पूजयेत्पश्चाज्ज्योतीरूपं हृदब्जतः ॥ १४ ॥ मूर्तौ वा स्थण्डिले वापि क्षिपेत्पुष्पं तु भास्वरम् ॥ आह्वानद्वारपूजार्थं पूजा चाधारशक्तितः ॥ १५ ॥ सान्निध्यकरणं देवे परिवारस्य पूजनम् ॥ अंगषट्कस्य पूजा वै कर्त्तव्या च विपश्चितैः ॥ १६ ॥ धर्मादयश्च शक्राद्याः सायुधाः परिवारकाः ॥ युगवेदमुहूर्त्तांश्च पूजयं भुक्तिमुक्तिकृत् ॥ १७ ॥ मातृकाश्च गणांश्चादौ नन्दिगंगे च पूजयेत् ॥ महाकालं च यमनां देहल्यां पूजयेत्पुरा ॥ १८ ॥ ॐ अमृतेश्वर ॐ भैरवाय नमः ॥ एवं ॐ जुं हंसः सूर्य्याय नमः ॥ १९ ॥ एवं शिवाय कृष्णाय ब्रह्मणे च गणाय च ॥ चण्डिकायै सरस्वत्यै महालक्ष्मादि पूजयेत् ॥ २० ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकाण्डेऽमृतेशमृत्युञ्जयपूजनं नामाष्टादशोऽध्यायः ॥ १८ ॥ सूत उवाच ॥ प्राणेश्वरं गारुडं च शिवोक्तं प्रवदाम्यहम् ॥ स्थानान्यादौ प्रवक्ष्यामि नागदष्टो न जीवति ॥ १ ॥ चितावल्मीकशैलादौ कूपे च विवरे तरोः ॥ दंशे रेखात्रयं यस्य प्रच्छन्नं स न जीवति ॥ २ ॥ षष्ठ्यां च कर्कटे मेषे मूलाश्लेषामघादिषु ॥ कक्षाश्रोणिगले सन्धौ शंखकर्णोदरादिषु ॥ ३ ॥ दण्डी शस्त्रधरो भिक्षुर्नग्नादिः कालदूतकः ॥ बाहौ च वक्रे ग्रीवायां दंष्ट्रायां न हि जीवति ॥ ४ ॥ पूर्वं दिनपतिर्भुङ्क्ते अर्द्धयामं ततोऽपरे ॥ शेषा ग्रहाः प्रतिदिनं षट्संख्यापरिवर्त्तनैः ॥ ५ ॥ नागभोगः क्रमाज्ज्ञेयो रात्रौ बाणविवर्त्तनैः ॥ शेषोऽर्कः फणिपश्चन्द्रस्तक्षको भौम ईरितः ॥ ६ ॥ कर्कोटो ज्ञो गुरुः पद्मो महापद्मश्च भार्गवः ॥ शङ्खः शनैश्चरो राहुः कुलिकश्चाहयो ग्रहाः ॥ ७ ॥ रात्रौ दिवा सुरगुरोर्भागे स्यादमरान्तकः ॥ पंगोः काले दिवा राहुः कुलिकेन सह स्थितः ॥ ८ ॥ यामार्द्धसन्धिसंस्थां च वेलां कालवतीं चरेत् ॥ बाणद्विषड्ढित्रिवाजियुगभूरेकभागतः ? ॥ ९ ॥ दिवा षडेदनेत्राद्रिपञ्चत्रिमांनुपांशकैः ॥ पादांगुष्ठे पादपृष्ठे गुल्फे जानुनि लिंगके ॥ १० ॥ नाभौ हृदि स्तनतटे कण्ठे नासापुटेऽक्षिणि ॥

---

१ पिण्डशुद्धिं० । २ आर्षः प्रयोगः । कर्तव्यादिग्विभागत इति पा० । ३ नदीगंगे० । ४ ॐ ह्रूं सः सू० । ५ कालानादौ० पा० । ६ नद्यां दष्टो न जी० पा० । ७ वार्यां वक्रायां न हि० । ८ हतयामार्धसन्धिस्थां वे० । ९ पञ्चत्रिमाशुषां ( मुखां ) शकैः० ।

कर्णयोश्च भ्रुवोः शंखे मस्तके प्रतिपत्क्रमात ॥ ११ ॥ तिष्ठेच्चन्द्रश्च जीवेच्च पुंसो दक्षिणभागके ॥ कायस्य वामभागे तु स्त्रिया वायुवहा त्करात् ॥ १२ ॥ अमृतस्तत्कृतो मोहो निवर्त्तेत च मर्दनात् ॥ आत्मनः परमं बीजं हंसाख्यं स्फटिकामलम् ॥ १३ ॥ दातव्यं विषपापन्नं बीजं तस्य चतुर्विधम् ॥ विन्दुपंचस्वरयुतमाद्यमुक्तं द्वितीयकम् ॥ षष्ठारूढं तृतीयं स्यात्सविसर्गं चतुर्थकम् ॥ ॐ कुरु कुले स्वाहा ॥१४॥ विद्या त्रैलोक्यरक्षार्थं गरुडेन धृता पुरा ॥ वधेप्सुर्नागनागानां मुखेऽथ प्रणवं न्यसेत् ॥ १५ ॥ गले कुरु न्यसेद्धीमान्कुले च गुल्फयोः स्मृतः ॥ स्वाहा पादयुगे चैव युगहा न्यास ईरितः ॥ १६ ॥ गृहे विलिखिता यत्र तन्नागाः संत्यजन्ति च ॥ सहस्रमन्त्रं जप्त्वा तु कर्णे सूत्रं धृतं तथा ॥ १७ ॥ यद्गृहे शर्करा जप्ता क्षिप्ता नागास्त्यजन्ति तत् ॥ सप्तलक्षस्य जप्याद्धि सिद्धिः प्राप्ता सुरासुरैः ॥ १८ ॥ ॐ सुवर्णरेखे कुक्कुटाविग्रहरूपिणि स्वाहा ॥ एवञ्चाष्टदले पद्मे दले वर्णयुगं लिखेत् ॥ १९ ॥ नामैतद्वारिधाराभिः स्नातो दष्टो विषं त्यजेत् ॥ ॐ पक्षि स्वाहा ॥ २० ॥ अंगुष्ठादि कनिष्ठान्तं करे न्यस्याथ देहके ॥ के(कै) वक्त्रे हृदि लिंगे च पादयोर्गरुडस्य हि ॥२१॥ नाक्रामन्ति च तच्छायां स्वप्नेऽपि विषपन्नगाः ॥ यस्तु लक्षं जपेच्चास्याः स दृष्ट्वा (स्पृष्ट्वा) नाशयेद्विषम् ॥२२॥ ॐ ह्रीं ह्रौं ह्रीं भि( भी ) रुण्डायै स्वाहा ॥ कर्णे जप्ता त्वियं विद्या दष्टकस्य विषं हरेत् ॥ २३ ॥ अ आ न्यसेत्तु पादाग्रे इ ई गुल्फेऽथ जानुनि ॥ उ ऊ ए ऐ कटितटे ओ नाभौ हृदि औ न्यसेत् ॥ २४ ॥ वक्त्रे अमुत्तमांगे अः न्यसेद्धै हंससंयुताः ॥ हंसो विषादि च हरेज्जप्तो ध्यातोऽथ पूजितः ॥ २५ ॥ गरुडोऽहमिति ध्यात्वा कुर्य्याद्विषहरां ( रीं ) क्रियाम् ॥ हंमन्त्रं गात्रविन्यस्तं विषादिहरमीरितम् ॥ २६ ॥ न्यस्य हंसं वामकरे नासामुखनिरोधकृत् ॥ मंत्रो हरेद्दष्टकस्य त्वङ्मांसादिगतं विषम् ॥ २७ ॥ स वायुना समाकृष्य दष्टानां गरलं हरेत् ॥ तनौ न्यसेद्दष्टकस्य नीलकण्ठादि संस्मरेत् ॥ २८ ॥ पीतं प्रत्यंगिरामूलं तण्डुलाद्भिर्विषापहम् ॥ पुनर्नवाफलिनीनां मूलं वक्रजमीदृशम् ॥ २९ ॥ मूलं शुक्लबृहत्यास्तु कर्कोटचागैरिकार्णिकम् ॥ अद्भिर्घृष्टघृतोपेतलेपोऽयं विषमर्दनः ॥ ३० ॥ विषमृद्धि न व्रजेच्च उष्णं पिबति यो घृतम् ॥ पंचांगं तु शिरीषस्य मूलं गृंजनजं तथा ॥ ३१ ॥ सर्वांगलेपतश्चापि पानाद्वा विषहृद्भवेत् ॥ ह्रीं गोनसादिविषहृत ॥ ३२ ॥ हल्लाटविसर्गान्तं ध्यातं वश्या

१ अयं श्लोको नास्ति क्वचित् । २ ह्रीं ह्रौं हं भितुण्डायै० पा० । ३ ह्रीं ह्रौं ह्रीं भीरुद्रायै० पा० । ४ नपुंसकत्वमार्षम् । ५ पुनर्नवाफणिजनं मूलं चक्रज० । पुनर्नवाफणिज्झानां० ।

दिक्कद्भवेत् ॥ न्यस्तं योनौ वशेत्कन्यां कुर्य्यान्मदजलाविलाम् ॥ ३३ ॥ जप्त्वा सप्ताष्टसाहस्रं गरुत्मानिव सर्वगः ॥ कविः स्याच्छ्रुतिधारी च वश्याः स्त्रीश्चायुराप्नुयात् ॥ विषहृत्स्यात्कथा तद्वन्मणिर्न्यासः स्मृतो ध्रुवम् ॥ ३४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सर्पविषहरोपाय( प्राणेश्वरविद्या )निरूपणं नामैकोनविंशोऽध्यायः ॥ १९ ॥ ॥ सूत उवाच ॥ वक्ष्ये तत्परमं गुह्यं शिवोक्तं मन्त्रवृन्दकम् ॥ पाशं धनुश्च चक्रं च मुद्गरं शूलपट्टिशम् ॥ १ ॥ एतैरेवायुधैर्युद्धे मन्त्रैः शत्रूञ्जयेन्नृपः ॥ मन्त्रोद्धारः पद्मपात्रे आदि पूर्वादिके लिखेत् ॥ २ ॥ अष्टवर्गं चाष्टमं च स्यातमीशानपत्रके ॥ ॐकारो ब्रह्म बीजं स्याद्ध्रीङ्कारो विष्णुरेव च ॥ ३ ॥ ह्रींकारश्च शिवः शूले त्रिशाखे तु क्रमान्न्यसेत् ॥ ॐ ह्रीं ह्रीं ॥४॥ शूलं गृहीत्वा हस्तेनाभ्राम्य चाकाशसम्मुखम् ॥ तद्दर्शनाद्ग्रहा नागा दृष्ट्वा वा नाशमाप्नुयुः ॥ ५ ॥ धूम्रारक्तं करं मध्ये ध्यात्वा खे चिन्तयेन्नरः॥दुष्टा नागा ग्रहा मेघा विनश्यन्ति च राक्षसाः ॥६॥ त्रिलोकान्रक्षयेन्मन्त्रो मर्त्यलोकस्य का कथा ॥ ॐ जूं सः हूं फट् ॥ ७ ॥ खादिरान्कीलकानष्टौ क्षेत्रे संमन्त्र्य विन्यसेत् ॥ न तत्र वज्रपातस्य स्फूर्जथ्वादेरुपद्रवः ॥ ८ ॥ गरुडोक्तैर्महामन्त्रैः कीलकानष्ट मन्त्रयेत् ॥ एकविंशतिवाराणि क्षेत्रे तु निखनेन्निशि ॥ ९ ॥ विद्युन्मूषकवज्रादिसमुपद्रव एव च ॥ हरक्षमलवरयऊ बिंदुयुक्तः सदाशिवः ॥१०॥ ॐ ह्रां सदाशिवाय नमः ॥ तर्जन्या विन्यसेत्पिण्डं ( ण्डे ) दाडिमीकुसुमप्रभम् ॥ ११ ॥ तस्यैव दर्शनाद्दुष्टा मेघविद्युद्द्विपादयः ॥ राक्षसा भूतडाकिन्यः प्रद्रवंति दिशो दश ॥१२॥ ॐ ह्रीं गणेशाय नमः ॥ ( ॐ ह्रीं ) स्तम्भनादिचक्राय नमः ॥ ॐ ऐं ब्रह्मैत्रै लोक्यडामराय नमः॥१३॥ भैरवं पिंडमाख्यातं विषपापग्रहापहम् ॥ क्षेत्रस्य रक्षणं भूतराक्षसादेः प्रमर्दनम् ॥ १४ ॥ ॐ नमः ॥ इंद्रवज्रं करे ध्यात्वा दुष्टमेघादिवारणम् ॥ विषशत्रुगणा भूता नश्यन्ते वज्रमुद्रया ॥ १५ ॥ ॐ क्षुं(क्ष) नमः ॥ स्मरेत्पाशं वामहस्ते विषभूतादि नश्यति॥ॐ ह्रां (ह्रो) नमः॥हरेदुच्चारणान्मंत्रो विषमेघग्रहादिकान् ॥ १६ ॥ ध्यात्वा कृतांतं च दहेच्छेदकास्त्रेण वै जगत् ॥ ॐ क्षणं ( क्ष्म ) नमः ॥ ध्यात्वा तु भैरवं कुर्य्याद्ग्रहभूतविषापहम् ॥ १७ ॥ ॐ लसंद्विजिह्वाक्ष स्वाहा ॥ क्षेत्रादौ ग्रहभूतादिविषपक्षिनिवारणम ॥ १८ ॥ ॐ क्ष्व ( क्ष्णं ) नमः ॥ रक्तेन पटहे लिख्य शब्दात्रेसुर्ग्रहादयः ॥ ॐ मर मर मारयमारय स्वाहा ॥ ॐ हुं फट् स्वाहा ॥ १९ ॥ शूलं चाष्टशतैर्मन्त्र्य भ्रामणाच्छत्रुवृंदहृत् ॥ ऊर्द्ध्वशक्तिनिपातेन अधःशक्तिं निकुञ्चयेत् ॥२०॥

१ योनौ रसेत्कन्यामिति पा० । २ 'ॐ जों सों हों फट्' इति पा० । ३ ॐ सुक्षणात्सदाशिवायेति पा० । ४ हृद्गणेशमन्त्रोयं स्तम्भना० । ५ आर्षमात्मनेपदम् । ६ ॐ हं नमः । हरे० । ७ ॐ क्ष्य नमः । ध्यात्वात० । ८ क्षणसग्रजिह्वाक्षस्वाहा० ।

पूरके पूरिता मंत्राः कुम्भकेन सुमन्त्रिताः ॥ प्रणवेनाप्यायितास्ते मनवस्तदुदीरिताः ॥ एवमाप्यायिता मंत्रा भृत्यवत्फलदायकाः ॥ २१ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकांडे विषादिहरमन्त्रबृंदनिरूपणं नाम विंशोऽध्यायः ॥ २० ॥ सूत उवाच॥पंचवक्त्रार्चनं वक्ष्ये पृथग्यद्भुक्तिमुक्तिदम्॥ॐ भूर्विष्णवे आदिभूताय सर्वाधाराय मूर्त्तये स्वाहा॥१॥सद्योजातस्य चाह्वानमनेन प्रथमं चरेत्॥ॐ हां सद्योजातायैव कला ह्यष्टौ प्रकीर्तिताः॥२॥ सिद्धिर्ऋद्धिर्धृतिर्लक्ष्मीर्मेधा कान्तिः स्वधा स्थितिः (८)॥ ॐ हीं वामदेवायैव कलास्तस्य त्रयोदश॥३॥रजा रक्षा रतिः पाल्या कान्तिस्तृष्णा मतिः क्रिया ॥ कामा बुद्धिश्च रात्रिश्च त्रासनी मोहिनी तथा (१३) ॥ ४ ॥ मनोन्मनी अघोरा च तथा मोहा क्षुधा कला ॥ निद्रा मृत्युश्च माया च (८) अष्टसंख्या भयंकर ॥ ५ ॥ ॐ हैं तत्पुरुषायैव (षाय) निवृत्तिश्च प्रतिष्ठा च विद्या शान्तिर्न केवला ॥६॥ ॐ हौं ईशानाय नमो निश्चला च निरञ्जना॥शशिनी चांगना चैव मरीचिर्ज्वालिनी तथा ॥ ७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पञ्चवक्त्रपूजनं नामैकविंशोऽध्यायः ॥ २१ ॥ सूत उवाच ॥ शिवार्चनं प्रवक्ष्यामि भुक्तिमुक्तिकरं परम् ॥ शान्तं सर्वगतं शून्यं मात्राद्वादशके स्थितम् ॥ १ ॥ पञ्च वक्त्राणि ह्रस्वानि दीर्घाण्यंगानि बिन्दुना ॥ सविसर्गं वदेदस्त्रं शिव ऊर्ध्वं तथा पुनः ॥ २ ॥ षष्ठेनाधो महामन्त्रो हौमित्येवाखिलार्थदः ॥ हस्ताभ्यां संस्पृशेत्पादावूर्ध्वं पादौ मस्तकम् ॥ ३ ॥ महामुद्रा हि सर्वेषां करांगन्यासमाचरेत् ॥ तालहस्तेन पृष्ठं च अस्त्रमन्त्रेण शोधयेत् ॥ ४ ॥ कनिष्ठामादितः कृत्वा तर्जन्यंगानि विन्यसेत् ॥ पूजनं संप्रवक्ष्यामि कर्णिकायां हृदम्बुजे ॥ ५ ॥ धर्मं ज्ञानं च वैराग्यमैश्वर्य्यादि हृदार्चयेत् ॥ आवाहनं स्थापनं च पाद्यमर्घ्यं हृदार्पयेत् ॥ ६ ॥ आचामं स्नपनं पूजामेकावारणतुल्यकम् ? ॥ अग्निकार्य्यविधिं वक्ष्ये अस्त्रेणोल्लेखनं चरेत् ॥ ७ ॥ वर्म्मणाभ्युक्षणं कार्य्यं शक्तिन्यासं हृदा चरेत् ॥ हृदि वा शक्तिगर्त्ते च प्रक्षिपेज्जातवेदसम् ॥ ८ ॥ गर्भाधानादिकं कृत्वा निष्कृतिं चास्य पश्चिमाम् ॥ हृदा कृत्वा सर्वकर्म्म शिवं सांगं तु होमयेत् ॥ ९ ॥ पूजयेन्मण्डले शम्भुं पद्मगर्भे गरांकितम् ॥ चतुःषष्टयन्तमष्टादि खाक्षि खाद्यादिमण्डलम् ॥ १० ॥ खाक्षीन्द्रसूर्य्यगं सर्वखादिवेदन्दु (देवेन्दु) वर्त्तनम् ॥ आग्नेय्यां कारयेत्कुण्डमर्द्धचन्द्रनिभं शुभम् ॥ ११ ॥ अग्नीशास्त्रपरायुस्थो हृदयादिगणोच्यते ॥ अस्त्रं दिशां सुपद्मस्य कर्णिकायां सदाशिवः ॥ १२ ॥ दीक्षां वक्ष्ये पञ्चतत्त्वे स्थितां भूम्यादिकां परे ॥ निवृत्तिर्भूप्रतिष्ठार्वैर्विद्याग्निः शान्तिवन्निजः ॥ १३ ॥ शान्त्यतीतं भवेद्व्योम तत्परं शान्तमव्ययम् ॥ एकैकस्य शतं होमा इत्येवं पंच होमयेत् ॥ १४ ॥

१ ग्रन्थपातः अन्यथा अघोरपूजनस्यानुक्तेः कथं पञ्चवक्त्रपूजनमत्र स्यादिति चिन्तनीयम् । २ शान्तिरकेवला० । ३ वूर्ध्वपादं तु मस्त० ।

पश्चात्पूर्णाहुतिं दत्त्वा प्रा(प्र)सोदन शिवं स्मरेत् ॥ प्रायश्चित्तविशुद्ध्यर्थमेकैकाष्टाहुतिं क्रमात ॥ १५[1]॥ होमयेदस्त्रबीजेन एवं दीक्षां समापयेत् ॥ यजनव्यतिरेकेण गोप्यं संस्कारमुत्तमम् ॥ १६ ॥ एवं संस्कारशुद्धस्य शिवत्वं जायते ध्रुवम् ॥ १७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शिवार्चनप्रकारो नाम द्वाविंशोऽध्यायः ॥ २२ ॥ सूत उवाच ॥ शिवार्चनं प्रवक्ष्यामि[2] धर्म्मकामादिसाधनम् ॥ त्रिभिर्मन्त्रैराचामेत्तु स्वाहान्तैः प्रणवादिकैः ॥ १ ॥ ॐ हां आत्मतत्त्वाय[3] विद्यातत्त्वाय हीं तथा ॥ ॐ हूं[4] शिवतत्त्वाय स्वाहा हृदा स्याच्छ्रोत्रवंदनम् ॥ २ ॥ भस्मस्नानं तर्पणं च ॐ हां स्वाहा सर्वमन्त्रकाः ॥ सर्वे देवाः[5] सर्वमुनिर्नमोऽन्तो वौषडन्तकः॥३॥ स्वधान्ताः सर्वपितरः स्वधान्ताश्च पितामहाः ॥ ॐ हां प्रपितामहेभ्यस्तथा मातामहादयः ॥ ४ ॥ हां नमः सर्वमातृभ्यस्ततः स्यात्प्राणसंयमः ॥ आचामं मार्जनं चाथो गायत्रीं च जपेत्ततः ॥ ५ ॥ ॐ हां तन्महेशाय विद्महे, वाग्विशुद्धाय धीमहि, तन्नो रुद्रः प्रचोदयात् ॥ ६ ॥ सूर्य्योपस्थानकं कृत्वा सूर्य्यमन्त्रैः प्रपूजयेत् ॥ ॐ हां हीं हूं हैं हौं हः शिवसूर्य्याय नमः ॥ ॐ हं खखोल्काय सूर्य्यमूर्त्तये नमः॥ॐ ह्रां ह्रीं सः सूर्य्याय नमः ॥७॥ दण्डिने पिङ्गले त्वातिभूतानि च ततः स्मरेत् ॥ अग्न्यादौ विमलेशानमाराध्य परमं सुखम् ॥ ८ ॥ यजेत्पद्मां च रां दीप्तां रीं सूक्ष्मां रूं जयां च रें ॥ भद्रां च रैं विभूतिं रों विमलां रौममोधि ( रोघि ) काम् ॥ ९ ॥ रं विद्युतां च पूर्वादौ रा ( रं ) मध्ये सर्वतोमुखीम् ॥ अर्कासनं सूर्य्यमूर्त्तिं ह्रां ह्रूं (ह्रीं) सः सूर्य्यमर्च्चयेत् ॥१०॥ ॐ आं हृदर्काय च शिरः शिखा च भूर्भुवः स्वरोम् ॥ ज्वालिनीं ह्रं कवचस्य चास्त्रं राज्ञां[6] च दीक्षिताम् ॥११॥ यजेत्सूर्य्यंहृदा सर्वान्सों सोमं मं च मंगलम् ॥ बं बुधं बृं बृहस्पतिं भं भार्गवं शं शनैश्चरम् ॥ १२ ॥ रं राहुं कं यजेत्केतुं ॐ तेजश्चण्डमर्च्चयेत् ॥ सूर्य्यमभ्यर्च्य चाचम्य कनिष्ठातोऽङ्गकांन्यसेत् ॥ १३ ॥ हां हृच्छिरो हूं शिखा हैं वर्म्म हौं चैव नेत्रकम् ॥ होऽस्त्रं शक्तिस्थितिं कृत्वा भूतशुद्धिं पुनर्न्यसेत् ॥ १४ ॥ अर्घ्यपात्रं ततः कृत्वा तदद्भिः प्रोक्षयेद्यजेत् ॥१५॥ आत्मानं पद्मसंस्थं च हौं शिवाय ततो बहिः ॥ द्वारे नन्दिमहाकालौ गंगा च यमुनाथ गौः ॥१६॥ श्रीरस्त्रं वास्त्वधिपतिं ब्रह्माणं च गणं गुरुम् ॥ शक्त्यनन्तौ यजेन्मध्ये पूर्वादौ धर्म्मकादिकम्॥१७॥अधर्म्माद्यं च वह्न्यादौ मध्ये पद्मस्य कर्णिके॥वामा ज्येष्ठा च पूर्वादौ रौद्री काली च पूर्षदं[7] ॥ १८ ॥ ॐ हौं कलविकरिण्यै बलविकारिणी ततः ॥ बलप्रमथिनी सर्वभूतानां दमनी ततः ॥ १९ ॥

१ मयेदसुबी० । २ कुर्यादिति शेष इति भाति । ३ ॐसां स्वात्मत० । ४ ॐ हूं आत्मतत्त्वाय० । ५ प्रभूता निशि न स्मरेरिति पा० । ६ चास्त्रं राज्ञां शुभे जपे० । ७ पर्षदः । शिवासितेति पा० ।

मनोन्मनी यजेद्देताः पीठमध्ये शिवाग्रतः ॥ शिवासनं महामूर्त्ति मूर्त्तिमध्ये शिवाय च ॥२०॥ आवाहनं स्थापनं च सन्निधानं निरोधनम् ॥ सकलीकरणं मुद्रादर्शनं चार्घ्यपाद्यकम् ॥२१॥ आचामाभ्यङ्गमुद्वर्त्तं स्नानं निर्म्मथनं[1] चरेत् ॥ वस्त्रं विलेपनं पुष्पं धूपं दीपं चरुं ददेत् ॥ २२ ॥ आचामं मुखवासं च ताम्बूलं हस्तशोधनम् ॥ छत्रचामरपावित्रं[2] परमीकरणं चरेत् ॥२३॥ रूपकल्पेन[3] चैकाहजपो जाप्यसमर्पणम्॥स्तुतिर्नतिर्हृदाद्यैश्च ज्ञेयं नामाङ्गपूजनम् ॥२४॥ अग्नीशरक्षो वायव्ये मध्ये पूर्वादितन्त्रकम् ॥ इन्द्राद्यांश्च यजेच्चण्डं तस्मै निर्माल्यमर्पयेत ॥२५॥ गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम् ॥ सिद्धिर्भवतु मे देव तत्प्रसादात्त्वयि स्थितिः ॥२६॥ यत्किञ्चित्क्रियते कर्म सदा सुकृतदुष्कृतम् ॥ तन्मे शिवपदस्थस्य रुद्र क्षपय शङ्कर ॥२७॥ शिवो दाता शिवो भोक्ता शिवः सर्वमिदं जगत्॥शिवो जयति सर्वत्र यः शिवः सोऽहमेव च ॥२८॥यत्कृतं यत्करिष्यामि तत्सर्वं सुकृतं तव(तस्तवम् )॥ त्वं त्राता विश्वनेता च नान्योनाथोऽस्ति मे शिव॥२९॥अथान्येन प्रकारेण शिवपूजां वदाम्यहम्॥गणः सरस्वती नंदी महाकालोऽथ गंगया॥३०॥पवनास्त्रंवास्त्वधिपो द्वारि पूर्वादितास्त्विमे ॥ इंद्राद्याः पूजनीयाश्च तत्त्वानि पृथिवी जलम्॥३१॥तेजो वायुर्व्योम गंधो रसरूपे च शब्दकः ॥ स्पर्शो वाक् पाणिपादं च पायूपस्थं श्रुतित्वचम् ॥३२॥ चक्षुर्जिह्वा घ्राणमनो बुद्धिश्चाहं प्रकृत्यपि ॥ पुमान्रागो बुद्धिविद्ये कला कालो नियत्यपि ॥ ३३ ॥ माया च शुद्धविद्या च ईश्वरश्च सदाशिवः ॥ शक्तिः शिवश्च ताञ्ज्ञात्वा मुक्तो ज्ञानी शिवो भवेत् ॥ ३४ ॥ यः शिवः स हरिर्ब्रह्मा सोऽहं ब्रह्मास्मि[4] शङ्कर ॥ ३५ ॥ भूतशुद्धिं प्रवक्ष्यामि यया शुद्धः शिवो भवेत् ॥ हृत्पद्मे सद्योमंत्रः[5] स्यान्निवृत्तिश्च कला इडा ॥३६॥ पिंगला द्वे च नाड्यौ तु प्राणोऽपानश्च मारुतौ ॥ इन्द्रो देहो ब्रह्महेतुश्चतुरस्रं च मण्डलम् ॥ ३७ ॥ वज्रेण लाञ्छितं वायुमेकोद्घातगुणाः शराः ॥ हृत्स्थानसादृश्यरुतं शतकोटिप्रविस्तरम् ॥ ३८ ॥ ॐ ह्रीं प्रतिष्ठायै[6] ह्रूं ह्रः फट् ॥ ॐ ह्रीं ह्रूं[7] विद्यायै ह्रं ह्रः फट् ॥ चतुरशीतिकोटीनामुच्छ्रयं भूमितन्त्रकम् ॥ ३९ ॥ तन्मध्ये भववृक्षं च आत्मानं च विचिन्तयेत् ॥ अधोमुखीं ततः पृथ्वीं तत्तच्छुद्धं भवेद्ध्रुवम् ॥ ४० ॥ वामा[8] देवी प्रतिष्ठा च सुषुम्ना धारिका तथा ॥ समानोदानवरुणा देवता विष्णुकारणम्॥४१॥उद्घाताश्च गुणा वेदाः श्वेतं ध्यानं तथैव च॥एवं कुर्य्यात्कण्ठपद्ममर्द्धचन्द्राख्यमण्डलम् ॥४२॥ पद्मांकितं द्विविंशतिककोटिविस्तीर्णमौ स्मरेत्॥चतुर्नवत्युच्छ्रयं च आत्मानं च अधोमुखम्॥४३॥तालुस्थानं च पद्मं च अघोरो विद्ययान्वितः॥नाभ्यो(ज्यो)ष्ठयोर्हस्तिजिह्वाध्यानो नागोऽग्निदेव

१ निर्मञ्छनं चरेदिति पा० । २ चामरोपवीतमिति पा० । ३ सूर्यकल्पेन कैकाढ्ढै इति पा० । ४ ब्रह्मास्मि मुक्तकः ० । ५ हृत्पद्मे सत्यो ( न्यां ) मन्त्र इति पा० । ६ ष्ठायै ह्रं फट्० । ७ ॐ ह्रूं विद्यायै ह्रं ह्रः फट्० । ८ वामदेवी० ।

ता ॥ ४४ ॥ रुद्रहेतुस्त्रिरुद्धातास्त्रिगुणा रक्तवर्णकम् ॥ ज्वालाकृते त्रिकोणं च चतुःकोटिशतानि च ॥ ४५ ॥ विस्तीर्णं च समुत्सेधं रुद्रतत्त्वं विचिन्तयेत् ॥ ललाटे वै तत्पुरुषः शान्तिर्यः शाद्वलं बुधाः ( वृषा ) ॥ ४६ ॥ कूर्मश्च कृकरो वायुर्देव ईश्वरकारणम् ॥ द्विरुद्धातो गुणौ द्वौ च धूम्रषट्कोणमण्डलम् ॥ ४७ ॥ बिन्द्वङ्कितं चाष्टकोटिविस्तीर्णं चोच्छ्रयस्तथा ॥ चतुर्दशाधिकं कोटिवायुतत्त्वं विचिन्तयेत् ॥ ४८ ॥ द्वादशान्ते सरसिजे शान्त्यतीतास्तथेश्वराः ॥ कुहूश्च शंखिनी नाड्यो देवदत्तो धनञ्जयः ॥४९॥ शिवेशानकारणं च सदाशिव इति स्मृतः ॥ गुण एकस्तथोद्धातः शुद्धस्फटिकवत्स्मरेत् ॥ ५० ॥ षोडशकोटिविस्तीर्णं पञ्चविंशतिकोच्छ्रयम् ॥ वर्तुलं चिंतयेद्व्योम भूतशुद्धिरुदाहृता ॥ ५१ ॥ गुण्यो गुरुर्बीजगुरुः शक्त्यनंतौ च धर्मकः ॥ ज्ञानवैराग्यमैश्वर्य्यैस्ततः पूर्वादिपत्रके ॥ ५२ ॥ अधोर्द्ध्ववदने द्वे च पद्मकर्णिककेसरम् ॥ वामाद्या आत्मविद्या च सदा ध्यायेच्छिवाख्यकम् ॥ ५३ ॥ तत्त्वं शिवासने मूर्त्तिर्हों हौं विद्यादेहाय नमः ॥ बद्धपद्मासनासीनः सितः षोडशवार्षिकः ॥ ५४ ॥ पञ्चवक्त्रः कराग्रैः स्वैर्दशभिश्चैव धारयन् ॥ अभयं प्रसादं शक्तिं शूलं खट्वाङ्गमीश्वरः ॥ ५५ ॥ दक्षैः करैर्वामकैश्च भुजंगं चाक्षसूत्रकम् ॥ डमरुकं नीलोत्पलं बीजपूरकमुत्तमम् ॥ ५६ ॥ इच्छाज्ञानक्रियाशक्तिस्त्रिनेत्रो हि सदाशिवः ॥ एवं शिवार्चनध्यानी सर्वदा कालवर्जितः ॥ ५७ ॥ इडाहोरात्रचारेण त्रीणि वर्षाणि जीवति ॥ दिनद्वयस्य चारेण जीवेद्वर्षद्वयं नरः ॥५८॥ दिनत्रयस्य चारेण वर्षमेकं स जीवति॥ नाकाले शीतले मृत्युरुष्णे चैव तु कारके ॥ ५९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शिवार्चननिरूपणं नाम त्रयोविंशोऽध्यायः ॥२३॥( इति शिवादिपूजा समाप्ता) ॥ सूत उवाच ॥ वक्ष्ये गणादिकाः पूजाः सर्वदा स्वर्गदाः पराः ॥ गणासनं गणमूर्त्तिं गणाधिपतिमर्च्चयेत् ॥ १ ॥ गामादिहृदयाद्यंगं दुर्गाया गुरुपादुकाः ॥ दुर्गासनं च तन्मूर्त्तिं ह्रीं दुर्गे रक्षणीति च ॥२॥ हृदादिकं नव शक्त्यो रुद्रचण्डा प्रचण्डया ॥ चण्डोग्रा चण्डनायिका चण्डा चण्डवती क्रमात् ॥ ३ ॥ चण्डरूपा चण्डिकाख्या दुर्गेदुर्गेऽथ रक्षिणि ॥ वज्रखड्गादिका मुद्राः शिवाद्या वह्निदेशतः ॥ ४ ॥ सदाशिवेमहाप्रेतपद्मासनमथापि वा ॥ ऐं क्लीं ( ह्रीं ) सौस्त्रिपुरायै नमः॥ॐ ह्रां ह्रीं क्षें क्षैं स्त्रीं स्कीं रों स्फें स्फीं शां पद्मासनं च मूर्तिं च त्रिपुराहृदयादिकम् ॥५॥पीठाम्बुजे तु ब्राह्म्यादीर्ब्रह्माणी च महेश्वरी ॥ कौमारी वैष्णवी पूज्या वाराही चेन्द्रदेवता ॥ ६ ॥ चामुण्डा चण्डिका पूज्या भैरवाख्यांस्ततो यजेत् ॥ असितांगो

---

१ शक्तिर्य इति पा० । २ सदाशिवः प्रेतादाने इति पा० । सदाशिवप्रेतासने इति पा० । ३ ॐ ह्रां ह्रीं क्रीं क्षौं क्षैं स्फें गं पद्मासनं ।

रुरुश्चण्डः क्रोध उन्मत्तभैरवः ॥ ७ ॥ कपाली भीषणश्चैव संहारश्चाष्ट भैरवाः ॥ रतिः प्रीतिः कामदेवः पञ्च बाणाश्च योगिनी ॥ ८ ॥ वटुकं दुर्गया विघ्नराजो गुरुश्च क्षेत्रपः ॥ पद्मगर्भे मण्डले च त्रिकोणे चिन्तयेद्धृदि ॥ ९ ॥ शुक्लां वरदाक्षसूत्रपुस्ताभयसमन्विताम् ॥ लक्षजप्याच्च होमाच्च त्रिपुरा सिद्धिदा भवेत् ॥ १० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे त्रिपुरादिपूजानिरूपणं नाम चतुर्विंशोऽध्यायः ॥२४॥ सूत उवाच॥ ऐं क्लीं श्रीं स्फें क्षौं अनन्तशक्तिपादुकां पूजयामि नमः ॥१॥ ऐं ह्रीं श्रीं फ्रौं क्षौं आधारशक्तिपादुकां पूजयामि नमः ॥ ॐ ह्रं कालाग्निरुद्रपादुकां पूजयामि नमः ॥ २ ॥ ॐ ह्रीं हुं हाटकेश्वरदेवपादुकां पूजयामि नमः ॥ ॐ ह्रीं शेषभट्टारकपादुकां पूजयामि नमः ॥ ३ ॥ ॐ ह्रीं श्रीं पृथिवीतत्सवर्णभुवनद्वीपसमुद्रदिशामनन्ताख्यमासनं पद्मासनं पूजयामि नमः ॥ ४ ॥ ह्रीं श्रीं निवृत्त्यादि कला पृथिव्यादितत्त्व मनन्तादिभुवनमोङ्कारादिवर्णम् ॥ हकारादिनवात्मकपदः सद्योजातादिमन्त्रः ह्रां हृदयाद्यङ्गः ॥ एवं मन्त्रमहेश्वर सिद्धविद्यात्मकः परामृतार्णवः सर्वभूतो दिक्समस्तषडंगः सदाशिवार्णवपयःपूर्णोदधिपक्षश्रीमानास्पदात्मकः विद्योमापूर्णज्ञत्वकर्त्तृत्वलक्षणज्येष्ठाचक्ररुद्रशक्त्यात्मककर्णिकः ॥ नवशक्तिशिवादिभिर्मूलमण्डलत्रयकुजात्मकोत्पन्नापद्मासनपादुकां पूजयामि नमः ॥ ५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे आसनपूजानिरूपणं नाम पंचविंशोऽध्यायः ॥ २५ ॥ ॥ सूत उवाच ॥ अनंतरं करन्यासः ॥ विद्याकरी शुद्धिः कार्य्या ॥ पद्ममुद्रां बद्ध्वा मन्त्रन्यासं कुर्य्यात् ॥ कौं कनिष्ठायै नमः ॥ नौं अनामिकायै नमः ॥ मौं मध्यमायै नमः ॥ तौं तर्जन्यै नमः ॥ अं अंगुष्ठायै नमः ॥ लां करतलायै नमः ॥ वां करपृष्ठायै नमः ॥ १ ॥ अथ देहन्यासः ॥ स्मंस्मं मणिबन्धाय नमः ॥ ऐं ह्रीं श्रीं करास्फालाय नमः ॥ महातेजोरूपं हुंहुंकारेण करास्फालनं कुर्य्यात् ॥ २ ॥ ऐं ह्रीं श्रीं ह्रीं स्फैं नमो भगवते स्फैं कुब्जिकायै नमः ॥ ह्रं ह्रीं ह्रौं ङञणनमे अघोरामुखि ह्रां ह्रीं किलिकिलि विच्चे स्थौल्यक्रोशी ह्रीं ह्रीं श्रीं ऐं नमो भगवते ऊर्द्ध्ववक्त्राय नमः ॥ स्फौं कुब्जि

---

१ ऐं श्री श्रीं क्रौं क्षौं अनन्तेतिपा० । ऐं ह्रीं श्रीं फ्रे क्षौं अनन्तेति पा० । २ श्रीं फैं क्षौं आधा० । ३ ॐ ह्रीं क्रूं हा० । ४ अत्र सर्वत्र पदानां स्त्रीलिङ्गद्वितीयैकवचनान्तत्वे स्वरसतः सङ्गतिर्भवति विनानवशक्तिशिवादिभिरिति पदेन-प्रकारान्तरेण गतिर्नेति भाति । ५ भुवनमङ्कारादिनवात्मकेति पा० । दिवर्णमोङ्कारादिनवात्म० । ६ निष्ठायै नमः । वांवांकरपृष्ठायै इति पाठा० । अत्र तदभिमानिदेवतावाचित्वेनस्त्रीत्वं बोध्यम्। कौं कौं कनिष्ठिकायै० । नौंनौं अनामिकायै०। तौंतौं तर्ज० । मौंमौं मध्य० । अंअं अंगु० । लांलांकर० । वांवांकरपृ० इति पा० । २ क्वचित् पश्चिमोर्ध्वपूर्वदक्षिणोत्तरवक्त्रक्रमेण मन्त्रपाठोस्ति ।

कायै पूर्ववक्राय नमः ॥ ह्रीं श्रीं ह्रीं ङञणनमे दक्षिणवक्राय नमः ॥ ॐ ह्रीं श्रीं किलिकिलि पश्चिमवक्राय नमः ॥ ॐ अघोरामुखि उत्तरवक्राय नमः ॥ ॐ नमो भगवते हृदयाय नमः क्षौं ( क्षें ऐं ) कुब्जिकायै शिरसे स्वाहा ॥ ह्रीं क्रीं ह्रीं आं ङ ञ ण नमे शिखायै वषट् ॥ अघोरामुखि कवचाय हुं ॥ हैं हैं ईं नेत्रत्रयाय वौषट् ॥ किलिकिलि विच्चे अस्त्राय फट् ॥ ३ ॥ ( १ ) ऐं ह्रीं श्रीं अखण्डमण्डलाकारमहाशूलमण्डलाय नमः ( २ ) ऐं ह्रीं श्रीं वायुमण्डलाय नमः ॥ (३) ऐं ह्रीं श्रीं सोममण्डलाय नमः ॥ (४) ऐं ह्रीं श्रीं महाकुलबोधावलिमण्डलाय नमः ( ५ ) ऐं ह्रीं श्रीं महाकौलमण्डलाय नमः॥(६) ऐं ह्रीं श्रीं गुरुमण्डलाय नमः ( ७ ) ऐं ह्रीं श्रीं सोममण्डलाय नमः ( ८ ) ऐं ह्रीं श्रीं समग्र ( ९ ) सिद्ध (१०) योगिनीपीठोपपीठ ( ११ ) क्षेत्रपक्षेत्रमहासन्तानमण्डलाय नमः ॥ एवं मंडलानां द्वादशकं क्रमेण पूज्यम् ॥४॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे आचारकाण्डे करन्यासादिनिरूपणं नाम षड्विंशोऽध्यायः ॥ २६ ॥ सूत उवाच ॥ ॐ कणिचिकीणिकक्राणी चर्वाणी भूतहारिणि फणिविषिणि विरथनारायणि उमे दहदह हस्ते चण्डे रौद्रि माहेश्वरि महामुखि ज्वालामुखि शंकुकर्णि शुकमुंडे शत्रुं हनहन सर्वनाशिनि स्वेदय सर्वांगशोणितं तन्निरीक्षसि मनसा देवि सम्मोहयसम्मोहय रुद्रस्य हृदये जाता रुद्रस्य हृदये स्थिता ॥रुद्रो रौद्रेण रूपेण त्वं देवि रक्षरक्ष मां हूं मां हूं फफफ ठठ स्कन्दमेखलाबालग्रहशत्रुविषहारी ॐ शाले माले हरहर विषोंकाररहिविषवेगे हां हां शवरि हुं शवरि आकौलवेगेशे सर्वे विंचमेघमाले सर्वनागादिविषहरणम् ॥ १ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे नागादिविविधविषहर मन्त्रनिरूपणं नाम सप्तविंशोऽध्यायः ॥ २७ ॥ सूत उवाच ॥ गोपालपूजां वक्ष्यामि भुक्तिमुक्तिप्रदायिनीम् ॥ द्वारे धाता विधाता च गंगायमुनया सह ॥ ॥ १ ॥ शंखपद्मनिधी चैव सारंगः शरभः श्रिया ॥ पूर्वे भद्रः सुभद्रो द्वौ दक्षे चण्डप्रचण्डकौ ॥ २ ॥ पश्चिमे बलप्रबलौ जयश्च विजयो यजेत् ॥ उत्तरे श्रीश्चतुर्द्वारे गणो दुर्गा सरस्वती ॥ ३ ॥ क्षेत्रस्याग्न्यादिकोणेषु दिक्षु नारदपूर्वकम् ॥ सिद्धो गुरुर्नलकूबरं कोणे भागवतं यजेत् ॥ ४ ॥ पूर्वे विष्णुं विष्णुतपो विष्णुशक्तिं समर्चयेत्॥ततो विष्णुपरीवारं मध्ये शक्तिं च कूर्म्मकम् ॥ ५ ॥ अनन्तं पृथिवीं धर्मं ज्ञानं वैराग्यमश्रितः ॥ ऐश्वर्यं वायुपूर्वं च प्रकाशात्मानमुत्तरे ॥ ६ ॥ सत्त्वाय प्रकृतात्मने रजसे मोहरूपिणे ॥ तमसे कन्द पद्माय यजेत्कं काकतत्त्वकम् ॥ ७ ॥ विद्यातत्त्वं

---

१ हां हीं हौं दक्षि० । २ ॐ इं ईं किलि० । ३ स्वाहा । हां हीं हौं हः जम० । ४ हां हीं नेत्रत्र० । ५ ऐं हीं श्रीं आज्ञाम० । ६ कालविकालकङ्कालिचार्वाणि भूतभाविनि फणिविषस्मि ( विषणि ) विरथनारायणि० । ७ वरिआकौलवेशवेसर्वेविंचमेघमाले । सर्वेनागादि० । ८ सत्त्वाय प्रवृत्त्यात्मने० ।

परं तत्त्व सूर्य्येंदुवह्निमण्डलम् ॥ विमलाद्या आसनं च प्राच्यां श्रीं ह्रीं प्रपूजयेत्॥८॥गोपीजनवल्लभाय स्वाहान्तो मनुरुच्यते॥अंगानि यथा–आच
क्रं च सुचक्रं च विचक्रं च तथैव च ॥ ९ ॥ त्रैलोक्यरक्षकं चक्रमसुरारिसुदर्शनम् ॥ हृदादिपूर्वकोणेषु अस्त्रं शक्तिं च पूर्वतः ॥ १० ॥ रुक्मिणी सत्य
भामा च सुनंदा नाग्नजित्यापि ॥ लक्ष्मणा मित्रविंदा च जाम्बवत्या सुशीलया॥११॥ शंखचक्रगदापद्मं मुसलं शार्ङ्गमर्चयेत्॥ खड्गं पाशांकुशं प्राच्यां
श्रीवत्सं कौस्तुभं यजेत् ॥ १२ ॥ मुकुटं वलमालां च ऐंद्राद्यान्ध्वजमुख्यकान्॥ कुमुदाद्यान्विष्वक्सेनं श्रिया कृष्णं सहार्चयेत्॥जप्याद्ध्यानात्पूजना
च्च सर्वान्कामानवाप्नुयात् ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रीगोपालपूजानिरूपणं नामाष्टाविंशोऽध्यायः ॥२८॥
हरिरुवाच ॥ त्रैलोक्यमोहिनीं वक्ष्ये पुरुषोत्तममुख्यकाम् ॥ पूजामन्त्राञ्छ्रीधराद्यान्धर्म्मकामादिदायकान् ॥ १ ॥ ॐ ह्रीं श्रीं क्लीं ह्रूं
ॐ नमः ॥ पुरुषोत्तम अप्रतिरूप लक्ष्मीनिवास जगत्क्षोभण सर्वस्त्रीहृदयदारण त्रिभुवनमदोन्मादनकर सुरासुरमनुज सुंदरी
जनमनांसि तापयतापय शोषयशोषय मारयमारय स्तम्भयस्तम्भय द्रावयद्रावय आकर्षयआकर्षय, परमसुभग सर्वसौभाग्यकर सर्वकामप्रद
अमुकं हनहन चक्रेण गदया खड्गेन सर्वबाणैर्भिंधिभिन्धि पाशेन कुट्टकुट्ट अंकुशेन ताडयताडय तुरुतुरु किं तिष्ठसि तारयतारय यावत्समीहितं मे
सिद्धं भवति ह्रीं ( ह्रूं ) फट् नमः ॥ २ ॥ ॐ श्रीं ( श्रीः ) श्रीधराय त्रैलोक्यमोहनाय नमः ॥ क्लीं पुरुषोत्तमाय त्रैलोक्यमोहनाय नमः ॥ ३ ॥
ॐ विष्णवे त्रैलोक्यमोहनाय नमः ॥ ॐ श्रीं ह्रीं क्लीं त्रैलोक्यमोहनाय विष्णवे नमः ॥ ४ ॥ त्रैलोक्यमोहना मंत्राः सर्वे सर्वार्थसाधकाः ॥ सर्वे चिंत्याः
पृथग् वापि व्यासात्संक्षेपतोऽथ वा ॥५॥ आसनं मूर्त्तिमंत्रं च होमाद्यंगषडंगकम् ॥ चक्रं गदां च खड्गं च मुसलं शंखशार्ङ्गकम्॥६॥शरं पाशं चांकुशं
च लक्ष्मीगरुडसंयुतम्॥विष्वक्सेनं विस्तराद्वा नरः सर्वमवाप्नुयात् ॥७ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे त्रैलोक्यमोहिनी
( श्रीधर )पूजनविधिर्नामैकोनत्रिंशोऽध्यायः॥२९॥सूत उवाच॥विस्तरेण प्रवक्ष्यामि श्रीधरस्यार्चनं शुभम्॥परिवारश्च सर्वेषां समो ज्ञेयो हि पंडितैः॥१॥ॐ
श्रां हृदयाय नमः॥ॐ श्रींशिरसे स्वाहा॥ॐ श्रूं शिखायै वषट्॥ॐ श्रैं कवचाय हुं॥ॐ श्रौं नेत्रत्रयाय वौषट्॥ॐ श्रः अस्त्राय फट् इति॥२॥दर्शयेदात्मनो
मुद्रां शङ्खचक्रगदादिकाम्॥ध्यात्वात्मानं श्रीधराख्यं शंखचक्रगदाधरम् ॥३॥ ततस्तं पूजयेद्देवं मण्डले स्वस्तिकादिके ॥ आसनं पूजयेदादौ देवदेवस्य ॥ १८ ॥
शार्ङ्गिणः॥एभिर्मन्त्रैर्महादेव तान्मन्त्राञ्छृणु शङ्कर॥४॥ॐ श्रीधरासनदेवता आगच्छत॥ॐ समस्तपरिवारायाच्युतासनाय नमः॥५॥ॐ धात्रे नमः ॥

१ प्राच्यां श्रीः क्लीं ह्रीं प्रपू० । २ स्वाहाहोमे जपे नमः० ।

ॐ विधात्रे नमः॥ॐ गंगायै नमः॥ॐ यमुनायै नमः॥ॐ आधारशक्त्यै नमः॥ॐ कूर्म्माय नमः॥ ॐ अनन्ताय नमः ॥ ॐ पृथिव्यै नमः ॥ ॐ धर्म्माय नमः॥ॐ ज्ञानाय नमः॥ॐ वैराग्याय नमः॥ॐ ऐश्वर्य्याय नमः ॥ ॐ अधर्म्माय नमः ॥ॐ अज्ञानाय नमः ॥ ॐ अवैराग्याय नमः ॥ ॐ अनैश्वर्य्याय नमः ॥ ॐ कन्दाय नमः ॥ ॐ नालाय नमः ॐ पद्माय नमः ॥ ॐ विमलायै नमः ॥ ॐ उत्कर्षिण्यै नमः॥ ॐ ज्ञानायै नमः॥ॐ क्रियायै नमः ॥ ॐ योगायै नमः ॥ ॐ प्रह्वयै नमः ॥ ॐ सत्यायै नमः ॥ ॐ ईशानायै नमः ॥ ॐ अनुग्रहायै नमः ॥ ६ ॥ अर्चयित्वा सर्म रुद्र हरिमावाह्य संयजेत् ॥ मन्त्रैरेभिर्महाप्राज्ञः सर्वपापप्रणाशनैः ॥ ७ ॥ ॐ ह्रीं श्रीधराय त्रैलोक्यमोहनाय विष्णवे नमः आगच्छ ॥८॥ ॐ श्रियै नमः॥ ॐ श्रां हृदयाय नमः ॥ ॐ श्रीं शिरसे नमः ॥ ॐ श्रूं शिखायै नमः ॥ ॐ श्रैं कवचाय नमः ॥ ॐ श्रौं नेत्रत्रयाय नमः ॥ ॐ श्रः अस्त्राय नमः ॥ ॐ शंखाय नमः ॥ ॐ पद्माय नमः ॥ ॐ चक्राय नमः ॥ ॐ गदायै नमः ॥ ॐ श्री वत्साय नमः ॥ ॐ कौस्तुभाय नमः ॥ ॐ वनमालायै नमः ॥ ॐ पीताम्बराय नमः ॥ ॐ ब्रह्मणे नमः ॥ ॐ नारदाय नमः ॥ ॐ गुरुभ्यो नमः ॥ ॐ इन्द्राय नमः ॥ ॐ अग्नये नमः॥ ॐ यमाय नमः॥ ॐ निर्ऋतये नमः ॥ ॐ वरुणाय नमः ॥ ॐ वायवे नमः ॥ ॐ सोमाय नमः ॥ ॐ ईशानाय नमः ॥ॐ अनन्ताय नमः ॥ ॐ ब्रह्मणे नमः ॥ ॐ सत्त्वाय नमः ॥ ॐ रजसे नमः ॥ ॐ तमसे नमः ॥ ॐ विष्वक्सेनाय नमः ॥ ९ ॥ अभिषेकं तथा वस्त्रं ततो यज्ञोपवीतकम् ॥ गन्धं पुष्पं तथा धूपं दीपमन्नं प्रदक्षिणम् ॥ १० ॥ दद्यादेभिर्महामन्त्रैः समभ्यर्थ जपेन्मनुम् ॥ शतमष्टोत्तरं चापि जप्त्वा ह्यथ समर्पयेत् ॥ ११ ॥ ततो मुहूर्त्तमेकन्तु ध्यायेद्देवं हृदि स्थितम् ॥ शुद्धस्फटिकसंकाशं सूर्य्यकोटिसमप्रभम्॥१२॥ प्रसन्नवदनं सौम्यं स्फुरन्मकरकुण्डलम् ॥ किरीटिनमुदाराङ्गं वनमालासमन्वितम् ॥१३॥ परब्रह्मस्वरूपं च श्रीधरं चिन्तयेत्सुधीः॥ अनेन चैव स्तोत्रेण स्तुवीत परमेश्वरम्॥१४॥श्रीनिवासाय देवाय नमः श्रीपतये नमः॥ श्रीधराय सशार्ङ्गाय श्रीप्रदाय नमोनमः ॥ १५ ॥ श्रीवल्लभाय शान्ताय श्रीमते च नमोनमः ॥ श्रीपर्वतनिवासाय नमः श्रेयस्कराय च ॥ १६ ॥ श्रेयसां पतये चैव ह्याश्रमाय नमोनमः॥नमः श्रेयःस्वरूपाय श्रीकराय नमोनमः ॥ १७ ॥ शरण्याय वरेण्याय नमो भूयो नमोनमः ॥ स्तोत्रं कृत्वा नमस्कृत्य देवदेवं विसर्जयेत् ॥ १८ ॥ इति रुद्र समाख्याता पूजा विष्णोर्महात्मनः ॥ यः करोति महाभक्त्या स याति परमं पदम् ॥ १९ ॥ इमं यः पठतेऽध्यायं विष्णुपूजाप्रकाशकम् ॥ स विधूयेह पापानि याति विष्णोः परं पदम् ॥२०॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रीधरा(विष्णव)र्चनविधिर्नाम त्रिंशोऽध्यायः॥३०॥रुद्र उवाच॥भूय एवं जगन्नाथ पूजां कथय मे प्रभो ॥ यया तरेयं संसारसागरं ह्यतिदुस्त

रम् ॥ १ ॥ हरिरुवाच ॥ अर्चनं विष्णुदेवस्य वक्ष्यामि वृषभध्वज ॥ तच्छृणुष्व महाभाग भुक्तिमुक्तिप्रदं शुभम् ॥ २ ॥ कृत्वा स्नानं ततः सन्ध्यां ततो यागगृहं व्रजेत् ॥ प्रक्षाल्य पाणी पादौ च आचम्य च विशेषतः ॥ ३ ॥ मूलमन्त्रं समस्तं तु हस्तयोर्व्यापकं न्यसेत् ॥ मूलमन्त्रं च देवस्य शृणु रुद्र वदामि ते ॥ ४ ॥ ॐ श्रीं ह्रीं श्रीधराय विष्णवे नमः ॥ अयं मन्त्रः सुरेशस्य विष्णोरीशस्य वाचकः ॥ ५ ॥ सर्वव्याधिहरश्चैव सर्वग्रहहरस्तथा ॥ सर्वपापहरश्चैव भुक्तिमुक्तिप्रदायकः ॥ ६ ॥ अंगन्यासं ततः कुर्य्यादेभिर्मन्त्रैर्विचक्षणः ॥ ॐ हां हृदयाय नमः ॥ ॐ हीं शिरसे स्वाहा ॥ ॐ हूं शिखायै वषट् ॥ ॐ हैं कवचाय हुं ॥ ॐ हौं नेत्रत्रयाय वौषट् ॥ ॐ हः अस्त्राय फट् ॥ ७ ॥ इति मन्त्रः समाख्यातो मया ते प्रभविष्णुना ॥ न्यासं कृत्वात्मनो मुद्रां दर्शयेद्विजितात्मवान् ॥ ८ ॥ ततो ध्यायेत्परं विष्णुं हृत्कोटरसमाश्रितम् ॥ शंखचक्रसमायुक्तं कुन्देन्दुधवलं हरिम् ॥ ९ ॥ श्रीवत्सकौस्तुभयुतं वनमालासमन्वितम् ॥ रत्नहारकिरीटेन संयुक्तं परमेश्वरम् ॥ १० ॥ अहं विष्णुरिति ध्यात्वा कृत्वा वै शोधनादिकम् ॥ यं क्षौं रमिति[1] बीजैश्च कठिनीकृत्य नामभिः ॥ ११ ॥ अण्डमुत्पाद्य च ततः प्रणवेनैव भेदयेत् ॥ तत्र पूर्वोक्तरूपं[2] तु भावयित्वा वृषध्वज ॥ १२ ॥ आत्मपूजां ततः कुर्य्याद्गन्धपुष्पादिभिः शुभैः ॥ आवाह्य पूजयेत्सर्वा देवता आसनस्य याः ॥ १३ ॥ मन्त्रैरेभिर्महादेव तन्मन्त्रं शृणु शंकर ॥ विष्ण्वासनदेवता आगच्छत ॥ १४ ॥ ॐ समस्तपरिवारायाच्युताय नमः ॥ ॐ धात्रे नमः ॥ ॐ विधात्रे नमः ॥ ॐ गंगायै नमः ॥ ॐ यमुनायै नमः ॥ ॐ शंखनिधये नमः ॥ ॐ पद्मनिधये नमः ॥ ॐ चण्डाय नमः ॥ ॐ प्रचण्डाय नमः ॥ ॐ द्वारश्रियै नमः ॥ ॐ आधारशक्त्यै नमः ॥ ॐ कूर्म्माय नमः ॥ ॐ अनन्ताय नमः ॥ ॐ श्रियै नमः ॥ ॐ धर्म्माय नमः ॥ ॐ ज्ञानाय नमः ॥ ॐ वैराग्याय नमः ॥ ॐ ऐश्वर्याय नमः ॥ ॐ अधर्म्माय नमः ॥ ॐ अज्ञानाय नमः ॥ ॐ अवैराग्याय नमः ॥ ॐ अनैश्वर्याय नमः ॥ ॐ सं सत्त्वाय नमः ॥ ॐ रं रजसे नमः ॥ ॐ तं तमसे नमः ॥ ॐ कं कन्दाय नमः ॥ ॐ नं नालाय नमः ॥ ॐ लां पद्माय नमः ॥ ॐ अं अर्कमण्डलाय नमः ॥ ॐ सों सोममण्डलाय नमः ॥ ॐ वं वह्निमण्डलाय नमः ॥ ॐ विमलायै नमः ॥ ॐ उत्कर्षिण्यै नमः ॥ ॐ ज्ञानायै नमः ॥ ॐ क्रियायै नमः ॥ ॐ योगायै नमः ॥ ॐ प्रह्वयै नमः ॥ ॐ सत्यायै नमः ॥ ॐ ईशानायै नमः ॥ ॐ अनुग्रहायै नमः ॥ १५ ॥ गन्धपुष्पादिभिस्त्वेतैर्मन्त्रैरेतास्तु पूजयेत् ॥ पूजयित्वा ततो विष्णुं सृष्टिसंहारकारिणम् ॥ १६ ॥ आवाह्य मण्डले रुद्र पूजयेत्परमेश्वरम् ॥ अनेन विधिना रुद्र सर्वपापहरं परम् ॥ १७ ॥ यथात्मनि तथा देवे न्यासं कुर्वीत चादितः ॥ मुद्रां

१ यक्षौंरमिति० । पक्षौर० पा० । २ पूर्वोक्तरूपेण भाव० ।

प्रदर्शयेत्पश्चादर्घ्यादीनर्पयेत्ततः ॥ १८ ॥ स्नानं कुर्य्यात्ततो वस्त्रं दद्यादाचमनं ततः ॥ गन्धपुष्पं तथा धूपं दीपं दद्याच्चरुं ततः ॥ १९ ॥ प्रद क्षिणं ततो जप्यं ततस्तस्मिन्समर्पयेत् ॥ अंगादीनां स्वमन्त्रैश्च पूजां कुर्वीत साधकः ॥ २० ॥ देवस्य मूलमन्त्रेणेत्येवं विद्धि वृषध्वज ॥ मन्त्राञ्छृणु त्रिनेत्र त्वं कथ्यमानान्मयाधुना ॥ २१ ॥ ॐ ह्रां हृदयाय नमः ॥ ॐ ह्रीं शिरसे नमः ॥ ॐ ह्रूं शिखायै नमः ॥ ॐ ह्रैं कवचाय नमः॥ॐ ह्रौं नेत्रत्रयाय नमः॥ॐ ह्रः अस्त्राय नमः ॥ ॐ श्रियै नमः ॥ ॐ शंखाय नमः ॥ ॐ पद्माय नमः ॥ ॐ चक्राय नमः ॥ ॐ गदायै नमः ॥ ॐ श्रीवत्साय नमः ॥ ॐ कौस्तुभाय नमः ॥ ॐ वनमालायै नमः ॥ ॐ पीताम्बराय नमः ॥ ॐ खड्गाय नमः ॥ ॐ मुसलाय नमः ॥ ॐ पाशाय नमः ॥ ॐ अंकुशाय नमः ॥ शार्ङ्गाय नमः ॥ ॐ शराय नमः ॥ ॐ ब्रह्मणे नमः ॥ ॐ नारदाय नमः ॥ ॐ पूर्वसिद्धेभ्यो नमः ॥ ॐ भागवतेभ्यो नमः ॥ ॐ गुरुभ्यो नमः॥ ॐ परमगुरुभ्यो नमः॥ॐ इन्द्राय सुराधिपतये सवाहनपरिवाराय नमः ॥ ॐ अग्नये तेजोऽधिपतये सवाहनपरिवाराय नमः ॥ ॐ यमाय प्रेताधिपतये सवाहनपरिवाराय नमः ॥ ॐ निर्ऋतये रक्षोऽधिपतये सवाहनपरिवाराय नमः ॥ ॐ वरुणाय जलाधिपतये सवाहनपरिवाराय नमः ॥ ॐ वायवे प्राणाधिपतये सवाहनपरिवाराय नमः ॥ ॐ सोमाय नक्षत्राधिपतये सवाहनपरिवाराय नमः ॥ ॐ ईशानाय विद्याधिपतये सवाहनपरिवाराय नमः ॥ ॐ अनन्ताय नागाधिपतये सवाहनपरिवाराय नमः ॥ ॐ ब्रह्मणे लोकाधिपतये सवाहनपरिवाराय नमः ॥ ॐ वज्राय हुं फट् नमः ॥ ॐ शक्त्यै हुं फट् नमः ॥ ॐ दंडाय हुं फट् नमः ॥ ॐ खड्गाय हुं फट् नमः ॥ ॐ पाशाय हुं फट् नमः ॥ ॐ ध्वजाय हुं फट् नमः ॐ गदायै हुं फट् नमः ॥ ॐ त्रिशूलाय हुं फट् नमः ॥ ॐ चक्राय हुं फट् नमः ॥ ॐ पद्माय हुं फट् नमः ॥ ॐ वौं विष्वक्सेनाय नमः ॥ २२ ॥ एभिमन्त्रैर्महादेव पूज्या अंगादयो नरैः ॥ पूजयित्वा महात्मानं विष्णुं ब्रह्मस्वरूपिणम् ॥ २३ ॥ स्तुवीत चानया स्तुत्या परमात्मानमव्ययम् ॥ विष्णवे देवदेवाय नमो वै प्रभविष्णवे ॥ २४ ॥ विष्णवे वासुदेवाय नमः स्थितिकराय च ॥ ग्रसिष्णवे नमश्चैव नमः प्रलयशायिने ॥ २५ ॥ देवानां प्रभवे चैव यज्ञानां प्रभवे नमः ॥ मुनीनां प्रभवे नित्यं यक्षाणां प्रभविष्णवे ॥ २६ ॥ जिष्णवे सर्वदेवानां सर्वगाय महात्मने ॥ ब्रह्मेन्द्ररुद्रवन्द्याय सर्वेशाय नमोनमः ॥ २७ ॥ सर्वलोकहितार्थाय लोकाध्यक्षाय वै नमः ॥ सर्वगोप्त्रे सर्वकर्त्रे सर्वदुष्टविनाशिने ॥ २८ ॥ वरप्रदाय शान्ताय वरेण्याय नमोनमः ॥ शरण्याय सुरूपाय धर्मकामार्थदायिने ॥ २९ ॥ स्तुत्वा ध्यायेत्स्वहृदये ब्रह्मरूपिणमव्ययम् ॥ एवं तु पूजयेद्विष्णुं मूलमन्त्रेण शंकर ॥ ३० ॥ मूलमन्त्रं

जपेद्वापि यः स याति नरो हरिम् ॥ एतत्ते कथितं रुद्र विष्णोरर्चनमुत्तमम् ॥ ३१ ॥ रहस्यं परमं गुह्यं भुक्तिमुक्तिप्रदं परम् ॥ एतद्यश्च पठेद्विद्वान्विष्णुभक्तः पुमान्हर ॥ शृणुयाच्छ्रावयेद्वापि विष्णुलोकं स गच्छति ॥ ३२ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपूजाविधिर्नामैकात्रिंशोऽध्यायः ॥ ३१ ॥ महेश्वर उवाच ॥ पञ्चतत्त्वार्चनं ब्रूहि शंखचक्रगदाधर ! ॥ येन विज्ञानमात्रेण नरो याति परं पदम् ॥१॥ हरिरुवाच ॥ पञ्चतत्त्वार्चनं वक्ष्ये तव शङ्कर सुव्रत ॥ मंगल्यं मंगलं दिव्यं रहस्यं कामदं परम् ॥ २ ॥ तच्छृणुष्व महादेव पवित्रं कलिनाशनम् ॥ एक एवाव्ययः शांतः परमात्मा सनातनः ॥३॥ वासुदेवो ध्रुवः शुद्धः सर्वव्यापी निरञ्जनः ॥ स एव मायाया देव पञ्चधा संस्थितो हरिः ॥ ४ ॥ लोकानुग्रहकृद्विष्णुः सर्वदुष्टविनाशनः ॥ वासुदेवस्वरूपेण तथा सङ्कर्षणेन च ॥ ५ ॥ तथा प्रद्युम्नरूपेणानिरुद्धाख्येन च स्थितः ॥ नारायणस्वरूपेण पञ्चधा ह्यद्वयः स्थितः ॥६॥ एतेषां वाचकान्मंत्रानेताञ्छृणु वृषध्वज ! ॥ ॐ अं वासुदेवाय नमः ॥ ॐ आं संकर्षणाय नमः ॥ ॐ अं प्रद्युम्नाय नमः ॥ ॐ अनिरुद्धाय नमः ॥ ॐ ॐ नारायणाय नमः ॥ ७ ॥ पञ्च मंत्राः समाख्याता देवानां वाचकास्तव ॥ सर्वपापहराः पुण्याः सर्वरोगविनाशनाः ॥८॥ अधुना संप्रवक्ष्यामि पञ्चतत्त्वार्चनं शुभम् ॥ विधिना येन कर्त्तव्यं यैर्वा मंत्रैश्च शंकर ! ॥ ९ ॥ आदौ स्नानं प्रकुर्वीत स्नात्वा सन्ध्यां समाचरेत् ॥ अर्चनागारमासाद्य प्रक्षाल्याङ्घ्र्यादिकं तथा ॥ ॥ १० ॥ आचम्योपविशेत्प्राज्ञो बद्धासनमभीप्सितम् ॥ शोषणादि ततः कुर्य्याद् अं क्षौं रंमिति मंत्रकैः[1] ॥ ११ ॥ सामान्यं[2] कठिनीकृत्य चाण्डमुत्पादयेत्ततः ॥ विभिद्यांडं ततो ह्यण्डे भावयेत्परमेश्वरम् ॥ १२ ॥ वासुदेवं जगन्नाथं पीतकौशेयवाससम् ॥ सहस्रादित्यसङ्काशं स्फुरन्मकरकुंडलम् ॥ १३ ॥ आत्मनो हृदि पद्मे तु ध्यायेत्तु परमेश्वरम् ॥ ततः संकर्षणं देवमात्मानं चिंतयेत्प्रभुम् ॥ १४ ॥ प्रद्युम्नमनिरुद्धं च श्रीमन्नारायणं ततः ॥ इंद्रादींश्च सुरांस्तस्माद्देवदेवात्समुत्थितान् ॥ १५ ॥ चिन्तयेच्च ततो न्यासं कुर्य्याद्वै करयोर्द्वयोः ॥ व्यापकं मूलमंत्रेण चांगन्यासं ततः परम् ॥ १६ ॥ अंगमंत्रैर्महादेव ! तान्मंत्राञ्शृणु सुव्रत ! ॥ ॐ आं हृदयाय नमः ॥ ॐ ईं शिरसे नमः ॥ ॐ ऊं शिखायै नमः ॥ ॐ ऐं कवचाय नमः ॥ ॐ औं नेत्रत्रयाय नमः ॥ ॐ अः अस्त्राय फट् ॥ १७॥ ॐ समस्तपरिवारायाच्युताय नमः ॥ ॐ धात्रे नमः ॥ ॐ विधात्रे नमः ॥ ॐ आधारशक्त्यै नमः ॥ ॐ कूर्माय नमः ॥ ॐ अनंताय नमः ॐ पृथिव्यै नमः॥ॐ धर्माय नमः॥ॐ ज्ञानाय नमः॥ॐ वैराग्याय नमः ॥ ॐ ऐश्वर्य्याय नमः ॥ ॐ अधर्माय नमः ॥ ॐ अज्ञानाय नमः ॥ ॐ अनैश्वर्य्याय

१ यंक्षरमिति पा० । यंक्षीर० पा० । यं(पं)क्षौवमि० पा० । यंक्षौरमि० पा० । २ समान्यकठि० ।

नमः ॥ ॐ अं अर्कमण्डलाय नमः ॥ ॐ सों सोममण्डलाय नमः ॥ ॐ वं वह्निमण्डलाय नमः ॥ ॐ वं वासुदेवाय परब्रह्मणे शिवाय तेजोरूपाय व्यापिने सर्वदेवाधिदेवाय नमः ॥ ॐ पाञ्चजन्याय नमः ॥ ॐ सुदर्शनाय नमः ॥ ॐ गदायै नमः ॥ ॐ पद्माय नमः ॥ ॐ श्रियै नमः ॥ ॐ ह्रियै नमः ॥ ॐ पुष्ट्यै नमः॥ॐ गीत्यै नमः॥ ॐ शक्त्यै नमः ॥ ॐ प्रीत्यै नमः ॥ ॐ इन्द्राय नमः॥ॐ अग्नये नमः॥ॐ यमाय नमः॥ॐ निर्ऋतये नमः ॥ ॐ वरुणाय नमः ॥ ॐ वायवे नमः ॥ ॐ सोमाय नमः ॥ॐ ईशानाय नमः ॥ ॐ अनन्ताय नमः ॥ ॐ ब्रह्मणे नमः ॥ ॐ विष्वक्सेनाय नमः ॥ १८ ॥ एते मन्त्राः समाख्यातास्तव रुद्र समासतः॥पूजा चैव प्रकर्त्तव्या मण्डले स्वस्तिकादिके ॥१९॥ ॐ पद्माय नमः॥अंगन्यासं च कृत्वा तु मुद्राः सर्वाः प्रदर्शयेत् ॥ आत्मानं वासुदेवं च ध्यात्वा चैव परेश्वरम् ॥ २०॥ आसनं पूजयेत्पश्चादावाह्य विधिवन्नरः ॥ द्वारे धातुर्विधातुश्च पूजा कार्य्या वृषध्वज ॥२१॥ गरुडं पूजयेदग्रे वासुदेवस्य शंकर ॥ शंखादिपद्मपर्य्यन्तं मध्यदेशे प्रपूजयेत् ॥२२॥ धर्मं ज्ञानं च वैराग्यमैश्वर्यं पूर्वदेशतः ॥ आग्नेयादिष्वर्चयेद्वै अधर्मादिचतुष्टयम् ॥ २३ ॥ मण्डलत्रयमध्ये तु कीर्त्तिता ह्यासनस्थितिः ॥ पूर्वादिपद्मपत्रेषु पूज्याः संकर्षणादयः॥२४॥कर्णिकायां वासुदेवं पूजयेत्परमेश्वरम् ॥ पाञ्चजन्यादयः पूज्याः ऐशान्यादिषु संस्थिताः ॥२५॥ शक्तयश्चैव पूर्वादौ देवदेवस्य शंकर ॥ इन्द्रादयो लोकपालाः पूज्याः पूर्वादिषु स्थिताः ॥ २६ ॥ अधो नाग तदूर्द्ध्व तु ब्रह्माणं पूजयेत्सुधीः ॥ इति स्थानक्रमो ज्ञेयो मण्डले शंकर त्वया ॥ २७ ॥आवाह्य मण्डले देवं कृत्वा न्यासं तु तस्य च॥मुद्रां प्रदर्श्य पाद्यादीन्दद्यान्मूलेन शंकर॥२८॥स्नानं वस्त्रं तथाचामं गन्धं पुष्पं च धूपकम्॥ दीपं नैवेद्यमाचामं नमस्कारं प्रदक्षिणम्॥कुर्य्याच्छंकर मूलेन जपं चापि समर्पयेत्॥२९॥इदं स्तोत्रं जपेत्पश्चाद्वासुदेवमनुस्मरन्॥ ॐ नमो वासुदेवाय नमः संकर्षणाय च ॥३०॥ प्रद्युम्नायादिदेवायानिरुद्धाय नमोनमः॥नमो नारायणायैव नराणां पतये नमः ॥३१॥ नरपूज्याय कीर्त्याय स्तुत्याय वरदाय च ॥ अनादिनिधनायैव पुराणाय नमोनमः ॥ ३२ ॥ सृष्टिसंहारकर्त्रे च ब्रह्मणः पतये नमः ॥ नमो वै वेदवेद्याय शंखचक्रधराय च ॥ ३३ ॥ कलिकल्मषहर्त्रे च सुरेशाय नमोनमः ॥ संसारवृक्षच्छेत्रे च मायाभेत्रे नमोनमः ॥ ३४ ॥ बहुरूपाय तीर्थाय त्रिगुणायागुणाय च ॥ ब्रह्मविष्णवीशरूपाय मोक्षदाय नमोनमः॥३५॥मोक्षद्वाराय धर्माय निर्माणाय नमोनमः॥सर्वकामप्रदायैव परब्रह्मस्वरूपिणे॥३६॥संसारसागरे घोरे निमग्नं मां समुद्धर॥ त्वदन्यो नास्ति देवेश नास्ति त्राता जगत्प्रभो ॥ ३७ ॥ त्वामेव सर्वगं विष्णुं गतोऽहं शरणं गतः ॥ ज्ञानदीपप्रदानेन तमोमुक्तं प्रकाशय ॥ ३८ ॥

१ मण्डलद्वितये मध्ये० ।

एवं स्तुवीत देवेशं सर्वक्लेशविनाशनम्॥अन्यैश्च वाँदर्कः स्तोत्रैः स्तुत्वा वै नीललोहित ॥३९॥पञ्चतत्त्वसमायुक्तं ध्यायेद्विष्णुं नरो हृदि॥विसर्जयेत्ततो देवमि
ति पूजा प्रकीर्तिता ॥ ४० ॥ सर्वकामप्रदा श्रेष्ठा वासुदेवस्य[1] शंकर॥एतत्पूजनमात्रेण कृतकृत्यो भवेन्नरः॥४१॥इदं च यः पठेद्रुद्र पञ्चतत्त्वार्चनं नरः॥
शृणुयाच्छ्रावयेद्वापि विष्णुलोकं स गच्छति ॥ ४२ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे पंचतत्त्वा ( विष्णव ) र्च
नविधिर्नाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥ ॥ रुद्र उवाच ॥ सुदर्शनस्य पूजां मे वद शंखगदाधर ॥ ग्रहरोगादिकं सर्वं यत्कृत्वा नाशमेति वै ॥ १ ॥
हरिरुवाच ॥ सुदर्शनस्य चक्रस्य शृणु पूजां वृषध्वज ॥ स्नानमादौ प्रकुर्वीत पूजयेच्च हरिं ततः ॥ २ ॥ मूलमन्त्रेण वै न्यासं मूलमन्त्रं शृणुष्व
च ॥ सहस्रारं हुं फट् नमो मन्त्रः प्रणवपूर्वकः ॥ ३ ॥ कथितः सर्वदुष्टानां नाशको मन्त्रभेदकः ॥ ध्यायेत्सुदर्शनं देवं हृदि पद्मेऽमले शुभे ॥ ४ ॥
शंखचक्रगदापद्मधरं सौम्यं किरीटिनम् ॥ आवाह्य मण्डले देवं पूर्वोक्तविधिना हर ॥ ५ ॥ पूजयेद्गन्धपुष्पाद्यैरुपचारैर्महेश्वर ॥ पूजयित्वा
जपेन्मन्त्रं शतमष्टोत्तरं नरः ॥ ६ ॥ एवं यः कुरुते रुद्र ! चक्रस्यार्चनमुत्तमम् ॥ सर्वरोगविनिर्मुक्तो विष्णुलोकं समाप्नुयात् ॥ ७ ॥ एतत्स्तोत्रं
जपेत्पश्चात्सर्वव्याधिविनाशनम् ॥ नमः सुदर्शनायैव सहस्रादित्यवर्चसे ॥ ८ ॥ ज्वालामालाप्रदीप्ताय सहस्राराय चक्षुषे ॥ सर्वदुष्टविनाशाय
सर्वपातकमर्दिने ॥ ९ ॥ सुचक्राय विचक्राय सर्वमन्त्रविभेदिने ॥ प्रसवित्रे जगद्धात्रे जगद्विध्वंसिने नमः ॥ १० ॥ पालनार्थाय लोकानां
दुष्टासुरविनाशिने ॥ उग्राय चैव सौम्याय चण्डाय च नमोनमः ॥ ११ ॥ नमश्चक्षुःस्वरूपाय संसारभयभेदिने ॥ मायापंजरभेत्रे च शिवाय च
नमोनमः ॥ १२ ॥ ग्रहातिग्रहरूपाय ग्रहाणां पतये नमः ॥ कालाय मृत्यवे चैव भीमाय च नमोनमः ॥ १३ ॥ भक्तानुग्रहदात्रे च भक्त
गोप्त्रे नमोनमः ॥ विष्णुरूपाय शान्ताय चायुधानां धराय च ॥ १४ ॥ विष्णुशस्त्राय चक्राय नमो भूयो नमोनमः ॥ इति स्तोत्रं महापुण्यं चक्र
स्य तव कीर्त्तितम् ॥ १५ ॥ यः पठेत्परया भक्त्या विष्णुलोकं स गच्छति ॥ चक्रपूजाविधिं यश्च पठेद्रुद्र जितेन्द्रियः ॥ स पापं भस्मसात्कृत्वा
विष्णुलोकाय कल्पते ॥ १६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सुदर्शनपूजाविधिर्नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥
रुद्र उवाच ॥ पुनर्देवार्चनं ब्रूहि हृषीकेश गदाधर ॥ शृण्वतो नास्ति तृप्तिर्मे गदतस्तव पूजनम् ॥१॥ हरिरुवाच ॥ हयग्रीवस्य देवस्य पूजनं कथयामि
ते ॥ तच्छृणुष्व जगन्नाथो येन विष्णुः प्रतुष्यति ॥ २ ॥ मूलमन्त्रं महादेव हयग्रीवस्य वाचकम् ॥ प्रवक्ष्यामि परं पुण्यं तदादौ शृणु शंकर ॥ ३ ॥

१ शर्मदाय च देवानां दु० ।

ॐ सौं क्षौं शिरसे नमः इति प्रणवसंयुतः॥अयं नवाक्षरो मन्त्रः सर्वविद्याप्रदायकः॥४॥अस्यांगानि महादेव ताञ्छृणुष्व वृषध्वज ॥ ॐ क्षां हृदयाय नमः॥ ॐ क्षीं शिरसे स्वाहा शिरः प्रोक्तं क्षूं वषट् तथा ॥५॥ॐ कारयुक्ता देवस्य शिखा ज्ञेया वृषध्वज ॥ ॐ क्षैं कवचाय हुं वै कवचं परिकीर्त्तितम् ॥६॥ ॐ क्षौं नेत्रत्रयाय वौषट् नेत्रं देवस्य कीर्तितम् ॥ ॐ हः अस्त्राय फट् अस्त्रं देवस्य कीर्त्तितम् ॥७॥ पूजाविधिं प्रवक्ष्यामि तन्मे निगदतः शृणु आदौ स्नात्वा तथाचम्य ततो यागगृहं व्रजेत् ॥ ८ ॥ ततः प्रविश्य विधिवत्कुर्य्याद्वै शोषणादिकम् ॥ यं क्षौं रमिति बीजैश्च कठिनीकृत्य लमिति ॥ ९ ॥ अण्डमुत्पाद्य च ततः ॐकारेणैव भेदयेत् ॥ अण्डमध्ये हयग्रीवमात्मानं परिचिन्तयेत् ॥ १० ॥ शंखकुन्देन्दुधवलं मृणालरजतप्रभम् ॥ गोक्षीरसदृशं तद्वत्सूर्यकोटिसमप्रभम् ॥ शंखं चक्रं गदां पद्मं धारयन्तं चतुर्भुजम् ॥११॥ किरीटिनं कुण्डलिनं वनमालासमन्वितम्॥सुचक्रं सुकपोलं च पीताम्बरधरं विभुम् ॥ १२ ॥ भावयित्वा महात्मानं सर्वदेवैः समन्वितम् ॥ अंगमन्त्रैस्ततो न्यासं मूलमन्त्रेण वै तथा ॥ १३ ॥ ततश्च दर्शयेन्मुद्रां शंखपद्मादिकां शुभाम् ॥ ध्यायेद्धयात्वार्चयेद्विष्णुं मूलमन्त्रेण शंकर ॥१४॥ ततश्चावाहयेद्रुद्र देवता आसनस्य याः ॥ ॐ हयग्रीवासनस्य आगच्छत च देवताः ॥ १५ ॥ आवाह्य मण्डले तास्तु पूजयेत्स्वस्तिकादिके ॥ द्वारे धातुर्विधातुश्च पूजा कार्य्या वृषध्वज ॥ १६ ॥ समस्तपरिवाराय अच्युताय नम इति ॥ अस्य मध्येऽर्चनं कार्य्यं द्वारे गंगाञ्च पूजयेत् ॥१७॥ यमुनां च महादेवीं शंखपद्मनिधी तथा ॥ गरुडं पूजयेदग्रे मध्ये शक्तिञ्च पूजयेत् ॥१८॥ आधाराख्यां महादेव ततः कूर्मं समर्चयेत् ॥ अनन्तं पृथिवीं पश्चाद्धर्मज्ञाने (नौ) ततोऽचयेत् ॥१९॥ वैराग्यमथ चैश्वर्य्यमाग्नेयादिषु पूजयेत् ॥ अधर्माज्ञानावैराग्यानैश्वर्य्यादींस्तु पूर्वतः ॥ २० ॥ सत्त्वं रजस्तमश्चैव मध्यदेशेऽथ पूजयेत् ॥ कन्दं नालं च पद्मं च मध्ये चैव प्रपूजयेत् ॥ २१ ॥ अर्कसोमाग्निसंज्ञानां मण्डलानां हि पूजनम् ॥ मध्यदेशे प्रकर्त्तव्यमिति रुद्र प्रकीर्त्तितम् ॥ २२ ॥ विमलोत्कर्षिणी ज्ञाना क्रियायोगे वृषध्वज ॥ प्रह्वी सत्या तथेशानानुग्रहौ शक्तयो ह्यमूः ॥ २३ ॥ पूर्वादिषु च पत्रेषु पूज्याश्च विमलादयः ॥ अनुग्रहा कर्णिकायां पूज्या श्रेयोऽर्थिभिर्नरैः ॥ २४ ॥ प्रणवाद्यैर्नमोऽन्तैश्च चतुर्थ्यन्तैश्च नामभिः ॥ मन्त्रैरेभिर्महादेव आसनं परिपूजयेत् ॥ २५ ॥ स्नानगन्धप्रदानेन पुष्पधूपप्रदानतः ॥ दीपनैवेद्यदानेन आसनस्यार्चनं शुभम् ॥ २६ ॥ कर्त्तव्यं विधिनानेन इति ते हर कीर्त्तितम् ॥ ततश्चावाहयेद्देवं हयग्रीवं सुरेश्वरम् ॥ २७ ॥ वामनासापुटेनैव आगच्छन्तं विचिन्तयेत् ॥ आगच्छतः प्रयोगेण मूलमन्त्रेण शंकर ॥ २८ ॥ आवाहनं प्रकर्त्तव्यं देवदेवस्य शंखिनः ॥ आवाह्य

१ ह्रौं क्षौं शिर० पा० । ॐ सौः क्षौः शिर० पा० । २ अत्र क्षुरां क्षरीं क्षरूमित्येवं पा० । ३ यंक्षौरमिति० । ४ सुरक्तं० । ५ ध्यायेत्ततोर्च्चयेदिति पाठः सरसः ।

मण्डले तस्य न्यासं कुर्य्यादतन्द्रितः ॥ २९ ॥ न्यासं कृत्वा च तत्रस्थं चिन्तयेत्परमेश्वरम् ॥ हयग्रीवं महादेवं सुरासुरनमस्कृतम् ॥ ३० ॥ इन्द्रादिलोकपालैश्च संयुक्तं विष्णुमव्ययम् ॥ ध्यात्वा प्रदर्शयेन्मुद्राः शंखचक्रादिकाः शुभाः ॥ ३१ ॥ पाद्यार्घ्याचमनीयानि ततो दद्याच्च विष्णवे ॥ स्नापयेच्च ततो देवं पद्मनाभमनामयम् ॥ ३२ ॥ देवं संस्थाप्य विधिवद्वस्त्रं दद्याद्वृषध्वज ॥ ततो ह्याचमनं दद्यादुपवीतं ततः शुभम् ॥ ३३ ॥ ततश्च मंडले रुद्र ध्यायेद्देवं परेश्वरम् ॥ ध्यात्वा पाद्यादिकं भूयो दद्याद्देवाय शंकर ॥ ३४ ॥ दद्याद्भैरवदेवाय मूलमन्त्रेण शंकर ॥ ॐ क्षां हृदयाय नमः अनेन हृदयं यजेत् ॥ ३५ ॥ ॐ क्षीं शिरसे नमश्च शिरसः पूजनं भवेत् ॥ ॐ क्षूं शिखायै नमश्च शिखामेतेन पूजयेत् ॥३६॥ ॐ क्षैं कवचाय नमः कवचं परिपूजयेत् ॥ ॐ क्षौं नेत्राय नमश्च नेत्रं चानेन पूजयेत् ॥ ३७ ॥ ॐ क्षः अस्त्राय नम इति अस्त्रं चानेन पूजयेत् ॥ हृदयं च शिरश्चैव शिखां च कवचं तथा ॥ ३८ ॥ पूर्वादिषु प्रदेशेषु ह्येतास्तु परिपूजयेत् ॥ कोणेष्वस्त्रं यजेद्रुद्र नेत्रं मध्ये प्रपूजयेत् ॥ ३९ ॥ पूजयेत्परमां देवीं लक्ष्मीं लक्ष्मीप्रदां शुभाम् ॥ शंखं पद्मं तथा चक्रं गदां पूर्वादितोऽर्चयेत् ॥ ४० ॥ खड्गं च मुसलं पाशमंकुशं सशरं धनुः ॥ पूजयेत्पूर्वतो रुद्र एभिर्मन्त्रैः स्वनामकैः ॥ ४१ ॥ श्रीवत्सं कौस्तुभं मालां तथा पीताम्बरं शुभम् ॥ पूजयेत्पूर्वतो रुद्र शंखचक्रगदाधरम् ॥ ४२ ॥ ब्रह्माणं नारदं सिद्धं गुरुं परगुरुं तथा ॥ गुरोश्च पादुके तद्वत्परमस्य गुरोस्तथा ॥ ४३ ॥ इन्द्रं सवाहनं चाथ परिवारयुतं तथा ॥ अग्निं यमं निर्ऋतिं च वरुणं वायुमेव च ॥ ४४ ॥ सोममीशानमेवं वै ब्रह्माणं परिपूजयेत् ॥ पूर्वादिकोर्ध्वपर्य्यन्तं पूजयेद्वृषभध्वज ॥ ४५ ॥ वज्रं शक्तिं तथा दण्डं खड्गं पाशं ध्वजं गदाम् ॥ त्रिशूलं चक्रपद्मे च आयुधान्यथ पूजयेत् ॥ ४६ ॥ विष्वक्सेनं ततो देवमैशान्यां दिशि पूजयेत् ॥ एभिर्मन्त्रैर्नमोऽन्तैश्च प्रणवाद्यैर्वृषध्वज ॥ ४७ ॥ पूजा कार्य्या महादेव अनन्तस्य वृषध्वज ॥ देवस्य मूलमन्त्रेण पूजा कार्य्या वृषध्वज ॥ ४८ ॥ गन्धं पुष्पं तथा धूपं दीपं नैवेद्यमेव च ॥ प्रदक्षिणं नमस्कारं जप्यं तस्मै समर्पयेत् ॥ ४९ ॥ स्तुवीत चानया स्तुत्या प्रणवाद्यैर्वृषध्वज ॥ ॐ नमो हयशिरसे विद्याध्यक्षाय वै नमः ॥ ५० ॥ नमो विद्यास्वरूपाय विद्यादात्रे नमोनमः ॥ नमः शान्ताय देवाय त्रिगुणायात्मने नमः ॥ ५१ ॥ सुरासुरनिहन्त्रे च सर्वदुष्टविनाशिने ॥ सर्वलोकाधिपतये ब्रह्मरूपाय वै नमः ॥ ५२ ॥ नमश्चेश्वरवन्द्याय शंखचक्रधराय च ॥ नम आद्याय दांताय सर्वसत्त्वहिताय च ॥ ५३ ॥ त्रिगुणायागुणायैव ब्रह्मविष्णुस्वरूपिणे ॥ कर्त्रे हर्त्रे सुरेशाय सर्वगाय नमोनमः ॥ ५४ ॥ इत्येवं संस्तवं कृत्वा देवदेवं विचिन्तयेत् ॥ हृत्पद्मे विमले रुद्र शंखचक्रगदाधरम् ॥ ५५ ॥ सर्वलोकेश्वरं सर्वावयवसुन्दरम् ॥ हयग्रीवोऽहमीशेशं परमात्मानमव्ययम् ॥५६॥ इति ते कथिता पूजा हयग्रीवस्य शंकर ॥ यःपठेत्प

ग्या भक्त्या स गच्छेत्परमं पदम् ॥५७॥इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे हयग्रीवपूजाविधिर्नाम चतुस्त्रिंशोऽध्यायः ॥३४॥

हरिरुवाच ॥ न्यासादिकं प्रवक्ष्यामि गायत्र्याः शृणु शङ्कर॥विश्वामित्रऋषिश्चैव सविता चाथ देवता ॥१॥ ब्रह्मशीर्षा रुद्रशिखा विष्णोर्हृदयसंश्रिता ॥ विनियोगैकनयना कात्यायनसगोत्रजा ॥ २ ॥ त्रैलोक्यचरणा ज्ञेया पृथिवीकुक्षिसंस्थिता ॥ एवं ज्ञात्वा तु गायत्रीं जपेद्द्वादशलक्षकम् ॥ ३ ॥ त्रिपदाष्टाक्षरा ज्ञेया चतुष्पादा षडक्षरा ॥ जपे च त्रिपदा प्रोक्ता अर्चने च चतुष्पदा ॥ ४ ॥ न्यासे जपे तथा ध्याने अग्निकार्य्ये तथार्चने ॥ गायत्रीं विन्यसेन्नित्यं सर्वपापप्रणाशिनीम् ॥ ५ ॥ पादांगुष्ठे गुल्फमध्ये जङ्घयोर्विद्धि जानुनोः ॥ ऊर्वोर्गुह्ये च वृषणे नाभ्यां नाभौ तनूदरे ॥ ६ ॥ स्तनयोर्हृदि कण्ठौष्ठमुखे तालुनि चांसयोः ॥ नेत्रे भ्रुवोर्ललाटे च पूर्वस्यां दक्षिणोत्तरे ॥ ७ ॥ पश्चिमे मूर्ध्नि चाकारं न्यसेद्वर्णान्विदाम्यहम् ॥ इन्द्रनीलं च वह्निं च पीतं श्यामं च कापिलम् ॥ ८ ॥ श्वेतं विद्युत्प्रभं तारं कृष्णं रक्तं क्रमेण तत् ॥ श्यामं शुक्लं तथा पीतं श्वेतं वै पद्मरागवत् ॥ ९ ॥ शङ्खवर्णं पाण्डुरं च रक्तं चासवसन्निभम् ॥ अर्कवर्णसमं सौम्यं शंखाभं श्वेतमेव च ॥ १० ॥ यद्यत्स्पृशति हस्तेन यच्च पश्यति चक्षुषा ॥ पूतं भवति तत्सर्वं गायत्र्या न परं विदुः॥११॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गायत्रीन्यासनिरूपणं नाम पञ्चत्रिंशोऽध्यायः॥३५॥

हरिरुवाच ॥ सन्ध्याविधिं प्रवक्ष्यामि शृणु रुद्राघनाशनम् ॥ प्राणायामत्रयं कृत्वा सन्ध्यास्नानमुपक्रमेत्[2] ॥ १ ॥ सप्रणवां सव्याहृतिं गायत्रीं शिरसा सह ॥ त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ २ ॥ मनोवाक्कायजं दोषं प्राणायामैर्दहेद्द्विजः ॥ तस्मात्सर्वेषु कालेषु प्राणायामपरो भवेत् ॥ ३ ॥ सायमग्निश्च मेत्युक्त्वा प्रातः सूर्य्येत्यपः पिबेत् ॥ आपः पुनन्तु मध्याह्ने उपस्पृश्य यथाविधि ॥ ४ ॥ आपोहिष्ठेत्यृचा कुर्य्यान्मार्जनं तु कुशोदकैः ॥ प्रणवेन तु संयुक्तं क्षिपेद्वारि पदेपदे ॥ ५ ॥ रजस्तमःस्वमोहोत्थाञ्जाग्रत्स्वप्नसुषुप्तिजान्॥वाङ्मनःकर्मजान्दोषान्नवैतान्नवभिर्दहेत् ॥ ६ ॥ समुद्धृत्योदकं पाणौ जप्त्वा च द्रुपदां क्षिपेत् ॥ त्रिपडष्टौ द्वादशधा वर्त्तयेदघमर्षणम् ॥ ७ ॥ उदुत्यंचित्रमित्याभ्यामुपतिष्ठेद्दिवाकरम् ॥ दिवा रात्रौ च यत्पापं सर्वं नश्यति तत्क्षणात् ॥ ८ ॥ पूर्वसंध्यां जपंस्तिष्ठेत्पश्चिमामुपविश्य च ॥ महाव्याहृतिसंयुक्तां गायत्रीं प्रणवान्विताम् ॥ ९ ॥ दशभिर्जन्मजनितं शतेन तु पुरा कृतम् ॥ त्रियुगं तु सहस्रेण गायत्री हन्ति दुष्कृतम् ॥ १० ॥ रक्ता भवति गायत्री सावित्री शुक्लवर्णिका ॥ कृष्णा सरस्वती ज्ञेया संध्यात्रयमुदाहृतम् ॥ ११ ॥ ॐ भूर्विन्यस्य हृदये ॐ भुवः शिरसि न्यसेत् ॥ ॐ स्वरिति[3] शिखायां च गायत्र्याः प्रथमं पदम् ॥ १२ ॥

१ छन्दोगायत्रं गायत्र्याः० पा० । २ आर्ष परस्मैपदम् । ३ सुवरिति पाठोपि ।

विन्यसेत्कवचे विद्वान्द्वितीयं नेत्रयोर्न्यसेत् ॥ तृतीयेनांगविन्यासं चतुर्थं सर्वतो न्यसेत् ॥ १३ ॥ संध्याकाले तु विन्यस्य जपेद्वै वेदमातरम् ॥
शिवस्तस्यास्तु सर्वाङ्गे प्राणायामपरं न्यसेत् ॥ १४ ॥ त्रिपदा या तु गायत्री ब्रह्मविष्णुमहेश्वरी॥विनियोगमृषिच्छन्दो ज्ञात्वा तु जपमारभेत् ॥१५॥
सर्वपापविनिर्मुक्तो ब्रह्मलोकमवाप्नुयात् ॥ परोरजसि सावदों तुरीयपदमीरितम् ॥ १६ ॥ तं हन्ति सूर्य्यः सन्ध्यायां नोपास्ति कुरुते तु यः॥
तुरीयस्य पदस्यापि ऋषिर्निर्मल एव च ॥ १७ ॥ छन्दस्तु देवी गायत्री परमात्मा च देवता ॥ १८ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमां
शाख्ये आचारकाण्डे संध्याविधिर्नाम षट्त्रिंशोऽध्यायः ॥३६॥ ॥ हरिरुवाच ॥ गायत्री परमा देवी भुक्तिमुक्तिप्रदा च ताम्॥यो जपेत्तस्य पापानि
विनश्यंति महांत्यपि ॥ १ ॥ गायत्रीकल्पमाख्यास्ये भुक्तिमुक्तिप्रदं च तत् ॥ अष्टोत्तरं सहस्रं वा अथवाष्टशतं जपेत् ॥ २ ॥ त्रिसन्ध्यं ब्रह्मलोकी
स्याच्छतं जप्त्वा जलं पिबेत्॥संध्यायां सर्वपापघ्नीं देवीमावाह्य पूजयेत् ॥ ३ ॥ भूर्भुवः स्वः स्वमंत्रेण युतां द्वादशनामभिः ॥ गायत्र्यै नमः सावित्र्यै
सरस्वत्यै नमोनमः ॥ ४ ॥ वेदमात्रे च सांकृत्यै ब्रह्माणी कौशिकी क्रमात् ॥ साध्व्यै सर्वार्थसाधिन्यै सहस्राक्ष्यै च भूर्भुवः ॥५॥ स्वरेवं जुहुया
दग्नौ समिदाज्यं हविष्यकम् ॥ अष्टोत्तरसहस्रं वाप्यथवाष्टशतं घृतम् ॥ ६ ॥ धर्मकामादिसिद्ध्यर्थं जुहुयात्सर्वकर्मसु ॥ प्रतिमां चंदनस्वर्णनिर्मितां
प्रतिपूज्य च ॥ ७ ॥ यथा लक्षं तु जप्तव्यं पयोमूलफलाशनैः ॥ अयुतद्वयहोमेन सर्वकामानवाप्नुयात् ॥ ८ ॥ उत्तरे शिखरे जाता भूम्यां पर्वत
वासिनी ॥ ब्रह्मणा समनुज्ञाता गच्छ देवि यथासुखम् ॥ ९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गायत्रीकल्पनि
रूपणं नाम सप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ हरिरुवाच ॥ नवम्यादौ यजेद्दुर्गां ह्रीं दुर्गे रक्षिणीति च ॥ मातर्मातर्वरे दुर्गे सर्वकामार्थसाधनि
॥ १ ॥ अनेन बलिदानेन सर्वकामान्प्रयच्छ मे ॥ गौरी काली उमा दुर्गा भद्रा कांतिः सरस्वती ॥ २ ॥ मंगला विजया लक्ष्मीः शिवा नारायणी
क्रमात् ॥ मार्गे तृतीयामारभ्य पूजयेन्न वियोगभाक् ॥ ३ ॥ अष्टादशभुजां खेटकं घण्टां दर्पणं तर्जनीम् ॥ धनुर्ध्वजं डमरुकं परशुं पाशमेव च
॥ ४ ॥ शक्तिमुद्गरशूलानि कपालशरकांकुशान् ॥ [1]वज्रं चक्रं शलाकां च अष्टादशभुजां स्मरेत् ॥ ५ ॥ मन्त्रः श्रीभगवत्याश्च प्रवक्ष्यामि जपादि
कम् ॥ ६ ॥ ॐ नमो भगवति चामुण्डे श्मशानवासिनि कपालहस्ते महाप्रेतसमारूढे महाविमानमालाकुले कालरात्रि बहुगणपरिवृते महामुखे
बहुभुजे सुघण्टाडमरुकिंकिणीके अट्टाट्टहासे किलिकिलि हुं सर्वनादशब्दबहुले गजचर्मप्रावृतशरीरे रुधिरमांसदिग्धे लोलोग्रजिह्वे महाराक्षसि रौद्रदं

१ वज्रंचक्रं चचापादौ० ।

ध्राकराले भीमाट्टाट्टहासे स्फुरितविद्युत्समप्रभे चलचल करालनेत्रे हिलिहिलि ललज्जिह्वे ह्रौं ह्रीं भृकुटिमुखि ॐकारभद्रासने कपालमालावेष्टिते जटामुकुटशशांकधारिणि अट्टाट्टहासे किलिकिलि हुंहुं दंष्ट्राघोरांधकारिणि सर्वविघ्नविनाशिनि इदं कर्म साधय साधय शीघ्रं कुरुकुरु कहकह अंकुशेन समनुप्रवेशय वर्गंवर्गं ( वंगवंग ) कम्पयकम्पय चलचल चालयचालय रुधिरमांसमद्यप्रिये हनहन कुट्टकुट्ट छिन्दछिन्द मारयमारय अनुक्रमअनुक्रम वज्रशरीरं साधयसाधय त्रैलोक्यगतमपि दुष्टमदुष्टं वा गृहीतमगृहीतम् आवेशयआवेशय क्रामयक्रामय नृत्यनृत्य बन्धबन्ध वल्ग वल्ग कोटराक्षि ऊर्द्धकेशि उलूकवदने करंकिंकिणि करंकमालाधारिणि दहदह पचपच गृह्णगृह्ण मण्डलमध्ये प्रवेशयप्रवेशय किं विलम्बसि ब्रह्म सत्येन विष्णुसत्येन ऋषिसत्येन रुद्रसत्येन आवेशयआवेशय किलिकिलि खिलिखिलि मिलिमिलि चिलिचिलि विकृतरूपधारिणि कृष्णभुजंग वेष्टितशरीरे सर्वग्रहावेशिनि प्रलम्बोष्ठि भ्रूभग्ननासिके विकटमुखि कपिलजटे ब्राह्मि भंजभंज ज्वलज्वल कालमुखि खलखल खरखरःपातयपा तय रक्ताक्षि घूर्णापयघूर्णापय भूमिं पातयपातय शिरो गृह्णगृह्ण चक्षुर्मीलयमीलय भंजभंज पादौ गृह्णगृह्ण मुद्रां स्फोटयस्फोटय हुं हूं फट् विदारय विदारय त्रिशूलेन भेदयभेदय वज्रेण हनहन दण्डेन ताडयताडय चक्रेण छेदयछेदय शक्तिना[2] भेदयभेदय दंष्ट्रया दंशयदंशय कीलकेन कीलय कीलय कर्त्तरिकया पाटयपाटय अंकुशेन गृह्णगृह्ण शिरोऽतिज्वरमैकाहिकं द्व्याहिकं त्र्याहिकं चातुर्थिकं डाकिनीस्कन्दग्रहान् मुञ्चापयमुञ्चापय ललल उत्थापयउत्थापय भूमिं पातयपातय गृह्णगृह्ण ब्रह्माणि एहिएहि माहेश्वरि एहिएहि कौमारि एहिएहि वाराहि एहिएहि ऐन्द्रि एहिएहि चामुण्डे एहिएहि वैष्णवि एहिएहि नारसिंहि एहिएहि शिवदूति एहिएहि कपालिनि एहिएहि महाकालि एहिएहि रेवति एहिएहि शुष्करेवति एहिएहि आकाशरेवति एहिएहि हिमवन्तचारिणि एहिएहि कैलासचारिणि एहिएहि परमन्त्रं छिन्धिछिन्धि किलिकिलि बिम्बे अघोरे घोररू पिणि चामुण्डे रुरुक्रोधांधविनिःसृते असुरक्षयंकरि आकाशगामिनि पाशेन बन्धबन्ध समये तिष्ठतिष्ठ मण्डलं प्रवेशयप्रवेशय पातयपातय गृह्णगृह्ण मुखं बन्धबन्ध चक्षुर्बन्धयबन्धय हृदयं बन्धबन्ध हस्तपादौ च बन्धबन्ध दुष्टग्रहान् सर्वान् बन्धबन्ध दिशां बन्धबन्ध विदिशां बन्धबन्ध ऊर्ध्वं बन्धबन्ध अधस्ताद् बन्धबन्ध भस्मना पानीयेन मृत्तिकया सर्षपैर्[3] आवेशयआवेशय पातयपातय चामुण्डे किलिकिलि विच्चेह्रीं ( हुं ) फट् स्वाहा ॥ ७॥ अष्टोत्तरपदानां हि माला मन्त्रमयी जपः ॥ एकैकपदमष्टसहस्रधा त्रिमधुराक्ततिलाष्टसहस्रहोमः ॥ ८ ॥

१ चलचकोरनेत्रे० । २ शक्तिनेतिनाभावआर्षः । ३ आर्षयंप्रयोगः ।

महामांसेन—त्रिमधुराक्तेन अष्टोत्तरसहस्रं च एकैकं च पदं यजेत् ॥ तिलांस्त्रिमधुराक्तांश्च सहस्रं चाष्ट होमयेत ॥ ९ ॥ महामांसं त्रिमधुरादथ १। सर्वकर्मकृत् ॥ वारिसर्षपभस्मादिक्षेपाद्युद्धादिके जयः ॥ १० ॥ अष्टाविंशभुजा ध्येया अष्टादशभुजाथवा॥द्वादशाष्टभुजा वापि ध्येया वापि चतुर्भुजा ॥ ११ ॥ असिखेटान्वितौ हस्तौ गदादण्डयुतौ परौ ॥ शरचापयुतौ चान्यौ खड्गमुद्गरसंयुतौ ॥ १२ ॥ शंखघण्टान्वितौ चान्यौ ध्वजदण्डयुतौ परौ॥अन्यौ परशुचक्राढ्यौ डमरुदर्पणान्वितौ॥१३॥शक्तिहस्ताश्रितौ चान्यौ रटोणी मुसलान्वितौ ॥ पाशतोमरसंयुक्तौ ढक्कापणवसंयुतौ ॥ १४ ॥ तर्जयन्ती परेणैव अन्यं कलकलध्वनिम् ॥ अभयस्वस्तिकाद्यौ च महिषघ्नी च सिंहगा ॥१५॥ जय त्वं किल भूतेशे सर्वभूतसमावृते ॥ रक्ष मां निज भूतेभ्यो बलिं गृह्ण नमोऽस्तु ते ॥ १६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे दुर्गाजपपूजाबलिमंत्रनिरूपणं नामाष्टत्रिंशोऽध्यायः ॥ ३८ ॥ रुद्र उवाच ॥ पुनर्देवार्चनं ब्रूहि संक्षेपेण जनार्दन ॥ सूर्य्यस्य विष्णुरूपस्य भुक्तिमुक्तिप्रदायकम् ॥ १ ॥ वासुदेव उवाच ॥ शृणु सूर्य्यस्य रुद्र त्वं पुनर्वक्ष्यामि पूजनम् ॥ ॐ उच्चैःश्रवसे नमः ॐ अरुणाय नमः ॥ ॐ दण्डिने नमः ॥ ॐ पिङ्गलाय नमः ॥ एते द्वारे प्रपूज्या वै एभिर्मन्त्रैर्वृषध्वज ॥ २ ॥ ॐ अं प्रभूताय नमः ॥ इमं तु पूजयेन्मध्ये प्रभूतामलसंज्ञकम् ॥ ॐ अं विमलाय नमः ॥ ॐ अं साराय नमः ॥ ॐ अंआधाराय नमः ॥ ॐ अं परमसुखाय नमः॥इत्याग्नेयादिकोणेषु पूज्या वै विमलादयः ॥३॥ ॐ पद्माय नमः ॥ ॐ कर्णिकायै नमः ॥ ॥ मध्ये तु पूजयेद्रुद्र पूर्वादिषु तथैव च ॥ दीप्ताद्याः पूजयेन्मध्ये पूजयेत्सर्वतोमुखीः ॥ ॐ वां ( रां ) दीप्तायै नमः ॥ ॐ वीं ( रीं ) सूक्ष्मायै नमः ॥ ॐ वूं ( रूं ) भद्रायै नमः ॥ ॐ वैं ( रैं ) जयायै नमः ॥ ॐ वौं ( रौं ) विभूत्यै नमः ॥ ॐ वं ( रं ) अघोरायै नमः॥ॐ वं ( रं ) वैद्युतायै नमः ॥ ॐ वः ( रः ) विजयायै नमः ॥ॐ रो सर्वतोमुख्यै नमः ॥ ४ ॥ ॐ अर्कासनाय नमः ॥ ॐ ह्रां सूर्य्यमूर्तये नमः ॥ एतास्तु पूजयेन्मध्ये ह्न्मंत्रा न्छृणु शङ्कर ॥ ॐ हं सं खं खखोल्काय क्रां क्रीं सः स्वाहा सूर्य्यमूर्तये नमः ॥ अनेनावाहनं कुर्य्यात्स्थापनं सन्निधापनम् ॥ सन्निरोपनमंत्रेण सकलीकरणं तथा ॥ ५ ॥ मुद्राया दर्शनं रुद्र मूलमंत्रेण वा हर ॥ तेजोरूपं रक्तवर्णं सितपद्मोपरि स्थितम् ॥ एकचक्ररथारूढं द्विबाहुं धृतपङ्कजम् ॥ ६ ॥ एवं ध्यायेत्सदा सूर्य्यं मूलमंत्रं शृणुष्व च ॥ ॐ ह्रां ह्रीं सः सूर्य्याय नमः ॥ ७ ॥ वारत्रयं पद्ममुद्रां बिम्बमुद्रां च दर्शयेत् ॥ ॐ आं हृदयाय नमः॥ ॐ अर्काय शिरसे स्वाहा॥ ॐ अः भूर्भुवः स्वः ज्वालिनि शिखायै वषट्॥ ॐ हुं कवचाय हुं॥ ॐ भां नेत्राभ्यां वौषट्॥ ॐ वः अस्त्राय फडिति॥८॥



१ आराध्याय० । २ अमोघायै० । ३ ह्रांह्रींसः स्वा० ।

आग्नेय्यामथवैशान्यां नैर्ऋत्यामर्चयेद्धर ॥ हृदयादि हि वायव्यां नेत्रं चान्तः प्रपूजयेत् ॥ ९ ॥ दिक्ष्वस्त्रं पूजयेद्रुद्र सोमं तु श्वेतवर्णकम् ॥ दले पूर्वेऽर्चयेद्रुद्र बुधं चामीकरप्रभम् ॥ १० ॥ दक्षिणे पूजयेद्रुद्र पीतवर्णं गुरुं यजेत् ॥ पश्चिमे चैव भूतेशं उत्तरे भार्गवं सितम् ॥ ११ ॥ रक्तमंगारकं चैव आग्नेये पूजयेद्धर ॥ शनैश्चरं कृष्णवर्णं नैर्ऋत्यां दिशि पूजयेत् ॥ १२ ॥ राहुं वायव्यदेशे तु नन्द्यावर्त्तनिभं हर ॥ ऐशान्यां धूम्रवर्णं तु केतुं संपरिपूजयेत् ॥ १३ ॥ एभिर्मन्त्रैर्महादेव तच्छृणुष्व च शङ्कर ॥ १४ ॥ ॐ सों सोमाय नमः ॥ ॐ बुं बुधाय नमः ॥ ॐ बृं बृहस्पतये नमः ॥ ॐ भं भार्गवाय नमः ॥ ॐ अं अंगारकाय नमः ॥ ॐ शं शनैश्चराय नमः ॥ ॐ रं राहवे नमः ॥ ॐ कं केतवे नम इति ॥ १५ ॥ पाद्यादीन्मूलमन्त्रेण दत्त्वा सूर्य्याय शङ्कर ॥ नैवेद्यान्ते धेनुमुद्रां दर्शयेत्साधकोत्तमः ॥१६॥ जप्त्वा चाष्टसहस्रं तु तच्च तस्मै समर्पयेत् ॥ ऐशान्यां दिशि भूतेश तेजश्चण्डं तु पूजयेत्॥१७॥ॐ तेजश्चंण्डाय हुं फट् स्वधा स्वाहा वौषट्॥निर्माल्यं चार्पयेत्तस्मै ह्यर्घ्यं दद्यात्ततो हर ॥ १८ ॥ तिलतण्डुलसंयुक्तं रक्तचन्दनचर्चितम् ॥ गन्धोदकेन संमिश्रं पुष्पधूपसमन्वितम् ॥ १९ ॥ कृत्वा शिरसि तत्पात्रं जानुभ्यामवनिं गतः ॥ २१ ॥ दद्यं तु सूर्य्याय हृन्मन्त्रेण वृषध्वज ॥ २० ॥ गणं गुरूनप्रपूज्याथ सर्वान्देवानन्प्रपूजयेत् ॥ ॐ गं गणपतये नमः ॥ ॐ अं गुरुभ्यो नमः ॥२१॥ सूर्य्यस्य कथिता पूजा कृत्वैतां विष्णुलोकभाक्॥२२॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सूर्यार्चनप्रकारो नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ ॥ शङ्कर उवाच ॥ माहेश्वरीं च मे पूजां वद शंखगदाधर ॥ यां ज्ञात्वा मानवाः सिद्धिं गच्छन्ति परमेश्वर ॥१॥ ॥ हरिरुवाच ॥ शृणु माहेश्वरीं पूजां कथ्यमानां वृषध्वज ॥ आदौ स्नात्वा तथाचम्य ह्यासने चोपविश्य च ॥ २ ॥ न्यासं कृत्वा मण्डले वै पूजयच्चे महेश्वरम् ॥ मन्त्रैरेतैर्महेशान परिवारयुतं हरम् ॥ ३ ॥ ॐ हां शिवासनदेवता आगच्छतेति ॥ अनेनावाहयेद्रुद्र देवता आसनस्य याः ॥ ४ ॥ ॐ हां गणपतये नमः ॥ ॐ हां सरस्वत्यै नमः ॥ॐ हां नन्दिने नमः॥ ॐ हां महाकालाय नमः ॥ ॐ हां गङ्गायै नमः ॥ ॐ हां लक्ष्म्यै नमः ॥ ॐ हां महाकलायै नमः ॥ ॐ हां अस्त्राय नम इति ॥ ५ ॥ एते द्वारे प्रपूज्या वै स्नानगन्धादिभिर्हर ॥ ॐ हां ब्रह्मणे वास्त्वधिपतये नमः ॥ ॐ हां गुरुभ्यो नमः ॥ ॐ हां आधारशक्त्यै नमः ॥ ॐ हां अनन्ताय नमः ॥ ॐ हां धर्माय नमः ॥ ॐ हां ज्ञानाय नमः॥ ॐ हां वैराग्याय नमः ॥ ॐ हां ऐश्वर्याय नमः ॥ ॐ हां अधर्माय नमः ॥ ॐ हां अज्ञानाय नमः ॥ ॐ हां अवैराग्याय नमः ॥ ॐ हां अनैश्वर्य्याय नमः ॥ ॐ हां ऊर्द्ध्व

१ अत्र सर्वत्र हामित्यस्य स्थाने होंमिति पाठान्तरम् ।

च्छन्दाय नमः ॥ ॐ हां अधश्छन्दाय नमः ॥ ॐ हां पद्माय नमः ॥ ॐ हां कर्णिकायै नमः ॥ ॐ हां वामायै नमः ॥ ॐ हां ज्येष्ठायै नमः ॥ ॐ हां रौद्र्यै नमः ॥ ॐ हां काल्यै नमः ॥ ॐ हां कलविकरण्यै नमः ॥ ॐ बलप्रमथिन्यै नमः ॥ ॐ हां सर्वभूतदमन्यै नमः ॥ ॐ हां मनोन्मन्यै नमः ॥ ॐ हां मण्डलात्रितयाय नमः ॥ ॐ हां हौं हं शिवमूर्त्तये नमः ॥ ॐ हां विद्याधिपतये नमः ॥ ॐ हां हीं हौं शिवाय नमः ॥ ॐ हां हृदयाय नमः ॥ ॐ शिरसे नमः॥ ॐ हूं शिखायै नमः॥ॐ हैं कवचाय नमः॥ॐ हौं नेत्रत्रयाय नमः॥ॐ हः अस्त्राय नमः॥ॐ सद्योजाताय नमः॥६॥ ॐ हां सिद्ध्यै नमः॥ॐ हां ऋद्ध्यै नमः॥ॐ हां विद्युतायै नमः॥ॐ हां लक्ष्म्यै नमः ॥ ॐ हां बोधायै नमः ॥ ॐ हां काल्यै नमः॥ॐ हां स्वधायै नमः ॥ ॐ हां प्रभायै नमः ॥ ७ ॥ सत्यस्याष्टौ कला ज्ञेयाः पूज्याः पूर्वादिषु स्थिताः ॥ ८ ॥ ॐ हां वामदेवाय नमः ॥ ॐ हां रजसे नमः ॥ ॐ हां रक्षायै नमः ॥ ॐ हां रत्यै नमः ॥ ॐ हां कन्यायै नमः ॥ ॐ हां कामायै नमः ॥ ॐ हां जनन्यै नमः ॥ ॐ हां क्रियायै नमः ॥ ॐ हां वृद्ध्यै नमः ॥ ॐ हां कार्य्यायै नमः ॥ ॐ रा(धा)त्र्यै नमः॥ॐ हां भ्रामण्यै नमः॥ॐ हां मोहिन्यै नमः ॥ॐ हां क्ष(त्व)रायै नमः॥वामदेवकला ज्ञेयास्त्रयोदश वृषध्वज ॥ ९ ॥ ॐ हां तत्पुरुषाय नमः ॥ ॐ हां निवृत्त्यै नमः ॥ ॐ हां प्रतिष्ठायै नमः ॥ ॐ हां विद्यायै नमः ॥ ॐ हां शान्त्यै नमः ॥ ज्ञेयास्तत्पुरुषस्यैव चतस्रो वृषभध्वज ॥ १० ॥ ॐ हां अघोराय नमः ॥ ॐ हां उमायै नमः ॥ ॐ हां क्षमायै नमः ॥ ॐ हां निद्रायै नमः ॥ ॐ हां व्याध्यै नमः॥ ॐ हां क्षुधायै नमः ॥ ॐ हां तृष्णायै नमः ॥ कलाषट्कं ह्यघोरस्य विज्ञेयं भैरवं हर॥११॥ ॐ हां ईशानाय नमः ॥ ॐ हां समित्यै नमः ॥ ॐ हां अङ्गदायै नमः ॥ ॐ हां कृष्णायै नमः ॥ ॐ हां मरीच्यै नमः ॥ ॐ हां ज्वालायै नम ॥ ईशानस्य कलाः पञ्च जानीहि वृषभध्वज ॥ १२ ॥ ॐ हां शिवपरिवारेभ्यो नमः ॥ ॐ हां इन्द्राय सुराधिपतये नमः॥ ॐ हां अग्नये तेजोऽधिपतये नमः ॥ ॐ हां यमाय प्रेताधिपतये नमः॥ॐ हां निर्ऋतये रक्षोऽधिपतये नमः॥ॐ हां वरुणाय जलाधिपतये नमः ॥ ॐ हां वायवे प्राणाधिपतये नमः ॥ ॐ हां सोमाय नेत्राधिपतये नमः ॥ ॐ हां ईशानाय सर्वविद्याधिपतये नमः ॥ ॐ हां अनन्ताय नागाधिपतये नमः ॥ ॐ हां ब्रह्मणे सर्वलोकाधिपतये नमः ॥ ॐ हां धूलिचण्डेश्वराय नमः ॥ १३ ॥ आवाहनं स्थापनं सन्निधानं च शङ्कर ॥ सन्निरोधं तथा कुर्य्यात्सकलीकरणं तथा ॥ १४ ॥ तत्त्वन्यासं च मुद्राया दर्शनं ध्यानमेव च ॥ पाद्यमाचमनं ह्यर्घ्यं पुष्पाण्यभ्यंगदानकम् ॥१५॥ तत उद्वर्त्तनं स्नानं सुगन्धं चानुलेपनम् ॥ वस्त्राल



१ ॐहांहों शिव० । २ विद्यादेहाय नमः० । ३ ॐहांहों शिवाय० ।

कारमागाश्च ह्यगन्यासं च धूपकम् ॥१६॥ दीपं नैवेद्यदानं च हस्तोद्वर्त्तनमेव च॥पाद्यार्घ्याचमनं गन्धं ताम्बूलं गीतवादनम् ॥ १७ ॥ नृत्यं छत्रादिकरणं मुद्राणां दर्शनं तथा॥रूपं ध्यानं जपश्चाथ एकवद्भाव एव च ॥१८॥ मूलमन्त्रेण वै कुर्य्याज्जपपूजासमर्पणम् ॥ माहेशी कथिता पूजा रुद्र पापविनाशिनी ॥ १९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे महेश्वरपूजाविधिर्नाम चत्वारिंशोऽध्यायः ॥ ४० ॥ वासुदेव उवाच ॥ ॐ विश्वावसुर्नाम गन्धर्वः कन्यानामधिपतिर्लभामि ते कन्यां समुत्पाद्य तस्मै विश्ववासवे स्वाहा ॥ स्त्रीलाभो मन्त्रजाप्याच्च कालरात्रिं वदाम्यहम् ॥१॥ ॐ नमो भगवति ऋक्षकर्णि चतुर्भुजे ऊर्द्धकेशि त्रिनयने कालरात्रि मानुषाणां वसारुधिरभोजने अमुकस्य प्राप्तकालस्य मृत्युप्रदे हुं फट् हनहन दहदह मांसरुधिरं पचपच ऋक्षपति स्वाहा । न तिथिर्न च नक्षत्रं नोपवासो विधीयते॥२॥ क्रुद्धो रक्तेन संमार्ज्य करौ ताभ्यां प्रगृह्य च॥ प्रदोषे संजपेल्लिङ्गमामपात्रं च मारयेत् ॥ ॐ नमः सर्वतो यन्त्राण्येतद्यथा जम्भानि मोहनि सर्वशत्रुविदारिणि रक्षरक्ष माममुकं सर्वभयोपद्रवेभ्यः स्वाहा ॥ शुक्रे नष्टे महादेव वक्ष्येऽहं द्विजपादिह ॥ ३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वश्यादिसाधिकमन्त्रनिरूपणं नामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ हरिरुवाच ॥ पवित्रारोपणं वक्ष्ये शिवस्याशिवनाशनम् ॥ आचार्य्यः साधकः कुर्य्यात्पुत्रकः समयी हर ॥ १ ॥ संवत्सरकृतां पूजां विघ्नेशो हरतेऽन्यथा ॥ आषाढे श्रावणे मासे कुर्य्याद्भाद्रपदेऽपि वा ॥ २ ॥ सौवर्णरौप्यताम्रं च सूत्रं कार्पासिकं क्रमात् ॥ ज्ञेयं कुजादौ संग्राह्यं कन्यया कर्त्तितं च यत् ॥३ त्रिगुणं त्रिगुणीकृत्य ततः कुर्य्यात्पवित्रकम् ॥ ग्रन्थयो वामदेवेन सत्येन क्षालयेच्छिव ॥ ४ ॥ अघोरेण तु संशोध्य बद्धस्तत्पुरुषाद्भवेत् ॥ धूपयेदीशमन्त्रेण तन्तुदेवा इति ( मे ) स्मृताः ॥ ५ ॥ ॐकारश्चन्द्रमा वह्निर्ब्रह्मा नागः शिखिध्वजः ॥ रविर्विष्णुः शिवः प्रोक्तः क्रमात्तन्तुषु देवताः ॥ ६ ॥ अष्टोत्तरशतं कुर्य्यात्पञ्चाशत्पञ्चविंशतिम् ॥ रुद्रोऽत्तमादि विज्ञेयं मानं च ग्रन्थयो दश ॥ ७ ॥ चतुरङ्गुलान्तराः स्युर्ग्रन्थिनामानि च क्रमात् ॥ प्रकृतिः पौरुषी वीरा चतुर्थी चापराजिता ॥ ८ ॥ जया च विजया रुद्रा अजिता च सदाशिवा ॥ मनोन्मनी सर्वमुखी द्व्यङ्गुलाङ्गुलतोऽथवा ॥ ९ ॥ रञ्जयेत्कुंकुमाद्यैस्तु कुर्य्याद्गन्धैः पवित्रकम् ॥ सप्तम्यां वा त्रयोदश्यां शुक्लपक्षे तथेतरे ॥ १० ॥ क्षीरादिभिश्च संस्नाप्य लिङ्गं गन्धादिभिर्यजेत् ॥ दद्याद्गन्धपवित्रं तु आत्मने ब्रह्मणे हर ॥ ११ ॥

१ समुत्पन्नां तस्मै विश्वावसुः स्वाहा० । २ शत्रुविद्राविणि । ३ शुक्रेणास्ता महादेव रक्षेयं जहि याहि च० । ४ श्रावणे मासे कुर्या० । ५ रङ्गस्त० । ६ त्र्यंगुला० । ७ आत्मनो ब्रह्मणो हरेः० ।

पुष्पं गन्धयुतं दद्यान्मूलेनेशानगोचरे ॥ पूर्वे च दण्डकाष्ठं तु उत्तरे चामलकीफलम् ॥ १२ ॥ मृत्तिकां पश्चिमे दद्याद्दक्षिणे भस्म भूतयः ॥ नैर्ऋते
ह्यगुरुं दद्याच्छिखामन्त्रेण मन्त्रवित् ॥ १३ ॥ वायव्यां सर्षपं दद्यात्कवचेन वृषध्वज ॥ गृहं संवेष्टय सूत्रेण दद्याद्गन्धपवित्रकम् ॥ १४ ॥ होमं कृत्वा
ग्नये दत्त्वा दद्याद्भूतबलिं तथा ॥ आमन्त्रितोऽसि देवेश गणैः सार्द्धं महेश्वर ॥ १५ ॥ प्रातस्त्वां पूजयिष्यामि अत्र सन्निहितो भव ॥ निमन्त्र्यानेन
तिष्ठेत्तु कुर्वन् गीतादिकं निशि ॥ १६ ॥ मन्त्रितानि पवित्राणि स्थापयेद्देवपार्श्वतः ॥ स्नात्वादित्यं चतुर्दश्यां प्राग्रुद्रं च प्रपूजयेत् ॥ १७ ॥ लला
टस्थं विश्वरूपं ध्यात्वात्मानं प्रपूजयेत् ॥ अस्त्रेण प्रोक्षितान्येवं हृदयेनार्चितान्यथ ॥ १८ ॥ संहितामन्त्रितान्येव धूपितानि समर्पयेत् ॥ शिवतत्त्वा
त्मकं चादौ विद्यातत्त्वात्मकं ततः ॥१९॥ आत्मतत्त्वात्मकं पश्चाद्देवकाख्यं ततोऽर्चयेत् ॥ ॐ हौं हौं शिवतत्त्वाय नमः ॥ ॐ हीं (हीः) विद्यातत्त्वाय
नमः ॥ २० ॥ ॐ हां ( हौः ) आत्मतत्त्वाय नमः ॥ ॐ हां हीं हूं क्षौं सर्वतत्त्वाय नमः ॥ कालात्मना त्वया देव यद्दृष्टं मामके विधौ ॥ २१ ॥ कृतं
क्लिष्टं समुत्सृष्टं हुतं गुप्तं च यत्कृतम् ॥ सर्वात्मनात्मना शम्भो पवित्रेण त्वदिच्छया ॥ २२ ॥ पूरयपूरय मखव्रतं तन्नियमेश्वराय सर्वतत्त्वात्मकाय
सर्वकारणपालिताय ॐ हां हीं हूं हैं हौं शिवाय नमः ॥ २३ ॥ पूर्वैरनेन यो दद्यात्पवित्राणां चतुष्टयम् ॥ दत्त्वा वह्नेः (वरे) पवित्रं च गुरवे दक्षिणां
दिशेत् ॥ २४ ॥ बलिं दत्त्वा द्विजान् भोज्य चण्डं प्राच्यै विसर्जयेत्॥२५॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शिवपवि
त्रारोपणं नाम द्विचत्वारिंशोऽध्यायः ॥४२॥ हरिरुवाच ॥ पवित्रारोपणं वक्ष्ये भुक्तिमुक्तिप्रदं हरेः ॥ पुरा देवासुरे युद्धे ब्रह्माद्याः शरणं ययुः ॥ १ ॥
विष्णुश्च तेषां देवानां ध्वजं ग्रैवेयकं ददौ ॥ एतौ दृष्ट्वा विनङ्क्ष्यन्ति दानवानब्रवीद्धरिः ॥ २ ॥ विष्णूक्ते ह्यब्रवीन्नागो वासुकेरनुजस्तदा ॥
वृणीत च पवित्राख्यं वरं चेदं वृषध्वज ॥ ३ ॥ ग्रैवेयं हरिदत्तं तु मन्नाम्ना ख्यातिमेष्यति ॥ इत्युक्ते तेन ते देवास्तन्नाम्ना तद्वरं विदुः ॥ ४ ॥
प्रावृट्काले तु ये मर्त्या नार्चिष्यन्ति पवित्रकैः॥ तेषां सांवत्सरी पूजा विफला च भविष्यति ॥ ५ ॥ तस्मात्सर्वेषु देवेषु पवित्रारोपणं क्रमात् ॥
प्रतिपत्पौर्णमास्यन्ता यस्य या तिथिरुच्यते ॥ ६ ॥ द्वादश्यां विष्णवे कार्य्यं शुक्ले कृष्णेऽथ वा हर ॥ व्यतीपातेऽयने चैव चन्द्रसूर्य्यग्रहे शिव ॥७॥
विष्णवे वृद्धिकार्य्ये च गुरोरागमने तथा ॥ नित्यं पवित्रमुद्दिष्टं प्रावृट्काले त्ववश्यकम् ॥ ८ ॥ कौशेयं पट्टसूत्रं वा कार्पासं क्षौममेव वा ॥ ॥२६॥
कुशसूत्रं द्विजानां स्याद्राज्ञां कौशेयपट्टकम् ॥ ९ ॥ वैश्यानां चीरणं क्षौमं शूद्राणां शणवल्कजम् ॥ कार्पासं पद्मजं चैव सर्वेषां शस्तमीश्वर ॥ १० ॥

१ ॐहौंहीः हौः सर्व० । २ गुरुदे ब्राह्मणादिके० । ३ इत्युक्ते तेन देवांस्तान्नाम्ना वै तद्वरं ददौ० । ४ चौर्णकं क्षौमं० । ५ सर्वेषां नववल्कजम् ॥ ६ कार्पासिकं पद्मजं च० ।

ब्राह्मण्या कर्त्तितं सूत्रं त्रिगुणं त्रिगुणीकृतम् ॥ ॐकारोऽथ शिवः सोमो ह्यग्निर्ब्रह्मा फणी रविः ॥ ११ ॥ विघ्नेशो विष्णुरित्येते स्थितास्तन्तुषु देवताः ॥
ब्रह्मा विष्णुश्च रुद्रश्च त्रिसूत्रे देवताः स्मृताः ॥ १२ ॥ सौवर्णे राजते ताम्रे वैणवे मृन्मये न्यसेत् ॥ अंगुष्ठेन चतुःषष्टिः श्रेष्ठं मध्यं तदर्द्धतः ॥ १३ ॥
तदर्द्धां तु कनिष्ठा स्यात्सूत्रमष्टोत्तरं शतम् ॥ उत्तमं मध्यमं चैव कन्यसं पूर्ववत्क्रमात् ॥ १४ ॥ उत्तमोंऽगुष्ठमानेन मध्यमो मध्यमेन तु ॥
कन्यसे च कनिष्ठेन अंगुल्या ग्रन्थयः स्मृताः॥१५॥विमाने स्थण्डिले चैव एतत्सामान्यलक्षणम् ॥ शिवोद्धृतं पवित्रं तु प्रतिमायां च कारयेत ॥१६॥
कन्यसे च कनिष्ठेन अंगुल्या ग्रन्थयः स्मृताः ॥ १७ ॥ षट्त्रिं (ड्डिं) शच्च चतुर्विंशद्वादश ग्रन्थयोऽ
हन्नाभिरू (रु) रुमाने च जानुभ्यामवलम्बिनी ॥ अष्टोत्तरसहस्रेण चत्वारो ग्रन्थयः स्मृताः ॥ १७ ॥ षट्त्रिं (ड्डिं) शच्च चतुर्विंशद्वादश ग्रन्थयोऽ
थवा ॥ उत्तमादिषु विज्ञेयाः पर्वभिर्वा पवित्रकम् ॥ १८ ॥ चर्चितं कुंकुमेनैव हरिद्राचन्दनेन वा ॥ सोपवासः पवित्रन्तु पात्रस्थमधिवासयेत् ॥ १९ ॥
अश्वत्थपत्रपुटके अष्टदिक्षु निवेशितम् ॥ दण्डकाष्ठं कुशाग्रं च पूर्वे सङ्कर्षणेन तु ॥ २० ॥ रोचनाकुंकुमेनैव प्रद्युम्नेन तु दक्षिणे ॥
युद्धार्थी फलसिद्ध्यर्थमनिरुद्धेन पश्चिमे ॥२१॥ चन्दनं नीलयुक्तं च तिलभस्माक्षतं तथा ॥ आग्नेयादिषु कोणेषु श्र्यादीनां तु क्रमान्न्यसेत्॥ २२ ॥
पवित्रं वासुदेवेन अभिमन्त्र्य सकृत्सकृत् ॥ दृष्ट्वा पुनः प्रपूज्याथ वस्त्रेणाच्छाद्य यत्नतः ॥ २३ ॥ देवस्य पुरतः स्थाप्यं प्रतिमामण्डलस्य वा ॥
पश्चिमे दक्षिणे चैव उत्तरे पूर्ववत्क्रमात् ॥ २४ ॥ ब्राह्मादींश्चापि संस्थाप्य कलशं चापि पूजयेत् ॥ अस्त्रेण मण्डलं कृत्वा नैवेद्यञ्च समर्पयेत् ॥२५॥
अधिवास्य पवित्रं तु त्रिसूत्रेण नवेन वा (च) ॥ वेदिकां वेष्टयित्वा तु आत्मानं कलशं घृतम् ॥ २६ ॥ अग्निकुण्डं विमानं च मण्डपं गृहमेव च ॥
सूत्रमेकं तु संगृह्य दद्यादेवस्य मूर्धनि ॥ २७ ॥ दत्त्वा पठेदिमं मन्त्रं पूजयित्वा महेश्वरम् ॥ आवाहितोऽसि देवेश पूजार्थं परमेश्वर ॥ २८ ॥
तत्प्रभातेऽर्चयिष्यामि सामग्र्याः सन्निधौ भव ॥ एकरात्रं त्रिरात्रं वा अधिवास्य पवित्रकम् ॥ २९ ॥ रात्रौ जागरणं कृत्वा प्रातः संपूज्य केशवम् ॥
आरोपयेत्क्रमेणैव ज्येष्ठमध्यकनीयसम् ॥ ३० ॥ धूपयित्वा पवित्रं तु मन्त्रेणैवाभिमंत्रयेत् ॥ प्रजप्तग्रन्थिकं चैव पूजयेत्कुसुमादिभिः ॥ ३१ ॥
गायत्र्या चार्चितं तेन देवं संपूज्य दापयेत ॥ समं पुत्रकलत्राद्यैः सूत्रपुच्छं तु धारयेत् ॥ ३२ ॥ विशुद्धग्रंथिकं रम्यं महापातकनाशनम् ॥
सर्वपापक्षयं देव तवाग्रे धारयाम्यहम् ॥ ३३ ॥ एवं धूपादिनाभ्यर्च्य मध्यमादीन्त्समर्पयेत् ॥ पवित्रं वैष्णवं तेजः सर्वपातकनाशनम् ॥ ३४ ॥
धर्मकामार्थसिद्ध्यर्थं स्वकंठे धारयाम्यहम् ॥ वनमालां समभ्यर्च्य स्वेन मन्त्रेण दापयेत् ॥ ३५ ॥ नैवेद्यं विविधं दत्त्वा कुसुमादेर्बलिं हरेत् ॥

१ विंशताविकारलोप आर्षः । २ ब्राह्मणार्दीश्च० ।

अग्निं संतर्प्य तत्रापि द्वादशांगुलमानतः ॥ ३६ ॥ अष्टोत्तरशतेनैव दद्यादेकपवित्रकम् ॥ आदौ दत्त्वार्घ्यमादित्ये तत्र चैकं पवित्रकम् ॥ ३७ ॥
विष्वक्सेनं ततः प्रार्च्य गुरुमर्घ्यादिभिर्हर ॥ देवस्याग्रे पठेन्मन्त्रं कृतांजलिपुटः स्थितः ॥ ३८ ॥ ज्ञानतोऽज्ञानतो वापि पूजनादि कृतं मया ॥
तत्सर्वं पूर्णमेवास्तु त्वत्प्रसादात्सुरेश्वर ॥ ३९ ॥ मणिविद्रुममालाभिर्मन्दारकुसुमादिभिः ॥ इयं सांवत्सरी पूजा तवास्तु गरुडध्वज ॥ ४० ॥
वनमाला यथा देव कौस्तुभं सततं हृदि ॥ तद्वत्पवित्रं तन्तूनां मालां त्वं हृदये धर ॥ ४१ ॥ एवं प्रार्थ्य द्विजान् भोज्य दत्त्वा तेभ्यश्च दक्षिणाम् ॥
विसर्जयेत्तु तेनैव सायाह्ने त्वपरेऽहनि ॥ ४२ ॥ सांवत्सरीमिमां पूजां सम्पाद्य विधिवन्मया ॥ व्रजेः पवित्रकेदानीं विष्णुलोकं विसर्जितः ॥ ४३ ॥
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपवित्रारोपणं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ ॥ हरिरुवाच ॥ पूजयित्वा
पवित्राद्यैर्ब्रह्म ध्यात्वा हरिर्भवेत् ॥ ब्रह्मध्यानं प्रवक्ष्यामि मायायन्त्रप्रमर्दकम् ॥ १ ॥ यच्छेद्वाङ्[1]मनसं प्राज्ञस्तं यजेज्ज्ञानमात्मनि ॥ ज्ञानं महति संय
च्छेद्य[2] इच्छेज्ज्ञानमात्मनि ॥ २ ॥ देहेन्द्रियमनोबुद्धिप्राणाहंकारवर्जितम् ॥ वर्जितं भूततन्मात्रैर्गुणजन्माशनादिभिः ॥ ३ ॥ स्वप्रकाशं निराकारं सदानं
दमनादि यत्॥नित्यं शुद्धं बुद्धमृद्धं सत्यमानन्दमद्वयम् ॥४॥ तुरीयमक्षरं ब्रह्म अहमस्मि परं पदम् ॥अहं ब्रह्मेत्यवस्थानं समाधिरपि (रिति) गीयते ॥५॥
आत्मानं रथिनं विद्धि शरीरं रथमेव तु॥बुद्धिं च सारथिं विद्धि मनः प्रग्रहमेव च॥इंद्रियाणि हयानाहुर्विषया[3]स्तेषु गोचराः ॥६॥आत्मेंद्रियमनोयुक्तो भोक्तेत्या
र्मनीषिणः ॥यस्तु विज्ञान[4]वाह्येन युक्तेन मनसा सदा॥७॥स तु तत्पदमाप्नोति स हि भूयो न जायते॥विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ॥८॥ स्वर्ध्व
न्याः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ अहिंसादिर्यमः प्रोक्तः शौचादिर्नियमः स्मृतः ॥ ९ ॥ आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ॥ प्रत्याहा
रो जयः प्रोक्तो ध्यानमीश्वरचिन्तनम् ॥ १० ॥ मनोधृतिर्धारणा स्थात्समाधिर्ब्रह्मणि स्थितिः ॥ पूर्वं चेतः[5] स्थिरं न स्यात्ततो मूर्तिं विचिन्तयेत् ॥ ११ ॥
हृत्पद्मकर्णिकामध्ये शंखचक्रगदाब्जवान् ॥ श्रीवत्सकौस्तुभयुतो वनमालाश्रिया युतः ॥ १२ ॥ नित्यः शुद्धो भूतियुक्तः सत्यानन्दाह्वयः परः ॥ आ
त्माहं परमं ब्रह्म परमं ज्योतिरेव तु ॥ १३ ॥ चतुर्विंशतिमूर्तिः स शालग्रामशिलास्थितः ॥ द्वारकादिशिलासंस्थो ध्येयः पूज्योऽ[6]प्यहं च सः ॥ १४ ॥
मनसोऽभीप्सितं प्राप्य देवो वैमानिको भवेत् ॥ निष्कामो मुक्तिमाप्नोति मूर्तिं ध्यायंस्तुवञ्जपन् ॥ १५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथ

१ यच्छेद्वाङ्मनसी प्राज्ञस्तत्त्वज्ञं ज्ञानमात्मनि०। २ द्य इच्छेच्छ्रेय आत्मनः०। ३ यास्तस्य गोच०। ४ विज्ञानवानात्मा युक्तेन०। ५ अमूर्तौ चेद्दणी स्यात्तु ततो०।
६ पूज्योपि वा हरिः०।

मांशाख्ये आचारकाण्डे ब्रह्ममूर्तिध्याननिरूपणं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ हरिरुवाच ॥ प्रसंगात्कथयिष्यामि शालग्रामस्य लक्षणम् ॥
शालग्रामशिलास्पर्शात्कोटिजन्माघनाशनम् ॥ १ ॥ शखचक्रगदापद्मी ( हस्तः ) ( केशवाख्यो ) गदाधरः ॥ साब्जकौमोदकीचक्रशंखी ( नाराय
णो ) विभुः ॥ २ ॥ सचक्रशंखाब्जगदो ( माधवः ) श्रीगदाधरः ॥ गदाब्जशंखचक्री वा ( गोविन्दो )ऽर्च्यो गदाधरः ॥ ३ ॥ पद्मशंखारिगदिने
( विष्णुरूपाय ) ते नमः ॥ सशंखाब्जगदाचक्र( मधुसूदनमूर्त्तये ) ॥ ४ ॥ नमो गदारिशंखाब्जयुक्त( त्रैविक्रमाय ) च ॥ सारिकौमोदकीपद्मशंख
( वामनमूर्त्तये ) ॥ ५ ॥ चक्राब्जशंखगदिने नमः ( श्रीधरमूर्त्तये )॥ (हृषीकेशाय)ऽब्जगदाशंखिने चक्रिणे नमः ॥ ६ ॥ साब्जचक्रगदाशङ्ख(पद्म
नाभस्वरूपिणे )॥ शङ्खचक्रगदापद्मिन् ( दामोदर ) नमोनमः ॥७॥ सारिशङ्खगदाब्जाय ( वासुदेवाय ) वै नमः॥शङ्खाब्जचक्रगदिने नमः (सङ्कर्षणाय)
च ॥८॥ सुशंखसुगदाब्जारिधृते ( प्रद्युम्नमूर्त्तये ) ॥ नमो( ऽनिरुद्धाय ) गदाशंखाब्जारिविधारिणे ॥९॥ साब्जशंखगदाचक्र( पुरुषोत्तममूर्त्तये )॥नमो
(ऽधोक्षजरूपाय )गदाशंखारिपद्मिने ॥१०॥ (नृसिंहमूर्त्तये) पद्मगदाशंखारिधारिणे॥पद्मारिशंखगदिने नमोऽ(स्त्वच्युतमूर्त्तये )॥११॥सशंखचक्राब्जगदं
( जनार्दन ) मिहानये॥ ( उपेंद्रः ) सगदः सारिः पद्मशङ्खिन्नमोनमः ॥१२॥ सुचक्राब्जगदाशङ्खयुक्ताय (हरिमूर्त्तये)॥सगदाब्जारिशङ्खाय नमः
( श्रीकृष्णमूर्त्तये )॥१३॥शालग्रामशिलाद्वारगतलग्नद्विचक्रधृक्॥शुक्लाभो ( वासुदेवाख्यः ) सोऽव्याद्वः श्रीगदाधरः॥१४॥लग्नद्विचक्रो रक्ताभः पूर्वभागस्तु
पुष्कलः॥संकर्षणोऽथ(प्रद्युम्नः )सूक्ष्मचक्रस्तु पीतकः॥१५॥स दीर्घः सशिरश्छिद्रो यो(ऽनिरुद्धस्तु) वर्तुलः॥नीलो द्वारि त्रिरेखश्च अथ ( नारायणो )ऽसितः
॥१६॥मध्ये गदाकृती रेखा नाभिचक्रो ( क ) महोन्नतः ॥ पृथुवक्षा ( नृसिंहो ) वः कपिलोऽव्यात्रिबिन्दुकः॥१७॥अथवा पञ्चबिन्दुस्तत्पूजनं ब्रह्मचा
रिणः ॥ ( वराहः ) शक्तिलिंगोऽव्याद्विषमद्वयचक्रकः ॥ १८ ॥ नीलस्त्रिरेखः स्थूलोऽथ ( कूर्ममूर्त्तिः स बिन्दुमान् ॥ (कृष्णः) स वर्त्तुलावर्त्तः पातु वो
नतपृष्ठकः ॥ १९ ॥ ( श्रीधरः ) पञ्चरेखोऽव्या( द्वनमाली ) गदाङ्कितः ॥ ( वामनो ) वर्त्तुलो ह्रस्वो वा( रा )मचक्रः सुरेश्वरः ॥ २० ॥ नानाव
र्णोऽनेकमूर्त्तिर्नागभोगी ( त्वनन्तकः ) ॥ स्थूलो ( दामोदरो ) नीलो मध्येवक्रः सुनीलकः ॥ २१ ॥ संकीर्णद्वारकः सोऽव्यादथ ब्रह्मा सुलोहितः ॥
सदीर्घरेखः सुषिर एकचक्राम्बुजः पृथुः ॥ २२ ॥ पृथुच्छिद्रः स्थूलचक्रः ( कृष्णो ) ( विष्णुश्च ) बिल्ववत् ॥ ( हयग्रीवो )ऽङ्कुशाकारः पञ्चरेखः सकौ
स्तुभः ॥ २३ ॥ ( वैकुण्ठो मणिरत्नाभ एकचक्राम्बुजोऽसितः ॥ ( मत्स्यो ) दीर्घोऽम्बुजाकारो द्वाररेखश्च पातु वः ॥ २४ ॥ रामचक्रो दक्षरेखः श्यामो

१ हृषीकेशः सारिगदाशङ्खपद्म नमोनमः । २ पूर्वभागे तु पद्मभृत्० । ३ मध्ये चक्रः सनीलकः० । ४ कृष्णो बिन्दुश्च बिन्दुमत्० ।

वोऽव्या( त्रिविक्रमः ) ॥ शालग्रामे द्वारकायां स्थिताय गदिने नमः ॥ २५ ॥ एकद्वारश्चतुश्चक्रो वनमालाविभूषितः ॥ स्वर्णरेखासमायुक्तो गोष्पदेन विराजितः ॥ २६ ॥ कदम्बकुसुमाकारो ( लक्ष्मीनारायणो )ऽवतु ॥ एकेन लक्षितो योऽव्याद्गदाधारी ( सुदर्शनः ) ॥ २७ ॥ (लक्ष्मीनारायणो) द्वाभ्यां त्रिभिर्मूर्त्ति ( स्त्रिविक्रमः ) ॥ चतुर्भिश्च ( चतुर्व्यूहो ) ( वासुदेवश्च ) पञ्चभिः ॥ २८ ॥ ( प्रद्युम्नः ) षड्भिरेव स्यात् ( संकर्षण ) इतस्ततः ॥ ( पुरुषोत्तमो )ऽष्टभिः स्या( न्नवव्यूहो ) नवांकितः ॥ २९ ॥ ( दशावतारो ) दशभिरनिरुद्धोऽवतादथ ॥ ( द्वादशात्मा ) द्वादशभिरत ऊर्द्ध्व( मनन्तकः ) ॥ ॥ ३० ॥ विष्णोर्मूर्त्तिमयं स्तोत्रं यः पठेत्स दिवं व्रजेत् ॥ ( ब्रह्मा ) चतुर्मुखो दण्डी कमण्डलुयुगान्वितः ॥ ३१ ॥ ( महेश्वरः ) पञ्चवक्त्रो दशबाहुर्वृषध्वजः ॥ यथायुधस्तथा गौरी चण्डिका च सरस्वती ॥ ३२ ॥ महालक्ष्मीर्मातरश्च पद्महस्तो ( दिवाकरः ) ॥ गजास्यश्च गणः स्कन्दः षण्मुखोनेकधा गुणाः॥३३॥एतेऽर्चिताः स्थापिताश्च प्रासादे वास्तुपूजिते ॥ धर्मार्थकाममोक्षाद्याः प्राप्यन्ते पुरुषेण च ॥ ३४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शालग्राममूर्त्तिलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः ॥४५॥ हरिरुवाच ॥ वास्तुं संक्षेपतो वक्ष्ये गृहादौ विघ्ननाशनम् ॥ ईशानकोणादारभ्य ह्येकाशीतिपदे यजेत् ॥ १ ॥ ईशाने च शिरः पादौ नैर्ऋतेऽग्न्यानिले करौ॥आवासवासवेश्मादौ पुरे ग्रामे वणिक्पथे॥२॥ प्रासादारामदुर्गेषु देवालयमठेषु च ॥ द्वात्रिंशति सुरान्बाह्ये तदन्तश्च त्रयोदश ॥ ३ ॥ ईशश्चैवाथ पर्जन्यो जयन्तः कुलिशायुधः ॥ सूर्य्यः सत्यो भृगुश्चैव आकाशो वायुरेव च ॥ ४ ॥ पूषा च वितथश्चैव ग्रहक्षेत्रयमावुभौ ॥ गन्धर्वो भृगुराजस्तु मृगः पितृगणस्तथा ॥ ५ ॥ दौवारिकोऽथ सुग्रीवः पुष्पदन्तो गणाधिपः ॥ असुरः शेषपापौ (दौ) च रोगोऽहिमुख (ख्य) एव च॥६॥भल्लाटः सोमसर्पौ च अदितिश्च दितिस्तथा॥ बहिर्द्वात्रिंशदेते तु तदन्तश्चतुरः शृणु ॥ ७ ॥ ईशानादिचतुष्कोणसंस्थितान्पूजयेद्बुधः ॥ आपश्चैवाथ सावित्री जयो रुद्रस्तथैव च ॥ ८ ॥ मध्ये नवपदे ब्रह्मा तस्याष्टौ च समीपगान् ॥ देवानेकोत्तरानेतान्पूर्वादौ नामतः शृणु ॥ ९ ॥ अर्य्यमा सविता चैव विवस्वान्विबुधाधिपः ॥ मित्रोऽथ राजयक्ष्मा च तथा पृथ्वीधरः क्रमात ॥ १० ॥ अष्टमश्चापवत्सश्च परितो ब्रह्मणः स्मृताः ॥ ईशानकोणादारभ्य दुर्गे च ( ज्ञेयो ) वंश उच्यते ॥ ११ ॥ आग्नेयकोणादारभ्य वंशो भवति दुर्द्धरः ॥ अदितिं हिमवन्तं च जयन्तं च इदं त्रयम् ॥ १२ ॥ नायिका कालिका नाम शक्रा



१ दुर्गेयो वंश० ।

द्गन्धर्वेगाः पुनः ॥ वास्तुदेवान्पूजयित्वा गृहप्रासादकृद्भवेत् ॥ १३ ॥ सुरेज्यः पुरतः कार्यो यस्याग्नेय्यां महानसम् ॥ कपिनिर्गमने ( णी ) [1] येन पूर्वतः सत्रमण्डपम् ॥ १४ ॥ गन्धपुष्पगृहं कार्य्यमैशान्यां पट्टसंयुतम् ॥ भाण्डागारं च कौबेर्य्यां गोष्ठागारं च वायवे ॥१५॥ उदगाश्रयं च वारुण्यां वातायनसमन्वितम् ॥ समित्कुशेन्धनस्थानमायुधानां च नैर्ऋते ॥ १६ ॥ अभ्यागतालयं रम्यसशय्यासनपादुकम् ॥ तोयाग्निदीपसद्भृत्यैर्युक्तं दक्षिणतो भवेत् ॥ १७ ॥ गृहान्तराणि सर्वाणि सजलैः कदलीगृहैः ॥ पंचवर्णैश्च कुसुमैः शोभितानि प्रकल्पयेत् ॥ १८ ॥ प्राकारं तद्बहिर्दद्या त्पञ्चहस्तप्रमाणतः ॥ एवं विष्ण्वाश्रमं कुर्य्याद्वनैश्चोपवनैर्युतम् ॥ १९ ॥ चतुःषष्टिपदो वास्तुः प्रासादादौ प्रपूजितः ॥ मध्ये चतुष्पदो ब्रह्मा द्विप दास्त्वर्य्यमादयः ॥ २० ॥ कर्णे चैवाथ शिख्याद्यास्तथा देवाः प्रकीर्त्तिताः ॥ तेभ्यो ह्युभयतः सार्द्धादन्येऽपि द्विपदाः सुराः ॥ २१ ॥ चतुःषष्टिपदा देवा इत्येवं परिकीर्त्तिताः ॥ चरकी च विदारी च पूतना पापराक्षसी ॥ २२ ॥ ईशानाद्यास्ततो बाह्ये देवाद्या हेतुकादयः ॥ हैतुकस्त्रिपुरान्तश्च अग्निवेतालकौ यमः ॥ २३ ॥ अग्निजिह्वः कालकश्च करालो ह्येकपादकः ॥ ऐशान्यां भीमरूपस्तु पाताले प्रेतनायकः ॥ २४ ॥ आकाशे गन्धमाली स्यात्क्षेत्रपालांस्ततो यजेत् ॥ विस्ताराभिहतं दैर्घ्यं राशिं वास्तोस्तु कारयेत् ॥ २५ ॥ कृत्वा च वसुभिर्भागं शेषं बद्धा [2] यमादिशेत् ॥ पुनर्गुणितमष्टाभिर्ऋक्षभागं तु भाजयेत् ॥ २६ ॥ यच्छेषं तद्भवेदृक्षं भागैर्हत्वाव्ययं भवेत् ॥ ऋक्षं चतुर्गुणं कृत्वा नवभिर्भागहारितम् ॥ २७ ॥ अष्टाभिर्गुणितं पिण्डं षष्टिभिर्भागहारितम् ॥ २८ ॥ यच्छेषं तद्भवेज्जीवं [3] मरणं भूतहारितम् ॥ वास्तु शेषमंशं विजानीयाद्देवलस्य मतं यथा ॥ सिंहकन्यातुलायां च द्वारं शुध्येदथोत्तरम् ॥ ३० ॥ क्रोडे गृहं कुर्य्यान्न पृष्ठे मानवः सदा ॥ २९ ॥ वामपार्श्वेन स्वापिति नात्र कार्य्या विचारणा ॥ एवं च वृश्चिकादौ स्यात्पूर्वदक्षिणपश्चिमम् ॥ द्वारं दीर्घार्द्धविस्तारं द्वाराण्यष्टौ स्मृतानि च ॥ ३१ ॥ सन्तानप्रेष्यनीचत्वं स्वयानं स्वर्णभूषणम् ॥ सुतहीनं तु रौद्रेण वीर्य्यघ्नं दक्षिणे तथा ॥ ३२ ॥ वह्नौ [4] बंधश्चायुर्वृद्धिपुत्रलाभसुतृप्तिदः ॥ धनदे नृपपीडादमर्थघ्नं रोगदं जले ॥ ३३ ॥ नृपभी तिर्मृतापत्यं ह्यनपत्यं न वैरदम् ॥ अर्थदं चार्थहान्यै च दोषदं पुत्रमृत्युदम् ॥ ३४ ॥ द्वाराण्युत्तरसंज्ञानि पूर्वद्वाराणि वच्म्यहम् ॥ अग्निभीतिर्बहु कन्याधनसम्मानकोपदम् ॥ ३५ ॥ राजघ्नं कोपदं पूर्वे फलतो द्वारमीरितम् ॥ ईशानादौ भवेत्पूर्वमाग्नेय्यादौ तु दक्षिणम् ॥ ३६ ॥ नैर्ऋत्यादौ

१ काय (कप)निर्गमने इति लिखितपुस्तके पा० । २ वसुभिर्भागशुद्धिं च शेषाबद्धा० । ३ तद्भवेजीवो मरणमिति युक्तः पाठः । पुस्तकत्रयेजीवमिति पाठो दृश्यते । ४ वह्नौ बन्धश्च वायौ च पुत्रलाभः सुतृप्तिदः ।

पश्चिमं स्याद्वायव्यादौ तु चोत्तरम् ॥ अष्टभागे कृते भागे द्वाराणां च फलाफलम् ॥ ३७ ॥ अश्वत्थप्लक्षन्यग्रोधाः पूर्वादौ स्यादुदुम्बरः ॥ गृहस्य शोभनः प्रोक्त ईशाने चैव शाल्मलिः॥ पूजितो विघ्नहारी स्यात्प्रासादस्य गृहस्य च ॥ ३८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वास्तुमानलक्षणं नाम षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ सूत उवाच ॥ प्रासादानां लक्षणं च वक्ष्ये शौनक तच्छृणु ॥ चतुःषष्टिपदं कृत्वा दिग्विदिक्षूपलक्षितम् ॥ १ ॥ चतुष्कोणं चतुर्भिश्च द्वाराणि सूर्य्यसंख्यया ॥ चत्वारिंशाष्टभिश्चैव भित्तीनां कल्पना भवेत् ॥ २ ॥ ऊर्द्ध्वक्षेत्रसमा जंघा जंघार्धद्विगुणं भवेत् ॥ गर्भविस्तारविस्तीर्णः शुकाङ्घ्रिश्च विधीयते ॥ ३ ॥ तन्त्रिभागेन कर्त्तव्यः पञ्चभागेन वा पुनः ॥ निर्गमस्तु शुकाङ्घ्रेश्च उच्छ्रायः शिखरार्द्धगः ॥ ४ ॥ चतुर्द्धा शिखरं कृत्वा त्रिभागे वेदिबन्धनम् ॥ चतुर्थे पुनरस्यैव कण्ठमामूलसाधनम् ॥ ५ ॥ अथ वापि समं वास्तुं कृत्वा षोडशभागिकम् ॥ तस्य मध्ये चतुर्भागमादौ गर्भं तु कारयेत् ॥ ६ ॥ चतुर्भागेन भित्तीनामुच्छ्रायः स्यात्प्रमाणतः ॥ ७ ॥ द्विगुणः शिखरोच्छ्रायो भित्त्युच्छायाच्च मानतः ॥ शिखरार्द्धस्य चार्द्धेन विधेयास्तु प्रदक्षिणाः ॥ ८ ॥ चतुर्दिक्षु तथा ज्ञेयो निर्गमस्तु तथा बुधैः ॥ पञ्चभागेन संभज्य गर्भमानं विचक्षणः ॥ ९ ॥ भागमेकं गृहीत्वा तु निर्गमं कल्पयेत्पुनः ॥ गर्भसूत्रसमो भागादग्रतो मुखमण्डपः ॥ १० ॥ एतत्सामान्यमुद्दिष्टं प्रासादस्य हि लक्षणम् ॥ लिंगमानमथो वक्ष्ये पीठो लिंगसमो भवेत् ॥ ११ ॥ द्विगुणेन भवेद्गर्भः समन्ताच्छौनक ध्रुवम् ॥ तद्विधा च भवेद्भीतिर्जंघा तद्विस्तरार्द्धगा ॥ १२ ॥ द्विगुणं शिखरं प्रोक्तं जंघायाश्चैव शौनक ॥ पीठगर्भावरं कर्म तन्मानेन शुकाङ्घ्रिकम् ॥ १३ ॥ निर्गमस्तु समाख्यातः शेषं पूर्ववदेव तु ॥ लिंगमानं स्मृतं ह्येतद्द्वारमानमथोच्यते ॥ १४ ॥ कराग्रं वेदवत्कृत्वा द्वारं भागाष्टमं भवेत् ॥ विस्तरेण समाख्यातं द्विगुणं स्वेच्छया भवेत् ॥ १५ ॥ द्वारवत्पीठमध्ये तु शेषं सुषिरकं भवेत् ॥ पादिकं शेषिकं भित्तिर्द्वारार्द्धेन परिग्रहात् ॥ १६ ॥ तद्विस्तारसमा जंघा शिखरं द्विगुणं भवेत् ॥ शुकाङ्घ्रिः पूर्ववज्ज्ञेया निर्गमोच्छ्रायकं भवेत् ॥ १७ ॥ मण्डपे मानमेतत्तु स्वरूपं चापरं वदे ॥ त्रैवेदं कारयेत्क्षेत्रं यत्र तिष्ठन्ति देवताः ॥ १८ ॥ इत्थं कृतेन मानेन बाह्यभागाविनिर्गतम् ॥ नेमिः पादेन विस्तीर्णा प्रासादस्य समन्ततः ॥ १९ ॥ गर्भं तु द्विगुणं कुर्य्यान्नेम्या मानं भवेदिह ॥ स एव भित्तेरुत्सेधो शिखरो द्विगुणो मतः ॥ २० ॥ प्रासादानां च वक्ष्यामि मानं योनिं च मानतः ॥ वैराजः पुष्पकाख्यश्च कैलासो मालिकाह्वयः ॥ २१ ॥ त्रिविष्टपं च पञ्चैते प्रासादाः सर्वयोनयः ॥ प्रथमश्चतुरश्रो हि द्वितीयस्तु तदायतः ॥ २२ ॥ वृत्तो वृत्तायतश्चान्योऽष्टाश्रश्चेह च पञ्चमः ॥ एतेभ्य

१ जंघार्धं चैव० ।

एवं सम्भूताः प्रासादाः सुमनोहराः ॥ २३ ॥ सर्वप्रकृतिभूतेभ्यश्चत्वारिंशत्तथैव च ॥ मेरुश्च मन्दरश्चैव विमानश्च तथापरः ॥ २४ ॥ भद्रकः सर्वतो भद्रो रुचको नन्दनस्तथा ॥ नन्दिवर्द्धनसंज्ञश्च श्रीवत्सश्च नवेत्यमी ॥ २५ ॥ चतुरश्राः समुद्भूता वैराजादिति गम्यताम् ॥ वलभी गृहराजश्च शालागृहं च मन्दिरम् ॥ २६ ॥ विमानं च तथा ब्रह्ममंदिरं भवनं तथा ॥ उत्तम्भं शिबिका वेश्म नवैते पुष्पकोद्भवाः ॥ २७ ॥ वलयो दुन्दुभिः पद्मो महापद्मस्तथापरः ॥ मुकुली चास्य उष्णीषी शंखश्च कलशस्तथा ॥ २८ ॥ गुवावृक्षस्तथान्यश्च वृत्ताः कैलाससम्भवाः ॥ गजोऽथ वृषभो हंसो गरुडः सिंहनामकः॥२९॥ भूमुखो भूधरश्चैव श्रीजयः पृथिवीधरः॥वृत्तायताः समुद्भूता नवैते मणिकाह्वयात्॥३०॥वज्रं चक्रं तथान्यच्च मुष्टिकं बभ्रुसंज्ञितम् ॥ वक्रः स्वस्तिकखड्गौ च गदा श्रीवृक्ष एव च॥३१॥विजयो नामतः श्वेतास्त्रिविष्टिपसमुद्भवाः॥त्रिकोणं पद्ममर्द्धेन्दुश्चतुष्कोणं द्विरष्टकम् ॥ ३२ ॥ यत्र तत्र विधातव्यं संस्थानं मण्डपस्य तु ॥ राज्यं च विभवश्चैवःह्यायुर्वर्द्धनमेव च ॥३३॥ पुत्रलाभः स्त्रियः पुष्टिस्त्रिकोणादिक्रमाद्भवेत् ॥ कुर्य्याद्ध्वजादिकं ख्यातद्वारि गर्भगृहं तथा ॥ ३४ ॥ मण्डपः समसंख्याभिर्गुणितः सूत्रकस्तथा ॥ मण्डपस्य चतुर्थांशाद्भद्रः कार्य्यो विजानता ॥ ३५ ॥ स्पर्धागवाक्षकोपेतो निर्गवाक्षोऽथ वा भवेत् ॥ सार्द्धभित्तिप्रमाणेन भित्तिमानेन वा पुनः ॥ ३६ ॥ भित्तेर्द्वैगुण्यतो वापि कर्त्तव्या मण्डपाः क्वचित् ॥ प्रासादे मञ्जरी कार्य्या चित्रा विषमभूमिका ॥ ३७ ॥ परिमाणविरोधेन रेखावैषम्यभूषिता ॥ आधारस्तु चतुर्द्वारश्चतुर्मण्डपशोभितः ॥ ३८ ॥ शतशृङ्गसमायुक्तो मेरुः प्रासाद उत्तमः ॥ मण्डपास्तस्य कर्त्तव्या भद्रैस्त्रिभिरलङ्कृताः ॥ ३९ ॥ घटनाकारमानानां भिन्नाभिन्ना भवन्ति ते ॥ कियन्तो येषु चाधारा निराधाराश्च केचन ॥ ४० ॥ प्रतिच्छन्दकभेदेन प्रासादाः सम्भवन्ति ते ॥ अन्योन्यासंकरास्तेषां घटनानामभेदतः ॥ ४१ ॥ देवतानां विशेषाय प्रासादा बहवः स्मृताः ॥ प्रासादे नियमो नास्ति देवतानां स्वयम्भुवाम् ॥ ४२ ॥ तानेव देवतानां च पूर्वमानेन कारयेत् ॥ चतुरश्रायतास्तत्र चतुष्कोणसमन्विताः ॥ ४३ ॥ चन्द्रशालान्विता कार्य्या भेरीशिखरसंयुता ॥ पुरतो वाहनानां च कर्त्तव्या लघ्न(घु)मण्डपाः ॥४४॥ नाट्यशाला च कर्त्तव्या द्वारदेशसमाश्रया ॥ प्रासादे देवतानां च कार्य्या दिक्षु विदिक्ष्वपि ॥ ४५ ॥ द्वारपालाश्च कर्त्तव्या मुख्या गत्वा पृथक्पृथक् ॥ किञ्चिद्दूरतः कार्य्या मठास्तत्रोपजीविनाम् ॥ ४६ ॥ प्रावृता जगती कार्य्या फलपुष्पजलान्विता ॥ प्रासादेषु सुरांस्थाप्य पूजाभिः पूजयेन्नरः ॥ वासुदेवः सर्वदेवः सर्वभाक् तद्गृहादिकृत् ॥ ४७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशे आचारकाण्डे प्रासादलिङ्गमण्डपादिलक्षणनिरूपणं

१ मालिकाह्वयात्० । २ मार्धगवाक्ष० ।

नाम सप्तचत्वारिंशोऽध्यायः॥४७॥ सूत उवाच ॥ प्रतिष्ठां सर्वदेवानां संक्षेपेण वदाम्यहम् ॥ सुतिथ्यादौ सुरम्यां च प्रतिष्ठां कारयेद्गुरुः ॥ १ ॥
ऋत्विग्भिः सह चाचार्य्यं वरयेन्मध्यदेशगम् ॥ स्वशाखोक्तविधानेन अथ वा प्रणवेन तु ॥ २ ॥ पञ्चभिर्बहुभिर्वाथ कुर्य्यात्पाद्यार्घ्यमेव च ॥
मुद्रिकाभिस्तथा वस्त्रैर्गन्धमाल्यानुलेपनैः ॥ ३ ॥ मन्त्रन्यासं गुरुः कृत्वा ततः कर्म समारभेत् ॥ प्रासादस्याग्रतः कुर्य्यान्मण्डपं दशहस्तकम् ॥४॥
कुर्य्याद्द्वादशहस्तं वा स्तम्भैः षोडशभिर्युतम् ॥ ध्वजाष्टकैश्चतुर्हस्तां मध्ये वेदिं च कारयेत् ॥ ५ ॥ नदीसंगमतीरात्थां वालुकां तत्र दापयेत् ॥
चतुरश्रं कार्मुकाभं वर्त्तुलं कमलाकृति ॥ ६ ॥ पूर्वादितः समारभ्य कर्त्तव्यं कुण्डपञ्चकम् ॥ अथवा चतुरश्राणि सर्वाण्येतानि कारयेत् ॥ ७ ॥
शान्तिकर्मविधानेन सर्वकामार्थसिद्धये ॥ शिरः स्थाने तु देवस्य आचार्य्यो होममाचरेत् ॥ ८ ॥ ऐशान्यां केचिदिच्छन्ति उपलिप्यावनिं शुभाम् ॥
द्वाराणि चैव चत्वारि कृत्वा वै तोरणान्तिके ॥ ९ ॥ न्यग्रोधोदुम्बराश्वत्थबैल्वपालाशखादिराः ॥ तोरणाः पञ्चहस्ताश्च वस्त्रपुष्पाद्यलङ्कृताः ॥१०॥
निखनेद्धस्तमेकैकं चत्वारश्चतुरो दिशः ॥ पूर्वद्वारे मृगेन्द्रं तु हयराजं तु दक्षिणे ॥ ११ ॥ पश्चिमे गोपतिर्नाम सुरशार्दूलमुत्तरे ॥
अग्निमीळेति हि मन्त्रेण प्रथमं पूर्वतो न्यसेत्॥१२॥ईषेत्त्वेतिहि मन्त्रेण दक्षिणस्यां द्वितीयकम् ॥ अग्नआयाहिमन्त्रेण पश्चिमस्यां तृतीयकम् ॥१३॥
शन्नोदेवीति मन्त्रेण उत्तरस्यां चतुर्थकम् ॥ पूर्वे अम्बुदवत्कार्य्या आग्नेय्यां धूमरूपिणी ॥१४॥ याम्यां वै कृष्णरूपा तु नैर्ऋत्यां श्यामला (धूसरा)
भवेत् ॥ वारुण्यां पाण्डुरा ज्ञेया वायव्यां पीतवर्णिका ॥ १५ ॥ उत्तरे रक्तवर्णा तु शुक्केशी च पताकिका ॥ बहुरूपा तथा मध्ये इन्द्रविष्ठेति पूर्वके
॥ १६ ॥ अग्निं संस्तुतिमन्त्रेण यमोनागेति दक्षिणे ॥ पूज्या रक्षोहनोवेति पश्चिमे उत्तरेऽपि च ॥ १७ ॥ वात इत्यभिषिच्याथ आप्यायस्वेति चोत्तरे ॥
तमीशानमतश्चैव विष्णोर्नुकेति मध्यमे ॥ १८ ॥ कलशौ तु ततो द्वौद्वौ निवेश्यौ तोरणान्तिके ॥ वस्त्रयुग्मसमायुक्ताश्चन्दनाद्यैः स्वलङ्कृताः ॥ १९ ॥
पुष्पैर्वितानैर्बहुलैरादिवर्णाभिमन्त्रिताः ॥ दिक्पालाश्च ततः पूज्याः शास्त्रदृष्टेन कर्मणा ॥ २० ॥ त्रातारमिन्द्रमन्त्रेण अग्निर्मूर्द्धेति चापरे ॥
अस्मिन्वृक्ष इतं चैव प्रचारीति परा स्मृता॥ २१ ॥ किञ्चेदधातु आचत्वाऽभित्वादेति च सप्तमी॥इमारुद्रेति दिक्पालान्पूजयित्वा विचक्षणः ॥२२॥
होमद्रव्याणि वायव्ये कुर्य्यात्सोपस्कराणि च ॥ शंखाञ्छाखोदिताञ्छ्वेतान्नेत्राभ्यां विन्यसेद्गुरुः ॥ २३ ॥ आलोकनेन द्रव्याणि शुद्धिं यान्ति न संश
यः ॥ हृदयादीनि चाङ्गानि व्याहृतिप्रणवेन च॥२४॥अस्त्रं चैव समस्तानां न्यासोऽयं सर्वकामिकः॥अक्षतान्विष्टरं चैव अस्त्रेणैवाभिमन्त्रितान्॥२५॥





१ पूर्वेन्द्रायुधिमाकार्या० क० पु० । २ अग्निमुतिं च मन्त्रेण० । ३ दुकूलैरादि० ।

विष्टरेण स्पृशेद्द्रव्यान्यागमण्डपसंभृतान् ॥ अक्षतान्विकिरेत्पश्चादस्त्रपूतान्समन्ततः ॥ २६ ॥ शाक्रीं दिशमथारभ्य यावदीशानगोचरम् ॥ अवकीर्य्याक्षतान्सर्वाँल्लेपयेन्मण्डपं ततः ॥ २७ ॥ गंधाद्यैरर्घ्यपात्रे च मंत्रग्रामं न्यसेद्गुरुः ॥ तेनार्घ्यपात्रतोयेन प्रोक्षयेद्यागमण्डपम् ॥ २८ ॥ प्रतिष्ठा यस्य देवस्य तदाख्यं कलशं न्यसेत् ॥ ऐशान्यां पूजयेद्याम्ये अस्त्रेणैव च वर्द्धनीम् ॥ २९ ॥ कलशं वर्द्धनीं चैव ग्रहान्वास्तोष्पतिं तथा ॥ आसने तानि सर्वाणि प्रणवाख्यं जपेद्गुरुः ॥ ३० ॥ सूत्रग्रीवं रत्नगर्भं वस्त्रयुग्मेन वेष्टितम् ॥ सर्वौषधीगन्धलिप्तं पूजयेत्कलशं गुरुः ॥ ३१ ॥ देवस्तु कलशे पूज्यो वर्द्धन्या वस्त्रउत्तमम् ॥ वर्द्धन्या तु समायुक्तं कलशं भ्रामयेदनु ॥ ३२ ॥ वर्द्धनीधारया सिञ्चन्नग्रतो धारयेत्ततः ॥ अभ्यर्च्य वर्द्धनीकुम्भं स्थण्डिले देवमर्चयेत् ॥ ३३ ॥ घटं चावाह्य वायव्यां गणानां त्वेति सद्गणम् ॥ देवमीशानकोणे तु जपेद्वास्तोष्पतिं बुधः ॥ ३४ ॥ वास्तोष्पतीति मन्त्रेण वास्तुदोषोपशान्तये ॥ कुम्भस्य पूर्वतो भूतं गणदेवं बलिं हरेत् ॥ ३५ ॥ पंठेदिति च विद्याश्च कुर्य्यादालम्भनं बुधः ॥ योगेयोगेति मन्त्रेणास्तरणं शाद्वलैः कुशैः ॥ ३६ ॥ ऋत्विग्भिः सार्द्धमाचार्यः स्नानपीठे गुरुस्तदा ॥ विविधैर्ब्रह्मघोषैश्च पुण्याहजयमङ्गलैः ॥३७॥ कृत्वा ब्रह्मरथे देवं प्रतिष्ठन्ति ततो द्विजाः ॥ ऐशान्यामानयेत्पीठमण्डपे विन्यसेद्गुरुः ॥ ३८ ॥ भद्रंकर्णेत्यथ स्नात्वा सूत्रवल्कलजेन तु ॥ संस्नाप्य लक्षणोद्धारं कुर्य्यात्तूर्यादि (दूराभि) वादनैः ॥३९॥ मधुसर्पिःसमायुक्तं कांस्ये वा ताम्रभाजने॥अक्षिणी चांजयेच्चास्य सुवर्णस्य शलाकया ॥४०॥ अग्निर्ज्योतीति मन्त्रेण नेत्रोद्घाटं तु कारयेत्॥लक्षणे क्रियमाणे तु नामैकं स्थापको व(द)देत् ॥ ४१ ॥ इमम्मेगंगेमन्त्रेण नेत्रयोः शीतलक्रिया ॥ अग्निर्मूर्द्धेति मन्त्रेण दद्याद्वल्मीकमृत्तिकाम् ॥ ४२ ॥ बिल्वोदुम्बरमश्वत्थं वटं पालाशमेव च ॥ यज्ञायज्ञेति मन्त्रेण दद्यात्पञ्चकषायकम् ॥ ४३ ॥ पञ्चगव्यं स्नापयेच्च सहदेव्यादिभिस्ततः ॥ सहदेवी बला चैव शतमूली शतावरी ॥ ४४ ॥ कुमारी च गुडूची च सिंही व्याघ्री तथैव च ॥ या ओषधीति मन्त्रेण स्नानमोषधिमज्जलैः ॥४५॥ याःफलिनीति मन्त्रेण फलस्नानं विधीयते ॥ द्रुपदादिवेति मन्त्रेण कार्य्यमुद्वर्त्तनं बुधैः ॥ ४६ ॥ कलशेषु च विन्यस्य उत्तरादिष्वनुक्रमात् ॥ रत्नानि चैव धान्यानि ओषधीं शतपुष्पिकाम् ॥ ४७ ॥ समुद्रांश्चैव विन्यस्य चतुरश्चतुरो दिशः ॥ क्षीरं दधि क्षीरोदस्य घृतोदस्येति वा पुनः ॥४८॥ आप्यायस्व दधिक्राव्णो याओषधीरितीति च ॥ तेजोऽसीति च मन्त्रैश्च कुम्भं चैवाभिमन्त्रयेत् ॥ ४९ ॥ समुद्राख्यैश्चतुर्भिश्च स्नापयेत्कलशैः पुनः ॥ स्नातश्चैव सुवेषश्च धूपो देयश्च गुग्गुलुः ॥ ५० ॥ अभिषेकाय कुम्भेषु तत्तत्तीर्थानि विन्यसेत् ॥ पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा ॥५१॥

१ आर्षः प्रयोगः। २ पठेद्वेति विदध्याच्च कुर्या०।

याओषधीति मन्त्रेण कुम्भं चैवाभिमन्त्रयेत् ॥ तेन तोयेन यः स्नायात्स मुच्येत्सर्वपातकैः ॥ ५२ ॥ अभिषिच्य संमुद्रैश्च त्वर्घ्यं दद्यात्ततः पुनः ॥
गन्धद्वारेति गन्धं च न्यासं वै वेदमन्त्रकैः ॥ ५३ ॥ स्वशास्त्रविहितैः प्राप्तैर्युवंवस्त्रेति वस्त्रकम् ॥ कविहाविति मन्त्रेण आनयेन्मण्डपं शुभम् ॥ ५४ ॥
शम्भवायेति मन्त्रेण शय्यायां विनिवेशयेत् ॥ विश्वतश्चक्षुर्मन्त्रेण कुर्यात्सकलनिष्कलम् ॥ ५५ ॥ स्थित्वा चैव परे तत्त्वे मन्त्रन्यासं तु कारयेत् ॥
स्वशास्त्रविहितो मन्त्रो न्यासस्तस्मिंस्तथोदितः ॥ ५६ ॥ वस्त्रेणाच्छादयित्वा तु पूजनीयः स्वभावतः ॥ यथाशास्त्रं निवेद्यानि पादमूले तु दापयेत् ॥ ५७ ॥
अथ प्रणवसंयुक्तं वस्त्रयुग्मेन वेष्टितम् ॥ कलशं सहिरण्यं च शिरःस्थाने निवेदयेत् ॥ ५८ ॥ स्थित्वा कुण्डसमीपेऽथ अग्नेः स्थापनमाचरेत् ॥
स्वशास्त्रविहितैर्मन्त्रैर्वेदोक्तैर्वाथ वा गुरुः ॥ ५९ ॥ श्रीसूक्तं पावमान्यं च वासदास्यसवाजिनम् ॥ वृषाकपिं च मित्रं बह्वचः पूर्वतो जपेत् ॥ ६० ॥
रुद्रं पुरुषसूक्तं च श्लोकाध्यायं च शुक्रियम् ॥ ब्रह्माणं पितृमैत्रं च अध्वर्य्युर्दक्षिणे जपेत् ॥ ६१ ॥ वेदव्रतं वामदेव्यं ज्येष्ठसाम रथन्तरम् ॥
भेरुण्डानि च सामानि छन्दोगः पश्चिमे जपेत् ॥ ६२ ॥ अथर्वशिरसं चैव कुम्भसूक्तमथर्वणः ॥ नीलरुद्रांश्च मैत्रं च अथर्वश्चोत्तरे जपेत् ॥ ६३ ॥
कुण्डं चास्त्रेण संप्रोक्ष्य आचार्य्यस्तु विशेषतः ॥ ताम्रपात्रे शरावे वा यथाविभवतोऽपि वा ॥ ६४ ॥ जातवेदसमानीय अग्रतस्तं निवेशयेत् ॥
अस्त्रेण ज्वालयेद्वह्निं कवचेन तु वेष्टयेत् ॥ ६५ ॥ अमृतीकृत्य तं पश्चान्मन्त्रैः सर्वैश्च देशिकः ॥ पात्रं गृह्य कराभ्यां च कुण्डं भ्राम्य ततः पुनः ॥ ६६ ॥
वैष्णवेन तु योगेन परं तेजस्तु निःक्षिपेत् ॥ दक्षिणे स्थापयेद्ब्रह्म प्रणीताश्चोत्तरेण तु ॥ ६७ ॥ साधारणेन मन्त्रेण स्वसूत्रविहितेन वा ॥
दिक्षुदिक्षु ततो दद्यात्परिधिं विष्टरैः सह ॥ ६८ ॥ ब्रह्मविष्णुहरेशानाः पूज्याः साधारणेन तु ॥ दर्भेषु स्थापयेद्वह्निं दर्भैश्च परिवेष्टितम् ॥ ६९ ॥
दर्भतोयेन संस्पृष्टो मन्त्रहीनोऽपि शुध्यति ॥ प्रागग्रैरुदगग्रैश्च प्रत्यगग्रैरखण्डितैः ॥ ७० ॥ विततैर्वेष्टितो वह्निः स्वयं सान्निध्यमाव्रजेत् ॥ अग्ने
स्तु रक्षणार्थाय यदुक्तं कर्म न्त्रवित् ॥ ७१ ॥ आचार्य्याः केचिदिच्छन्ति जातकर्माद्यनन्तरम् ॥ पवित्रं तु ततः कृत्वा कुर्यादाज्यस्य संस्कृतिम् ॥ ७२ ॥
आचार्य्योऽथ निरीक्ष्यापि नीराज्यमभिमन्त्रितम् ॥ आज्यभागाभिघारान्तमवेक्षेताज्यसिद्धये ॥ ७३ ॥ पञ्चपञ्चाहुतीर्हुत्वा आज्येन तदनन्तरम् ॥
गर्भाधानादितस्तावद्यावद्गोदानिकं भवेत् ॥ ७४ ॥ स्वशास्त्रविहितैर्मन्त्रैः प्रणवेनाथ होमयेत् ॥ ततः पूर्णाहुतिं दत्त्वा पूर्णात्पूर्णमनोरथः ॥ ७५ ॥ एवमु
त्पादितो वह्निः सर्वकर्मसु सिद्धिदः ॥ पूजयित्वा ततो वह्निं कुण्डेषु विहरेत्तथा ॥ ७६ ॥ इन्द्रादीनां स्वमन्त्रैश्च तथाहुतिशतंशतम् ॥ पूर्णाहुतिं शत

१ अभिषिच्य सन्मन्त्रैश्च० ।

स्यान्ते सर्वेषां चैव होमयेत् ॥ ७७ ॥ स्वामाहुतिमथाज्येषु होता तत्कलशे न्यसेत् ॥ देवताश्चैव मन्त्रांश्च तथैव जातवेदसम् ॥७८॥ आत्मानमेकतः कृत्वा ततः पूर्णां प्रदापयेत् ॥ निष्क्रम्य बहिराचार्य्यो दिक्पालानां बलिं हरेत् ॥७९॥ भूतानां चैव देवानां नागानां च प्रयोगतः ॥ तिलाश्च समिधश्चैव होमद्रव्यं द्वयं स्मृतम् ॥ ८० ॥ आज्यं तयोः सहकारि तत्प्रधानं यदङ्ग(क्ष)योः ॥ पुरुषसूक्तं पूर्वेणैव रुद्रंचैव तु दक्षिणे ॥८१॥ ज्येष्ठसाम च भारुण्डं तन्नयामीति पश्चिमे ॥ नीलरुद्रो महामन्त्रः कुम्भसूक्तमथर्वणः ॥ ८२ ॥ हुत्वा सहस्रमेकैकं देवं शिरसि कल्पयेत् ॥ एवं मध्ये तथा पादे पूर्णाहुत्या तथा पुनः ॥ ८३ ॥ शिरःस्थानेषु जुहुयादाविशेचाप्यनुक्रमात् ॥ वेदानामादिमन्त्रैर्वा मन्त्रैर्वा देवनामभिः ॥ ८४ ॥ स्वशास्त्रविहितैर्वापि गायत्र्या वाथ ते द्विजाः ॥ गायत्र्या वाथवाचार्य्यो व्याहृतिप्रणवेन तु ॥ ८५ ॥ एवं होमविधिं कृत्वा न्यसेन्मन्त्रांस्तु देशिकः ॥ चरणावग्निमीळे तु इषेत्वो गुल्फयोः स्थिताः ॥ ८६ ॥ अग्न आयाहि जङ्घे द्वे शन्नोदेवीति जानुनी ॥ बृहद्रथन्तरे ऊरू उदरेष्वातिलो (स्वातिनो )न्यसेत् ॥८७॥ दीर्घायुष्ट्वाय हृदये श्रीश्चते गलके न्यसेत् ॥ त्रातारमिन्द्रमुरसि नेत्राभ्यां तु त्रियम्बकम् ॥ ८८ ॥ मूर्द्धाभव तथा मूर्ध्नि आलग्नाद्धोममाचरेत् ॥ उत्थापयेत्ततो देवमुत्तिष्ठब्रह्मणस्पते ! ॥ ८९ ॥ वेदपुण्याहशब्देन प्रासादानां प्रदक्षिणम् ॥ पिण्डिकालंभनं कृत्वा देवस्यत्वेति मन्त्रवित् ॥ ९० ॥ दिक्पालान्सह रत्नैश्च धातूनोषधयस्तथा ॥ लोहबीजानि सिद्धानि पश्चाद्देवं तु विन्यसेत् ॥ ९१ ॥ न गर्भे स्थापयेद्देवं न गर्भं तु परित्यजेत् ॥ ईषन्मध्यं परित्यज्य ततो दोषापहं तु तत् ॥ ९२ ॥ तिलस्य तुषमात्रं तु उत्तरं किञ्चिदानयेत् ॥ ॐ स्थिरो भव शिवो भव प्रजाभ्यश्च नमोनमः ॥ ९३ ॥ देवस्य त्वा सवितुर्वः षड्भ्यो वै विन्यसेद्गुरुः ॥ तत्त्ववर्णकलामात्रं प्रजानि[1] भुवनात्मजे ॥ ९४ ॥ षड्भ्यो विन्यस्य सिद्धार्थं ध्रुवाथैरभिमन्त्रयेत् ॥ सम्पातकलशेनैव स्नापयेत्सुप्रतिष्ठितम् ॥९५॥ दीपधूपसुगन्धैश्च नैवेद्यैश्च प्रपूजयेत् ॥ अर्घ्यं दत्त्वा नमस्कृत्य ततो देवं क्षमापयेत् ॥ ९६ ॥ पात्रं वस्त्रयुगं छत्रं तथा दिव्याङ्गुलीयकम् ॥ ऋत्विग्भ्यश्च प्रदातव्या दक्षिणा चैव शक्तितः ॥ ९७ ॥ चतुर्थीं जुहुयात्पश्चाद्यजमानः समाहितः ॥ आहुतीनां शतं हुत्वा ततः पूर्णां प्रदापयेत् ॥ ९८॥ निष्क्रम्य बहिराचार्य्यो दिक्पालानां बलिं हरेत् ॥ आचार्य्यः पुष्पहस्तस्तु क्षमस्वेति विसर्जयेत् ॥९९॥ यागान्ते कपिलां दद्यादाचार्य्याय च चामरम् ॥ मुकुटं कुण्डलं छत्रं केयूरं कटिसूत्रकम् ॥ १०० ॥ व्यजनं ग्रामवस्त्रादीन्सोपस्कारं सुमण्डपम् ॥ भोजनं च महत्कुर्य्यात्कृतकृत्यश्च जायते ॥ यजमानो विमुक्तः स्यात्स्थापकस्य प्रसादतः ॥ १०१ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये

१ प्रजानिभुवनाथजे० ।

आचारकाण्डे देवप्रतिष्ठादिनिरूपणं नामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ इति प्रतिष्ठाप्रकरणं समाप्तम् ॥ ॥ ब्रह्मोवाच ॥ सर्गादिकृद्धरिश्चैव पूज्यः स्वायम्भुवादिभिः ॥ विप्राद्यैः स्वेन धर्मेण तद्धर्मं व्यास ! वै शृणु ॥ १ ॥ यजनं याजनं दानं ब्राह्मणस्य प्रतिग्रहः ॥ अध्यापनं चाध्ययनं षट् कर्माणि द्विजोत्तमे ॥ २ ॥ दानमध्ययनं यज्ञो धर्मः क्षत्रियवैश्ययोः ॥ दण्डस्तथा क्षत्रियस्य कृषिर्वैश्यस्य शस्यते ॥ ३ ॥ शुश्रूषैव द्विजातीनां शूद्राणां धर्मसाधनम् ॥ कारुकर्म तथाऽऽजीवो पाकयज्ञोऽपि धर्मतः ॥४॥ भिक्षाचर्य्याथ शुश्रूषा गुरोः स्वाध्याय एव च ॥ सन्ध्याकर्माग्निकार्य्यञ्च धर्मोऽयं ब्रह्मचारिणः ॥ ५ ॥ सर्वेषामाश्रमाणां च द्वैविध्यं तु चतुर्विधम् ॥ ब्रह्मचार्य्युपकुर्वाणो नैष्ठिको ब्रह्मतत्परः ॥ ६ ॥ योऽधीत्य विधिवद्वेदान् गृहस्थाश्रममाव्रजेत् ॥ उपकुर्वाणको ज्ञेयो नैष्ठिको मरणान्तिकः ॥ ७ ॥ अग्नयोऽतिथिशुश्रूषा यज्ञो दानं सुरार्चनम् ॥ गृहस्थस्य समासेन धर्मोऽयं द्विजसत्तम ! ॥ ८ ॥ उदासीनः साधकश्च गृहस्थो द्विविधो भवेत् ॥ कुटुम्बभरणे युक्तः साधकोऽसौ गृही भवेत् ॥ ९ ॥ ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्य्याधनादिकम् ॥ एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः ॥ १० ॥ भूमौ मूलफलाशित्वं स्वाध्यायस्तप एव च ॥ संविभागो यथान्यायं धर्मोऽयं वनवासिनः ॥ ११ ॥ तपस्तप्याति योऽरण्ये यजेद्देवाञ्जुहोति च ॥ स्वाध्याये चैव निरतो वनस्थस्तापसोत्तमः ॥ १२ ॥ तपसा कर्शितोऽत्यर्थं यस्तु ध्यानपरो भवेत् ॥ सन्यासी स हि विज्ञेयो वानप्रस्थाश्रमे स्थितः ॥ १३ ॥ योगाभ्यासरतो नित्यमारुरुक्षुर्जितेन्द्रियः ॥ ज्ञानाय वर्त्तते भिक्षुः प्रोच्यते पारमेष्ठिकः ॥ १४ ॥ यस्त्वात्मरतिरेव स्यान्नित्यतृप्तो महामुनिः ॥ सम्यक् च दमसम्पन्नः स योगी भिक्षुरुच्यते ॥ १५ ॥ भैक्ष्यं श्रुतं च मौनित्वं तपो ध्यानं विशेषतः ॥ सम्यक् च ज्ञानवैराग्यं धर्मोऽयं भिक्षुके मतः ॥ १६ ॥ ज्ञानसन्यासिनः केचिद्वेदसन्यासिनोऽपरे ॥ कर्मसन्यासिनः केचित्रिविधः पारमेष्ठिकः ॥ १७ ॥ योगी च त्रिविधो ज्ञेयो भौतिकः क्षत्र एवच ॥ तृतीयोऽन्त्याश्रमी प्रोक्तो योगमूर्त्तिसमास्थितः ॥ १८ ॥ प्रथमा भावना पूर्वे मोक्षे त्वक्ष (दुष्क) रभावना ॥ तृतीये चान्तिमा प्रोक्ता भावना पारमेश्वरी ॥ १९ ॥ धर्मात्संजायते मोक्षो ह्यर्थात्कामोऽभिजायते ॥ प्रवृत्तिश्च निवृत्तिश्च द्विविधं कर्म वैदिकम् ॥ २० ॥ ज्ञानं पूर्वं निवृत्तं स्यात्प्रवृत्तं चाग्निदेवकृत् ॥ क्षमा दमो दया दानमलोभा (भो) भ्यास एव च ॥ २१ ॥ आर्जवं चानसूया च तीर्थानुसरणं तथा ॥ सत्यं संतोष आस्तिक्यं तथा चेन्द्रियनिग्रहः ॥ २२ ॥ देवताभ्यर्चनं पूजा ब्राह्मणानां विशेषतः ॥ अहिंसा प्रियवादित्वमपैशुन्यमरूक्षता ॥ २३ ॥ एते आश्रमिका धर्माश्चातुर्वर्ण्यं ब्रवीम्यतः ॥ प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ॥ २४ ॥ स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वपलायिनाम् ॥

वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्त्तताम्[1] ॥ २५ ॥ गान्धर्वं शूद्रजातीनां परिचारे च वर्त्तताम् ॥ अष्टाशीतिसहस्राणामृषीणामूर्द्ध्वरेतसाम् ॥ २६ ॥ स्मृतं तेषां तु यत्स्थानं तदेव वन ( गुरु ) वासिनाम्॥सप्तर्षीणां तु यत्स्थानं स्थानं तद्वै वनौकसाम् ॥ २७ ॥ यतीनां यतचित्तानां न्यासिनामूर्द्ध्वरेतसाम् ॥ आनंदं ब्रह्म तत्स्थानं यस्मान्नावर्त्तते मुनिः॥२८॥योगिनाममृतस्थानं व्योमाख्यं परमाक्षरम्॥ आनन्दमैश्वरं यस्मान्मुक्तो नावर्त्तते नरः॥२९॥ मुक्तिरष्टाङ्गविज्ञानात्संक्षेपात्तद्वदे शृणु ॥ यमाः पञ्च त्वहिंसाद्या अहिंसा प्राण्यहिंसनम् ॥ ३० ॥ सत्यं भूतहितं वाक्यमस्तेयं स्वाग्रहं परम् ॥ अमैथुनं ब्रह्मचर्य्यं सर्वत्यागोऽपरिग्रहः ॥ ३१ ॥ नियमाः पञ्च सत्याद्या बाह्यमाभ्यन्तरं द्विधा ॥ शौचं तुष्टिश्च सन्तोषस्तपश्चेंद्रियनिग्रहः ॥ ३२ ॥ स्वाध्यायः स्यान्मंत्रजापः प्रणिधानं हरेर्यजिः ॥ आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ॥ ३३ ॥ मन्त्रध्यान तो गर्भो विपरीतो ह्यगर्भकः ॥ एवं द्विधा त्रिधाप्युक्तं पूरणात्पूरकः स च ॥ ३४ ॥ कुम्भको निश्चलत्वाच्च रेचनाद्रेचकस्त्रिधा॥ लघुर्द्वादशमात्रः स्याच्चतुर्विंशातिकः परः ॥३५॥षट्त्रिंशन्मात्रिकः श्रेष्ठः प्रत्याहारश्च रोधनम् ॥ ब्रह्मात्मचिन्ता ध्यानं स्याद्धारणा मनसो धृतिः ॥ ३६ ॥ अहं ब्रह्मेत्यवस्थानं समाधिर्ब्रह्मणः स्थितिः ॥ अहमात्मा परं ब्रह्म सत्यं ज्ञानमनन्तकम् ॥ ३७ ॥ ब्रह्म विज्ञानमानन्दः स तत्त्वमसि केवलम् ॥ अहं ब्रह्मास्म्यहं ब्रह्म अशरीरमानिन्द्रियम् ॥ ३८ ॥ अहम्मनोबुद्धिमहदहङ्कारादिवर्जितम् ॥ जाग्रत्स्वप्नसुषुप्त्यादियुक्तज्योतिस्तदीयकम् ॥३९॥ नित्यं शुद्धं बुद्धमुक्तं सत्यमानन्दमद्वयम् ॥ योऽसावादित्यपुरुषः सोऽसावहमखण्डितम ॥ इति ध्यायन्विमुच्येत ब्राह्मणो भवबंधनात् ॥ ४० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वर्णाश्रमधर्मनिरूपणं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥ ब्रह्मोवाच ॥ अहन्यहनि यः कुर्य्यात्क्रियां स ज्ञानमाप्नुयात् ॥ ब्राह्मे मुहूर्त्ते चोत्थाय धर्ममर्थं च चिन्तयेत् ॥ १ ॥ चिन्तयेद्धृदि पद्मस्थमानन्दमजरं हरिम् ॥ उषः काले तु संप्राप्ते कृत्वा चावश्यकं बुधः ॥ २ ॥ स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि ॥ प्रातः स्नानेन पूयंते येऽपि पापकृतो जनाः ॥ ३ ॥ तस्मात्सर्वप्रयत्नेन प्रातः स्नानं समाचरेत् ॥ प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत् ॥ ४ ॥ सुखात्सुप्तस्य सततं लालाद्याः संस्रवन्ति हि ॥ अतो नैवाचरेत्कर्माण्यकृत्वा स्नानमादितः ॥ ५ ॥ अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम् ॥ प्रातः स्नानेन पापानि धूयन्ते नात्र संशयः॥६॥न च स्नानं विना पुंसां प्राशस्त्यं कर्म संस्मृतम् ॥ होमे जप्ये विशेषेण तस्मात्स्नानं समाचरेत् ॥ ७ ॥ अशक्तावशिरस्कं तु स्नानमस्य विधीयते ॥ आर्द्रेण वाससा वापि मार्जनं कायिकं स्मृतम ॥८॥

---

१ अनुवर्तमानानामित्यर्थः ।

ब्राह्ममाग्नेयमुद्दिष्टं वायव्यं दिव्यमेव च ॥ वारुणं यौगिकं तद्वत्षडङ्गं स्नानमाचरेत् ॥ ९ ॥ ब्राह्मं तु मार्जनं मन्त्रैः कुशैः सोदकबिन्दुभिः ॥
आग्नेयं भस्मनाऽऽपादमस्तकाद्देहधूननम् ॥ १० ॥ गवां हि रजसा प्रोक्तं वायव्यं स्नानमुत्तमम् ॥ यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ॥ ११ ॥
वारुणं चावगाहं च मानसं त्वात्मवेदनम् ॥ यौगिकं स्नानमाख्यातं योगेन हरिचिन्तनम् ॥ १२ ॥ आत्मतीर्थमिति ख्यातं सेवितं ब्रह्मवादिभिः ॥
क्षीरवृक्षसमुद्भूतं मालतीसम्भवं शुभम् ॥ १३ ॥ अपामार्गं च विल्वं च करवीरं च धावने ॥ उदङ्मुखः प्राङ्मुखो वा भक्षयेद्दन्तधावनम् ॥ १४ ॥ प्रक्षा
ल्य भुक्त्वा तज्जह्याच्छुचौ देशे समाहितः ॥ स्नात्वा सन्तर्पयेद्देवानृषीन्पितृगणांस्तथा ॥ १५ ॥ आचम्य विधिवन्नित्यं पुनराचम्य वाग्यतः ॥ संमार्ज्य मन्त्रै
रात्मानं कुशैः सोदकबिन्दुभिः ॥ १६ ॥ आपोहिष्ठाव्याहृतिभिः सावित्र्या वारुणैः शुभैः ॥ ओंकारव्याहृतियुतां गायत्रीं वेदमातरम् ॥ १७ ॥
जप्त्वा जलाञ्जलिं दद्याद्भास्करं प्रति तन्मनाः ॥ प्राक्कूलेषु ततः स्थित्वा दर्भेषु सुसमाहितः ॥ १८ ॥ प्राणायामं ततः कृत्वा ध्यायेत्सन्ध्यामिति श्रुतिः ॥
या सन्ध्या सा जगत्सूतिर्मायातीता हि निष्कला ॥ १९ ॥ ऐश्वरी केवला शक्तिस्तत्त्वत्रयसमुद्भवा ॥ ध्यात्वा रक्तां सितां कृष्णां गायत्रीं वै जपे
द्बुधः ॥ २० ॥ प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत् ॥ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु ॥ २१ ॥ यदन्यत्कुरुते किञ्चिन्न तस्य
फलभाग्भवेत् ॥ अनन्यचेतसः सन्तो ब्राह्मणा वेदपारगाः ॥ २२ ॥ उपास्य विधिवत्सन्ध्यां प्राप्ताः पूर्वपरां गतिम् ॥ योऽन्यत्र कुरुते यत्नं धर्म
कार्ये द्विजोत्तमः ॥ २३ ॥ विहाय सन्ध्याप्रणतिं स याति नरकायुतम् ॥ तस्मात्सर्वप्रयत्नेन सन्ध्योपासनमाचरेत् ॥ २४ ॥ उपासितो भवेत्तेन
देवो योगतनुः परः ॥ सहस्रपरमां नित्यां शतमध्यां दशावराम् ॥ २५ ॥ गायत्रीं वै जपेद्विद्वान्प्राङ्मुखः प्रयतः शुचिः ॥ अथोपतिष्ठेदादित्यमुद
यन्तं समाहितः ॥ २६ ॥ मन्त्रैस्तु विविधैः सौरैः ऋग्यजुःसामसंज्ञितैः ॥ उपस्थाय महायोगं देवदेवं दिवाकरम् ॥ २७ ॥
कुर्वीत प्रणतिं भूमौ मूर्धानमभिमन्त्रितः ॥ ॐ खखोल्काय शान्ताय कारणत्रयहेतवे ॥ २८ ॥ निवेदयामि चात्मानं नमस्ते
ज्ञानरूपिणे ॥ त्वमेव ब्रह्म परममापो ज्योती रसोऽमृतम् ॥ २९ ॥ भूर्भुवः स्वस्त्वमोङ्कारः सर्वो रुद्रः सनातनः ॥ एतद्वै सूर्य
हृदयं जप्त्वा स्तवनमुत्तमम् ॥ ३० ॥ प्रातःकाले च मध्याह्ने नमस्कुर्याद्दिवाकरम् ॥ अथागम्य गृहं विप्रः ( पश्चात ) समाचम्य यथाविधि ॥ ३१ ॥
प्रज्वाल्य वह्निं विधिवज्जुहुयाज्जातवेदसम् ॥ ऋत्विक्पुत्रोऽथ पत्नी वा शिष्यो वापि सहोदरः ॥ ३२ ॥ प्राप्यानुज्ञां विशेषेण जुहुयाद्वा यथाविधि ॥

विना म ( त ) न्त्रेण यत्कर्म नामुत्रेह फलप्रदम् ॥ ३३ ॥ दैवतानि नमस्कुर्य्यादुपहारान्निवेदयेत् ॥ गुरुं चैवाप्युपासीत हितं चास्य समाचरेत् ॥३४॥ वेदाभ्यासं ततः कुर्य्यात्प्रयत्नाच्छक्तितो द्विजः ॥ जपेदाध्यापयेच्छिष्यान्धारयेद्वै विचारयेत् ॥ ३५ ॥ अवेक्षेत च शास्त्राणि धर्मादीनि द्विजोत्तमः ॥ वैदिकांश्चैव निगमान्वेदाङ्गानि च सर्वशः ॥ ३६ ॥ उपेयादीश्वरं चैव योगक्षेमप्रसिद्धये ॥ साधयेद्विविधानर्थान्कुटुम्बार्थं ततो द्विजः ॥३७॥ ततो मध्याह्नसमये स्नानार्थं मृदमाहरेत् ॥ पुष्पाक्षतांस्तिलकुशान् गोमयं शुद्धमेव च ॥ ३८ ॥ नदीषु देवखातेषु तडागेषु सरःसु च ॥ स्नानं समाचरेन्नैव परकीये कदाचन ॥ ३९ ॥ पञ्च पिण्डाननुद्धृत्य स्नानं दुष्यन्ति नित्यशः ॥ मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि ॥ ४० ॥ अधश्च तिसृभिः क्षाल्यं पादौ षड्भिस्तथैव च ॥ मृत्तिका च समुद्दिष्टा वृद्धामलकमात्रिका ॥ ४१ ॥ गोमयस्य प्रमाणं तु तेनाङ्गं लेपयेत्ततः ॥ प्रक्षाल्याचम्य विधिवत्ततः स्नायात्समाहितः ॥ ४२ ॥ लेपयित्वा तु तीरस्थस्तल्लिङ्गैरेव मन्त्रतः ॥ अभिमन्त्र्य जलं मन्त्रैरालिङ्गैर्वारुणैः शुभैः ॥४३॥ स्नानकाले स्मरेद्विष्णुमापो नारायणो यतः ॥ प्रेक्ष्य ॐकारमादित्यं त्रिर्निमज्जेज्जलाशये ॥ ४४ ॥ आचान्तः पुनराचामेन्मन्त्रेणानेन मन्त्रवित् ॥ अंतश्चरसि भूतेषु गुहायां विश्वतोमुखः ॥ ४५ ॥ त्वं यज्ञस्त्वं वषट्कार आपो ज्योती रसोऽमृतम्॥द्रुपदां वा त्रिरभ्यस्येद्व्याहृतिप्रणवान्विताम् ॥ ४६ ॥ सावित्रीं वा जपेद्विद्वांस्तथा चैवाघमर्षणम् ॥ ततः संमार्जनं कुर्य्यादापोहिष्ठामयोभुवः ॥ ४७ ॥ इदमापःप्रवहतव्याहृतिभिस्तथैव च ॥ ततोऽभिमन्त्रितं तोयमापोहिष्ठादिमन्त्रकैः ॥ ४८ ॥ अन्तर्जलमवाङ्मग्नो जपेत्त्रिरघमर्षणम्॥द्रुपदां वाथ सावित्रीं तद्विष्णोः परमं पदम्॥४९॥आवर्त्तयेद्वा प्रणवं देवदेवं स्मरेद्धरिम् ॥ अपः पाणौ समादाय जप्त्वा वै मार्जने कृते ॥ ५० ॥ विन्यस्य मूर्ध्नि तत्तोयं मुच्यते सर्वपातकैः ॥ सन्ध्यामुपास्य चाचम्य संस्मरेन्नित्यमीश्वरम् ॥ ५१ ॥ अथोपतिष्ठेदादित्यमूर्द्धपुष्पान्विताञ्जलिम् ॥ प्रक्षिप्यालोकयेद्देवमुद्‌दयंतं न शक्यते ॥ ५२ ॥ उदुत्यं चित्रमित्येवं तच्चक्षुरिति मन्त्रतः॥ हँसःशुचिषदेतेन सावित्र्या च विशेषतः ॥ ५३ ॥ अन्यैः सौरैर्वैदिकैश्च गायत्रीं च ततो जपेत् ॥ मन्त्रांश्च विविधान्पश्चात्प्राक्कूले च कुशासने ॥ ५४ ॥ तिष्ठंश्च वीक्ष्यमाणोऽर्कं जपं कुर्य्यात्समाहितः ॥ स्फटिकाब्जाक्षरुद्राक्षैः पुत्रजीवसमुद्भवैः ॥ ५५ ॥ कर्त्तव्या त्वक्ष[illegible]ला स्यादन्तरा तत्र सा स्मृता ॥ यदि स्यात्क्लिन्नवासा वै वारिमध्यगतश्चरेत् ॥ ५६ ॥ अन्यथा च शुचौ भूम्यां दर्भेषु च समाहितः॥ प्रदक्षिणं समावृत्य नमस्कृत्य ततः क्षितौ ॥५७॥ आचम्य च यथाशास्त्रं शक्त्या स्वाध्यायमाचरेत् ॥ ततः सन्तर्पयेद्देवानृषीन्पितृगणांस्तथा ॥ ५८ ॥ आदावोङ्कारमुच्चार्य्य नमोऽन्ते तर्पयामि च ॥

---

१ मुदयंतन्नहास्य ( क्य ) ते० ।

देवान्ब्रह्मऋषींश्चैव तर्पयेदक्षतोदकैः ॥ ५९ ॥ पितॄन्देवान्मुनीन् भक्त्या स्वसूत्रोक्तविधानतः ॥ ६० ॥ देवर्षींस्तर्पयेद्धीमानुदकाञ्जलिभिः पितॄन् ॥
यज्ञोपवीती देवानां निवीती ऋषितर्पणे ॥ ६१ ॥ प्राचीनावीती पित्र्ये तु तेन तीर्थेन भारत ॥ निष्पीडच स्नानवस्त्रं वै समाचम्य च वाग्यतः ॥ ६२ ॥
स्वैर्मन्त्रैरर्चयेद्देवान्पुष्पैः पत्रैस्तथाम्बुभिः ॥ ब्रह्माणं शंकरं सूर्यं तथैव मधुसूदनम् ॥ ६३ ॥ अन्यांश्चाभिमतान्देवान् भक्त्या चाक्रोधनो हर ! ॥
प्रदद्याद्वाथ पुष्पादि सूक्तेन पुरुषेण तु ॥ ६४ ॥ आपो वा देवताः सर्वास्तेन सम्यक् समर्चिताः ॥ ध्यात्वा प्रणवपूर्वं वै देवं वारिसमाहितः ॥ ६५ ॥
नमस्कारेण पुष्पाणि विन्यसेद्वै पृथक्पृथक् ॥ नर्ते ह्याराधनात्पुण्यं विद्यते कर्म वैदिकम् ॥ ६६ ॥ तस्मात्तत्रादिमध्यान्ते चेतसा धारयेद्धरिम् ॥
तद्विष्णोरिति मन्त्रेण सूक्तेन पुरुषेण तु ॥ ६७ ॥ निवेदयेच्च आत्मानं विष्णवेऽमलतेजसे ॥ तदाध्यात्ममनाः शान्तस्तद्विष्णोरिति मन्त्रतः ॥६८॥
अग्नेते मशिरा वेतियजेत्वा पुष्पके हरिम् ॥ देवयज्ञं भूतयज्ञं पितृयज्ञं तथैव च ॥ मानुषं ब्रह्मयज्ञं च पञ्च यज्ञान्समाचरेत् ॥ ६९ ॥ यदि स्यात्तर्पणाद
र्वाग्ब्रह्मयज्ञं कुतो भवेत् ॥ कृत्वा मनुष्ययज्ञं वै ततः स्वाध्यायमाचरेत् ॥ ७० ॥ वैश्वदेवस्तु कर्त्तव्यो देवयज्ञः स तु स्मृतः॥भूतयज्ञः स वै ज्ञेयो
भूतेभ्यो यस्त्वयं बलिः ॥ ७१ ॥ श्वभ्यश्च श्वपचेभ्यश्च पतितादिभ्य एव च ॥ दद्याद्भूमौ बहिस्त्वन्नं पक्षिभ्यश्च द्विजोत्तमः ॥ ७२ ॥
एकं तु भोजयेद्विप्रं पितॄनुद्दिश्य सत्तमाः ॥ नित्यश्राद्धं तदुद्दिश्य पितृयज्ञो गतिप्रदः ॥ ७३ ॥ उद्धृत्य वा यथाशक्ति किञ्चिदन्नं समाहितः ॥
वेदतत्त्वार्थविदुषे द्विजायैवोपपादयेत् ॥ ७४ ॥ पूजयेदतिथिं नित्यं नमस्येदर्चयेद्द्विजम् ॥ मनोवाक्कर्मभिः शान्तं स्वागतैः स्वगृहं ततः ॥ ७५ ॥
भिक्षामाहुर्ग्रासमात्रमन्नं तत्स्याच्चतुर्गुणम् ॥ पुष्कलं हन्तकारं तु तच्चतुर्गुणमुच्यते ॥ ७६ ॥ गोदोहमात्रकालं वै प्रतीक्ष्यो ह्यतिथिः स्वयम् ॥
अभ्यागतान्यथाशक्ति पूजयेदतिथिं तथा ॥ ७७ ॥ भिक्षां वै भिक्षवे दद्याद्विधिवद्ब्रह्मचारिणे ॥ दद्यादन्नं यथाशक्ति अर्थिभ्यो लोभवर्जितः ॥ ७८ ॥
भुञ्जीत बन्धुभिः सार्द्धं वाग्यतोऽन्नमकुत्सयन् ॥ अकृत्वा तु द्विजः पञ्च महायज्ञान् द्विजोत्तमः ॥७९॥ भुञ्जते चेत्स मूढात्मा तिर्य्यग्योनिं च गच्छति॥
वेदाभ्यासोऽन्वहं शक्त्या महायज्ञक्रियाक्षमाः ॥ ८० ॥ नाशयन्त्याशु पापानि देवानामर्चनं तथा॥ यो मोहादथ वालस्यादकृत्वा देवतार्चनम्॥८१॥
भुङ्क्ते स याति नरकान्सूकरेष्वेव जायते ॥ अशौचं संप्रवक्ष्यामि अशुचिः पातकी सदा ॥८२॥ अशौचं चैव संसर्गाच्छुद्धिः संसर्गवर्जनात् ॥
दशाहं प्राहुराशौचं सर्वे विप्रा विपश्चितः ॥८३॥ मृतेषु वाथ जातेषु ब्राह्मणानां द्विजोत्तम ॥ आदन्तजननात् सद्य आचूडादेकरात्रकम् ॥ ८४ ॥

निरात्रमौपनयनाद्दशरात्रमतः परम् ॥ क्षत्रियो द्वादशाहेन दशाभिः पञ्चभिर्विशः ॥ ८९ ॥ शुध्येन्मासेन वै शूद्रो यतीनां नास्ति पातकम् ॥ रात्रि
भिर्मासतुल्याभिर्गर्भस्रावेषु शौचकम् ॥८६॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नित्यकर्माशौचयोर्निरूपणं नाम पञ्चा
शत्तमोऽध्यायः ॥ ५० ॥ ॥ ब्रह्मोवाच ॥ अथातः संप्रवक्ष्यामि दानधर्ममनुत्तमम् ॥ अर्थानामुचिते पात्रे श्रद्धया प्रतिपादनम् ॥ १ ॥ दानं तु
कथितं तज्ज्ञैर्भुक्तिमुक्तिफलप्रदम् ॥ न्यायेनोपार्जयेद्वित्तं दानभोगफलं च तत् ॥ २ ॥ अध्यापनं याजनं च वृत्तमाहुः प्रतिग्रहम् ॥ कुसीदं कृषिवा
णिज्यं क्षत्रवृत्तोऽथ वर्जयेत् ॥ ३ ॥ यद्दीयते तु पात्रेभ्यस्तद्दानं परिकीर्त्तितम् ॥ नित्यं नैमित्तिकं काम्यं विमलं दानमीरितम् ॥ ४ ॥ अहन्यहनि
यत्किञ्चिद्दीयतेऽनुपकारिणे ॥ अनुद्दिश्य फलं तस्माद्ब्राह्मणाय तु नित्यशः ॥ ५ ॥ यत्तु पापोपशान्त्यै च दीयते विदुषां करे ॥ नैमित्तिकं तदुद्दिष्टं
दानं सद्भिरनुष्ठितम् ॥ ६ ॥ अपत्यविजयैश्वर्य्यस्वर्गार्थं यत्प्रदीयते ॥ दानं तत्काम्यमाख्यातमृषिभिर्धर्मचिन्तकैः ॥७॥ ईश्वरप्रीणनार्थाय ब्रह्मवित्सु
प्रदीयते ॥ चेतसा सत्त्वयुक्तेन दानं तद्विमलं शिवम् ॥ ८ ॥ इक्षुभिः सन्ततां भूमिं यवगोधूमशालिनीम् ॥ ददाति वेदविदुषे स न भूयोऽभिजायते
॥ ९ ॥ भूमिदानात्परं दानं न भूतं न भविष्यति ॥ विद्यां दत्त्वा ब्राह्मणाय ब्रह्मलोके महीयते ॥ १० ॥ दद्यादहरहस्तास्तु श्रद्धया ब्रह्मचारिणे ॥
सर्वपापविनिर्मुक्तो ब्रह्मस्थानमवाप्नुयात् ॥ ११ ॥ वैशाख्यां पौर्णमास्यां तु ब्राह्मणान्सप्त पंच च॥उपोष्याभ्यर्चयेद्विद्वान्मधुना तिलसर्पिषा ॥ १२ ॥
गन्धादिभिः समभ्यर्च्य वाचयेद्वा स्वयं वदेत् ॥ प्रीयतां धर्मराजेति यथा मनसि वर्त्तते ॥ १३ ॥ यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति ॥ कृष्णा
जिने तिलान्कृत्वा हिरण्यमधुसर्पिषा ॥ १४ ॥ ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥ घृतान्नमुदकं चैव वैशाख्यां च विशेषतः ॥ १५ ॥
निर्दिश्य धर्मराजाय विप्रेभ्यो मुच्यते भयात् ॥ द्वादश्यामर्चयेद्विष्णुमुपोष्याघप्रणाशनम् ॥ १६ ॥ सर्वपापविनिर्मुक्तो नरो भवति निश्चितम् ॥
यो हि यां देवतामिच्छेत्समाराधयितुं नरः ॥ १७ ॥ ब्राह्मणान्पूजयेद्यत्नाद्भोजयेद्योषितः सुरान् ॥ सन्तानकामः सततं पूजयेद्वै
पुरन्दरम् ॥ १८ ॥ ब्रह्मवर्चसकामस्तु ब्राह्मणान्ब्रह्मनिश्चयात् ॥ आरोग्यकामोऽथ रविं धनकामो हुताशनम् ॥ १९ ॥ कर्मणां सिद्धिकामस्तु
पूजयेद्वै विनायकम् ॥ भोगकामो हि शशिनं बलकामः समीरणम् ॥ २० ॥ मुमुक्षुः सर्वसंसारात्प्रयत्नेनार्चयेद्धरिम् ॥ अकामः
सर्वकामो वा पूजयेत्तु गदाधरम् ॥ २१ ॥ वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ॥ तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ २२ ॥

१ तिलसर्षपैः०।

भूमिदः सर्वमाप्नोति दीर्घमायुर्हिरण्यदः ॥ गृहदोऽग्र्याणि वेश्मानि रूप्यदो रूपमुत्तमम् ॥ २३ ॥ वासोदश्चन्द्रसालोक्यमश्विसालोक्यम
श्वदः॥अनड्दः श्रियं पुष्टां गोदो ब्रध्नस्य विष्टपम् ॥ २४ ॥ यानशय्याप्रदो भार्य्यामैश्वर्य्यमभयप्रदः ॥ धान्यदः शाश्वतं सौख्यं ब्रह्मदो ब्रह्म शाश्व
तम् ॥ २५ ॥ वेदवित्सु ददज्ज्ञानं स्वर्गलोके महीयते ॥ गवां घासप्रदानेन सर्वपापैः प्रमुच्यते ॥ २६ ॥ इन्धनानां प्रदानेन दीप्ताग्निर्जायते नरः ॥
औषधं स्नेहमाहारं रोगिरोगप्रशान्तये ॥ २७ ॥ ददानो रोगरहितः सुखी दीर्घायुरेव च ॥ असिपत्रवनं मार्गं क्षुरधारासमन्वितम् ॥ २८ ॥ तीक्ष्णा
तपं च तरतिच्छत्रोपानत्प्रदो नरः ॥ यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ॥ २९ ॥ तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥ अयने विषुवे चैव ग्रहणे
चन्द्रसूर्य्ययोः ॥ ३० ॥ संक्रान्त्यादिषु कालेषु दत्तं भवति चाक्षयम् ॥ प्रयागादिषु तीर्थेषु गयायां च विशेषतः ॥ ३१ ॥ दानधर्मात्परो धर्मो
भूतानां नेह विद्यते ॥ स्वर्गायुर्भूतिकामेन दानं पापोपशान्तये ॥ ३२ ॥ दीयमानं तु यो मोहाद्गोविप्राग्निसुरेषु च ॥ निवारयति पापात्मा
तिर्य्यग्योनिं व्रजेन्नरः॥३३॥यस्तु दुर्भिक्षवेलायामन्नाद्यं न प्रयच्छति॥ म्रियमाणेषु विप्रेषु ब्रह्महा स तु गर्हितः॥३४॥इति श्रीगारुडे महापुराणे पूर्वखण्डे
प्रथमांशाख्ये आचारकाण्डे दानधर्मनिरूपणं नामैकपञ्चाशत्तमोऽध्यायः ॥ ५१ ॥ ॥ ब्रह्मोवाच ॥ अतः परं प्रवक्ष्यामि प्रायश्चित्तविधिं द्विजाः ॥
ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः ॥ १ ॥ पञ्च पातकिनस्त्वेते तत्संयोगी च पञ्चमः ॥ उपपापानि गोहत्याप्रभृतीनि सुरा
जगुः ॥ २ ॥ ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ॥ कुर्य्यादनशनं वाथ भृगोः पतनमेव च ॥ ३ ॥ ज्वलन्तं वा विशेदग्निं जलं वा
प्रविशेत्स्वयम् ॥ ब्राह्मणार्थे गवार्थे वा सम्यक् प्राणान्परित्यजेत् ॥ ४ ॥ दत्त्वा चान्नं च विदुषे ब्रह्महत्यां व्यपोहति ॥ अश्वमेधावभृथके
स्नात्वा वा मुच्यते द्विजः ॥ ५ ॥ सर्वस्वं वा वेदविदे ब्राह्मणाय प्रदापयेत् ॥ सरस्वत्यास्तरङ्गिण्याः सङ्गमे लोकविश्रुते ॥ ६ ॥ शुद्धे त्रिषवण
स्नानात्त्रिरात्रोपोषितो द्विजः ॥ सेतुबन्धे नरः स्नात्वा मुच्यते ब्रह्महत्यया॥७॥कपालमोचने स्नात्वा वाराणस्यां तथैव च॥सुरापस्तु सुरां पीत्वा अग्निवर्णां
द्विजोत्तमः ॥ ८ ॥ पयो घृतं वा गोमूत्रं तस्मात्पापात्प्रमुच्यते ॥ सुवर्णस्तेयी मुक्तः स्यान्मुसलेन हतो नृपैः ॥ ९ ॥ चीरवासा द्विजोऽरण्ये
चरेद्ब्रह्महणव्रतम् ॥ गुरुभार्य्यां समारुह्य ब्राह्मणः काममोहितः ॥ १० ॥ अवगूहेत्स्त्रियं तप्तां दीप्तां कार्ष्णायसीं कृताम् ॥ गुर्वङ्गनागा
मिनश्च चरेयुर्ब्रह्महव्रतम् ॥११॥ चान्द्रायणानि वा कुर्य्यात्पञ्च चत्वारि वा पुनः ॥ पतितेन च संसर्गं कुरुते यस्तु वै द्विजः ॥ १२ ॥

१ मोहादिभ्योऽग्निष्वथवेषु च०। २ गुर्वर्थञ्चाहतः शुद्ध्यै चरेद्वा ब्रह्मह०। ३ ब्रह्महव्रतं०।

स तत्पापापनोदार्थं तस्यैव व्रतमाचरेत् ॥ तप्तकृच्छ्रं चरेद्वाथ संवत्सरमतन्द्रितः ॥ १३ ॥ सर्वस्वदानं विधिवत्सर्वपापविशोधनम् ॥ चान्द्रायणं च विधिना कृतं चैवातिकृच्छ्रकम् ॥ १४ ॥ पुण्यक्षेत्रे गयादौ च गमनं पापनाशनम् ॥ अमावस्यां तिथिं प्राप्य यः समाराधयेद्भवम् ॥ १५ ॥ ब्राह्मणान् भोजयित्वा तु सर्वपापैः प्रमुच्यते ॥ उपोषितश्चतुर्दश्यां कृष्णपक्षे समाहितः ॥१६॥ यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥ वैवस्वताय कालाय सर्वभूतक्षयाय च ॥ १७ ॥ प्रत्येकं तिलसंयुक्तान्दद्यात्सप्त जलाञ्जलीन् ॥ स्नात्वा नद्यां तु पूर्वाह्णे मुच्यते सर्वपातकैः ॥ १८॥ ब्रह्मचर्य्यमधः शय्यामुपवासं द्विजार्चनम् ॥ व्रतेष्वेतेषु कुर्वीत शान्तः संयतमानसः ॥ १९ ॥ षष्ठ्यामुपोषितो देवं शुक्लपक्षे समाहितः ॥ सप्तम्यामर्चयेद्भानुं मुच्यते सर्वपातकैः ॥ २० ॥ एकादश्यां निराहारः समभ्यर्च्य जनार्दनम्॥द्वादश्यां शुक्लपक्षस्य महापापैः प्रमुच्यते॥२१॥ तपो जप स्तीर्थसेवा देवब्राह्मणपूजनम् ॥ ग्रहणादिषु कालेषु महापातकनाशनम् ॥ २२ ॥ यः सर्वपापयुक्तोऽपि पुण्यतीर्थेषु मानवः ॥ नियमेन त्यजेत्प्राणान्मु च्यते सर्वपातकैः ॥ २३ ॥ ब्रह्मघ्नं वा कृतघ्नं वा महापातकदूषितम् ॥ भर्त्तारमुद्धरेन्नारी प्रविष्टा सह पावकम् ॥२४॥ पतिव्रता तु या नारी भर्त्तुः शुश्रूषणो त्सुका ॥ न तस्या विद्यते पापमिह लोके परत्र च ॥ २५ ॥ तथा रामस्य सुभगा सीता त्रैलोक्यविश्रुता ॥ पत्नी दाशरथेर्देवी विजिग्ये राक्षसेश्वरम् ॥ २६ ॥ फल्गुतीर्थादिषु स्नातः सर्वाचारफलं लभेत् ॥ इत्याह भगवान्विष्णुः पुरा मम यतव्रताः ॥ २७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे प्रायश्चित्तनिरूपणं नाम द्विपञ्चाशत्तमोऽध्यायः ॥ ५२ ॥

॥ सूत उवाच ॥ एवं ब्रह्माब्रवीच्छ्रुत्वा हरेरष्टनिधीं स्तथा ॥ तत्र पद्ममहापद्मौ तथा मकरकच्छपौ॥१॥मुकुन्दकु (न) न्दौ नीलश्च शङ्खश्चैवापरो निधिः॥सत्यामृद्धौ भवन्त्येते स्वरूपं कथयाम्यहम्॥२॥ पद्मेन लक्षितश्चैव सात्त्विको जायते नरः ॥ दाक्षिण्यसारः पुरुषः सुवर्णादिकसंग्रहम् ॥ ३ ॥ रूप्यादि कुरुते दद्यात्तु यतिदेवादियज्वनाम् ॥ महापद्मा ङ्कितो दद्याद्धनाद्यं धार्मिकाय च ॥ ४ ॥ निधी पद्ममहापद्मौ सात्त्विकौ पुरुषौ स्मृतौ ॥ मकरेणाङ्कितः खड्गबाणकुन्तादिसंग्रही ॥ ५ ॥ दद्याच्छ्रुताय मैत्रीं च याति नित्यं च राजभिः ॥ द्रव्यार्थं शत्रुणा नाशं संग्रामे चापि संव्रजेत् ॥ ६ ॥ मकरः कच्छपश्चैव तामसौ तु निधी स्मृतौ ॥ कच्छपी विश्वसेन्नैव न भुङ्क्ते न (ना) ददाति च ॥ ७ ॥ निधानमुर्व्यां कुरुते निधिः सोऽप्येकपूरुषः ॥ राजसेन

१ अस्याध्यायस्य प्रश्नोत्तरादिकं विहायावतरणं कथमिति न ज्ञायते । तेन प्रक्षिप्तत्वं ज्ञायते । अयं विषयो मार्कण्डेयपुराणे ६८ तमाऽध्याये स्पष्टः । स एवार्थः कश्चिदानुपूर्वी भेदेन किंचित्किंचित्त्यागेन चात्रोक्तः ।

मुकुन्देन लक्षितो राज्यसंग्रही ॥ ८ ॥ भुक्तभोगो गायनेभ्यो दद्याद्वेश्यादिकासु च ॥ रजस्तमोमयो नन्दी आधारः स्यात्कुलस्य च ॥ ९ ॥ स्तुतः प्रीतो भवति वै बहुभार्य्या भवन्ति च ॥ पूर्वमित्रेषु शैथिल्यं प्रीतिमन्यैः करोति च ॥ १० ॥ नीलेन चाङ्कितः सत्त्वतेजसा संयुतो भवे१त् ॥ वस्त्र धान्यादिसंग्राही तडागादि करोति च ॥ ११ ॥ त्रिपू( पौ ) रुषो निधिश्चैव आम्रारामादि कारयेत् ॥ एकस्य स्यान्निधिः शङ्खः स्वयं भुङ्क्ते धनादि (न्त)कम् ॥१२॥ कदन्नभुक्परिजनो न च शोभनवस्त्रधृक् ॥ स्वपोषणपरः शंखी दद्यात्परनरे वृथा ॥ १३ ॥ मिश्रावलोकनान्मिश्रस्वभावफलदायिनः ॥ निधीनां रूपमुक्तं तु हरिणापि हरादिके ॥ हरिर्भुवनकोशादि यथोवाच तथा वदे ॥ १४॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नवनिधिवर्णनं नाम त्रिपंचाशत्तमोऽध्यायः॥५३॥ ॥ हरिरुवाच ॥ अग्नीध्रश्चाग्निबाहुश्च वपुष्मान्द्युतिमांस्तथा॥ मेधामेधातिथिर्भव्यः शबलः पुत्र एव च ॥ १ ॥ ज्योतिष्मान्दशमो जातः पुत्रा ह्येते प्रियव्रतात् ॥ मेधाग्निबाहुपुत्रास्तु त्रयो योगपरायणाः ॥ २ ॥ जातिस्मरा महाभागा नैराज्याय मनो दधुः ॥ विभज्य सप्त द्वीपानि सप्तानां प्रददौ नृपः ॥ ३ ॥ योजनानां प्रमाणेन पञ्चाशत्कोटिराप्लुता ॥ जलोपरि मही याता नौरिवास्ते सरिज्जले ॥ ४ ॥ जम्बूप्लक्षाह्वयौ द्वीपौ शाल्मलश्चापरो हर ॥ कुशः क्रौञ्चस्तथा शाकः पुष्करश्चैव सप्तमः ॥ ५ ॥ एते द्वीपाः समुद्रैस्तु सप्त सप्तभिरावृताः ॥ लवणेक्षुसुरासर्पिर्दधिदुग्धजलैः समम् ॥ ६ ॥ द्वीपात्तु द्विगुणो द्वीपः समुद्रश्च वृषध्वज ॥ जम्बूद्वीपे स्थितो मेरुर्ल क्षयोजनविस्तृतः ॥ ७ ॥ चतुरशीतिसाहस्रैर्योजनैरस्य चोच्छ्रयः ॥ प्रविष्टः षोडशाधस्ताद्द्वात्रिंशन्मूर्ध्नि विस्तृतः ॥ ८ ॥ अधः षोडशसाहस्रः कर्णिकाकारसंस्थितः ॥ हिमवान्हेमकूटश्च निषधश्चास्य दक्षिणे ॥ ९ ॥ नीलः श्वेतश्च शृंगी च उत्तरे वर्षपर्वताः ॥ प्लक्षादिषु नरा रुद्र ये वसन्ति सनातनाः ॥ १० ॥ शङ्कराथ न तेष्वस्ति युगावस्था कथञ्चन ॥ जम्बूद्वीपेश्वरात्पुत्रा ह्यग्नीध्रादभवन्नव ॥ ११ ॥ नाभिः किंपुरुषश्चैव हरिवर्षमिलावृतः ॥ रम्यो हिरण्मयाख्यश्च कुरुर्भद्राश्व एव च॥१२॥ केतुमालो नृपस्तेभ्यस्तत्संज्ञान् खण्डकान्ददौ॥नाभेस्तु मेरुदेव्यां तु पुत्रोऽभूदृषभो हर॥१३॥ तत्पुत्रो भरतो नाम शालग्रामे स्थितो व्रती॥सुमतिर्भरतस्याभूत्तत्पुत्रस्तैजसोऽभवत्॥१४॥इन्द्रद्युम्नश्च तत्पुत्रः परमेष्ठी ततः स्मृतः ॥ प्रतीहारश्चतत्पुत्रः प्रतिहर्त्ता तदात्मजः॥१५॥सुतस्तस्मादथो जातः प्रस्तारस्तत्सुतो विभुः॥पृथुश्च तत्सुतो नक्तो नक्तस्यापि गयः स्मृतः ॥१६ ॥ नरो गयस्य तनयस्त



१ न दद्यात्परनरे० । २ तेनोपरि मही या ते नौ० ।

त्पुत्रोऽभूद्विराडगतः ॥ ततो धीमान्महातेजा भौवनस्तस्य चात्मजः॥१७॥त्वष्टा त्वष्टुश्च विरजा रजस्तस्याप्यभूत्सुतः॥शतजिद्रजसस्तस्य विष्वग्ज्योतिः सुतः स्मृतः॥१८॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भुवनकोशवर्णनोपयोगिप्रियव्रतवंशनिरूपणं नाम चतुःपञ्चाशत्तमोऽध्यायः॥५४॥हरिरुवाच॥मध्ये त्विलावृतो वर्षो भद्राश्वः पूर्वतोऽद्भुतः॥पूर्वदक्षिणतो वर्षो हिरण्वान्वृषभध्वज ॥१॥ततः किम्पुरुषो वर्षो मेरोर्दक्षिणतः स्मृतः॥भारतो दक्षिणे प्रोक्तो हरिर्दक्षिणपश्चिमे ॥ २ ॥ पश्चिमे केतुमालश्च रम्यकः पश्चिमोत्तरे॥उत्तरे च कुरोर्वर्षः कल्पवृक्षसमावृतः॥३॥ सिद्धिः स्वाभाविकी रुद्र ! वर्जयित्वा तु भारतम् ॥ इन्द्रद्वीपः कशेरुमांस्ताम्रवर्णो गभस्तिमान् ॥ ४ ॥ नागद्वीपः कटाहश्च सिंहलो वारुणस्तथा ॥ अयं तु नवमस्तेषां द्वीपः सागरसंवृतः ॥ ५ ॥ पूर्वे किरातास्तस्यास्ते पश्चिमे यवनाः स्थिताः ॥ अन्ध्रा दक्षिणतो रुद्र ! तुरुष्कास्त्वपि चोत्तरे ॥६॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चान्तरवासिनः ॥ महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः ॥ ७ ॥ विन्ध्यश्च पारियात्रश्च सप्तात्र कुलपर्वताः ॥ वेदस्मृतिर्नर्मदा च वरदा सुरसा शिवा ॥ ८ ॥ तापी पयोष्णी सरयूः कावेरी गोमती तथा ॥ गोदावरी भीमरथी कृष्णवेणी महानदी ॥ ९ ॥ केतुमाला ताम्रपर्णी चन्द्रभागा सरस्वती ॥ ऋषिकुल्या च कावेरी मत्तगङ्गा पयस्विनी ॥ १० ॥ विदर्भा च शतद्रूश्च नद्यः पापहराः शुभाः ॥ आसां पिबन्ति सलिलं मध्यदेशादयो जनाः ॥ ११ ॥ पाञ्चालाः कुरवो मत्स्या यौधेयाः सपटच्चराः ॥ कुन्तयः शूरसेनाश्च मध्यदेशजनाः स्मृताः ॥ १२ ॥ वृषध्वज ! जनाः पाद्माः सूतमागधचेदयः ॥ काशय ( षाया ) श्च विदेहाश्च पूर्वस्यां कोसलास्तथा ॥ १३ ॥ कलिंगवंगपुण्ड्रांगा वैदर्भा मूलकास्तथा॥ विन्ध्यान्तर्निलया देशाः पूर्वदक्षिणतः स्मृताः ॥ १४ ॥ पुलिन्दाश्मकजीमूतनयराष्ट्रनिवासिनः ॥ कर्णा( र्ना )टकम्बोजघणा दक्षिणापथवासिनः ॥ १५ ॥ अम्बष्ठद्रविडा लाटाः काम्भोजाः स्त्रीमुखाः शकाः ॥ आनर्त्तवासिनश्चैव ज्ञेया दक्षिणपश्चिमे ॥ १६ ॥ स्त्रीराज्याः सैन्धवा म्लेच्छा नास्तिका यवनास्तथा ॥ पश्चिमेन च विज्ञेया माथुरा नैषधैः सह ॥ १७ ॥ माण्डव्याश्च तुषाराश्च मूलिकाश्वमुखाः खशाः ॥ महाकेशा महानासा देशास्तूत्तरपश्चिमे ॥ १८ ॥ लम्ब ( म्पा ) का स्तननागाश्च माद्रगान्धारबाह्लिकाः॥हिमाचलालया म्लेच्छा उदीचीं दिशमाश्रिताः ॥ १९ ॥ त्रिगर्त्तनीलकोलात( भ )ब्रह्मपुत्राः सटङ्कणाः ॥ अभीषाहाः सकाश्मीरा उदक्पर्वेण कीर्त्तिताः ॥ २० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भुवनकोशवर्णनं नाम पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥ हरिरुवाच ॥ सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य च ॥

१ नवराष्ट्रनिवा० । २ कर्णाटाकम्बोजाघाटा० । ३ गान्धारजाह्नदः० ।

ज्येष्ठः शान्तभवो नाम शिशिरस्तदन्तरः ॥ १ ॥ सुखोदयस्तथा नन्दः शिवः क्षेमक एव च ॥ ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा हि ते ॥ २ ॥
गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा ॥ सोमकः सुमनाः शैलो वैभ्राजश्चात्र सप्तमः ॥ ३ ॥ अनुतप्ता शिखी चैव विपाशा त्रिदिवा क्रमुः ॥
अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः ॥ ४ ॥ वपुष्मान्छाल्मलस्येशस्तत्सुता वर्षनामकाः ॥ श्वेतोऽथ हरितश्चैव जीमूतो रोहितस्तथा ॥ ५ ॥
वैद्युतो मानसश्चैव सप्रभश्चापि सप्तमः ॥ कुमुदश्चोन्नतो द्रोणो महिषोऽथ बलाहकः ॥ ६ ॥ क्रौञ्चः ककुद्मान्ह्येते वै गिरयः सरितास्त्विमाः ॥
योनितोया वितृष्णा च चन्द्रा शुक्ला विमोचनी ॥ ७ ॥ विधृतिः सप्तमी तासां स्मृताः पापप्रशान्तिदाः ॥ ज्योतिष्मतः कुशद्वीपे सप्त पुत्राः शृणुष्व
तान् ॥ ८ ॥ उद्भिदो वेणुमांश्चैव द्वैरथो लम्बनो धृतिः ॥ प्रभाकरोऽथ कपिलस्तन्नामा वर्षपद्धतिः ॥ ९ ॥ विद्रुमो हेमशैलश्च द्युतिमान्पुष्पवांस्तथा ॥
कुशेशयो हरिश्चैव सप्तमो मन्दराचलः ॥ १० ॥ धूतपापा शिवा चैव पवित्रा सन्मतिस्तथा ॥ विद्युदभ्रा मही चान्या सर्वपापहरास्त्विमाः ॥ ११ ॥
क्रौञ्चद्वीपे द्युतिमतः पुत्राः सप्त महात्मनः ॥ कुशलो मन्दगश्चोष्णः पीवरोऽथोन्धकारकः ॥ १२ ॥ मुनिश्च दुन्दुभिश्चैव सप्तैते तत्सुता हर ॥
क्रौञ्चश्च वामनश्चैव तृतीयश्चान्ध ( थ ) कारकः ॥ १३ ॥ दिवावृत्पञ्चमश्चान्यो दुन्दुभिः पुण्डरीकवान् ॥ गौरी कुमुद्वती चैव सन्ध्या रात्रिर्मनोजवा
॥ १४ ॥ ख्यातिश्च पुण्डरीका च सप्तैता वर्षनिम्नगाः ॥ शाकद्वीपेश्वराद्भव्यात्सप्त पुत्राः प्रजज्ञिरे ॥ १५ ॥ जलदश्च कुमारश्च सुकुमारोरुणी बकः ॥
कुसुमोदः समोदार्किः सप्तमश्च महाद्रुमः ॥ १६ ॥ सुकुमारी कुमारी च नलिनी धेनुका च या ॥ इक्षुश्च वेणुका चैव गभस्ती सप्तमी तथा ॥ १७ ॥
शबलात्पुष्करेशाच्च महावीरश्च धातकिः ॥ अभूद्वर्षद्वयं चैव मानसोत्तरपर्वतः ॥ १८ ॥ योजनानां सहस्राणि ऊर्ध्वं पञ्चाशदुच्छ्रितः ॥
तावच्चैव च विस्तीर्णः सर्वतः परिमण्डलः ॥ १९ ॥ स्वादूदकेनोदधिना पुष्करः परिवेष्टितः ॥ स्वादूदकस्य पुरतो दृश्यते लोकसंस्थितिः ॥ २० ॥
द्विगुणा काञ्चनी भूमिः सर्वजन्तुविवर्जिता ॥ लोकालोकस्ततः शैलो योजनायुतविस्तृतः ॥ तमसा पर्वतो व्याप्तस्तमोऽप्यण्डकटाहतः ॥ २१ ॥
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भुवनकोशवर्णनं नाम षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥ ॥ हरिरुवाच ॥ सप्ततिस्तु
सहस्राणि भूम्युच्छ्रायोऽपि कथ्यते ॥ दशसाहस्रमेकैकं पातालं वृषभध्वज ॥ १ ॥ अतलं वितलं चैव नितलं च गभस्तिमत् ॥ महाख्यं सुतलं चाग्र्यं
पातालं चापि सप्तमम् ॥२॥ कृष्णा शुक्लारुणा पीता शर्करा शैलकाञ्चना ॥ भूमयस्तत्र दैतेया वसन्ति च भुजङ्गमाः ॥ ३ ॥ रौद्रे तु पुष्करद्वीपे नरकाः

१ कंकः षष्ठः ककुद्मांश्च गिरयः० । २ स्वैरथो लम्बनो० । ३ मारोमशीवकः० । मारोहणीवकः । ४ दार्किर्द्रुमस्तन्नामखण्डकाः ० ।

सन्ति ताञ्छृणु ॥ रौरवः सूकरो रोधस्तालो विनशनस्तथा ॥४॥ महाज्वालस्तप्तकुम्भो लवणोऽथ विमोहितः ॥ रुधिराख्यो वैतरणी कृमिशः कृमिभो
जनः ॥५॥ असिपत्रवनः कृष्णो नानाभक्षश्च दारुणः ॥ तथा पूयवहः पापो वह्निज्वालस्त्वधःशिराः ॥६॥ संदंशः कृष्णसूत्रश्च तमश्चावीचिरेव च ॥
श्वभोजनोऽथाप्रतिष्ठोऽप्यवीचिर्नरकाः स्मृताः ॥ ७ ॥ पापिनस्तेषु पच्यन्ते विषशस्त्राग्निदायिनः ॥ उपर्युपरि वै लोका रुद्र ! भूतादयः स्थिताः ॥८॥
वारिवह्न्यनिलाकाशैर्वृतं भूतादिना च तत् ॥ तदण्डं महता रुद्र ! प्रधानेन च वेष्टितम् ॥ ९ ॥ अण्डं दशगुणं व्याप्तं व्याप्य नारायणः स्थितः ॥१०॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भुवनकोशगतपातालनरकादिनिरूपणं नाम सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

हरिरुवाच ॥ वक्ष्ये प्रमाणसंस्थाने सूर्य्यादीनां शृणुष्व मे॥योजनानां सहस्राणि भास्करस्य रथो नव ॥१॥ ईषादण्डस्तथैवास्य द्विगुणो वृषभध्वज ॥
सार्द्धकोटिस्तथा सप्त नियुतान्यधिकानि च ॥ २ ॥ योजनानां तु तस्याक्षस्तत्र चक्रं प्रतिष्ठितम् ॥ त्रिनाभिमति पञ्चारे षण्णेमिन्यक्षयात्मके ॥ ३ ॥
संवत्सरमये कृत्स्नं कालचक्रं प्रतिष्ठितम् ॥ चत्वारिंशत्सहस्राणि द्वितीयोऽक्षो विवस्वतः ॥ ४ ॥ पञ्चान्यानि तु सार्द्धानि स्यन्दनस्य वृषध्वज ॥
अक्षप्रमाणमुभयोः प्रमाणं तु युगार्द्धयोः ॥ ५ ॥ ह्रस्वोऽक्षस्तद्युगार्द्धेन ध्रुवाधारे रथस्य वै ॥ द्वितीयेऽक्षे तु तच्चक्रं संस्थितं मानसाचले ॥ ६ ॥
गायत्री सबृहत्युष्णिग्जगतीत्रिष्टुबेव च ॥ अनुष्टुप्पङ्क्तिरित्युक्ताश्छन्दांसि हरयो रवेः ॥ ७ ॥ धाता क्रतुस्थला चैव पुलस्त्यो वासुकिस्तथा ॥
रथकृद्ग्रामणीर्हेतिस्तुम्बुरुश्चैत्रमासके ॥ ८ ॥ अर्य्यमा पुलहश्चैव रथौजाः पुञ्जिकस्थला ॥ प्रहेतिः कच्छनीरश्च नारदश्चैव माधवे ॥ ९ ॥
मित्रोऽत्रिस्तक्षको रक्षः पौरुषेयोऽथ मेनका ॥ हाहा रथस्वनश्चैव ज्येष्ठे भानो रथे स्थिताः ॥ १० ॥ वरुणो वसिष्ठो रम्भा सहजन्या हुहूर्बुधः ॥
रथचित्रस्तथा शुक्रो वसन्त्याषाढसंज्ञिते ॥ ११ ॥ इन्द्रो विश्वावसुः स्रोत (श्रोत्र) एलापत्रस्तथाङ्गिराः ॥ प्रम्लोचा च नभस्येते सर्पाश्चार्के तु सन्ति
वै ॥ १२ ॥ विवस्वानुग्रसेनश्च भृगुरापूरणस्तथा ॥ अनुम्लोचाशङ्खपालौ व्याघ्रो भाद्रपदे तथा ॥ १३ ॥ पूषा च सुरुचिर्धाता गौतमोऽथ धनञ्जयः ॥
सुषेणोऽन्यो घृताची च वसन्त्याश्वयुजे रवौ ॥१४॥विश्वावसुर्भरद्वाजः पर्जन्यैरावतौ तदा॥ विश्वाची सेनजिच्चापः ( पि ) कार्तिके चाधिकारिणः॥१५॥
अंशुश्च काश्यपस्तार्क्ष्यो महापद्मस्तथोर्वशी ॥ चित्रसेनस्तथा विद्युन्मार्गशीर्षाधिकारिणः ॥ १६ ॥ क्रतुर्भगस्तथोर्णायुः स्फूर्जः कर्कोटकस्तथा ॥
अरिष्टनेमिश्चैवान्या पूर्वचित्तिर्वरात्सराः ॥ पौषमासे वसन्त्येते सप्त भास्करमण्डले ॥ १७ ॥ त्वष्टाथ जमदग्निश्च कम्बलोऽथ तिलोत्तमा ॥

१ प्रतिष्ठोऽप्यवीचिर्नरकाः०।

ब्रह्मापेतोऽथ ऋतजिद्घृताचीश्च सत्तमः ॥ माघमासे वसन्त्येते सप्त भास्करमण्डले ॥ १८ ॥ विष्णुरश्वतरो रम्भा सूर्य्यवर्चाश्च सत्यजित् ॥
विश्वामित्रस्तथा रक्षो यज्ञापेतो हि फाल्गुने ॥१९॥ सवितुर्मण्डले ब्रह्मन्विष्णुशक्त्युपबृंहिताः ॥ स्तुवन्ति मुनयः सूर्य्यं गन्धर्वैर्गीयते पुरः ॥ २० ॥
नृत्यन्त्योऽप्सरसो यान्ति सूर्य्यस्यानुनिशाचराः ॥ वहन्ति पन्नगा यक्षैः क्रियतेऽभीषुसंग्रहः ॥ २१ ॥ बालखिल्यास्तथैवैनं परिवार्य्य समासते ॥
रथस्त्रिचक्रः सोमस्य कुन्दाभास्तस्य वाजिनः ॥ २२ ॥ वामदक्षिणतो युक्ता दश तेन चरत्यसौ ॥ वार्य ( व्व ) म्भिद्रव्यसम्भूतो रथश्चन्द्रसुतस्य
च ॥ २३ ॥ पिशंगैस्तुरगैर्युक्तः सोऽष्टाभिर्वायुवेगिभिः ॥ सवरूथः सानुकर्षो युक्तो भूमिभवैर्हयैः ॥ २४ ॥ सोपासंगपताकस्तु शुक्रस्यापि रथो
महान् ॥ रथो भूमिसुतस्यापि तप्तकाञ्चनसन्निभः ॥ २५ ॥ अष्टाश्वः कांचनः श्रीमान् भौमस्यापि रथो महान् ॥ २६ ॥ पद्मरागारुणैरश्वैः संयु
क्तो वह्निसंभवैः ॥ अष्टाभिः पाण्डरैर्युक्तैर्वाजिभिः कांचने रथे ॥ २७ ॥ तिष्ठंस्तिष्ठति वर्षे वै राशौराशौ बृहस्पतिः ॥ आकाशसम्भवैरश्वैः शवलैः
स्यन्दनं युतम् ॥ २८ ॥ समारुह्य शनैर्याति मन्दगामी शनैश्चरः ॥ स्वर्भानोस्तुरगा ह्यष्टौ भृङ्गाभा धूसरं रथम् ॥ २९ ॥ सकृद्युक्तास्तु भूतेश
वहन्त्यविरतं शिव ॥ तथा केतुरथस्याश्वा अष्टौ ते वातरंहसः ॥ ३० ॥ पलालधूमवर्णाभा लाक्षारसनिभारुणाः ॥ द्वीपनद्यद्र्युदन्वन्तो भुवनानि
हरेस्तनुः ॥ ३१ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकाण्डे भुवनकोशनिरूपणं नामाष्टपंचाशत्तमोऽध्यायः ॥ ५८ ॥
( अथ ज्योतिःशास्त्रम ) ॥ सूत उवाच ॥ ज्योतिश्चक्रं भुवो मानमुक्त्वा प्रोवाच केशवः ॥ चतुर्लक्षं ज्योतिषस्य सारं रुद्राय सर्वदः ॥ १ ॥
हरिरुवाच ॥ कृत्तिकास्त्वग्निदेवत्या रोहिण्यो ब्रह्मणः स्मृताः ॥ इल्वलाः सोमदेवत्या रौद्रं चार्द्रमुदाहृतम् ॥ २ ॥ पुनर्वसुस्तथादित्यास्तिष्यश्च गुरु
दैवतः ॥ अश्लेषाः सर्पदेवत्या मघाश्च पितृदेवताः ॥ ३ ॥ भाग्याश्च पूर्वफल्गुन्य अर्य्यमा च तथोत्तरः ॥ सावित्रश्च तथा हस्ता चित्रा त्वष्ट्रा
प्रकीर्त्तितः ॥ ४ ॥ स्वाती च वायुदेवत्या नक्षत्रं परिकीर्त्तितम् ॥ इन्द्राग्निदेवता प्रोक्ता विशाखा वृषभध्वज ॥ ५ ॥ मैत्रमृक्षमनूराधा ज्येष्ठा शाक्रं
प्रकीर्त्तितम् ॥ तथा निर्ऋतिदेवत्यो मूलस्तज्ज्ञैरुदाहृतः ॥ ६ ॥ आप्यास्त्वाषाढपूर्वास्तु उत्तरा वैश्वदेवताः ॥ ब्राह्मश्चैवाभिजित्प्रोक्तः श्रवणा वैष्णवः
स्मृतः ॥ ७ ॥ वासवस्तु तथा ऋक्षं धनिष्ठा प्रोच्यते बुधैः ॥ तथा शतभिषा प्रोक्तं नक्षत्रं वारुणं शिव ॥ ८ ॥ आजं भाद्रपदा पूर्वा अहिर्बुध्न्यस्त
थोत्तरा ॥ पौष्णं च रेवती ऋक्षमश्वयुक्चाश्वदैवतम् ॥ ९ ॥ भरण्यृक्षं तथा याम्यं प्रोक्तास्ते ऋक्षदेवताः ॥ ब्रह्माणी संस्थिता पूर्वे प्रतिपन्नवमी
तिथौ ॥ १० ॥ माहेश्वरी चोत्तरे च द्वितीया दशमीतिथौ ॥ पञ्चम्यां च त्रयोदश्यां वाराही दक्षिणे स्थिता ॥ ११ ॥ षष्ठ्यां चैव चतुर्दश्यामि

न्द्राणी पश्चिमे स्थिता ॥ सप्तम्यां पौर्णमास्यां च चामुण्डा वायुगोचरे ॥ १२ ॥ अष्टम्यमावास्ययोगे महालक्ष्मीशगोचरे ॥ एकादश्यां तृतीयायामग्निकोणे तु वैष्णवी ॥ १३ ॥ द्वादश्यां च चतुर्थ्यां तु कौमारी नैर्ऋते तथा ॥ योगिनीसम्मुखेनैव गमनादि न कारयेत् ॥ १४ ॥ अश्विनीमैत्ररेवत्यो मृगमूलपुनर्वसु ॥ पुष्या हस्ता तथा ज्येष्ठा प्रस्थाने श्रेष्ठमुच्यते ॥ १५ ॥ हस्तादिपंचऋक्षाणि उत्तरात्रयमेव च ॥ अश्विनी रोहिणी पुष्या धनिष्ठा च पुनर्वसू ॥ १६ ॥ वस्त्रप्रावरणे श्रेष्ठो नक्षत्राणां गणः स्मृतः ॥ कृत्तिका भरण्यश्लेषा मघा मूलविशाखयोः ॥ १७ ॥ त्रीणि पूर्वा तथा चैव अधोवक्त्राः प्रकीर्त्तिताः ? ॥ एषु वापीतडागादिकूपभूमितृणानि च ॥ १८ ॥ देवागारस्य खननं निधानखननं तथा ॥ गणितं ज्योतिषारम्भं खनिबिलप्रवेशनम् ॥ १९ ॥ कुर्य्यादधोगतान्येव अन्यानि च वृषध्वज ॥ रेवती चाश्विनी चित्रा स्वाती हस्ता पुनर्वसू ॥ २० ॥ अनुराधा मृगो ज्येष्ठा एते पार्श्वमुखाः स्मृताः ॥ गजोष्ट्राश्वबलीवर्ददमनं महिषस्य च ॥ २१ ॥ बीजानां वपनं कुर्य्याद्गमनागमनादिकम् ॥ चक्रयन्त्ररथानां च नावादीनां प्रवाहणम् ॥२२॥ पार्श्वेषु यानि कर्माणि कुर्य्यादेतेषु तान्यपि ॥ रोहिण्यार्द्रा तथा पुष्या धनिष्ठा चोत्तरात्रयम् ॥ २३ ॥ वारुणं श्रवणं चैव नव चोर्ध्वमुखाः स्मृताः ॥ एषु राज्याभिषेकं च पट्टबन्धं च कारयेत् ॥ २४ ॥ ऊर्ध्वमुख्यान्युच्छ्रितानि सर्वाण्येतेषु कारयेत् ॥ चतुर्थी चाशुभा षष्ठी अष्टमी नवमी तथा ॥ २५ ॥ अमावास्या पूर्णिमा च द्वादशी च चतुर्दशी ॥ अशुक्ला प्रतिपच्छ्रेष्ठा द्वितीया चन्द्रसूनुना ॥ २६ ॥ तृतीया भूमिपुत्रेण चतुर्थी च शनैश्चरे ॥ गुरौ शुभा पंचमी स्यात्षष्ठीमङ्गलशुक्रयोः ॥ २७ ॥ सप्तमी सोमपुत्रेण अष्टमी कुजभास्करौ ॥ नवमी चन्द्रवा ( सौ ) रेण दशमी तु गुरौ शुभा ॥ २८ ॥ एकादश्या गुरुशुक्रौ द्वादश्यां च पुनर्बुधः ॥ त्रयोदशी शुक्रभौमौ शनौ श्रेष्ठा चतुर्दशी ॥ २९ ॥ पौर्णमास्यप्यमावास्या श्रेष्ठा स्याच्च बृहस्पतौ ॥ द्वादशीं दहते भानुः शशी चैकादशीं दहेत् ॥ ३० ॥ कुजो दहेच्च दशमीं नवमीं च बुधो दहेत् ॥ अष्टमीं दहते जीवः सप्तमीं भार्गवो दहेत ॥ ३१ ॥ सूर्य्यपुत्रो दहेत्षष्ठीं गमनाद्यासु नास्ति वै ॥ प्रतिपन्नवमीष्वेव चतुर्दश्यष्टमीषु च ॥ ३२ ॥ बुधवारेण प्रस्थानं दूरतः परिवर्जयेत् ॥ मेषे कर्कटके षष्ठी कन्यायां मिथुनेऽष्टमी ॥ ३३ ॥ वृषे कुम्भे चतुर्थी च द्वादशी मकरे तुले ॥ दशमी वृश्चिके सिंहे धनुर्मीने चतुर्दशी ॥ ३४ ॥ एता दग्धा न गन्तव्यं पीडादिः किल मानवैः ॥ विशाखात्रयमादित्ये पूर्वाषाढात्रये शशी ॥ ३५ ॥ धनिष्ठात्रितयं भौमे बुधे वै रेवतीत्रयम् ॥ रोहिण्यादित्रयं जीवे शुक्रे पुष्यात्रयं शिव ॥ ३६ ॥ शनिवारे वर्जयेच्च उत्तराफल्गु

१ दश्यां गुरुः शुक्रो० ।

नीत्रयम् ॥ एषु योगेषु चोत्पातमृत्युरोगादिकं भवेत् ॥ ३७ ॥ मूलेऽर्कः श्रवणे चन्द्रः प्रोष्ठपद्युत्तरे कुजः ॥ कृत्तिकासु बुधश्चैव गुरौ रुद्र पुनर्वसुः ॥ ३८ ॥ पूर्वफल्गुनी शुक्रे च स्वातिश्चैव शनैश्चरे ॥ एते चामृतयोगाः स्युः सर्वकार्य्यप्रसाधकाः ॥ ३९ ॥ कालं प्रवक्ष्यामि ? शक्तिदा ? नेष्टमं द ? ॥ शेषे पर्वादिस्तु ज्ञेयः कालः कालविशारदैः॥४०॥एकीकृत्याक्षरान्मात्रं नाम्नोः स्त्रीपुंसयोस्त्रिभिः॥भागे द्विशेषे स्त्रीनाशः पुंसः स्यादेकशून्ययोः ॥ ४१ ॥ विष्कम्भे घटिकाः पंच शूले सप्त प्रकीर्तिताः ॥ गण्डे चातिगण्डे च नव व्याघातवज्रयोः ॥४२॥ व्यतीपाते च परिघे वैधृते च दिनेदिने ॥ एते मृत्युयुता ह्येषु सर्वकर्माणि वर्जयेत् ॥ ४३ ॥ हस्तेऽर्कश्च गुरुः पुष्ये अनुराधा बुधे शुभा ॥ रोहिणी च शनौ श्रेष्ठा सौमं सोमेन वै शुभम् ॥४४॥ शुक्रे च रेवती श्रेष्ठा अश्विनी मंगले शुभा ॥ एतेषु सिद्धियोगा वै सर्वदोषविनाशनाः ॥ ४५ ॥ भार्गवे भरणी चैव सोमे चित्रा वृषध्वज ! ॥ भौमे चै वोत्तराषाढा धनिष्ठा च बुधे हर ! ॥ ४६ ॥ गुरौ शतभिषा रुद्र ! शुक्रे वै रोहिणी तथा ॥ शनौ च रेवती शम्भो ! विषयोगाः प्रकीर्त्तिताः ॥ ४७ ॥ पुष्यः पुनर्वसुश्चैव रेवती चित्रया सह ॥ श्रवणं च धनिष्ठा च हस्ताश्विनीमृगास्तथा ॥ ४८ ॥ कुर्य्याच्छतभिषायां च जातकर्मादि मानवः ॥ विशाखा चोत्तरात्रीणि मघार्द्रा भरणी तथा ॥ आश्लेषा कृत्तिका रुद्र ! प्रस्थाने मरणप्रदाः ॥ ४९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिःशास्त्रे नक्षत्रतद्दैवतादग्धयोगादिनिरूपणं नामैकोनषष्टितमोऽध्यायः ॥ ५९ ॥ हरिरुवाच ॥ षडादित्ये दशा ज्ञेया सोमे पञ्चदश स्मृताः ॥ अष्टावंगारके चैव बुधे सप्तदश स्मृताः ॥ १ ॥ शनैश्चरे दश ज्ञेया गुरोरेकोनविंशतिः ॥ राहोर्द्वादशवर्षाणि एकविंशतिर्भार्गवे ॥ २ ॥ रवेर्दशा दुःखदा स्यादुद्वेगनृपनाशकृत् ॥ विभूतिदा सोमदशा सुखमिष्टान्नदा तथा ॥ ३ ॥ दुःखप्रदा कुजदशा राज्यादेः स्याद्विनाशिनी ॥ दिव्यस्त्रीदा बुधदशा राज्यदा कोशवृद्धिदा ॥ ४ ॥ शनेर्दशा राज्यनाशबन्धुदुःखकरी भवेत् ॥ गुरोर्दशा राज्यदा स्यात्सुखधर्मादिदायिनी ॥ ५ ॥ राहोर्दशा राज्यनाशव्याधिदा दुःखदा भवेत् ॥ हस्त्यश्वदा शुक्रदशा राज्यस्त्रीलाभदा भवेत् ॥ ६ ॥ मेष अंगारकक्षेत्रं वृषः शुक्रस्य कीर्त्तितः ॥ मिथुनस्य बुधो ज्ञेयः सोमः कर्कटकस्य च ॥ ७ ॥ सूर्य्यक्षेत्रं भवेत्सिंहः कन्या क्षेत्रं बुधस्य च ॥ भार्गवस्य तुला क्षेत्रं वृश्चिकोंगारकस्य च ॥ ८ ॥ धनुः सुरगुरोश्चैव शनेर्मकरकुम्भकौ ॥ मीनः सुरगुरोश्चैव ग्रहक्षेत्रं प्रकीर्त्तितम् ॥ ९ ॥ पौर्णमास्याद्वयं तत्र पूर्वाषाढाद्वयं भवेत् ॥ द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे ॥ १० ॥ अश्विनी रेवती चित्रा धनिष्ठा स्यादलङ्कृतौ ॥ मृगाहिकपिमार्जारश्वानः सूकरपक्षिणः ॥ ११ ॥ नकुलो मूषकश्चैव यात्रायां दक्षिणे शुभः ॥ विप्रकन्या शिवा एषां शङ्खभेरीवसुन्धराः ॥ १२ ॥ वेणुस्त्रीपूर्णकुम्भाश्च यात्रायां दर्शनं शुभम् ॥ जम्बूकोष्ट्रखराद्याश्च यात्रायां

वामके शुभाः ॥ १३ ॥ कार्पासौषधितैलं च पक्काङ्गारभुजङ्गमाः ॥ मुक्तकेशी रक्तमाल्यनग्नाद्यशुभमीक्षितम ॥ १४ ॥ हिक्काय लक्षणं वक्ष्ये लर्भ
त्पूर्वे महाफलम् ॥ आग्नेये शोकसन्तापौ दक्षिणे हानिमाप्नुयात् ॥ १५ ॥ नैर्ऋत्ये शोकसन्तापौ मिष्टान्नं चैव पश्चिमे ॥ अर्थं प्राप्नोति वायव्ये उत्तरे कलहो
भवेत ॥१६॥ ईशाने मरणं प्रोक्तं हिक्कायाश्च फलाफलम् ॥ विलिख्य रविचक्रं तु भास्करो नरसन्निभः ॥ १७ ॥ यस्मिनृक्षे वसेद्भानुस्तदादि त्रीणि मस्तके॥
त्रयं वक्त्रे प्रदातव्यमेकैकं स्कन्धयोर्न्यसेत् ॥ १८ ॥ एकैकं बाहुयुग्मे तु एकैकं हस्तयोर्द्वयोः ॥ हृदये पञ्च ऋक्षाणि एकं नाभौ प्रदापयेत ॥ १९ ॥
ऋक्षमेकं न्यसेद्गुह्ये एकैकं जानुके न्यसेत् ॥ नक्षत्राणि च शेषाणि रविपादे नियोजयेत् ॥ २० ॥ चरणस्थेन ऋक्षेण अल्पायुर्जायते नरः ॥
विदेशगमनं जानौ गुह्यस्थे परदारवान् ॥ २१ ॥ नाभिस्थेनाल्पसन्तुष्टो हृत्स्थेन स्यान्महेश्वरः ॥ पाणिस्थेन भवेच्चौरः स्थानभ्रष्टो भवेद्भुजे ॥ २२ ॥
स्कन्धस्थिते धनपतिर्मुखे मिष्टान्नमाप्नुयात् ॥ मस्तके पट्टवस्त्रं स्यान्नक्षत्रं यदि स्थितम् ॥ २३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये
आचारकाण्डे ज्योतिःशास्त्रे ग्रहदशादिनिरूपणं नाम षष्टितमोऽध्यायः ॥६०॥ हरिरुवाच ॥सप्तमोपचयाद्यस्थश्चन्द्रः सर्वत्र शोभनः॥शुक्लपक्षे द्विती
यस्तु पंचमो नवमस्तथा ॥ १ ॥ संपूज्यमानो लोकैस्तु गुरुवद्दृश्यते शशी ॥ चन्द्रस्य द्वादशावस्था भवन्ति शृणु ता अपि ॥ २ ॥ त्रि त्रि च
ऋक्षेषु आश्विन्यादि वदाम्यहम् ॥ प्रवासस्थं पुनर्नष्टं मृतावस्थं जयावहम् ॥ ३ ॥ हास्यावस्थं नता( क्रीडा )वस्थं प्रमोदावस्थमेव च ॥
विषादावस्थभोगस्थे ज्वरावस्थं व्यवस्थितम् ॥ ४ ॥ कम्पा( न्या )वस्थं सुखावस्थं द्वादशावस्थगं भवेत् ॥ प्रवासो हानिमृत्यू च जयो हासो
रतिः सुखम् ॥ ५ ॥ शोको भोगो ज्वरः कम्पः सुखं चेति क्रमात्फलम् ॥ जन्मस्थः कुरुते तुष्टिं द्वितीये नास्ति निर्वृतिः ॥ ६ ॥ तृतीये राजसन्मानं
चतुर्थे कलहागमः ॥ पञ्चमेन मृगांकेन स्त्रीलाभो वै तथा भवेत् ॥ ७ ॥ धनधान्यागमः षष्ठे रतिः पूजा च सप्तमे ॥ अष्टमे प्राणसन्देहो नवमे
कोशसञ्चयः ॥ ८ ॥ दशमे कार्य्यनिष्पत्तिर्ध्रुवमेकादशे जयः ॥ द्वादशेन शशांकेन मृत्युरेव न संशयः ॥ ९ ॥ कृत्तिकादौ च पूर्वेण सप्तर्क्षाणि च वै
व्रजेत् ॥ मघादौ दक्षिणे गच्छेदनुराधादि पश्चिमे ॥ १० ॥ प्रशस्ता चोत्तरे यात्रा धनिष्ठादिषु सप्तसु ॥ अश्विनी रेवती चित्रा धनिष्ठा समलंकृतौ
॥ ११ ॥ मृगाश्विचित्रापुष्याश्च मूला हस्ता शुभाः सदा ॥ कन्याप्रदाने यात्रायां प्रतिष्ठादिषु कर्मसु ॥ १२ ॥ शुक्रचन्द्रौ हि जन्मस्थौ शुभदो च
द्वितीयके ॥ शशिज्ञशुक्रजीवाश्च राशौ चाथ तृतीयके ॥ १३ ॥ भौममन्दशशांकार्का बुधः श्रेष्ठश्चतुर्थके ॥ शुक्रजीवौ पञ्चमे च चन्द्रकेतुसमाहितौ
॥ १४ ॥ मन्दार्कौ च कुजः षष्ठे गुरुचन्द्रौ च सप्तमे ॥ ज्ञशुक्रावष्टमे श्रेष्ठौ नवमस्थो गुरुः शुभः ॥ १५ ॥ अर्कार्किचन्द्रा दशमे ग्रहा एकादशे

खिलाः ॥ बुधोऽथ द्वादशे चैव भार्गवः सुखदो भवेत् ॥ १६ ॥ सिंहेन मकरः श्रेष्ठः कन्यया मेष उत्तमः ॥ तुलया सह मीनस्तु कुम्भेन सह कर्कटः ॥ १७ ॥ धनुषा वृषभः श्रेष्ठो मिथुनेन च वृश्चिकः ॥ एतत्षडष्टकं ? प्रीत्यै भवत्येव न संशयः ॥ १८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिःशास्त्रे ग्रहाणां शुभाशुभस्थानादिनिरूपणं नामैकषष्टितमोऽध्यायः ॥ ६१ ॥

हरिरुवाच ॥ उदयात्तु समारभ्य राशौ भानुः स्थितो हर ॥ स्वराश्याद्यैर्व्रजेदह्नि षड्भिःषडभिस्तथा निशि ॥ १ ॥ मीने मेषे च पञ्च स्युश्चतस्रो वृषकुम्भयोः ॥ मकरे मिथुने तिस्रः पंच चापे च कर्कटे ॥ २ ॥ सिंहे च वृश्चिके षट् च सप्त कन्यातुले तथा॥एता लग्नप्रमाणेन घटिकाः परिकीर्त्तिताः ॥ ३ ॥ रसपूर्वावसानेषु रसाब्धिप्वरिसागराः ॥ लङ्कोदया हि तद्वत्त लग्ना मेषादयोऽथ वा ॥४॥ मेषलग्ने भवेद्वन्ध्या वृषे भवति कामिनी ॥ मिथुने सुभगा कन्या वेश्या भवति कर्कटे ॥ ५ ॥ सिंहे चैवाल्पपुत्रा च कन्यायां रूपसंयुता ॥ तुलायां रूपमैश्वर्य्यं वृश्चिके कर्कशा भवेत् ॥६॥ सौभाग्यं धनुषि स्याच्च मकरे नीचगामिनी ॥ कुम्भे चैवाल्पपुत्रा स्यान्मीने वैराग्यसंयुता ॥ ७ ॥ तुला कर्कटको मेषो मकरश्चैव राशयः ॥ चरकार्य्याणि कुर्य्याच्च स्थिरकार्य्याणि चैव हि ॥ ८ ॥ पञ्चाननो वृषः कुम्भो वृश्चिकः स्युः स्थिराणि हि ॥ कन्या धनुश्च मीनश्च मिथुनं द्विस्वभावतः ॥ ९ ॥ द्विस्वभावानि कर्माणि कुर्य्यादेषु विचक्षणः ॥ यात्रा चरेण कर्त्तव्या प्रवेष्टव्यं स्थिरेण तु ॥ १० ॥ देवस्थापनवैवाह्यं द्विस्वभावेन कारयेत् ॥ प्रतिपच्चाथ षष्ठी च नन्दा चैकादशी स्मृता ॥ ११ ॥ द्वितीया सप्तमी भद्रा द्वादशी वृषभध्वज ॥ जयाष्टमी तृतीया च स्मृता रुद्र त्रयोदशी ॥१२॥ चतुर्थी नवमी रिक्ता सा वर्ज्याथ चतुर्दशी ॥ पञ्चमी दशमी पूर्णा पूर्णिमा च शुभाः स्मृताः ॥ १३ ॥ चरः सौम्यो गुरुः क्षिप्रो मृदुः शुक्रो रविर्ध्रुवः॥ शनिश्च दारुणो ज्ञेयो भौम उग्रः शशी समः ॥ १४ ॥ चरक्षिप्रैः प्रयातव्यं प्रवेष्टव्यं मृदुध्रुवैः ॥ दारुणोग्रैश्च योद्धव्यं क्षत्रियैर्जयकांक्षिभिः ॥ १५ ॥ नृपाभिषेकोऽग्निकार्य्यं सोमवारे प्रशस्यते ॥ सोमे तु लेपमानं च कुर्य्याच्चैव गृहादिकम् ॥ १६ ॥ सैनापत्यं शौर्य्ययुद्धं शस्त्राभ्यासः कुजे स्मृतः ॥ सिद्धिकार्य्यं च मन्त्रश्च यात्रा चैव बुधे स्मृता ॥ १७ ॥ पठनं देवपूजा च वस्त्राद्याभरणं गुरौ ॥ कन्यादानं गजारोहः शुक्रे स्यात्समयः स्त्रियाः ॥१८॥ स्थाप्यं गृहप्रवेशश्च गजबन्धः शनौ शुभः ॥ १९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिःशास्त्रे लग्नघटिका प्रमाणादिनिरूपणं नाम द्विषष्टितमोऽध्यायः ॥ ६२ ॥

॥ हरिरुवाच ॥ नरस्त्रीलक्षणं वक्ष्ये संक्षेपाच्छृणु शंकर ॥ अस्वेदिनौ मृदुतलौ कमलोदरस

१ ल (न) कोदयादि (हि) हैवा (व) स्तुलम (ग्रा) मेषा० । २ सोमेतुलेप्रमाणंच० ।

न्निभौ ॥ १ ॥ स्निग्धांगुली ताम्रनखौ सुगुल्फौ शिरयोज्झितौ ॥ कूर्मोन्नतौ च चरणौ स्यातां नृपवरस्य हि ॥ २ ॥ विरूक्षपाण्डुरनखौ वक्रौ चैव शिरानतौ ॥ शूर्पाकारौ च चरणौ संशुष्कौ विरलांगुली ॥ ३ ॥ दुःखदारिद्र्यदौ स्यातां नात्र कार्य्या विचारणा ॥ अल्परोमयुता श्रेष्ठा जंघा हस्तिकरोपमा ॥ ४ ॥ रोमैकैकं कूपके स्याद्भूपानां तु महात्मनाम् ॥ द्वेद्वे रोम्णी पण्डितानां श्रोत्रियाणां तथैव च ॥ ५ ॥ रोमत्रयं दरिद्राणां रोगी निर्मांसजानुकः ॥ अल्पलिङ्गी च धनवान्स्याच्च पुत्रादिवर्जितः ॥ ६ ॥ स्थूललिंगो दरिद्रः स्याद्दुस्थ्येकवृषणी भवेत् ॥ विषमे स्त्रीचञ्चलो वै नृपः स्याद्वृषणे समे ॥ ७ ॥ प्रलम्बवृषणोऽल्पायुर्निर्द्रव्यः कुमणिर्भवेत् ॥ पाण्डुरैर्मलिनैश्चैव मणिभिश्च सुखी नरः ॥ ८ ॥ निःस्वाः सशब्दमूत्राः स्युर्नृपा निश्शब्दधारया ॥ भोगाढ्याः समजठरा निःस्वाः स्युर्घटसन्निभाः ॥ ९ ॥ सर्पोदरा दरिद्राः स्यू रेखाभिश्चायुरुच्यते ॥ ललाटे यस्य दृश्यन्ते तिस्रो रेखाः समाहिताः ॥ १० ॥ सुखी पुत्रसमायुक्तः स षष्टिं जीवते नरः ॥ चत्वारिंशच्च वर्षाणि द्विरेखादर्शनान्नरः ॥ ११ ॥ विंशत्य ब्दं त्वेकरेखा आकर्णान्ताः शतायुषः ॥ १२ ॥ सप्तत्यायुर्द्विरेखा तु षष्ट्यायुस्तिसृभिर्भवेत् ॥ व्यक्ताव्यक्ताभी रेखाभिर्विंशत्यायुर्भवेन्नरः ॥ १३ ॥ चत्वारिंशच्च वर्षाणि हीनरेखस्तु जीवति ॥ भिन्नाभिश्चैव रेखाभिरपमृत्युर्नरस्य हि ॥ १४ ॥ त्रिशूलं पट्टिशं वापि ललाटे यस्य दृश्यते ॥ धनपुत्र समायुक्तः स जीवेच्छरदः शतम् ॥ १५ ॥ तर्जन्या मध्यमांगुल्या आयूरेखा तु मध्यतः ॥ संप्राप्ता या भवेद्रुद्र ! स जीवेच्छरदः शतम् ॥ १६ ॥ प्रथमा ज्ञानरेखा तु ह्यंगुष्ठादनुवर्त्तते ॥ मध्यमामूलगा रेखा आयूरेखा अतः परम् ॥ १७ ॥ कनिष्ठिकां समाश्रित्य आयूरेखा समाविशेत् ॥ अच्छि न्ना वा विभक्ता वा स जीवेच्छरदः शतम् ॥ १८ ॥ यस्य पाणितले रेखा आयुस्तस्य प्रकाशयेत् ॥ शतवर्षाणि जीवेच्च भोगी रुद्र ! न संशयः ॥ १९ ॥ कनिष्ठिकां समाश्रित्य मध्यमायामुपागता ॥ षष्टिवर्षायुषं कुर्य्यादायूरेखा तु मानवम् ॥ २० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिःशास्त्रे सामुद्रिके पुंल्लक्षणनिरूपणं नाम त्रिषष्टितमोऽध्यायः ॥ ६३ ॥ हरिरुवाच ॥ यस्यास्तु कुञ्चिताः केशा मुखं च परिम ण्डलम् ॥ नाभिश्च दक्षिणावर्त्ता सा कन्या कुलवर्धिनी ॥ १ ॥ या च काञ्चनवर्णाभा रक्तहस्तसरोरुहा ॥ सहस्राणां तु नारीणां भवेत्सापि पतिव्रता ॥ २ ॥ वक्रकेशा च या कन्या मण्डलाक्षी च या भवेत् ॥ भर्त्ता च म्रियते तस्या नियतं दुःखभागिनी ॥ ३ ॥ पूर्णचन्द्रमुखी कन्या बालसूर्य्यसमप्र भा ॥ विशालनेत्रा बिम्बोष्ठी सा कन्या लभते सुखम् ॥ ४ ॥ रेखाभिर्बहुभिः क्लेशं स्वल्पाभिर्धनहीनता ॥ रक्ताभिः सुखमाप्नोति कृष्णाभिः प्रेष्यतां

१ निर्द्रव्यो मणिभिर्भ० । २ न्तागतायु० ।

व्रजेत् ॥ ५ ॥ कार्य्ये च मन्त्री सत्स्त्री स्यात्सती ( खी ) स्यात्करणेषु च ॥ स्नेहेषु भार्य्या माता स्याद्वेश्या च शयने शुभा ॥ ६ ॥ अंकुशं कुण्डलं चक्रं यस्याः पाणितले भवेत॥पुत्रं प्रसूयते नारी नरेन्द्रं लभते पतिम् ॥ ७॥ यस्यास्तु रोमशौ पार्श्वौ रोमशौ च पयोधरौ ॥ उन्नतौ चाधरोष्ठौ च क्षिप्रं मारयते पतिम्॥८॥यस्याः पाणितले रेखा प्राकारस्तोरणं भवेत्॥अपि दासकुले जाता राज्ञीत्वमुपगच्छति॥९॥उद्वृत्ता कपिला यस्या रोमराजी निरन्तरम् ॥ अपि राजकुले जाता दासीत्वमुपगच्छति ॥ १० ॥ यस्या अनामिकाङ्गुष्ठौ पृथिव्यां नैव तिष्ठतः॥पतिं मारयते क्षिप्रं स्वेच्छाचारेण वर्त्तते ॥ ११ ॥ यस्या गमनमात्रेण भूमिकम्पः प्रजायते ॥ पतिं मारयते क्षिप्रं स्वेच्छाचारेण वर्त्तते ॥ १२ ॥ चक्षुःस्नेहेन सौभाग्यं दन्तस्नेहेन भोजनम् ॥ त्वचः स्नेहेन शय्यां च पादस्नेहेन वाहनम् ॥१३ ॥ स्निग्धोन्नतौ ताम्रनखौ नार्याश्च चरणौ शुभौ ॥ मत्स्याङ्कुशाब्जाचिह्नौ च चक्रलाङ्गललक्षितौ॥१४॥ अस्वेदिनौ मृदुतलौ प्रशस्तौ चरणौ स्त्रियाः ॥ शुभे जंघे विरोमे च ऊरू हस्तिकरोपमौ ॥ १५ ॥ अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमम् ॥ नाभिः प्रशस्ता गम्भीरा दक्षिणावर्त्तिका शुभा ॥ अरोमा त्रिवली नार्य्या हृत्स्तनौ रोमवर्जितौ ॥ १६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिःशास्त्रे सामुद्रिके स्त्रीलक्षणनिरूपणं नाम चतुःषष्टितमोऽध्यायः ॥ ६४ ॥ हरिरुवाच ॥ समुद्रोक्तं प्रवक्ष्यामि नरस्त्रीलक्षणं शुभम् ॥ येन विज्ञातमात्रेण अतीतानागतप्रमा ॥ १ ॥ अस्वेदिनौ मृदुतलौ कमलोदरसन्निभौ ॥ श्लिष्टाङ्गुली ताम्रनखौ पादावुष्णौ शिरोज्झितौ ॥ २ ॥ कूर्मोन्नतौ गूढगुल्फौ सुपार्ष्णी नृपतेः स्मृतौ ॥ शू ( स ) र्पाकारौ विरूक्षौ च वक्रौ पादौ शिरालकौ ॥ ३ ॥ संशुष्कौ पाण्डुरनखौ निःस्वस्य विरलाङ्गुली ॥ मार्गायोत्कंटकौ पादौ कषायसदृशौ तथा ॥ ४ ॥ विच्छित्तिदौ च वंशस्य ब्रह्मघ्नौ शङ्कु ( पक्व ) सन्निभौ ॥ अगम्यागमने प्रीतौ जंघा विरलरोमिका ॥ ५ ॥ मृदुरोमा समा जंघा तथा करिकरप्रभा ॥ ऊरवो जानवस्तुल्या नृपस्योपचिताः स्मृताः ॥ ६ ॥ निःस्वस्य सृगालजंघा रोमैकैकं च कूपके ॥ नृपाणां श्रोत्रियाणां च द्वेद्वे श्रिये च धीमताम् ॥ ७ ॥ त्र्याद्यैर्निःस्वा मानवाः स्युर्दुःखभाजश्च निन्दिताः॥केशाश्च वै कुञ्चिताश्च प्रवासे म्रियते नरः ॥ ८ ॥ निर्मांसजानुः सौभाग्यमल्पैर्निम्नै रतिः स्त्रियाः ॥ विकटैश्च दरिद्राः स्युः समांसै राज्यमेव च ॥९॥ महद्भिरायुराख्यातं ह्यल्पलिङ्गो धनी नरः ॥ अपत्यरहितश्चैव स्थूललिङ्गो धनोज्झितः ॥ १० ॥ मेढ्रे वामनते चैव सुतार्थरहितो भवेत ॥ वक्रेऽन्यथा पुत्रवान्स्याद्दारिद्र्यं विनते त्वधः ॥ ११ ॥ अल्पे त्वतनयो लिङ्गे शिरालेऽथ सुखी नरः ॥ स्थूलग्रन्थियुते लिंगे भवेत्पुत्रादिसंयुतः ॥ १२ ॥ कोशगूढे नृपो दीर्घैर्भुग्नैश्च धनव

१ अग्रिमोध्यायोस्मादध्यायात्प्रागेकस्मिन्पुस्तके पठ्यते । २ प्रसादेम्रियते० ।

जितः ॥ बलवान्युद्धशीलश्च लघुशेफः स एव च ॥ १३ ॥ दुर्बलस्त्वेकवृषणो विषमाभ्यां चलः स्त्रियाम् ॥ समाभ्यां क्षितिपः प्रोक्तः प्रलम्बेन शताब्दवान् ॥ १४ ॥ उद्दृ ( द्ध ) ताभ्यां च बह्वायू रूक्षैर्मणिभिरीश्वरः ॥ पाण्डरैर्मणिभिर्निःस्वा मलिनैः सुखभागिनः ॥ १५ ॥ सशब्दनिःशब्दमूत्राः स्युर्दरिद्राश्च मानवाः ॥ एकद्वित्रिचतुःपञ्चषड्भिर्धाराभिरेव च ॥ १६ ॥ दक्षिणावर्तवलितमूत्राभिश्च नृपाः स्मृताः ॥ विकीर्णमूत्रा निःस्वाश्च प्रधानसुखदायिकाः ॥ १७ ॥ एकधाराश्च वनिताः स्निग्धैर्मणिभिरुन्नतैः ॥ समैः स्त्रीरत्नधनिनो मध्ये निम्नैश्च कन्यकाः ॥ १८ ॥ शुष्कैर्निस्वा विशुष्कैश्च दुर्भगाः परिकीर्तिताः ॥ पुष्पगन्धे नृपाः शुक्रे मधुगन्धे धनं बहु ॥ १९ ॥ पुत्राः शुक्रे मत्स्यगन्धे तनुशुक्रे च कन्यकाः ॥ महाभोगी मांसगन्धे यज्वा स्यान्मदगन्धिनि ॥ २० ॥ दरिद्रः क्षारगन्धे च दीर्घायुः शीघ्रमैथुनी ॥ अशीघ्रमैथुन्यल्पायुः स्थूलस्फिक् स्याद्धनोज्झितः ॥ २१ ॥ मांसलस्फिक् सुखी स्याच्च सिंहस्फिक् भूपतिः स्मृतः ॥ भवेत्सिंहकटी राजा निःस्वः कपिकटिर्नरः ॥ २२ ॥ सर्पोदरा दरिद्राः स्युः पिठरैश्च घटैः समैः ॥ धनिनो विपुलैः पार्श्वैर्निःस्वा रक्तैश्च निम्नगैः ॥ २३ ॥ समकक्षाश्च भोगाढ्या निम्नकक्षा धनोज्झिताः ॥ नृपाश्चोन्नतकक्षाः स्युर्जिह्मा विषमकक्षकाः ॥ २४ ॥ मत्स्योदरा बहुधना नाभिभिः सुखिनः स्मृताः ॥ विस्तीर्णाभिर्बहुलाभिर्निम्नाभिः क्लेशभागिनः ॥ २५ ॥ बलिमध्यगता नाभिः शूलबाधां करोति हि ॥ वामावर्त्तश्च साध्यं वै मेधां दक्षिणतस्तथा ॥ २६ ॥ पार्श्वायता चिरायुर्दां नृप विद्या धनेश्वरम् ॥ अधो गवाढ्यं कुर्याच्च नृपत्वं पद्मकर्णिका ॥ २७ ॥ एकबलिः शतायुः स्याच्छ्रीभोगी द्विबलिः स्मृतः ॥ त्रिबलिः क्ष्माप आचार्य्य ऋजुभिर्वलिभिः सुखी ॥ २८ ॥ अगम्यागामी जिह्मबलिर्भूपाः पार्श्वैश्च मांसलैः ॥ मृदुभिः सुसमैश्चैव दक्षिणावर्त्तरोमभिः ॥ २९ ॥ विपरीतैः परप्रेष्या निर्द्रव्याः सुखवर्जिताः ॥ अनुद्धतैश्चूचुकैश्च भवन्ति सुभगा नराः ॥ ३० ॥ निर्धना विषमैर्दीर्घैः पीतोपचितकैर्नृपाः ॥ समोन्नतं च हृदयम कम्पं मांसलं पृथु ॥ ३१ ॥ नृपाणामधमानां च खररोमशिरालकम् ॥ अर्थवान्समवक्षाः स्यात्पीनैर्वक्षोभिरूर्जितः ॥ ३२ ॥ वक्षोभिर्विषमैर्निःस्वः शस्त्रेणनिधनास्तथा ॥ विषमैर्जत्रुभिर्निःस्वा अस्थिनद्धैश्च मानवाः ॥ ३३ ॥ उन्नतैर्भोगिनो निम्नैर्निःस्वाः पीनैर्धनान्विताः ॥ निःस्वश्चिपिटकण्ठः स्याच्छिराशुष्कगलः सुखी ॥ ३४ ॥ शूरः स्यान्महिषग्रीवः शस्त्रान्तो मृगकण्ठकः ॥ कम्बुग्रीवश्च नृपतिर्लम्बकण्ठोऽतिभक्षकः ॥ ३५ ॥ अरोमशा सुंग्नपृष्ठं शुभं चाशुभमन्यथा ॥ कक्षाश्वत्थदला श्रेष्ठा सुगन्धिर्मृगरोमिका ॥ ३६ ॥ अन्यथा त्वर्थहीनानां दारिद्र्यस्य च कारणम् ॥

१ धनवानृजुवृत्तश्च लघु० । २ अतान्तएक० । ३ सर्पोदरा बहु० । ४ शस्त्रान्तो मृग० । ५ अरोममाभग्न० । अयमार्षः प्रयोगः ।

संमासौ चैव भुग्नाल्पौ श्लिष्टौ च विपुलौ शुभौ ॥ ३७ ॥ आजानुलम्बितौ बाहू वृत्तौ पीनौ नृपेश्वरे ॥ निःस्वानां रोमशौ ह्रस्वौ श्रेष्ठौ करिकर प्रभौ ॥३८॥ हस्तांगुलय एव स्युवायुद्धारयुताः शुभाः ॥ मेधाविनां च सूक्ष्माः स्युर्भृत्यानां चिपिटाः स्मृताः ॥३९॥ स्थूलांगुलीभिर्निःस्वाः स्युर्नताः स्युः सुकृशैस्तदा ॥ कपितुल्यकराः निःस्वा व्याघ्रतुल्यकरैर्बलम् ॥ ४० ॥ पितृवित्तविनाशश्च निम्नात्करतलान्नराः ॥ मणिबन्धैर्निगूढैश्च सुश्लिष्टैः शुभगन्धिभिः ॥ ४१ ॥ नृपा हीनाः करच्छेदैः सशब्दैर्धनवर्जिताः ॥ संवृतैश्चैव निम्नैश्च धनिनः परिकीर्त्तिताः ॥ ४२ ॥ प्रोत्तानक रदातारो विषमैर्विषमा नराः ॥ करैः करतलैश्चैव लाक्षाभैरीश्वरास्तलैः ॥ ४३ ॥ परदाररताः पीतैरूक्षैर्निःस्वा नरा मताः ॥ तुषतुल्यनखाः क्लीबाः कुटिलैः स्फुटितैर्नराः ॥ ४४ ॥ निःस्वाश्च कुनखैस्तद्वद्विवर्णैः परतर्क्काः ॥ ताम्रैर्भूपा धनाढ्याश्च अंगुष्ठैः सयवैस्तथा ॥ ४५ ॥ अंगुष्ठमूलजैः पुत्री स्याद्दीर्घांगुलिपर्वकः ॥ दीर्घायुः सुभगश्चैव निर्धनो विरलांगुलिः ॥ ४६ ॥ घनांगुलिश्च सधनस्तिस्रो रेखाश्च यस्य वै ॥ नृपतेः करतलगा मणिबन्धात्समुत्थिताः ॥ ४७ ॥ युग्ममीनांकितनरो भवेत्सत्रप्रदो नरः ॥ वज्राकाराश्च धनिनां मत्स्यपुच्छनिभा बुधे ॥ ४८ ॥ शंखातपत्रशिविकागजपद्मोपमा नृपे ॥ कुम्भांकुशपताकाभा मृणालाभा निधीश्वरे ॥ ४९ ॥ दामाभाश्च गवाढ्यानां स्वस्तिकाभा नृपेश्वरे ॥ चक्रासितोमरधनुःकुन्ताभा नृपतेः करे ॥ ५० ॥ उलूखलाभा यज्ञाढ्या वेदीभा चाग्निहोत्रिणि ॥ वापीदेवकुल्याभास्त्रिकोणाभाश्च धार्मिके ॥ ५१ ॥ अंगुष्ठमूलगा रेखाः पुत्राः सूक्ष्माश्च दारिकाः॥प्रदेशिनीगता रेखा कनिष्ठामूलगामिनी ॥ ५२ ॥ शतायुषं च कुरुते छिन्नया तरुतो भयम् ॥ निःस्वाश्च बहुरेखाः स्युर्निर्द्रव्याश्चिबुकैः कृशैः ॥ ५३ ॥ मांसलैश्च धनोपेता आरक्तैरधरैर्नृपाः ॥ बिम्बोपमैश्च स्फुटितैरोष्ठैरूक्षैश्च खण्डितैः ॥ ५४ ॥ विषमैर्धनहीनाश्च दन्ताः स्निग्धा घनाः शुभाः ॥ तीक्ष्णा दन्ताः समाः श्रेष्ठा जिह्वा रक्ता समा शुभा ॥ ५५ ॥ श्लक्ष्णा दीर्घा च विज्ञेया तालू श्वेते धनक्षये ॥ कृष्णे च परुषो वक्त्रं समं सौम्यं च संवृतम् ॥ ५६ ॥ भूपानाममलं श्लक्ष्णं विपरीतं च दुःखिनाम् ॥ महा दुःखं दुर्भगाणां स्त्रीमुखं पुत्रमाप्नुयात् ॥५७॥ आढ्यानां वर्त्तुलं वक्त्रं निर्द्रव्याणां च दीर्घकम्॥भीरुवक्त्रः पापकर्मा धूर्त्तानां चतुरश्रकम्॥५८॥निम्नं वक्त्रमपुत्राणां कृपणानां च ह्रस्वकम्॥सम्पूर्णं भोगिनां कान्तं श्मश्रु स्निग्धं शुभं मृदु॥५९॥संहतं चास्फुटिताग्रं रक्तश्मश्रुश्च चौरकः ॥ रक्ताल्पपरुष श्मश्रुकर्णाः स्युः पापमृत्यवः॥६०॥निर्मांसैश्चिपिटैर्भोगाः कृपणा ह्रस्वकर्णकाः॥शंकुकर्णाश्च राजानो रोमकर्णा गतायुषः॥६१॥बृहत्कर्णाश्च धनिनो

१ द्वारनिभाः० । स्युरायुर्दावनिताः । २ आर्पत्वान्नतुम् शीभावश्च न ।

राजानः परिकीर्त्तिताः ॥ कर्णैः स्निग्धावनद्धैश्च व्यालम्बैर्मांसलैर्नृपाः ॥६२॥ भोगी वै निम्नगण्डः स्यान्मंत्री सम्पूर्णगण्डकः ॥शुकनासः सुखी स्याच्च शुष्कनासोऽतिजीवनः ॥६३॥छिन्नाग्रकूपनासः स्यादगम्यागमने रतः ॥ दीर्घनासे च सौभाग्यं चौरश्चाकुञ्चितेन्द्रियः ॥६४॥ मृत्युश्चिपिटनासे स्याद्धीनो भाग्यवतां भवेत् ॥स्वल्पच्छिद्रौ सुपुटौ च अवक्रौ च नृपेश्वरे ॥६५॥ क्रूरे दक्षिणवक्रा स्याद्धलिनां च क्षुतं सकृत् ॥ स्याद्विनिष्पिण्डितं ह्रादि सानुनादं च जीवकृत् ॥६६॥ वक्रान्तैः पद्मपत्राभैर्लोचनैः सुखभागिनः ॥ मार्जारलोचनैः पाप्मा दुरात्मा मधुपिङ्गलैः ॥ ६७ ॥ क्रूराः केकरनेत्राश्च हरिताक्षाः सकल्मषाः ॥ जिह्मैश्च लोचनैः शूराः सेनान्यो गजलोचनाः ॥ ६८ ॥ गम्भीराक्षा ईश्वराः स्युर्मन्त्रिणः स्थूलचक्षुषः ॥ नीलोत्पलाक्षा विद्वांसः सौभाग्यं श्यामचक्षुषाम्॥६९॥ स्यात्कृष्णतारकाक्षाणामक्ष्णामुत्पाटनं किल॥मण्डलाक्षाश्च पापाः स्युर्निःस्वाः स्युर्दीनलोचनाः ॥७०॥ दृक् स्निग्धा विपुला भोगे अल्पायुरधिकोन्नता ॥ विशालोन्नता सुखिनी दरिद्रा विषमभ्रुवः ॥ ७१ ॥ घनदीर्घासुसक्तभ्रूर्बालेन्दून्नतसुभ्रुवः ॥ आढ्यो निःस्वश्च खण्डभ्रूर्मध्ये च विनतभ्रुवः ॥ ७२ ॥ स्त्रीषु गम्यासु सक्ताः स्युः सुतार्थे परिवर्जिताः ॥ उन्नतैर्विपुलैः शङ्खैर्ललाटैर्विषमैस्तथा ॥ ७३ ॥ निर्धना धनवन्तश्च अर्द्धेन्दुसदृशैर्नराः ॥ आचार्य्याः शुक्तिविशालैः शिरालैः पापकारिणः ॥ ७४ ॥ उन्नताभिः शिराभिश्च स्वस्तिकाभिर्धनेश्वराः ॥ निम्नैर्ललाटैर्वन्धार्हाः क्रूरकर्मरतास्तथा ॥ ७५ ॥ संवृतैश्च ललाटैश्च कृपणा उन्नतैर्नृपाः ॥ अनश्रु स्निग्धरुदितमदीनं शुभदं नृणाम् ॥ ७६ ॥ प्रचुराश्रु दीनं रूक्षं च रुदितं च सुखावहम् ॥ अकम्पं हसितं श्रेष्ठं मीलिताक्षमघावहम् ॥ ७७ ॥ असकृद्धसितं दुष्टं सोन्मादस्य ह्यनेकधा ॥ ललाटोपसृतास्तिस्रो रेखाः स्युः शतवर्षिणाम् ॥ ७८ ॥ नृपत्वं स्याच्चतसृभिरायुः पञ्चनवत्यथ ॥ अरेखेणायुर्नवतिर्विच्छिन्नाभिश्च पुंश्चलाः ॥ ७९ ॥ केशान्तोपगताभिश्च अशीत्यायुर्नरो भवेत् ॥ पञ्चभिः सप्तभिः षड्भिः पञ्चाशद्बहुभिस्तथा ॥८०॥ चत्वारिंशच्च वक्राभिस्त्रिंशद्भ्रूलग्नगामिभिः ॥ विंशतिर्वामवक्राभिरायुः क्षुद्राभिरल्पकम् ॥ ८१ ॥ छत्राकारैः शिरोभिस्तु नृपा निम्नशिरा धनी ॥ चिपिटैश्च पितुर्मृत्युर्गर्वाद्याः परिमण्डलैः ॥ ८२ ॥ घटमूर्द्धा पापरुचिर्धनाद्यैः परिवर्जितः ॥ कृष्णैराकुञ्चितैः केशैः स्निग्धैरेकैकसम्भवैः ॥ ८३ ॥ अभिन्नाग्रैश्च मृदुभिर्न चातिबहुभिर्नृपाः ॥ बहुमूलैश्च विषमैः स्थूलाग्रैः कपिलैस्तथा ॥ ८४ ॥ निःस्वाश्चैवातिकुटिलैर्घनैरसित ( धिक ) मूर्द्धजैः ॥ यद्यद्गात्रं महारूक्षं शिरालं मांसवर्जितम् ॥ ८५ ॥ तत्तत्स्यादशुभं सर्वं शुभं सर्वं ततोऽन्यथा ॥ विपुलास्त्रिषु गम्भीरो दीर्घः सूक्ष्मश्च पञ्चसु ॥ ८६ ॥ षडुन्नतश्चतुर्ह्रस्वो रक्तः सप्तस्वसौ नृपः॥नाभिः स्वरश्च स

१ स्त्री मृत्युश्चिपिटनसः हीन० । २ दीर्घासुसक्तभ्रू० । ३ स्त्रीष्वगम्यासु सक्ताः स्युः सुतार्थे० । सुतात्मपरिव० ।

सत्त्वं च त्रयं गम्भीरमीरितम् ॥ ८७ ॥ पुंसः स्यादतिविस्तीर्णं ललाटं वदनं ह्युरः ॥ चक्षुःकक्षा नासिका च षट् स्यु र्नृपकृकाटिकाः ॥ ८८ ॥
उन्नतानि च ह्रस्वानि जङ्घा ग्रीवा च लिङ्गकम् ॥ पृष्ठं चत्वारि रक्तानि करताल्वधरा नखाः ॥ ८९ ॥ नेत्रान्तपादजिह्वौष्ठाः पञ्च सूक्ष्माणि सन्ति वै ॥
दशनांगुलिपर्वाणि नखकेशत्वचः शुभाः ॥ ९० ॥ दीर्घाः स्तनान्तरं बाहुदन्तलोचननासिकाः ॥ नराणां लक्षणं प्रोक्तं वदामि स्त्रीषु लक्षणम् ॥९१॥
राज्ञ्याः स्निग्धौ समौ पादौ तलौ ताम्रौ नखौ तथा ॥ श्लिष्टांगुली चोन्नताग्रौ तां प्राप्य नृपतिर्भवेत् ॥ ९२ ॥ निगूढगुल्फोपचितौ पद्मकान्तितलौ
शुभौ ॥ अस्वेदिनौ मृदुतलौ मत्स्यांकुशध्वजाङ्कितौ ॥ ९३ ॥ वज्राब्जहलचिह्नौ च दास्याः पादौ ततोऽन्यथा ॥ जङ्घे च रोमरहिते सुवृत्ते विशिरे
शुभे ॥ ९४ ॥ अनुल्बणं सन्धिदेशं समं जानुद्वयं शुभम् ॥ ऊरू करिकराकारावरोमौ च समौ शुभौ ॥ ९५ ॥ अश्वत्थपत्रसदृशं विपुलं गुह्यमुत्तमम्॥
श्रोणीललाटकं स्त्रीणामूरु कूर्मोन्नतं शुभम् ॥ ९६ ॥ गूढो मणिश्च शुभदो नितम्बश्च गुरुः शुभः ॥ विस्तीर्णमांसोपचिता गम्भीरा विपुला शुभा ॥९७॥
नाभिः प्रदक्षिणावर्त्ता मध्यं त्रिवलिशोभितम् ॥ अरोमशौ स्तनौ पीनौ घनावविषमौ शुभौ ॥ ९८ ॥ कठिनौ रोमशा शस्ता मृदुग्रीवा च कम्बुभा ॥
आरक्तावधरौ श्रेष्ठौ मांसलं वर्त्तुलं मुखम् ॥ ९९ ॥ कुन्दपुष्पसमा दन्ता भाषितं कोकिलासमम् ॥ दाक्षिण्ययुक्तमशठं हंसशब्दसुखावहम् ॥ १०० ॥
नासा समा समपुटा स्त्रीणां तु रुचिरा शुभा ॥ नीलोत्पलनिभं चक्षुर्नासालग्नं न लम्बकम् ॥ १०१ ॥ न पृथू बालेन्दुनिभे भ्रुवौ चाथ ललाटकम् ॥
शुभमर्द्धेन्दुसंस्थानमतुङ्गं स्यादलोमशम् ॥ १०२ ॥ सुमांसलं कर्णयुग्मं समं मृदु समाहितम् ॥ स्निग्धा नीलाश्च मृदवो मूर्द्धजाः कुञ्चिताः कचाः
॥ १०३ ॥ स्त्रीणां समं शिरः श्रेष्ठं पादे पाणितलेऽथ वा ॥ वाजिकुञ्जरश्रीवृक्षयूपेषुयवतोमरैः ॥ १०४ ॥ ध्वजचामरमालाभिः शैलकुण्डलवेदिभिः ॥
शङ्खातपत्रपद्मैश्च मत्स्यस्वस्तिकसद्रथैः ॥ १०५ ॥ लक्षणैरंकुशाद्यैश्च स्त्रियः स्यू राजवल्लभाः ॥ निगूढमणिबन्धौ च पद्मगर्भोपमौ करौ ॥ १०६ ॥
न निम्नं नोन्नतं स्त्रीणां भवेत्करतलं शुभम् ॥ रेखान्वितं त्वविधवां कुर्य्यात्संभोगिनीं स्त्रियम् ॥ रेखा या मणिबन्धोत्था गता मध्यांगुलिं करे॥१०७॥
गता पाणितले या च योर्द्ध्वपादतले स्थिता ॥ स्त्रीणां पुंसां तथा सा स्याद्राज्याय च सुखाय च ॥ १०८ ॥ कनिष्ठिकामूलभवा रेखा कुर्य्याच्छता
युषम् ॥ प्रदेशिनीमध्यमाभ्यामन्तरालगता सती ॥ १०९ ॥ ऊना ऊनायुषं कुर्य्याद्रेखाश्चांगुष्ठमूलगाः ॥ बृहत्यःपुत्रास्तन्व्यस्तु प्रमदाः परिकीर्त्ति ॥४३॥
ताः ॥ ११० ॥ स्वल्पायुषो बहु ( लघु ) च्छिन्ना दीर्घाच्छिन्ना महायुषम् ॥ शुभं तु लक्षणं स्त्रीणां प्रोक्तं त्वशुभमन्यथा ॥ १११ ॥ कनिष्ठिकानामिका

१ स्वरश्च बुद्धिश्च त्रयं० । २ मत्स्याङ्कसयवाङ्कितौ० । ३ राज्ञ्याः पादौ ततो० । ४ नसिलग्नौ न लम्बकौ० ।

वा यस्या न स्पृशते महीम् ॥ अंगुष्ठं वा गतातीत्य तर्जनी कुलटा च सा ॥ ११२ ॥ ऊर्द्ध्वं द्वाभ्यां पिण्डिकाभ्यां जङ्घे चातिशिरालके ॥ रोमशे चातिमांसे च कुम्भाकारं तथोदरम् ॥ ११३ ॥ वामावर्त्तं निम्नमल्पं दुःखितानां च गुह्यकम् ॥ ग्रीवया ह्रस्वया निःस्वा दीर्घया च कुलक्षयः ॥ ११४ ॥ पृथुलया प्रचण्डाश्च स्त्रियः स्युर्नात्र संशयः ॥ केकरे पिङ्गले नेत्रे श्यामे लोलेक्षणा सती ॥ ११५ ॥ स्मिते कूपे गण्डयोश्च सा ध्रुवं व्यभिचारिणी ॥ प्रलम्बिनी ललाटे तु देवरं हन्ति चाङ्गना ॥ ११६ ॥ उदरे श्वशुरं हन्ति पतिं हन्ति स्फिचोर्द्वयोः ॥ या तु रोमोत्तरोष्ठी स्यान्न शुभा भर्त्तुरेव हि ॥ ११७ ॥ स्तनौ सरोमावशुभौ कर्णौ च विषमौ तथा ॥ कराला विषमा दन्ताः क्लेशाय च भवन्ति ते ॥ ११८ ॥ चौर्याय कृष्णमांसाश्च दीर्घा भर्त्तुश्च मृत्यवे ॥ क्रव्यादरूपैर्हस्तैश्च वृककाकादिसन्निभैः ॥ ११९ ॥ शिरालैर्विषमैः शुष्कैर्वित्तहीना भवन्ति हि ॥ समुन्नतोत्तरोष्ठी या कलहे रूक्षभाषिणी ॥ १२० ॥ स्त्रीषु दोषा विरूपासु पत्राकारो गुणास्ततः ॥ नरस्त्रीलक्षणं प्रोक्तं वक्ष्ये तज्ज्ञानदायकम् ॥ १२१ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्योतिःशास्त्रे सामुद्रिके स्त्रीनरलक्षणं नाम पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥ ॥ हरि रुवाच ॥ निर्लक्षणा शुभा स्याच्च चक्राङ्कितशिलार्चनात् ॥ आदौ सुदर्शनो मूर्तिर्लक्ष्मीनारायणः परः ॥ १ ॥ त्रिचक्रोऽसावच्युतः स्याच्चतुश्चक्रश्च तुर्भुजः ॥ वासुदेवश्च प्रद्युम्नस्ततः सङ्कर्षणः स्मृतः ॥ २ ॥ पुरुषोत्तमश्चाष्टमः स्यान्नवव्यूहो दशात्मकः ॥ एकादशोऽनिरुद्धः स्याद्द्वादशो द्वादशा त्मकः ॥ ३ ॥ अत ऊर्ध्वमनन्तः स्याच्चक्रे रेखादिकैः क्रमात् ॥ सुदर्शना लक्षिताश्च पूजिताः सर्वकामदाः ॥ ४ ॥ शालग्रामशिला यत्र देवो द्वार वतीभवः ॥ उभयोः संगमो यत्र तत्र मुक्तिर्न संशयः ॥ ५ ॥ शालग्रामो द्वारका च नैमिषं पुष्करं गया ॥ वाराणसी प्रयागश्च कुरुक्षेत्रं च सूक रम् ॥ ६ ॥ गंगा च नर्मदा चैव चन्द्रभागा सरस्वती ॥ पुरुषोत्तमो महाकालस्तीर्थान्येतानि शंकर ॥ ७ ॥ सर्वपापहराण्येव भुक्तिमुक्तिप्रदानि वै ॥ प्रभवो विभवः शुक्लः प्रमोदोऽथ प्रजापतिः ॥ ८ ॥ अंगिराः श्रीमुखो भावः युवा धाता तथैव च ॥ ईश्वरो बहुधान्यश्च प्रमाथी विक्रमो विषुः ॥ ९ ॥ चित्रभानुः स्वभानुश्च तारणः पार्थिवो व्ययः ॥ सर्वजित्सर्वधारी च विरोधी विकृतिः खरः ॥ १० ॥ नन्दनो विजयश्चैव जयो मन्मथदुर्मुखौ ॥ हेमलम्बो विलंबश्च विकारः शर्वरी प्लवः ॥ ११ ॥ शुभकृच्छोभनः क्रोधी विश्वावसुपराभवौ ॥ प्लवंगः कीलकः सौम्यः साधारणविरोधकृत ॥ १२ ॥ परिधावी प्रमादी च आनन्दो राक्षसो नलः ॥ पिंगलः कालसिद्धार्थौ रौद्रिर्वै दुर्मतिस्तथा ॥ १३ ॥ दुन्दुभी रुधिरोद्गारी रक्ताक्षः क्रोध

१ शिरालैर्विविधैः शु० । २ दारुणः पार्थि० ।

नोऽक्षयः ॥ अशोभनाः शोभनाश्च नाम्नैवैते हि वत्सराः ॥ १४ ॥ कालं वक्ष्यामि संसिद्ध्यै रुद्र पंचस्वरोदयात् ॥ राजा सा( मा )जा उदासा
च पीडा मृत्युस्तथैव च ॥ १५ ॥ आ ई ऊ ऐ औ स्वरांश्च लिखेत्पंचाग्निकोष्ठके ॥ ऊर्ध्वतिर्य्यग्गतै रेखैः षड्वह्निक्रममागतैः ॥ १६ ॥ [ि]थी एका
ग्निकोष्ठेषु त्रयो राजाथ सा ( मा ) जयाः ॥ उदासामृत्युपीडाश्च कुजः सोमसुतः क्रमात् ॥ १७ ॥ गुरुशुक्रौ च मन्दश्च रविचन्द्रौ यथोदितम् ॥
रेवत्यादिमृगान्ताश्च ऋक्षाणि प्रथमा कला ॥ १८ ॥ पंचपंचान्यत्र भानि चैत्राद्य उदयस्तथा ॥ द्वादशाहैर्द्वयोर्मासनाम्नोराद्यक्षरं तथा ॥ १९ ॥
कलालिंगा च या तिष्ठेत्पंचमस्तस्य वै मृतिः ॥ कला तिथिस्तथा वारो नक्षत्रं मासमेव च ॥ २० ॥ नामोदयस्य पूर्वं च तथा भवति नान्यथा ॥
ओं क्षौं ( क्ष्रौः ) शिवाय नमः ॥ २१ ॥ क्षामावंगाशिवामीक्षा विषग्रहमतिर्हर ॥ त्रैलोक्यमोहनं बीजं नृसिंहस्य तु पन्न(न्न)गम् ॥ २२ ॥ मृत्युंजयो
गणो लक्ष्मी रोचनाद्यैस्तु लेखितः ॥ भूर्जे तु धारिताः कण्ठे बाहौ चेति जयादिदाः ॥ २३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये
आचारकाण्डे ज्योतिःशास्त्रे शालग्रामषष्टचन्द्रस्वरोदयानां निरूपणं नाम षट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ ( इति ज्योतिःशास्त्रं समाप्तम् ) ॥
सूत उवाच ॥ हरेः श्रुत्वा हरो गौरीं देहस्थं ज्ञानमब्रवीत ॥ १ ॥ कुजो वह्नी रविः पृथ्वी सौरिरापः प्रकीर्त्तितः ॥ वायुसंस्थास्थितो राहुर्दक्षरन्ध्रा
वभासकः ॥ २ ॥ गुरुः शुक्रस्तथा सौम्यश्चन्द्रश्चैव चतुर्थकः ॥ वामनाडीं तु मध्यस्थां कारयेदात्मनस्तथा ॥ ३ ॥ यदाचर इलायुक्तस्तदा कर्म
समाचरेत् ॥ स्थानसेवां तथा ध्यानं वाणिज्यं राजदर्शनम् ॥ ४ ॥ अन्यानि शुभकर्माणि कारयेत प्रयत्नतः ॥ दक्षनाडीप्रवाहे तु शनिभौमश्च
सैंहिकः ॥ ५ ॥ इनश्चैव तथाप्येव पापानामुदयो भवेत् ॥ शुभाशुभविवेको हि ज्ञायते तु स्वरोदयात् ॥ ६ ॥ देहमध्ये स्थिता नाड्यो बहुरूपाः
सुविस्तराः ॥ नाभेरधस्ताद्यः कन्दस्त्वंकुरास्तत्र निर्गताः ॥ ७ ॥ द्विसप्ततिसहस्राणि नाभिमध्ये व्यवस्थिते ॥ चक्रवच्च स्थितास्तास्तु सर्वाः
प्राणहराः स्मृताः ॥ ८ ॥ तासां मध्ये त्रयः श्रेष्ठा वामदक्षिणमध्यमाः ॥ वामा सोमात्मिका प्रोक्ता दक्षिणा रविसन्निभा ॥ ९ ॥ मध्यमा च भवे
दग्निः फलंती कालरूपिणी ॥ वामा ह्यमृतरूपा च जगदाप्यायने स्थिता ॥ १० ॥ दक्षिणा रौद्रभागेन जगच्छोषयते सदा ॥ द्वयोर्वाहे तु मृत्युः
स्यात्सर्वकार्य्यविनाशिनी ॥ ११ ॥ निर्गमे तु भवेद्वामा प्रवेशे दक्षिणा स्मृता ॥ इडाचारे तथा सौम्यं चन्द्रसूर्य्यगतस्तथा ॥ १२ ॥ कारयेत्क्रूर
कर्माणि प्राणे पिंगलसंस्थिते ॥ यात्रायां सर्वकार्येषु विषापहरणे इडा ॥ १३ ॥ भोजने मैथुने युद्धे पिंगला सिद्धिदायिका ॥ उच्चाटमारणाद्येषु

१ न्यत्र तानि चैत्राद्य उदय० । २ द्वादशाहो द्विमासैश्च नाम्न आद्य० । ३ वामनाड्यां तु० । ४ यदाचार इडायुक्तास्तदा० । ५ वायव्यां सर्वः ।

कर्मस्वेतेषु पिंगला ॥ १४ ॥ मैथुने चैव संग्रामे भोजने सिद्धिदायिका ॥ शोभनेषु च कार्य्येषु यात्रायां विषकर्मणि ॥ १५ ॥ शान्तिमुक्त्यर्थसिद्ध्यै च इडा योज्या नराधिपैः ॥ द्वाभ्यां चैव प्रवाहे च क्रूरसौम्यविवर्जने ॥ १६ ॥ विषवत्तं तु जानीयात्संस्मरेत्तु विचक्षणः ॥ सौम्यादिशुभकार्येषु लाभादिजयजीविते ॥ १७ ॥ गमनागमने चैव वामा सर्वत्र पूजिता ॥ युद्धादिभोजने घाते स्त्रीणां चैव तु संगमे ॥ १८ ॥ प्रशस्ता दक्षिणा नाडी प्रवेशे क्षुद्रकर्मणि ॥ शुभाशुभानि कार्य्याणि लाभालाभौ जयाजयौ ॥ १९ ॥ जीवाजीवाय यत्पृच्छेन्न सिध्यति च मध्यमा॥ वामाचारेऽथवा दक्षे प्रत्यये यत्र नायकः ॥ २० ॥ तनुस्थः पृच्छते यस्तु तत्र सिद्धिर्न संशयः ॥ वैच्छन्दो वामदेवस्तु यदा वहति चात्मनि ॥ २१ ॥ तत्र भागे स्थितः पृच्छेत्सिद्धिर्भवति निष्फला ॥ वामे वा दक्षिणे वापि यत्र संक्रमते शिवा ॥ २२ ॥ घोरे घोराणि कार्य्याणि सौम्ये वै मध्यमानि च॥प्रस्थिते भागतो हंसे द्वाभ्यां वै सर्ववाहिनी ॥ २३ ॥ तदा मृत्युं विजानीयाद्योगी योगविशारदः ॥ यत्रयत्र स्थितः पृच्छेद्वामदक्षिणसंमुखः॥२४॥ तत्रतत्र समं दिश्याद्वातस्योदयनं सदा ॥ अग्रतो वामिका श्रेष्ठा पृष्ठतो दक्षिणा शुभा ॥ २५ ॥ वामेन वामिका प्रोक्ता दक्षिणे दक्षिणा शुभा ॥ वामे वामा शुभे चैव दक्षिणे दक्षिणा शुभा ॥ २६ ॥ जीवो जीवाति जीवेन यच्छून्यं तस्त्वरो भवेत् ॥ यत्किञ्चित्कार्य्यमुद्दिष्टं जयादिशुभलक्षणम् ॥ २७ ॥ तत्सर्वं पूर्णनाड्यां तु जायते निर्विकल्पतः ॥ अन्यनाड्यादिपर्य्यन्तं पक्षत्रयमुदाहृतम् ॥ २८ ॥ यावत्षष्ठी तु पृच्छायां पूर्णायां प्रथमो जयेत् ॥ रिक्तायां तु द्वितीयस्तु कथयेत्तदशङ्कितः ॥ २९ ॥ वामाचारसमो वायुर्जायते कर्मसिद्धिदः ॥ प्रवृत्ते दक्षिणे मार्गे विषमे विषमाक्षरम् ॥ ३० ॥ अन्यत्र वामवाहे तु नाम वै विषमाक्षरम् ॥ तदासौ जयमाप्नोति योधः संग्राममध्यतः ॥ ३१ ॥ दक्षवातप्रवाहे तु यदि नाम समाक्षरम् ॥ जा(ज) यते नात्र सन्देहो नाडीमध्ये तु लक्षयेत् ॥३२॥ पिंगलान्तर्गते प्राणे शमनीयाहवं जयेत्॥यावन्नाड्युदयं चारस्तां दिशं यावदापयेत् ॥३३॥ न दातुं जायते सोऽपि नात्र कार्य्या विचारणा ॥ अथ संग्राममध्ये तु यत्र नाडी सदा वहेत् ॥ ३४ ॥ सा दिशा जयमाप्नोति शून्ये भंगं विनिर्दिशेत् ॥ जातचारे जयं विद्यान्मृतके मृतमादिशेत् ॥३५॥ जयं पराजयं चैव यो जानाति स पण्डितः ॥ वामे वा दक्षिणे वापि यत्र सञ्चरते शिवम् ॥ ३६ ॥ कृत्वा तत्पदमाप्नोति यात्रा सन्ततशोभना ॥ शशिसूर्य्यप्रवाहे तु सति युद्धं समाचरेत् ॥ ३७ ॥ यस्तु पृच्छाति तत्रस्थः स साधुर्जयति ध्रुवम् ॥ यां दिशं वहते वायुस्तां दिशं यावदाजयः ॥ ३८ ॥ जायते नात्र सन्देह इन्द्रो यद्यग्रतः स्थितः ॥ मेष्याद्या दश या नाड्यो दक्षिणा वाम

१ यावत्षष्ठीं तु पृच्छाभ्यां पूर्णायां प्रथमो यजेत्० । २ समनीयाहरं ज० ।

संस्थिताः ॥ ३९ ॥ चरेस्थिरे तद्विमार्गे तादृशेतादृशे क्रमात् ॥ निर्गमे निर्गमं याति संग्रहे संग्रहं विदुः ॥ ४० ॥ पृच्छकस्य वचः श्रुत्वा घण्टाका रेण लक्षयेत् ॥ वामे वा दक्षिणे वापि पञ्चतत्त्वास्थितः शिवे ॥ ४१ ॥ ऊर्द्ध्वेऽग्निरध आपश्च तिर्य्यक्संस्थः प्रभञ्जनः ॥ मध्ये तु पृथिवी ज्ञेया नभः सर्वत्र सर्वदा ॥ ४२ ॥ ऊर्द्ध्वे मृत्युरधः शान्तिस्तिर्य्यक् चोच्चाटयेत्सुधीः ॥ मध्ये स्तम्भं विजानीयान्मोक्षः सर्वत्र सर्वगे ॥ ४३ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे स्वरोदये शुभाशुभनिरूपणं नाम सप्तषष्टितमोऽध्यायः ॥ ६७ ॥ ॥ सूत उवाच ॥ परीक्षां वच्मि रत्नानां बलो नामासुरोऽभवत् ॥ इन्द्राद्या निर्जितास्तेन विजेतुं तैर्न शक्यते ॥१॥ वरव्याजेन पशुतां याचितः स सुरैर्मखे ॥ बलो ददौ स ( स्व ) पशु तामतिसत्त्व सुरैर्हतः ॥२॥ पशुवत्स विशस्तस्तैः स्ववाक्याशनियन्त्रितः ॥ बलो लोकोपराय देवानां हितकाम्यया॥३॥तस्य सत्त्वविशुद्धस्य विशुद्धेन च कर्मणा ॥ कायस्यावयवाः सर्वे रत्नबीजत्वमाययुः॥४॥देवानामथ यक्षाणां सिद्धानां पवनाशिनाम्॥रत्नबीजंस्व(जम)यं ग्राहः सुमहानभवत्तद॥५॥तेषां तु पततां वेगाद्विमानेन विहायसा ॥ यद्यत्पपात रत्नानां बीजं क्वचन किञ्चन ॥ ६ ॥ महोदधौ सरिति वा पर्वते काननेऽपि वा ॥ तत्तदाकरतां यातं स्थानमाधेयगौरवात् ॥ ७ ॥ तेषु रक्षोविषव्यालव्याधिघ्नान्यघहानि च ॥ प्रादुर्भवन्ति रत्नानि तथैव विगुणानि च ॥ ८ ॥ वज्रं मुक्तामणयः सपद्म रागाः समरकताः प्रोक्ताः ॥ अपि चेन्द्रनीलमणिवरवैदूर्य्याः पुष्परागाश्च ॥९॥ कर्केतनं सपुलकं रुधिराख्यसमन्वितं तथा स्फटिकम् ॥ विद्रुममणिश्च यत्नादुद्दिष्टं संग्रहे तज्ज्ञैः ॥ १० ॥ आकारवर्णौ प्रथमं गुणदोषौ तत्फलं परीक्षा च ॥ मूल्यं च रत्नकुशलैर्विज्ञेयं सर्वशास्त्राणाम् ॥ ११ ॥ कुलग्नेपूप जायन्ते यानि चोपहतेऽहनि ॥ दोषैस्तान्यपियुज्यन्ते हीयन्ते गुणसम्पदा ॥ १२ ॥ परीक्षापरिशुद्धानां रत्नानां पृथिवीभुजा ॥ धारणं संग्रहो वापि कार्य्यः श्रियमभीप्सता ॥ १३ ॥ शास्त्रज्ञाः कुशलाश्चापि रत्नभाजः परीक्षकाः ॥ त एव मूल्यमात्रायां वेत्तारः परिकीर्त्तिताः ॥ १४ ॥ महा प्रभावं विबुधैर्यस्माद्वज्रमुदाहृतम् ॥ वज्रपूर्वा परीक्षेयं ततोऽस्माभिः प्रकीर्त्त्यते ॥ १५ ॥ तस्यास्थिलेशो निपपात येषु भुवः प्रदेशेषु कथञ्चिदेव ॥ वज्राणि वज्रायुधनिर्जिगीषोर्भवन्ति नानाकृतिमन्ति तेषु ॥ १६ ॥ हैममातंगसौराष्ट्राः पौण्ड्रकालिंगकोसलाः ॥ वेण्वातटाः ससौवीरा वज्रस्याष्ट विहारकाः ॥ १७ ॥ आताम्रा हिमशैलजाश्च शशिभा वेण्वातटीयाः स्मृताः सौवीरे त्वसिताब्जमेघसदृशास्ताम्राश्च सौराष्ट्रजाः ॥ कालिंगाः कन कावदातरुचिराः पीतप्रभाः कोसले श्यामाः पुंड्रभवा मतंगविषये नात्यन्तपीतप्रभाः ॥ १८ ॥ अत्यर्थं लघु वर्णतश्च गुणवत्पार्श्वेषु सम्यक् समं

१ चरास्थिराद्विमार्गे तास्तादृशे तादृशः क्र० । २ मात्रायाश्छेत्तारः० । ३ वेण्वातटससौवी० ।

रेखाबिन्दुकलङ्ककाकपदकत्रासादिभिर्वर्जितम् ॥ लोकेऽस्मिन्परमाणुमात्रमपि यद्वज्रं क्वचिद्दृश्यते तस्मिन्देवसमाश्रयो ह्यवितथस्तीक्ष्णाग्रधारं यदि ॥ १९ ॥ वज्रेषु वर्णयुक्त्या देवानामपि विग्रहः प्रोक्तः ॥ वर्णेभ्यश्च विभागः कार्य्यो वर्णाश्रयादेव ॥ २० ॥ हरितसितपीतपिंगश्यामास्ताम्राः स्वभावतो रुचिराः ॥ हरिवरुणशक्रहुतवहपितृपतिमरुतां स्वका वर्णाः ॥ २१ ॥ विप्रस्य शङ्खकुमुदस्फटिकावदातः स्यात्क्षत्रियस्य शशबभ्रुविलोचनाभः ॥ वैश्यस्य कान्तकदलीदलसन्निकाशः शूद्रस्य धौतकरवालसमानदीप्तिः ॥ २२ ॥ द्वौ वज्रवर्णौ पृथिवीपतीनां सद्भिः प्रदिष्टौ न तु सार्वजन्यौ ॥ यः स्याज्जवाविद्रुमभंगशोणो यो वा हरिद्रारसन्निकाशः ॥ २३ ॥ ईशत्वात्सर्ववर्णानां गुणवत्सार्ववर्णिकम् ॥ कामतो धारयेद्राजा न त्वन्योऽन्यत्कथञ्चन ॥ २४ ॥ अधरोत्तरवृत्त्या हि यादृक् स्याद्वर्णसङ्करः ॥ ततः कष्टतरो वज्रवर्णानां सङ्करो मतः ॥ २५ ॥ न च मार्गविभागमात्रवृत्त्या विदुषा वज्रपरिग्रहो विधेयः ॥ गुणवद्गुणसम्पदां विभूतिर्विपरीतो व्यसनोदयस्य हेतुः ॥ २६ ॥ एकमपि यस्य शृंगं विदलितमवलोक्यते विशीर्णं वा ॥ गुणवदपि तन्न धार्य्यं वज्रं श्रेयोऽर्थिभिर्भवने ॥ २७ ॥ स्फुटिताग्निविशीर्णशृंगदेशं मलवर्णैः पृषतैरुपेतमध्यम् ॥ न हि वज्रभृतोऽपि वज्रमाशु श्रियमप्याश्रयलालसां न कुर्य्यात् ॥ २८ ॥ यस्यैकदेशः क्षतजावभासो यद्वा भवेल्लोहितवर्णचित्रम् ॥ न तन्न कुर्य्याद्ध्रियमाणमाशु स्वच्छन्दमृत्योरपि जीवितान्तम् ॥२९॥ कोट्यः पार्श्वानि धाराश्च षडष्टौ द्वादशे[illegible] च॥ उत्तुङ्गसमतीक्ष्णाग्राः वज्रस्याकरजा गुणाः ॥ ३० ॥ षट्कोटि शुद्धममलं स्फुटतीक्ष्णधारं वर्णान्वितं लघु सुपार्श्वमपेतदोषम् ॥ इन्द्रायुधांशुविसृतिच्छुरितान्तरिक्षमेवंविधं भुवि भवेत्सुलभं न वज्रम् ॥ ३१ ॥ तीक्ष्णाग्रं विमलमपेतसर्वदोषं धत्ते यः प्रयततनुः सदैव वज्रम् ॥ वृद्धिस्तं प्रतिदिनमेति यावदायुः स्त्रीसम्पत्सुतधनधान्यगोपशूनाम् ॥ ३२ ॥ व्यालवह्निविषव्याघ्रतस्कराम्बुभयानि च ॥ दूरात्तस्य निवर्त्तन्ते कर्माण्याथर्वणानि च ॥ ३३ ॥ यदि वज्रमपेतसर्वदोषं बिभृयात्तण्डुलविंशतिं गुरुत्वे ॥ मणिशास्त्रविदो वदन्ति तस्य द्विगुणं रूपकलक्षमग्रमूल्यम् ॥ ३४ ॥ त्रिभागहीनार्द्धतदर्द्धशेषं त्रयोदशं त्रिंशदतोऽर्द्धभागाः ॥ अशीतिभागोऽथ शतांशभागः सहस्रभागोऽल्पसमानयोगः ॥ ३५ ॥ यत्तण्डुलैर्द्वादशभिः कृतस्य वज्रस्य मूल्यं प्रथमं प्रदिष्टम् ॥ द्वाभ्यां क्रमाद्धानिमुपागतस्य त्वेकावमानस्य विनिश्चयोऽयम् ॥ ३६ ॥ न चापि तण्डुलैरेव वज्राणां धरणक्रमः ॥ अष्टाभिः सर्षपैर्गौरैस्तण्डुलं परिकल्पयेत् ॥ ३७ ॥ यत्तु सर्वगुणैर्युक्तं वज्रं तरति वारिणि ॥ रत्नवर्गे समस्तेऽपि तस्य धारणमिष्यते ॥ ३८ ॥ अल्पेनापि हि

१ वज्रेषु वज्रमुक्ता देवा० । २ सद्भिः प्रकृष्टेन तु सार्वजन्यै० । ३ वज्री वर्णा० ।

दोषेण लक्ष्यालक्ष्येण दूषितम् ॥ स्व ( स ) मूल्याद्दशमं भागं वज्रं लभति मानवः ॥ ३९ ॥ प्रकटानेकदोषस्य स्वल्पस्य महतोऽपि वा ॥
स्व ( सु ) मूल्याच्छतशो भागो वज्रस्य न विधीयते ॥ ४० ॥ स्पष्टदोषमलङ्कारे वज्रं यद्यपि दृश्यते ॥ रत्नानां परिकर्मार्थं मूल्यं तस्य भवेल्लघु ॥
॥ ४१ ॥ प्रथमं गुणसम्पदाभ्युपेतं प्रतिबद्धं समुपैति यच्च दोषम् ॥ अलमाभरणेन तस्य राज्ञो गुणहीनोऽपि मणिर्न भूषणाय ॥ ४२ ॥
नार्य्या वज्रमधार्य्यं गुणवदपि सुतप्रसूतिमिच्छन्त्या ॥ अन्यत्र दीर्घचिपिटत्र्यश्राद्यगुणैर्वियुक्ताच्च ॥ ४३ ॥ अयसा पुष्परागेण तथा गोमेदकेन च ॥
वैदूर्य्यस्फटिकाभ्यां च काचैश्चापि पृथग्विधैः ॥ ४४ ॥ प्रतिरूपाणि कुर्वन्ति वज्रस्य कुशला जनाः ॥ परीक्षा तेषु कर्त्तव्या विद्वद्भिः सुपरीक्षकैः ॥
॥ ४५ ॥ क्षारोल्लेखनशाणाभिस्तेषां कार्य्यं परीक्षणम् ॥ पृथिव्यां यानि रत्नानि ये चान्ये लोहधातवः ॥ ४६ ॥ सर्वाणि विलिखेद्वज्रं तच्च तैर्न
विलिख्यते ॥ गुरुता सर्वरत्नानां गौरवाधारकारणम् ॥ ४७ ॥ वज्रे तां वैपरीत्येन सूरयः परिचक्षते ॥ जातिरजातिं विलिखति जातिं विलिखंति
वज्रकुरुविन्दाः ॥ ४८ ॥ वज्रैर्वज्रं विलिखति नान्येन विलिख्यते वज्रम् ॥ वज्राणि मुक्तामणयो ये च केचन जातयः ॥ ४९ ॥ न तेषां
प्रतिबद्धानां भा भवत्यूर्द्ध्वगामिनी ॥ तिर्य्यक् क्षतत्वात्केषाञ्चित्कथञ्चिद्यदि जायते ॥ तिर्य्यग्विलिख्यमानानां सा ( स ) पार्श्वेषु
विहन्यते ॥ ५० ॥ यद्यपि विशीर्णकोटिः सबिन्दुरेखान्वितो विवर्णो वा ॥ तदपि धनधान्यपुत्रान्करोति सेन्द्रायुधो वज्रः ॥ ५१ ॥ सौदा
मिनीविस्फुरिताभिरामं राजा यथोक्तं कलिशं दधानः ॥ पराक्रमाक्रान्तपरप्रतापः समस्तसामन्तभुवं भुनक्ति ॥ ५२ ॥ इति श्रीगारुडे
महापुराणे पूर्वखण्डे प्रथमांशाख्ये आ. चारकाण्डे रत्नतद्विशेषवज्रपरीक्षणादिवर्णनं नामाष्टषष्टितमोऽध्यायः ॥ ६८ ॥ ॥ सूत उवाच ॥ द्विपेन्द्रजी
मूतवराहशंखमत्स्याहिशुक्त्युद्भववेणुजानि ॥ मुक्ताफलानि प्रथितानि लोके तेषां च शुक्त्युद्भवमेव भूरि ॥ १ ॥ तत्रैव चैकस्य हि मूलमात्र
निविश्यते रत्नपदस्य जातु ॥ वेध्यं तु शुक्त्युद्भवमेव तेषां शेषाण्यवेध्यानि वदन्ति तज्ज्ञाः ॥ २ ॥ त्वक्सारनागेन्द्रतिमिप्रसूतं यच्छंखजं यच्च वरा
हजातम् ॥ प्रायो विमुक्तानि भवन्ति भासा शस्तानि माङ्गल्यतया तथापि ॥ ३ ॥ या मौक्तिकानामिह जातयोऽष्टौ प्रकीर्त्तिता रत्नविनिश्चयज्ञैः ॥
कम्बूद्भवं तेष्वधमं प्रदिष्टमुत्पद्यते यच्च गजेन्द्रकुम्भात् ॥ ४ ॥ स्वयोनिमध्यच्छवितुल्यवर्णं शांखं बृहल्लोलफलप्रमाणम् ॥ उत्पद्यते वारणकुम्भम
ध्यादापीतवर्णं प्रभया विहीनम् ॥ ५ ॥ ये कम्बवः शार्ङ्गमुखावमर्शपीतस्य शंखप्रवरस्य गोत्रे ॥ मतंगजाश्चापि विशुद्धवंश्यास्ते मौक्तिकानां प्रभवाः

१ कथञ्चिद्यदि दृश्यते० । २ अयोनि० ।

प्रदिष्टाः ॥ ६ ॥ उत्पद्यते मौक्तिकमेषु वृत्तमापीतवर्णं प्रभया विहीनम् ॥ पाठीनपृष्ठस्य समानवर्णं मीनात्सुवृत्तं लघु चातिसूक्ष्मम् ॥ ७ ॥ उत्पद्यते वारिचराननेषु मत्स्याश्च ते मध्यचराः पयोधेः ॥ वराहदंष्ट्राप्रभवं प्रदिष्टं तस्यैव दंष्ट्रांकुरतुल्यवर्णम् ॥ ८ ॥ क्वचित्कथञ्चित्स भुवः प्रदेशे प्रजायते सूकरराड्विशिष्टः ॥ वर्षोपलानां समवर्णशोभं त्वक्सारपर्वप्रभवं प्रदिष्टम् ॥ ९ ॥ ते वेणवो दिव्यजनोपभोग्ये स्थाने प्ररोहन्ति न सार्वजन्ये ॥ भौजंगमं मीनविशुद्धवृत्तं संस्थानतोऽत्युज्ज्वलवर्णशोभम् ॥ १० ॥ नितान्तधौतप्रविकल्पमाननिस्त्रिंशधारासमवर्णकान्ति ॥ प्राप्यातिरत्नानि महाप्रभाणि राज्यं श्रियं वा महतीं दुरापाम् ॥ ११ ॥ तेजोऽन्विताः पुण्यकृतो भवन्ति मुक्ताफलस्याहिशिरोभवस्य ॥ जिज्ञासया रत्नधनं विधिज्ञैः शुभे मुहूर्ते प्रयतैः प्रयत्नात् ॥ १२ ॥ रक्षाविधानं सुमहद्विधाय हर्म्योपरिष्ठं क्रियते यदा तत् ॥ तदा महादुन्दुभिमन्द्रघोषैर्विद्युल्लताविस्फुरितान्तरालैः ॥ १३ ॥ पयोधराक्रान्तिविलम्बिनं[1] घनैर्नवैराव्रियतेऽन्तरिक्षम् ॥ न तं भुजंगा न तु यातुधाना न व्याधयो नाप्युपसर्गदोषाः ॥ १४ ॥ हिंसन्ति यस्याहिशिरःसमुत्थं मुक्ताफलं तिष्ठति कोशमध्ये ॥ नाभ्येति मेघप्रभवं धरित्रीं विप्रद्रुतं तद्विबुधा हरन्ति ॥ १५ ॥ अर्चिःप्रभानावृतदिग्विभागमादित्यवद्दुःखविभाव्यबिम्बम् ॥ तेजस्तिरस्कृत्य हुताशनेन्दुनक्षत्रताराप्रभवं समग्रम् ॥ १६ ॥ दिवा यथा दीप्तिकरं तथैव तमोऽवगाढास्वपि तन्निशासु ॥ विचित्ररत्नद्युतिचारुतोया चतुःसमुद्रा[3]भरणोपपन्ना ॥ १७ ॥ मूल्यं न वा स्यादिति निश्चयो मे कृत्स्ना मही तस्य सुवर्णपूर्णा॥ हीनोऽपि यस्तल्लभते कदाचिद्विपाकयोगान्महतः शुभस्य ॥ १८ ॥ सापत्न्यहीनां स महीं समग्रां भुनक्ति तत्तिष्ठति यावदेव ॥ न केवलं तच्छुभकृन्नृपस्य भाग्यैः प्रजानामपि तस्य जन्म ॥ १९ ॥ तद्योजनानां परितः सहस्रं सर्वाननर्थान्विमुखी करोति ॥ नक्षत्रमालेव दिवो विशीर्णा दन्तावलिस्तस्य महासुरस्य ॥ २० ॥ विचित्रवर्णेषु विशुद्धवर्णा पयःसु पत्युः पयसां पपात॥ सम्पूर्णचन्द्रांशुकलापकान्तेर्मणिप्रवेकस्य महागुणस्य ॥ २१ ॥ तच्छुक्तिमत्सु स्थितिमाप बीजमासन्पुराऽप्यन्यभवानि यानि ॥ यस्मिन्प्रदेशेऽम्बुनिधौ पपात सुचारुमुक्तामणिरत्नबीजम् ॥ तस्मिन्पयस्तोयधरावकीर्णं शुक्तौ स्थितं मौक्तिकतामवाप ॥२२॥ सैंहलिकपारलौकिकसौराष्ट्रिकताम्रपर्णपारशवाः ॥ कौबेरपाण्ड्यहाटकहेमकमित्याकरास्त्वष्टौ ॥२३ ॥ शुक्त्युद्भवं नातिनिकृष्टवर्णं प्रमाणसंस्थानगुणप्रभाभिः ॥ उत्पद्यते वर्द्धनपारसीकपाताललोकान्तरसिंहलेषु ॥ २४ ॥ चिन्त्या न तस्याकरजा विशेषा रूपे प्रमाणे च यतेत विद्वान् ॥ न च व्यवस्थास्ति गुणागुणेषु सर्वत्र सर्वाकृतयो भवन्ति ॥ २५ ॥ एकस्य शुक्तिप्रभवस्य मुक्ताफलस्य चान्येन

---

१ विलम्बिलम्बै० । २ तिष्ठतिपूज्यमानम्० । ३ चातुःसमुद्राभवनाभिरामा० । ४ ताम्रपर्णपारसराः० ।

समुन्मितस्य ॥ मूल्यं सहस्राणि तु रूपकाणां त्रिभिः शतैरप्यधिकानि पंच ॥ २६ ॥ यन्माषकार्द्धेन ततो विहीनं तत्पंचभागद्वयहीनमूल्यम् ॥ यन्माषकांस्त्रीन्बिभृयात्सहस्रे द्वे तस्य मूल्यं परमं प्रदिष्टम् ॥ २७ ॥ अर्द्धाधिकौ द्वौ वहतोऽस्य मूल्यं त्रिभिः शतैरप्यधिकं सहस्रम् ॥ द्विमाषकोन्मानितगौरवस्य शतानि चाष्टौ कथितानि मूल्यम् ॥ २८ ॥ अर्द्धाधिकं माषकमुन्मितस्य समं च विंशात्रितयं शतानाम् ॥ गुंजाश्च षड् धारयतः शते द्वे मूल्यं परं तस्य वदन्ति तज्ज्ञाः ॥ अध्यर्द्धमुन्मान(प)कृतं शतं स्यान्मूल्यं गुणैस्तस्य समन्वितस्य ॥ २९ ॥ यदि षोडशभिर्भवेदनूनं धरणं तत्प्रवदन्ति दार्विकाख्यम ॥ अधिकं दशभिः शतं च मूल्यं समवाप्नोत्यपि बालिशस्य हस्तात् ॥ ३० ॥ द्विगुणैर्दशभिर्भवेदनूनं धरणं तद्धवकं वदन्ति तज्ज्ञाः ॥ नवसततिमाप्नुयात्स्वमूल्यं यदि न स्याद्गुणसम्पदा विहीनम् ॥ ३१ ॥ त्रिंशता धरणं पूर्णं शिक्यं तस्येति कीर्त्त्यते ॥ चत्वारिंशद्भवेत्तस्याः परं मूल्यं विनिश्चयः ॥ ३२ ॥ चत्वारिंशद् भवेत्तस्यास्त्रिंशन्मूल्यं लभेत सा ॥ पंचाशत्तु भवेत्सोमस्तस्य मूल्यं तु विंशतिः ॥ ३३ ॥ षष्टिर्निकरशीर्षं स्यात्तस्या मूल्यं चतुर्दश ॥ अशीतिर्नवतिश्चैव कूप्येति परिकीर्त्तिता ॥ एकादश स्यान्नव च तयोर्मूल्यमनुक्रमात् ॥ ३४ ॥ आदाय तत्सकलमेव ततोऽन्नभाण्डं जम्बीरजातरसयोजनया विपक्वम् ॥ घृष्टं ततो मृदुतनूकृतपिण्डमूलैः कुर्य्याद्यथेष्टमनु मौक्तिकमाशु विद्धम् ॥ ३५ ॥ मृल्लिप्तमत्स्यपुटमध्यगतं तु कृत्वा पश्चात्पचेत्तनु ततश्च बिडालपुटया ॥ दुग्धे ततः पयसि तं विपचेत्सुधायां पक्वं ततोऽपि पयसा शुचिचिक्कणेन ॥ ३६ ॥ शुद्धं ततो विमलवस्त्रनिघर्षणेन स्यान्मौक्तिकं विपुलसद्गुणकांतियुक्तम् ॥ व्याडिर्जगाद जगतां हि महाप्रभावः सिद्धो विदग्धहिततत्परया दयालुः ॥ ३७ ॥ श्वेतकाचसमं तारं हेमांशशतयोजितम् ॥ रसमध्ये प्रधार्य्येत मौक्तिकं देहभूषणम् ॥ ३८ ॥ एवं हि सिंहले देशे कुर्वन्ति कुशला जनाः ॥ यस्मिन्कृत्रिमसन्देहः क्वचिद्भवति मौक्तिके ॥ ३९ ॥ उष्णे सलवणे स्नेहे निशां तद्वासयेज्जले ॥ व्रीहिभिर्मर्दनीयं वा शुष्कवस्त्रोपवेष्टितम् ॥ ४० ॥ यत्तु नायाति वैवर्ण्यं विज्ञेयं तदकृत्रिमम् ॥ सितं प्रमाणवत्स्निग्धं गुरु स्वच्छं सुनिर्मलम् ॥ ४१ ॥ तेजोऽधिकं सुवृत्तं च मौक्तिकं गुणवत्स्मृतम् ॥ ४२ ॥ प्रमाणवद्गौरवरश्मियुक्तं सितं सुवृत्तं समसूक्ष्मवेधम् ॥ अकेतुरप्यावहति प्रमोदं यन्मौक्तिकं तद्गुणवत्प्रदिष्टम् ॥ ४३ ॥ एवं समस्तेन गुणोदयेन यन्मौक्तिकं योगमुपागतं स्यात् ॥ न तस्य भर्त्तारमनर्थजात एकोऽपि कश्चित् समुपैति दोषः ॥४४॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मुक्ताफलप्रमाणादिवर्णनं नाम मुक्ताफलपरीक्षा नामैकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

१ चत्वारिंशद्भवेच्छिक्या०।

सूत उवाच ॥ दिवाकरस्तस्य महामहिम्नो महासुरस्योत्तमरत्नबीजम् ॥ असृग्गृहीत्वा चरितुं प्रतस्थे निस्त्रिंशनीलेन नभःस्थलेन ॥ १ ॥ जेत्रा
सुराणां समरेष्वजस्रं वीर्य्यावलेपोद्धतमानसेन ॥ लंकाधिपेनार्द्धपथे समेत्य स्वर्भानुनेव प्रसभं निरुद्धः ॥ २ ॥ तस्िंहलीचारुनितम्बबिम्बविक्षो
भितागाधमहाह्रदायाम् ॥ पूगद्रुमाबद्धतटद्वयायां मुमोच सूर्य्यः सरिदुत्तमायाम् ॥ ३ ॥ ततः प्रभृति सा गंगा तुल्यपुण्यफलोदया ॥ नाम्ना रावण
गंगेति प्रथिमानमुपागता ॥ ४ ॥ ततः प्रभृत्येव च शर्वरीषु कूलानि रत्नैर्निचितानि तस्याः॥सुवर्णनाराचशतैरिवान्तर्बहिः प्रदीप्तैर्निशितानि भान्ति
॥ ५ ॥ तस्यास्तटेषूज्ज्वलचारुरागा भवन्ति तोयेषु च पद्मरागाः ॥ सौगन्धिकोत्थाः कुरुविन्दजाश्च महागुणाः स्फाटिकसंप्रसूताः ॥ ६ ॥ बन्धू
कगुंजासकलेन्द्रगोपजवासमासृक्समवर्णशोभाः ॥ भ्राजिष्णवो दाडिमबीजवर्णास्तथापरे किंशुकपुष्पभासः ॥ ७ ॥ सिन्दूरपद्मोत्पलकुंकुमानां
लाक्षारसस्यापि समानवर्णः ॥ सांद्रेऽपि रागे प्रभया स्वयैव भान्ति स्वलक्ष्याः स्फुटमध्यशोभाः ॥ ८ ॥ भानोश्च भासामनुवेधयोगमासाद्य रश्मि
प्रकरेण दूरम् ॥ पार्श्वानि सर्वाण्यनुरंजयंति गुणोपपन्नाः स्फटिकप्रसूताः ॥ ९ ॥ कुसुंभनीलव्यतिमिश्ररागप्रत्युग्ररक्ताम्बुजतुल्यभासः ॥ तथापरेऽ
रुष्कर[2]कण्टकारिपुष्पत्विषो हिंगुलवत्त्विषोऽन्ये ॥ १० ॥ चकोरपुंस्कोकिलसारसानां नेत्रावभासश्च भवन्ति केचित् ॥ अन्ये पुनः सन्ति च पुष्पि
तानां तुल्यत्विषः कोकनदोत्तमानाम् ॥ ११ ॥ प्रभावकाठिन्यगुरुत्वयोगैः प्रायः समानाः स्फटिकोद्भवानाम् ॥ आनीलरक्तोत्पलचारुभासः सौग
न्धिकोत्था मणयो भवन्ति ॥ १२ ॥ कामं तु रागः कुरुविन्दजेषु स नैव यादृक् स्फटिकोद्भवेषु ॥ निरर्चिषोऽन्तर्बहुला भवन्ति प्रभाववन्तोऽपि
नतैः समस्तैः ॥ १३ ॥ ये तु रावणगंगायां जायन्ते कुरुविन्दकाः ॥ पद्मरागघनं रागं बिभ्राणाः स्फटिकार्चिषः ॥ १४ ॥ वर्णानुयायिनस्तेषा
मान्ध्रदेशे तथा परे ॥ न जायन्ते हि ये केचिन्मूल्यलेशमवाप्नुयुः ॥१५॥ तथैव स्फाटिकोत्थानां देशे तुम्बुरुसंज्ञके ॥ सधर्माणः प्रजायन्ते स्वल्प
मूल्या हि ते स्मृताः ॥ १६ ॥ वर्णाधिक्यं गुरुत्वं च स्निग्धता समताच्छता ॥ अर्चिष्मत्ता महत्ता च मणीनां गुणसंग्रहः ॥ १७ ॥ ये कर्करच्छि
द्रमलोपदिग्धाः प्रभाविमुक्ताः परुषा विवर्णाः ॥ न ते प्रशस्ता मणयो भवंति समानतो जातिगुणैः समस्तैः ॥ १८ ॥ दोषोपसृष्टं मणिमप्रबोधाद्बि
भर्त्ति यः कश्चन कश्चिदेव ॥ तं शोकचिन्तामयमृत्युवित्तनाशादयो दोषगणा भजंते ॥ १९ ॥ कामं चारुतराः पंच जातीनां प्रतिरूपकाः ॥ विजा
तयः प्रयत्नेन विद्वांस्तानुपलक्षयेत् ॥ २० ॥ कलशपुरोद्भवसिंहलतुम्बुरुदेशोत्थमुक्तपाणीयाः ॥ श्रीपूर्णकाश्च सदृशा विजातयः पद्मरागाणाम् ॥२१॥

१ किंशुकवर्णभासः० । २ रुच्छुरकण० ।

तुषोपसर्गात्कलशाभिधानमाताम्रभावादपि तुम्बुहृत्थम्॥काष्ण्यात्तथा सिंहलदेशजातं मुक्ताभिधानं नभसः स्वभावात् ॥२२॥ श्रीपूर्णकं दीप्तिविनाकृत
त्वाद्विजातिलिंगाश्रय एव भेदः॥यस्ताम्रिकां पुष्यति पद्मरागो योगात्तुषाणामिव पूर्णमध्यः॥२३॥स्नेहप्रदिग्धः प्रतिभाति यश्च यो वा प्रघृष्टः प्रजहाति दी
प्तिम्॥आक्रान्तमूर्द्धा च तथाङ्गुलिभ्यां यः कालिकां पार्श्वगतां बिभर्त्ति॥२४॥संप्राप्य चोत्क्षिप्य यथानुवृत्तिं विभर्ति यः सर्वगुणानतीव॥तुल्यप्रमाणस्य
च तुल्यजातेर्यो वा गुरुत्वेन भवेत्तु तुल्यः॥प्राप्यापि रत्नाकरजा स्वजातिं लक्षेद्गुरुत्वेन गुणेन विद्वान्॥२५॥अप्रणश्यति सन्देहे शाणे तु परिलेखयेत्[1]॥
सु ( स्व ) जातकसमुत्थेन लिखित्वापि परस्परम ॥ २६ ॥ वज्रं वा कुरुविन्दं वा विमुच्यानेन केनचित् ॥ नाशक्यं लेखनं कर्त्तुं पद्मरागेन्द्रनीलयोः
॥२७॥जात्यस्य सर्वेऽपि मणेर्न जातु विजातयः सन्ति समानवर्णाः॥तथापि नानाकरणार्थमेव भेदप्रकारः परमः प्रदिष्टः॥२८॥गुणोपपन्नेन सहावबद्धो
मणिर्न धार्यो विगुणो हि जात्या॥न कौस्तुभेनापि सहावबद्धं विद्वान्विजातिं बिभृयात्कदाचित्॥२९॥चाण्डाल एकोऽपि यथा द्विजातीन्समेत्य भूरी
नपि हन्त्ययत्नात्॥अथो मणी न्भूरिगुणोपपन्नाञ्छक्नोति विप्लावयितुं विजात्यः॥३०॥सपत्नमध्येऽपि कृताधिवासं प्रमादवृत्तावपि वर्त्तमानम्॥ न पद्मरा
गस्य महागुणस्य भर्त्तारमापत्स्पृशतीह काचित्॥३१॥दोषोपसर्गप्रभवाश्च ये ते नोपद्रवास्तं समभिद्रवन्ति ॥ गुणैः समुत्तेजितचारुरागं यः पद्मरागं
प्रयतो बिभर्त्ति ॥ ३२ ॥ वज्रस्य यत्तण्डुलसंख्ययोक्तं मूल्यं समुत्पादितगौरवस्य ॥तत्पद्मरागस्य महागुणस्य तन्माषकल्पाकलितस्य मूल्यम् ॥३३॥
वर्णदीप्त्युपपन्नं हि मणिरत्नं प्रशस्यते ॥ ताभ्यामीषदपि भ्रष्टं मणिमूल्यात्प्रहीयते ॥ ३४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचा
रकाण्डे पद्मरागपरीक्षणं नाम सप्ततितमोऽध्यायः ॥ ७० ॥ सूत उवाच ॥ दानवाधिपतेः पित्तमादाय भुजगाधिपः ॥ द्विधा कुर्वन्निव व्योम सत्वरं
वासुकिर्ययौ ॥ १ ॥ स तदा स्वशिरोरत्नप्रभादीप्ते नभोऽम्बुधौ ॥ राजतः स महानेकः खण्डसेतुरिवाबभौ ॥ २ ॥ ततः पक्षनिपातेन संहरन्निव रोद
सी ॥ गरुत्मान्पन्नगेन्द्रस्य प्रहर्त्तुमुपचक्रमे ॥ ३ ॥ सहसैव मुमोच तत्फणीन्द्रः सुरसाभ्यक्ततुरुष्क ( रुष्क ) पादपायाम् ॥ कलिकाघनगन्धवासिता
यां वरमाणिक्यगिरेरुपत्यकायाम् ॥ ४ ॥ तस्य प्रपातसमनन्तरकालमेव तद्वद्वरालयमतीत्य रमासमीपे ॥ स्थानं क्षितेरुपपयोनिधितीरलेखं
तत्प्रत्ययान्मरकताकरतां जगाम ॥ ५ ॥ तत्रैव किञ्चित्पततस्तु पित्तादुपेत्य जग्राह ततो गरुत्मान् ॥ मूर्च्छापरीतः सहसैव घोणारन्ध्रद्वयेन
प्रमुमोच सर्वम् ॥ ६ ॥ तत्राकठोरशुककण्ठशिरीषपुष्पखद्योतपृष्ठचरशाद्वलशैवलानाम् ॥ कल्हारशष्पकभुजङ्गभुजाञ्च पत्रप्रातत्विषो मरकताः

[1] शालायांपरिलेखयेत्० ।

शुभदा भवन्ति ॥ ७ ॥ तद्यत्र भोगीन्द्रभुजाभियुक्तं पपात पित्तं दितिजाधिपस्य ॥ तस्याकरस्यातितरां स देशो दुःखोपल
भ्यश्च गुणैश्च युक्तः ॥ ८ ॥ तस्मिन्मरकतस्थाने यत्किञ्चिदुपजायते ॥ तत्सर्वं विषरोगाणां प्रशमाय प्रकीर्त्त्यते ॥ ९ ॥ सर्वमन्त्रौ
षधिगणैर्यन्न शक्यं चिकित्सितुम् ॥ महाहिदंष्ट्राप्रभवं विषं तत्तेन शाम्यति ॥ १० ॥ अन्यदप्याकरे तत्र यद्दोषैरुपवर्जितम् ॥ जायते तत्प
वित्राणामुत्तमं परिकीर्त्तितम् ॥ ११ ॥ अत्यन्तहरितवर्णं कोमलमर्चिर्विभेदजटिलं च ॥ काञ्चनचूर्णस्यान्तः पूर्णमिव लक्ष्यते यच्च ॥ १२ ॥ युक्तं
संस्थानगुणैः समरागं गौरवेण न विहीनम् ॥ सवितुः करसंस्पर्शाच्छुरयति सर्वाश्रमं दीप्त्या ॥ १३ ॥ हित्वा च हरितभावं यस्यान्तर्विनिहिता
भवेद्दीप्तिः ॥ अचिरप्रभाप्रभाहतनवशाद्वलसन्निभा भाति ॥ १४ ॥ यच्च मनसः प्रसादं विदधाति निरीक्ष्यमतिमात्रम् ॥ तन्मरकतं महागणमिति
रत्नविदां मनोवृत्तिः ॥ १५ ॥ वर्णस्याति विशुत्वाद्यस्यान्तःस्वच्छकिरणपरिधानम् ॥ सान्द्रस्निग्धविशुद्धं कोमलबर्हिप्रभादिसमकान्ति ॥ १६ ॥
वर्णोज्ज्वलया कान्त्या सान्द्राकारो विभासया भाति ॥ तदपि गुणवत्संज्ञामाप्नोति हि यादृशी पूर्वम् ॥ १७ ॥ शबलकठोरमलिनं रूक्षं पाषाणकर्क
रोपेतम् ॥ दिग्धं शिलाजतुना मरकतमेवंविधं विगुणम्॥१८॥ यत्सन्धिशोषितं रत्नमन्यन्मरकताद्भवेत् ॥ श्रेयस्कामैर्न तद्धार्य्यं क्रेतव्यं वा कथञ्चन
॥ १९ ॥ भल्लातकी पुत्रिका च तद्वर्णसमयोगतः ॥ मणेर्मरकतस्यैते लक्षणीया विजातयः ॥ २० ॥ क्षौमेण वाससा मृष्टा दीप्तिं त्यजति पुत्रिका ॥
लाघवेनैव काचस्य शक्या कर्त्तुं विभावना ॥ २१ ॥ कस्यचिदनेकरूपैर्मरकतमनुगच्छतोऽपि गुणवर्णैः ॥ भल्लातकस्यस्वनात्तु वैषम्यमुपैति वर्णस्य
॥२२॥ वज्राणि मुक्ताः सन्त्यन्ये ये च केचिद्द्विजातयः ॥ तेषां नाप्रतिबद्धानां भा भवत्यूर्द्धगामिनी ॥२३॥ऋजुत्वाच्चैव केषाञ्चित्कथञ्चिदुपजायते ॥
तिर्य्यगालोच्यमानानां सद्यश्चैव प्रणश्यति॥२४॥स्नानाचमनजप्येषु रक्षामन्त्रक्रियाविधौ ॥ददद्भिर्गोहिरण्यानि कुर्वद्भिः साधनानि च ॥ २५ ॥ दैवपि
त्र्यातिथेयेषु गुरुसंपूजनेषु च ॥ बाध्यमानेषु विविधैर्दोषजातैर्विषोद्भवैः ॥ २६ ॥ दोषैर्हीनं गुणैर्युक्तं काञ्चनप्रतियोजितम् ॥ संग्रामे विचरद्भिश्च धार्य्यं
मरकतं बुधैः॥२७॥तुलया पद्मरागस्य यन्मूल्यमुपजायते ॥ लभतेऽभ्यधिकं तस्माद्गुणैर्मरकतं युतम् ॥२८॥तथा च पद्मरागाणां दोषैर्मूल्यं प्रहीयते ॥
ततोऽस्याप्यधिका हानिर्दोषैर्मरकते भवेत् ॥२९॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे मरकतपरीक्षणं नामैकसप्ततितमोऽ
ध्यायः॥७१॥सूत उवाच॥तत्रैव सिंहलवधूकरपल्लवाग्रव्यालूनबाललवलीकुसुमप्रवाले॥देशे पपात दितिजस्य नितान्तकान्तं प्रोत्फुल्लनीरजसमद्युति नेत्र

१ तिबद्धत्वा० । २ यत्सन्धिशोषितं० । ३ भल्लातकीरसानां० ।

युग्मम्॥ १॥ तत्प्रत्ययादुभयशोभनवीचिभासा विस्तारिणी जलनिधेरुपकच्छभूमिः ॥ प्रोद्भिन्नकेतकवनप्रतिबद्धलेखासान्द्रेन्द्रनीलमणिरत्नवती विभाति ॥२॥ तत्रासिताब्जहलभृद्वसनासिभृंगशार्ङ्गायुधांगहरकण्ठकषायपुष्पैः॥शुष्केतरैश्च कुसुमैर्गिरिकर्णिकायास्तस्माद्भवन्ति मणयः सदृशावभासः ॥ ३ ॥ अन्ये प्रसन्नपयसः पयसां निधातुरम्बुत्विषः शिखिगणप्रतिमास्तथान्ये ॥ नीलीरसप्रभववुद्‌बुदभाश्च केचित्केचित्तथा समदकोकिलकण्ठभासः ॥ ॥ ४ ॥ एकप्रकारा विस्पष्टवर्णशोभावभासिनः ॥ जायन्ते मणयस्तस्मिन्निन्द्रनीला महागुणाः ॥ ५ ॥ मृत्पाषाणशिलारन्ध्रकर्करात्राससंयुताः ॥ अभ्रिकापटलच्छायावर्णदोषैश्च दूषिताः ॥ ६ ॥ तत एव हि जायन्ते मणयस्तत्र भूरयः ॥ शास्त्रसम्बोधितधियस्तान्प्रशंसन्ति सूरयः ॥ ७ ॥ धार्य्यमाणस्य ये दृष्टा पद्मरागमणेर्गुणाः ॥ धारणादिन्द्रनीलस्य तानेवाप्नोति मानवः ॥ ८ ॥ यथा च पद्मरागाणां जातकन्त्रितयं भवेत् ॥ इन्द्र नीलेष्वपि तथा द्रष्टव्यमविशेषतः ॥ ९ ॥ परीक्षाप्रत्ययैर्यैश्च पद्मरागः परीक्ष्यते ॥ त एव प्रत्यया दृष्टा इन्द्रनीलमणेरपि ॥ १० ॥ यावन्तं च क्रमेदग्निं पद्मरागोपयोगतः ॥ इन्द्रनीलमणिस्तस्मात्क्रमेत सुमहत्तरम् ॥ ११ ॥ तथापि न परीक्षार्थं गुणानामभि ( ति ) वृद्धये ॥ मणिरग्नौ समाधेयः कथञ्चिदपि कश्चन ॥ १२ ॥ अग्निमात्रापरिज्ञाने दाहदोषैश्च दूषितः ॥ सोऽनर्थाय भवेद्भर्त्तुः कर्त्तुः कारयितुस्तथा ॥ १३ ॥ काचोत्पलकरवीरस्फटिकाद्या इह बुधैः सवैदूर्य्याः ॥ कथिता विजातय इमे सदृशा मणिनेन्द्रनीलेन ॥ १४ ॥ गुरुभावकठिनभावावेतेषां नित्यमेव विज्ञेयौ ॥ काचाद्यथावदुत्तरविवर्द्धमानौ विशेषेण ॥ १५ ॥ इन्द्रनीलो यथा कश्चिद्बिभर्त्याताम्रवर्णताम् ॥ रक्षणीयौ तथा ताम्रौ करवीरोत्पलावुभौ ॥ १६ ॥ यस्य मध्यगता भाति नीलस्येन्द्रायुधप्रभा ॥ तमिन्द्रनीलमित्याहुर्महार्हं भुवि दुर्लभम् ॥ १७ ॥ यस्य वर्णस्य भूयस्त्वात्क्षीरे शतगुणे स्थितः ॥ नीलतां तन्नयेत्सर्वं महानीलः स उच्यते ॥ १८॥ यत्पद्मरागस्य महागुणस्य मूल्यं भवेन्माषसमुन्मितस्य॥ तदिन्द्रनीलस्य महागुणस्य सुवर्णसंख्यातुलितस्य मूल्यम् ॥ १९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे इन्द्रनीलपरीक्षणं नाम द्विसप्ततितमोऽध्यायः ॥७२॥ सूत उवाच॥ वैदूर्य्यपुष्परागाणां कर्कैते भीष्मके वदे॥ परीक्षां ब्रह्मणा प्रोक्तां व्यासेन कथितां द्विज॥ १॥ कल्पान्तकालक्षुभिताम्बुराशेर्निर्ह्रादकल्पाद्दितिजस्य नादात् ॥ वैदूर्य्यमुत्पन्नमनेकवर्णं शोभाभिरामद्युतिवर्णबीजम् ॥ २ ॥ अविदूरे विदूरस्य गिरेरुत्तुंगरोधसः॥ कामभूतिकसीमानमनु तस्याकरोभवत् ॥३॥ तस्य नादसमुत्थत्वादाकरः सुमहागुणः ॥ अभूदुत्तारितो लोके लोकत्रयविभूषणः ॥ ४ ॥ तस्यैव दानवपतेर्निनदानुरूपाः प्रावृट्पयोदवरदर्शितचारुरूपाः ॥ वैदूर्य्यरत्नमणयो विविधावभासस्तस्मात्स्फुलिंगनिवहा इव संबभूवुः ॥ ५ ॥ पद्मरागमुपादाय मणिवर्णा हि ये क्षितौ ॥ सर्वांस्तान्वर्ण

शोभाभिर्वैदूर्य्यमनुगच्छति ॥ ६ ॥ तेषां प्रधानं शिखिकण्ठनीलं यद्वा भवेद्वेणुदलप्रकाशम् ॥ चाषाग्रपक्षप्रतिमश्रियो ये न ते प्रशस्ता मणिशास्त्रविद्भिः ॥ ७ ॥ गुणवान्वैदूर्य्यमणिर्योजयति स्वामिनं परभा (भो) ग्यैः ॥ दोषैर्युक्तो दोषैस्तस्माद्यत्नात्परीक्षेत ॥ ८ ॥ गिरिकाचशिशुपालौ काचस्फटिकाश्च धूमनिर्भिन्नाः ॥ वैदूर्य्यमणेरेते विजातयः सन्निभाः सन्ति ॥ ९ ॥ लिख्याभावात्काचं लघुभावाच्छैशुपालकं विद्यात् ॥ गिरिकाचसदीतित्वात्स्फटिकं वर्णोज्ज्वलत्वेन ॥ १० ॥ यदिन्द्रनीलस्य महागुणस्य सुवर्णसंख्याकलितस्य मूल्यम् ॥ तदेव वैदूर्य्यमणेः प्रदिष्टं पलद्वयोन्मापितगौरवस्य ॥ ११ ॥ जात्यस्य सर्वेऽपि मणेस्तु यादृग्विजातयः सन्ति समानवर्णाः ॥ तथापि नानाकरणानुमेयभेदप्रकारः परमः प्रदिष्टः ॥ १२ ॥ सुखोपलक्ष्यश्च सदा विचार्य्यो ह्ययं प्रभेदो विदुषा नरेण ॥ स्नेहप्रभेदो लघुता मृदुत्वं विजातिलिंगं खलु सार्वजन्यम् ॥ १३ ॥ कुशलाकुशलैः प्रपूर्य्यमाणाः प्रतिबद्धाः प्रतिसत्क्रियाप्रयोगैः॥गुणदोषसमुद्भवं लभन्ते मणयोऽर्थान्तरमूल्यमेव भिन्नाः ॥ १४ ॥ क्रमशः समतीतवर्त्तमानाः प्रतिबद्धा मणिबन्धकेन यत्नात् ॥ यदि नाम भवन्ति दोषहीना मणयः षड्गुणमाप्नुवन्ति मूल्यम् ॥ १५ ॥ आकरान्समतीतानामुदधेस्तीरसन्निधौ ॥ मूल्यमेतन्मणीनां तु न सर्वत्र महीतले ॥ १६ ॥ सुवर्णो मनुना यस्तु प्रोक्तः षोडशमाषकः ॥ तस्य सप्ततिमो भागः संज्ञारूपं करिष्यति ॥ १७ ॥ शाणश्चतुर्माषमानो माषकः पंचकृष्णलः ॥ पलस्य दशमो भागो धरणः परिकीर्त्तितः ॥१८॥ इत्थं मणिविधिः प्रोक्तो रत्नानां मूल्यनिश्चये ॥ १९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैदूर्य्यपरीक्षणं नाम त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ ॥ सूत उवाच ॥ पतितायाः हिमाद्रौ तु त्वचस्तस्य सुरद्विषः ॥ प्रादुर्भवन्ति ताभ्यस्तु पुष्प(ष्य)रागा महागुणाः ॥१॥ आपीतपाण्डुरुचिरः पाषाणः पद्मरागसंज्ञस्तु॥ कौकण्टकनामा स्यात्स एव यदि लोहितापीतः ॥ २ ॥ आलोहितस्तु पीतः स्वच्छः काषायकः स एवोक्तः ॥ आनीलशुक्लवर्णः स्निग्धः सोमाल(न)कः सगुणः ॥ ३ ॥ अत्यन्तलोहितो यः स एव खलु पद्मरागसंज्ञः स्यात् ॥ अपि चेन्द्रनीलसंज्ञः स एव कथितः सुनीलः सन् ॥ ४ ॥ मूल्यं वैदूर्य्यमणेरिव गदितं ह्यस्य रत्नसारविदा ॥ धारणफलं च तद्वत्किं तु स्त्रीणां सुतप्रदो भवति ॥ ५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पुष्परागपरीक्षणं नाम चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ सूत उवाच ॥ वायुर्नखान्दैत्यपतेर्गृहीत्वा चिक्षेप सत्पद्मवनेषु हृष्टः ॥ ततः प्रसूतं पवनोपपन्नं कर्केतनं पूज्यतमं पृथिव्याम् ॥ १ ॥ वर्णेन तद्रुधिरसोममधुप्रकाशमाताम्रपीतदहनोज्ज्वलितं विभाति ॥

१ कौरण्डकनामा० । २ रत्नशास्त्रवि०

नीलं पुनः खलु सितं परुषं विभिन्नं व्याध्यादिदोषकरणेन च तद्विभाति ॥ २ ॥ स्निग्धा विशुद्धाः समरागिणश्च आपीतवर्णा गुरवो विचित्राः ॥ त्रा
सव्रणव्यालविवर्जिताश्च कर्केतनास्ते परमं पवित्राः ॥ ३ ॥ पत्रेण कांचनमयेन तु वेष्टयित्वा ततं यदा हुतवहे भवति प्रकाशम् ॥ रोगप्रणाशनकरं क
लिनाशनं तदायुष्करं कुलकरं च सुखप्रदं च ॥ ४ ॥ एवंविधं बहुगुणं मणिमावहन्ति कर्केतनं शुभमलङ्कृतये नरा ये ॥ ते पूजिता बहुधना बहुबा
न्धवाश्च नित्योज्ज्वलाः प्रमुदिता अपि ते भवन्ति ॥ ५ ॥ एकेऽपनह्य विकृताकुलनीलभासः प्रम्लानरागलुलिताः कलुषा विरूपाः ॥ तेजोऽतिदीप्ति
कुलपुष्टिविहीनवर्णाः कर्केतनस्य सदृशं वपुरुद्वहन्ति ॥ ६ ॥ कर्केतनं यदि परीक्षितवर्णरूपं प्रत्यग्रभास्वरदिवाकरसुप्रकाशम् ॥ तस्योत्तमस्य मणि
शास्त्रविदां महिम्ना तुल्यं तु मूल्यमुदितं तुलितस्य कार्य्यम् ॥ ७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कर्केतनपरीक्षणं
नाम पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥ सूत उवाच ॥ हिमवत्युत्तरदेशे वीर्य्यं पतितं सुरद्विषस्तस्य ॥ संप्राप्तमुत्तमानामाकरतां भीष्मरत्नानाम् ॥ १ ॥
शुक्लाः शंखाब्जनिभाः स्योनाकसंन्निभा प्रभावन्तः ॥ प्रभवन्ति ततस्तरुणा वज्रनिभा भीष्मपाषाणाः ॥२॥ हेमाद्रिप्रतिबद्धाः शुद्धमपि श्रद्धया विधत्ते
यः ॥ भीष्ममणिं ग्रीवादिषु सुसम्पदं स सर्वदा लभते ॥ ३ ॥ निरीक्ष्य पलायन्ते यं तमरण्यनिवासिनः समीपेऽपि ॥ द्वीपिवृकशरभकुञ्जरसिंहव्या
घ्रादयो हिंस्राः ॥ ४ ॥ तस्योत्कलतष्टतरोर्भवति भयं न चास्तीशमुपहसन्ति ॥ भीष्ममणिर्गुणयुक्तो सम्यक्प्राप्तांगुलीकलत्रत्वः ॥ ५ ॥
पितृतर्पणे पितॄणां तृप्तिर्बहुवार्षिकी भवति ॥ शाम्यन्त्यद्भुतान्यपि सर्पाण्डजाखुवृश्चिकविषाणि ॥ सलिलाग्निवैरितस्करभयानि भीमानि
नश्यन्ति ॥ ६ ॥ शैवलबलाहकाभं पुरुषं पीतप्रभं प्रभाहीनम् ॥ मलिनद्युति च विवर्णं दूरात्परिवर्जयेत्प्राज्ञः ॥ ७ ॥ मूल्यं प्रकल्प्यमेषां
विबुधवरैर्देशकालविज्ञानात् ॥ दूरे भूतानां बहु किंचिन्निकटप्रसूतानाम् ॥ ८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे
वैदूर्य्यपरीक्षणं नाम षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ सूत उवाच ॥ पुण्येषु पर्वतवरेषु च निम्नगासु स्थानान्तरेषु च तथोत्तरदेशगत्वात् ॥ संस्था
पिताः स्वनखबाहुगतेः प्रकाशं संपूज्य दानवपतिं प्रथिते प्रदेशे ॥ १ ॥ दाशार्णवागदर ( व )मेकलकालगादौ गुञ्जाञ्जनक्षौद्रमृणालवर्णाः ॥
गन्धर्ववह्निकदलीसदृशावभासा एते प्रशस्ताः पुलकाः प्रसूताः ॥ २ ॥ शंखाब्जभृङ्गार्कविचित्रभङ्गा सूत्रैरु(र्व्य) पेताः परमाः पवित्राः ॥
मङ्गल्ययुक्ता बहुभक्तिचित्रा वृद्धिप्रदास्ते पुलका भवन्ति ॥ ३ ॥ काका ( क ) श्वरासभसृगालवृकोग्ररूपैर्गृध्रैः समांसरुधिरार्द्रमुखैरुपेताः ॥ मृत्युप्र

१ सोनोकासन्नि० । २ विषमाणोभान्तेये० । ३ तस्योत्कतकतरोर्भवति भयं नचासीनि समुच्छतम्० । ४ भीष्ममणेर्गुणयुक्त्यै० । ५ संस्थापिताश्चनखराभजगैः प्रका० ।

दाश्च विदुषा परिवर्जनीया मूल्यं पलस्य कथितं च शतानि पञ्च ॥ ४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पुलकप रीक्षणं नाम सप्तसप्ततितमोऽध्यायः ॥७७॥ ॥ सूत उवाच ॥ हुतभुग्रूपमादाय दानवस्य यथेप्सितम् ॥ नर्मदायां निचिक्षेप किञ्चिद्धीनादिभूमि षु ॥ १ ॥ तत्रेन्द्रगोपकलितं शुकवक्रवर्णं संस्थानतः प्रकटपीलुसमानमात्रम्॥नानाप्रकारविहितं रुधिराक्ष(ख्य)रत्नमुद्धृत्य तस्य खलु सर्वसमान मेव ॥ २ ॥ मध्येन्दुपाण्डुरमतीव विशुद्धवर्णं तच्चेन्द्रनीलसदृशं पटलं तुले स्यात् ॥ सैश्वर्य्यभृत्यजननं कथितं तदैव पक्कञ्च तत्किल भवेत्सुरवज्र वर्णम् ॥ ३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे रुधिराक्षरत्नपरीक्षणं नामाष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ ॥ सूत उवाच ॥ कावेरविन्ध्ययवनचीननेपालभूमिषु ॥ लाङ्गली व्यकिरन्मेदो दानवस्य प्रयत्नतः ॥ १ ॥ आकाशशुद्धं तैलाख्यमुत्पन्नं स्फटिकं ततः ॥ मृणालशङ्खधवलं किञ्चिद्वर्णान्तरान्वितम् ॥ २ ॥ न तत्तुल्यं हि रत्नानामथवा पापनाशनम्॥ संस्कृतं शिलिपना सद्यो मूल्यं किञ्चिल्लभेत्ततः (दा)॥३॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे स्फटिकपरीक्षणं नामैकोनाशीतितमोऽध्यायः ॥ ७९ ॥ ॥ सूत उवाच ॥ आदाय शेषस्तस्यान्त्रं बलस्य केरलादिषु ॥ चिक्षेप तत्र जायन्ते विद्रुमाः सुमहागुणाः ॥ १ ॥ तत्र प्रधानं शशलोहिताभं गुञ्जाजपापुष्पनिभं प्रदिष्टम् ॥ सुनीलकं देवकरोमकञ्च स्थानानि तेषु प्रभवं सुरागम् ॥२॥ अन्यत्र जातं च न तत्प्रधानं मूल्यं भवेच्छिलिपविशेषयोगात् ॥ प्रसन्नं कोमलं स्निग्धं सुरागं विद्रुमं हि तत्॥३॥ धनधान्यकरं लोके विषार्त्तिभयनाशनम् ॥ परीक्षा पुलकस्योक्ता रुधिराक्षस्य वै मणेः ॥ स्फटिकस्य विद्रुमस्य रत्नज्ञानाय शौनक ! ॥ ४ ॥ इति श्रीरुगाडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विद्रुमपरीक्षणं नामाशीतितमोऽध्यायः ॥ ८० ॥ ( इति रत्नमुक्तादि परीक्षा समाप्ता ) ॥ ॥ ( अथ तीर्थक्षेत्रमाहात्म्यमारभ्यते ) ॥ ॥ सूत उवाच ॥ सर्वतीर्थानि वक्ष्यामि गङ्गा तीर्थोत्तमोत्तमा ॥ सर्वत्र सुलभा गङ्गा त्रिषु स्थानेषु दुर्लभा ॥ १ ॥ गङ्गाद्वारे प्रयागे च गङ्गासागरसङ्गमे ॥ प्रयागं परमं तीर्थं मृतानां भुक्तिमुक्तिदम् ॥ २ ॥ सेवनात्कृतपिण्डानां पापजित्कामदं नृणाम् ॥ वाराणसी परं तीर्थं विश्वेशो यत्र केशवः ॥ ३ ॥ कुरुक्षेत्रं परं तीर्थं दानाद्यैर्भुक्तिमुक्तिदम् ॥ प्रभासं परमं तीर्थं सोमनाथो हि तत्र च ॥ ४ ॥ द्वारका च पुरी रम्या भुक्तिमुक्तिप्रदायिका ॥ प्राची सरस्वती पुण्या सप्तसारस्वतं परम् ॥ ५ ॥ केदारं सर्वपापघ्नं स ( श ) म्भलग्राम उत्तमः ॥ नरनारायणं तीर्थं मुक्त्यै बदरिकाश्रमः ॥ ६ ॥ श्वेतद्वीपं पुरी माया नैमिषं पुष्करं परम् ॥ अयोध्या चार्घ्यतीर्थं तु चित्रकूटं च गोमती ॥ ७ ॥

१ शेषस्तस्याशु यमास्याकम्बलादिषु० ।

वैनायकं महातीर्थं रामगिर्य्याश्रमं परम् ॥ काञ्चीपुरी[1] तुङ्गभद्रा श्रीशैलं सेतुबन्धनम्[2] ॥ ८ ॥ रामेश्वरं परं तीर्थं कार्त्तिकेयं तथोत्तमम् ॥ भृगुतुङ्गं कामतीर्थं तीर्थं चामरकंटकम् ॥ ९ ॥ उज्जायिन्यां महाकालः कुब्जके श्रीधरो हरिः ॥ कुब्जाम्रकं महातीर्थं कालसर्पिश्च कामदम् ॥ १० ॥ महाकेशी च कावेरी चन्द्रभागा विपाशया ॥ एकाम्रं च तथा तीर्थं ब्रह्मेशं देवकोटकम् ॥११॥ मथुरा च पुरी रम्या शोणश्चैव महानदः ॥ जम्बूसरो महातीर्थं तानि तीर्थानि विद्धि च ॥१२॥ सूर्य्यः शिवो गणो देवी हरिर्यत्र च तिष्ठति ॥ एतेषु च यथान्येषु स्नानं दानं जपस्तपः ॥ १३ ॥ पूजा श्राद्धं पिण्डदानं सर्वं भवति चाक्षयम् ॥ शालग्रामं सर्वदं स्यात्तीर्थं पशुपतेः परम् ॥ १४ ॥ कोकामुखं च वाराहं भा ( भु ) ण्डीरं स्वामिसंज्ञकम् ॥ लो ( मो ) हदण्डे महाविष्णुर्मन्दारे मधुसूदनः ॥ १५॥ कामरूपं महातीर्थं कामाख्या ( क्षा ) यत्र तिष्ठति ॥ पुण्ड्रवर्द्धनकं तीर्थं कार्त्तिकेयश्च यत्र च ॥ १६ ॥ विरजस्तु महातीर्थं तीर्थं श्रीपुरुषोत्तमम् ॥ महेन्द्रपर्वतस्तीर्थं कावेरी च नदी परा ॥१७॥ गोदावरी महातीर्थं पयोष्णी वरदा नदी॥ विन्ध्यः पापहरं तीर्थं नर्मदाभेद उत्तमः ॥ १८ ॥ गोकर्णं परमं तीर्थं तीर्थं माहिष्मती पुरी ॥ कालञ्जरं महातीर्थं शुक्रतीर्थमनुत्तमम् ॥ १९ ॥ कृते शौचे मुक्तिदं च शार्ङ्गधारी तदन्तिके ॥ विरजं सर्वदं तीर्थं स्वर्णाक्षं तीर्थमुत्तमम् ॥ २० ॥ नन्दितीर्थं मुक्तिदं च कोटितीर्थफलप्रदम् ॥ नासिक्यं च महातीर्थं गोवर्द्धनमतः परम् ॥ २१ ॥ कृष्णवेणी भीमरथी गण्डकी या त्विरावती ॥ तीर्थं बिन्दुसरः पुण्यं विष्णुपादोदकं परम् ॥ २२ ॥ ब्रह्मध्यानं परं तीर्थं तीर्थमिन्द्रियनिग्रहः ॥ दमस्तीर्थं तु परमं भावशुद्धिः परं तथा ॥ २३ ॥ ज्ञानह्रदे ध्यानजले रागद्वेषमलापहे ॥ यः स्नाति मानसे तीर्थे स याति परमां गतिम् ॥ २४ ॥ इदं तीर्थमिदं नेति ये नरा भेददर्शिनः ॥ तेषां विधीयते तीर्थगमनं तत्फलं च यत् ॥ २५ ॥ सर्वं ब्रह्मेति योऽवेति नातीर्थं तस्य किञ्चन ॥ एतेषु स्नानदानानि श्राद्धं पिण्डमथाक्षयम् ॥ २६ ॥ सर्वा नद्यः सर्वशैलाः तीर्थं देवादिसेवितम् ॥ श्रीरंगं च हरेस्तीर्थं तापी श्रेष्ठा महानदी ॥ २७ ॥ सप्तगोदावरं तीर्थं तीर्थं कोणगिरिः परम् ॥ महालक्ष्मीर्यत्र देवी प्रणीता परमा नदी ॥ २८ ॥ सह्याद्रौ देवदेवेश एकवीरः सुरेश्वरी ॥ गंगाद्वारे कुशावर्त्ते विन्ध्यके नीलपर्वते ॥ २९ ॥ स्नात्वा कनखले तीर्थे स भवेन्न पुनर्भवे ॥ सूत उवाच ॥ एतान्यन्यानि तीर्थानि स्नानाद्यैः सर्वदानि हि ॥ ३० ॥ श्रुत्वाऽब्रवीद्धरेर्ब्रह्मा व्यासं दक्षादिसंयुतम् ॥ एतान्युक्त्वा च तीर्थानि पुनस्तीर्थोत्तमोत्तमम् ॥ गयाख्यं प्राह सर्वेषामक्षयं ब्रह्मलोकदम् ॥ ३१ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सर्वतीर्थ

१ कान्तिः पुरी० । २ नलसेतुम्० ।

माहात्म्यं नामैकाशीतितमोऽध्यायः ॥ ८१ ॥ श्रीगणेशाय नमः॥ ( अथ गयामाहात्म्यं प्रारभ्यते ) ॥ ब्रह्मोवाच ॥ सारात्सारतरं व्यास गयामाहात्म्य
मुत्तमम् ॥ प्रवक्ष्यामि समासेन भुक्तिमुक्तिप्रदं शृणु ॥ १ ॥ गयासुरोऽभवत्पूर्वं वीर्य्यवान्परमः स च ॥ तपस्तप्यन्महाघोरं सर्वभूतोपतापनम् ॥ २ ॥
तत्तपस्तापिता देवास्तद्वधार्थं हरिं गताः ॥ शरणं हरिरूचे तान् भवितव्यं शिवात्मभिः ॥ ३ ॥ पात्यतेऽस्य महादेहो तथेत्यूचुः सुरा हरिम् ॥
कदाचिच्छिवपूजार्थं क्षीराब्धेः कमलानि च ॥ ४ ॥ आनीय कीकटे देशे शयनं चाकरोद्बली ॥ विष्णुमायाविमूढोऽसौ गदया विष्णुना हतः ॥ ५ ॥
अतो गदाधरो विष्णुर्गयायां मुक्तिदः स्थितः ॥ तस्य देहो लिङ्गरूपी स्थितः शुद्धे पितामहः ॥ ६ ॥ जनार्दनश्च कालेशस्तथान्यः प्रपितामहः ॥
विष्णुराहाथ मर्य्यादां पुण्यक्षेत्रं भविष्यति ॥ ७ ॥ यज्ञं श्राद्धं पिण्डदानं स्नानादि कुरुते नरः ॥ स स्वर्गं ब्रह्मलोकं च गच्छेन्न नरकं नरः ॥ ८ ॥
गयातीर्थं परं ज्ञात्वा यागं चक्रे पितामहः ॥ ब्राह्मणान्पूजयामास ऋत्विगर्थमुपागतान् ॥ ९ ॥ महानदीं रसवहां सृष्ट्वा वाप्यादिकं तथा ॥
भक्ष्यभोज्यफलादींश्च कामधेनुं तथासृजत् ॥ १० ॥ पञ्चक्रोशं गयाक्षेत्रं ब्राह्मणेभ्यो ददौ प्रभुः ॥ धर्मयागेषु लोभात्तु प्रतिगृह्य धनादिकम् ॥ ११ ॥
स्थिता विप्रास्तदा शप्ता गयायां ब्राह्मणास्ततः ॥ मा भूत्त्रैपुरुषी विद्या मा भूत्त्रैपुरुषं धनम् ॥ १२ ॥ युष्माकं स्याद्वारिवहा नदी पाषाणपर्वतः ॥
शप्तैस्तु प्रार्थितो ब्रह्मानुग्रहं कृतवान्प्रभुः ॥ १३ ॥ लोकाः पुण्या गयायां हि श्राद्धिनो ब्रह्मलोकगाः ॥ युष्मान्ये पूजयिष्यन्ति तैरहं पूजितः सदा
॥ १४ ॥ ब्रह्मज्ञानं गयाश्राद्धं गोगृहे मरणं तथा ॥ वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥ १५ ॥ समुद्राः सरितः सर्वा वापीकूपह्रदास्तथा ॥
स्नातुकामा गयातीर्थं व्यास यान्ति न संशयः ॥ १६ ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ॥ पापं तत्संगजं सर्वं गयाश्राद्धाद्विनश्यति ॥१७॥
असंस्कृता मृता ये च पशुचोरहताश्च ये ॥ सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति ते ॥ १८ ॥ गयायां पिण्डदानेन यत्फलं लभते नरः ॥
न तच्छक्यं मया वक्तुं वर्षकोटिशतैरपि ॥ १९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गयामाहात्म्यं नाम द्व्यशीतितमोऽ
ध्यायः ॥ ८२ ॥ ॥ ब्रह्मोवाच॥कीकटेषु गया पुण्या पुण्यं राजगृहं वनम् ॥ विषयश्चारणः पुण्यो नदीनां च पुनःपुना ॥ १ ॥ मुण्डपृष्ठं तु पूर्व
स्मिन्पश्चिमे दक्षिणोत्तरे ॥ सार्द्धक्रोशद्वयं मानं गयायां परिकीर्त्तितम् ॥ २ ॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः ॥ तत्र पिण्डप्रदानेन तृप्तिर्भव
ति शाश्वती ॥ ३ ॥ नगाज्जनार्दनाच्चैव कूपाच्चोत्तरमानसात् ॥ एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥ ४ ॥ तत्र पिण्डप्रदानेन पितॄणां परमा
गतिः ॥ गयागमनमात्रेण पितॄणामनृणो भवेत् ॥ ५ ॥ गयायां पितृरूपेण देवदेवो जनार्दनः ॥ तं दृष्ट्वा पुण्डरीकाक्षं मुच्यते वै ऋणत्रयात्॥६॥

रथमार्गे गयातीर्थे दृष्ट्वा रुद्रपदादिके ॥ कालेश्वरं च केदारं पितॄणामनृणो भवेत् ॥ ७ ॥ दृष्ट्वा पितामहं देवं सर्वपापैः प्रमुच्यते ॥ लोकं त्वनामयं याति दृष्ट्वा च प्रपितामहम् ॥ ८ ॥ तथा गदाधरं देवं माधवं पुरुषोत्तमम् ॥ तं प्रणम्य प्रयत्नेन न भूयो जायते नरः ॥ ९ ॥ मौनादित्यं महात्मानं कनकार्कं विशेषतः ॥ दृष्ट्वा मौनेन विप्रर्षे पितॄणामनृणो भवेत् ॥ १० ॥ ब्रह्माणं पूजयित्वा च ब्रह्मलोकमवाप्नुयात् ॥ गायत्रीं प्रातरुत्थाय यस्तु पश्यति मानवः ॥ ११ ॥ सन्ध्यां कृत्वा प्रयत्नेन सर्ववेदफलं लभेत् ॥ सावित्रीं चैव मध्याह्ने दृष्ट्वा यज्ञफलं लभेत् ॥ १२ ॥ सरस्वतीं च सायाह्ने दृष्ट्वा दानफलं लभेत् ॥ नगस्थमीश्वरं दृष्ट्वा पितॄणामनृणो भवेत् ॥ १३ ॥ धर्मारण्यं धर्ममीशं दृष्ट्वा स्यादृणनाशनम् ॥ देवं गृध्रेश्वरं दृष्ट्वा को न मुच्येत बन्धनात् ॥ १४ ॥ धेनुं दृष्ट्वा धेनुवने ब्रह्मलोकं नयेत्पितॄन् ॥ प्रभासेशं प्रभासे च दृष्ट्वा याति परां गतिम् ॥ १५ ॥ कोटीश्वरं चाश्वमेधं दृष्ट्वा स्यादृणनाशनम् ॥ स्वर्गद्वारेश्वरं दृष्ट्वा मुच्यते भवबन्धनात् ॥ १६ ॥ रामेश्वरं गदालोलं दृष्ट्वा स्वर्गमवाप्नुयात् ॥ ब्रह्मेश्वरं तथा दृष्ट्वा मुच्यते ब्रह्महत्यया ॥ १७ ॥ मुण्डपृष्ठे महाचण्डीं दृष्ट्वा कामानवाप्नुयात् ॥ फल्ग्वीशं फल्गुचण्डीं च गौरीं दृष्ट्वा च मङ्गलाम् ॥ १८ ॥ गोमकं गोपतिं देवं पितॄणामनृणो भवेत् ॥ अङ्गारेशं च सिद्धेशं गयादित्यं गजं तथा ॥ १९ ॥ मार्कण्डेयेश्वरं दृष्ट्वा पितॄणामनृणो भवेत् ॥ फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ॥ २० ॥ एतेन किं न पर्याप्तं नृणां सुकृतकारिणाम् ॥ ब्रह्मलोकं प्रयान्तीह पुरुषा एकविंशतिः ॥ २१ ॥ पृथिव्यां यानि तीर्थानि ये समुद्राः सरांसि च ॥ फल्गुतीर्थं गमिष्यन्ति वारमेकं दिनेदिने ॥२२॥ पृथिव्यां च गया पुण्या गयायां च गयाशिरः ॥ श्रेष्ठं तथा फल्गुतीर्थं तन्मुखं च सुरस्य हि ॥ २३ ॥ उदीचि कनकानद्यो नाभितीर्थं तु मध्यतः ॥ पुण्यं ब्रह्मसदस्तीर्थं स्नानात्स्याद्ब्रह्मलोकदम् ॥ २४ ॥ कूपे पिण्डादिकं कृत्वा पितॄणामनृणो भवेम् ॥ तथाक्षयवटे श्राद्धी ब्रह्मलोकं नयेत्पितॄन् ॥ २५ ॥ हंसतीर्थे नरः स्नात्वा सर्वपापैः प्रमुच्यते ॥ कोटितीर्थ गयालोले वैतरण्यां च गोमके ॥ २६ ॥ ब्रह्मलोकं नयेच्छ्राद्धी पुरुषानेकविंशतिम् ॥ ब्रह्मतीर्थे रामतीर्थे आग्नेये सोमतीर्थके ॥ २७ ॥ श्राद्धी रामह्रदे ब्रह्मलोकं पितृकुलं नयेत् ॥ उत्तरे मानसे श्राद्धी न भूयो जायते नरः ॥ २८ ॥ दक्षिणे मानसे श्राद्धी ब्रह्मलोकं पितॄन्नयेत्॥स्वर्गद्वारे नरः श्राद्धी ब्रह्मलोकं नयेत्पितॄन् ॥ भीष्मतर्पणकृत्तस्य कूटे तारयते [1]पितॄन् ॥ गृध्रेश्वरे तथा श्राद्धो पितॄणामनृणो भवेत् ॥ २९ ॥ श्राद्धी च धेनुकारण्ये ब्रह्मलोकं पितॄन्नयेत ॥ तिलधेनुप्रदः स्नात्वा दृष्ट्वा धेनुं न संशयः ॥ ३० ॥

१ वटे श्राद्धं ब्रह्म० ।

ऐन्द्रे वा नरतीर्थे च वासवे वैष्णवे तथा ॥ महानद्यां कृतश्राद्धो ब्रह्मलोकं नयेत्पितॄन् ॥ ३१ ॥ गायत्रे चैव सावित्रे तीर्थे सारस्वते तथा ॥ स्नानस
न्ध्यातर्पणकृच्छ्राद्धी चैकोत्तरं शतम् ॥ ३२ ॥ पितॄणां तु कुलं ब्रह्मलोकं नयति मानवः ॥ ब्रह्मयोनिं विनिर्गच्छेत्प्रयतः पितृमानसः ॥ ३३ ॥ तर्प
यित्वा पितॄन्देवान्न विशेद्योनिसङ्कटे ॥ तर्पणे काकजङ्घायां पितॄणां तृप्तिरक्षया ॥३४॥ धर्मारण्ये मतंगस्य वाप्यां श्राद्धाद्दिवं व्रजेत् ॥ धर्मयूपे च कूपे
च पितॄणामनृणो भवेत् ॥३५॥ प्रमाणं देवताः सन्तु लोकपालाश्च साक्षिणः ॥ मयागत्य मतंगेऽस्मिन्पितॄणां निष्कृतिः कृता ॥ ३६ ॥ रामतीर्थे नराः
स्नात्वा श्राद्धं कृत्वा प्रभासके ॥ शिलायां प्रेतभावात्स्युर्मुक्ताः पितृगणाः किल ॥ ३७ ॥ श्राद्धकृच्च स्वपुष्टायां त्रिःसप्तकुलमुद्धरेत् ॥ श्राद्धकृन्मुण्डपृ
ष्ठादौ ब्रह्मलोकं नयेत्पितॄन् ॥ ३८ ॥ गयायां न हि तत्स्थानं यत्र तीर्थं न विद्यते ॥ पञ्चक्रोशे गयाक्षेत्रे यत्र तत्र तु पिण्डदः ॥ ३९ ॥ अक्षयं फल
माप्नोति ब्रह्मलोकं नयेत्पितॄन् ॥ जनार्दनस्य हस्ते तु पिण्डं दद्यात्स्वकं नरः ॥ ४० ॥ एष पिण्डो मया दत्तस्तव हस्ते जनार्दन ! ॥ परलोकं गते
मोक्षमक्षय्यमुपतिष्ठताम् ॥ ४१ ॥ ब्रह्मलोकमवाप्नोति पितृभिः सह निश्चितम् ॥ गयायां धर्मपृष्ठे च सरसि ब्रह्मणस्तथा ॥ ४२ ॥ गयाशीर्षेऽक्षयवटे
पितॄणां दत्तमक्षयम् ॥ धर्मारण्यं धर्मपृष्ठं धेनुकारण्यमेव च ॥ ४३ ॥ दृष्ट्वैतानि पितॄंश्चार्यवंश्यान्विंशतिमुद्धरेत् ॥ ब्रह्मारण्यं महानद्याः पश्चिमो भाग
उच्यते ॥ ४४ ॥ पूर्वो ब्रह्मसदो भागो नागाद्रिर्भरताश्रमः ॥ भरतस्याश्रमे श्राद्धी मतंगस्य पदे भवेत् ॥ ४५ ॥ गयाशीर्षाद्दक्षिणतो महानद्याश्च पश्चि
मे ॥ तत्स्मृतं चम्पकवनं तत्र पाण्डुशिलास्ति हि ॥ ४६ ॥ श्राद्धी तत्र तृतीयायां निश्चिरायाश्च मण्डले ॥ महाह्रदे च कौशिक्यामक्षयं फलमाप्नुया
त् ॥ ४७ ॥ वैतरण्याश्चोत्तरतस्तृतीयाख्यो जलाशयः ॥ पदानि तत्र क्रौञ्चस्य श्राद्धी स्वर्गं नयेत्पितॄन् ॥ ४८ ॥ क्रौञ्चपादादुत्तरतो निश्चिराख्यो
जलाशयः ॥ सकृद्यत्राभिगमनं सकृत्पिण्डप्रपातनम् ॥ ४९ ॥ दुर्लभं किं पुनर्नित्यमस्मिन्नेव व्यवस्थितिः ॥ महानद्यामुपस्पृश्य तर्पयेत्पितृदेवताः
॥५०॥ अक्षयान्प्राप्नुयाल्लोकान्कुलं चापि समुद्धरेत्॥सावित्रे पठ्यते सन्ध्या कृता स्याद्द्वादशाब्दिकी ॥५१॥शुक्लकृष्णावुभौ पक्षौ गयायां यो वसेन्नरः
पुनात्यासप्तमं चैव कुलं नास्त्यत्र संशयः ॥ ५२ ॥ गयायां मुण्डपृष्ठं च अरविन्दं च पर्वतम् ॥ तृतीयं क्रौंचपादं च दृष्ट्वा पापैः प्रमुच्यते ॥५३॥
मकरे वर्त्तमाने च ग्रहणे चन्द्रसूर्य्ययोः ॥ दुर्लभं त्रिषु लोकेषु गयायां पिण्डपातनम् ॥ ५४ ॥ महाह्रदे च कौशिक्यां मूलक्षेत्रे विशेषतः ॥
गुहायां गृध्रकूटस्य श्राद्धं दत्तं ( सत् ) महाफलम् ॥ ५५ ॥ यत्र माहेश्वरी धारा श्राद्धी तत्रानृणो भवेत् ॥ पुण्यां विशालामासाद्य नदीं त्रैलोक्य
विश्रुताम् ॥ ५६ ॥ अग्निष्टोममवाप्नोति श्राद्धी प्रायाद्दिवं नरः ॥ श्राद्धी मासपदे स्नात्वा वाजपेयफलं लभेत् ॥ ५७ ॥ रविपादे पिण्डदानात्पतितो

द्धारणं भवेत् ॥ गयास्थो यो ददात्यन्नं पितरस्तेन पुत्रिणः ॥ ५८ ॥ कांक्षन्ते पितरः पुत्रान्नरकाद्भयभीरवः ॥ गयां यास्यति यः कश्चित्सोऽस्मान्स न्तारयिष्यति ॥ ५९ ॥ गयाप्राप्तं सुतं दृष्ट्वा पितॄणामुत्सवो भवेत् ॥ पद्भ्यामपि जलं स्पृष्ट्वा अस्मभ्यं किल दास्यति ॥ ६० ॥ आत्मजो वा तथान्यो वा गयाकूपे यदा तदा॥यन्नाम्ना पातयेत्पिण्डं तं नयेद्ब्रह्म शाश्वतम्॥६१॥पुण्डरीकं विष्णुलोकं प्राप्नुयात्कोटितीर्थगः॥या सा वैतरणी नाम त्रिषु लोकेषु विश्रुता॥६२॥सावतीर्णा गयाक्षेत्रे पितॄणां तारणाय हि॥श्राद्धदः पिण्डदस्तत्र गोप्रदानं करोति यः॥६३॥एकविंशतिवंश्यान्स तारयेन्नात्र संशयः॥यदि पुत्रो गयां गच्छेत्कदाचित्कालपर्यये॥६४॥तानेव भोजयेद्विप्रान्ब्रह्मणा ये प्रकल्पिताः ॥ तेषां ब्रह्मसदः स्थानं सोमपानं तथैव च॥६५॥ब्रह्मप्रकल्पितं स्थानं विप्रा ब्रह्मप्रकल्पिताः॥पूजितैः पूजिताः सर्वे पितृभिः सह देवताः ॥ ६६ ॥ तर्पयेत्तु गयाविप्रान्हव्यकव्यैर्विधानतः ॥ स्थानं देहपरित्यागे गयायां तु विधीयते ॥ ६७ ॥ यः करोति वृषोत्सर्गं गयाक्षेत्रे ह्यनुत्तमे ॥ अग्निष्टोमशतं पुण्यं लभते नात्र संशयः ॥ ६८ ॥ आत्मनोऽपि महाबु द्धिर्गयायां तु तिलैर्विना ॥ पिण्डनिर्वापणं कुर्यादन्येषामपि मानवः ॥ ६९ ॥ यावन्तो ज्ञातयः पित्र्या बान्धवाः सुहृदस्तथा ॥ तेभ्यो व्यास गयाभूमौ पिण्डो देयो विधानतः ॥ ७० ॥ रामतीर्थे नरः स्नात्वा गोशतस्याप्नुयात्फलम् ॥ मतंगवाप्यां स्नात्वा च गोसहस्रफलं लभेत् ॥ ७१ ॥ निश्चिरासंगमे स्नात्वा ब्रह्मलोकं नयेत्पितॄन् ॥ वसिष्ठस्याश्रमे स्नात्वा वाजपेयं च विन्दति ॥ ७२ ॥ महाकौश्यां समावासादश्वमेधफलं लभेत ॥ पितामहस्य सरसः प्रसृता लोकपावनी ॥ ७३ ॥ समीपे त्वग्निधारेति विश्रुता कपिला हि सा ॥ अग्निष्टोमफलं श्राद्धी स्नात्वात्र कृतकृत्यता ॥७४॥ श्राद्धी कुमारधारायामश्वमेधफलं लभेत् ॥ कुमारमभिगम्याथ नत्वा मुक्तिमवाप्नुयात् ॥ ७५ ॥ सोमकुण्डे नरः स्नात्वा सोमलोकं च गच्छति ॥ संवर्त्तस्य नरो वाप्यां सुभगः स्यात्तु पिण्डदः ॥ ७६ ॥ धौतपापो नरो याति प्रेतकुण्डे च पिण्डदः ॥ देवनद्यां लेलिहाने मथने जानुगर्त्तके ॥ ७७ ॥ एवमादिषु तीर्थेषु पिण्डदस्तारयेत्पितॄन् ॥ नत्वा देवान्वसिष्ठेशप्रभृतीनृणसंक्षयम्॥७८॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गयामाहात्म्यं नाम त्र्यशीतितमोऽध्यायः॥८३॥ब्रह्मोवाच॥उद्यतस्तु गयां गन्तुं श्राद्धं कृत्वा विधानतः॥विधाय कार्पटीवेषं ग्रामस्यापि प्रदक्षिणम् ॥१॥ ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम् ॥ कृत्वा प्रदक्षिणं गच्छेत्प्रतिग्रहविवर्जितः ॥ २ ॥ गृहाच्चलितमात्रस्य गयायां गमनं प्रति ॥ स्वर्गा रोहणसोपानं पितॄणां तु पदेपदे ॥ ३ ॥ मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः ॥ वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम् ॥ ४ ॥ दिवा च सर्वदा रात्रौ गयायां श्राद्धकृद्भवेत् ॥ वाराणस्यां कृतं श्राद्धं तीर्थे शोणनदे तथा ॥ ५ ॥ पुनःपुनामहानद्यां श्राद्धी स्वर्गं पितॄन्नयेत् ॥ उत्तरं

मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ ६ ॥ तस्मिन्निवर्त्तयेच्छ्राद्धं स्नानं चैव निवर्त्तयेत् ॥ कामान्स लभते दिव्यान्मोक्षोपायं च सर्वशः ॥ ७ ॥
दक्षिणं मानसं गत्वा मौनी पिण्डादि कारयेत् ॥ ऋणत्रयापाकरणं लभेद्दक्षिणमानसे ॥ ८ ॥ सिद्धानां प्रीतिजननैः पापानां च भयंकरैः ॥ लेलि
हानैर्महाघोरैरक्षतैः पन्नगोत्तमैः ॥ ९ ॥ नाम्ना कनखलं तीर्थं त्रिषु लोकेषु विश्रुतम् ॥ उदीच्यां मुण्डपृष्ठस्य देवर्षिगणसेवितम् ॥ १० ॥ तत्र स्नात्वा
दिवं याति श्राद्धं दत्तमथाक्षयम् ॥ सूर्यं नत्वा त्विदं कुर्यात्कृतपिण्डादिसत्क्रियः ॥ ११ ॥ कव्यवाहस्तथा सोमो यमश्चैवार्य्यमा तथा ॥ अग्नि
ष्वात्ता बर्हिषदः सोमपाः पितृदेवताः ॥ १२ ॥ आगच्छन्तु महाभागा युष्माभी रक्षितास्त्विह ॥ मदीयाः पितरो ये च कुले जाताः सनाभयः
॥ १३ ॥ तेषां पिण्डप्रदानार्थमागतोऽस्मि गयामिमाम् ॥ कृतपिण्डः फल्गुतीर्थे पश्यैद्देवं पितामहम् ॥ १४ ॥ गदाधरं ततः
पश्येत्पितॄणामनृणो भवेत् ॥ फल्गुतीर्थे नरः स्नात्वा दृष्ट्वा देवं गदाधरम् ॥ १५ ॥ आत्मानं तारयेत्सद्यो दश पूर्वान्दशापरान् ॥ प्रथमेह्नि
विधिः प्रोक्तो द्वितीयदिवसे व्रजेत् ॥ १६ ॥ धर्मारण्यं मतंगस्य वाप्यां पिण्डादिकृद्भवेत् ॥ धर्मारण्यं समासाद्य वाजपेयफलं लभेत् ॥ १७ ॥ राज
सूयाश्वमेधाभ्यां फलं स्याद्ब्रह्मतीर्थके ॥ श्राद्धं पिण्डोदकं कार्य्यं मध्ये वै कूपयूपयोः ॥ १८ ॥ कूपोदकेन तत्कार्य्यं पितॄणां दत्तमक्षयम् ॥ तृती
येऽह्नि ब्रह्मसदो गत्वा स्नात्वाथ तर्पणम् ॥ १९ ॥ कृत्वा श्राद्धादिकं पिण्डं मध्ये वै यूपकूपयोः ॥ गोप्रचारसमीपस्था आम्रा ब्रह्मकल्पिताः ॥ २० ॥
तेषां सेवनमात्रेण पितरो मोक्षगामिनः ॥ यूपं प्रदक्षिणीकृत्य वाजपेयफलं लभेत् ॥ २१ ॥ फल्गुतीर्थे चतुर्थेऽह्नि स्नात्वा देवादितर्पणम् ॥ कृत्वा श्राद्धं
गयाशीर्षे कुर्याद्रुद्रपदादिषु ॥ २२ ॥ पिण्डान्देहिमुखे व्यासे पंचाग्नौ च पदत्रये ॥ सूर्य्येन्दुकार्त्तिकेयेषु कृतं श्राद्धं तथाक्षयम् ॥ २३ ॥
श्राद्धं तु नवदेवत्यं कुर्य्याद्द्वादशदैवतम् ॥ अन्वष्टकासु वृद्धौ च गयायां मृतवासरे ॥ २४ ॥ अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना
सह ॥ स्नात्वा दशाश्वमेधे तु दृष्ट्वा देवं पितामहम् ॥ २५ ॥ रुद्रपादं नरः स्पृष्ट्वा न चेहावर्त्तते पुनः ॥ त्रिर्वित्तपूर्णां पृथिवीं दत्त्वा
यत्फलमाप्नुयात् ॥ २६ ॥ स तत्फलमवाप्नोति कृत्वा श्राद्धं गयाशिरे ॥ शमीपत्रप्रमाणेन पिण्डं दद्याद्गयाशिरे ॥ २७ ॥
पितरो यान्ति देवत्वं नात्र कार्य्या विचारणा ॥ मुण्डपृष्ठे पदं न्यस्तं महादेवेन धीमता ॥ २८ ॥ अल्पेन तपसा तत्र महापुण्यमवाप्नुयात् ॥ गयाशी
र्षे तु यः पिण्डान्नाम्ना येषां तु निर्वपेत् ॥ २९ ॥ नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः ॥ पञ्चमेऽह्नि गदालोले स्नात्वा वटतले ततः ॥ ३० ॥
पिंडान्दद्यात्पितॄणां च सकलं तारयेत्कुलम् ॥ वटमूलं समासाद्य शाकेनोष्णोदकेन वा ॥ ३१ ॥ एकस्मिन् भोजिते विप्रे कोटिर्भवति भोजिता ॥

कृते श्राद्धेऽक्षयवटे दृष्ट्वा च प्रपितामहम् ॥ ३२ ॥ अक्षयाल्लँभते लोकान्कुलानामुद्धरेच्छतम् ॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ ३३ ॥
यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ प्रेतः कश्चित्समुद्दिश्य वणिजं कञ्चिदब्रवीत् ॥ ३४ ॥ मम नाम्ना गयाशीर्षे पिण्डनिर्वपणं कुरु ॥ प्रेतभावा
द्विमुक्तः स्यांस्वर्गदो दातुरेव च ॥ ३५ ॥ श्रुत्वा वणिग्गयाशीर्षे प्रेतराजाय पिण्डकम् ॥ प्रददावनुजैः सार्द्धं स्वपितृभ्यस्ततो ददौ ॥ ३६ ॥ सर्वे
मुक्ता विशालोऽपि सपुत्रोऽभूच्च पिंडदः ॥ विशालायां विशालोऽभूद्राजपुत्रोऽब्रवीद्द्विजान् ॥ ३७ ॥ कथं पुत्रादयः स्युर्मे विप्राश्चोचुर्विशालकम् ॥
गयायां पिण्डदानेन तव सर्वं भविष्यति ॥ ३८ ॥ विशालोऽथ गयाशीर्षे पिंडदोऽभूच्च पुत्रवान् ॥ दृष्ट्वाकाशे सितं रक्तं कृष्णं पुरुषमब्रवीत् ॥ ३९ ॥
के यूयं तेषु चैवैकः सितः प्रोचे विशालकम् ॥ अहं सितस्ते जनक इन्द्रलोकं गतः शुभम् ॥ ४० ॥ मम पुत्र पिता रक्तो ब्रह्महा पापकृत्परम् ॥
अयं पितामहः कृष्ण ऋषयोऽनेन घातिताः ॥४१॥ अवीचिं नरकं प्राप्तौ मुक्तौ जातौ च पिण्डद॥मुक्तीकृतास्ततः सर्वे व्रजामः स्वर्गमुत्तमम् ॥४२॥
कृतकृत्यो विशालोऽपि राज्यं कृत्वा दिवं ययौ ॥ येऽस्मत्कुले तु पितरो लुप्तपिण्डोदकक्रियाः ॥ ४३ ॥ ये चाप्यकृतचूडास्तु ये च गर्भाद्विनिस्सृ
ताः ॥ येषां दाहो न क्रियाच येऽग्निदग्धास्तथापरे ॥ ४४ ॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ॥ पिता पितामहश्चैव तथैव प्रपितामहः
॥ ४५ ॥ माता पितामही चैव तथैव प्रपितामही ॥ तथा मातामहश्चैव प्रमातामह एव च ॥ ४६ ॥ वृद्धप्रमातामहश्च तथा मातामही परम् ॥ प्रमा
तामही तथा वृद्धप्रमातामहीति वै ॥ ४७ ॥ अन्येषां चैव पिंडोऽयमक्षय्यमुपतिष्ठताम् ॥ ४८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये
आचारकाण्डे गयामाहात्म्यं नाम चतुरशीतितमोऽध्यायः ॥ ८४ ॥ ब्रह्मोवाच ॥ स्नात्वा प्रेतशिलादौ तु वरुणास्थामृतेन च ॥ पिंडं दद्यादिमैर्मन्त्रैरावाह्य च
पितॄन्परान् ॥ १ ॥ अस्मत्कुले मृता ये च गतिर्येषां न विद्यते ॥ आवाहयिष्येतान्सर्वान् दर्भपृष्ठे तिलोदकैः ॥२॥ पितृवंशे मृता ये च मातृवंशे च ये
मृताः ॥ तषामुद्धरणार्थाये इमं पिण्डे ददाम्यहम् ॥ ३ ॥ मातामहकुले ये च गतिर्येषां न विद्यते ॥ तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ४ ॥
अजातदन्ता ये केचिद्ये च गर्भे प्रपीडिताः ॥ तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ५ ॥ बन्धुवर्गाश्च ये केचिन्नामगोत्रविवर्जिताः ॥ स्वगोत्रे
परगोत्रे वा गतिर्येषां न विद्यते ॥ तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ६ ॥ उद्बन्धनमृता ये च विषशस्त्रहताश्च ये ॥ आत्मोपघातिनो ये च
तेभ्यः पिण्डं ददाम्यहम् ॥ ७ ॥ अग्निदाहे मृता ये च सिंहव्याघ्रहताश्च ये ॥ दंष्ट्रिभिः शृंगिभिर्वापि तेषां पिण्डं ददाम्यहम् ॥ ८ ॥ अग्निदग्धाश्च
ये केचिन्नाग्निदग्धास्तथापरे ॥ विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम् ॥ ९ ॥ रौरवे चान्धतामिस्रे कालसूत्रे च ये गताः ॥ तेषामुद्धरणार्थाय

इमं पिण्डं ददाम्यहम् ॥ १० ॥ असिपत्रवने घोरे कंभीपाके च ये गताः ॥ तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ ११ ॥ अन्येषां यातना
स्थानां प्रेतलोकनिवासिनाम् ॥ तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम् ॥ १२ ॥ पशुयोनिं गता ये च पक्षिकीटसरीसृपाः ॥ अथवा वृक्षयोनि
स्थास्तेभ्यः पिण्डं ददाम्यहम् ॥ १३ ॥ असंख्ययातनासंस्था ये नीता यमशासनैः ॥ तेषामुद्धरणार्थाय इमं पिंडं ददाम्यहम् ॥ १४ ॥ जात्य
न्तरसहस्रेषु भ्रमन्ति स्वेन कर्मणा ॥ मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम् ॥ १५॥ ये बान्धवाऽबान्धवा वा येऽन्यजन्मनि बांधवाः॥ते सर्वे
तृप्तिमायान्तु पिण्डदानेन सर्वदा ॥ १६ ॥ ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम ॥ ते सर्वे तृप्तिमायान्तु पिंडदानेन सर्वदा ॥ १७ ॥ ये मे
पितृकुले जाताः कुले मातुस्तथैव च ॥ गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥ १८ ॥ ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः ॥ क्रियालो
पहता ये च जात्यन्धाः पङ्गवस्तथा ॥ १९ ॥ विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम ॥ तेषां पिंडं मया दत्तमक्षय्यमुपतिष्ठताम् ॥ २० ॥ सा
क्षिणः सन्तु मे देवा ब्रह्मेशानादयस्तथा ॥ मया गयां समासाद्य पितॄणां निष्कृतिः कृता ॥ २१ ॥ आगतोऽहं गयां देव ! पितृकार्य्यें गदाधर ॥
तन्मे साक्षी भवत्वद्य अनृणोऽहमृणत्रयात् ॥ २२ ॥ महानदी ब्रह्मसरोऽक्षयो वटः प्रभासमुद्यन्तमहो ? गयाशिरः ॥ सरस्वतीधर्मकधेनुपृष्ठा एते कुरु
क्षेत्रगता गयायाम् ॥ २३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे गयामाहात्म्यं नाम पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥
ब्रह्मोवाच ॥ येयं प्रेतशिला ख्याता गयायां सा त्रिधा स्थिता ॥ प्रभासे प्रेतकुण्डे च गयासुरशिरस्यपि ॥ १ ॥ धर्मेण धारिता भूत्यै सर्वदेवमयी
शिला ॥ प्रेतत्वं ये गता नृणां मित्राद्या बान्धवादयः ॥ २ ॥ तेषामुद्धरणार्थाय यतः प्रेतशिला शुभा ॥ अतोऽत्र मुनयो भूपा राजपत्न्यादयः सदा
॥ ३ ॥ तस्यां शिलायां श्राद्धादिकर्त्तारो ब्रह्मलोकगाः ॥ गयासुरस्य यन्मुण्डं तस्य पृष्ठे शिला यतः ॥ ४ ॥ मुण्डपृष्ठो गिरिस्तस्मात्सर्वदेवमयो ह्य
यम् ॥ मुण्डपृष्ठस्य पादेषु यतो ब्रह्मसरोमुखाः ॥ ५ ॥ अरविन्दवनं तेषु तेन चैवोपलक्षितः ॥ अरविन्दो गिरिर्नाम क्रौञ्चपादाङ्कितो यतः ॥६॥ तस्मा
द्गिरिः क्रौंचपादः पितॄणां ब्रह्मलोकदः ॥ गदाधरादयो देवा आद्या आदौ व्यवस्थिताः ॥ ७ ॥ शिलारूपेण चाव्यक्तास्तस्माद्देवमयी शिला ॥ गया
शिरश्छादयित्वा गुरुत्वादास्थिता शिला ॥ ८ ॥ कालान्तरेण व्यक्तश्च स्थित आदिगदाधरः ॥ महारुद्रादिदेवैस्तु आनादिनिधनो हरिः ॥ ९ ॥ धर्म
संरक्षणार्थाय अधर्मादिविनष्टये ॥ दैत्यराक्षसनाशार्थं मत्स्यः पूर्वं यथाभवत् ॥ १० ॥ कूर्मो वराहो नृहरिर्वामनो राम ऊर्जितः ॥ यथा दाशरथी रामः
कृष्णो बुद्धोऽथ कल्क्यपि ॥ ११ ॥ तथा व्यक्तोऽव्यक्तरूपी आसीदादिर्गदाधरः ॥ आदिरादौ पूजितोऽत्र देवैर्ब्रह्मादिभिर्यतः ॥ १२ ॥ पाद्याद्यैर्गन्धपु

ष्पाद्यैरत आदिगदाधरः ॥ गदाधरं सुरैः सार्द्धमाद्यं गत्वा ददाति यः ॥ १३ ॥ अर्घ्यं पात्रं च पाद्यं च गन्धपुष्पं च धूपकम् ॥ दीपं नैवेद्यमुत्कृष्टं माल्यानि विविधानि च॥१४॥वस्त्राणि मुकुटं घण्टा चामरं प्रेक्षणीयकम्॥अलङ्कारादिकं पिण्डमन्नदानादिकं तथा॥१५॥तेषां तावद्धनं धान्यमायुरारोग्यसम्पदः ॥ पुत्रादिसन्ततिश्रेयोविद्यार्थं काम ईप्सितः ॥ १६ ॥ भार्य्या स्वर्गादिवासश्च स्वर्गादागत्य राज्यकम् ॥ कुलीनः सत्त्वसम्पन्नो रणे मर्दितशात्रवः ॥ १७ ॥ वधबन्धविनिर्मुक्तश्चान्ते मोक्षमवाप्नुयात् ॥ श्राद्धपिण्डादिकर्त्तारः पितृभिर्ब्रह्मलोकगाः ॥ १८ ॥ जगन्नाथं येऽर्चयन्ति सुभद्रां बलभद्रकम् ॥ ज्ञानं प्राप्य श्रियं पुत्रान्व्रजन्ति पुरुषोत्तमम् ॥१९॥ पुरुषोत्तमराजस्य सूर्य्यस्य च गणस्य च ॥ पुरतस्तत्र पिण्डादि पितॄणां ब्रह्मलोकदः ॥ २० ॥ नत्वा कपर्दिविघ्नेशं सर्वविघ्नैः प्रमुच्यते ॥ कार्त्तिकेयं पूजयित्वा ब्रह्मलोकमवाप्नुयात् ॥ २१ ॥ द्वादशादित्यमभ्यर्च्य सर्वरोगैः प्रमुच्यते ॥ वैश्वानरं समभ्यर्च्य उत्तमां दीप्तिमाप्नुयात् ॥ २२ ॥ रेवन्तं पूजयित्वाथ अश्वानाप्नोत्यनुत्तमान् ॥ अभ्यर्च्येन्द्रं महैश्वर्य्यं गौरीं सौभाग्यमाप्नुयात्॥२३॥ विद्यां सरस्वतीं प्रार्च्य लक्ष्मीं संपूज्य च श्रियम् ॥ गरुडं च समभ्यर्च्य विघ्नवृन्दात्प्रमुच्यते ॥ २४ ॥ क्षेत्रपालं समभ्यर्च्य ग्रहवृन्दैः प्रमुच्यते ॥ मुण्डपृष्ठं समभ्यर्च्य सर्वकाममवाप्नुयात् ॥२५॥ नागाष्टकं समभ्यर्च्य नागदष्टो विमुच्यते ॥ ब्रह्माणं पूजयित्वा च ब्रह्मलोकमवाप्नुयात् ॥२६॥ बलभद्रं समभ्यर्च्य बलारोग्यमवाप्नुयात्॥सुभद्रां पूजयित्वा तु सौभाग्यं परमाप्नुयात्॥२७॥सर्वान्कामानवाप्नोति संपूज्य पुरुषोत्तमम्॥नारायणं तु संपूज्य नराणामधिपो भवेत्॥२८॥ स्पृष्ट्वा नत्वा नारसिंहं संग्रामे विजयी भवेत्॥वराहं पूजयित्वा तु भूमिराज्यमवाप्नुयात्॥२९॥मालाविद्याधरौ स्पृष्ट्वा विद्याधरपदं लभेत्॥ सर्वान्कामानवाप्नोति संपूज्यादिगदाधरम्॥३०॥सोमनाथं समभ्यर्च्य शिवलोकमवाप्नुयात्॥रुद्रेश्वरं नमस्कृत्य रुद्रलोके महीयते॥३१॥रामेश्वरं नरो नत्वा रामवत्सुप्रियो भवेत्॥ब्रह्मेश्वरं नरः स्तुत्वा ब्रह्मलोकाय कल्प्यते॥३२॥कालेश्वरं समभ्यर्च्य नरः कालञ्जयो भवेत्॥केदारं पूजयित्वा तु शिवलोके महीयते॥३३॥सिद्धेश्वरं च संपूज्य सिद्धो ब्रह्मपुरं व्रजेत् ॥ आद्यं रुद्रादिभिः सार्द्धं दृष्ट्वा ह्यादिगदाधरम् ॥ ३४ ॥ कुलानां शतमुद्धृत्य नयेद्ब्रह्मपुरं नरः ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥ ३५ ॥ कामान्संप्राप्नुयात्कामी मोक्षार्थी मोक्षमाप्नुयात् ॥ राज्यार्थी राज्यमाप्नोति शान्त्यर्थी शान्तिमाप्नुयात् ॥ ३६ ॥ सर्वार्थी सर्वमाप्नोति संपूज्यादिगदाधरम् ॥ पुत्रान्पुत्रार्थिनी स्त्री च सौभाग्यं च तदर्थिनी ॥ ३७ ॥ वंशार्थिनी च वंशान्वै प्राप्याचर्यादिगदाधरम् ॥ श्राद्धेन पिण्डदानेन अन्नदानेन वारिदः ॥३८॥ ब्रह्मलोकमवाप्नोति संपूज्यादिगदाधरम् ॥ पृथिव्यां सर्वतीर्थेभ्यो यथा श्रेष्ठा गया पुरी ॥ ३९ ॥ तथा शिलादिरूपश्च श्रेष्ठश्चैव गदाधरः ॥ तस्मिन्दृष्टे शिला दृष्टा यतः सर्वं गदाधरः ॥ ४० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे

प्रथमांशाख्ये आचारकाण्डे गयामाहात्म्यं नाम षडशीतितमोऽध्यायः ॥८६॥ (इति गयामाहात्म्यं समाप्तम्)॥ हरिरुवाच॥चतुर्दश मनून्वक्ष्ये तत्सु
तांश्च शुकादिकान् ॥ मनुः स्वायम्भुवः पूर्वमग्निध्राद्याश्च तत्सुताः ॥ १ ॥ मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः ॥ वसिष्ठश्च महातेजा ऋषयः सप्त
कीर्त्तिताः॥२॥ जयाख्याश्चामिताख्याश्च शुक्रा यामास्तथैव च ॥ गणा द्वादशकाश्चेति चत्वारः सोमपायिनः ॥ ३ ॥ विश्वभुग्वामदेवेन्द्रो बाष्कलिस्त
दरिर्ह्यभूत् ॥ स हतो विष्णुना दैत्यश्चक्रेण सुमहात्मना ॥४॥ मनुः स्वारोचिषश्चाथ तत्पुत्रो मण्डलेश्वरः ॥ चित्रको विनतश्चैव कर्णान्तो विद्युतो रविः
॥ ५ ॥ बृहद्गुणो नभश्चैव महाबलपराक्रमः॥ऊर्ज स्तम्बस्तथा प्राण ऋषभो निश्चल(र)स्तथा ॥ ६ ॥ दत्तो (म्भो) लिश्चार्वरीवांश्च ऋषयः सप्त
कीर्त्तिताः ॥ तुषिता द्वादश प्रोक्तास्तथा पारावताश्च ये ॥ ७ ॥ इन्द्रो विपश्चिद्देवानां तद्रिपुः पुरुकुत्सरः ॥ जघान हस्तिरूपेण भगवान्मधुसूदनः
॥ ८ ॥ औत्तमस्य मनोः पुत्रा आजश्च परशुस्तथा ॥ विनीतश्च सुकेतुश्च सुमित्रः सुबलः शुचिः ॥९॥ देवो देवावृधो रुद्र ! महोत्साहोजितस्तथा ॥
रथौजा ऊर्द्ध्वबाहुश्च शरणश्चानघो मुनिः ॥ १० ॥ सुतपाः शंकुरित्येते ऋषयः सप्त कीर्त्तिताः ॥ वशवर्त्तिस्वधामानः शिवाः सत्याः प्रतर्दनाः॥ ११ ॥
पञ्च देवगणाः प्रोक्ताः सर्वे द्वादशकास्तु ते ॥ इन्द्रः स्वशान्तिस्तच्छुक्रः प्रलम्बो नाम दानवः ॥ १२ ॥ मत्स्यरूपी हरिर्विष्णुस्तं जघान च दानवम् ॥
तामसस्य मनोः पुत्रा जानुजङ्घोऽथ निर्भयः ॥ १३ ॥ नवख्यातिर्नयश्चैव प्रियभृत्यो विविक्षिपः ॥ दृढेषुधिः प्रस्तलाक्षः कृतबन्धुः कृतस्तथा ॥१४॥
ज्योतिर्धामा पृथुः (धृष्ट) काव्यश्चैत्रश्चेताग्निर्हेमकाः (कौ) ॥ मुनयः कीर्त्तिताः सप्त सुरागाः सुधियस्तथा ॥ १५ ॥ हरयो देवतामां च चत्वारः
पञ्च (सप्त) विंशकाः॥गणा इन्द्रः शिविस्तस्य शत्रुर्भीमरथाः स्मृताः ॥ १६ ॥ हरिणा कूर्मरूपेण हतो भीमरथोऽसुरः ॥ रैवतस्य मनोः पुत्रो महा
प्राणश्च साधकः ॥ १७ ॥ वन (ल) बन्धुर्निरमित्रः प्रत्यङ्गः परहा शुचिः ॥ दृढव्रतः केतुशृंग ऋषयस्तस्य वर्ण्यते ॥ १८ ॥ वेदश्रीर्वेदबाहुश्च
ऊर्द्ध्वबाहुस्तथैव च ॥ हिरण्यरोमा पर्जन्यः सत्यनेत्रः (नामा) स्वधाम च ॥ १९ ॥ अभूतरजसश्चैव तथा देवाश्वमेधसः ॥ वैकुण्ठ (ण्ठा) श्चामृत
(ता) श्चैव चत्वारो देवतागणाः ॥ २० ॥ गणे चतुर्दश सुरा विभुरिन्द्रः प्रतापवान् ॥ शान्तः शत्रुर्हतो दैत्यो हंसरूपेण विष्णुना ॥ २१ ॥ चाक्षु
षस्य मनोः पुत्रा ऊरुः पूरुर्महाबलः ॥ शतद्युम्नस्तपस्वी च सत्यबाहुः(क्यो) कृतिस्तथा ॥ २२ ॥ अग्निष्णुरतिरात्रश्च सुद्युम्नश्च तथा नरः ॥

१ शुक्रादि माग्नीध्राद्या० । २ तत्पुत्रा मण्डलेश्वराः० । ३ चैत्रः किम्पुरुषश्चेति० पा० । काव्यश्चैत्राग्निवनपीवरा० पा० । ४ ऋषभोनिचलस्तथा० । ५ श्चार्ववीरश्च० ।
६ आर्षोयं प्रयोगः । अग्निष्टोमोति० पा० ।

हविष्मांनुत्तमः श्रीमान्स्व ( सु ) धामा विरजस्तथा ॥ २३ ॥ अभिमानः सहिष्णुश्च मधुश्रीर्ऋषयः स्मृताः ॥ आर्य्याः प्रभूता भाव्याश्च लेखाश्च
पृथुकास्तथा ॥ २४ ॥ अष्टकस्य गणाः पञ्च तथा प्रोक्ता दिवौकसाम् ॥ इन्द्रो मनोजवः शत्रुर्महाकालो महाभजः ॥ २५ ॥ अश्वरूपेण स हतो हरिणा
लोकधारिणा ॥ मनोर्वैवस्वतस्यैते पुत्रा विष्णुपरायणाः ॥ २६ ॥ इक्ष्वाकुरथ नाभागो धृष्टः शर्यातिरेव च ॥ नरिष्यन्तस्तथा पांसुर्नभो नेदिष्ठ एव च
॥ २७ ॥ करूषश्च पृषध्रश्च सुद्युम्नश्च मनोः सुताः ॥ अत्रिर्वसिष्ठो भगवाञ्जमदग्निश्च कश्यपः ॥ २८ ॥ गौतमश्च भरद्वाजो विश्वामित्रोऽथ सप्तमः ॥
तथा ह्येकोनपञ्चाशन्मरुतः परिकीर्त्तिताः ॥ २९ ॥ आदित्या वसवः साध्या गणा द्वादशकास्त्रयः ॥ एकादश तथा रुद्रा वसवोऽष्टौ प्रकीर्त्तिताः ॥३०॥
द्वावश्विनौ विनिर्दिष्टौ विश्वेदेवास्तथा दश ॥ दशैवांगिरसो देवा नव देवगणास्तथा ॥ ३१ ॥ तेजस्वी नाम वै शक्रो हिरण्याक्षो रिपुः स्मृतः ॥ हतो
वराहरूपेण हिरण्याख्योऽथ विष्णुना ॥ ३२ ॥ वक्ष्ये मनोर्भविष्यस्य सावर्ण्याख्यस्य वै सुतान् ॥ विजयश्चार्ववीरश्च निर्मोहः सत्यवाक्कृती ॥ ३३ ॥
वरिष्ठश्च गरिष्ठश्च वाचः संगतिरेव च ॥ अश्वत्थामा कृपो व्यासो गालवो दीप्तिमानथ ॥ ३४ ॥ ऋष्यशृंगस्तथा राम ऋषयः सप्त कीर्त्तिताः ॥
सुतपा अमृताभाश्च मुख्याश्चापि तथा सुराः ॥ ३५ ॥ तेषां गणस्तु देवानामेकैको विंशकः स्मृतः ॥ विरोचनसुतस्तेषां बलिरिन्द्रो भविष्यति ॥३६॥
दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ॥ ऋद्धिमिन्द्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥ ३७ ॥ वारुणेर्दक्षसावर्णेर्नवमस्य सुताञ्छृणु ॥ धृतिकेतुर्दी
तिकेतुः पञ्चहस्तो निरामयः ॥ पृथुश्रवा बृहद्द्युम्न ऋचीको बृहतो गुणः ॥ ३८ ॥ मेधातिथिर्द्युतिश्चैव सवसो वसुरेव च ॥ ज्योतिष्मान्हव्यकव्यौ
च ऋषयो विभुरीश्वरः ॥ ३९ ॥ परो मरीचिगर्भश्च स्व ( सु ) धर्माणश्च ते त्रयः ॥ देशशत्रुः कालकाक्षस्तद्धन्ता पद्मनाभकः
॥ ४० ॥ ( भविष्यन्ति तदा देवा एकैको द्वादशो गणः ॥ तेषामिन्द्रो महावीर्यो भविष्यत्यद्भुतो हर ॥ ) धर्मपुत्रस्य पुत्रांस्तु दश
मस्य मनोः शृणु ॥ सुक्षेत्रश्चोत्तमौजाश्च भूरिश्रेण्यश्च वीर्य्यवान् ॥ ४१ ॥ शतानीको निरमित्रो वृषसेनो जयद्रथः ॥ भूरिद्युम्नः
सुवर्चाश्च शान्तिरिन्द्रः प्रतापवान् ॥ ४२ ॥ अयो ( पो ) मूर्त्तिर्हविष्मांश्च सुकृतिश्चाव्ययस्तथा ॥ नाभागोऽप्रतिमौजाश्च सौरभ ऋषयस्तथा ॥ ४३ ॥
प्राणाख्याः शतसंख्यास्तु देवतानां गणस्तदा ॥ तेषामिन्द्रश्च भविता शान्तिर्नाम महाबलः ॥ बलिः शत्रुस्तं हरिश्च गदया घातयिष्यति ॥ ४४ ॥

१ हविष्मान् सुतनुः श्री० । २ महाशानो महा० । ३ नाभाख्यो विष्टिः सर्जाति० । ४ विरजाश्चार्वरीवांश्च निर्देहः० । ५ वाचः सगति० । ६ निराकृतिः० । ७ पारीमरीचिगर्भश्च० । ८ लाभगोऽप्रतिमश्चैव० ।

रुद्र पुत्रस्य ते पुत्रान्वक्ष्याम्येकादशस्य तु ॥ सर्वत्रगः सुशर्मा च देवानीकः पुरुर्गुरुः ॥ ४५ ॥ क्षेत्रवर्णो दृढेषुश्च आर्द्रकः पुत्रकस्तथा ॥ हवि
ष्मांश्च हविष्यश्च[1] वरुणो विश्वविस्तरौ ॥ ४६ ॥ विष्णुश्चैवाग्नितेजाश्च ऋषयः सप्त कीर्त्तिताः ॥ विहंगमाः कामगमा निर्माणरुचयस्तथा ॥ ४७ ॥
एकैकास्त्रिं[2]शकस्तेषां गणश्चेन्द्रश्च वै वृषः॥दशग्रीवो रिपुस्तस्य श्रीरूपी घातयिष्यति ॥ ४८ ॥ मनोस्तु दक्षपुत्रस्य द्वादशस्यात्मजाञ्छृणु ॥ देववानु
पदेवश्च देवश्रेष्ठो विदूरथः ॥ ४९ ॥ मित्रवान्मित्रदेवश्च मित्रबिन्दुश्च वीर्य्यवान् ॥ मित्रवाहः [3]प्रवाहश्च दक्षपुत्रमनोः सुताः ॥ ५० ॥ तपस्वी सुतपाश्चैव
तपोमूर्त्तिस्तपोरतिः ॥ तपोधृतिर्द्युतिश्चान्यः स[4]प्तमश्च तपोधनाः ॥ ५१ ॥ स्वधर्माणः सुतपसो ह[5]रितो रोहितास्तथा ॥ [6]सुरारयो गणाश्चैते प्रत्येकं
दशको गणः ॥ ५२ ॥ ऋतधामा च भद्र ( तत्रे ) न्द्रस्तारको नाम तद्रिपुः ॥ हरिर्नपुंसकं भूत्वा घातयिष्यति शङ्कर ॥ ५३ ॥ त्रयोदशस्य रौच्य
स्य मनोः पुत्रान्निबोध मे ॥ चित्रसेनो विचित्रश्च तपोधर्मरतो धृतिः ॥५४॥ सुनेत्रः क्षेत्रवृत्तिश्च सुनयो धर्मपो दृढः ॥ धृतिमानव्ययश्चैव निशारूपो
निरुत्सुकः ॥ ५५ ॥ निर्मोहस्तत्त्वदर्शी च ऋषयः सप्त कीर्त्तिताः ॥ स्व ( सु ) रोमाणः स्व ( सु ) धर्माणः स्व ( सु ) कर्माणस्तथामराः॥ ५६ ॥
त्रयस्त्रिंशद्विभेदास्ते देवानां तत्र वै गणाः ॥ इन्द्रो दिवस्पतिः शत्रुस्त्वि[8]ष्टिभो नाम दानवः ॥ ५७ ॥ मायूरेण च रूपेण घातयिष्याति माधवः ॥ चतु
र्दशस्य भौत्यस्य शृणु पुत्रान्मनोर्मम ॥ ५८ ॥ ऊरुर्गभीरो धृष्टश्च तरस्वी ग्रा ( ग्र ) ह एव च ॥ अभिमानी प्रवीरश्च जिष्णुः संक्रन्दनस्तथा ॥ तेज
स्वी दुर्लभश्चैव भौत्यस्यैते मनोः सुताः ॥ ५९ ॥ अग्नीध्रश्चाग्निबाहुश्च मागधश्च तथा शुचिः ॥ अजितो मुक्तशुक्रौ च ऋषयः सप्त कीर्तिताः ॥६०॥
चाक्षु[9]षाः कर्मनिष्ठाश्च पवित्रा भ्राजिनस्तथा ॥ वचो[10]वृद्धा देवगणाः पञ्च प्रोक्तास्तु सप्तकाः॥६१॥ शुचिरिन्द्रो महादैत्यो रिपुहन्ता हरिः स्वयम्॥ एक
देवश्चतुर्द्धा तु व्यासरूपेण विष्णुना ॥ ६२ ॥ कृतस्ततः पुराणानि विद्याश्चाष्टादशैव तु ॥ अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः ॥ ६३ ॥
पुराणं धर्मशास्त्रं च आयुर्वेदार्थशास्त्रकम् ॥ धनुर्वेदश्च गान्धर्वो विद्या ह्यष्टादशैव ताः ॥ ६४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये
आचारकाण्डे मनुतद्वंशनिरूपणं नाम सप्ताशीतितमोऽध्यायः ॥८७॥ सूत उवाच ॥ हरिर्मन्वन्तराण्याह ब्रह्मादिभ्यो हराय च ॥ मार्कण्डेयः पितृस्तो
त्रं क्रौञ्चुकिं प्राह तच्छृणु ॥ १ ॥ मार्कण्डेय उवाच ॥ रुचिः प्रजापतिः पूर्वं निर्ममो निरहंकृतिः ॥ अत्रस्तोऽमितमा[11]यी च चचार पृथिवीमिमाम् ॥२॥

१ वपुष्मान्विष्णुवारुणौ ॥ निश्वरश्चा० । २ एकैकरुचयस्तेषां० । ३ मित्रवाहः सुवर्चाश्च० । ४ सप्तर्षयस्तपोधनाः ॥ सुधर्मा० । ५ हरितोरोहितस्त० । ६ पाराश्चैवगणाः षश्च० । ७ सुतपास्तथा० । ८ त्रुष्टिट्टिभो० । ९ चाक्षुषाश्च कनिष्ठाश्च० । १० वाचावृथा० । ११ स्तो मितशायी च० ।

अनग्निमनिकेतं तमेकाहारमनाश्रमम् ॥ विमुक्तसंगं तं दृष्ट्वा प्रोचुः स्वपितरो मुनिम् ॥ ३ ॥ पितर ऊचुः ॥ वत्स कस्मात्त्वया पुण्यो न कृतो दार
संग्रहः ॥ स्वर्गापवर्गहे (से) तुत्वाद्बन्धस्तेनानिशं (नमिषं) विना ॥ ४ ॥ गृही समस्तदेवानां पितॄणां च तथार्हणम् ॥ ऋषीणामर्थिनां चैव कुर्वँल्लो
कानवाप्नुयात् ॥ ५ ॥ स्वाहोच्चारणतो देवान्स्वधोच्चारणतः पितन् ॥ विभजत्यन्नदानेन भृत्याद्यानतिथीनापि ॥६॥ स त्वं दैवाद्दणाद्बन्धमिममस्मद्दणा
दपि ॥ अवाप्तोऽसि मनुष्यर्षे भूतेभ्यश्च दिनेदिने ॥ ७ ॥ अनत्पाद्य सुतान्देवानसन्तर्प्य पितॄंस्तथा ॥ अकृत्वा च कथं माण्ड्यं स्वर्गतिं प्राप्तुमिच्छ
सि ॥ ८ ॥ क्लेशबोधैककं पुत्र अन्यायेन भवेत्तव ॥ मृतस्य नरकं त्यक्त्वा क्लेश एवान्यजन्मानि ॥ ९ ॥ रुचिरुवाच ॥ परिग्रहोऽतिदुःखाय पापाया
धोगतेस्तथा ॥ भवत्यतो मया पूर्वं न कृतो दारसंग्रहः ॥ १० ॥ आत्मनः संशयोपायः क्रियते क्षणमन्त्रणात् ॥ स्वमुक्तिहेतुर्न भवत्यसावपि परिग्र
हात् ॥ ११ ॥ प्रक्षाल्यतेऽनुदिवसं य आत्मा निष्परिग्रहः ॥ मम त्वपङ्कदिग्धोऽपि विद्याम्भोभिर्वरं हि तत् ॥ १२ ॥ अनेकभवसंभूतकर्मपङ्काङ्कितो
बुधैः ॥ आत्मा तत्त्वज्ञानतोयैः प्रक्षाल्यो नियतेन्द्रियैः ॥ १३ ॥ पितर ऊचुः ॥ युक्तं प्रक्षालनं कर्त्तुमात्मनोऽपि यतेन्द्रियैः ॥ किं तु नोपायमार्गोऽ
यं यतस्त्वं पुत्र वर्त्तसे ॥ १४ ॥ पञ्चयज्ञैस्तपोदानैरशुभं नुदतस्तव ॥ फलाभिसन्धिरहितैः पूर्वकम शुभाशुभैः ॥ १५ ॥ एवं न बन्धो भवति कुर्व
तः कारणात्मकम् ॥ न च बन्धाय तत्कर्म भवत्यनातिसान्निभम् ॥ १६ ॥ पूर्वकर्म कृतं भोगैः क्षीयते ह्यनिशन्तथा ॥ सुखदुःखात्मकैर्वत्स पुण्या
पुण्यात्मकं नृणाम् ॥१७॥ एवं प्रक्षाल्यते प्राज्ञैरात्मा बन्धाच्च रक्ष्यते ॥ रक्ष्यश्च स्वविवेकैर्न पापपङ्केन दह्यते ॥१८॥ रुचिरुवाच ॥ अविद्या पच्यते
वेदे कर्ममार्गात्पितामहाः ॥ तत्कथं कर्मणो मार्गे भवन्तो योजयन्ति माम् ॥ १९ ॥ पितर उचुः ॥ अविद्या सर्वमेवैतत्कर्मणैतन्मृषा वचः ॥ किं तु
विद्यापरिप्राप्तौ हेतुः कर्म न संशयः ॥ २० ॥ विहिताकरणानर्थो न सद्भिः क्रियते तु यः ॥ संयमो मुक्तये योऽन्यः प्रत्युताधोगतिप्रदः ॥ २१ ॥
प्रक्षालयामीति भवान्यदेतन्मन्यते वरम् ॥ विहिताकरणोद्भूतैः पापैस्त्वमपि दह्यसे ॥ २२ ॥ अविद्याप्युपकाराय विषवज्जायते नृणाम् ॥ अनुष्ठाना
भ्युपायेन बन्धयोग्यापि नो हि सा ॥ २३ ॥ तस्माद्वत्स कुरुष्व त्वं विधिवद्दारसंग्रहम् ॥ आजन्म विफलन्तेऽस्तु असम्प्राप्यान्यलौकिकम् ॥२४॥
रुचिरुवाच ॥ वृद्धोऽहं साम्प्रतं को मे पितरः सम्प्रदास्यति ॥ भार्यान्तथा दरिद्रस्य दुष्करो दारसंग्रहः ॥२५॥ पितर ऊचुः ॥ अस्माकं पतनं वत्स भवतश्चा
प्यधोगतिः ॥ नूनं भावि भवित्री च नाभिनन्दासि नो वचः ॥२६॥ इत्युक्त्वा पितरस्तस्य पश्यतो मुनिसत्तम ॥ बभूवुः सहसाऽदृश्या दीपा वातहता इव ॥२७॥

१ संयमोपायः क्रियते सुनियन्त्रणात्० । २ आत्मसद्वासनातो० । ३ न वाधा भव० ।

मुनिः क्रौंचुकये प्राह मार्कंडेयो महातपाः ॥ रुचिवृत्तान्तमखिलं पितृसंवादलक्षणम् ॥ २८ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे कर्मज्ञानमा० नामाष्टाशीतितमोऽध्यायः ॥८८॥ ॥ सूत उवाच ॥ पृष्टः क्रौंचुकिनोवाच मार्कंडेयः पुनश्च तम् ॥ स तेन पितृवाक्यने भृशमुद्विग्नमानसः ॥ १ ॥ कन्याभिलाषी विप्रर्षिः परिबभ्राम मेदिनीम् ॥ कन्यामलभमानोऽसौ पितृवाक्येन दीपितः ॥ चिन्तामवाप महतीमती वोद्विग्नमानसः ॥ २ ॥ किं करोमि क्व गच्छामि कथं मे दारसंग्रहः ॥ क्षिप्रं भवेन्मत्पितॄणां ममाभ्युदयकारकः ॥ ३ ॥ इति चिन्तयतस्तस्य मतिर्जाता महात्मनः ॥ तपसाराधयाम्येनं ब्रह्माणं कमलोद्भवम् ॥ ४ ॥ ततो वर्षशतं दिव्यं तपस्तेपे महामनाः ॥ तत्र स्थितश्चिरं कालं वनेषु नियमस्थितः ॥ आराधनाय स तदा परं नियममास्थितः ॥ ५ ॥ ततः प्रदर्शयामास ब्रह्मा लोकपितामहः ॥ उवाचाथ प्रसन्नोऽस्मीत्युच्यताम भिवाञ्छितम् ॥ ६ ॥ ततोऽसौ प्रणिपत्याह ब्रह्माणं जगतो गतिम् ॥ पितॄणां वचनात्तेन यत्कर्त्तुमभिवाञ्छितम् ॥ ७ ॥ ॥ ब्रह्मोवाच ॥ प्रजाप तिस्त्वं भविता स्रष्टव्या भवता प्रजाः ॥ सृष्ट्वा प्रजाः सुतान्विप्र समुत्पाद्य क्रियास्तथा ॥ ८ ॥ कृत्वा कृताधिकारस्त्वं ततः सिद्धिमवाप्यासि ॥ स त्वं यथोक्तं पितृभिः कुरु दारपरिग्रहम् ॥ ९ ॥ कामं चेममभिध्याय क्रियतां पितृपूजनम् ॥ त एव तुष्टाः पितरः प्रदास्यन्ति तवेप्सितम् ॥ पत्नीं सुतांश्च सन्तुष्टाः किं न दद्युः पितामहाः ॥ १० ॥ ॥ मार्कंडेय उवाच ॥ इत्यृषिर्वचनं श्रुत्वा ब्रह्मणोऽव्यक्तजन्मनः ॥ नद्या विविक्ते पुलिने चकार पितृतर्पणम् ॥ ११ ॥ तुष्टाव च पितॄन्विप्रः स्तवैरेभिरथाहतः ॥ एकाग्रप्रयतो भूत्वा भक्तिनम्रात्मकन्धरः ॥ १२ ॥ ॥ रुचिरुवाच ॥ नमस्येऽ हं पितॄन् भक्त्या ये वसन्त्यधिदेवतम् ॥ देवैरपि हि तर्प्यन्ते ये श्राद्धेषु स्वधोत्तरैः ॥ १३ ॥ नमस्येऽहं पितॄन् स्वर्गे ये तर्प्यन्ते महर्षिभिः ॥ श्राद्धै र्मनोमयैर्भक्त्या भुक्तिमुक्तिमभीप्सुभिः ॥ १४ ॥ नमस्येऽहं पितॄन्स्वर्गे सिद्धाः सन्तर्पयन्ति यान् ॥ श्राद्धेषु दिव्यैः सकलैरुपहारैरनुत्तमैः ॥ १५ ॥ नमस्येऽहं पितॄन् भक्त्या येऽर्च्यन्ते गुह्यकैर्दिवि ॥ तन्मयत्वेन वांछद्भिः ऋद्धिमात्यन्तिकीं पराम् ॥ १६ ॥ नमस्येऽहं पितॄन्मर्त्यैरर्च्यन्ते भुवि ये सदा ॥ श्राद्धेषु श्रद्धयाभीष्टलोकपुष्टिप्रदायिनः ॥१७॥ नमस्येऽहं पितॄन्विप्रैरर्च्यन्ते भुवि ये सदा ॥ वांछिताभीष्टलाभाय प्राजापत्यप्रदायिनः ॥१८॥ नमस्येऽहं पितॄन्ये वै तर्प्यन्तेऽरण्यवासिभिः ॥ वन्यैः श्राद्धैर्यताहारैस्तपोनिर्धूतकल्मषैः ॥ १९ ॥ नमस्येऽहं पितॄन्विप्रैर्नैष्ठिकैर्धर्मचारिभिः ॥ ये संयतात्मभिर्नित्यं सन्तर्प्यन्ते समाधिभिः ॥ २० ॥ नमस्येऽहं पितॄञ्छ्राद्धे राजन्यास्तर्पयन्ति यान् ॥ कव्यैरशेषैर्विधिवल्लोकद्वयफलप्रदान् ॥ २१ ॥ नमस्येऽहं पितॄन्वैश्यैरर्च्यन्ते भुवि ये सदा ॥ स्वकर्माभिरतैर्नित्यं पुष्पधूपान्नवारिभिः ॥ २२ ॥ नमस्येऽहं पितॄञ्छ्राद्धे शूद्रैरपि च भक्तितः ॥

सन्तर्प्यते जगत्कृत्स्नं नाम्ना ख्याताः सुकालिनः ॥ २३ ॥ नमस्येऽहं पितॄञ्छ्राद्धे पाताले ये महासुरैः ॥ सन्तर्प्यन्ते सुधाहारास्त्यक्तदम्भमदैः स
दा ॥ २४ ॥ नमस्येऽहं पितॄञ्छ्राद्धैरर्च्यन्ते ये रसातले ॥ भोगैरशेषैर्विधिवन्नागैः कामानभीप्सुभिः ॥ २५ ॥ नमस्येऽहं पितॄञ्छ्राद्धैः सर्पैः सन्तर्पिता
न्सदा ॥ तत्रैव विधिवन्मन्त्रभोगसम्पत्समन्वितैः ॥ २६ ॥ पितॄन्नमस्ये निवसन्ति साक्षाद्ये देवलोकेऽथ महीतले वा ॥ तथान्तरिक्षे च सुरारिपूज्या
स्ते वै प्रतीच्छन्तु मयोपनीतम् ॥ २७ ॥ पितॄन्नमस्ये परमार्थभूता ये वै विमाने निवसन्त्यमूर्त्ताः ॥ यजन्ति यानस्तमलैर्मनोभिर्योगीश्वराः क्लेशवि
मुक्तिहेतून् ॥ २८ ॥ पितॄन्नमस्ये दिवि ये च मूर्त्ताः स्वधाभुजः काम्यफलाभिसन्धौ॥प्रदानशक्ताः सकलेप्सितानां विमुक्तिदा येऽनभिसंहितेषु॥२९॥
तृप्यन्तु तेऽस्मिन्पितरः समस्ता इच्छावतां ये प्रदिशन्ति कामान् ॥ सुरत्वमिन्द्रत्वमितोऽधिकं वा गजाश्वरत्नानि महागृहाणि ॥ ३० ॥ सोमस्य ये
रश्मिषु येऽर्कबिम्बे शुक्ले विमाने च सदा वसन्ति ॥ तृप्यन्तु तेऽस्मिन्पितरोऽन्नतोयैर्गन्धादिना पुष्टिमितो व्रजन्तु ॥ ३१ ॥ येषां हुतेऽग्नौ हविषा च
तृप्तिर्ये भुञ्जते विप्रशरीरसंस्थाः ॥ ये पिण्डदानेन मुदं प्रयान्ति तृप्यन्तु तेऽस्मिन्पितरोऽन्नतोयैः ॥३२॥ ये खड्गमांसेन सुरैरभीष्टैः कृष्णैस्तिलैर्दिव्य
मनोहरैश्च ॥ कालेन शाकेन महर्षिवर्य्यैः संप्रीणितास्ते मुदमत्र यान्तु ॥ ३३ ॥ कव्यान्यशेषाणि च यान्यभीष्टान्यतीव तेषां मम पूजितानाम् ॥
तेषाञ्च सान्निध्यमिहास्तु पुष्पगन्धाम्बुभोज्येषु मया कृतेषु ॥ ३४ ॥ दिनेदिने ये प्रतिगृह्णतेऽर्चां मासान्तपूज्या भुवि येऽष्टकासु ॥ ये वत्सरान्तेऽभ्यु
दये च पूज्याः प्रयान्तु ते मे पितरोऽत्र तुष्टिम् ॥ ३५ ॥ पूज्या द्विजानां कुमुदेन्दुभासो ये क्षत्रियाणां ज्वलनार्कवर्णाः ॥ तथा विशां ये कनकाव
दाता नीलीप्रभाः शूद्रजनस्य ये च ॥ ३६ ॥ तेऽस्मिन्समस्ता मम पुष्पगन्धधूपाम्बुभोज्यादिनिवेदनेन ॥ तथाग्निहोमेन च यान्ति तृप्तिं सदा
पितृभ्यः प्रणतोऽस्मि तेभ्यः ॥ ३७ ॥ ये देवपूर्वाण्यभितृप्तिहेतोरश्नन्ति कव्यानि शुभाहृतानि ॥ तृप्ताश्च ये भूतिसृजो भवन्ति तृप्यन्तु तेऽस्मिन्प्रण
तोऽस्मि तेभ्यः ॥ ३८ ॥ रक्षांसि भूतान्यसुरांस्तथोग्रान्निर्णाशयन्तु त्वशिवं प्रजानाम् ॥ आद्याः सुराणाममरेशपूज्यास्तृप्यन्तु तेऽस्मिन्प्रणतोऽस्मि
तेभ्यः ॥ ३९ ॥ अग्निष्वात्ता बर्हिषद आज्यपाः सोमपास्तथा ॥ व्रजन्तु तृप्तिं श्राद्धेऽस्मिन्पितरस्तर्पिता मया ॥ ४० ॥ अग्नि
ष्वात्ताः पितृगणाः प्राचीं रक्षन्तु मे दिशम् ॥ तथा बर्हिषदः पान्तु याम्यां मे पितरः सदा ॥ प्रतीचीमाज्यपास्तद्वदुदीचीमपि सोमपाः ॥ ४१ ॥
रक्षोभूतपिशाचेभ्यस्तथैवासुरदोषतः ॥ सर्वतः पितरो रक्षां कुर्वन्तु मम नित्यशः ॥ ४२ ॥ विश्वो विश्वभुगाराध्यो धर्मो धन्यः शुभाननः ॥
भूतिदो भूतिकृद् भूतिः पितॄणां ये गणा नव ॥४३॥ कल्याणः कल्यदः कर्त्ता कल्यः कल्यतराश्रयः॥कल्यताहेतुरनघः षडिमे ते गणाः स्मृताः ॥४४॥

वरो वरेण्यो वरदस्तुष्टिदः पुष्टिदस्तथा ॥ विश्वपाता तथा धाता सप्तैते च गणाः स्मृताः ॥ ४५ ॥ महान्महात्मा महितो महिमावान्महाबलः ॥
गणाः पञ्च तथैवैते पितॄणां पापनाशनाः ॥ ४६ ॥ सुखदो धनदश्चान्यो धर्मदोऽन्यश्च भूतिदः ॥ पितॄणां कथ्यते चैव तथा गणचतुष्टयम् ॥ ४७ ॥
एकत्रिंशत्पितृगणा यैर्व्याप्तमखिलं जगत् ॥ त एवात्र पितृगणास्तुष्यन्तु च मदाहितात् ॥ ४८ ॥ मार्कण्डेय उवाच ॥ एवं तु स्तुवतस्तस्य तेजसो
राशिरुच्छ्रितः ॥ प्रादुर्बभूव सहसा गगनव्याप्तिकारकः ॥ ४९ ॥ तद्दृष्ट्वा सुमहत्तेजः समाच्छाद्य स्थितं जगत् ॥ जानुभ्यामवनीं गत्वा रुचिः स्तोत्रमिदं
जगौ ॥ ५० ॥ रुचिरुवाच ॥ अर्चितानाममूर्त्तानां पितॄणां दीप्ततेजसाम् ॥ नमस्यामि सदा तेषां ध्यानिनां दिव्यचक्षुषाम् ॥ ५१ ॥ इन्द्रादीनां च
नेतारो दक्षमारीचयोस्तथा ॥ सप्तर्षीणां तथान्येषां तान्नमस्यामि कामदान् ॥ ५२ ॥ मन्वादीनां च नेतारः सूर्य्याचन्द्रमसोस्तथा ॥ तान्नमस्याम्यहं
सर्वान्पितॄनप्युदधावपि ॥ ५३ ॥ नक्षत्राणां ग्रहाणां च वाय्वग्न्योर्नभसस्तथा ॥ द्यावापृथिव्योश्च तथा नमस्यामि कृताञ्जलिः ॥५४॥ प्रजापतेः कश्य
पाय सोमाय वरुणाय च ॥ योगेश्वरेभ्यश्च सदा नमस्यामि कृताञ्जलिः ॥५५॥ नमो गणेभ्यः सप्तभ्यस्तथा लोकेषु सप्तसु ॥ स्वायम्भुवे नमस्यामि
ब्रह्मणे योगचक्षुषे ॥ ५६ ॥ सोमाधारान्पितृगणान्योगमूर्त्तिधरांस्तथा ॥ नमस्यामि तथा सोमं पितरं जगतामहम् ॥ ५७ ॥ अग्निरूपांस्तथैवान्या
न्नमस्यामि पितॄनहम् ॥ अग्निसोममयं विश्वं यत एतदशेषतः ॥ ५८ ॥ ये च तेजसि ये चैते सोमसूर्य्याग्निमूर्त्तयः ॥ जगत्स्वरूपिणश्चैव तथा ब्रह्मस्व
रूपिणः ॥ ५९ ॥ तेभ्योऽखिलेभ्यो योगिभ्यः पितृभ्यो यतमानसः ॥ नमोनमो नमस्तेऽस्तु प्रसीदन्तु स्वधाभुजः ॥ ६० ॥ मार्कण्डेय उवाच ॥
एवं स्तुतास्ततस्तेन तजसो मुनिसत्तमाः ॥ निश्चक्रमुस्ते पितरो भासयन्तो दिशो दश ॥ ६१ ॥ निवेदनञ्च यत्तेन पुष्पगन्धानुलेपनम् ॥
तद्भूषितानथ स तान्ददृशे पुरतः स्थितान् ॥ ६२ ॥ प्रणिपत्य रुचिर्भक्त्या पुनरेव कृताञ्जलिः ॥ नमस्तुभ्यं नमस्तुभ्यमित्याह पृथगादृतः ॥ ६३ ॥
ततः प्रसन्नाः पितरस्तमूचुर्मुनिसत्तमम् ॥ वरं वृणीष्वेति स तानुवाचानतकन्धरः ॥६४॥ रुचिरुवाच ॥ प्रजानां सर्गकर्त्तृत्वमादिष्टं ब्रह्मणा मम ॥
सोऽहं पत्नीमभीप्सामि धन्यां दिव्यां प्रजावतीम्॥६५॥पितर ऊचुः॥अत्रैव सद्यः पत्नी ते भवत्वतिमनोरमा॥तस्याञ्च पुत्रो भविता भवतो मुनिसत्तम!
॥६६॥ मन्वन्तराधिपो धीमांस्त्वन्नाम्नैवोपलक्षितः ॥ रुचे! रौच्य इति ख्यातिं प्रयास्यति जगत्त्रये ॥ ६७ ॥ तस्यापि बहवः पुत्रा महाबलपराक्रमाः ॥
भविष्यन्ति महात्मानः पृथिवीपरिपालकाः ॥६८॥ त्वं च प्रजापतिर्भूत्वा प्रजाः सृष्ट्वा चतुर्विधाः ॥ क्षीणाधिकारो धर्मज्ञस्ततः सिद्धिमवाप्स्यसि॥६९॥
स्तोत्रेणानेन च नरो योऽस्मांस्तोष्यति भक्तितः ॥ तस्य तुष्टा वयं भोगानात्मजं ध्यानमुत्तमम् ॥ ७० ॥ आयुरारोग्यमर्थं च पुत्रपौत्रादिकं तथा ॥

वांछद्भिः सततं स्तव्याः स्तोत्रेणानेन वै यतः ॥७१॥ श्राद्धेषु य इमं भक्त्या त्वस्मत्प्रीतिकरं स्तवम् ॥ पठिष्यति द्विजाग्र्याणां भुंजतां पुरतः स्थितः
॥ ७२ ॥ स्तोत्रश्रवणसंप्रीत्या सन्निधाने परे कृते ॥ अस्माभिरक्षयं श्राद्धं तद्भविष्यत्यसंशयम् ॥ ७३ ॥ यद्यप्यश्रोत्रियं श्राद्धं यद्यप्युपहतं भवेत् ॥
अन्यायोपात्तवित्तेन यदि वा कृतमन्यथा ॥ ७४ ॥ अश्राद्धार्हैरुपहतैरुपहारैस्तथा कृतैः ॥ अकालेऽप्यथ वा देशे विधिहीनमथापि वा ॥ ७५ ॥
अश्रद्धया वा पुरुषैर्दम्भमाश्रित्य यत्कृतम् ॥ अस्माकं तृप्तये श्राद्धन्तथाप्येतदुदीरणात् ॥ ७६ ॥ यत्रैतत्पठ्यते श्राद्धे स्तोत्रमस्मत्सुखावहम् ॥
अस्माकं जायते तृप्तिस्तत्र द्वादशवार्षिकी ॥ ७७ ॥ हेमन्ते द्वादशाब्दानि तृप्तिमेतत्प्रयच्छति ॥ शिशिरे द्विगुणाब्दानि तृप्तिं स्तोत्रमिदं शुभम् ॥ ७८ ॥
वसन्ते षोडश समास्तृप्तये श्राद्धकर्मणि ॥ ग्रीष्मे च षोडशैवैतत्पठितं तृप्तिकारकम् ॥ ७९ ॥ विकलेऽपि कृते श्राद्धे स्तोत्रेणानेन साधिते ॥
वर्षासु तृप्तिरस्माकमक्षय्या जायते रुचे ॥ ८० ॥ शरत्कालेऽपि पठितं श्राद्धकाले प्रयच्छति ॥ अस्माकमेतत्पुरुषैस्तृप्तिं पंचदशाब्दिकीम्
॥ ८१ ॥ यस्मिन् गेहे च लिखितमेतत्तिष्ठति नित्यदा ॥ सन्निधानं कृते श्राद्धे तत्रास्माकं भविष्यति ॥ ८२ ॥ तस्मादेतत्त्वया श्राद्धे
विप्राणां भुंजतां पुरः ॥ श्रावणीयं महाभाग अस्माकं पुष्टिकारकम् ॥ ८३ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचा
रकाण्डे रुचिकृतपितृस्तोत्रं नामैकोननवतितमोऽध्यायः ॥ ८९ ॥ ॥ मार्कण्डेय उवाच ॥ ततस्तस्मान्नदीमध्यात्समुत्तस्थौ मनोरमा ॥ प्रम्लोचा
नाम तन्वंगी तत्समीपे वराप्सराः ॥ १ ॥ सा चोवाच महात्मानं रुचिं सुमधुराक्षरम् ॥ प्रसादयामास भूयः प्रम्लोचा च वराप्सराः ॥ २ ॥ अतीव
रूपिणी कन्या मत्प्रसाद्वरांगना ॥ जाता वरुणपुत्रेण पुष्करेण महात्मना ॥ ३ ॥ तां गृहाण मया दत्तां भार्य्यार्थे वरवर्णिनीम् ॥ मनुर्महामतिस्तस्यां
समुत्पत्स्यति ते सुतः ॥ ४ ॥ मार्कंडेय उवाच ॥ तथेति तेन साप्युक्ता तस्मात्तोयाद्वपुष्मतीम् ॥ उद्दधार ततः कन्यां मानिनीं नाम नामतः ॥ ५ ॥
नद्याश्च पुलिने तस्मिन्स मुनिर्मुनिसत्तमाः॥जग्राह पाणिं विधिवत्समानीय महामुनिः॥६॥तस्यां तस्य सुतो जज्ञे महावीर्य्यो महाद्युतिः ॥ रुचे रौच्य इति
ख्यातो यो मया पूर्वमीरितः ॥ ७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे प्रम्लोचागमनं नाम नवतितमोऽध्यायः ॥९०॥
॥ सूत उवाच ॥ स्वायम्भुवाद्या मुनयो हरिं ध्यायन्ति कर्मणा ॥ व्रताचारार्चनाध्यानस्तुतिजप्यपरायणाः ॥ १ ॥ देहेन्द्रियमनोबुद्धिप्राणाहंकारवर्जि
तम्॥आकशेन विहीनं वै तेजसा परिवर्जितम्॥२॥उदकेन विहीनं वै तद्धर्मपरिवर्जितम्॥पृथिवीरहितं चैव सर्वभूतविवर्जितम्॥३॥ भूताध्यक्षं तथा बद्ध
नियन्तारं प्रभुं विभुम्॥चैतन्यरूपतारूपं सर्वाध्यक्षं निरञ्जनम्॥४॥मुक्तसङ्गं महेशानं सर्वदेवप्रपूजितम्॥तेजोरूपमसत्त्वं च तपसा परिवर्जितम् ॥ ५ ॥

रहितं रजसा नित्यं व्यतिरिक्तं गुणैस्त्रिभिः॥सर्वरूपविहीनं वै कर्तृत्वादिविवर्जितम् ॥६॥ वासनारहितं शुद्धं सर्वदोषविवर्जितम्॥पिपासावर्जितं तत्तच्छो
कमोहविवर्जितम् ॥ ७ ॥ जरामरणहीनं वै कूटस्थं मोहवर्जितम् ॥ उत्पत्तिरहितं चैव प्रलयेन विवर्जितम् ॥ ८॥ सत्यं सर्वाचारहीनं निष्कलं पर
मेश्वरम् ॥ जाग्रत्स्वप्नसुषुप्त्यादिवर्जितं नामवर्जितम् ॥ ९ ॥ अध्यक्षं जाग्रदादीनां शान्तरूपं सुरेश्वरम् ॥ जाग्रदादिस्थितं नित्यं कार्य्यकारणवर्जि
तम् ॥ १० ॥ सर्वदृष्टं तथा मूर्त्तं सूक्ष्मं सूक्ष्मतरं परम् ॥ ज्ञानदृक् श्रोत्रविज्ञानं परमानन्दरूपकम् ॥ ११ ॥ विश्वेन रहितं तद्वत्तैजसेन विवर्जि
तम् ॥ प्राज्ञेन रहितञ्चैव तुरीयं परमाक्षरम् ॥ १२ ॥ सर्वगोप्तृ सर्वहन्तृ सर्वभूतात्मरूपि च ॥ बुद्धिधर्मविहीनं वै निराधारं शिवं हरिम् ॥ १३ ॥
विक्रियारहितं चैव वेदान्तैर्वेद्यमेव च ॥ वेदरूपं परं भूतमिन्द्रियेभ्यः परं शुभम् ॥ १४ ॥ शब्देन वर्जितञ्चैव रसेन च विवर्जितम् ॥ स्पर्शेन रहितं
देवं रूपमात्रविवर्जितम् ॥ १५ ॥ रूपेण रहितं चैव गन्धेन परिवर्जितम् ॥ अनादि ब्रह्म रन्ध्रान्तमहं ब्रह्मास्मि केवलम् ॥ १६ ॥ एवं ज्ञात्वा महादेव
ध्यानं कुर्य्याज्जितेन्द्रियः ॥ ध्यानं यः कुरुते ह्येवं स भवेद्ब्रह्म मानवः ॥ १७ ॥ इति ध्यानं समाख्यातमशिवरस्य मया तव ॥ अधुना कथयाम्यन्य
त्किन्तद्ब्रूहि वृषध्वज॥१८॥इति श्रीगारुडे महापुराणे प्रथमखण्डे प्रथमांशाख्ये आचारकाण्डे हरिध्यानं नामैकनवतितमोऽध्यायः ॥९१॥ रुद्र उवाच॥
विष्णोर्ध्यानं पुनर्ब्रूहि शङ्खचक्रगदाधर॥ येन विज्ञातमात्रेण कृतकृत्यो भवेन्नरः ॥१॥ हरिरुवाच॥प्रवक्ष्यामि हरेर्ध्यानं मायातन्त्रविमर्दकम् ॥मूर्त्तामूर्त्ता
दिभेदेन तद्ध्यानं द्विविधं हर॥२॥अमूर्त्तं रुद्र कथितं हन्त मूर्त्तं ब्रवीम्यहम्॥सूर्य्यकोटिप्रतीकाशो जिष्णुर्भ्राजिष्णुरेकतः॥३॥कुन्दगोक्षीरधवलो हरिर्ध्येयो
मुमुक्षुभिः॥विशालेन सुसौम्येन शंखेन च समन्वितः॥४॥सहस्रादित्यतुल्येन ज्वालामालोग्ररूपिणा॥चक्रेण चान्वितः शान्तो गदाहस्तः शुभाननः ॥५॥
किरीटेन महार्हेण रत्नप्रज्वलितेन च ॥ सायुधः सर्वगो देवः सरोरुहधरस्तथा ॥ ६ ॥ वनमालाधरः शुभ्रः समांसो हेमभूषणः ॥ सुवस्त्रः शुद्धदेहश्च
सुकर्णः पद्मसंस्थितः ॥ ७ ॥ हिरण्मयशरीरश्च चारुहारी शुभाङ्गदः ॥ केयूरेण समायुक्तो वनमालासमन्वितः ॥ ८ ॥ श्रीवत्सकौस्तुभयुतो लक्ष्मी
वन्द्येक्षणान्वितः ॥ अणिमादिगुणैर्युक्तः सृष्टिसंहारकारकः ॥ ९ ॥ मुनिध्येयोऽसुरध्येयो देवध्येयोऽतिसुन्दरः ॥ ब्रह्मादिस्तम्बपर्य्यन्तभूतजातहृदि
स्थितः ॥ १० ॥ सनातनोऽव्ययो मेध्यः सर्वानुग्रहकृत्प्रभुः ॥ नारायणो महादेवः स्फुरन्मकरकुंडलः ॥ ११ ॥ सन्तापनाशनोऽभ्यर्च्यो मंगल्यो
दुष्टनाशनः ॥ सर्वात्मा सर्वरूपश्च सर्वगो ग्रहनाशनः ॥ १२ ॥ चार्वंगुलीयसंयुक्तः सुदीप्तनख एव च ॥ शरण्यः सुखकारी च सौम्यरूपो महेश्वरः
॥ १३ ॥ सर्वालङ्कारसंयुक्तश्चारुचन्दनचर्चितः ॥ सर्वदेवसमायुक्तः सर्वदेवप्रियङ्करः ॥ १४ ॥ सर्वलोकहितैषी च सर्वेशः सर्वभावनः ॥

आदित्यमण्डले संस्थो अग्निस्थो वारिसंस्थितः ॥ १५ ॥ वासुदेवो जगद्धाता ध्येयो विष्णुर्मुमुक्षुभिः ॥ वासुदेवोऽहमस्मीति आत्मा ध्येयो हरिर्हरिः ॥ १६ ॥ ध्यायन्त्येवं च ये विष्णुं ते यान्ति परमां गतिम् ॥ याज्ञवल्क्यः पुरा ह्येवं ध्यात्वा विष्णुं सुरेश्वरम् ॥ १७ ॥ धर्मोपदेशकर्तृत्वं संप्राप्यागात्परं पदम् ॥ तस्मात्त्वमपि देवेश ! विष्णुं चिन्तय शङ्कर ! ॥ १८ ॥ विष्णुध्यानं पठेद्यस्तु प्राप्नोति परमां गतिम् ॥ १९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुध्यानं नाम द्विनवतितमोऽध्यायः ॥ ९२ ॥ महेश्वर उवाच ॥ याज्ञवल्क्येन यत्पूर्वं धर्मं प्रोक्तं कथं हरे ! ॥ तन्मे काथय केशिघ्न ! यथा तत्त्वेन माधव ! ॥ १ ॥ हरिरुवाच ॥ याज्ञवल्क्यं नमस्कृत्य मिथिलायां समास्थितम् ॥ अपृच्छन्नृषयो गत्वा वर्णधर्माद्यशेषतः ॥ तेभ्यः स कथयामास विष्णुं ध्यात्वा जितेन्द्रियः ॥ २ ॥ याज्ञवल्क्य[1] उवाच ॥ यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत ॥ पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ॥ ३ ॥ वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ वक्तारो धर्मशास्त्राणां मनुर्विष्णुर्यमोऽङ्गिराः ॥ ४ ॥ वसिष्ठदक्षसंवर्त्तशातातपपराशराः ॥ आपस्तम्बोशनोव्यासाः कात्यायनबृहस्पती॥५॥गौतमः शङ्खलिखितो हारीतोऽत्रिरहं तथा ॥ एते विष्णुं समाराध्य जाता धर्मोपदेशकाः ॥ ६ ॥ देशकाल उपायेन द्रव्यं श्रद्धासमन्वितम् ॥ पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ॥ ७ ॥ इज्याचा[2]रो दमोऽहिंसा दानं स्वाध्यायकर्म च ॥ अयं च परमो धर्मो यद्योगेनात्मदर्शनम् ॥ ८ ॥ चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा ॥ सा ब्रूते यत्स्वधर्मः स्यादेको वाध्यात्मवित्तमः ॥ ९ ॥ ब्रह्मक्षत्त्रियविट्शूद्रा वर्णास्त्वाद्यास्त्रयो द्विजाः ॥ निषेकाद्याः श्मशानान्तास्तेषां वै मन्त्रतः क्रियाः ॥१०॥ गर्भाधानमृतौ पुंसः सवनं स्पन्दनात्पुरा ॥ षष्ठेऽष्टमे वा सीमन्तः प्र[3]सवे जातकर्म च ॥ ११ ॥ अहन्येकादशे नाम चतुर्थे मासि निष्क्रमः ॥ षष्ठेऽन्नप्राशनं मासि चूडां[4] कुर्य्याद्यथाकुलम् ॥ १२ ॥ एवमेनः शमं याति बीजगर्भसमुद्भवम् ॥ तूष्णीमेताः क्रियाः स्त्रीणां विवाहश्च समन्त्रकः॥१३॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तवर्णधर्मनिरूपणं नाम त्रिनवतितमोऽध्यायः ॥ ९३ ॥ याज्ञवल्क्य उवाच ॥ गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ॥ राज्ञामेकादशे सैके विशामेके यथाकुलम् ॥ १ ॥ उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम् ॥ वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत् ॥ २ ॥ दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुखः ॥ कुर्य्यान्मूत्रपुरीषे तु रात्रौ[5] चेद्दक्षिणामुखः ॥ ३ ॥

१ अग्निमींशः सर्वोपि याज्ञवल्क्यस्मृतौ क्वचित्क्वचित्किञ्चिदानुपूर्वीभेदेनपठ्यते । २ इज्याचार० । ३ मास्येते इति पा० । मासेथो जा० पा० । ४ चूडा कार्या यथेति पा० । ५ रात्रौ वै द० ।

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ॥ गन्धलेपक्षयकरं शौचं कुर्य्यान्महाव्रतः ॥ ४ ॥ अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः ॥
प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशेत् ॥ ५ ॥ कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रं करस्य च ॥ प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् ॥ ६ ॥
त्रिः प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् ॥ अद्भिस्तु प्रकृतिस्थाभिर्हीनाभिः फेनबुद्बुदैः ॥७॥ हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः ॥
शुध्येरंस्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः ॥ ८ ॥ स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः ॥ सूर्य्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः ॥ ९ ॥
गायत्रीं शिरसा सार्द्धं जपेद्व्याहृतिपूर्विकाम् ॥ प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः ॥ १० ॥ प्राणानायम्य सम्प्रोक्ष्य त्र्यृचेनाब्दैवतेन तु ॥
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥ ११ ॥ सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्य्यदर्शनात् ॥ अग्निकार्य्यं ततः कुर्य्यात्सन्ध्ययोरुभयोरपि ॥१२॥
ततोऽभिवादयेद्वृद्धानसावहमिति ब्रुवन् ॥ गुरुं चैवाप्युपासीत स्वाध्यायार्थं समाहितः ॥ १३ ॥ आहूतश्चाप्यधीयीत सर्वं चास्मै निवेदयेत् ॥
हितं तस्याचरेन्नित्यं मनोवाक्कायकर्मभिः ॥ १४ ॥ दण्डाजिनोपवीतानि मेखलां चैव धारयेत् ॥ ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये ॥ १५ ॥
आदिमध्यावसानेषु भवेच्छन्दोपलक्षिता ॥ ब्राह्मणक्षत्रियविशां भैक्षचर्य्या यथाक्रमम् ॥ १६ ॥ कृताग्निकार्य्यो भुञ्जीत विनीतो गुर्वनुज्ञया ॥
आपोशानक्रियापूर्वं सत्कृत्यान्नमकुत्सयन् ॥ १७ ॥ ब्रह्मचार्य्यास्थितो नैकमन्नमद्यादनापदि ॥ ब्राह्मणः काममश्नीयाच्छ्राद्धे व्रतमपीडयन् ॥१८॥
मधु मांसं तथा स्विन्नमित्यादि परिवर्जयेत् ॥ स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति ॥ १९ ॥ उपनीय ददात्येनमाचार्य्यः स प्रकीर्त्तितः ॥
एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते ॥ २० ॥ एते मान्या यथापूर्वमेभ्यो माता गरीयसी ॥ प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा ॥ २१ ॥
ग्रहणान्तिकमित्येके केशान्तश्चैव षोडशे ॥ आषोडशाऽऽद्वाविंशाच्चाचतुर्विंशाच्च वत्सरात् ॥२२॥ ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ अत ऊर्द्ध्वं
पतन्त्येते सर्वधर्मविवर्जिताः ॥ २३ ॥ सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ मातुर्यदग्रे जायन्ते द्वितीयं मौञ्जिबन्धनम् ॥२४॥ ब्राह्मणक्षत्रिय
विशस्तस्मादेते द्विजातयः ॥ यज्ञानां तपसां चैव शुभानां चैव कर्मणाम् ॥ २५ ॥ वेद एव द्विजातीनां निःश्रेयसकरः परः ॥ मधुना पयसा चैव स देवां

---

१ इत उत्तरं कृतज्ञाद्रोहिमेधावीशुचिकल्पानसूयकाः । अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदा इति श्लोकोधिकः पठ्यतेतत्स्मृतौ । २ द्विजेषु चारयेद्भैक्ष० । ३ वाग्यतो गुर्व० । ४ मधुमांसाञ्जनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् । भास्करालोकनाश्लीलपरीवादादिवर्जयेदिति तत्र पाठः । ५ षोडशः इति पा० । ६ धर्मबहिष्कृताः० ।

स्तर्पयेद्द्विजः ॥ २६ ॥ पितॄन्मधुघृताभ्यां च ऋचोऽधीते हि सोऽन्वहम् ॥ यजुः साम पठेत्तद्वदथर्वाङ्गिरसं द्विजः ॥ २७ ॥ सन्तर्पयेत्पितॄन्देवान्सोऽन्वहं हि घृतामृतैः ॥ वाकोवाक्यं पुराणं च नाराशंसीश्च गाथिकाः ॥ २८ ॥ इतिहासांस्तथा विद्या योऽधीते शक्तितोऽन्वहम् ॥ सन्तर्पयेत्पितॄन्देवान्मांसक्षीरोदनादिभिः ॥ २९ ॥ ते तृप्तास्तर्पयन्त्येनं सर्वकामफलैः शुभैः ॥ यंयं क्रतुमधीतेसौ तस्यतस्याप्नुयात्फलम् ॥ ३० ॥ भूमिदानस्य तपसः स्वाध्यायफलभाग्द्विजः॥नैष्ठिको ब्रह्मचारी तु वसेदाचार्य्यसान्निधौ॥३१॥तदभावेऽस्य तनये पत्न्यां वैश्वानरेऽपि वा॥अनेन विधिना देहे साधयेद्विजितेन्द्रियः॥ब्रह्मलोकमवाप्नोति न चेह जायते पुनः॥३२॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तवर्णधर्मनिरूपणं नाम चतुर्नवतितमोऽध्यायः ॥९४॥ याज्ञवल्क्य उवाच॥शृण्वन्तु मुनयो धर्मान् गृहस्थस्य यतव्रताः ॥ गुरवे च धनं दत्त्वा स्नात्वा च तदनुज्ञया ॥ १ ॥ समापितब्रह्मचर्य्यो लक्षण्यां स्त्रियमुद्वहेत् ॥ अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम् ॥ २ ॥ अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम् ॥ पञ्चमात्सप्तमादूर्द्ध्वं मातृतः पितृतस्तथा ॥ ३ ॥ दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात् ॥ सवर्णः श्रोत्रियो विद्वान्वरो दोषान्वितो न च ॥ ४ ॥ यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ॥ न तन्मम मतं यस्मात्तत्रायं जायते स्वयम् ॥ ५ ॥ तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथाक्रमम् ॥ ब्राह्मणक्षत्रियविशां भार्य्याः स्वा शूद्रजन्मनः ॥ ६ ॥ ब्राह्मो विवाह आहूय दीयते शक्त्यलङ्कृता ॥ तज्जः पुनात्युभयतः पुरुषानेकविंशतिम् ॥७॥ यज्ञस्थायार्त्विजे दैवमादायार्षस्तु गोयुगम् ॥ चतुर्दश प्रथमजः पुनात्युत्तरजश्च षट् ॥ ८ ॥ इत्युक्त्वा चरतां धर्मं सह या दीयतेऽर्थिने ॥ स कायः पावयेत्तज्जः षड्वंश्यानात्मना सह ॥ ९ ॥ आसुरो द्रविणादानाद्गान्धर्वः समयान्मिथः ॥ राक्षसो युद्धहरणात्पैशाचः कन्यकाच्छलात् ॥ १० ॥ चत्वारो ब्राह्मणस्याद्यास्तथा गान्धर्वराक्षसौ ॥ राज्ञस्तथासुरो वैश्ये शूद्रे चान्त्यस्तु गर्हितः ॥ ११ ॥ पाणिर्ग्राह्यः सवर्णासु गृह्णीत क्षत्रिया शरम् ॥ वैश्या प्रतोदमादद्याद्वेदने चाग्रजन्मनः ॥ १२ ॥ पिता पितामहो भ्राता सकुल्यो जननी तथा ॥ कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परःपरः ॥ १३ ॥ अप्रयच्छन्समाप्नोति भ्रूणहत्यामृतावृतौ ॥ एषामभावे दातॄणां कन्या कुर्य्यात् स्वयंवरम् ॥ १४ ॥ सकृत्प्रदीयते कन्या हरंस्तां चोरदण्डभाक् ॥ अदुष्टां हि त्यजन्दण्ड्यः सुदुष्टां तु परित्यजेत् ॥ १५ ॥ अपुत्रां गुर्वनुज्ञातो देवरः पुत्रकाम्यया ॥ सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावि



१ अत्राधिकः पाठस्तत्र० । २ स्तथा वेदान्यो० । ३ जायीत तद० । अग्रेधिकः पाठस्तत्र । ४ द्विपञ्चनर्वापित्र्या० । ५ गम्यं त्वभाव० । ६ दूषयंस्तु मृषाशतम्० । ७ अपुत्रीं० ।

मात् ॥ १६ ॥ आगर्भसम्भवं गच्छेत्पतितस्त्वन्यथा भवेत् ॥ अनेन विधिना जातः क्षेत्रपस्य भवेत्सुतः ॥ १७ ॥ हताधिकारां मलिनां पिण्ड मात्रोपसेविनीम् ॥ परिभूतामधः शय्यां वासयेद्व्यभिचारिणीम् ॥ १८ ॥ सोमः शौचं ददौ तासां गन्धर्वश्च शुभां गिरम् ॥ पावकः सर्वमेध्यत्वं मेध्या वै योषितो यतः ॥ १९ ॥ व्यभिचाराहतौशुद्धिर्गर्भेत्यागं करोति च ॥ गर्भभर्तृवधे तासां तथा महति पातके ॥ २० ॥ सुरापी व्याधिता द्वेष्ट्री वन्ध्यार्थघ्न्यप्रियंवदा ॥ अधिविन्ना च भर्तव्या महदेनोन्यथा भवेत् ॥ २१ ॥ यत्रांविरोधो दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ॥ मृते जीवति या पत्यौ या नान्यमुपगच्छति ॥ २२ ॥ सेह कीर्त्तिमवाप्नोति मोदते चोमया सह ॥ शुद्धां त्यजंस्तृतीयांशं दद्यादाभरणं स्त्रियाः ॥ २३ ॥ स्त्रीभिर्भर्तुर्वचः कार्य्यमेष धर्मः परः स्त्रियाः ॥ षोडशर्त्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ॥ २४ ॥ ब्रह्मचारी च पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥ एवं गच्छं स्त्रियं क्षामां मघां मूलां च वर्जयेत् ॥ २५ ॥ लक्षण्यं जनयेदेव पुत्रं रोगविवर्जितम्॥यथा कामी भवेद्वापि स्त्रीणां ( स्म ) वरमनुस्मरन् ॥२६॥ स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतस्ततः ॥ भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ॥ २७ ॥ बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥ संयतो पस्करा दक्षा हृष्टा व्ययपराङ्मुखी ॥ २८ ॥ श्वश्रूश्वशुरयोः कुर्य्यात्पादयोर्वन्दनं सदा ॥ क्रीडाशरीरसंस्कारसमाजोत्सवदर्शनम् ॥ २९ ॥ हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥ रक्षेत्कन्यां पिता बाल्ये यौवने पतिरेव ताम् ॥ ३० ॥ वार्द्धक्ये रक्षते पुत्रो ह्यन्यथा ज्ञातयस्तथा ॥ पतिं विना न तिष्ठेत्तु दिवा वा यदि वा निशि ॥ ३१ ॥ ज्येष्ठां धर्मविधौ कुर्य्यान्न कनिष्ठां कदाचन ॥ दाहयेदग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः ॥ ३२ ॥ आहरेद्विधिवद्दारानग्निं चैवाविलम्बितः ॥ हिता भर्त्तुर्दिवं गच्छेदिह कीर्त्तिरवाप्य च ॥ ३३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तगृहस्थधर्मनिर्णयो नाम पञ्चनवतितमोऽध्यायः ॥ ९५ ॥ ॥ याज्ञवल्क्य उवाच ॥ वक्ष्ये सङ्करजात्यादिगृहस्थादि विधिं परम् ॥ विप्रान्मूर्धावषिक्तो हि क्षत्त्रियायां विशः स्त्रियाम् ॥ १ ॥ जातोऽम्बष्ठस्तु शूद्रायां निषादः पर्वतोऽपि वा ॥ माहिष्यः क्षत्त्रियाज्जातो वैश्यायां म्लेच्छसंज्ञितः ॥ २ ॥ शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः ॥ ब्राह्मण्यां क्षत्त्रियात्सूतो वैश्याद्वैदेहकस्तथा ॥ ३ ॥ शूद्रा ज्जातस्तु चांडालः सर्ववर्णविगर्हितः ॥ क्षत्त्रिया मागधं वैश्याच्छूद्रा क्षत्तारमेव च ॥ ४ ॥ शूद्रादयोगवं वैश्या जनयामास वै सुतम् ॥ माहिष्येण

१ पजीवनीम्० । २ भर्तृवधादौच० । ३ व्याधिताधूर्ता० । ४ यत्रानुकूल्यं० । ५ शमद्द्व्योभरणं स्त्रियाः० । ६ यतः स्मृताः । ७ अम्बष्ठः शूद्र्यां निषादो जातः पारशवोपि वा० । ८ सर्वधर्मवहिष्कृतः० ।

करण्यां तु रथकारः प्रजायते ॥ ५ ॥ असत्सन्तस्तु वै ज्ञेयाः प्रतिलोमानुलोमजाः ॥ जात्युत्कर्षाद्द्विजो ज्ञेयः सप्तमे पञ्चमेऽपि वा ॥ ६ ॥ व्यत्यये कर्मणां साम्यं पूर्ववच्चोत्तरावरम् ॥ कर्म स्मार्त्तं विवाहाग्नौ कुर्वीत प्रत्यहं गृही ॥ ७ ॥ दायकालाहृते वापि श्रौतं वैतानिकाग्निषु ॥ शरीरचिन्तां निर्वर्त्त्य कृतशौचविधिर्द्विजः ॥ ८ ॥ प्रातः सन्ध्यामुपासीत दन्तधावनपूर्वकम् ॥ हुत्वाग्नौ सूर्य्यदेवत्याञ्जपेन्मन्त्रान्समाहितः ॥ ९ ॥ वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च ॥ योगक्षेमादिसिद्ध्यर्थमुपेयादीश्वरं गृही ॥ १० ॥ स्नात्वा देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥ वेदानथपुराणानि सेतिहासानि शक्तितः ॥ ११ ॥ जपयज्ञानुसिद्ध्यर्थं विद्यां चाध्यात्मिकीं जपेत् ॥ बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः ॥ ॥ १२ ॥ भूतपित्रमरब्रह्ममनुष्याणां महामखाः ॥ देवेभ्यस्तु हुतं चाग्नौ क्षिपेद्भूतबलिं हरेत् ॥ १३ ॥ अन्नं भूमौश्वचाण्डालवायसेभ्यश्च निःक्षिपेत ॥ अन्नं पितृमनुष्येभ्यो देयमप्यन्वहं जलम् ॥ १४ ॥ स्वाध्यायमन्वहं कुर्य्यान्न पचेच्चान्नमात्मने ॥ बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ॥ १५ ॥ संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥ प्राणाग्निहोत्रविधिनाश्नीयादन्नमकुत्सयन् ॥ १६ ॥ मितं विपाकं च हितं भक्ष्यं बालादिपूर्वकम् ॥ आपोशानेनोपरिष्टादधस्ताच्चैव भुज्यते ॥ १७ ॥ अनग्नममृतं चैव कार्य्यमन्नं द्विजन्मना ॥ अतिथिभ्यस्तु वर्णेभ्यो देयं शक्त्याऽनुपूर्वशः ॥ १८ ॥ अप्रणोद्योऽतिथिः सायमपि नात्र विचारणा ॥ सत्कृत्य भिक्षवे भिक्षा दातव्या सुव्रताय च ॥ १९ ॥ आगतान् भोजयेत्सर्वान्महोक्षं श्रोत्रियाय च ॥ प्रतिसंवत्सरं त्वर्च्याः स्नातकाचार्य्यपार्थिवाः ॥ २० ॥ प्रियो विवाह्यश्च तथा यज्ञं प्रत्यृत्विज ः पुनः ॥ अध्वनीनोऽतिथिः प्रोक्तः श्रोत्रियो वेदपारगः ॥ २१ ॥ मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥ परपाकरुचिर्न स्यादनिन्द्यामन्त्रणादृते ॥ २२ ॥ वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजनम् ॥ श्रोत्रियं वातिथिं तृप्तमासीमान्तादनुव्रजेत् ॥ २३ ॥ अहःशेषं सहासीत शिष्टैरिष्टैश्च बन्धुभिः ॥ उपास्य पश्चिमां सन्ध्यां हुत्वाग्नौ भोजनं ततः ॥ २४ ॥ कुर्य्याद्भृत्यैः समायुक्तैश्चिन्तयेदात्मनो हितम् ॥ ब्राह्मे मुहूर्त्ते चोत्थाय मान्यो विप्रो धनादिभिः ॥ २५ ॥ वृद्धार्त्तानां समादेयः पन्था वै भारवाहिनाम्॥इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च ॥२६॥प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥ प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्॥२७॥कुसीदकृषिवाणिज्यं पाशुपाल्यं विशः स्मृतम्॥शूद्रस्य द्विजशुश्रूषा द्विजो यज्ञान्न हापयेत॥२८॥



१ जात्युत्कर्षो युगेज्ञेय इति पाठश्चिन्त्यः। २ दानकालादृते वापि श्रौतंवैवाहिकाग्निषु० पा० । दायकालादृते० । ३ वेदाथर्वपुरा० । ४ यज्ञप्रसि० । ५ स्वहुतादन्नाच्छेषाद्भूत० । ६ भूमौ च चण्डा० । ७ अप्रणम्योतिथिः सायमपि वाग्भूतृणोदकैः० । ८ संहत्याभि० । ९ दानादि० । १० क्षत्रिये धर्मः प्रजानां प्रति पा० ।

अहिंसा सत्यमस्तेयं शौचमिन्द्रियसंयमः ॥ दमः[1] क्षमार्जवं दानं सर्वेषां धर्मसाधनम् ॥ २९ ॥ आचरेत्सदृशीं वृत्तिमजिह्मामशठान्तथा ॥ त्रैवार्षिका धिकान्नो यः स सोमं पातुमर्हति ॥ ३० ॥ स्यादन्नं वार्षिकं यस्य कुर्य्यात्प्राक्सौमिकीं क्रियाम् ॥ प्रतिसंवत्सरं सोमः पशुः प्रत्ययनं तथा ॥ ३१ ॥ कर्त्तव्याऽऽग्रहणेष्टिश्च चातुर्मास्यानि यत्नतः ॥ एषामसम्भवे कुर्य्यादिष्टिं वैश्वानरीं द्विजः ॥ ३२ ॥ हीनकल्पं न कुर्वीत सति द्रव्ये फलप्रदम् ॥ चण्डालो जायते यज्ञकरणाच्छूद्रभिक्षितात ॥३३॥ यज्ञार्थलब्धं नादद्याद्भासः काकोऽपि वा भवेत् ॥ कुसूलकुम्भीधान्यो वा त्र्याहिकः श्वस्तनोऽपि वा ॥ ३४ ॥ जीवेद्वापि शिलोञ्छेन श्रेयानेषां परःपरः ॥ न स्वाध्यायविरोध्यर्थमीहेत न यतस्ततः ॥ ३५ ॥ राजान्तेवासियाज्येभ्यः[2] सीदन्निच्छेद्धनं क्षुधा ॥ दम्भहैतुकपाषण्डिबकवृत्तींश्च वर्जयेत् ॥ ३६ ॥ शुक्लाम्बरधरो नीचकेशश्मश्रुनखः[3] शुचिः ॥ न भार्य्यादर्शनेऽश्नीयान्नैकवासा न संस्थितः ॥ ३७ ॥ अप्रियं न वदेज्जातु ब्रह्मसूत्री विनीतवान् ॥ देवप्रदक्षिणाङ्कुर्य्याद्यष्टिमान्सकमण्डलुः ॥ ३८ ॥ न तु मेहेन्नदीच्छायाभस्मगोष्ठाम्बुवर्त्मसु ॥ न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बुस्त्रीद्विजन्मनाम् ॥ ३९ ॥ नेक्षेतार्क्यर्कनग्नां स्त्रीं न च संसृष्टमैथुनाम् ॥ न च मूत्रं पुरीषं वा स्वपेत्प्रत्यक्शिरा न च ॥ ४० ॥ ष्ठीवनासृक्शकृन्मूत्रविषाण्यप्सु न संक्षिपेत् ॥ पादौ प्रतापयेन्नाग्नौ न चैनमभिलङ्घयेत् ॥४१॥ पिबेन्नाञ्जलिना तोयं न शयानं प्रबोधयेत् ॥ नाक्षैः क्रीडेच्च कितवैर्व्याधितैश्च न संविशेत ॥ ४२ ॥ विरुद्धं वर्जयेत्कम प्रेतधूमं नदीतरम्[4] ॥ केशभस्मतुषाङ्गारकपालेषु च संस्थितिम् ॥ ४३ ॥ नाचक्षीत धयन्तीं गां नाद्वारेणाविशेत्क्वचित् ॥ न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्त्तिनः ॥४४॥ अध्यायानामुपाकर्म श्रावण्यां श्रवणेन वा ॥ हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य च ॥ ४५ ॥ पौषमासस्य रोहिण्यामष्टकायामथापि वा ॥ जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्बहिः ॥ ४६ ॥ अनध्यायस्त्र्यहं प्रेते शिष्यर्त्विग्गुरुबन्धुषु ॥ उपाकर्मणि चोत्सर्गे स्वशाखश्रोत्रिये मृते ॥ ४७ ॥ सन्ध्यागर्जितनिर्घातभूकम्पोल्कानिपातने ॥ समाप्य वेदं द्युनिशमारण्यकमधीत्य च ॥ ४८ ॥ पञ्चदश्यां चतुर्दश्यामष्टम्यां राहुसूतके ॥ ऋतुसन्धिषु भुक्त्वा वा श्राद्धिकं प्रतिगृह्य च ॥ ४९ ॥पशुमण्डूकनकुलश्वाहिमार्जारसूकरैः[5]॥कृतेऽन्तरे त्वहोरात्रं शक्रपाते तथोच्छ्रये॥५०॥श्वक्रोष्टुगर्दभोलूकसामबाणार्त्तनिःस्वने ॥ अमेध्यशवशूद्रान्त्यश्मशानपतितान्तिके॥५१॥देशेऽशुचावात्मनि[6] च विद्युत्स्तनितसंप्लवे ॥ भुक्त्वार्द्रपाणिरम्भोऽन्तरर्द्धरात्रेऽतिमारुते॥५२॥दिग्दाहे पांसुवर्षेषु सन्ध्यानीहारभीतिषु ॥ धावतः पूतिगन्धे च शिष्टे च गृहमागते ॥५३॥ खरोष्ट्रयानहस्त्यश्वनौवृक्षगिरिरोहणे[7] ॥ सप्तत्रिंशदनध्यायानेतांस्तात्कालिकान्विदुः ॥५४॥

---

१ दानं दमो दया क्षान्तिः सर्वे० । २ वासिगोत्रेभ्यः० । ३ नीचरुम श्रकेशनखैः० । ४ नदीतटम्० । ५ मार्जारमूषकः० । ६ शुचौ वर्त्म० । ७ वृक्षेरणरोह० ।

वेददिष्टं तथाचार्य्यं राजच्छायां परस्त्रियम् ॥ नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्त्तनानि च ॥ ५५ ॥ विप्राहिक्षत्त्रियात्मानो नावज्ञेयाः कदाचन ॥ दूरादु च्छिष्टविण्मूत्रपादाम्भांसि समुत्सृजेत् ॥ ५६ ॥ श्रुतिस्मृत्युक्तमाचारं कुर्य्यान्मर्म्मणि न स्पृशेत् ॥ न निन्दाताडने कुर्य्यात्सुतं शिष्यं च ताडयेत् ॥ ५७ ॥ आचरेत्सर्वदा धर्मं तद्विरुद्धं तु नाचरेत् ॥ मातापित्रतिथीभ्याढचैर्विवादं नाचरेद्गृही ॥ ५८ ॥ पञ्च पिण्डाननुद्धृत्य न स्नायात्पर वारिषु ॥ स्नायान्नदीप्रस्रवणदेवखातह्रदेषु च ॥ ५९ ॥ वर्जयेत्परशय्यादि न चाश्नीयादनापदि ॥ कदर्य्यबद्धचो ( वै ) राणां तथा चानग्निकस्य च ॥ ६० ॥ वैणाभिशस्तवार्द्धुष्यगणिकागणदीक्षिणाम् ॥ चिकित्सकातुरक्रुद्धक्लीवरङ्गोपजीविनाम्॥६१॥क्रूरोग्रपतितव्रात्यदाम्भिकोच्छिष्टभोजिनाम् ॥ शास्त्रविक्रयिणश्चैव स्त्रीजितग्रामयाजिनाम् ॥ ६२ ॥ नृशंसराजरजककृतघ्नवधजीविनाम् ॥ पिशुनानृतिनोश्चैव सोमविक्रयिणस्तथा ॥ ६३ ॥ बन्दिनां स्वर्णकाराणामन्नमेषां कदाचन ॥ न भोक्तव्यं वृथा मांसं केशकीटसमन्वितम् ॥६४॥ भक्तं पर्य्युषितोच्छिष्टं श्वस्पृष्टं पतितो(ते)क्षितम्॥उदक्यास्पृष्टसं घुष्टमपर्य्यातं च वर्जयेत् ॥ ६५ ॥ गोघ्रातं शकुनोच्छिष्टं पादस्पृष्ट च कामतः ॥ शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणः ॥ ६६ ॥ भोज्यान्नो नापित श्चैव यश्चात्मानं निवेदयेत् ॥ अन्नं पर्य्युषितं भोज्यं स्नेहाक्तं चिरसंभृ ( स्थि ) तम् ॥ ६७ ॥ अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥ औष्ट्रमैकशफं स्त्रीणां पयश्च परिवर्जयेत् ॥ ६८ ॥ क्रव्यादपक्षिदात्यूहशुकमांसानि वर्जयेत् ॥ सारसैकशफान्हंसान्बलाकबकटिट्टिभान् ॥ ६९ ॥ वृथा कृसरसंयाव पायसापूपशष्कुलीः ॥ कुररं जालपादं च खञ्जरीटमृगद्विजान् ॥ ७० ॥ चाषान्मत्स्यान्रक्तपादाञ्जग्ध्वा वै कामतो नरः॥बल्लूरं कामतो जग्ध्वा सोप वासस्त्र्यहं भवेत् ॥ ७१ ॥ पलाण्डुलशुनादीनि जग्ध्वा चान्द्रायणं चरेत् ॥ श्राद्धे देवान्पितॄन्प्राच्र्य खादन्मांसं न दोषभाक् ॥ ७२ ॥ वसेत्स नरके घोरे दिनानि पशुरोमतः ॥ सम्मितानि दुराचारो यो हन्त्यविधिना पशून् ॥ मांसं सन्त्यज्य संप्राप्य कामान्याति ततो हरिम् ॥ ७३ ॥ इति श्रीगा रुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तश्राद्धनिरूपणं नाम षण्णवतितमोऽध्यायः॥९६॥याज्ञवल्क्य उवाच ॥ द्रव्यशुद्धिं प्रवक्ष्यामि तन्निबोधत सत्तमाः ॥ सौवर्णराजताब्जानां शङ्खरज्वादिचर्मणाम् ॥ १ ॥ पात्राणां चासनानां च वारिणा शुद्धिरिष्यते॥उष्णवाभः स्रुक्स्रुवयोर्धान्यादेः प्रोक्षणेन च ॥ २ ॥ तक्षणाद्दारुशृङ्गादेर्यज्ञपात्रस्य मार्जनात् ॥ सोष्णैरुदकगोमूत्रैः शुध्यत्याविककौशिकम् ॥ ३ ॥ भैक्ष्यं योषिन्मुखं पश्यन्पुनः पाकान्महीमयम् ॥ गाघ्नातेऽन्ने तथा केशमक्षिकाकीटदूषिते ॥ ४ ॥ भस्मक्षेपाद्विशुद्धिः स्याद्भूशुद्धिर्मार्जनादिना ॥ त्रपुसीसकताम्राणां

१ देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः० । २ पात्रान्तरचिकित्सानां क्लीब० । ३ पर्यावान्तं च० ।

क्षाराम्लोदकवारिभिः ॥ ५ ॥ भस्मद्भिर्लोहकांस्यानामज्ञातं च सदा शुचि ॥ अमेध्याक्तस्य मृत्तोयैर्गन्धलेपापकर्षणात् ॥ ६ ॥ शुचि गोतृप्तिदं तोयं प्रकृतिस्थं महीगतम् ॥ तथा मांसं श्वचाण्डालक्रव्यादादिनिपातितम् ॥ ७ ॥ रश्मिरग्नी रजश्छाया गौरश्वो वसुधानिलाः ॥ अश्वाजविप्रुषो मेध्या स्तथाचमनबिन्दवः ॥ ८ ॥ स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्याप्रसर्पणे ॥ आचान्तः पुनराचामेद्वासोऽन्यत्परिधाय च ॥ ९ ॥ क्षुते निष्ठीविते स्वापे परिधानेऽश्रुपातने ॥ पञ्चस्वेतेषु नाचामेद्दक्षिणं श्रवणं स्पृशेत् ॥ तिष्ठन्त्यग्न्यादयो देवा विप्रकर्णे[1] तु दक्षिणे ॥ १० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तद्रव्यशुद्धिनिरूपणं नाम सप्तनवतितमोऽध्यायः ॥ ९७ ॥ याज्ञवल्क्य उवाच ॥ अथ दानविधिं वक्ष्ये तन्मे शृणुत सुव्रताः ॥ अन्येभ्यो ब्राह्मणाः श्रेष्ठास्तेभ्यश्चैव क्रियापराः ॥ १ ॥ ब्रह्मवेत्ता च तेभ्योऽपि पात्रं विद्यातपोऽन्विताः ( तम् ) ॥ गोभूधान्यहिरण्यादि पात्रे दातव्यमर्चितम् ॥ २ ॥ विद्यातपोभ्यां हीनेन न तु ग्राह्यः प्रतिग्रहः ॥ गृह्णन्प्रदातारमधो नयत्यात्मानमेव च ॥ ३ ॥ दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ॥ याचितेनापि[2] दातव्यं श्रद्धापूतं तु शक्तितः ॥ ४ ॥ हेमशृङ्गी शफैः रौप्यैः सुशीला वस्त्रसंयुता ॥ सकांस्यपात्रा दातव्या क्षीरिणी गौः सदक्षिणा ॥ ५ ॥ दशसौवर्णिकं शृङ्गं शफं सप्तपलैः कृतम् ॥ पञ्चाशत्पलिकं पात्रं कांस्यं वत्सस्य कीर्त्यते ॥ ६ ॥ स्वर्णपिप्पलपात्रेण वत्सो वा वत्सिकापि वा ॥ अस्या अपि च दातव्यमपत्यं रोगवर्जितम् ॥ ७ ॥ दाता स्वर्गमवाप्नोति वत्सरान्रोमसंमितान् ॥ कपिला चेत्तारयते भूयश्चासप्तमं कुलम् ॥ ८ ॥ यावद्वत्सस्य द्वौ पादौ मुखं योन्यां प्रदृश्यते ॥ तावद्गौः पृथिवी ज्ञेया यावद्गर्भं न मुञ्चति ॥ ९ ॥ यथा कथञ्चिद्दत्त्वा गां धेनुं वाऽधेनुमेव वा ॥ अरोगामपरिक्लिष्टां दाता स्वर्गे महीयते ॥ १० ॥ श्रान्तसंवाहनं रोगिपरिचर्य्या सुरार्चनम् ॥ पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानवत्[3] ॥ ११ ॥ द्विजाय यदभीष्टं तु दत्त्वा स्वर्गमवाप्नुयात् ॥ भूदीपांश्चान्नवस्त्राणि सर्पिर्दत्त्वा व्रजेच्छ्रियम् ॥ १२ ॥ गृहधान्यच्छत्रमाल्यवृक्षयानघृतं जलम् ॥ शय्यानुलेपनं दत्त्वा स्वर्गलोके महीयते ॥ १३ ॥ ब्रह्मदाता ब्रह्मलोकं प्राप्नोति सुरदुर्लभम् ॥ वेदार्थयज्ञशास्त्राणि धर्मशास्त्राणि चैव हि ॥ १४ ॥ मूल्येनापि लिखित्वापि[4] ब्रह्मलोकमवाप्नुयात् ॥ एतन्मूलं जगद्यस्मादसृजत्पूर्वमीश्वरः ॥ १५ ॥ तस्मात्सर्वप्रयत्नेन कार्य्यो वेदार्थसंग्रहः[5] ॥ इतिहासपुराणं वा लिखित्वा यः प्रयच्छति ॥ १६ ॥ ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणोन्नतिम् ॥ लोकायतं कुतर्कञ्च प्राकृतम्लेच्छभाषितम् ॥ १७ ॥ न श्रोतव्यं द्विजैनैतदधो नयति तं द्विजम् ॥ समर्थो यो न गृह्णीयाद्दातृलोकानवाप्नुयात् ॥ १८ ॥ कुशाः शाकं पयो गन्धाः प्रत्याख्येया न वारि च ॥

१ सुप्ते उत्का र० । २ याचितेचापि० । ३ गोष्पदासमम्० । ४ नापि लिखेद्वापि० । ५ देवाथसं० ।

अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः॥१९॥अन्यत्र कुलटाषण्ढपतितेभ्यो द्विषस्तथा॥देवातिथ्यर्चनकृते पितृतृप्त्यर्थमेव च॥सर्वतः प्रतिगृह्णीयादात्मवृ
त्त्यर्थमेव च ॥ २० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तदानधर्मनिरूपणं नामाष्टनवतितमोऽध्यायः
॥९८॥याज्ञवल्क्य उवाच॥अथ श्राद्धविधिं वक्ष्ये सर्वपापप्रणाशनम्॥अमावस्याष्टकावृद्धिकृष्णपक्षायनद्वयम्॥१॥ द्रव्यं ब्राह्मणसम्पत्तिर्विषुवत्सूर्य्यसं
क्रमः॥व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः॥२॥श्राद्धं प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः॥अग्र्यः सर्वदेवेषु श्रोत्रियो वेदविद्युवा॥३॥वेदा
र्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णिकः ॥ स्वस्रीयऋत्विग्जामातायाज्यश्वशुरमातुलाः॥४॥ त्रिणाचिकेतदौहित्रशिष्यसम्बन्धिबान्धवाः ॥ कर्मनिष्ठा
स्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः ॥ ५ ॥ पितृमातृपराश्चैव ब्राह्मणाः श्राद्धदेवताः ॥ रोगी हीनातिरिक्ताङ्गः काणः पौनर्भवस्तथा ॥ ६ ॥ अवकीर्ण्यादि
यो ये च ये चाचारविवर्जिताः ॥ अवैष्णवाश्च ते सर्वे न श्राद्धार्हाः कदाचन ॥ ७ ॥ निमन्त्रयेच्च पूर्वेद्युर्द्विजैर्भाव्यं च संयतैः ॥ आजान्तांश्चैव पूर्वाह्णे
ह्यासनेषूपवेशयेत् ॥ ८ ॥ युग्मान्देवे तथा पित्र्ये स्वप्रदेशेषु[2] शक्तितः ॥ द्वौ दैवे प्रागुदक् पित्र्ये त्रीण्येकं चोभयोः पृथक् ॥९॥ मातामहानामप्येवं
तन्त्रं[3] वा वैश्वदेविकम् ॥ हस्तप्रक्षालनं दत्त्वा विष्टरार्थे कुशानपि ॥ १० ॥ आवाह्य तदनुज्ञातो विश्वदेवासइत्यृचा ॥ यवैरन्नं विकीर्य्याथ भाजने
सपवित्रके ॥ ११ ॥ शन्नोदेव्या पयः क्षिप्त्वा यवोऽसीति यवांस्तथा ॥ यादिव्या इति मन्त्रेण हस्तेष्वेव विनिःक्षिपेत् ॥ १२ ॥ गन्धोदके[4] तथा
दीपमाल्यदामप्रदीपकम् ॥ अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम् ॥ १३ ॥ द्विगुणांस्तु कुशान्दत्त्वा उशन्तस्त्वेत्यृचा पितॄन् ॥ आवाह्य तदनु
ज्ञातो जपेदायन्तुनस्ततः ॥ १४ ॥ यवार्थस्तु तिलैः कार्य्यः कुर्य्यादर्घ्यादि पूर्ववत् ॥ दत्त्वार्घ्यं संस्रवांस्तेषां पात्रे कृत्वा विधानतः ॥ १५ ॥ पितृ
भ्यः स्थानमसीति न्युब्जं पात्रं करोत्यधः ॥ अग्नौ करिष्य आदाय पृच्छत्यन्नं घृतप्लुतम् ॥ १६ ॥ कुरुष्वेति तथोक्तोसौ हुत्वाग्नौ पितृयज्ञवत् ॥
हुतशेषं प्रदद्याच्च भाजनेषु समाहितः ॥ १७ ॥ यथालाभोपपन्नेषु रौप्येषु च विशेषतः ॥ दत्त्वान्नं पृथिवीपात्रमिति पात्राभिमन्त्रणम् ॥ १८ ॥ कृत्वे
दंविष्णुरित्येवं द्विजांगुष्ठं निवेशयेत् ॥ सव्याहृतिं च गायत्रीं मधुवातेत्यृचस्तथा ॥ १९ ॥ जप्त्वा यथासुखं वाच्यं भुञ्जीरंस्तेऽपि वाग्यताः ॥ अन्न
मिष्टं हविष्यं च दद्यादक्रोधनोत्वरः ॥ २० ॥ आतृप्तेस्तु पवित्राणि जप्त्वा पूर्वजपं तथा ॥ अन्नमादाय तृप्ताः स्थः शेषं चैवानुमन्त्र्य च ॥ २१ ॥
तदन्नं विकिरेद्भूमौ दद्याच्चापः सकृत्सकृत् ॥ सर्वमन्नमुपादाय सतिलं दक्षिणामुखः ॥ २२ ॥ उच्छिष्टसन्निधौ पिण्डान्प्रदद्यात्पितृ

१ तिथिज्ञाने च कुशलः० । २ सुप्रदेशेष्वशक्तितः० । ३ मन्त्रं वा० । ४ गन्धं तथोदकं चैव धूपादींश्च पवित्रकम्० ।

यज्ञवत् ॥ मातामहानामप्येवं दद्यादाचमनं ततः ॥ २३ ॥ स्वस्ति वाच्यं ततो दद्यादक्षय्योदकमेव च ॥ दत्त्वा च दाक्षिणां शक्त्या स्वधाकारमुदाहरेत् ॥ २४ ॥ वाच्यतामित्यनुज्ञातः पितृभ्यश्च स्वधोच्यताम् ॥ विप्रैरस्तु स्वधेत्युक्तो भूमौ सिञ्चेत्ततो जलम् ॥ २५ ॥ प्रीयन्तामिति चाहैवं विश्वेदेव्यं जलं ददत् ॥ दातारो नोऽभिवर्धन्तां वेदाः सन्ततिरेव च ॥ २६ ॥ श्रद्धा च नो मा व्यगमद्बहु देयं च नोऽस्त्विति ॥ इत्युक्तोक्त्वा प्रिया वाचः प्रणिपत्य विसर्जयेत् ॥ २७ ॥ वाजेवाजे इति प्रीत्या पितृपूर्वं विसर्जनम् ॥ यस्मिंस्ते संस्रवाः पूर्वमर्घ्यपात्रे निपातिताः ॥ ॥ २८ ॥ पितृपात्रं तदुत्तानं कृत्वा विप्रान्विसर्जयेत् ॥ प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम् ॥ २९ ॥ ब्रह्मचारी भवेत्तां तु रजनीं भार्य्यया सह ॥ एवं प्रदक्षिणं कृत्वा वृद्धौ नान्दीमुखानपि ॥ ३० ॥ यजेत्तदधिककर्कन्धूमिश्राः पिण्डा यवैः श्रिताः ॥ एकोद्दिष्टं दैवहीनं एकान्नैकपवित्रकम् ॥ ३१ ॥ आवाहनाग्नौकरणरहितं त्वपसव्यवत् ॥ उपतिष्ठतामित्यक्षय्यस्थाने विप्रान्विसर्जयेत् ॥ ३२ ॥ अभिरम्यतां प्रब्रूयाद् ब्रूयुस्तेभिरताः स्म ह ॥ गन्धोदकतिलैर्मिश्रं कुर्य्यात्पात्रचतुष्टयम् ॥ ३३ ॥ अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥ येसमाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥ ३४ ॥ एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि ॥ अर्वाक् सपिण्डीकरणं यस्य संवत्सराद्भवेत् ॥ ३५ ॥ तस्याप्यन्नं सोदकुम्भं दद्यात्संवत्सरं द्विजः ॥ पिण्डांश्च गोजविप्रेभ्यो दद्यादग्नौ जलेऽपि वा ॥ ३६ ॥ हविष्यान्नेन वै मासं पायसेन तु वत्सरम् ॥ मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः ॥ ३७ ॥ ऐणरौरववाराहशाशमांसैर्यथाक्रमम् ॥ मासवृद्ध्यापि तुष्यन्ति दत्तैरिह पितामहाः ॥ ३८ ॥ दद्याद्वर्षात्त्रयोदश्यां मघासु च न संशयः ॥ प्रतिपत्प्रभृतिष्वेवं कन्यादीञ्छ्राद्धदो लभेत् ॥ ३९ ॥ शस्त्रेण निहतानां तु चतुर्दश्यां प्रदीयते ॥ स्वर्गं ह्यपत्यमोजश्च शौर्य्यं क्षेत्रं बलं तथा ॥ ४० ॥ पुत्रश्रैष्ठ्यं स सौभाग्यं समृद्धिं मुख्यतां शुभम् ॥ प्रवृत्तचक्रतां चैव वाणिज्यप्रभृतींस्तथा ॥ ४१ ॥ अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥ धनं विद्यां च वाक्सिद्धिं कुप्यं गोजाविकं तथा ॥ ४२ ॥ अश्वानायुश्च विधिवद्यः श्राद्धं संप्रयच्छति ॥ कृत्तिकादिभरण्यन्तं स कामान्प्राप्नुयादिमान् ॥ ४३ ॥ वस्त्वाद्याः प्रीणयन्त्येव नरं श्राद्धकृतं द्विजाः ॥ आयुः प्रजा धनं विद्यां स्वर्गमोक्षसुखानि च ॥ ४४ ॥ प्रयच्छति यथा राज्यं प्रीत्या नित्यं पितामहः ॥ ४५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तश्राद्धविधिनिरूपणं नाम नवनवतितमोऽध्यायः ॥ ९९ ॥ याज्ञवल्क्य उवाच ॥ विनायकोपसृष्टस्य लक्षणानि निबोधत ॥ स्वप्नेऽवगाहतेऽत्यर्थं जलं मुंडांश्च पश्यति ॥ १ ॥ विमना विफलारम्भः संसीदत्यनिमित्ततः ॥

---

१ ततः कुर्याद० । २ प्रकृतेभ्यः० । ३ पितृशेषितम् । ४ अभिरताः स्मः इत्यर्थः । आर्षः सलोपः । ५ मासवृद्ध्याभितु० । ६ पुत्रश्रेष्ठान्ससौ०

राजा राज्यं कुमारी च पतिं पुत्रं च गुर्विणी ॥ २ ॥ नाप्नुयात्स्नपनं तस्य पुण्येऽह्निविधिपूर्वकम् ॥ गौरसर्षपकल्केन साज्येनोत्सारितस्य तु ॥ ३ ॥
सर्वौषधैः सर्वगन्धैर्विलिप्तशिरसस्तथा ॥ भद्रासनोपविष्टस्य स्वस्ति वाच्यं द्विजाञ्छुभान् ॥ ४ ॥ मृत्तिकां रोचनां गन्धान् गुग्गुलुं चाप्सु निःक्षिपेत ॥
या आहता एकवर्णैश्चतुर्भिः कलशैर्ह्रदात् ॥ ५ ॥ चर्मण्यानुडुहे रक्ते स्थाप्यं भद्रासने तथा ॥ सहस्राक्षं शतधारमृषिभिः पावनं स्मृतम् ॥ ६ ॥
तेन त्वामभिषिञ्चामि पावमान्यः पुनन्तु ते ॥ भगं तु वरुणो राजा भगं सूर्य्यो बृहस्पतिः ॥ ७ ॥ भगमिन्द्रश्च वायुश्च भगं सप्तर्षयो ददुः ॥
यत्ते केशेषु दौर्भाग्यं सीमन्ते यच्च मूर्द्धनि ॥ ८ ॥ ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नंतु ते सदा ॥ स्नातस्य सार्षपं तैलं स्रुवेणौदुम्बरेण तु ॥ ९ ॥
जुहुयान्मूर्द्धनि कुशान्सव्येन परिगृह्य च ॥ मितश्चसमितश्चैव तथा शालकटङ्कटौ ॥ १० ॥ कुष्माण्डो राजपुत्रश्च अन्ते स्वाहासमन्वितैः ॥
दद्याच्चतुष्पथे भूमौ कुशानास्तीर्य्य सर्वशः ॥ ११ ॥ कृताकृतांस्तण्डुलांश्च पललौदनमेव च ॥ पुष्पं चित्रं सुगन्धं च सुरां च त्रिविधामपि ॥ १२ ॥
मूलकं पूरिकापूपं तथैवौण्डेरकस्रजः ॥ दधि पायसमन्नं च गुडपिष्टं समोदकम् ॥ १३ ॥ एतान्सर्वानुपाहृत्य भूमौ कृत्वा ततः शिरः ॥ अम्बिकामुप
तिष्ठेच्च दद्यार्द्घ्यं कृताञ्जलिः ॥ १४ ॥ दूर्वासर्षपपुष्पैश्च पुत्रजन्मभिरन्ततः ॥ कृतस्वस्त्ययनं चैव प्रार्थयेदम्बिकां सतीम् ॥ १५ ॥ रूपं देहि यशो
देहि भगं भगवति ! देहि मे ॥ पुत्रान्देहि श्रियं देहि सर्वान्कामांश्च देहि मे ॥ १६ ॥ ब्राह्मणान् भोजयेत्पश्चाच्छुक्लवस्त्रानुलेपनैः ॥ वस्त्रयुग्मंगुरोर्द
द्यात्संपूज्य च ग्रहांस्तथा ॥ श्रेयः कर्मफलं विन्द्यात्सूर्यार्चनरतस्तथा ॥ १७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञव
ल्क्योक्तगणपतिकल्पनिरूपणं नाम शततमोऽध्यायः ॥ १०० ॥ ॥ याज्ञवल्क्य उवाच ॥ श्रीकामः शान्तिकामो वा ग्रहदृष्ट्यभिचारवान् ॥
ग्रहयज्ञं समं कुर्य्याद्ग्रहाश्चैते बुधैः स्मृताः ॥ १ ॥ सूर्य्यः सोमो मंगलश्च बुधश्चैव बृहस्पतिः ॥ शुक्रः शनैश्चरो राहुः केतुर्ग्रहगणाः स्मृताः ॥ २ ॥
ताम्रकात्स्फाटिकाद्रक्तचन्दनात्स्वर्णकादुभौ ॥ रजतादयसः सीसात्कांस्याद्वर्णान्निबोधत ॥ ३ ॥ रक्तः शुक्लस्तथा रक्तः पीतः पीतः सितोसितः ॥
कृष्णः कृष्णः क्रमाद्वर्णा द्रव्याणि मुनयस्ततः ॥ ४ ॥ स्थापयेद्ग्रहवर्णानि होमार्थं प्रलिखेत्पटे ॥ स्नापयेद्धोमयेच्चैव ग्रहद्रव्यैर्विधानतः ॥
सुवर्णानि प्रदेयानि वासांसि कुसुमानि च ॥ ५ ॥ गन्धाश्च बलयश्चैव धूपो देयश्चगुग्गुलुः ॥ कर्त्तव्यास्तत्र मन्त्रैश्च चरवः प्रतिदैवतम् ॥ ६ ॥

१ सर्षपगन्धेन० । २ एकाकृत्याह्येक० । ३ श्रवणे मस्तके तथा । ४ दद्यादन्नं कु० । ५ ब्राह्मणांस्तोषये० । ६ ताम्रकांस्यस्फाटिकाच्च रक्तचन्दनस्वर्णकात् । रजतादयसः सीसाकांस्याद्दृष्टिः प्रशाम्यति० । ७ अधिप्रत्यधिदैवतैः० ।

आकृष्णेन इमंदेवा अग्निर्मूर्द्धादिवःककुत् ॥ उद्बुध्यस्वेति जुहुयादेभिरेव यथाक्रमम् ॥ ७ ॥ बृहस्पतेपरिदीयेति सर्वे अन्नात्परिस्रुतम् ॥ शन्नोदेवी कयानश्च केतुंकृण्वन्निति क्रमात् ॥ ८ ॥ अर्कः पलाशः खदिरस्त्वपामार्गोऽथ पिप्पलः ॥ औदुम्बरः शमी दूर्वा कुशाश्च समिधः क्रमात् ॥ ९ ॥ होतव्या मधुसर्पिभ्यां दध्ना चैव समन्वितः ॥ गुडौदनं पायसं च हविष्यं क्षीरषाष्टिकम् ॥ १० ॥ दध्योदनं हविः पूपान्मांसं चित्रान्नमेव च॥ दद्याद्ग्रहक्रमादेतान् ग्रहेभ्यो भाजनं ततः ॥ ११ ॥ धेनुः शङ्खस्तथानड्वान्हेम वासो हयस्तथा ॥ कृष्णा गौरायसं छाग एता वै दक्षिणाः क्रमात् ॥ ग्रहाः पूज्याः सदा यस्माद्राज्यादि प्राप्यते फलम् ॥ १२ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तग्रहशान्तिनिरूपणं नामैकोत्तरशततमोऽध्यायः ॥ १०१ ॥ ॥ याज्ञवल्क्य उवाच ॥ वानप्रस्थाश्रमं वक्ष्ये तच्छृण्वन्तु महर्षयः ॥ पुत्रेषु भार्यां निःक्षिप्य वनं गच्छेत्सहैव वा ॥ १ ॥ वानप्रस्थो ब्रह्मचारी साग्निः सोपासनः क्षमी ॥ अफालकृष्टेनाग्नींश्च पितृदेवातिथींस्तथा ॥ २ ॥ भृत्यांस्तु तर्पयेच्छ्मश्रुजटालोमभृदात्मवान् ॥ दान्तस्त्रिषवणस्नायी निवृत्तश्च प्रतिग्रहात् ॥ ३ ॥ स्वाध्यायवान्ध्यानशीलः सर्वभूतहिते रतः (तिः)॥ अह्नो मासस्य मध्ये वा कुर्य्याद्द्रार्थपरिग्रहम् ॥ ४ ॥ कृतं त्यजेदाश्वयुजे युञ्जेत्कालं व्रतादिना ॥ पक्षे मासे थवाश्नीयाद्दन्तोलूखलिको भवेत्॥५॥ चान्द्रायणी स्वपेद्भूमौ कर्म कुर्य्यात्फलादिना ॥ ग्रीष्मे पंचाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः ॥ ६ ॥ आर्द्रवासास्तु हेमन्ते योगाभ्यासाद्दिनं नयेत् ॥ यः कण्टकैर्वितुदति चन्दनैर्यश्च लिम्पति॥अक्रुद्धः परितुष्टश्च समस्तस्य च तस्य च ॥ ७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे याज्ञवल्क्योक्तवानप्रस्थधर्मनिरूपणं नाम द्व्युत्तरशततमोऽध्यायः ॥१०२॥ ॥ याज्ञवल्क्य उवाच ॥ भिक्षोर्धर्मं प्रवक्ष्यामि तं निबोधत सत्तमाः ॥ वनाद्गृहाद्वा कृत्वेष्टिं सर्ववेदसदक्षिणाम् ॥ १ ॥ प्राजापत्यन्तदन्तेऽपि अग्निमारोप्य चात्मनि ॥ सर्वभूतहितः शान्तस्त्रिदण्डी सकमंडलुः ॥ २ ॥ सर्वारामं परिव्रज्य भिक्षार्थी ग्राममाश्रयेत् ॥ अप्रमत्तश्चरेद्भैक्ष्यं सायाह्ने नाभिलक्षितः ॥ ३ ॥ रोहिते भिक्षुकैर्ग्रामे यात्रामात्रमलोलुपः॥भवेत्परमहंसो वा एकदंडी यमादितः॥४॥सिद्धयोगस्त्यजन्देहममृतत्वमिहाप्नुयात्॥दांताऽतिथिप्रियो ज्ञानी गृही श्राद्धेऽपि मुच्यते ॥ ५ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे याज्ञवल्क्योक्तवानप्रस्थसन्न्यासधर्मनिरूपणं नाम त्र्युत्तरशततमोऽध्यायः ॥ १०३ ॥

---

१ शन्नोदेवीस्तथोकतुंकृण्वन्निमाः कृणुस्तथा० पा० । शन्नोदेवीस्तथाकाण्डात्केतुंकृण्वान्निमाःकृणुस्तथा० पा० । २ ग्रहेभ्योभोजनं त० । ३ शमदमक्षमी० । ४ अर्चयेत्सा भिकान्विप्रान्पितृ० । ५ अह्नांमासस्य० । ६ कुर्यात्स्वार्थप० पर० । कुर्याद्द्राथपरि० । ७ निराश्रयः स्वपे० । ८ यः क्रकचैर्वितु० । ९ शयानेनाभिलक्षितः० । १० शमादिकृत० । ११ इदमर्धमसम्बद्धतयैकास्मिन्नेव पुस्तके दृश्यते० ।

याज्ञवल्क्य उवाच ॥ नरकात्पातकोद्भूतात्क्षयात्पापस्य कर्मणः ॥ ब्रह्महा श्वा खरोष्ट्रः स्याद्गेको यकः सुराप्यपि ॥ १ ॥ स्वर्णचोरः कृमिः कीटः तृणादिर्गुरुतल्पगः ॥ क्षयरोगी श्यावदन्तः कुनखी शिपिविष्टकः ॥ २ ॥ ब्रह्महत्याक्रमात्स्युश्च तत्सर्वं वा शिशोर्भवेत् ॥ अन्नहर्त्ता मयावी स्यान्मूको वागपहारकः ॥ ३ ॥ धान्यहार्य्यतिरिक्तांगः पिशुनः पूतिनासिकः ॥ तैलाहारी तैलपायी पूतिवक्त्रस्तु सूचकः ॥ ४ ॥ ब्रह्मस्वं कन्यकां क्रीत्वा वने रक्षो भवेद्दृषः ॥ रत्नहृद्धीनजातः स्यात्पत्रशाकहरः शिखी ॥ ५ ॥ गुच्छं चुचुन्दरी हत्वा धान्यहन्मूषको भवेत् ॥ फलं कपिः पशून्हत्वा त्वजा काकः पयस्तथा ॥ ६ ॥ मांसं गृध्रः पटं श्वित्री चीरी लवणहारकः ॥ यथाकर्म फलं प्राप्य तिर्यक्त्वं कालपर्ययात् ॥ ७ ॥ जायन्ते लक्षणभ्रष्टा दरिद्राः पुरुषाधमाः ॥ ततो निष्कलुषीभूता कुले महति योगिनः ॥ ८ ॥ जायन्ते लक्षणोपेता धनधान्यसमन्विताः ॥ ९ ॥

इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे याज्ञवल्क्योक्तकर्मविपाकनिरूपणं नाम चतुरुत्तरशततमोऽध्यायः ॥ १०४ ॥

विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ॥ अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ १ ॥ तस्माद्यत्नेन कर्त्तव्यं प्रायश्चित्तं विशुद्धये ॥ एवम स्यान्तरात्मा च लोकश्चैव प्रसीदति ॥ २ ॥ लोकः प्रसीदेदात्मैवं प्रायश्चित्तैरवक्षयः ॥ प्रायश्चित्तमकुर्वाणाः पश्चात्तापविवर्जिताः ॥ ३ ॥ नरकान्यान्ति पापा वै महारौरवरौरवान् ॥ तामिस्रं लोहशंकुं च पूतिगन्धसमाकुलम् ॥ ४ ॥ हंसाभं लोहितोदं च सञ्जीवननदीपथम् ॥ महानिलयकाकोलमन्धतामिस्रवापनम् ॥ ५ ॥ अवीचिं कुम्भीपाकं च यान्ति पापा ह्यपुण्यतः ॥ ब्रह्महा मद्यपः स्तेयी संयोगी गुरुतल्पगः ॥ ६ ॥ गुरुनिन्दा वेदनिन्दा ब्रह्महत्यासमे ह्युभे ॥ निषिद्धभक्षणं जिह्मक्रियाचरणमेव च ॥ ७ ॥ रजस्वलामुखास्वादः सुरापानसमानि तु ॥ अश्वरत्नादिहरणं सुवर्णस्तेयसम्मितम् ॥ ८ ॥ सखिभार्याकुमारीषु स्वयोनिष्वन्त्यजासु च ॥ सगोत्रासु तथा स्त्रीषु गुरुतल्पसमं स्मृतम् ॥ ९ ॥ पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ॥ मातुः सपत्नीं भगिनीमाचार्य्यतनयां तथा ॥ १० ॥ आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥ छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा ॥ ११ ॥ गोवधो व्रात्यतास्तेयमृणानां च परिक्रिया ॥ अनाहिताग्नितापण्यविक्रयः परिवेदनम् ॥ १२ ॥ भृत्याचाध्ययनादानं भृतकाध्यापनन्तथा ॥ पारदार्य्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया ॥ १३ ॥ सच्छूद्रविट्क्षत्रबन्धोर्निन्दितार्थोपजीविता ॥ नास्तिक्यं व्रतलोपश्च शूल्यं गोश्चैव

१ नरकात्पातकोद्भृत्याक्षया० । २ अन्यायदत्तमायावी० पा० । धान्यहर्तात्वनाहारी० पा० । ३ पापान्विता नराः० । ४ अन्त्यजादिषु० । ५ गोवधोब्राह्मणस्तेय० । ६ चानपाक्रिया० ।

विक्रयः ॥ १४ ॥ पितृमातृसुहृत्त्यागस्तडागारामविक्रयः ॥ कन्यायादूषण चैव परिविन्दकयाजनम् ॥ १५ ॥ कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥ आत्मनोऽर्थे क्रियारम्भो मद्यपस्त्रीनिषेवणम् ॥ १६ ॥ स्वाध्यायाग्निसुतत्यागो बान्धवत्याग एव च ॥ असच्छास्त्राभिगमनं भार्य्यात्मपरिविक्रयः ॥ १७ ॥ उपपापानि चोक्तानि प्रायश्चित्तं निबोधत॥शिरःकपालध्वजवान् भिक्षाशी कर्म वेदयन् ॥ १८ ॥ ब्रह्महा द्वादश समा मितभुक् शुद्धिमाप्नुयात् ॥ लोमभ्यः स्वाहेति च वा लोमप्रभृति वै तनुम् ॥ १९ ॥ मज्जान्तां जुहुयाद्वापि स्वस्वमन्त्रैर्यथाक्रमम् ॥ शुद्धिः स्याद्ब्राह्मणत्राणात्कृत्वैवं शुद्धिरेव च ॥२०॥ निरातङ्कं द्विजं गां च ब्राह्मणार्थे हतोऽपि वा ॥ अरण्ये नियतो जप्त्वा त्रिःकृत्वो वेदसंहिताम् ॥ २१ ॥ सरस्वतीं वा संसेव्य धनं पात्रे समर्पयेत् ॥ यागस्थक्षत्रविड्घाते चरेद्ब्रह्महणो व्रतम् ॥ २२ ॥ गर्भहा वा यथावर्णं तथात्रेयीनिषू ( सू ) दनम् ॥ चरेद्व्रतमहत्वापि घातनार्थमुपागतः ॥२३॥ द्विगुणं सवनस्थे तु ब्राह्मणे व्रतमाचरेत्॥सुराम्बुघृतगोमूत्रं पीत्वा शुद्धिः सुरापिणः ॥२४॥ अग्निवर्णं घृतं वापि चीरवासा जटी भवेत् ॥ व्रतं ब्रह्महणः कुर्य्यात्पुनः संस्कारमर्हति ॥ २५ ॥ रेतोविण्मूत्रपानाच्च सुरापा ब्राह्मणी तथा ॥ पतिलोकपरिभ्रष्टा गृध्री स्यात्सूकरी शुनी ॥ २६ ॥ स्वर्णहारी द्विजो राज्ञे दत्त्वा तु मुसलं तथा ॥ कर्मणः ख्यापनं कृत्वा हतस्तेन भवेच्छुचिः ॥ २७ ॥ आत्मतुल्यं सुवर्णं वा दत्त्वा शुद्धिमियाद्द्विजः ॥ शयने सार्द्धमायस्या योषिता निभृतं स्वपेत्॥२८॥उच्छेद्य लिङ्गं वृषणं नैर्ऋत्यामुत्सृजेद्दिशि॥ प्राजापत्यं चरेत्कृच्छ्रं समा वा गुरुतल्पगः ॥ २९ ॥ चान्द्रायणं वा त्रीन्मासानभ्यसेद्वेदसंहिताम् ॥ पञ्चगव्यं पिबेद्गोघ्नो मासमासीत संयतः ॥ ३० ॥ गोष्ठेशयो गोऽनुगामी गोप्रदानेन शुध्यति ॥ उपपातकशुद्धिः स्याच्चान्द्रायणव्रतेन च ॥ ३१ ॥ पयसा वापि मासेन पराकेणापि वा पुनः ॥ ऋषभैकं सहस्रं गा दद्यात्क्षत्रवधे पुमान् ॥ ३२ ॥ ब्रह्महत्याव्रतं वापि वत्सरत्रितयं चरेत् ॥ वैश्यहाऽब्दं च ( ब्दांश्च ) रेदेतदद्याद्वैकशतं गवाम् ॥ ३३ ॥ षण्मासाच्छूद्रहा चैतदद्याद्वा धेनवो दश ॥ अप्रदुष्टां स्त्रियं हत्वा शूद्रहत्याव्रतं चरेत् ॥ ३४ ॥ मार्जारगोधानकुलपशुमण्डूकघातनात्॥ पिबेत्क्षीरं त्र्यहं पापी कृच्छ्रं वाप्यधिकं चरेत् ॥ ३५ ॥ गजे नीलान्वृषान्पञ्च शुके वत्सं द्विहायनम् ॥ खराजमेषेषु वृषो देयः क्रौञ्चे त्रिहायणः ॥ ३६ ॥ वृक्षगुल्मलतावीरुच्छेदने जप्यमृक्शतम् ॥ अवकीर्णी भवेद्गत्वा ब्रह्मचारी च योषितम् ॥ ३७ ॥ गर्दभं पशुमालभ्य नैर्ऋतं च विशुध्यति ॥ मधुमांसाशने कार्य्यं कृच्छ्रं शेषव्रतानि च ॥ ३८॥ कृच्छ्रत्रयं गुरुः कुर्य्यान्म्रियेत प्रहितो यदि ॥ प्रतिकूलं गुरोः कृत्वा प्रसाद्यैव विशुध्यति ॥ ३९ ॥ रिपून्धान्यप्रदानाद्यैः स्नेहाद्यैर्वाप्युपक्रमेत् ॥

१ लोमवान्न विभृग्गन्नम् ॥ ग्रहांश्च० । २ शुद्धिः स्याद्ब्रह्महननात्कृ० । ३ सुरायाः रक्षणकर्त्रीत्यर्थः । ४ गृहीत्वोत्कृत्य वृषणौ० । ५ ऋषभैकसहस्रा गा दद्या० ।

क्रियमाणोपकारे च मृते विप्रे न पातकम् ॥ ४० ॥ महापापोपपापाभ्यां योभिशंस्तो मृषा परम् ॥ अब्भक्षो मासमासीत स जापी नियतेन्द्रियः
॥ ४१ ॥ अनियुक्तो भ्रातृभार्य्यां गच्छंश्चान्द्रायणं चरेत् ॥ त्रिरात्रान्ते घृतं प्राश्य गत्वोदक्यां शुचिर्भवेत् ॥ ४२ ॥ गोष्ठे वसन्ब्रह्मचारी मासमेकं पयो
व्रती॥गायत्रीजप्यानिरतो मुच्यतेऽसत्प्रतिग्रहात् ॥ ४३ ॥ त्रिःकृच्छ्रमाचरेद्व्रात्ययाजकोऽपि चरन्नपि ॥ वेदप्लावी यवाश्यब्दं त्यक्त्वा च शरणागतान्
॥ ४४ ॥ प्राणायामत्रयं कुर्य्यात्खरयानोष्ट्रयानगः ॥ नग्नः स्नात्वा च सुप्त्वा च गत्वा चैव दिवा स्त्रियम् ॥ ४५ ॥ गुरुंत्वं कृत्य हुंकृत्य विप्रं निर्जित्य वाद
तः ॥ प्रसाद्य तं च मुनयस्ततो ह्युपवसेद्दिनम् ॥ ४६ ॥ विप्रे दण्डोद्यमे कृच्छ्रमतिकृच्छ्रं निपातने ॥ देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः ॥४७॥
प्रायश्चितं प्रकल्प्यं स्याद्यत्र चोक्ता तु निष्कृतिः ॥ गर्भत्यागो भर्त्तृनिन्दा स्त्रीणां पतनकारणम् ॥४८॥ एष ग्रहान्तिके दोषः तस्मात्तां दूतरस्त्यजेत् ॥
विख्यातदोषः कुर्वीत गुरोरनुमतं व्रतम् ॥ ४९ ॥ असंविख्यातदोषस्तु रहस्यं व्रतमाचरेत् ॥ त्रिरात्रोपोषणो जप्त्वा ब्रह्महा त्वघमर्षणम् ॥ ५० ॥
अन्तर्जले विशुद्धे च दत्त्वा गां च पयस्विनीम् ॥ लोमभ्यः स्वाहेति ऋचा दिवसं मारुताशनः ॥५१ ॥ जले जप्त्वा तु जुहुयाच्चत्वारिंशद्घृताहुतीः ॥
त्रिरात्रोपोषणो हुत्वा कूष्माण्डीभिर्घृतं शुचिः ॥ ५२ ॥ सुरापः स्वर्णहारी च रुद्रजापी जले स्थितः ॥ सहस्रशीर्षाजप्येन मुच्यते गुरुतल्पगः
॥ ५३ ॥ प्राणायामशतं कुर्य्यात्सर्वपापापनुत्तये ॥ ॐकाराभियुतं सोमसलिलप्राशनाच्छुचिः ॥ ५४ ॥ कृत्वोपवासं रेतोविण्मूत्राणां प्राशने
द्विजः ॥ अज्ञानकृतपापस्य नाशः सन्ध्यात्रये कृते ॥ ५५ ॥ रुद्रैकादशजप्याद्धि पापनाशो भवेद्द्विजैः ॥ वेदाभ्यासरतं शान्तं पञ्चयज्ञक्रियापरम्
॥ ५६ ॥ न स्पृशन्ति हि पापानि चाशु स्मृत्वा ह्यपोहितः ॥ जप्त्वा सहस्रगायत्रीं शुचिर्ब्रह्महणादृते ॥ ५७ ॥ ब्रह्मचर्य्यं दया क्षान्तिर्ध्यानं सत्य
मकल्कता ॥ अहिंसा स्तेयमाधुर्य्ये दमश्चैते यमाः स्मृताः ॥ ५८ ॥ स्नानमौनोपवासेज्यास्वाध्यायोपस्थनिग्रहः ॥ तपोऽक्रोधो गुरोर्भक्तिः शौचं
च नियमाः स्मृताः ॥ ५९ ॥ पञ्चगव्यं तु गोक्षीरं दधिमूत्रशकृद्घृतम् ॥ जग्ध्वा परेह्न्युपवसेत्कृच्छ्रं सान्तपनं चरेत् ॥ ६० ॥ पृथक् सान्तपनैर्द्रव्यैः
षडहः सोपवासकः ॥ सप्ताहेन तु कृच्छ्रोऽयं महासान्तपनः स्मृतः ॥ ६१ ॥ पर्णोदुम्बरराजीवबिल्वपत्रकुशोदकैः ॥ प्रत्येकं प्रत्यहाभ्यस्तैः पर्ण
कृच्छ्र उदाहृतः ॥ ६२ ॥ तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ॥ एकरात्रोपवासश्च तप्तकृच्छ्रश्च पावनः ॥ ६३ ॥ एकभक्तेन नक्तेन तथैवायाः

१ यो वदेच्च मृषा वचः । २ अप्रेक्षो० । ३ अयाची० पा० । स्वयजी० । ४ प्लावी वेदं यथाशब्दं० पा० । पठेद्वेदं यथाशक्ति० । ५ प्रायश्चित्तप्रकल्पः स्या० । ६ पर्षदो नुमतं० । ७ पोषितो० । ८ स्पृशन्तीह पापानि महापातकजान्यपि० पा० । चासुसुप्त्याह्यपोहितः पा० । ९ ध्यायेन्द्रियनि० ।

चितेन च ॥ उपवासेन चकन पादकृच्छ्र उदाहृतः ॥ ६४ ॥ यथा कथञ्चित्त्रिगुणः प्राजापत्योऽयमुच्यते ॥ अयमेवातिकृच्छ्रः स्यात्पाणिपूर्णाम्बु भोजनात् ॥ ६५ ॥ कृच्छ्रातिकृच्छ्रं पयसा दिवसानेकविंशतिम् ॥ द्वादशाहोपवासैश्च पराकः समुदाहृतः ॥ ६६ ॥ पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् ॥ एकैकमुपवासश्च कृच्छ्रः सौम्योऽयमुच्यते ॥ ६७ ॥ एषां त्रिरात्रमभ्यासादेकैकं स्याद्यथाक्रमात् ॥ तुलापुरुष इत्येष ज्ञेयः पंचदशाहिकः ॥ ६८ ॥ तिथिपिण्डांश्चरेद्वृद्ध्या शुक्ले शिख्यण्डसम्मितान् ॥ एकैकं ह्रासयेत्कृष्णे पिण्डं चान्द्रायणं चरेत् ॥ ६९ ॥ यथाकथञ्चित्पिण्डानां चत्वारिंशच्छतद्वयम् ॥ मासेनैवोपभुञ्जीत चान्द्रायणमथापरम् ॥ ७० ॥ कृत्वा त्रिषवणं स्नानं पिण्डं चान्द्रायणं चरेत् ॥ पवित्राणि जपेत्पिण्डान् गायत्र्या चाभिमन्त्रयेत् ॥ ७१ ॥ अनादिष्टेषु पापेषु शुद्धिश्चान्द्रायणेन तु ॥ धर्मार्थी यश्चरेदेतच्चन्द्रस्यैति सलोकताम् ॥ ७२ ॥ कृच्छ्रकृद्धर्मकामस्तु महतीं श्रियमश्नुते ॥ ७३ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे याज्ञवल्क्योक्तप्रायश्चित्तविवेको नाम पञ्चोत्तरशततमोऽध्यायः ॥ १०५ ॥ ॥ याज्ञवल्क्य उवाच ॥ प्रेता (त) शौचं प्रवक्ष्यामि तच्छृणुध्वं यतव्रताः ॥ ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकं ततः ॥ १ ॥ आ श्मशानादनुव्रज्य इतरैर्ज्ञातिभिर्युतः ॥ यमसूक्तं तथा जप्यं जपद्भिर्लौकिकाग्निना ॥ २ ॥ स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत् ॥ सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयान्त्यपः ॥ ३ ॥ अपनःशोशुचदघमनेन पितृदिङ्मुखाः ॥ एवं मातामहाचार्य्यपत्नीनां चोदकक्रियाः ॥ ४ ॥ कामोदकाः पुत्रसखिस्वस्रीयश्वशुरर्त्विजः ॥ नामगोत्रेण ह्युदकं सकृत्सिञ्चन्ति वाग्यताः ॥ ५ ॥ पाषण्डपतितानां तु न कुर्य्युरुदकक्रियाः ॥ न ब्रह्मचारिणो व्रात्या योषितः कामगास्तथा ॥ ६ ॥ सुराप्यस्त्वात्मघातिन्यो नाशौचोदकभाजनाः ॥ ततो न रोदितव्यं हि त्वनित्या जीवसंस्थितिः ॥ ७ ॥ क्रिया कार्य्या यथाशक्ति ततो गच्छेद्गृहान्प्रति ॥ विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥ ८ ॥ आचम्याथाग्निमुदकं गोमयं गौरसर्षपान् ॥ प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥ ९ ॥ प्रवेशनादिकं कर्म प्रेतसंस्पर्शनादपि ॥ ईक्षतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥ १० ॥ क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक्पृथक् ॥ पिण्डयज्ञकृता देयं प्रेतायान्नं दिनत्रयम् ॥ ११ ॥ जलमेकाहमाकाशे स्थाप्यं क्षीरं तु मृन्मये ॥ वैतानोपासनाः कार्य्याः क्रियाश्च श्रुतिचोदिताः ॥ १२ ॥ आदन्तजन्मनः सद्यः आचूडं नैशिकी स्मृता ॥ त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् ॥ १३ ॥ त्रिरात्रं दशरात्रं वा शावमाशौचमुच्यते ॥ ऊनद्विवर्षे उभयोः सूतकं मातुरेव हि ॥ १४ ॥ अन्तरा जन्म

१ कुर्यात्त्रिष०। २ स्नानं कृच्छ्रं चान्द्रा०। ३ पाषण्डपतितस्तेने न०। ४ प्यः स्वात्म०। ५ न शौचो०। ६ पिण्डयज्ञावृता०।

मरणे शेषाहोभिर्विशुध्यति ॥ दश द्वादश वर्णानां तथा पञ्चदशैव च ॥ १५ ॥ त्रिंशद्दिनानि च तथा भवति प्रेतसूतकम् ॥ अहस्त्वदत्तकन्यासु बालेषु च विशोधनम् ॥ १६ ॥ गुर्वन्तेवास्यनूचानमातुलश्रोत्रियेषु च ॥ अनौरसेषु पुत्रेषु भार्य्यास्वन्यगतासु च ॥१७॥ निवासराजनि तथा तदहःशुद्धिकारक( ण )म् ॥ हतानां नृपगोविप्रैरन्वक्षं चात्मघातिनाम् ॥ १८ ॥ विषाद्यैश्च हतानां च नाशौचं पृथिवीपतेः ॥ सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा ॥ १९ ॥ दाने विवाहे यज्ञे च संग्रामे देशविप्लवे ॥ आपद्यपि च [1]कष्टायां सद्यः शौचं विधीयते ॥ २० ॥ कालोऽग्निः कर्म मृद्वायुर्मनो ज्ञानं तपो जपः ( लम् )॥ पश्चात्तापो निराहारः सर्वेषां शुद्धिहेतवः ॥ २१ ॥ अकार्य्यकारिणां दानं वेगो नद्यास्तु शुद्धिकृत् ॥ क्षात्त्रेण कर्मणा जीवेद्विशां वाप्यापदि द्विजः ॥ २२ ॥ फलसोमक्षौमवीरुद्दधि क्षीरं घृतं जलम् ॥ तिलोदनरसक्षारमधु लाक्षा शृतं हविः ॥ २३ ॥ वस्त्रोपलासवं पुष्पं शाकमृच्चर्मपादुकम् ॥ एणत्वचं च कौशेयं लवणं मांसमेव च ॥ २४ ॥ पिण्याकमूलगन्धांश्च वैश्यवृत्तो न विक्रयेत् ॥ [2]धर्मार्थं विक्रयं नेयास्तिला धान्येन तत्समाः ॥ २५ ॥ लवणादि न विक्रीयात्तथा चापद्गतो द्विजः ॥ हीनाद्विप्रो विगृह्णंश्च लिप्यते नार्कवद्विजः ॥ २६ ॥ कुर्य्यात्कृष्यादिकं तद्वदविक्रेया हयास्तथा ॥ बुभुक्षितस्त्र्यहं स्थित्वा० दृष्ट्वा वृत्तिविवर्जितम् ॥ राजा धर्म्यां प्रकुर्वीत वृत्तिं विप्रादिकस्य च ॥ २७ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे याज्ञवल्क्योक्ताशौचापद्वृत्त्योर्निरूपणं नाम षडुत्तरशततमोऽध्यायः ॥१०६॥

सूत उवाच ॥ पराशरोऽब्रवीद्व्यासं धर्मं वर्णाश्रमादिकम् ॥ कल्पेकल्पे क्षयोत्पत्त्या क्षीयन्ते नु प्रजादयः ॥ १ ॥ श्रुतिः स्मृतिः सदाचारो यः कश्चिद्वेदकर्तृकः ॥ वेदाः स्मृता ब्राह्मणादौ धर्मा मन्वादिभिः सदा ॥ २ ॥ दानं कलियुगे धर्मः कर्त्तारं च कलौ त्यजेत् ॥ पापकृत्यं तु तत्रैव शापं फलति वर्षतः ॥ ३ ॥ आचारात्प्राप्नुयात्सर्वं षट् कर्माणि दिनेदिने ॥ सन्ध्या स्नानं जपो होमो देवातिथ्यादिपूजनम् ॥ ४ ॥ अपूर्वः सुव्रती विप्रो ह्यपूर्वा यतयस्तदा ॥ क्षत्त्रियः परसैन्यानि जित्वा पृथ्वीं प्रपालयेत् ॥ ५ ॥ वणिक् कृष्यादि वैश्ये स्याद्द्विजभक्तिश्च शूद्रके ॥ अभक्ष्यभक्षणाच्चौर्य्यादगम्यागमनात्पतेत् ॥ ६ ॥ कृषिं कुर्वन्द्विजः श्रान्तं बलीवर्दं न वाहयेत् ॥ दिनार्द्धं स्नानयोगादिकारी विप्रांश्च भोजयेत् ॥ ७ ॥ निर्वपेत्पञ्च यज्ञानि क्रूरे निन्दां च कारयेत् ॥ तिलाज्यं न विक्रीणित सूनायज्ञमघान्वितः ॥ ८ ॥ राज्ञो दत्त्वा तु षड्भागं देवतानां च विंशतिम् ॥ त्रयस्त्रिंशच्च विप्राणां कृषिकर्त्ता न लिप्यते ॥ ९ ॥ कर्षकाः क्षत्त्राविट्छूद्राः खलेऽदत्त्वा तु चौरकः ॥ दिनत्रयेण शुध्येत ब्राह्मणः प्रेतसूतके ॥ १० ॥ क्षत्त्रो दशाहा

१ आपद्यपि हतानां च० । २ धर्मार्थं विक्रयस्तेषां तिलधान्येन तत्समम् ।

द्वैश्यस्तु द्वादशाहान्मासि शूद्रकः ॥ याति विप्रो दशाहात्तु क्षत्रो द्वादशकाद्दिनात् ॥११॥ पञ्चदशाहाद्वैश्यस्तु शूद्रो मासेन शुध्यति ॥ एकपिण्डास्तु दायादाः पृथग्द्वारनिकेतनाः ॥ १२ ॥ जन्मना च विपत्तौ च भवेत्तेषां च सूतकम् ॥ चतुर्थे दशरात्रं स्यात्षण्णिशाः पुंसि पञ्चमे ॥ १३ ॥ षष्ठे चतुरहाच्छुद्धिः सप्तमे च दिनत्रयम् ॥ देशान्तरे मृते बाले सद्यः शुद्धिर्यतो मृते ॥ १४ ॥ अजातदन्ता ये बाला ये च गर्भाद्विनिःसृताः ॥ न तेषामग्निसंस्कारो न पिण्डं नोदकक्रिया ॥ १५ ॥ यदि गर्भो विपद्येत स्रवते वापि योषितः ॥ यावन्मासं स्थितो गर्भस्तावद्दिनानि सूतकम् ॥१६॥ आ नामकरणात्सद्य आचूडान्तादहर्निशम् ॥ आव्रतात्तु त्रिरात्रेण तदूर्द्ध्वं दशभिर्दिनैः ॥ १७ ॥ आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः ॥ ब्रह्मचर्य्याद्ग्निहोत्रान्नाशुद्धिः सङ्गवर्जनात् ॥ १८ ॥ शिल्पिनः कारवो वैद्या दासीदासाश्च भृत्यकाः ॥ अग्निमाञ्छ्रोत्रियो राजा सद्यःशौचाः प्रकीर्त्तिताः ॥१९॥ दशाहाच्छुध्यते माता स्नानात्सूते पिता शुचिः ॥ सङ्गात्सूतौ सूतकं स्यादुपस्पृश्य पिता शुचिः ॥ २० ॥ विवाहोत्सवयज्ञेषु अन्तरा मृतसूतके ॥ पूर्वसंकल्पितादन्यवर्जनं च विधीयते ॥ २१ ॥ मृतेन शुध्यते सूतिः मृतवज्जातकं जनौ ॥ गोग्रहादौ विपन्नानामेकरात्रं तु सूतकम् ॥ २२ ॥ अनाथप्रेतवहनात्प्राणायामेन शुध्यति ॥ प्रेतशूद्रस्य वहनान्त्रिरात्रा[illegible]शुचिर्भवेत् ॥ २३ ॥ आत्मघातिविषोद्बन्धकृमिदष्टे न संस्कृतिः ॥ गोहतं कृमिदष्टं च स्पृष्ट्वा कृच्छ्रेण शुध्यति ॥ २४ ॥ अदुष्टापतितं भार्य्यां यौवने या परित्यजेत् ॥ सप्तजन्म भवेत्स्त्रीत्वं वैधव्यं च पुनःपुनः ॥२५॥ बालहत्या त्वगमनादृतौ च स्त्री तु सूकरी ॥ अगम्या व्रतकारिण्यो भ्रष्टपानोदकक्रियाः ॥ २६ ॥ औरसः क्षेत्रजः पुत्रः पितृजौ पिण्डदौ पितुः ॥ परिवित्तेस्तु कृच्छ्रं स्यात्कन्यायाः कृच्छ्रमेव च ॥ २७ ॥ अतिकृच्छ्रं चरेद्दाता होता चान्द्रायणश्चरेत् ॥ कुब्जवामनषण्डेषु गद्गदेषु जडेषु च ॥ २८ ॥ जात्यन्धबधिरे मूके न दोषः परिवेदने ॥ नष्टे मृते प्रव्रजिते क्लीबे वा पतिते पतौ ॥ २९ ॥ पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते ॥ भर्त्रा सह मृता नारी रोमाब्दानि वसेद्दिवि ॥ ३० ॥ श्वादिदष्टस्तु गायत्र्या जपाच्छुद्धो भवेन्नरः ॥ दाह्यो लोकाग्निना विप्रश्चाण्डालाद्यैर्हतोऽग्निमान् ॥ ३१ ॥ क्षीरैः प्रक्षाल्य तस्यास्थि स्वाग्निना मन्त्रतो दहेत् ॥ प्रवासे तु मृते भूयः कृत्वा कुशमयं दहेत् ॥ ३२ ॥ कृष्णाजिने समास्तीर्य्य षट् शतानि पलाशजान् ॥ शर्मीं शिश्ने विनिःक्षिप्य अरणिं वृषणे क्षिपेत् ॥ ३३ ॥ कण्डं दक्षिणहस्ते तु वामहस्ते तथोपभृत् ॥ पार्श्वे तूलूखलं दद्यात्पृष्ठे तु मुसलं ददेत् ॥ ३४ ॥ उरे निःक्षिप्य दृषदं तण्डुलाज्यतिलान्मुखे ॥ श्रोत्रे च प्रोक्षणीं दाद्यदाज्यस्थालीं च चक्षुषोः ॥ ३५ ॥ कर्णे नेत्रे मुखे घ्राणे हिरण्य

१ कल्पितादन्नाद्भोजनं तु वि० । २ मृतकं जातकं ज० । ३ न विद्यते० पा० । ४ दह्योलोका० ।

शकलान् क्षिपेत् ॥ अग्निहोत्रोपकरणाद्ब्रह्मलोकगतिर्भवेत् ॥ ३६ ॥ असौ स्वर्गाय लोकाय स्वाहेत्याज्याहुतिः सकृत् ॥ हंससारसक्रौञ्चानां चक्रवाकं च कुक्कुटम् ॥ ३७ ॥ मयूरमेषघाती च अहोरात्रेण शुध्यति ॥ पक्षिणः सकलान्हत्वा अहोरात्रेण शुध्यति ॥ ३८ ॥ सर्वांश्चतुष्पदान्हत्वा अहोरात्रोषितो जपेत्॥ शूद्रं हत्वा चरेत्कृच्छ्रमतिकृच्छ्रं तु वैश्यहा॥क्षत्रं चान्द्रायणं विप्रं द्वाविंशत्रिंशमाहरे (वहे) त् ॥३९॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पराशरोक्तधर्मनिरूपणं नाम सप्तोत्तरशततमोऽध्यायः ॥ १०७ ॥ सूत उवाच ॥ नीतिसारं प्रवक्ष्यामि अर्थशास्त्रादिसंश्रितम् ॥ राजादिभ्यो हितं पुण्यमायुःस्वर्गादिदायकम् ॥ १ ॥ सद्भिः सङ्गं प्रकुर्वीत सिद्धिकामः सदा नरः ॥ नासद्भिरिहलोकाय परलोकाय वा हितम् ॥ २ ॥ वर्जयेत्क्षुद्रसंवादमदुष्टस्य तु दर्शनम् ॥ विरोधं सह मित्रेण संप्रीतिं शत्रुसेविना ॥ ३ ॥ मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च ॥ दुष्टानां संप्रयोगेण पण्डितोऽप्यवसीदति ॥ ४ ॥ ब्राह्मणं बालिशं क्षत्रमयोद्धारं विशं जडम् ॥ शूद्रमक्षरसंयुक्तं दूरतः परिवर्जयेत् ॥ ५ ॥ कालेन रिपुणा सन्धिः काले मित्रेण विग्रहः ॥ कार्य्यकारणमाश्रित्य कालं क्षिपति पण्डितः ॥ ६ ॥ कालः पचति भूतानि कालः संहरते प्रजाः ॥ कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः ॥ ७ ॥ कालेषु हरते वीर्य्यं काले गर्भे च वर्तते ॥ कालो जनयते सृष्टिं पुनः कालोऽपि संहरेत् ॥ ८ ॥ कालः सूक्ष्मगतिर्नित्यं द्विविधश्चेह भाव्यते ॥ स्थूलसंग्रहचारेण सूक्ष्मचारान्तरेण च ॥ ९ ॥ नीतिसारं सुरेन्द्राय इममूचे बृहस्पतिः ॥ सर्वज्ञो येन चेन्द्रोऽभूद्दैत्यान्हत्वाप्नुयाद्दिवम् ॥ १० ॥ राजर्षिब्राह्मणैः कार्य्यं देवविप्रादिपूजनम् ॥ अश्वमेधेन यष्टव्यं महापातकनाशनम् ॥ ११ ॥ उत्तमैः सह साङ्गत्यं पण्डितैः सह सत्कथाम् ॥ अलुब्धैः सह मित्रत्वं कुर्वाणो नावसीदति ॥ १२ ॥ परीवादं परार्थं च परिहासं परस्त्रियम् ॥ परवेश्मनि वासं च न कुर्वीत कदाचन ॥१३॥ परोऽपि हितवान्बन्धुर्बन्धुरप्यहितः परः॥अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ १४ ॥ स बन्धुर्यो हिते युक्तः स पिता यस्तु पोषकः ॥ तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ १५ ॥ स भृत्यो यो विधेयस्तु तद्बीजं यत्प्ररोहति ॥ सा भार्य्या या प्रियं ब्रूते स पुत्रो यस्तु जीवति ॥ ॥ १६ ॥ स जीवति गुणा यस्य धर्मो यस्य स जीवति ॥ गुणधर्मविहीनो यो निष्फल तस्य जीवनम् ॥ १७ ॥ सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा ॥ सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता ॥ १८ ॥ नित्यं स्नाता स्रगन्धा च नित्यं च प्रियवादिनी ॥ अल्पभुक्ताल्पभाषी च सततं मङ्गलैर्युता ॥ १९ ॥ सततं धर्मबहुला सततं च पतिप्रिया ॥ सततं प्रियवक्त्री च सततं त्वृतुकामिनी ॥ २० ॥ एतदादिक्रियायुक्ता सर्वसौ



१ हन्ता हन्ति यः स इत्येषामध्याहारः । २ द्वाविंशं त्रिंश० । ३ हितात्स्नाता० । ४ भाषिणीस० ।

भाग्यवर्द्धिनी ॥ यस्येदृशी भवेद्भार्य्या स देवेन्द्रो न मानुषः ॥२१॥ यस्य भार्य्या विरूपाक्षी कश्मला कलहप्रिया ॥ उत्तरोत्तरवादा स्या सा जरा न जरा जरा ॥ २२ ॥ यस्य भार्य्या श्रितान्यश्च परवेश्माभिकांक्षिणी ॥ कुक्रिया त्यक्तलज्जा च सा जरा न जरा जरा ॥२३॥ यस्य भार्य्या गुणज्ञा च भर्त्तारमनुगामिनी ॥ अल्पाल्पेन तु सन्तुष्टा सा प्रिया न प्रिया प्रिया ॥ २४ ॥ दुष्टा भार्य्या शठं मित्रं भृत्यश्चोत्तरदायकः ॥ ससर्पे च गृहे वासो मृत्युरेव न संशयः ॥ २५ ॥ त्यज दुर्जनसंसर्गं भज साधुसमागमम् ॥ कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥ २६ ॥ व्यालीकण्ठप्रदेशाह्यपि च फणभृद्भीषणा या च रौद्री या कृष्णा व्याकुलांगी रुधिरनयनसंव्याकुला व्याघ्रकल्पा॥क्रोधे यैवोग्रवक्त्रा स्फुरदनलशिखा काकजिह्वा कराला सेव्या न स्त्री विदग्धा परपुरगमना भ्रान्तचित्ता विरक्ता ॥ २७ ॥ सक्तिः सुतोके सुकृतं कृतघ्ने शीतं च वह्नौ ( सीतापहौ ह्यतपयैव ) ? हैमे॥उत्पद्यते दैववशात्कदाचिद्वेश्यासु रागो न भवेत्कदाचित् ॥ २८ ॥ भुजङ्गमे वेश्मनि दृष्टिदृष्टे व्याधौ चिकित्साविनिवर्त्तिते च ॥ देहे च बाल्यादिवयोऽन्विते च कालावृतोऽसौ लभते धृतिं कः ॥ २९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृहस्पतिप्रोक्तनीतिसारनिरूपणं नामाष्टोत्तरशततमोऽध्यायः ॥ १०८ ॥ सूत उवाच ॥ आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि ॥ आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १ ॥ त्यजेदकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्॥ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥२॥वरं हि नरके वासो न तु दुश्चरिते गृहे॥ नरकात्क्षीयते पाप कुगृहान्न निवर्त्तते॥३॥ चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्॥ न परीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत् ॥४॥ त्यजेद्देशमसद्वृत्तं वासं सोपद्रवं त्यजेत्॥त्यजेत्कृपणराजानं मित्रं मायामयं त्यजेत्॥५॥अर्थेन किं कृपणहस्तगतेन[1] केन ज्ञानेन किं बहुशठाग्रहसंकुलेन॥रूपेण किं गुणपराक्रमवर्जितेन मित्रेण किं व्यसनकालपराङ्मुखेन ॥६॥अदृष्टपूर्वा बहवः सहायाः सर्वे पदस्थस्य भवन्ति मित्राः ॥ अर्थैर्विहीनस्य पदच्युतस्य भवत्यकाले स्वजनोऽपि शत्रुः॥७॥ आपत्सु मित्रं जानीयाद्रणे शूरं रहः शुचिम् ॥ भार्य्यां च विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम् ॥ ८ ॥ वृक्षं क्षीणफलं त्यजन्ति विहगाः शुष्कं सरः सारसा निर्द्रव्यं पुरुषं त्यजन्ति गणिका भ्रष्टं नृपं मन्त्रिणः ॥ पुष्पं पर्य्युषितं त्यजन्ति मधुपाः दग्धं वनान्तं मृगाः सर्वः कार्य्यवशाज्जनो हि रमते कस्यास्ति[2] को वल्लभः ॥ ९ ॥ लुब्धमर्थप्रदानेन श्लाघ्यमञ्जलिकर्मणा ॥ मूर्खं छन्दानुवृत्त्या च याथातथ्येन पण्डितम् ॥ १० ॥ सद्भावेन हि तुष्यन्ति देवाः सत्पुरुषा द्विजाः ॥ इतरेः खाद्यपानेन मानदानेन पण्डिताः ॥ ११ ॥ उत्तमं प्रणिपातेन शठं भेदेन योजयेत् ॥ नीचं स्वल्पप्रदा

१ गतेन पुंसां० । २ कस्यापि नो वल्लभः० ।

नेन समं तुल्यपराक्रमैः ॥१२॥ यस्ययस्य हि यो भावस्तस्यतस्य हितं वदन् ॥ अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ १३ ॥ नदीनां च नखी[1]नां च शृङ्गिणां शस्त्रपाणिनाम् ॥ विश्वासो नैव गन्तव्यः स्त्रीषु राजकुलेषु च ॥ १४ ॥ अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ॥ वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥ १५ ॥ हीनदुर्जनसंसर्गअत्यन्तविरहादरः ॥ स्नेहोऽन्यगेहवासश्च नारीसच्छीलनाशनम् ॥ १६ ॥ कस्य दोषः कुले नास्ति व्याधिना को न पीडितः ॥ केन न व्यसनं प्राप्तं श्रियः कस्य निरन्तराः ॥ १७ ॥ कोऽर्थं प्राप्य न गर्वितो भुवि नरः कस्यापदो नागताः स्त्रीभिः कस्य न खण्डितं भुवि मनः को नाम राज्ञां प्रियः ॥ कः कालस्य न गोचरान्तरगतः कोऽर्थी गतो गौरवं को वा दुर्जनवागुरा निपतितः क्षेमेण यातः पुमान् ॥ १८ ॥ सुहृत्स्वजनबन्धुर्न बुद्धिर्यस्य न चात्मनि ॥ यस्मिन्कर्मणि सिद्धेऽपि न दृश्येत फलोदयः ॥ विपत्तौ च महद्दुःखं तद्बुधः कथमाचरेत् ॥ १९ ॥ यस्मिन्देशे न संमानं न प्रीतिर्न च बान्धवाः ॥ न च विद्यागमः कश्चित्तं देशं परिवर्जयेत् ॥ २० ॥ धनस्य यस्य राजतो भयं न चास्ति चौरतः ॥ मृतं च यन्न मुच्यते समर्जयस्व तद्धनम् ॥ २१ ॥ यदर्जितं प्राणहरैः परिश्रमैर्मृतस्य तं वै विभजन्ति रिक्थिनः ॥ कृतं च यद्दुष्कृतमर्थलिप्सया तदेव दोषोपहतस्य यौतुकम् ॥ २२ ॥ सञ्चितं निहितं द्रव्यं परामृश्यं मुहुर्मुहुः ॥ आखोरिव कदर्य्यस्य धनं दुःखाय केवलम् ॥ २३ ॥ नग्ना व्यसनिनो रूक्षाः कपालाङ्कितपाणयः ॥ दर्शयन्तीह लोकस्य अदातुः फलमीदृशम् ॥ २४ ॥ शिक्षयन्ति च याचन्ते देहीति कृपणा जनाः ॥ अवस्थेयमदानस्य मा भूदेवं भवानपि ॥ २५ ॥ सञ्चितं क्रतुशतैर्न युज्यते याचितं गुणवते न दीयते ॥ तत्कदर्य्यपरिरक्षितं धनं चोरपार्थिवगृहे प्रयुज्यते ॥ २६ ॥ न देवेभ्यो न विप्रेभ्यो बन्धुभ्यो नैव चात्मने ॥ कदर्य्यस्य धनं याति त्वग्नितस्करराजसु ॥ २७ ॥ अतिक्लेशेन येऽप्यर्था धर्मस्यातिक्रमेण च ॥ अरेर्वा प्रणिपातेन मा भूवस्ते कदाचन ॥ २८ ॥ विद्याघातो ह्यनभ्यासः स्त्रीणां घातः कुचैलता ॥ व्याधीनां भोजनं जीर्णं शत्रोर्घातः प्रपञ्चता[2] ॥ २९ ॥ तस्करस्य वधो दण्डः कुमित्रस्यालपभाषणम् ॥ पृथक् शय्या तु नारीणां ब्राह्मणस्यानिमन्त्रणम् ॥ ३० ॥ दुर्जनाः शिलिपनो दासा दुष्टाश्च पटहाः स्त्रियः ॥ ताडिता मार्दवं यान्ति न ते सत्कारभाजनम् ॥ ३१ ॥ जानीयात्प्रेषणे भृत्यान्बान्धवान्व्यसनागमे॥ मित्रमापदि[3] काले च भार्य्यांश्च विभवक्षये ॥ ३२ ॥ स्त्रीणां द्विगुण आहारः प्रज्ञा चैव चतुर्गुणा ॥ षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ ३३ ॥ न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् ॥ न चेन्धनैर्जयेद्वह्निं न



१ नखिनां० । २ प्रगल्भता । ३ मापत्तिका० ।

मद्येन तृषां जयेत् ॥ ३४ ॥ समांसैर्भोजनैः स्निग्धैर्मद्यैर्गन्धविलेपनैः ॥ वस्त्रैर्मनोरमैर्माल्यैः कामः स्त्रीषु विजृम्भते ॥ ३५ ॥ ब्रह्मचर्य्येऽपि वक्तव्यं प्राप्तं मन्मथचेष्टितम् ॥ हृद्यं हि पुरुषं दृष्ट्वा योनिः प्रक्लिद्यते स्त्रियाः ॥ ३६ ॥ सुवेषं पुरुषं दृष्ट्वा भ्रातरं यदि वा सुतम् ॥ योनिः क्लिद्यति नारीणां सत्यंसत्यं हि शौनक ! ॥ ३७ ॥ नद्यश्च नार्य्यश्च समस्वभावाः स्वतन्त्रभावे गमनादिकेच ॥ तोयैश्च दोषैश्च निपातयन्ति नद्यो हि कूलानि कुलानि नार्य्यः॥३८॥ नदी पातयते कूलं नारी पातयते कुलम्॥नारीणाञ्च नदीनां च स्वच्छन्दा ललिता गतिः॥३९॥नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ॥ नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ ४० ॥ न तृप्तिरस्ति शिष्टानामिष्टानां प्रियवादिनाम् ॥ सुखानाञ्च सुतानाञ्च जीवितस्य वरस्य च ॥ ४१ ॥ राजा न तृप्तो धनसंचयेन न सागरस्तृप्तिमगाज्जलेन ॥ न पण्डितस्तृप्यति भाषितेन तृप्तं न चक्षुर्नृपदर्शनेन ॥ ४२ ॥ स्वकर्मधर्मार्जितजीवितानां शास्त्रेषु दारेषु सदा रतानाम् ॥ जितेन्द्रियाणामतिथिप्रियाणां गृहेऽपि मोक्षः पुरुषोत्तमानाम् ॥ ४३ ॥ मनोऽनुकूलाः प्रमदा रूपवत्यः स्वलंकृताः॥वासः प्रासादपृष्ठेषु स्वर्गः स्याच्छुभकर्मणः ॥ ४४ ॥ न दानेन न मानेन नार्जवेन न सेवया ॥ न शस्त्रेण न शास्त्रेण सर्वथा विषमा स्त्रियः॥४५॥शनैर्विद्या शनैरर्थाः शनैः पर्वतमारुहेत्॥ शनैः कामं च धर्मं च पञ्चैतानि शनैःशनैः ॥४६॥ शाश्वतं देवपूजादि विप्रदानं च शाश्वतम् ॥ शाश्वतं सगुणा विद्या सुहृन्मित्रं च शाश्वतम् ॥ ४७ ॥ ये बालभावान्न पठन्ति विद्यां ये यौवनस्था ह्यधनात्मदाराः ॥ ते शोचनीया इह जीवलोके मनुष्यरूपेण मृगाश्चरन्ति ॥ ४८॥ पठने भोजने चित्तं न कुर्य्याच्छास्त्रसेवकः ॥ सुदूरमपि विद्यार्थी व्रजेद्गरुडवेगवान् ॥ ४९ ॥ ये बालभावे न पठन्ति विद्यां कामातुरा यौवननष्टवित्ताः[2] ॥ ते वृद्धभावे परिभूयमानाः संदह्यमानाः शिशिरे यथाब्जम् ॥ ५० ॥ तर्केऽप्रतिष्ठा श्रुतयो विभिन्नाः नासावृषिर्यस्य मतं न भिन्नम् ॥ धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥ ५१ ॥ आकारैरिंगितैर्गत्या चेष्टया भाषितेन च॥नेत्रवक्त्रविकाराभ्यां लक्ष्यतेऽन्तर्गतं मनः ॥५२॥ अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥ उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति दर्शितम् ॥५३॥ अर्थाद्भ्रष्टस्तीर्थयात्रां तु गच्छेत्सत्याद्भ्रष्टो रौरवं वै व्रजेच्च॥योगाद्भ्रष्टः सत्यधृतिश्च गच्छेद्राज्याद्भ्रष्टो मृगयायां व्रजेच्च ॥ ५४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृह० नीतिसारे नवोत्तरशततमोऽध्यायः॥१०९॥ सूत उवाच ॥ यो ध्रुवाणि परित्यज्य ह्यध्रुवाणि निषेवते ॥ ध्रुवाणि तस्य नश्यन्ति ह्यध्रुवं नष्टमेव च॥ १॥वाग्यन्त्रहीनस्य[4] नरस्य विद्या शस्त्रं यथा कापुरुषस्य हस्ते ॥

१ मद्यशीधुसुरासवैः० पा० । २ नष्टचित्ताः । ३ चोदिताः । ४ प्रागल्भ्यहीनस्य ।

न तुष्टिमुत्पादयते शरीरे ह्यन्धस्य दारा इव दर्शनीयाः ॥ २ ॥ भोज्ये भोजनशक्तिश्च रतिशक्तिर्वरास्त्रियः ॥ विभवे दानशक्तिश्च नाल्पस्य तपसः फलम्॥३॥अग्निहोत्रफला वेदाः शीलवृत्तिफलं शुभम्॥रतिपुत्रफला दारा दत्तभुक्तफलं धनम्॥४॥वरयेत्कुलजां प्राज्ञो विरूपामपि कन्यकाम्॥ सुरूपां सुनितम्बाञ्च नाकुलीनां कदाचन॥५॥अर्थेनापि हि किं तेन यस्यानर्थे तु संगतिः॥को हि नाम शिखाजातं पन्नगस्य मणिं हरेत्॥६॥ हविर्दुष्टकुलद्ग्राह्यं बालादपि सुभाषितम् ॥ अमेध्यात्काञ्चनं ग्राह्यं स्त्रीरत्नं दुष्कुलादपि॥७॥विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्॥नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि॥८॥ न राज्ञा सह मित्रत्वं न सर्पो निर्विषः क्वचित्॥न कुलं निर्मलं तत्र स्त्रीजनो यत्र जायते॥९॥कुले नियोजयेद्भक्तं पुत्रं विद्यासु योजयेत् ॥ व्यसने योजयेच्छत्रुमिष्टं धर्मे नियोजयेत् ॥ १० ॥ स्थानेष्वेव प्रयोक्तव्या भृत्याश्चाभरणानि च ॥ न हि चूडामणिः पादे शोभते वै कदाचन ॥११॥ चूडामणिः समुद्रोऽग्निर्घण्टा चाखण्डमम्बरम् ॥ अथवा पृथिवीपालो मूर्ध्नि पादे प्रमादतः ॥ १२ ॥ कुसुमस्तबकस्येव द्वे गती तु मनस्विनः ॥ मूर्ध्नि वा सर्वलोकानां शीर्यतः पतितो वने ॥ १३ ॥ कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रतिबध्यते ॥ न च विरौति न चापि स शोभते भवति योजयितुर्वचनीयता ॥ १४ ॥ वाजिवारणलौहानां काष्ठपाषाणवाससाम ॥ नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ १५ ॥ कदर्थितस्यापि हि धैर्य्यवृत्तेर्न शक्यते सर्वगुणप्रमाथः ॥ अधःखलेनापि कृतस्य वह्नेर्नाधः शिखा याति कदाचिदेव ॥ १६ ॥ न सदश्वः कशाघातं सिंहो न गजगर्जितम् ॥ वीरो वा परनिर्दिष्टं न सहेद्भीमनिःस्वनम् ॥ १७ ॥ यदि विभवविहीनः प्रच्युतो वाशु[2] दैवान्न तु खलजनसेवां काङ्क्षयेन्नैव नीचाम् ॥ न[3] तृणमदनकार्य्ये सुक्षुधार्त्तोऽत्ति सिंहः पिबति रुधिरमुष्णं प्रायशः कुञ्जराणाम् ॥ १८ ॥ सकृद्दुष्टञ्च यो मित्रं पुनः सन्धातुमिच्छति ॥ स मृत्युमेव गृह्णीयाद्गर्भमश्वतरी यथा ॥ १९ ॥ शत्रोरपत्यानि प्रियंवदानि नोपेक्षितव्यानि बुधैर्मनुष्यैः ॥ तान्येव कालेषु विपत्कराणि विषस्य पात्राण्यपि दारुणानि ॥ २० ॥ उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ॥ पादलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥ २१ ॥ अपकारपरान्नित्यं चिन्तयेन्न कदाचन ॥ स्वयमेव पतिष्यन्ति कूलजाता इव द्रुमाः ॥ २२ ॥ अनर्था ह्यर्थरूपाश्च अर्थाश्चानर्थरूपिणः ॥ भवन्ति ते विनाशाय दैवायत्तस्य वै सदा ॥ २३ ॥ कार्य्यकालोचिताऽपापा मतिः सञ्जायते हि वै ॥ सानुकूले तु दैवे शं पुंसः सर्वत्र जायते ॥ २४ ॥ धनप्रयोगकार्य्येषु तथा विद्यागमेषु च ॥ आहारे व्यवहारे च त्यक्तलज्जः सदा भवेत् ॥ २५ ॥ धनिनः श्रोत्रियो राजा नदी वैद्यस्तु पञ्चमः ॥ पञ्च यत्र न विद्यन्ते न कुर्य्यात्तत्र



१ श्रुतम् । २ वा स्वदेशात् । ३ न तृणमशाति सिंहः सुक्षुधार्त्तोपि काले ।

संस्थितिम् ॥ २६ ॥ लोकयात्रा भयं लज्जा दाक्षिण्यं दानशीलता ॥ पञ्च यत्र न विद्यन्ते न तत्र दिवसं वसेत् ॥ २७ ॥ कालविच्छ्रोत्रियो राजा नदी साधुश्च पञ्चमः ॥ एते यत्र न विद्यन्ते तत्र वास न कारयेत् ॥ २८ ॥ नैकत्र परिनिष्ठास्ति ज्ञानस्य किल शौनक ॥ सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कुत्रचित् ॥ २९ ॥ न सर्ववित्कश्चिदिहास्ति लोके नात्यन्तमूर्खो भुवि चापि कश्चित् ॥ ज्ञानेन नीचोत्तममध्यमेन योऽयं विजानाति स तेन विद्वान्॥३०॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृह० नीतिसारे दशोत्तरशततमोऽध्यायः॥११०॥सूत उवाच ॥ पार्थिवस्य तु वक्ष्यामि भृत्यानाञ्चैव लक्षणम् ॥ सर्वाणि हि महीपालः सम्यङ्नित्यं परीक्षयेत् ॥ १ ॥ राज्यं पालयते नित्यं सत्यधर्मपरायणः॥निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ॥ २ ॥ पुष्पात्पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ॥ मालाकार इवारण्ये न यथाङ्गारकारकः ॥ ३ ॥ दोग्धारः क्षीरंभुञ्जाना विकृतं तन्न भुञ्जते ॥ परराष्ट्रं महीपालैर्भोक्तव्यं न च दूषयेत् ॥ ४ ॥ नोधश्छिन्द्यात्तु यो धन्वाः क्षीरार्थी लभते पयः ॥ एवं राष्ट्रं प्रयोगेण पीड्यमानं न वर्द्धते ॥ ५ ॥ तस्मात्सर्वप्रयत्नेन पृथिवीमनुपालयेत् ॥ पालकस्य भवेद्भूमिः कीर्त्तिरायुर्यशो बलम् ॥ ६ ॥ अभ्यर्च्य विष्णुं धर्मात्मा गोब्राह्मणहिते रतः ॥ प्रजाः पालयितुं शक्तः पार्थिवो विजितेन्द्रियः ॥ ७ ॥ ऐश्वर्य्यमध्रुवं प्राप्य राजा धर्मे मतिश्चरेत् ॥ क्षणेन विभवो नश्येन्नात्मायत्तं धनादिकम् ॥८॥ सत्यं मनोरमाः कामाः सत्यं रम्या विभूतयः ॥ किन्तु वै वनितापांगभंगिलोलं हि जीवितम् ॥९॥व्याघ्रीव तिष्ठति जरा परितर्जयन्ती रोगाश्च शत्रव इव प्रभवन्ति गात्रे ॥ आयुः परिस्रवति भिन्नघटादिवाम्भो लोको न चात्महितमाचरतीह कश्चित् ॥ १० ॥ निःशंकं किं मनुष्याः कुरुत परहितं युक्तमग्रे हितं यन्मोदध्वं कामिनीभिर्मदनशरहता मन्दमन्दातिदृष्ट्या ॥ मा पापं संकुरुध्वं द्विजहरिपरमाः संभजध्वं सदैव आयुर्निःशेषमेति स्खलति जलघटीभूतमृत्युच्छलेन ॥ ११ ॥ मातृवत्परदारेषु परद्रव्येषु लोष्ठवत् ॥ आत्मवत् सर्वभूतेषु यः पश्यति स पण्डितः ॥ १२ ॥ एतदर्थं हि विप्रेन्द्रा राज्यमिच्छन्ति भूभृतः ॥ यदेषां सर्वकार्य्येषु वचो न प्रतिहन्यते ॥ १३ ॥ एतदर्थं हि कुर्वन्ति राजानो धनसञ्चयम ॥ रक्षयित्वा तु चात्मानं यद्धनं तद्द्विजातये ॥ १४ ॥ ॐकारशब्दो विप्राणां येन राष्ट्रं प्रवर्द्धते ॥ स राजा वर्द्धते योगाद्व्याधिभिश्च न बध्यते ॥ १५ ॥ असमर्थाश्च कुर्वन्ति मुनयो द्रव्यसञ्चयम् ॥ किं पुनस्तु महीपालः पुत्रवत्पालयन्प्रजाः ॥ १६ ॥ यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ॥ यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ॥ १७ ॥ त्यजंति मित्राणि धनैर्विहीनं पुत्राश्च दाराश्च

१ अर्शआद्यजन्तः । पुष्पं पुष्पमिति वा पाठः । २ समासः ।

सुहृज्जनाश्च ॥ ते चार्थवन्तं पुनराश्रयन्ति ह्यर्थो हि लोके पुरुषस्य बन्धुः ॥ १८ ॥ अन्धो हि राजा भवति यस्तु शास्त्रविवर्जितः ॥ अन्धः पश्यति चारेण शास्त्रहीनो न पश्यति ॥ १९ ॥ यस्य पुत्राश्च भृत्याश्च मन्त्रिणश्च पुरोहिताः ॥ इन्द्रियाणि प्रसुप्तानि तस्य राज्यं चिरं न हि ॥२०॥ येनार्जितास्त्रयोऽप्येते पुत्रा भृत्याश्च बान्धवाः ॥ जिता तेन समं भूपैश्चतुरब्धिर्वसुन्धरा ॥ २१ ॥ लंघयेच्छास्त्रयुक्तानि हेतुयुक्तानि यानि च ॥ स हि नश्यति वै राजा इह लोके परत्र च ॥२२॥ मनस्तापं न कुर्वीत आपदं प्राप्य पार्थिवः ॥ समबुद्धिः प्रसन्नात्मा सुखदुःखे समो भवेत् ॥ २३ ॥ धीराः कष्टमनुप्राप्य न भवन्ति विषादिनः ॥ प्रविश्य वदनं राहोः किं नोदेति पुनः शशी ॥ २४ ॥ धिग्धिक् शरीरसुखलालितमानवेषु मा खेद येद्धनकृशं हि शरीरमेव ॥ सदारका ह्यधनपाण्डुसुताः श्रुता हि दुःखं विहाय पुनरेव सुखं प्रपन्नाः ॥ २५ ॥ गन्धर्वविद्यामालोक्य वाद्यं च गणिकागणान् ॥ धनुर्वेदार्थशास्त्राणि लोके रक्षेच्च भूपतिः ॥ २६ ॥ कारणेन विना भृत्ये यस्तु कुप्यति पार्थिवः ॥ स गृह्णाति विषोन्मादं कृष्णसर्पविसर्जितम् ॥ २७ ॥ चापलाद्वारयेद्दृष्टिं मिथ्यावाक्यञ्च वारयेत् ॥ मानवे श्रोत्रिये चैव भृत्यवर्गे सदैव हि ॥ २८ ॥ लीलां करोति यो राजा भृत्यस्वजनगर्वितः ॥ शासने सर्वदा क्षिप्रं रिपुभिः परिभूयते ॥ २९ ॥ हुंकारे भृकुटीं नैव सदा कुर्वीत पार्थिवः ॥ विना दोषेण यो भृत्यान्राजाऽधमण शास्ति च ॥ लीलासुखानि भोग्यानि त्यजेदिह महीपतिः ॥ ३० ॥ सुखप्रवृत्तैः साध्यन्ते शत्रवो विग्रहे स्थितैः ॥ ३१ ॥ उद्योगः साहसं धैर्य्यं बुद्धिः शक्तिः पराक्रमः ॥ षड्विधो यस्य उत्साहस्तस्य देवोऽपि शंकते ॥ ३२ ॥ उद्योगेन कृते कार्य्ये सिद्धिर्यस्य न विद्यते॥ दैवं तस्य प्रमाणं हि कर्त्तव्यं पौरुषं सदा ॥३३॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृह० नीतिसारे एकादशोत्तरशततमोऽध्यायः॥१११॥

सूत उवाच ॥ भृत्या बहुविधा ज्ञेया उत्तमाधममध्यमाः ॥ नियोक्तव्या यथार्हेषु त्रिविधेष्वेव कर्मसु॥१॥ भृत्ये परिक्षणं वक्ष्ये यस्ययस्य हि यो गुणः॥ तमिमं संप्रवक्ष्यामि ये यथाकथितं किल ॥ २ ॥ यथा चतुर्भिः कनकं परीक्ष्यते निघर्षणच्छेदनतापताडनैः ॥ तथा चतुर्भिर्भृतकं परीक्षये द्व्रतेन शीलेन कलेन कर्मणा ॥ ३ ॥ कुलशीलगुणोपेतः सत्यधर्मपरायणः ॥ रूपवान्सुप्रसन्नश्च कोशाध्यक्षो विधीयते ॥ ४ ॥ मूल्यरूपपरीक्षाकृद्भवे द्रत्नपरीक्षकः ॥ बलाबलपरिज्ञाता सेनाध्यक्षो विधीयते ॥ ६ ॥ इंगिताकारतत्त्वज्ञो बलवान् प्रियदर्शनः ॥ अप्रमादी प्रमाथी च प्रतीहारः स उच्यते ॥ ६ ॥ मेधावी वाक्पटुः प्राज्ञः सत्यवादी जितेन्द्रियः ॥ सर्वशास्त्रसमालोकी ह्येष साधुः स लेखकः ॥७॥ बुद्धिमान्मतिमांश्चैव परचित्तोपलक्षकः ॥ क्रूरो यथोक्तवादी च एष दूतो विधीयते ॥ ८ ॥ समस्तस्मृतिशास्त्रज्ञः पण्डितोऽथ जितेन्द्रियः ॥ शौर्य्यवीर्य्यगुणोपेतो धर्माध्यक्षो विधीयते ॥ ९ ॥

पितृपैतामहो दक्षः शास्त्रज्ञः सत्यवाचकः ॥ शुचिश्च कठिनश्चैव सूपकारः स उच्यते ॥ १० ॥ आयुर्वेदकृताभ्यासः सर्वेषां प्रियदर्शनः ॥ आयुः शीलगुणोपेतो वैद्य एव विधीयते ॥ ११ ॥ वेदवेदांगतत्त्वज्ञो जपहोमपरायणः ॥ आशीर्वादपरो नित्यमेष राजपुरोहितः ॥ १२ ॥ लेखकः पाठकश्चैव गणकः प्रतिरोधकः ॥ आलस्ययुक्तश्चेद्राजा कर्म संवर्जयेत्सदा ॥ १३ ॥ द्विजिह्वमुद्वेगकरं क्रूरमेकान्तदारुणम् ॥ खलस्याहेश्च वदनमपकाराय केवलम् ॥ १४ ॥ दुर्जनः परिहर्त्तव्यो विद्ययाऽलंकृतोऽपि सन् ॥ मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥ १५ ॥ अकारणाविष्कृतकोपधारिणः खलाद्भयं कस्य न नाम जायते ॥ विषं महाहेर्विषमस्य दुर्वचः सदुःसहं सन्निपतेत्सदा मुखे ॥ १६ ॥ तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम् ॥ अर्द्धराज्यहरं भृत्यं यो हन्यात्स न हन्यते ॥ १७ ॥ शूरत्वयुक्ता मृदुमन्दवाक्या जितेन्द्रियाः सत्यपराक्रमाश्च ॥ प्रागेव पश्चाद्विपरीतरूपा ये ते तु भृत्या न हिता भवन्ति ॥ १८ ॥ निरालस्याः सुसन्तुष्टाः सुस्वप्नाः प्रतिबोधकाः ॥ सुखदुःखसमा धीरा भृत्या लोकेषु दुर्लभाः ॥ १९ ॥ क्षान्तिसत्यविहीनश्च क्रूरबुद्धिश्च निन्दकः ॥ दाम्भिकः कपटी चैव शठश्च स्पृहयाऽन्वितः ॥ अशक्तो भयभीतश्च राज्ञा त्यक्तव्य एव सः ॥ २० ॥ सुसन्धानानि चास्त्राणि शस्त्राणि विविधानि च ॥ दुर्गे प्रवेशितव्यानि ततः शत्रुं निपातयेत् ॥ २१ ॥ षण्मासमथ वर्षं वा सन्धिं कुर्य्यान्नराधिपः ॥ पश्यन्सञ्चितमात्मानं पुनः शत्रुं निपातयेत् ॥ २२ ॥ मूर्खान्नियोजयेद्यस्तु त्रयोऽप्येते महीपतेः ॥ अयशश्चार्थनाशश्च नरके चैव पातनम् ॥ २३ ॥ यत्किञ्चित्कुरुते कर्म शुभं वा यदि वाऽशुभम् ॥ तेन स्म वर्द्धते राजा सूक्ष्मतो भृत्यकार्य्यतः ॥ २४ ॥ तस्माद्भूमीश्वरः प्राज्ञं धर्मकामार्थसाधने ॥ नियोजयेद्धि सततं गोब्राह्मणहिताय वै ॥ २५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृहस्पत्युक्त नीतिसारे द्वादशोत्तरकशततमोऽध्यायः ॥ ११२ ॥ सूत उवाच ॥ गुणवन्तं नियुञ्जीत गुणहीनं विवर्जयेत् ॥ पण्डितस्य गुणाः सर्वे मूर्खे दोषाश्च केवलाः ॥ १ ॥ सद्भिरासीत सततं सद्भिः कुर्वीत सङ्गतिम् ॥ सद्भिर्विवादं मैत्रीञ्च नासद्भिः किञ्चिदाचरेत् ॥ २ ॥ पण्डितैश्च विनीतैश्च धर्मज्ञैः सत्यवादिभिः ॥ बन्धनस्थोऽपि तिष्ठेच्च न तु राज्ये खलैः सह ॥ ३ ॥ सावशेषाणि कार्य्याणि कुर्वन्नर्थैश्च युज्यते ॥ तस्मात्सर्वाणि कार्य्याणि सावशेषाणि कारयेत् ॥ ४ ॥ मधुहेव दुहेत्सारं कुसुमञ्च न घातयेत् ॥ वत्सापेक्षी दुहेत्क्षीरं भूमिं गाञ्चैव पार्थिवः ॥ ५ ॥ यथाक्रमेण पुष्पेभ्यश्चिनुते मधु षट्पदः ॥ तथा वित्तमुपादाय राजा कुर्वीत सञ्चयम् ॥ ६ ॥ वल्मीकं मधुजालञ्च शुक्लपक्षे तु चन्द्रमाः ॥ राजद्रव्यञ्च भैक्ष्यञ्च स्तोकंस्तोकं प्रवर्द्धते ॥ ७ ॥ अर्जितस्य क्षयं दृष्ट्वा संप्रदत्तस्य सञ्चयम् ॥ अवन्ध्यं दिवसं कुर्य्याद्दानाध्ययनकर्मसु ॥ ८ ॥ वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेऽपि पञ्चेन्द्रियनिग्रहस्त

पः ॥ अकुत्सिते कर्मणि यः प्रवर्त्तते निवृत्तरागस्य गृहं तपोवनम् ॥ ९ ॥ सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ॥ मृजया रक्ष्यते पात्रं कुलं शीलेन रक्ष्यते ॥ १० ॥ वरं विन्ध्याटव्यां निवसनमभुक्तस्य मरणं वरं सर्पाकीर्णे शयनमथ कूपे निपतनम् ॥ वरं भ्रान्तावर्त्ते सभयजलमध्ये प्रविशनं न तु स्वीये पक्षे हि धनमणु देहीति कथनम् ॥ ११ ॥ भाग्यक्षयेषु क्षीयन्ते नोपभोगेन सम्पदः ॥ पूर्वार्जिते हि सुकृते न नश्यन्ति कदाचन ॥ १२ ॥ विप्राणां भूषणं विद्या पृथिव्या भूषणं नृपः ॥ नभसो भूषणं चन्द्रः शीलं सर्वस्य भूषणम् ॥ १३ ॥ एते ते चन्द्रतुल्याः क्षितिपतितनया भीमसेनार्जुनाद्याः शूराः सत्यप्रतिज्ञा दिनकरवपुषः केशवेनोपगूढाः ॥ ते वै दुष्टग्रहस्थाः कृपणवशगता भैक्ष्यचर्य्यां प्रयाताः को वा कस्मिन्समर्थो भवति विधिवशाद्भ्रामयेत्कर्मरेखा ॥ १४ ॥ ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे विष्णुर्येन दशावतारगहने क्षिप्तो महासङ्कटे ॥ रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः सूर्य्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे ॥ १५ ॥ दाता बलिर्याचकको मुरारिर्दानं मही विप्रमुखस्य मध्ये ॥ दत्त्वा फलं बन्धनमेव लब्धं नमोऽस्तु ते दैव यथेष्टकारिणे ॥ १६ ॥ माता यदि भवेल्लक्ष्मीः पिता साक्षाज्जनार्दनः ॥ कुबुद्धौ प्रतिपत्तिश्चेत्तस्मिन्दण्डः पतेत्सदा ॥१७॥ येनयेन यथा यद्वत्पुरा कर्म सुनिश्चितम् ॥ तत्तदेवान्तरा भुङ्क्ते स्वयमाहितमात्मना ॥ १८ ॥ आत्मना विहितं दुःखमात्मना विहितं सुखम् ॥ गर्भशय्यामुपादाय भुङ्क्ते वै पौर्वदैहिकम् ॥ १९ ॥ न चान्तरिक्षे न समुद्रमध्ये न पर्वतानां विवरप्रवेशे ॥ न मातृमूर्ध्नि प्रधृतस्तथाङ्के त्यक्तुं क्षमः कर्म कृतं नरो हि ॥ २० ॥ दुर्गस्त्रिकूटः परिखा समुद्रो रक्षांसि योधाः परमा च वृत्तिः ॥ शास्त्रञ्च वै तूशनसा प्रदिष्टं स रावणः कालवशाद्विनष्टः ॥ २१ ॥ यस्मिन्वयसि यत्काले यद्दिवा यच्च वा निशि ॥ यन्मुहूर्त्ते क्षणे वापि तत्तथा न तदन्यथा ॥ २२ ॥ गच्छन्ति चान्तरिक्षे वा प्रविशन्ति महीतले ॥ धारयन्ति दिशः सर्वा नादत्तमुपलभ्यते ॥ २३ ॥ पुराधीता च या विद्या पुरा दत्तञ्च यद्धनम् ॥ पुरा कृतानि कर्माणि ह्यग्रे धावन्ति धावतः ॥ २४ ॥ कर्माण्यत्र प्रधानानि सम्यगृक्षे शुभग्रहे ॥ वसिष्ठकृतलग्नाऽपि जानकी दुःखभाजनम् ॥ २५ ॥ स्थूलजंघो यदा रामः शब्दगामी च लक्ष्मणः ॥ घनकेशी यदा सीता त्रयस्ते दुःखभाजनम् ॥ २६ ॥ न पितुः कर्मणा पुत्रः पिता वा पुत्रकर्मणा ॥ स्वयं कृतेन गच्छन्ति स्वयं बद्धाः स्वकर्मणा ॥ २७ ॥ कर्मजन्यशरीरेषु रोगाः शारीरमानसाः ॥ शरा इव पतन्तीह विमुक्ता दृढधन्विभिः ॥ २८ ॥ अन्यथा शास्त्रगर्भिण्या धिया धीरोऽर्थमीहते ॥ स्वामिवत्प्राक्कृतं कर्म विदधाति तदन्यथा ॥ २९ ॥ बालो युवा च वृद्धश्च यः करोति शुभाशुभम् ॥

१ प्रपतनमित्यपि पाठः । २ हस्ताग्रपात्राः ।

तस्यांतस्यामवस्थायां भुङ्क्ते जन्मनिजन्मनि ॥ ३० ॥ अनीक्षमाणोऽपि नरो विदेशस्थोऽपि मानवः ॥ स्वकर्मपोतवातेन नीयते यत्र तत्फलम् ॥ ३१ ॥ प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं वारयितुं न शक्तः ॥ अतो न शोचामि न विस्मयो मे ललाटलेखा न पुनः प्रयाति ( यदस्मदीयं न तु तत् परेषाम् ) ॥ ३२ ॥ सर्पः कूपे गजः स्कन्धे बिल आखुश्च धावति ॥ नरः शीघ्रतरादेव कर्मणः कः पलायते ॥ ३३ ॥ नाल्पा भवति सद्विद्या दीयमानापि वर्द्धते ॥ कूपस्थमिव पानीयं भवत्येव बहूदकम् ॥ ३४ ॥ येऽर्था धर्मेण ते सत्या येऽधर्मेण गताः श्रियः ॥ धर्मार्थी च महाँल्लोके तत्स्मृत्वा ह्यर्थकारणात् ॥ ३५ ॥ अन्नार्थी यानि दुःखानि करोति कृपणो जनः ॥ तान्येव यदि धर्मार्थी न भूयः क्लेशभाजनम् ॥ ३६ ॥ सर्वेषामेव शौचानामन्नशौचं विशिष्यते ॥ योऽन्नार्थैः शुचिः शौचान्न मृदा वारिणा शुचिः ॥ ३७ ॥ सत्यं शौचं मनः शौचं शौचमिन्द्रियनिग्रहः ॥ सर्वभूते दया शौचं जलशौचञ्च पञ्चमम् ॥ ३८ ॥ यस्य सत्यञ्च शौचञ्च तस्य स्वर्गो न दुर्लभः ॥ सत्यं हि वचनं यस्य सोऽश्वमेधाद्विशिष्यते ॥ ३९ ॥ मृत्तिकानां सहस्रेण चोदकानां शतेन हि ॥ न शुध्यति दुराचारो भावोपहतचेतनः ॥ ४० ॥ यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् ॥ विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥ ४१ ॥ न प्रहृष्यति सम्मानैर्नावमानैः प्रकुप्यति ॥ न क्रुद्धः परुषं ब्रूयादेतत्साधोस्तु लक्षणम् ॥ ४२ ॥ दरिद्रस्य मनुष्यस्य प्राज्ञस्य मधुरस्य च ॥ काले श्रुत्वा हितं वाक्यं न कश्चित्परितुष्यति ॥ ४३ ॥ न मन्त्रबलवीर्य्येण प्रज्ञया पौरुषेण च ॥ अलभ्यं लभ्यते मर्त्यैस्तत्र का परिवेदना ॥ ४४ ॥ अयाचितो मया लब्धो पुनर्मत्प्रेषणाद्गतः ॥ यत्रागतस्तत्र गतस्तत्र का परिवेदना ॥ ४५ ॥ एकवृक्षे सदा रात्रौ नानापक्षिसमागमः ॥ प्रभातेऽन्यादिशो यान्ति का तत्र परिवेदना ॥ ४६ ॥ एकसार्थप्रयातानां सर्वेषान्तत्र गामिनाम् ॥ यस्त्वेकस्त्वरितो याति का तत्र परिवेदना ॥ ४७ ॥ अव्यक्तादीनि भूतानि व्यक्तमध्यानि शौनक ॥ अव्यक्तनिधनान्येव का तत्र परिवेदना ॥ ४८ ॥ नाप्राप्तकालो म्रियते विद्धः शरशतैरपि ॥ कुशाग्रेण तु संस्पृष्टः प्राप्तकालो न जीवति ॥ ४९ ॥ लब्धव्यान्येव लभते गन्तव्यान्येव गच्छति ॥ प्राप्तव्यान्येव प्राप्नोति दुःखानि च सुखानि च ॥ ५० ॥ तत्तत्प्राप्नोति पुरुषः किं प्रलापैः करिष्यति ॥ आचोद्यमानानि यथा पुष्पाणि च फलानि च ॥ स्वकालं नातिवर्त्तन्ते तथा कर्म पुराकृतम् ॥ ५१ ॥ शीलं कुलं नैव न चैव विद्या ज्ञानं गुणा नैव न बीजशुद्धिः ॥ भाग्यानि पूर्वं तपसार्जितानि काले फलन्त्यस्य यथैव वृक्षाः ॥ ५२ ॥ तत्र मृत्युर्यत्र हन्ता तत्र श्रीर्यत्र सम्पदः ॥ तत्र तत्र स्वयं याति प्रेर्यमाणः स्वकर्मभिः ॥ ५३ ॥ भूतपूर्वं कृतं कर्म कर्त्तारमनुतिष्ठति ॥ यथा धेनुसहस्रेषु वत्सो विन्दन्ति मातरम् ॥ ५४ ॥ एवं पूर्वकृतं

कर्म कर्त्तारमनुतिष्ठति ॥ सुकृतं भुंक्ष्व चात्मीयं मूढ किं परितप्यसे ॥ ५५ ॥ यथा पूर्वकृतं कर्म शुभं वा यदि वाऽशुभम् ॥ तथा जन्मान्तरे तद्वै कर्त्तारमनुगच्छति ॥ ५६ ॥ नीचः सर्षपमात्राणि परच्छिद्राणि पश्यति ॥ आत्मनो बिल्वमात्राणि पश्यन्नपि न पश्यति ॥ ५७ ॥ रागद्वेषादियुक्तानां न सुखं कुत्रचिद्द्विज ॥ विचार्य्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥ ५८ ॥ यत्र स्नेहो भयं तत्र स्नेहो दुःखस्य भाजनम् ॥ स्नेहमूलानि दुःखानि तस्मिंस्त्यक्ते महत्सुखम् ॥ ५९ ॥ शरीरमेवायतनं दुःखस्य च सुखस्य च ॥ जीवितञ्च शरीरञ्च जात्यैव सह जायते ॥ ६० ॥ सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ॥ एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ ६१ ॥ सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ॥ सुखं दुःखं मनुष्याणां चक्रवत्परिवर्त्तते ॥ ६२ ॥ यद्गतं तदतिक्रान्तं यदि स्यात्तच्च दूरतः ॥ वर्त्तमानेन वर्त्तेत न स शोकेन बाध्यते ॥ ६३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृह० नीतिसारे त्रयोदशोत्तरशततमोऽध्यायः ॥११३॥ सूत उवाच ॥ न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः ॥ कारणादेव जायन्ते मित्राणि रिपवस्तथा ॥ १ ॥ शोकत्राणं भयत्राणं प्रीतिविश्वासभाजनम् ॥ केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ २ ॥ सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥ बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ ३ ॥ न मातरि न दारेषु न सोदर्य्ये न चात्मजे ॥ विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥ ४ ॥ यदीच्छेच्छाश्वतीं प्रीतिं त्रीन्दोषान्परिवर्जयेत् ॥ द्यूतमर्थप्रयोगञ्च परोक्षे दारदर्शनम् ॥५॥ मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो वसेत ॥ बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥ ६ ॥ विपरीतरतिः कामः स्वायत्तेषु न विद्यते ॥ यथोपायो वधो दण्डस्तथैव ह्यनुवर्त्तते ॥ ७ ॥ अपि कल्पानिलस्यैव तुरगस्य महोदधेः ॥ शक्यते प्रसरो बोद्धुं न ह्यरक्तस्य चेतसः ॥८॥ क्षणो नास्ति रहो नास्ति नास्ति प्रार्थयिता जनः ॥ तेन शौनक नारीणां सतीत्वमुपजायते ॥९॥ एकं वै सेवते नित्यमन्यश्चेतसि रोचते ॥ पुरुषागामलाभेन नारी चैव पतिव्रता ॥१०॥ जननी यानि कुरुते रहस्यं मदनातुरा ॥ सुतैस्तानि न चिन्त्यानि शीलविप्रतिपत्तिभिः ॥ ११ ॥ पराधीना निद्रा परहृदयकृत्यानुसरणं सदा हेला हास्यं नियतमपि शोकेन रहितम् ॥ पणे न्यस्तः कायो विटजनखुरैर्दारितगलो बहूत्कण्ठावृत्तिर्जगति गणिकाया बहुमतः ॥ १२ ॥ अग्निरापः स्त्रियो मूर्खाः सर्पा राजकुलानि च ॥ नित्यं परोपसेव्यानि सद्यः प्राणहराणि षट्॥१३॥ किं चित्रं यदि वेद (शब्द)शास्त्रकुशलो विप्रो भवेत्पण्डितः किं चित्रं यदि दण्डनीतिकुशलो राजा भवेद्धार्मिकः ॥ किं चित्रं यदि रूपयौवनवती साध्वी भवेत्कामिनी तच्चित्रं यदि निर्द्धनोऽपि पुरुषः पापं न कुर्य्यात्कचित् ॥ १४ ॥ नात्मच्छिद्रं परे दद्याद्विद्याच्छिद्रं परस्य च ॥ गूहेत्कूर्म इवाङ्गानि परभावञ्च लक्षयेत् ॥१५॥ पातालतलवा

सिन्य उच्चप्राकारसंस्थिताः ॥ यदि नो चिकुरोद्भेदांल्लभ्यंते कैः स्त्रियो न हि ॥ १६ ॥ समधर्मा हि मर्मज्ञस्तीक्ष्णः स्वजनकण्टकः ॥ न तथा बाधते शत्रुः कृतवैरो बहिः स्थितः ॥ १७ ॥ स पण्डितो यो ह्यनुरञ्जयेद्वै मिष्टेन बालं विनियेन शिष्टम् ॥ अर्थेन नारीं तपसा हि देवान्सर्वांश्च लोकांश्च सुसंग्रहेण ॥ १८ ॥ छलेन मित्रं कलुषेण धर्मं परोपतापेन समृद्धिभावम् ॥ सुखेन विद्यां पुरुषेण नारीं वाञ्छन्ति वै ये न च पण्डितास्ते ॥ १९ ॥ फलार्थी फलिनं वृक्षं यश्छिन्द्याद्दुर्मतिर्नरः ॥ निष्फलं तस्य वै कार्य्यं महादोषमवाप्नुयात् ॥ २० ॥ सधनो हि तपस्वी च दूरतो वै कृतश्रमः ॥ मद्यप स्त्री सतीत्येवं विप्र न श्रद्दधाम्यहम् ॥ २१ ॥ न विश्वसेदविश्वस्ते मित्रस्यापि न विश्वसेत् ॥ कदाचित्कुपितं मित्रं सर्वं गुह्यं प्रकाशयेत् ॥ २२ ॥ सर्वभूतेषु विश्वासः सर्वभूतेषु सात्त्विकः ॥ स्वभावमात्मना गूहेदेतत्साधोर्हि लक्षणम् ॥ २३ ॥ यस्मिन्कस्मिन्कृते कार्य्ये कर्त्तारमनुवर्त्तते ॥ सर्वथा वर्त्तमानोऽपि धैर्य्यबुद्धिन्तु कारयेत् ॥२४॥ वृद्धाः स्त्रियो नवं मद्यं शुष्कं मांसं त्रिमूलकम् ॥ रात्रौ दधि दिवा स्वप्नं विद्वान्षट् परिवर्जयेत्॥२५॥विषं गोष्ठी दरिद्रस्य वृद्धस्य तरुणी विषम्॥विषं कुशिक्षिता विद्या अजीर्णे भोजनं विषम् ॥२६॥ प्रियं गानमकुण्ठस्य नीचस्योच्चासनं प्रियम् ॥ प्रियं दानं दरिद्रस्य यूनश्च तरुणी प्रिया ॥२७॥अत्यम्बुपानं कठिनाशनञ्च धातुक्षयो वेगविधारणञ्च ॥ दिवाशयो जागरणञ्च रात्रौ षड्भिर्नराणां निवसन्ति[1] रोगाः ॥ २८ ॥ बालातपश्चाप्यतिमैथुनञ्च श्मशानधूमः करतापनञ्च ॥ रजस्वलावक्त्रनिरीक्षणञ्च सुदीर्घमायुर्ननु कर्षयेच्च ॥ २९ ॥ शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ॥ प्रभाते मैथुनं निद्रा सद्यः प्राणहराणि षट् ॥ ३० ॥ सद्यः पक्वघृतं द्राक्षा बाला स्त्री क्षीरभोजनम् ॥ उष्णोदकं तरुच्छाया सद्यः प्राणहराणि षट् ॥ ३१ ॥ कूपोदकं वटच्छाया नारीणाञ्च पयोधरः ॥ शीतकाले भवेदुष्णमुष्णकाले च शीतलम् ॥ ३२ ॥ त्रयो बलकराः सद्यो बालाभ्यंगसुभोजनम् ॥ त्रयो बलहराः सद्यो ह्यध्वा वै मैथुनं ज्वरः ॥ ३३ ॥ शुष्कं मांसं पयो नित्यं भार्य्यामित्रैः सहैव तु ॥ न भोक्तव्यं नृपैः सार्द्धं वियोगं कुरुते क्षणात् ॥ ३४ ॥ कुचेलिनं दन्तमलोपधारिणं बह्वाशिनं निष्ठुरवाक्यभाषिणम् ॥ सूर्य्योदये ह्यस्तमयेऽपि शायिनं विमुञ्चति श्रीरपि चक्रपाणिनम् ॥ ३५ ॥ नित्यं छेदस्तृणानां धरणिविलिखनं पादयोश्चापमार्ष्टिः दन्तानामप्यशौचं मलिनवसनता रूक्षता मूर्द्धजानाम् ॥ द्वे संध्ये चापि निद्रा विवसनशयनं ग्रासहासातिरेकः स्वाङ्गे पीठे च वाद्यं निधनमुपनयेत्केशवस्यापि लक्ष्मीम् ॥ ३६ ॥ शिरः सुधौतं चरणौ सुमार्जितौ वरांगनासेवनमल्पभोजनम् ॥ अनग्नशायित्वमपर्वमैथुनं चिरप्रनष्टां श्रियमानयन्ति षट् ॥ ३७ ॥ यस्य कस्य तु

[1] प्रभवन्ति ।

पुष्पस्य पाण्डरस्य विशेषतः ॥ शिरसा धार्य्यमाणस्य ह्यलक्ष्मीः प्रतिहन्यते ॥ ३८ ॥ दीपस्य पश्चिमा छाया छाया शय्यासनस्य च ॥ रजकस्य
तु यत्तीर्थमलक्ष्मीस्तत्र तिष्ठति ॥ ३९ ॥ बालातपः प्रेतधूमः स्त्री वृद्धा तरुणं दधि ॥ आयुष्कामो न सेवेत तथा सम्मार्जनीरजः ॥ ४० ॥
गजाश्वरथधान्यानां गवाञ्चैव रजः शुभम् ॥ अशुभं च विजानीयात्खरोष्ट्राजाविकेषु च ॥ ४१ ॥ गवां रजो धान्यरजः पुत्रस्यांगभवं रजः ॥
एतद्रजो महाशस्तं महापातकनाशनम् ॥ ४२ ॥ अजारजः खररजो यत्तु सम्मार्जनीरजः ॥ एतद्रजो महापापं महाकिल्बिषकारकम् ॥ ४३ ॥
शूर्पवातो नखाग्राम्बु स्नानवस्त्रमृजोदकम् ॥ केशाम्बु मार्जनीरेणुर्हन्ति पुण्यं पुरा कृतम् ॥ ४४ ॥ विप्रयोर्विप्रवह्न्योश्च दम्पत्योः स्वामिनोस्तथा ॥
अन्तरेण न गन्तव्यं हयस्य वृषभस्य च ॥ ४५ ॥ स्त्रीषु राजाग्निसर्पेषु स्वाध्याये शत्रुसेवने ॥ भोगास्वादेषु विश्वासं कः प्राज्ञः कर्त्तुमर्हति ॥ ४६ ॥
न विश्वसेदविश्वस्तं विश्वस्तं नातिविश्वसेत् ॥ विश्वासाद्भयमुत्पन्नं मूलादपि निकृन्तति ॥ ४७ ॥ वैरिणा सह सन्धाय विश्वस्तो यदि तिष्ठति ॥
स वृक्षाग्रे प्रसुप्तो हि पतितः प्रतिबुध्यते ॥ ४८ ॥ नात्यन्तं मृदुना भाव्यं नात्यन्तं क्रूरकर्मणा ॥ मृदुनैव मृदुं हन्ति दारुणेनैव दारुणम् ॥ ४९ ॥
नात्यन्तं सरलैर्भाव्यं नात्यन्तं मृदुना तथा ॥ सरलास्तत्र छिद्यन्ते कुब्जास्तिष्ठन्ति पादपाः ॥ ५० ॥ नमन्ति फलिनो वृक्षा नमन्ति गुणिनो
जनाः ॥ शुष्कवृक्षाश्च मूर्खाश्च भिद्यन्ते न नमन्ति च ॥ ५१ ॥ अप्रार्थितानि दुःखानि यथैवायान्ति यान्ति च ॥ मार्जार इव लुम्पेत तथ प्रार्थ
यिता नरः ॥ ५२ ॥ पूर्वं पश्चाच्चरन्त्यार्ये सदैव बहुसम्पदः ॥ विपरीतमनार्य्ये च यथेच्छसि तथा चर ॥ ५३ ॥ षट्कर्णो भिद्यते मन्त्रश्च ुःकर्णश्च
धार्य्यते ॥ द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्त न बुध्यते ॥ ५४ ॥ तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी ॥ कोऽर्थः पुत्रेण जा ेन यो न
विद्वान्न धार्मिकः ॥ ५५ ॥ एकेनापि सुपुत्रेण विद्यायुक्तेन धीमता ॥ कुलं पुरुषसिंहेन चन्द्रेण गगनं यथा ॥ ५६ ॥ एकेनापि सुवृक्षेण पुष्पितेन सुगं
धिना ॥ वनं सुवासितं सर्वं सुपुत्रेण कुलं यथा ॥ ५७ ॥ एको हि गुणवान्पुत्रो निर्गुणेन शतेन किम् ॥ चन्द्रो हन्ति तमांस्येको न च ज्योतिःसहस्र
कम् ॥ ५८ ॥ लालयेत्पञ्च वर्षाणि दश वर्षाणि ताडयेत् ॥ प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥५९॥ जायमानो हरेद्दारान् वर्द्धमानो हरेद्धनम् ॥
म्रियमाणो हरेत्प्राणान्नास्ति पुत्रसमो रिपुः ॥ ६० ॥ केचिन्मृगमुखा व्याघ्राः केचिद्व्याघ्रमुखा मृगाः ॥ तत्स्वरूपपरिज्ञाने ह्यविश्वासः पदेपदे ॥६१॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ॥ यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ६२ ॥ एतदेवानुमन्येत भोगा हि क्षणभंगिनः ॥
स्निग्धेषु च विदग्धस्य मतयो वै ह्यनाकुलाः ॥ ६३ ॥ ज्येष्ठः पितृसमो भ्राता मृते पितरि शौनक ॥ सर्वेषां स पिता हि स्यात्सर्वेषामनुपा

लकः ॥ ६४ ॥ कनिष्ठेषु च सर्वेषु समत्वेनानुवर्त्तते ॥ समोपभोगजीवेषु यथैवं तनयेषु च ॥ ६५ ॥ बहूनामल्पसाराणां समवायो हि दारुणः ॥ तृणैरावेष्टिता रज्जुस्तया नागोऽपि बध्यते ॥ ६६ ॥ अपहृत्य परस्वं हि यस्तु दानं प्रयच्छति ॥ स दाता नरकं याति यस्यार्थास्तस्य तत्फलम् ॥ ६७ ॥ देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ॥ कुलान्यकुलतां यांति ब्राह्मणातिक्रमेण च ॥ ६८ ॥ ब्रह्मघ्ने च सुरापे च चोरे भग्नव्रते तथा ॥ निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥ ६९ ॥ नाश्नन्ति पितरो देवाः क्षुद्रस्य वृषलीपतेः ॥ भार्य्याजितस्य नाश्नन्ति यस्याश्चोपपतिर्गृहे ॥ ७० ॥ अकृतज्ञमनार्य्यञ्च दीर्घरोषमनार्जवम् ॥ चतुरो विद्धि चाण्डालाञ्जात्या जायेत पञ्चमः ॥ ७१ ॥ नोपेक्षितव्यो दुर्बुद्धिः शत्रुरल्पोऽप्यवज्ञया ॥ वह्निरल्पोऽप्यसंहार्य्यः कुरुते भस्मसाज्जगत् ॥ ७२ ॥ नवे वयसि यः शान्तः स शान्त इति मे मतिः ॥ धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥ ७३ ॥ पन्थान इव विप्रेन्द्र सर्वसाधारणाः श्रियः ॥ मदीया इति मत्वा वै न हि हर्षयुतो भवेत् ॥ ७४ ॥ चित्तायत्तं धातुवश्यं शरीरं चित्ते नष्टे धातवो यांति नाशम् ॥ तस्माच्चित्तं सर्वदा रक्षणीयं स्वस्थे चित्ते धातवः सम्भवन्ति ॥ ७५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बृह० नीतिसारे चतुर्दशोत्तरशततमोऽध्यायः ॥ ११४ ॥

सूत उवाच ॥ कुभार्य्यां च कुमित्रं च कुराजानं कुपुत्रकम् ॥ कुकन्यां च कुदेशं च दूरतः परिवर्जयेत् ॥ १ ॥ धर्मः प्रव्रजितस्तपः प्रचलितं सत्यं च दूरं गतं पृथ्वी वन्ध्यफला जनाः कपटिनो लौल्ये स्थिता ब्राह्मणाः ॥ मर्त्त्याः स्त्रीवशगाः स्त्रियश्च चपला नीचा जना उन्नताः हा कष्टं खलु जीवितं कलियुगे धन्या जना ये मृताः ॥ २ ॥ धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ परचित्तगतान् दारान्पुत्रं कुव्यसने स्थितम् ॥ ३ ॥ कुपुत्रे निर्वृतिर्नास्ति कुभार्य्यायां कुतो रतिः॥कुमित्रे नास्ति विश्वासः कुराज्ये नास्ति जीवितम् ॥४॥ परान्नं च परस्वं च परशय्याः परस्त्रियः॥परवेश्मनि वासश्च शक्रादपि हरेच्छ्रियम् ॥ ५ ॥ आलापाद्गात्रसंस्पर्शात्संसर्गात्सह भोजनात् ॥ आसनाच्छयनाद्यानात्पापं संक्रमते नृणाम् ॥ ६ ॥ स्त्रियो नश्यन्ति रूपेण तपः क्रोधेन नश्यति ॥ गावो दूरप्रचारेण शूद्रान्नेन द्विजोत्तमः ॥ ७ ॥ आसनादेकशय्यायां भोजनात्पङ्क्तिसङ्करात् ॥ ततः संक्रमते पापं घटाद्घट इवोदकम् ॥ ८ ॥ लालने बहवो दोषास्ताडने बहवो गुणाः ॥ तस्माच्छिष्यं च पुत्रं च ताडयेन्न तु लालयेत् ॥ ९ ॥ अध्वा जरा देहवतां पर्वतानां जलं जरा ॥ असंभोगश्च नारीणां वस्त्राणामातपो जरा ॥१०॥ अधमाः कलिमिच्छन्ति सन्धिमिच्छन्ति मध्यमाः ॥ उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥११॥ मानो हि मूलमर्थस्य माने सति धनेन किम् ॥ प्रभ्रष्टमानदर्पस्य किं धनेन किमायुषा॥१२॥

अधमा धनमिच्छन्ति धनमानौ हि मध्यमाः ॥ उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ १३ ॥ वनेऽपि सिंहा न नमन्ति कं च बुभुक्षिता मांसनिरीक्षणं च॥धनैर्विहीनाः सुकुलेषु जाता न नीचकर्माणि समारभन्ते ॥ १४ ॥ नाभिषेको न संस्कारः सिंहस्य क्रियते वने ॥ नित्यमूर्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ १५ ॥ वणिक्प्रमादी भृतकश्च मानी भिक्षुर्विलासी ह्यधनश्च कामी ॥ वराङ्गना चाप्रियवादिनी च न ते च कर्माणि समारभन्ते ॥ १६ ॥ दाता दरिद्रः कृपणोऽर्थयुक्तः पुत्रोऽविधेयः कुजनस्य सेवा ॥ परोपकारेषु नरस्य मृत्युः प्रजायते दुश्चरितानि पञ्च ॥ १७ ॥ कान्तावियोगः स्वजनापमानं ऋणस्य शेषः कुजनस्य सेवा ॥ दारिद्र्याभावाद्विमुखाश्च मित्रा विनाग्निना पञ्च दहन्ति तीव्राः ॥ १८ ॥ चिन्तासहस्रेषु च तेषु मध्ये चिन्ताश्चतस्रोऽप्यसिधारतुल्याः ॥ नीचापमानं क्षुधितं कलत्रं भार्य्या विरक्ता सहजोपरोधः ॥ १९ ॥ वश्यश्च पुत्रोऽर्थकरी च विद्या अरोगिता सज्जनसङ्गतिश्च ॥ इष्टा च भार्य्या वशवर्त्तिनी च दुःखस्य मूलोद्धरणानि पञ्च ॥ २० ॥ कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ॥ एकः प्रमाथी स कथं न घात्यो यः सेवते पंचभिरेव पंच ॥ २१ ॥ अधीरः कर्कशः स्तब्धः कुचेलः स्वयमागतः ॥ पंच विप्रा न पूज्यन्ते बृहस्पतिसमा अपि ॥ २२ ॥ आयुः कर्म च वित्तं च विद्या निधनमेव च ॥ पंचैतानि विविच्यन्ते जायमानस्य देहिनः ॥ २३ ॥ पर्वतारोहणे तोये गोकुले दुष्टनिग्रहे ॥ पतितस्य समुत्थाने शस्ताः पंच (ह्येते) गुणाः स्मृताः ॥ २४ ॥ अभ्रच्छाया खले प्रीतिः परनारीषु संगतिः ॥ पंचैते ह्यस्थिरा भावा यौवनानि धनानि च ॥ २५ ॥ अस्थिरं जीवितं लोके अस्थिरं धनयौवनम् ॥ अस्थिरं पुत्रदाराद्यं धर्मः कीर्त्तिर्यशः स्थिरम् ॥ २६ ॥ शतं जीवितमत्यल्पं रात्रिस्तस्यार्द्धहारिणी॥व्याधिशोकजरायासैरर्द्धं तदपि निष्फलम् ॥२७॥ आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्द्धं गतं तस्यार्द्धस्थितकिंचिदर्द्धमधिकं बाल्यस्य काले गतम् ॥ किंचिद्बन्धुवियोगदुःखमरणैर्भूपालसेवागतं शेषं वारितरंगगर्भचपलं मानेन किं मानिनाम् ॥ २८ ॥ अहोरात्रमयो लोके जरारूपेण संचरेत् ॥ मृत्युर्ग्रसति भूतानि पवनं पन्नगो यथा ॥ २९ ॥ गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतो न चेत् ॥ सर्वसत्त्वहितार्थाय पशोरिव विचेष्टितम् ॥ ३० ॥ अहिताहितविचारशून्यबुद्धेः श्रुतिसमये बहुभिर्वितर्कितस्य ॥ उदरभरणमात्रतुष्टबुद्धेः पुरुषपशोश्च पशोश्च को विशेषः ॥ ३१ ॥ शौर्य्ये तपसि दाने च यस्य न प्रथितं यशः ॥ विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ ३२ ॥ यज्जीव्यते क्षणमपि प्रथितं मनुष्यैर्विज्ञानविक्रमयशोभिरभग्नमानैः ॥ तन्नाम जीवितमिति प्रवदन्ति तज्ज्ञाः काकोऽपि



१ कर्म वित्तं च० । वित्तं च धन० । २ त्रिदि पञ्चैते० पा० । नि विमृज्यन्ते गर्भस्थस्यैव दे० । ३ सञ्जीव्यते० । ४ तत्तस्य जीवितफलं प्रव० ।

जीवति चिरं च बलिं च भुङ्क्ते ॥ ३३ ॥ किं जीवितेन धनमानविवर्जितेन मित्रेण किं भवति भीतिसशङ्कितेन ॥ सिंहव्रतं चरत गच्छत मा विषादं काकोऽपि जीवति चिरं च बलिं च भुङ्क्ते॥३४॥यो वात्मनीह न गुरौ न च भृत्यवर्गे दीने दयां न कुरुते न च मित्रकार्य्ये॥किं तस्य जीवितफलेन मनुष्यलोके काकोऽपि जीवति चिरं च बलिं च भुङ्क्ते ॥ ३५ ॥ यस्य त्रिवर्गशून्यानि दिनान्यायान्ति यान्ति च ॥ स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥३६॥स्वाधीनवृत्तेः साफल्यं न पराधीनवर्त्तिता॥ ये पराधीनकर्माणो जीवन्तोऽपि च ते मृताः ॥३७॥ सु(स्व) पूरा वै कापुरुषाः सु(स्व)पूरो मूषिकांजलिः ॥ असन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति॥ ३८ ॥ अभ्रच्छाया तृणादग्निर्नीचसेवा पथो जलम् ॥ वेश्यारागः खले प्रीतिः षडेते बुद्बुदोपमाः ॥ ३९ ॥ वाचा विहितसार्थेन लोके[2] न च सुखायते ॥ जीवितं मानमूलं हि माने म्लाने कुतः सुखम् ? ॥ ४० ॥ अबलस्य बलं राजा बालस्य रुदितं बलम् ॥ बलं मूर्खस्य मौनं हि तस्करस्यानृतं बलम् ॥४१॥ यथायथा हि पुरुषः शास्त्रं समधिगच्छति ॥ तथातथास्य मेधा स्याद्विज्ञानं चास्य[3] रोचते ॥ ४२ ॥ यथायथा हि पुरुषः कल्याणे कुरुते मतिम् ॥ तथातथा हि सर्वत्र श्लिष्यंते लोकसुप्रियः ॥ ४३ ॥ लोभप्रमादविश्वासैः पुरुषो नश्यति त्रिभिः ॥ तस्माल्लोभो न कर्त्तव्यः प्रमादो नो न विश्वसेत् ॥ ४४ ॥ तावद्भयस्य भेतव्यं यावद्भयमनागतम् ॥ उत्पन्ने तु भये तीव्रे स्थातव्यं वै ह्यभीतवत् ॥ ४५ ॥ ऋणशेषं चाग्निशेषं व्याधिशेषं तथैव च ॥ पुनःपुनः प्रवर्द्धन्ते तस्माच्छेषं न कारयेत् ॥ ४६ ॥ कृते प्रतिकृतं कुर्य्याद्धिंसिते प्रतिहिंसितम् ॥ न तत्र दोषं पश्यामि दुष्टे दोषं समाचरेत् ॥ ४७ ॥ परोक्षे कार्य्यहन्तारं प्रत्यक्षे प्रियवादिनम् ॥ वर्जयेत्तादृशं मित्रं मायामयमहिं तथा ॥ ४८ ॥ दुर्जनस्य हि संगेन सुजनोऽपि विनश्यति ॥ प्रसन्नमपि पानीयं कर्दमैः कलुषीकृतम् ॥ ४९ ॥ सं[6]भुंक्ते सद्द्विजो भुंक्ते समशेषनिरूपणम् ॥ तस्मात्सर्वप्रयत्नेन द्विजः पूज्यः प्रयत्नतः ॥ ५० ॥ तद्भुज्यते यद्द्विजभुक्तशेषं स बुद्धिमान्यो न करोति पापम् ॥ तत्सौहृदं यत्क्रियते परोक्षे दम्भैर्विना यः क्रियते स धर्मः ॥ ५१ ॥ न सा सभा यत्र न सन्ति वृद्धाः वृद्धा न ते ये न वदन्ति धर्मम् ॥ धर्मः स नो यत्र न सत्यमस्ति नैतत्सत्यं यच्छलेनानुविद्धम् ॥ ५२ ॥ ब्राह्मणोऽपि मनुष्याणामादित्यश्चैव तेजसाम् ॥ शिरोऽपि सर्वगात्राणां व्रतानां सत्यमुत्तमम् ॥ ५३ ॥ तन्मंगलं यत्र मनः प्रसन्नं तज्जीवनं यन्न परस्य सेवा ॥ तदर्जितं यत्स्वजनेन भुक्तं तद्गर्जितं यत्समरे रिपूणाम् ॥ ५४ ॥ सा स्त्री

१ स्वपूरा वै कुनदिका स्वपूरो मू० । २ र्थेन लोके न च० । ३ अस्मै इत्यर्थः । संप्रदानस्य शेषत्वविवक्षया षष्ठी । ४ श्लिष्यन्नायकसुश्रिया० । ५ शब्लुगभाव आर्षः । ६ सम्यग्भुंक्ते जनः सोहि द्विजायार्था हि यस्य वै० ।

या न मदं कुर्य्यात्स सुखी तृष्णयोज्झितः ॥ तन्मित्रं यत्र विश्वासः पुरुषः स जितेन्द्रियः ॥ ५५ ॥ तत्र मुक्तादरस्नेहो विलुप्तं यत्र सौहृदम् ॥ तदेव केवलं श्लाघ्यं यस्यात्मा क्रियते स्तुतौ ॥ ५६ ॥ नदीनामग्निहोत्राणां भारतस्य कलस्य च ॥ मूलान्वेषो न कर्त्तव्यो मूलाद्दोषो न हीयते ॥ ५७ ॥ लवणजलान्ता नद्यः स्त्रीभेदान्तं च मैथुनम् ॥ पैशुन्यं जनवार्त्तान्तं वित्तं दुःखत्रयान्तकम् ॥ ५८ ॥ राज्यश्रीर्ब्रह्मशापान्ता पापान्तं ब्रह्मवर्चसम् ॥ आचान्तं घोषवासान्तं कुलस्यान्तं स्त्रिया प्रभो (भुः) ॥ ५९ ॥ सर्वे क्षयान्ता निलयाः पतनान्ताः समुच्छ्रयाः ॥ संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ ६० ॥ यदीच्छेत्पुनरागन्तुं नातिदूरमनुव्रजेत ॥ उदकान्तान्निवर्त्तेत स्निग्धवर्णाच्च पादपात् ॥ ६१ ॥ अनायके न वस्तव्यं न चैव बहुनायके ॥ स्त्रीनायके न वस्तव्यं वस्तव्यं बालनायके ॥ ६२ ॥ पिता रक्षति कौमारे भर्त्ता रक्षति यौवने ॥ पुत्रस्तु स्थविरे काले न स्त्री स्वातन्त्र्यमर्हति ॥ ६३ ॥ त्यजेद्वन्ध्यामष्टमेऽब्दे नवमे तु मृतप्रजाम् ॥ एकादशे स्त्रीजननीं सद्यश्चाप्रियवादिनीम् ॥ ६४ ॥ अनर्थित्वान्मनुष्याणां भिया परिजनस्य च ॥ अर्थादपेतमर्य्यादास्त्रियस्तिष्ठन्ति भर्त्तृषु ॥ ६५ ॥ अश्वं श्रान्तं गजं मत्तं गावः प्रथमसूतिकाः ॥ अनूदके च मण्डूकान्प्राज्ञो दूरेण वर्जयेत ॥ ६६ ॥ अर्थातुराणां न सुहृन्न बन्धुः कामातुराणां न भयं न लज्जा ॥ चिन्तातुराणां न सुखं न निद्रा क्षुधातुराणां न बलं न तेजः ॥ ६७ ॥ कुतो निद्रा दरिद्रस्य परप्रेष्यवरस्य च ॥ परनारीप्रसक्तस्य परद्रव्यहरस्य च ॥ ६८ ॥ सुखं स्वपित्यनृणवान्व्याधिमुक्तश्च यो नरः ॥ सावकाशस्तु वै भुङ्क्ते यस्तु दारैर्न संगतः ॥ ६९ ॥ अम्भसः परिमाणेन उन्नतं कमलं भवेत् ॥ स्वस्वामिना बलवता भृत्यो भवति गर्वितः ॥ ७० ॥ स्थानस्थितस्य पद्मस्य मित्रे वरुणभास्करौ ॥ स्थानच्युतस्य तस्यैव क्लेदशोषणकारकौ ॥ ७१ ॥ ये पदस्थस्य मित्राणि ते तस्य रिपुतां गताः ॥ भानोः पद्मे जले प्रीतिः स्थलोद्धरणशोषणः ॥ ७२ ॥ स्थानस्थितानि पूज्यन्ते पूज्यन्ते च पदे स्थिताः ॥ स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा नराः ॥ ७३ ॥ आचारः कुलमाख्याति देशमाख्याति भाषितम् ॥ सम्भ्रमः स्नेहमाख्याति वपुराख्याति भोजनम् ॥ ७४ ॥ वृथा वृष्टिः समुद्रस्य वृथा तृप्तस्य भोजनम् ॥ वृथा दानं समृद्धस्य नीचस्य सुकृतं वथा ॥ ७५ ॥ दूरस्थोऽपि समीपस्थो यो यस्य हृदये स्थितः ॥ हृदयादपि निष्क्रांतः समीपस्थोऽपि दूरतः ॥ ७६ ॥ मुखभङ्गः स्वरो दीनो गात्रस्वेदो महद्भयम् ॥ मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ७७ ॥ कुब्जस्य कीटघातस्य वातान्निष्कासितस्य च ॥ शिखरे वसतस्तस्य वरं जन्म न याचितम् ॥ ७८ ॥ जगत्पतिर्हि याचित्वा विष्णुर्वामनतां यतः ॥

१ हालान्तं ब्र० । २ नं शंकितः० ।

काऽन्योऽधिकतरस्तस्य योऽर्थी याति न लाघवम् ॥ ७९ ॥ माता शत्रुः पिता वैरी बाला येन न पाठिताः ॥ सभामध्ये न शोभन्ते हंसमध्ये बका यथा ॥ ८० ॥ विद्या नाम कुरूपरूपमधिकं विद्यातिगुप्तं धनं विद्या साधुकरी जनप्रियकरी विद्या गुरूणां गुरुः ॥ विद्या बन्धुजनार्तिनाशनकरी विद्या परं दैवतं विद्या राजसु पूजिता हि मनुजो विद्याविहीनः पशुः ॥ ८१ ॥ गृहे चाभ्यंतरे द्रव्यं लग्नं चैव तु दृश्यते ॥ अशेषं हरणीयं च विद्या न ह्रियते परैः ॥ ८२ ॥ शौनकीयं नीतिसारं विष्णुः सर्वव्रतानि च॥कथयामास वै पूर्वं तत्र शुश्राव शंकरः ॥ शंकरादशृणोद्व्यासो व्यासादस्माभिरेव च ॥ ८३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शौनकोक्तनीतिसारादिवर्णनं नाम पंचदशोत्तरशततमोऽध्यायः ॥ ११५ ॥ ब्रह्मोवाच ॥ व्रतानि व्यास वक्ष्यामि हरियैः सर्वदो भवेत् ॥ सर्वमासर्क्षतिथिषु वारेषु हरिरार्चितः ॥ १ ॥ एकभक्तेन नक्तेन उपवासफलादिना ॥ ददाति धनधान्यादि पुत्रराज्यजयादिकम् ॥ २ ॥ वैश्वानरः प्रतिपदि कुबेरः पूजितोऽर्थदः ॥ पोष्य ब्रह्मा प्रतिपद्यर्चितः श्रीस्तथाश्विनी ॥ ३ ॥ द्वितीयायां यमो लक्ष्मीनारायण इहार्थदः ॥ तृतीयायां त्रिदेवाश्च गौरीविघ्नेशशङ्कराः ॥ ४ ॥ चतुर्थ्यां च चतुर्व्यूहः पंचम्यामर्चितो हरिः ॥ कार्त्तिकेयो रविः षष्ठ्यां सप्तम्यां भास्करोऽर्थदः ॥ ५ ॥ दुर्गाष्टम्यां नवम्यां च मातरोऽथ दिशोऽर्थदाः ॥ दशम्यां च यमश्चन्द्र एकादश्यामृषीन्यजेत् ॥ ६ ॥ द्वादश्यां च हरिः कामस्त्रयोदश्यां महेश्वरः ॥ चतुर्दश्यां पंचदश्यां ब्रह्मा च पितरोऽर्थदाः ॥ ७ ॥ अमावास्यां पूजनीया वारा वै भास्करादयः ॥ नक्षत्राणि च योगाश्च पूजिताः सर्वदायकाः ॥ ८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे तिथ्यादिव्रतवर्णनं नाम षोडशोत्तरशततमोऽध्यायः ॥ ११६ ॥ ब्रह्मोवाच ॥ मार्गशीर्षे सिते पक्षे व्यासानङ्गत्रयोदशी ॥ मल्लिकाजं दन्तकाष्ठं धुत्तूरैः पूजयेच्छिवम् ॥ १ ॥ अनङ्गायेति नैवेद्यं मधुप्राश्याथ पौषके ॥ योगेश्वरं पूजयेच्च बिल्वपत्रैः कदम्बजम ॥ दन्तकाष्ठं चन्दनादि नैवेद्यं कृसरादिकम् ॥ २ ॥ माघे नटेश्वरायार्च्य कुन्दैर्मौक्तिकमालया ॥ प्लक्षेण दन्तकाष्ठं च नैवेद्यं पूरिका मुने ॥ ३ ॥ वीरेश्वरं फाल्गुने तु पूजयेत्तु मरूबकैः ॥ शर्कराशाकमण्डाश्च चूतजं दन्तधावनम् ॥ ४ ॥ चैत्रे यजेत्सुरूपाय कर्पूरं प्राशयेन्निशि ॥ दन्तधावन[illegible]जं नैवेद्यं शष्कुलीं ददेत् ॥ ५ ॥ पूजा दमनकः शम्भोर्वैशाखेऽशोकपुष्पकैः ॥ महारूपाय नैवेद्यं गुडभक्तं

१ विद्या नाम नरस्य रूप० । २ प्रच्छन्नगुप्तं० । ३ भोगकरी यशः सुखक० । ४ बन्धुजनो विदेशगमने० । ५ राजसु पूज्यते न हि धनं० । ६ शौनकयो नीतिसारो यं विष्णोः सर्वव्रतानि च । हरीरितो हरादेश्च अजाद्व्यासाच्छ्रुतः स्मृत इति श्रीगारुडे० । ७ त्रयोदश्यामुपोषितः । ८ नैवेद्यं शष्कुलीं ददेत्० पा० । नैवेद्यान्नयवादिकम्० । ९ मौक्तिकमासनम्० । १० कर्कोलासोमण्डकाश्च० ।

कुङ्कुमाशनम् ॥ ६ ॥ दन्तकाष्ठं प्राशयेच्च दद्येज्जातीफलं तथा ॥ प्रद्युम्नं पूजयेज्ज्येष्ठे चम्पकैर्बिल्वजं दशेत्॥ ॥लवंगाशं तथाषाढे उमाभर्त्रेति शासनः ?॥ अगुरुं दन्तकाष्ठं च तमपामार्गकैर्यजेत् ॥ ८ ॥ श्रावणे करवीरं च शम्भवे शूलपाणये ॥ गन्धाशनो घृताद्यैश्च करवीरजशोधनम् ॥ ९ ॥ सद्योजातं भाद्रपदे बकुलैः पूपकैर्यजेत् ॥ गन्धर्वांशो मदनकमाश्विने च सुराधिपम् ॥ १० ॥ चम्पकैः स्वर्णवा ( धा ) यांदो गजेन्मोदकसंप्रदः ॥ खादिरं दन्तकाष्ठं च कार्त्तिके रुद्रमर्चयेत् ॥ ११ ॥ बदर्य्यां दन्तकाष्ठं च मदनो दशमाशनः ॥ क्षीरशाकप्रदः पञ्चैरब्दान्ते शिवमर्चयेत् ॥ १२ ॥ रतियुक्तमनंगं च स्वर्णमण्डलसंस्थितम् ॥ गन्धाद्यैर्दशसाहस्रं तिलव्रीह्यादि होमयेत् ॥ १३ ॥ जागरं गीतवाद्यैश्च प्रभातेऽभ्यर्च्य वेदयेत् ॥ द्विजाय शय्यां पात्रं च छत्रं वस्त्रमुपानहौ ॥ १४ ॥ गां द्विजं भोजयेद्भक्त्या कृतकृत्यो भवेन्नरः ॥ एतदुद्यापनं सर्वं व्रतेषु ध्येयमीदृशम् ॥ फलञ्च श्रीसुतारोग्यसौभाग्यस्वर्गतं भवेत् ॥ १५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽनंगत्रयोदशीव्रतं नाम सप्तदशोत्तरशततमोऽध्यायः ॥ ११७ ॥ ॥ ब्रह्मोवाच ॥ व्रतं कैवल्यशमनमखण्डद्वादशीं वदे ॥ मार्गशीर्षे सिते पक्षे गव्याशी समुपोषितः ॥ १ ॥ द्वादश्यां पूजयेद्विष्णुं दद्यान्मासचतुष्टयम् ॥ पञ्चव्रीहियुतं पात्रं विप्रायेदमुदाहरेत् ॥ २ ॥ सप्तजन्मनि हे विष्णो यन्मया हि व्रतं कृतम् ॥ भगवंस्त्वत्प्रसादेन तदखण्डमिहास्तु मे॥३॥यथाखण्डं जगत्सर्वं त्वमेव पुरुषोत्तम॥तथाखिलान्यखण्डानि व्रतानि मम सन्ति वै॥४॥सक्तुपात्राणि चैत्रादौ श्रावणादौ घृतान्वितान्॥व्रतकृद्व्रतपूर्णस्तु स्त्रीपुत्रस्वर्गभाग्भवेत्॥५॥इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडेऽखण्डद्वादशीव्रतकथनंनामाष्टादशोत्तरशततमोऽध्यायः ॥ ११८ ॥ ब्रह्मोवाच ॥ अगस्त्यार्घ्यव्रतं वक्ष्ये भुक्तिमुक्तिप्रदायकम् ॥ अप्राप्ते भास्करे कन्यां सप्ति भागे त्रिभिर्दिनैः ॥ १ ॥ अर्घ्यं दद्यादगस्त्याय मूर्त्तिं संपूज्य वै मुने ! ॥ काशपुष्पमयीं कुम्भे प्रदोषे कृतजागरः ॥ २ ॥ दध्यक्षताद्यैः संपूज्य उपोष्य फलपुष्पकैः ॥ पञ्चवर्णसमायुक्तं हेमरौप्यसमन्वितम् ॥ ३ ॥ सप्तधान्ययुतं पात्रं दधिचन्दनचर्चितम् ॥ अगस्त्यः खनमानेति मन्त्रेणार्घ्यं प्रदापयेत् ॥ ४ ॥ काशपुष्पप्रतीकाश अग्निमारुतसम्भव ! ॥ मित्रावरुणयोः पुत्रो कुम्भयोने नमोऽस्तु ते ॥ ५ ॥ शूद्रस्याद्विरनेनैव त्यजेद्धान्यं फलं रसम् ॥ दद्याद्विजातये कुम्भं सहिरण्यं सदक्षिणम् ॥ भोजयेच्च द्विजान्सप्त वर्षं कृत्वा तु सर्वभाक् ॥ ६ ॥ इति श्रीगारुडे महापुराणे प्रथमांशाख्ये आचारकाण्डेऽगस्त्यार्घ्यव्रतं नामैकोनविंशत्युत्तरशततमोऽध्यायः ॥ ११९ ॥ ॥ ब्रह्मोवाच ॥ रम्भातृतीयां वक्ष्ये च सौभाग्यश्रीसुतादिदाम् ॥ मार्गशीर्षे



१ न्मनि यत्किञ्चिन्मयाखण्डव्रत० । २ व्रतपूर्णोक्तस्त्री० ।

सिते पक्षे तृतीयायामुपोषितः ॥ १ ॥ गौरीं यजेद्बिल्वपत्रैः कुशोदककरस्ततः ॥ कदम्बादौ गिरिसुतां पौषे मरुबकैर्यजेत् ॥ २ ॥ कर्पूरादः कृस
रदो मल्लिकादन्तकाष्ठकृत् ॥ माघे सुभद्रां कल्हारैर्घृताशो मण्डकप्रदः ॥ ३ ॥ गीतीमियं दन्तकाष्ठं फाल्गुने गोमतीं यजेत् ॥ कुन्दैः कृत्वा
दन्तकाष्ठं जीवाशः शष्कुलीप्रदः ॥ ४ ॥ विशालाक्षीं दमनकैश्चैत्रे च कृसरप्रदः ॥ दधिप्राशो दन्तकाष्ठं तगरं श्रीमुखीं यजेत् ॥ ५ ॥
वैशाखे कर्णिकारैश्च अशोकाशो वटप्रदः ॥ ज्येष्ठे नारायणीमर्चेच्छतपत्रैश्च खण्डदः ॥ लवंगाशो भवेदेव आषाढे माधवीं यजेत् ॥ ६ ॥ ति
लाशो बिल्वपत्रैश्च क्षीरान्नवटकप्रदः ॥ औदुम्बरं दन्तकाष्ठं तगर्य्याः श्रावणे श्रियम् ॥ ७ ॥ दन्तकाष्ठं मल्लिकाया क्षीरदो ह्युत्तमां यजेत् ॥ पद्मै
र्यजेद्भाद्रपदे शृंगदाशो गुडादिदः ॥ ८ ॥ राजपुत्रीं चाश्वयुजे जपापुष्पैश्च जीरकम् ॥ प्राशयेन्निशि नैवेद्यैः कृसरैः कार्त्तिके यजेत् ॥ ९ ॥
जातीपुष्पैः पद्मजां च पञ्चगव्याशनो यजेत् ॥ घृतोदनं च वर्षान्ते सपत्नीकान्द्विजान्यजेत् ॥ १० ॥ उमामहेश्वरं पूज्य प्रदद्याच्च गुडादिकम् ॥
वस्त्रच्छत्रसुवर्णाद्यैः रात्रौ च कृतजागरः ॥ गीतवाद्यैर्ददेत्प्रातर्गवाद्यं सर्वमाप्नुयात् ॥ ११ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचार
काण्डे रम्भातृतीयाव्रतं नाम विंशत्युत्तरशततमोऽध्यायः ॥ १२० ॥ब्रह्मोवाच॥ चातुर्मास्यव्रतान्यूचे एकादश्यां समाचरेत्॥ आषाढ्यां पौर्णमास्यां वा
सर्वेण हरिमर्च्य च॥ १॥इदं व्रतं मया देव गृहीतं पुरतस्तव॥निर्विघ्नं सिद्धिमाप्नोतु प्रसन्ने त्वयि केशव ॥ २॥ गृहीतेऽस्मिन्व्रते देव यद्यपूर्णे म्रियाम्यहम्॥
तन्मे भवतु सम्पूर्णं त्वत्प्रसादाज्जनार्दन ॥ ३ ॥ एवमभ्यर्च्य गृह्णीयाद्व्रतार्चनजपादिकम् ॥ सर्वाघं च क्षयं याति चिकीर्षेद्यो हरेर्व्रतम् ॥ ४ ॥ स्ना
त्वायेभ्यर्च्य गृह्णीयाद्व्रतार्चनजपादिकम् ॥ स्नात्वा यश्चतुरो मासानेकभक्तेन पूजयेत् ॥ विष्णुं स याति विष्णोर्वै लोकं मलविवर्जितम् ॥ ५ ॥ मद्य
मांससुरात्यागी वेदविद्धरिपूजनात् ॥ तैलवर्जी विष्णुलोकं विष्णुभाक्कृच्छ्रपादकृत् ॥ ६ ॥ एकरात्रोपवासाच्च देवो वैमानिको भवेत् ॥ श्वेतद्वीपं त्रिरा
त्रात्तु व्रजेत्षष्ठान्नकृन्नरः ॥ ७ ॥ चान्द्रायणाद्धरेर्धाम लभेन्मुक्तिमयाचिताम् ॥ प्राजापत्यं विष्णुलोकं पराकव्रतकृद्धरिम् ॥ ८ ॥ सक्तुयावकभिक्षाशी
पयोदधिघृताशनः ॥ गोमूत्रयावकाहारः पञ्चगव्यकृताशनः ॥ शाकमूलफलाद्याशी रसवर्जी च विष्णुभाक् ॥ ९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे
प्रथमांशाख्ये आचारकाण्डे चातुर्मास्यव्रतनिरूपणं नामैकविंशत्युत्तरशततमोऽध्यायः ॥ १२१ ॥ ब्रह्मोवाच ॥ व्रतं मासोपवासाख्यं सर्वोत्कृष्टं वदामि
ते ॥ वानप्रस्थो यतिर्नारी कुर्य्यान्मासोपवासकम् ॥ १ ॥ आश्विनस्य सिते पक्षे एकादश्यामुपोषितः ॥ व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनानि तु ॥२॥

१ गीतामयं० । २ उमामाहेश्वरस्था(स्या)तु लवणे तु गुडे स्थितम्० । ३ फलत्यागी० ।

अद्यप्रभृत्यहं विष्णो यावदुत्थानकं तव ॥ अर्चये[1] त्वामनश्नंस्तु दिनानि त्रिंशदेव तु ॥ ३ ॥ कार्त्तिकाश्विनयोर्विष्णो द्वादश्योः शुक्लयोरहम् ॥ म्रिये यद्यन्तराले तु व्रतभंगो न मे भवेत् ॥ ४ ॥ हरिं यजेत्त्रिषवणस्नायी गन्धादिभिर्व्रती ॥ गात्राभ्यंगं गन्धलेपं देवतायतने त्यजेत् ॥ ५ ॥ द्वादश्यामथ संपूज्य प्रदद्याद्द्विजभोजनम् ॥ ततश्च पारणं कुर्य्याद्धरेर्मासोपवासकृत् ॥ ६ ॥ दुग्धादिप्राशनं कुर्य्याद्व्रतस्थो मूर्च्छितोऽन्तरा ॥ दुग्धाद्यैर्न व्रतं नश्ये द्भुक्तिमुक्तिमवाप्नुयात्॥७॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मासोपवासव्रतं नाम द्वाविंशत्युत्तरशततमोऽध्यायः॥१२२॥ ब्रह्मोवाच ॥ व्रतानि कार्त्तिके वक्ष्ये स्नात्वा विष्णुं प्रपूजयेत् ॥ एकभक्तेन नक्तेन मासं वायाचितेन वा ॥ १ ॥ दुग्धशाकफलाद्यैर्वा उपवासेन वा पुनः॥ सर्वपापविनिर्मुक्तः प्राप्तकामो हरिं व्रजेत् ॥ २ ॥ सदा हरेर्व्रतं श्रेष्ठं ततः स्याद्दक्षिणायने ॥ चातुर्मास्ये ततस्तस्मात्कार्त्तिके भीष्मपञ्चकम् ॥ ३ ॥ ततः श्रेष्ठव्रतं शुक्लस्यैकादश्यां समाचरेत् ॥ स्नात्वा त्रिकालं पित्रादीन्यवाद्यैरर्चयेद्धरिम् ॥ ४ ॥ यजेन्मौनी घृताद्यैश्च पञ्चगव्येन वारिभिः ॥ स्नाप यित्वाथ कर्पूरमुखैश्चैवानुलेपयेत् ॥ ५ ॥ घृताक्तगुग्गुलैर्धूपं द्विजः पञ्चदिनं दहेत् ॥ नैवद्यं परमान्नं तु जपेदष्टोत्तरं शतम् ॥ ६ ॥ ॐ नमो वासुदेवाय घृतव्रीहितिलादिकम् ॥ अष्टाक्षरेण मन्त्रेण स्वाहान्तेन तु होमयेत् ॥ ७ ॥ प्रथमेऽह्नि हरेः पादौ यजेत्पद्मैर्द्वितयिके ॥ बिल्वपत्रैर्जानुदेशं नाभिं गन्धेन चापरे ॥ ८ ॥ स्कन्धा बिल्वजवाभिश्च पञ्चमेऽह्नि शिरोऽर्चयेत्॥मालत्या भूमिशायी स्याद्गोमयं प्राशयेत्क्रमात्॥९॥ गोमूत्रं च दधि क्षीरं पञ्चमे पञ्चगव्यकम् ॥ नक्तं कुर्य्यात्पञ्चदश्यां व्रती स्याद्भुक्तिमुक्तिभाक् ॥ १० ॥ एकादशीव्रतं नित्यं तत्कुर्य्यात्पक्षयोर्द्वयोः ॥ अघौघनरकं हन्यात्सर्वदं विष्णुलोकदम् ॥ ११ ॥ एकादशी द्वादशी च निशान्ते च त्रयोदशी ॥ नित्यमेकादशी यत्र तत्र सन्निहितो हरिः ॥ १२ ॥ दशम्येकादशी यत्र तत्रस्थाश्चासुरादयः ॥ द्वादश्यां पारण कुर्य्यात्सूतके मृतके चरेत् ॥ १३ ॥ चतुर्दशीं प्रतिपदं पूर्वमिश्रामुपावसेत् ॥ पौर्णमास्या ममावास्यां प्रतिपन्मिश्रितां मुने ॥ १४ ॥ द्वितियां तृतीयामिश्रां तृतीयाञ्चाप्युपावसेत् ॥ चतुर्थ्या सङ्गतां नित्यं चतुर्थीञ्चानया युताम् ॥ पञ्चमीं षष्ठ्यसंयुक्तां षष्ठ्या युक्ताञ्च सप्तमीम् ॥ १५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भीष्मपञ्चकादिव्रतं नाम त्रयोविंशत्यु त्तरशततमोऽध्यायः ॥ १२३ ॥ ब्रह्मोवाच ॥ शिवरात्रिव्रतं वक्ष्ये कथां वै सर्वकामदाम् ॥ यथा च गौरी भूतेशं पृच्छति स्म परं व्रतम् ॥ १ ॥ ईश्वर उवाच ॥ माघफाल्गुनयोर्मध्ये कृष्णा या तु चतुर्दशी ॥ तस्यां जागरणाद्रुद्रः पूजितो भुक्तिमुक्तिदः ॥२॥ कामयुक्तो हरः पूज्यो द्वादश्यामिव केशवः॥

१ पद्मक्षरेप्य० ।

उपोषितैः पूजितः सन्नरकात्तारयेत्तथा ॥३॥ निषादश्चार्बुदे राजा पापी सुन्दरसेनकः ॥ स कुक्कुरैः समायुक्तो मृगान्हन्तुं वनं गतः ॥ ४ ॥ मृगादि कमसंप्राप्य क्षुत्पिपासार्दितो गिरौ ॥ रात्रौ तडागतीरेषु निकुञ्जे जाग्रदास्थितः ॥ ५ ॥ तत्रास्ति लिंगं स्वं रक्षञ्छरीरं चाक्षिपत्ततः ॥ पर्णानि चाप तन्मूर्ध्नि लिंगस्यैव न जानतः ॥ ६ ॥ तेन धूलिनिरोधाय क्षिप्तं नीरं च लिंगके ॥ शरः प्रमादेनैकस्तु प्रच्युतः करपल्लवात् ॥ ७ ॥ जानुभ्यामवनीं गत्वा लिंगं स्पृष्ट्वा गृहीतवान् ॥ एवं स्नानं स्पर्शनं च पूजनं जागरोऽभवत् ॥ ८ ॥ प्रातर्गृहागतो भार्य्यादत्तान्नं भुक्तवान्स च ॥ काले मृतो यमभटैः पाशैर्बद्ध्वा तु नीयते ॥ ९ ॥ तदा मम गणैर्युद्धे जित्वा मुक्तीकृतः स च ॥ कुक्कुरेण सहैवाभूद्गणो मत्पार्श्वगोऽमलः ॥ १० ॥ एवमज्ञानतः पुण्यं ज्ञानात्पुण्यमथाक्षयम् ॥ त्रयोदश्यां शिवं पूज्य कुर्य्यात्तु नियमं व्रती ॥ ११ ॥ प्रातर्देव ! चतुर्दश्यां जागरिष्याम्यहं निशि ॥ पूजां दानं तपो होमं करिष्याम्यात्मशक्तितः ॥ १२ ॥ चतुर्दश्यां निराहारो भूत्वा शम्भो परेऽहनि ॥ भोक्ष्येऽहं भुक्तिमुक्त्यर्थं शरणं मे भवेश्वर ॥ १३ ॥ पञ्चगव्यामृतैः स्नाप्य तत्काले गुरुं श्रितः ॥ ॐ नमो नमः शिवाय गन्धाद्यैः पूजयेद्धरम् ॥ १४ ॥ तिलतण्डुलव्रीहींश्च जुहुयात्सघृतं चरुम् ॥ हुत्वा पूर्णाहुतिं दत्त्वा शृणुयाद्गीतसत्कथाम् ॥ १५ ॥ अर्द्धरात्रे त्रियामे च चतुर्थे च पुनर्यजेत् ॥ मूलमन्त्रं तथा जप्त्वा प्रभाते तु क्षमापयेत् ॥ १६ ॥ अविघ्नेन व्रतं देव ! त्वत्प्रसादान्मयार्चितम् ॥ क्षमस्व जगतां नाथ ! त्रैलोक्याधिपते हर ! ॥ १७ ॥ यन्मयाद्य कृतं पुण्यं यद्रुद्रस्य निवेदितम् ॥ त्वत्प्रसादान्मया देव ! व्रतमद्य समापितम् ॥ १८ ॥ प्रसन्नो भव मे श्रीमन् गृहं प्रति च गम्यताम् ॥ त्वदालोकनमात्रेण पवित्रोऽस्मि न संशयः ॥ १९ ॥ भोजयेद्ध्यानानिष्ठांश्च वस्त्रच्छत्रादिकं ददेत् ॥ देवादिदेव भूतेश लोकानुग्रहकारक ॥ २० ॥ यन्मया श्रद्धया दत्तं प्रीयतां तेन मे प्रभुः ॥ इति क्षमाप्य च व्रती कुर्य्याद्द्वादशवार्षिकम् ॥ २१ ॥ कीर्त्तिश्रीपुत्रराज्यादि प्राप्य शैवं पुरं व्रजेत् ॥ द्वादशेष्वपि मासेषु प्रकुर्य्यादिह जागरम् ॥२२॥ व्रती द्वादश संभोज्य दीपदः स्वर्गमाप्नुयात् ॥२३॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे शिवरात्रिव्रतं नाम चतुर्विंश त्युत्तरशततमोऽध्यायः ॥ १२४ ॥ पितामह उवाच ॥ मान्धाता चक्रवर्त्त्यासीदुपोष्यैकादशीं नृपः ॥ एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥ १ ॥ दशम्येकादशीमिश्रा गान्धार्य्या समुपोषिता ॥ तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्जयेत् ॥२॥ द्वादश्येकादशी यत्र तत्र सन्निहितो हरिः ॥ दशम्येका दशी यत्र तत्र सन्निहितोऽसुरः ॥ बहुवाक्यविरोधेन सन्देहो जायते यदा ॥ ३ ॥ द्वादशी तु तदा ग्राह्या त्रयोदश्यान्तु पारणम् ॥ एकादशी कलापि स्यादुपोष्या द्वादशी तथा ॥ ४ ॥ एकादशी द्वादशी च विशेषेण त्रयोदशी ॥ त्रिमिश्रा सा तिथिर्ग्राह्या सर्वपापहरा शुभा ॥ ५ ॥ एकादशीमुपोष्यैव

द्वादशीम थवा द्विज ! ॥ त्रिमिश्रां चैव कुर्वीत न दशम्या युतां क्वचित् ॥ ६ ॥ रात्रौ जागरणं कुर्वन्पुराणश्रवणं नृपः ॥ गदाधरं पूजयंश्च उपोष्यैका दशीद्वयम् ॥ रुक्माङ्गदो ययौ मोक्षमन्ये चैकादशीव्रतम् ॥७॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकादशीमाहात्म्यं नाम पञ्चविंशत्युत्तरशततमोऽध्यायः ॥ १२५ ॥ ब्रह्मोवाच ॥ येनार्चनेन वै लोको जगाम परमां गतिम् ॥ तमर्चनं प्रवक्ष्यामि भुक्तिमुक्तिकरं परम् ॥ १ ॥ सामान्यमण्डलं न्यस्य धातारं द्वारदेशतः ॥ विधातारं तथा गङ्गां यमुनां च महानदीम् ॥ २ ॥ द्वारश्रियं च दण्डं च प्रचण्डं वास्तुपूरुषम्॥ मध्ये चाधारशक्तिं च कूर्मं चानन्तमर्चयेत् ॥ ३ ॥ भूमिं धर्मं तथा ज्ञानं वैराग्यैश्वर्य्यमेव च ॥ अधर्मादींश्च चतुरः कन्दं नालं च पङ्कजम् ॥ ४ ॥ कर्णिकां केसरं सत्त्वं राजसं तामसं गुणम् ॥ सूर्य्यादिमण्डलान्येव विमलाद्याश्च शक्तयः ॥ ५ ॥ दुर्गां गणं सरस्वतीं क्षेत्रपालं च कोणके॥ आसनं मूर्त्तिमभ्यर्च्य वासुदेवं बलं स्मरन् ॥ ६ ॥ अनिरुद्धं महात्मानं नारायणमथार्चयेत् ॥ हृदयादीनि चांगानि शङ्खादीन्यायुधानि च ॥ ७ ॥ श्रियं पुष्टिं च गरुडं गुरुं परगुरुं यजेत् ॥ इन्द्रादीन्दिक्ष्वधो नागमूर्द्ध्वं ब्रह्माणमर्चयेत् ॥ ८ ॥ विष्वक्सेनमथैशान्यां प्रोक्तं पूजनमागमे ॥ सकृदभ्यर्चितो देवो येनैवं विधिपूर्वकम् ॥ ९ ॥ न तस्य सम्भवो भूयः संसारेऽस्मिन्महात्मनः ॥ पुण्डरीकाय संपूज्य ब्रह्माणं च गदाधरम् ॥ १० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे षड्विंशत्युत्तरशततमोऽध्यायः ॥ १२६ ॥ ब्रह्मोवाच ॥ माघमासे शुक्लपक्षे सूर्य्यर्क्षेण युता पुरा ॥ एकादशी तथा चैका भीमेन समुपोषिता ॥ १ ॥ आश्चर्य्यं तु व्रतं कृत्वा पितॄणामनृणोऽभवत् ॥ भीमद्वादशी विख्याता प्राणिनां पुण्यवर्द्धिनी ॥ २ ॥ नक्षत्रेण विनाप्येषा ब्रह्महत्यादि नाशयेत् ॥ विनिहन्ति महापापं कुनृपो विषयं यथा ॥ ३ ॥ कुपुत्रस्तु कुलं यद्वत्कुभार्य्या च पतिं यथा ॥ अधर्मं च यथा धर्मः कुमन्त्री च यथा नृपम् ॥ ४ ॥ अज्ञानेन यथा ज्ञानं शौचमाशौचकं यथा ॥ अश्रद्धया यथा श्रद्धा सत्यञ्चैवानृतैर्यथा ॥ ५ ॥ हिमं यथोष्णमाहन्यादनर्थं चार्थसंचयः ॥ यथा प्रकीर्त्तनाद्दानं तपो वै विस्मयाद्यथा ॥ ६ ॥ अशिक्षया यथा पुत्रो गावो दूरगतैर्यथा ॥ क्रोधेन च यथा शान्तिर्यथा वित्तमवर्द्धनात् ॥ ७ ॥ ज्ञानेः था विद्या निष्कामेन यथा फलम् ॥ तथैव पापनाशाय प्रोक्तेयं द्वादशी शुभा ॥ ८ ॥ ब्रह्महत्या सुरा पान स्तेयं गुर्वंगनागमः ॥ युगपत्तुप्रजाता, निहन्ति त्रिपुष्करम्॥९॥न चापि नैमिषं क्षेत्रं कुरुक्षेत्रं प्रभासकम्॥कालिन्दी यमुना गंगा न चैव न सरस्वती ॥ १० ॥ चैव सर्वतीर्थानि एकादश्याः समानि हि ॥ न दानं न जपो होमो न चान्यत्सुकृतं क्वचित् ॥ ११ ॥ एकतः पृथिवीदानमेक

१ गणं सरस्वतीं दुर्गामिति पाठे क्रमभङ्ग इत्याशयः ।

तो हरिवासरः ॥ ततोऽप्येका महापुण्या इयमेकादशी वरा ॥ १२ ॥ अस्मिन्वराहपुरुषं कृत्वा देवं तु हाटकम् ॥ घटोपरि नवे पात्रे कृत्वा वै ताम्रभाजने ॥ १३ ॥ सर्वबीजभृते विप्राः सितवस्त्रावगण्ठिते ॥ सहिरण्यप्रदीपाद्यैः कृत्वा पूजां प्रयत्नतः ॥ १४ ॥ वराहाय नमः पादौ क्रोडाकृतये नमः कटिम् ॥ नाभिं गंभीरघोषाय उरः श्रीवत्सधारिणे ॥ १५ ॥ बाहुं सहस्रशिरसे ग्रीवां सर्वेश्वराय च ॥ मुखं सर्वात्मने पूज्यं ललाटं प्रभवाय च ॥ १६ ॥ केशाः शतमयूखाय पूज्या देवस्य चक्रिणः ॥ विधिना पूजयित्वा तु कृत्वा जागरणं निशि ॥ १७ ॥ श्रुत्वा पुराणं देवस्य माहात्म्यप्रतिपादकम्॥ प्रातर्विप्राय दत्त्वा च याचकाय शुभाय तत् ॥ १८ ॥ कनकक्रोडसहितं सन्निवेद्य परिच्छदम् ॥ पश्चात्तु पारणं कुर्य्याज्ञातितृप्तः सकृद्व्रतः ॥ १९ ॥ एवं कृत्वा नरो विद्वान्न भूय स्तनपो भवेत् ॥ उपोष्यैकादशीं पुण्यां मुच्यते वै ऋणत्रयात् ॥ मनोऽभिलषितावाप्तिः कृत्वा सर्वव्रतादिकम् ॥ २० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकादशीमाहात्म्यं नाम सप्तविंशत्युत्तरशततमोऽध्यायः ॥ १२७ ॥

ब्रह्मोवाच ॥ व्रतानि व्यास वक्ष्यामि यैस्तुष्टः सर्वदा हरिः ॥ शास्त्रोदितो हि नियमो व्रतं तच्च तपो मतम् ॥ १ ॥ नियमास्तु विशेषाः स्युः व्रतस्यास्य दमादयः ॥ नित्यं त्रिषवणं स्नायादधःशायी जितेन्द्रियः ॥ २ ॥ स्त्रीशूद्रपतितानां तु वर्जयेदभिभाषणम् ॥ पवित्राणि च पश्चैव जुहुयाच्चैव शक्तितः ॥ ३ ॥ कृच्छ्राण्येतानि सर्वाणि चरेत्सुकृतवान्नरः ॥ केशानां रक्षणार्थं तु द्विगुणं व्रतमाचरेत् ॥ ४ ॥ कांस्यं माषं मसूरं च चणकं कोरदूषकम् ॥ शाकं मधु परान्नं च वर्जयेदुपवासवान् ॥ ५ ॥ पुष्पालङ्कारवस्त्राणि धूपगन्धानुलेपनम् ॥ उपवासेन दुष्येत्तु दन्तधावनमञ्जनम् ॥ ६ ॥ दन्तकाष्ठं पंचगव्यं कृत्वा प्रातर्व्रतं चरेत् ॥ असकृज्जलपानाच्च ताम्बूलस्य च भक्षणात् ॥ ७ ॥ उपवासः प्रदुष्येत दिवास्वप्नात्क्षमैथुनात् ॥ क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ॥ ८ ॥ देवपूजाग्निहवनं सन्तोषोऽस्तेयमेव च ॥ सर्वव्रतेष्वयं धर्मः सामान्यो दशधा स्मृतः ॥ ९ ॥ नक्षत्रदर्शनान्नक्तमनक्तं निशि भोजनम् ॥ गोमूत्रं च पलं दद्यादर्धांगुष्ठं तु गोमयम् ॥ १० ॥ क्षीरं सप्तपलं दद्याद्दध्नश्चैव पलत्रयम् ॥ घृतमेकपलं दद्यात्पलमेकं कुशोदकम् ॥ ११ ॥ गायत्र्या चैव गन्धेति आप्यायस्व॰दधिग्रहः ॥ तेजोऽसीति च देवस्य ब्रह्मकूर्चव्रतं चरेत् ॥१२॥ अग्न्याधानं प्रतिष्ठां तु यज्ञदानव्रतानि च ॥ वेदव्रतवृषोत्सर्गचूडाकरणमेखलाः ॥ १३ ॥ मांगल्यमभिषेकं च मलमासे विवर्जयेत् ॥ दर्शाद्दर्शस्य चान्द्रः स्यात्त्रिंशाहोभिस्तु सावनः ॥ १४ ॥ रविसंक्रमणात्सौरो नाक्षत्रः सप्तविंशतिः ॥ सौरो मासो विवाहाय यज्ञादौ सावनस्थितिः ॥ १५ ॥ युग्माग्नियुगभूतानि षण्मुन्योर्वसुरंध्रयोः ॥ रुद्रेण द्वादशी युक्ता चतुर्दश्याथ पूर्णिमा ॥ १६ ॥ प्रतिपद्यप्यमावास्या तिथ्योर्युग्मं महाफलम् ॥

एतद्ध्वस्तं महाघोरं हन्ति पुण्यं पुरा कृतम् ॥ १७ ॥ प्रारब्धतपसा स्त्रीणां रजो हन्याद्व्रतं न हि ॥ अन्यैर्दानादिकं कुर्य्यात्कायिकं स्वयमेव च
॥ १८ ॥ क्रोधात्प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि ॥ दिनत्रयं न भुञ्जीत शिरसो मुण्डनं भवेत् ॥ १९ ॥ असामर्थ्ये शरीरस्य पुत्रादीन्कारयेद्व्र
तम् ॥ व्रतस्थं मूर्च्छितं विप्रं जलादीन्यनुपाययेत् ॥ २० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे व्रतपरिभाषा नामा
ष्टाविंशत्युत्तरशततमोऽध्यायः ॥ १२८ ॥ ब्रह्मोवाच ॥ वक्ष्ये प्रतिपदादीनि व्रतानि व्यास शृण्वथ ॥ वैश्वानरपदं याति शिखिव्रतमिदं स्मृतम्
॥ १ ॥ प्रतिपद्येकभक्ताशी समाप्ते कपिलाप्रदः ॥ चैत्रादौ कारयेच्चैव ब्रह्मपूजां यथाविधि ॥ गन्धपुष्पार्चनैर्दानैर्माल्याद्यैश्च मनोरमैः ॥ २ ॥ सहो
मैः पूजयेद्देवं सर्वान्कामानवाप्नुयात् ॥ कार्त्तिके त सितेऽष्टम्यां पुष्पहारी च वत्सरम् ॥ ३ ॥ पुष्पादिदाता रूपेण रूपभागी भवेन्नरः ॥ कृष्णपक्षे
तृतीयायां श्रावणे श्रीधरं श्रिया ॥ ४ ॥ यजेदशून्यशय्यायां फलं दद्याद्द्विजातये ॥ शय्यां दत्त्वा प्रार्थयेच्च श्रीधराय नमः श्रियै ॥ ५ ॥ उमां
शिवं हुताशं च तृतीयायां च पूजयेत् ॥ हविष्यमन्न नैवेद्य देय दमनकं तथा ॥ ६ ॥ चैत्रादौ फलमाप्नोति उमया मे प्रभाषितम् ॥ फाल्गुनादि
तृतीयायां लवणं यस्तु वर्जयेत् ॥ ७ ॥ समाप्ते शयनं दद्याद्गृहं चोपस्करान्वितम् ॥ संपूज्य विप्रमिथनं भवानी प्रीयतामिति ॥ ८ ॥ गौरीलोके
वसेन्नित्यं सौभाग्यकरमुत्तमम् ॥ गौरी काली उमा भद्रा दुर्गा कान्तिः सरस्वती ॥ ९ ॥ मंगला वैष्णवी लक्ष्मीः शिवा नारायणी क्रमात् ॥ मार्गे
तृतीयामारभ्य अवियोगादिमाप्नुयात् ॥ १० ॥ चतुर्थ्यां सितमाघादौ निराहारो व्रतान्वितः ॥ दत्त्वा तिलांस्तु विप्राय स्वयं भुंक्ते तिलोदकम्
॥ ११ ॥ वर्षद्वये समाप्तिश्च निर्विघ्नादिं समाप्नुयात् ॥ गः स्वाहा मूलमन्त्रोऽयं प्रणवेन समन्वितः ॥ १२ ॥ ग्लौं ग्लां हृदये गां गीं हूं ह्रीं ह्रीं शिरः
शिखा ॥ गूं वर्म गों च गौं नेत्रं गों च आवाहनादिषु ॥ १३ ॥ आगच्छोल्काय गन्धोल्कः पुष्पोल्को धूपकोल्ककः ॥ दीपोल्काय महोल्काय बलि
श्चाथ विस( मा )र्जनम् ॥ १४ ॥ सिद्धोल्काय च गायत्री ( त्र ) न्यासोंगुष्ठादिरीरितः ॥ ॐ महाकर्णाय विद्महे—वक्रतुण्डाय धीमहि—तन्नो दन्तिः
प्रचोदयात् ॥ १५ ॥ पूजयेत्तिलहोमैश्च एते पूज्या गणास्तथा ॥ गणाय गणपतये स्वाहा कूष्माण्डकाय च ॥ १६ ॥ अमोघोल्कायैकदन्ताय
त्रिपुरान्तकरूपिणे ॥ ॐ श्याम ( व ) दन्ताविकरालास्याहवेपाय वै नमः ॥ १७ ॥ पद्मदंष्ट्राय स्वाहान्ते मुद्रा वै नर्त्तनं गणे ॥ हस्ततालश्च हसनं
सौभाग्यादिफलं भवेत ॥ १८ ॥ मार्गशीर्षे तथा शुक्लचतुर्थ्यां पूजयेद्गण ॥ अब्दं प्राप्नोति विद्याश्रीकीर्त्त्यायुःपुत्रसन्ततिम् ॥ १९ ॥ सोम



... । २ हमोपायैक० । ३ विकटहरनाय वै० ।

वारे चतुर्थ्यां च समुपोष्यार्चयेद्गणम् ॥ जपञ्जुह्वत्स्मरन्विंद्यां स्वर्गं निर्वाणतां व्रजेत् ॥ २० ॥ यजेच्छुक्लचतुर्थ्यां यः खण्डलड्डुकमोद ( मण्ड )कैः ॥ विघ्नार्चनेन सर्वान्स कामान्सौभाग्यमाप्नुयात् ॥ २१ ॥ पुत्रादिकं दमनकैर्दमनाख्या चतुर्थ्यपि ॥ ओं गणपतये नमः चतुर्थ्यन्तं यजेद्गणम् ॥ २२ ॥ मासे तु यस्मिन्कस्मिंश्चिज्जुहुयाद्वा जपेत्स्मरेत् ॥ सर्वान्कामानवाप्नोति सर्वविघ्नविनाशनम् ॥ २३ ॥ विनायकं मूर्त्तिकाद्यं यजेदेभिश्च नामभिः ॥ सोऽपि सद्गतिमाप्नोति स्वर्गमोक्षसुखानि च ॥ २४ ॥ गणपूज्यो वक्रतुण्ड एकदंष्ट्री त्रियम्बकः ॥ नीलग्रीवो लम्बोदरो विकटो विघ्नराजकः ॥ २५ ॥ धूम्रवर्णो भालचन्द्रो दशमस्त विनायकः ॥ गणपतिर्हस्तिमुखो द्वादशारे यजेद्गणम् ॥ २६ ॥ पृथक् समस्तं मेधावी सर्वान्कामान वाप्नुयात् ॥ श्रावणे चाश्विने भाद्रे पंचम्यां कार्त्तिक शुभे ॥ २७ ॥ वासुकिस्तक्षकश्चैव कालीयो मणिभद्रकः ॥ ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ ॥ २८ ॥ घृताद्यैः स्नापिता ह्येते आयुरारोग्यसम्पदः ॥ अनन्तं वासुकिं शंखं पद्मं कम्बलमेव च ॥ २९ ॥ तथा कर्कोटकं नागं धृतराष्ट्रं च शंखकम् ॥ कालीयं तक्षकं चैव पिङ्गलं मासिमासि च ॥ ३० ॥ यजेद्भाद्रसिते नागानष्टौ मुक्तिं दिवं व्रजेत् ॥ द्वारस्योभयतो लेख्याः श्रावणे तु सिते यजेत् ॥ ३१ ॥ पञ्चम्यां पूजयेन्नागाननंताद्यान्महोरगान् ॥ क्षीरं सर्पिश्च नैवेद्यं देयं सर्वविषापहम् ॥ नागा अभयहस्ताश्च दष्टोद्धारात् पञ्चमी ॥ ३२ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे दष्टोद्धारपञ्चमीव्रतं नामैकोनत्रिंशोत्तरशततमोऽध्यायः ॥ १२९ ॥ ब्रह्मोवाच ॥ एवं भाद्रपदे मासि कार्त्तिकेयं प्रपूजयेत् ॥ स्नानदानादिकं सर्वमस्यामक्षय्यमुच्यते ॥ १ ॥ सप्तम्यां प्राशयेच्चापि भोज्यं विप्रान्रविं यजेत् ॥ ॐ खखोल्कायमृतत्वं ( तंतं ) प्रियसङ्गमो भव सद स्वाहा ॥ २ ॥ अष्टम्यां पारणं कुर्यान्मरीचं प्राश्य स्वर्गभाक् ॥ ( इति मरीचसप्तमी ) ॥ सप्तम्यां नियतः स्नात्वा पूजयित्वा दिवाकरम् ॥ ३ ॥ दद्यात्फलानि विप्रेभ्यो मार्त्तण्डः प्रीयतामिति ॥ खर्जूरं नारिकेलं वा प्राश येन्मातुलुङ्गकम् ॥४॥ सर्वे भवन्तु सफला मम कामाः समन्ततः॥( इति फलसप्तमी)॥संपूज्य देवं सप्तम्यां पायसेनाथ भोजयेत् ॥५॥विप्रांश्च दक्षिणां दत्त्वा स्वयं चाथ पयः पिबेत् ॥ भक्ष्यं चोष्यं तथा लेह्यं ओदनं चेति कीर्त्तितम् ॥ ६ ॥ धनपुत्रादिकामस्तु त्यजेदेतदनोदनः ॥ ( इत्यनौदनसप्तमी व्रतम् ) ॥ वाय्वाशी विजयेत्क्षुच्च कुर्याद्विजयसप्तमीम् ॥ अद्यादर्कं च कामेच्छुरुपवासे तरेन्मदम् ॥७॥ गोधूममाषयवषाष्टिककांस्यपात्रं पाषाणपि ष्टमधुमैथुनमद्यमांसम् ॥ अभ्यञ्जनाञ्जनतिलांश्च विवर्जयेद्यः तस्येप्सितं भवति सप्तसु सप्तमीषु ॥ ८ ॥ ( इति विजयसप्तमीव्रतम् ) ॥ इति

१ न्नित्यं स्वर्गं निर्विघ्नतां० । २ आदौ दिवं ततो मुक्तिमित्यर्थः । ३ दष्टोद्धरणपञ्च० । ४ अक्षयाख्यसप्तम्यां प्रा० । ५ उपवासे तु कामदम्० ।

श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सप्तमीव्रतनिरूपणं नाम त्रिंशोत्तरशततमोऽध्यायः ॥ १३० ॥ ब्रह्मो
वाच ॥ ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः ॥ दूर्वां गौरीं गणेशं च फलपुष्पैः शिवं यजेत् ॥ १ ॥ फलव्रीह्यादिभिः सर्वैः शम्भवे
नमः शिवाय च ॥ त्वं दूर्वेऽमृतजन्मासि ह्यष्टमी सर्वकामभाक् ॥ २ ॥ अनग्निपक्कमश्नीयान्मुच्यते ब्रह्महत्यया ॥ ( इति दूर्वाष्टमीव्रतम् )॥
कृष्णाष्टम्यां च रोहिण्यामर्द्धरात्रेऽर्चनं हरेः ॥ ३ ॥ कार्य्या विद्धापि सप्तम्या हन्ति पापं त्रिजन्मनः ॥ उपोषितोऽर्चयेन्मन्त्रैस्तिथि
भान्ते च पारणम् ॥ ४ ॥ योगाय योगपतये योगेश्वराय योगसम्भवाय गोविन्दाय नमोनमः ॥ ( स्नानमन्त्रः ) यज्ञाय यज्ञेश्वराय यज्ञपतये गोवि
न्दाय नमोनमः ॥ ५ ॥ ( अर्चन० ) --विश्वाय विश्वेश्वराय विश्वपतये गोविन्दाय नमोनमः ॥ ( शयन० ) – सर्वाय सर्वेश्वराय सर्वेताय सर्वसम्भवा
य गोविन्दाय नमोनमः ॥ ६ ॥ स्थण्डिले पूजयेद्देवं सचन्द्रां रोहिणीं तथा ॥ शङ्खे तोयं समादाय सपुष्पफलचन्दनम् ॥ ७ ॥ जानुभ्यामवनीं
गत्वा चन्द्रायार्घ्यं निवेदयेत ॥ क्षीरोदार्णवसंभूत ! अत्रिनेत्रसमुद्भव ! ॥ ८ ॥ गृहाणार्घ्यं शशाङ्केश ( मं ) रोहिण्या सहितो मम ॥ श्रियै च वसुदे
वाय नन्दाय च बलाय च ॥ ९ ॥ यशोदायै ततो दद्यादर्घ्यं फलसमन्वितम् ॥ अनन्तं ( घं ) वामनं शौरिं वैकुण्ठं पुरुषोत्तमम् ॥ १० ॥ वासुदेवं
हृषीकेशं माधवं मधुसूदनम् ॥ वराहं पुण्डरीकाक्षं नृसिंहं दैत्यसूदनम् ॥ ११ ॥ दामोदरं पद्मनाभं केशवं गरुडध्वजम् ॥ गोविन्दमच्युतं देवमनन्तम
पराजितम् ॥ १२ ॥ अधोक्षजं जगद्बीजं सर्गस्थित्यन्तकारणम् ॥ अनादिनिधनं विष्णुं त्रिलोकेशं त्रिविक्रमम् ॥ १३ ॥ नारायणं चतुर्बाहुं शङ्खच
क्रगदाधरम् ॥ पीताम्बरधरं दिव्यं वनमालाविभूषितम् ॥ १४ ॥ श्रीवत्साङ्कं जगद्धाम श्रीपतिं श्रीधरं हरिम् ॥ यं देवं देवकी देवी वसुदेवादजीजनत्
॥ १५ ॥ भौमस्य ब्रह्मणो गुप्त्यै तस्मै ब्रह्मात्मने नमः ॥ नामान्येतानि संकीर्त्त्य गत्यर्थं प्रार्थयेत्पुनः ॥ १६ ॥ त्राहि मां देवदेवेश ! हरे ! संसारसाग
रात् ॥ त्राहि मां सर्वपापघ्न ! दुःखशोकार्णवात्प्रभो ! ॥ १७ ॥ देवकीनन्दन ! श्रीश ! हरे ! संसारसागरात् ॥ दुर्वृत्तांस्त्रायसे विष्णो ! ये स्मरन्ति
सकृत्सकृत् ॥ १८ ॥ सोऽहं देवातिदुर्वृत्तस्त्राहि मां शोकसागरात् ॥ पुष्कराक्ष ! निमग्नोऽहं महत्यज्ञानसागरे ॥ १९ ॥ त्राहि मां देवदेवेश ! त्वामृते
ऽन्यो न रक्षिता ॥ स्वजन्म वासुदेवाय गोब्राह्मणहिताय च ॥ २० ॥ जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ॥ शान्तिरस्तु शिवं चास्तु धनवि
ख्यातिराज्यभाक् ॥ २१ ॥ ( इति कृष्णाष्टमीव्रतम् ) ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कृष्णाष्टमीव्रतनिरूपणं ना
मैकत्रिंशदुत्तरशततमोऽध्यायः ॥ १३१ ॥ ब्रह्मोवाच ॥ नक्ताशी त्वष्टमीं यावद्वर्षान्ते चैव धेनुदः ॥ पौरन्दरपदं याति सद्गतिव्रतमुच्यते ! ॥ १ ॥

शुक्लाष्टम्यां पौषमासे महारुद्रेति साधु वै॥मत्प्रीतये कृतं देवि शतसाहस्रिकं फलम् ॥ २ ॥ अष्टमी बुधवारेण पक्षयोरुभयोर्यदा ॥ भविष्यति तदा त स्यां व्रतमेतत्कथा परा ॥ ३ ॥ तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः ॥ तण्डुलस्याष्टमुष्टीनां वर्जयित्वांगुलिद्वयम् ॥ ४ ॥ भक्तं सद्भक्तिश्रद्धा भ्यां मुक्तिकामी हि मानवः॥आम्रपत्रपुटे कृत्वा यो भुङ्क्ते कुशवेष्टिते॥५॥कलम्बिकाम्लिकोपेतं काम्यं तस्य फलं भवे ( लभे ) त्॥ बुधं पंचोपचारेण पूजयित्वा जलाशये ॥ ६ ॥ शक्तितो दक्षिणां दद्यात्कर्करीं तण्डुलान्विताम् ॥ बुं बुधायेति बीजं स्यात्स्वाहान्तः कमलादिकः ॥ ७ ॥ बाणचापधरं श्यामं दले चांगानि मध्यतः ॥ बुधाष्टमीकथा पुण्या श्रोतव्या कृतिभिर्ध्रुवम् ॥ ८ ॥ पुरे पाटलिपुत्राख्ये वीरो नाम द्विजोत्तमः ॥ रम्भा भार्य्या तस्य चासीत्कौशिकः पुत्र उत्तमः ॥ ९ ॥ दुहिता विजयानाम्नी व ( ध ) नपालो वृषोऽभवत् ॥ गृहीत्वा कौशिकस्तं च ग्रीष्मे गंगां गतोऽरमत् ॥ १० ॥ गोपालकैर्वृषश्चौरैः क्रीडास्थोपहृतो बलात्॥गंगातः स च उत्थाय वनं बभ्राम दुःखितः ॥११॥ जलार्थं विजया चागाद्भ्रा(न्मा)त्रा सार्द्धं च साप्यगात् ॥ पिपासितो मृणालार्थी आगतोऽथ सरोवरम् ॥ १२ ॥ दिव्यस्त्रीणां च पूजादीन्दृष्ट्वा चाप्यथ विस्मितः ॥ स ता गत्वा ययाचेऽन्नं सानुजोऽहं बुभुक्षितः ॥ १३ ॥ स्त्रियोऽब्रुवन्व्रतं कर्त्तुं दास्यामश्च कुरु व्रतम् ॥ पत्न्यर्थं धनपाना ( ला ) र्थं पूजयामासतुर्बुधम् ॥ १४ ॥ पुटद्वयं गृहीत्वान्नं बुभुजाते प्रदत्त कम् ॥ स्त्रियो गतास्तौ धनदौ धनपानमपश्यताम् ॥१५॥ चौरैर्दत्तं गृहीत्वाथ प्रदोषे प्राप्तवान् गृहम् ॥ वीरं च दुःखितं नत्वा रात्रौ सुप्तो यथासुखम् ॥ १६ ॥ कन्यां च युवतीं दृष्ट्वा कस्मै देया सुता मया ॥ यमायेत्यब्रवीद्दुःखात्साचाराद्व्रतसत्फलात् ॥ १७ ॥ स्वर्गं गतौ च पितरौ व्रतं गज्याय कौ शिकः ॥ चक्रेऽयोध्यामहाराज्यं दत्त्वा च भगिनीं यमे॥१८॥यमोऽपि विजयामाह गृहस्था भव मे पुरे ॥ नोद्घाटयाऽन्यत्रगते यमे सा न तथाकरोत् ॥ अपश्यन्मातरं स्वां सा पाँशयातनया स्थिताम् ॥ १९ ॥ अथोद्विग्ना कौशिकोक्तं ज्ञात्वा मुक्तिप्रदं व्रतम् ॥ चक्रे च सा ततो मुक्ता माता तस्माच्चरेद्व्र तम् ॥ २० ॥ व्रतपुण्यप्रभावेण स्वर्गं गत्वावसत्सुखम् ॥ २१ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे बुधाष्टमीव्रतनिरूपणं नाम द्वात्रिंशदुत्तरशततमोऽध्यायः ॥ १३२ ॥ ब्रह्मोवाच ॥ अशोककलिका ह्यष्टौ ये पिबन्ति पुनर्वसौ ॥ चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः ॥ १ ॥ त्वामशोक ! हराभीष्ट ! मधुमाससमुद्भव ॥ पिबामि शोकसन्तप्तो मामशोकं सदा कुरु ॥ २ ॥ ( इत्यशोकाष्टमीव्रतम ) ॥ ब्रह्मोवाच ॥[8]शुक्ला

१ कामनायुक्त ( क्ति ) मा० । बीजेष्टिः ( जोष्टेः ) स्वातुराकमलादिके० । २ कालम्बिकाम्भिको । ३ तुं तुरायेति० । ४ वृषो भवेत्० । ५ गङ्गागमे० । ६ गृहस्थत्वं पुरीतरम् । ७ स्वांसांग्रामक पाशयातना० ।

ष्टम्यामाश्वयुजे उत्तराषाढया युता ॥ सा महानवमीत्युक्ता स्नानदानादि चाक्षयम ॥३॥ नवमी केवला चापि दुर्गां चैव तु पूजयेत् ॥ महाव्रतं महापुण्यं शङ्कराद्यैरनुष्ठितम् ॥ ४ ॥ अयाचितादि षष्ठ्यादौ राजा शत्रुजयाय च ॥ जपहोमसमायुक्तः कन्यां वा भोजयेत्सदा ॥ ५ ॥ दुर्गेदुर्गे रक्षिणि स्वाहा मन्त्रोऽयं पूजनादिषु ॥ दीर्घाकारादिमात्राभिर्नव देव्यो नमोऽन्तिकाः ॥ ६ ॥ षड्भिः पदैर्नमः स्वाहा वषडादि हृदादिकम्॥अङ्गुष्ठादिकनिष्ठान्तं न्यस्य वै पूजयेच्छिवाम् ॥७॥ अष्टम्यां नव गेहानि दारुजान्येकमेव वा ॥ तस्मिन्देवी प्रकर्त्तव्या हैमी वा राजतापि वा ॥८॥ शूले खड्गे पुस्तके वा पटे वा मण्डले (पे) यजेत् ॥कपालं खेटकं घण्टां दर्पणं तर्जनीं धनः॥९॥ ध्वजं डमरुकं पाशं वामहस्तेषु बिभ्रती ॥ शक्तिं च मुद्गरं शूलं वज्रं खड्गं तथाङ्कुशम् ॥१०॥ शरं चक्रं शलाकां च दुर्गामायुधसंयुताम् ॥ शेषाः षोडशहस्ताः स्युरञ्जनं डमरुं विना ॥ ११ ॥ रुद्रचण्डा प्रचण्डा च चण्डोग्रा चण्डनायिका ॥ चण्डा चण्डवती चैव चण्डरूपातिचण्डिका ॥ १२ ॥ नवमी चोग्रचण्डा च मध्यमाग्निप्रभाकृतिः ॥ रोचना त्वरुणा कृष्णा नीला धूम्रा च शुक्रका ॥ १३ ॥ पीता च पाण्डुरा प्रोक्ता आलीढं हरितं तथा ॥ म (मा) हिषोऽस्य स खड्गाग्रप्रकचग्रहमुष्टिकः ॥ १४ ॥ जप्त्वा दशाक्षरीं विद्यां नासौ केनापि बध्यते ॥ पञ्च (श्चा) दशांगुलं खड्गं त्रिशूलं च ततो यजेत् ॥ लिङ्गस्थां पूजयेद्वापि पादुकेऽथ जलेऽपि वा ॥ १५ ॥ विचित्रां रक्षयेत्पूजामष्टम्यामुपवासयेत ॥ पंचाब्दं महिषं वस्तं रात्रिशेषे च घातयेत्॥१६॥विधिवत्कालिकालीति तदुत्थरुधिरादिकम् ॥ नैर्ऋत्यां पूतनां चैव वायव्यां पापराक्षसीम् ॥१७॥ दद्याच्चरक्यै चैशान्यामाग्नेय्यां च विदारिकाम् ॥१८॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे महानवमीव्रतं नाम त्रयस्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३३ ॥ ब्रह्मोवाच ॥ महाकौशिकमन्त्रश्च कथ्यतेऽत्र महाफलः ॥ १ ॥(महाकौशिकमन्त्रः)- ॐ महाकौशिकाय नमः॥ॐ हूं हूं प्रस्फुर लल लल कुल्व कुल्व चुल्व चुल्व खल्ल खल्ल मुल्व मुल्व गुल्व गुल्व तुल्व तुल्व पुल्ल पुल्ल धल्व धुल्व धुम धुम धमधम मारय मारय धकधक वज्ञापयवज्ञापय विदारयविदारय कम्पकम्प कम्पयकम्पय पूरयपूरय आवेशयआवेशय ॐ ह्रीं ॐ ह्रीं हं वं वं हुं तटतट मदमद ह्रीं ॐ हूं नैर्ऋताय नमः निर्ऋतये दातव्यम् ॥ महाकौशिकमन्त्रेण मन्त्रितं बलिमर्पयेत् ॥ २ ॥ तस्याग्रतो नृपः स्नायाच्छत्रं कृत्वा च पैष्टिकम ॥ खड्गेन घातयित्वा तु दद्यात्स्कन्दविशाखयोः ॥ ३ ॥ मातॄणां चैव देवीनां पूजा कार्य्या तथा निशि ॥ ब्रह्माणी

१ कन्यामूलयुतेमला०। २ आर्षोऽडीबभावः। ३ आर्षः प्रयोगः। ४ ॐ हं प्रस्फरनलकुलुकुल्चुलुसुचलमुलुमुलुमलमुल्दुगुलुगुलुतलुतुल्पुलुपुलल्लुघलघुमधुमधुधमयममार धधकधक [illegible]ापय वज्ञापय विदारय०। ५ पूरयःपूरयः ॐ ह्रीं ॐ ह्रीं हरहरतटतटदमदम ॐ हूं नैर्ऋताय०। ६ स्नायाच्छकं कृत्वा च पौष्टिकम्०।

चैव माहेशी कौमारी वैष्णवी तथा ॥ ४ ॥ वाराही चैव माहेन्द्री चामुण्डा चण्डिका तथा ॥ जयन्ती मंगला काली भद्रकाली कपालिनी ॥ ५ ॥
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥ क्षीराद्यैः स्नापयेद्देवीं कन्यकाः प्रमदास्तथा ॥ ६ ॥ द्विजाती ( ती ) नथ पाषण्डानन्नदानेन
पूजयेत ॥ ध्वजपत्रपताकाद्यै रथयात्रासु वस्त्रकैः ॥ महानवम्यां पूजेयं जयराज्यादिदायिका ॥ ७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमां
शाख्ये आचारकाण्डे महानवम्यां महाकौशिकमन्त्रकृत्यादिविवरणं नाम चतुर्स्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३४ ॥ ब्रह्मोवाच ॥ नवम्यामाश्विने
शुक्ले एकभक्तेन पूजयेत्।देवीं विंशल्लक्षमेकं जपद्वीरं व्रती नरः॥१॥ (इति वीरनवमीव्रतम्)॥ब्रह्मोवाच॥ चैत्रे शुक्लनवम्यां च देवीं दमनकैर्यजेत्॥आयुरारो
ग्यसौभाग्यं शत्रुभिश्चापराजितः॥२॥(इति दमनकनवमीव्रतम्)॥ब्रह्मोवाच॥दशम्यामेकभक्ताशी समान्ते दशधेनुदः ॥ दिशश्च काञ्चनीर्दत्त्वा ब्रह्माण्डाधिप
तिर्भवेत्॥३॥(इति दिग्दशमीव्रतम्) ब्रह्मोवाच ॥ एकादश्यामृषिपूजा कार्य्या सर्वोपकारिका॥धनवान्पुत्रवांश्चान्ते ऋषिलोके महीयते ॥४॥ मरीचिरत्र्यं
गिरसौ पुलस्त्यः पुलहः क्रतुः॥प्रचेताश्च वसिष्ठश्च भृगुर्नारद एव च॥५॥चैत्रादौ कारयेत्पूजां मालैश्च दमनोद्भवैः॥अशोकाख्याष्टमीप्रोक्ता वीराख्या नवमी
तथा॥६॥दमनाख्या दिग्दशमी नवम्येकादशी तथा ॥७॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ऋष्येकादशीव्रतं नाम
पञ्चत्रिंशदुत्तरशततमोऽध्यायः॥१३५॥ब्रह्मोवाच॥श्रवणद्वादशीं वक्ष्ये भुक्तिमुक्तिप्रदायिनीम्॥एकादशी द्वादशी च श्रवणेन च संयुता ॥१॥ विजया सा
तिथिः प्रोक्ता हरिपूजादि चाक्षयम्॥एकभक्तेन नक्तेन तथैवायाचितेन च॥२॥उपवासेन भैक्ष्येण नैवाद्वादशिको भवेत्॥कांस्यं मांसं तथा क्षौद्रं लोभं वितथ
भाषणम् ॥ ३ ॥ व्यायामं च व्यवायं च दिवास्वप्नमथाञ्जनम् ॥ शिलापिष्टं मसूरं च द्वादश्यां वर्जयेन्नरः ॥ ४ ॥ मासि भाद्रपदे शुक्ला द्वादशी श्रवणा
न्विता॥महती द्वादशी ज्ञेया उपवासे महाफला॥५॥संगमे सरितां स्नानं बुधयुक्ता महाफला॥कुंभे सरत्ने सजले यजेत्स्वर्णं तु वामनम्॥६॥सितवस्त्रयुग
च्छन्नं छत्रोपानद्युगान्वितम् ॥ ॐ नमो वासुदेवाय शिरः संपूजयेत्ततः ॥ ७ ॥ श्रीधराय मुखं तद्वत्कण्ठं कृष्णाय वै नमः ॥ नमः श्रीपतये वक्षो
भुजौ सर्वास्त्रधारिणे ॥ ८ ॥ व्यापकाय नमः कुक्षौ केशवायोदरं बुधः ॥ त्रैलोक्यपतये मेढ्रं जंघे सर्वभृते नमः ॥ ९ ॥ सर्वात्मने नमः पादौ नैवेद्यं
घृतपायसम् ॥ कुम्भांश्च मोदकान्दद्याज्जागरं कारयेन्निशि ॥ १० ॥ स्नात्वाचांतोऽर्चयित्वा तु कृतपुष्पाञ्जलिर्वदेत् ॥ नमोनमस्ते[1] गोविन्द बुध श्रव
णसंज्ञक ! ॥ ११ ॥ अघौघसंक्षयं कृत्वा सर्वसौख्यप्रदो भव ॥ प्रीयतां देवदेवेशो विप्रेभ्यः कलशान्ददेत् ॥ नद्यास्तीरेऽथवा कुर्यात्सर्वान्कामान

१ चैत्रादौ च नव० । २ मालाभिर्दम० । ३ श्रावणी एकभक्तेन तथै० ।

वाप्नुयात् ॥ १२ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रवणद्वादशीव्रतनिरूपणं नाम षट्त्रिंशदुत्तरशततमोऽध्यायः ॥ १३६ ॥ ॥ ब्रह्मोवाच ॥ कामदेवत्रयोदश्यां पूज्यो दमनकादिभिः ॥ रतिप्रीतिसमायुक्तो ह्यशोको मणिभूषितः ॥ १ ॥ (इति मदनकत्रयोदशीव्रतम्) ॥ चतुर्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः ॥ योऽब्दमेकं न भुञ्जीत भुक्तिभाक् शिवपूजनात् ॥ २ ॥ (इति शिवचतुर्दश्यष्टमीव्रतम्) ॥ त्रिरात्रोपोषितो दद्यात्कार्त्तिक्यां भवनं शुभम् ॥ सूर्य्यलोकमवाप्नोति धामव्रतमिदं शुभम् ॥ ३ ॥ अमावस्यां पितॄणां च दत्तं जलादि तदक्षयम् ॥ नक्ताभ्याशी वारनाम्ना यजन्वाराणि सर्वभाक् ॥ ४ ॥ (इति वारव्रतानि) ॥ द्वादशर्क्षाणि विप्रर्षे ! प्रतिमासं तु यानि वै ॥ तन्नाम्नां तेऽच्युतं तेषु सम्यक् संपूजयेन्नरः ॥ ५ ॥ केशवं मार्गशीर्षे तु इत्यादौ कृत्तिकादिके (का) ॥ घृतहोमश्चतुर्मासं कृसरश्च निवेदयेत् ॥ ६ ॥ आषाढादौ पायसं तु विप्रांस्तेनैव भोजयेत् ॥ पञ्चगव्यजलस्नाननैवेद्यैर्नक्तमाचरेत् ॥ ७ ॥ अर्वागग्निसर्जनाद्धव्यं नैवेद्यं सर्वमुच्यते ॥ विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात् ॥ ८ ॥ पाञ्चरात्रविदो मुख्या नैवेद्यं भुञ्जते स्वयम् ॥ एवं संवत्सरस्यान्ते विशेषेण प्रपूजयेत् ॥ ९ ॥ नमोनमस्तेऽच्युत ! संक्षयोऽस्तु पापस्य वृद्धिं समुपैतु पुण्यम् ॥ ऐश्वर्य्यवित्तादि सदाऽक्षयं मे तथास्तु मे सन्ततिरक्षयैव ॥ १० ॥ यथाच्युत ! त्वं परतः परस्मात्स ब्रह्मभूतः परतः परस्मात् ॥ तथाच्युतं मे कुरु वाञ्छितं सदा मया कृतं पापहराप्रमेय ॥ ११ ॥ अच्युतानन्त ! गोविन्द ! प्रसीद यदभीप्सितम् ॥ तदक्षयममेयात्मन्कुरुष्व पुरुषोत्तम ॥ १२ ॥ कुर्य्याद्वै सप्त वर्षाणि आयुःश्रीसंततीर्नरः ॥ उपोष्यैकादशीब्दमष्टमीं च चतुर्दशीम् ॥ १३ ॥ सप्तमीं पूजयेद्विष्णुं दुर्गां शम्भुं रविं क्रमात् ॥ तेषां लोकं समाप्नोति सर्वकामांश्च निर्मलः ॥ १४ ॥ एकभक्तेन नक्तेन तथैवायाचितेन च ॥ उपवासेन शाकाद्यैः पूजयन्सर्वदेवताः ॥ १५ ॥ सर्वः सर्वासु तिथिषु भुक्तिं मुक्तिमवाप्नुयात् ॥ धनदोऽग्निः प्रतिपदि नासत्यो दस्र अर्चितः ॥ १६ ॥ श्रीर्यमश्च द्वितीयायां पञ्चम्या पार्वती श्रिया ॥ नागाः षष्ठ्यां कार्त्तिकेयः सप्तम्यां भास्करोऽर्थदः ॥ १७ ॥ दुर्गाष्टम्यां मातरश्च नवम्यामथ तक्षकः ॥ इन्द्रो दशम्यां धनद एकादश्यां मुनीश्वराः ॥ १८ ॥ द्वादश्यां च हरिः कामस्त्रयोदश्यां महेश्वरः ॥ चतुर्दश्यां पञ्चदश्यां ब्रह्मा च पितरोऽपरे ॥१९॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे तिथिवारनक्षत्रादिव्रतनिरूपणं नाम सप्तत्रिंशदुत्तरशततमोऽध्यायः ॥ १३७ ॥ (इति व्रतानि समाप्तानि) ॥हरिरुवाच ॥ राज्ञां वंशान्प्रवक्ष्यामि वंशानुचरितानि च ॥ विष्णुनाभ्यब्जतो ब्रह्मा दक्षोऽङ्गुष्ठाच्च तस्य वै ॥१॥ ततोऽदितेः

१ योऽब्दमेकं० । २ मार्गशीर्षादौ नक्षत्रे कृत्तिकादिके इति युक्तः पाठ इति भाति । ३ श्रीस्वर्गीति न० । ४ धनदोऽग्निःप्रतिपदि नासत्योदस्र अ० ।

र्विवस्वांश्च ततः सूनुर्विवस्वतः मनुरिक्ष्वाकुशर्याती नृगो धृष्टः पृषध्रकः ॥ २ ॥ नरिष्यन्तश्च नाभागो दिष्टः शशक एव च ॥ मनोरासीदिला कन्या सुद्युम्नोऽस्य सुतोऽभवत् ॥ ३ ॥ इलायां तु बुधाज्जातो राजा रुद्र पुरूरवाः ॥ सुतास्त्रयश्च सुद्युम्नादुत्कलो विनतो गयः ॥ ४ ॥ अभूच्छूद्रो गोवधात्तु पृषध्रस्तु मनोः सुतः ॥ करूषात्क्षत्रिया जाता कारूषा इति विश्रुताः ॥ ५ ॥ दिष्टपुत्रस्तु नाभागो वैश्यतामगमत्स च ॥ तस्माद्भलन्दनः पुत्रो वत्सप्रीतिर्भलन्दनात् ॥ ६ ॥ ततः पांशुः खनित्रोऽभूद्भूपस्तस्माततः क्षुपः ॥ क्षुपाद्विंशोऽभवत्पुत्रो विंशाज्जातो विविंशकः ॥ ७ ॥ विविंशाच्च खनीनेत्रो विभूतिस्तत्सुतः स्मृतः ॥ करन्धमो विभूतेस्तु ततो जातोऽप्यावीक्षितः ॥ ८ ॥ मरुत्तोऽविक्षितस्यापि नरिष्यन्तस्ततः स्मृतः ॥ नरिष्यन्तात्तमो जातस्ततोभूद्राजवर्द्धनः ॥ ९ ॥ राजवर्द्धात्सुधृतिश्च नरोऽभूत्सुधृतेः सुतः ॥ नराच्च केवलः पुत्रः केवलाद्धुन्धुमानपि ॥ १० ॥ धुन्धुमतो वेगवांश्च बुधो वेगवतः सुतः ॥ तृणबिन्दुर्बुधाज्जातः कन्या चैलविला तथा ॥ ११ ॥ विशालं जनयामास तृणबिन्दोस्त्वलम्बुसा ॥ विशालाद्धेमचन्द्रोऽभूद्धेमचन्द्राच्च चन्द्रकः ॥ १२ ॥ धूम्राश्वश्चैव चन्द्रात्तु धूम्राश्वात्सृञ्जयस्तथा ॥ सृञ्जयात्सहदेवोऽभूत्कृशाश्वस्तत्सुतोऽभवत् ॥ १३ ॥ कृशाश्वात्सोमदत्तस्तु ततोऽभूज्जनमेजयः ॥ तत्पुत्रश्च सुमन्तिश्च एते वैशालका नृपाः ॥ १४ ॥ शर्य्यातेस्तु सुकन्याऽभूत्सा भार्य्या च्यवनस्य तु ॥ अनन्तो नाम शार्यतेरनन्ताद्रेवतोऽभवत् ॥ १५ ॥ रैवतो रेवतस्यापि रैवताद्रेवती सुता ॥ धृष्टस्य धार्ष्ट ( र्त ) कं क्षेत्रं वैष्णवं ( श्यकं ) तद्बभूव ह ॥ १६ ॥ नाभागपुत्रो नेष्टो ह्यम्बरीषोऽपि तत्सुतः ॥ अम्बरीषाद्विरूपोऽभूत्पृषदश्वो विरूपतः ॥ १७ ॥ रथीनरश्च तत्पुत्रो वासुदेवपरायणः ॥ इक्ष्वाकोस्तु त्रयः पुत्राः विकुक्षिनिमिदण्डकाः ॥ १८ ॥ इक्ष्वाकुजो विकुक्षिस्तु शशादः शशभक्षणात् ॥ पुरञ्जयः शशादाच्च ककुत्स्थाख्योऽभवत्सुतः ॥ १९ ॥ अनेनास्तु ककुत्स्थाच्च पृथुः पुत्रस्त्वनेनसः ॥ विश्वरातः पृथोः पुत्र आर्द्रोऽभूद्विश्वराततः ॥२०॥ युवनाश्वोऽभवच्चार्द्राच्छावस्तो युवनाश्वतः ॥ बृहदश्वस्तु शावस्तात्तत्पुत्रः कुवलाश्वकः ॥ २१ ॥ धुन्धुमारो हि विख्यातो दृढाश्वश्चततोऽभवत् ॥ चन्द्राश्वः कपिलाश्वश्च हर्य्यश्वश्च दृढाश्वतः ॥ २२ ॥ हर्य्यश्वाच्च निकुम्भोऽभूद्धिताश्वश्च निकुम्भतः ॥ पूजाश्वश्च हिताश्वाच्च तस्मतो युवनाश्वकः ॥ २३ ॥ युवनाश्वाच्च मान्धाता बिन्दुमत्यास्ततोऽभवत् ॥ मुचुकुन्दोऽम्बरीषश्च पुरुकुत्सस्त्रयः सुताः ॥ २४ ॥ पञ्चाशत्कन्यकाश्चैव भार्य्यास्ताः सौभरेर्मुनेः ॥ युवनाश्वोऽम्बरीषाच्च हरितो युवनाश्वतः ॥२५॥ पुरुकुत्सान्नर्मदायां त्रसदस्युरभूत्सुतः ॥ अनरण्यस्ततो जातो हर्य्यश्वोऽप्यनरण्यतः ॥ २६ ॥ तत्पुत्रोऽभूद्वसुमनास्त्रिधन्वा तस्य चात्मजः ॥ त्रय्यारुण

---

१ गौरवान्तु० । २ तस्माद्भनन्दरः पुत्रो वत्सप्राप्तिर्भनन्दरा ( ना ) त्० । ३ भूद्विश्वकश्चत० । ४ मनोभूत्सु० ।

स्तस्य पुत्रस्तस्य सत्यरतः सुतः ॥ २७ ॥ यस्त्रिशङ्कुः समाख्यातो हरिश्चन्द्रोऽभवत्ततः ॥ हरिश्चन्द्राद्रोहिताश्वो हरितो रोहिताश्वतः ॥ २८ ॥ हरि
तस्य सुतश्चञ्चुश्चञ्चोश्च विजयः सुतः ॥ विजयाद्रुरुको जज्ञे रुरुकात्तु वृकः सुतः ॥ २९ ॥ वृकाद्बाहुर्नृपोऽभूच्च बाहोस्तु सगरः स्मृतः ॥ षष्टिः पुत्र
सहस्राणि सुमत्यां सगराद्धर ॥ ३० ॥ केशिन्यामेक एवासावसमञ्जससंज्ञकः ॥ ३१ ॥ तस्यांशुमान्सुतो विद्वान्दिलीपस्तत्सुतोऽभवत् ॥ भगीरथो
दिलीपाच्च यो गङ्गामानयद्भुवम् ॥ ३२ ॥ श्रुतो भगीरथसुतो नाभागश्च श्रुतात्किल ॥ नाभागादम्बरीषोऽभूत्सिन्धुद्वीपोऽम्बरीषतः ॥ ३३ ॥
सिन्धुद्वीपस्यायुतायुर्ऋतुपर्णस्तदात्मजः ॥ ऋतुपर्णात्सर्वकामः सुदासोऽभूत्तदात्मजः ॥३४॥ सुदासस्य च सौदासो नाम्ना मित्रसहः स्मृतः ॥ कल्माष
पादसंज्ञश्च दमयन्त्यां तदात्मजः ॥३५॥ अश्वकाख्योऽभवत्पुत्रो ह्यश्वकान्मूल ( न्मृच्छ ) कोऽभवत् ॥ ततो दशरथो राजा तस्य चैलविलः सुतः ॥३६॥
तस्य विश्वसहः पुत्रः खट्वाङ्गश्च तदात्मजः ॥ खट्वाङ्गाद्दीर्घबाहुश्च दीर्घबाहोर्ह्यजः सुतः ॥ ३७॥ तस्य पुत्रो दशरथश्चत्वारस्तत्सुताः स्मृताः ॥ रामल
क्ष्मणशत्रुघ्नभरताश्च महाबलाः ॥३८॥ रामात्कुशलवौ जातौ भरतात्तार्क्षपुष्करौ ॥ चित्राङ्गदश्चन्द्रकेतुर्लक्ष्मणात्संबभूवतुः ॥३९॥ सुबाहुशूरसेनौ च
शत्रुघ्नात्संबभूवतुः ॥ कुशस्य चातिथिः पुत्रो निषधो ह्यतिथेः सुतः ॥ ४० ॥ निषधस्य नलः पुत्रो नलस्य च नभाः स्मृतः ॥ नभसः पुण्डरीकस्तु
क्षेमधन्वा तदात्मजः ॥ ४१ ॥ देवानीकस्तस्य पुत्रो देवानीकादहीनकः ॥ अहीनकाद्रुरुर्यज्ञे पारियात्रो रुरोः सुतः ॥ ४२ ॥ पारियात्राद्दलो जज्ञे दल
पुत्रश्छलः स्मृतः ॥ छलादुक्थस्ततो ह्युक्थाद्वज्रनाभस्ततो गणः ॥ ४३ ॥ उषिताश्वो गणाज्जज्ञे ततो विश्वसहोऽभवत् ॥ हिरण्यनाभस्तत्पुत्रस्तत्पुत्रः
पुष्पकः स्मृतः ॥ ४४ ॥ ध्रुवसन्धिरभूत्पुष्पाद्ध्रुवसन्धेः सुदर्शनः ॥ सुदर्शनादग्निवर्णः पद्मवर्णोऽग्निवर्णतः ॥ ४५ ॥ शीघ्रस्तु पद्मवर्णात्तु शीघ्रात्पुत्रो
मरुस्त्वभूत् ॥ मरोः प्रसुश्रुतः पुत्रस्तस्य चोदावसुः सुतः ॥ ४६ ॥ उदावसोर्नन्दिवर्द्धनः सुकेतुर्नन्दिवर्द्धनात् ॥ सुकेतोर्देवरातोऽभूद्बृहदुक्थस्ततः सु
तः ॥ ४७ ॥ बृहदुक्थान्महावीर्य्यः सुधृतिस्तस्य चात्मजः ॥ सुधृतेर्धृष्टकेतुश्च हर्य्यश्वो धृष्टकेतुतः ॥ ४८ ॥ हर्य्यश्वात्तु मरुर्जातो मरोः प्रतीन्धको
ऽभवत् ॥ प्रतीन्धकात्कृतिरथो देवमीढस्तदात्मजः॥४९॥ विबुधो देवमीढात्तु विबुधात्तु महाधृतिः ॥ महाधृतेः कीर्त्तिरातो महारोमा तदात्मजः ॥५०॥
महारोम्णः स्वर्णरोमा ह्रस्वरोमा तदात्मजः ॥ सीरध्वजो ह्रस्वरोम्णः तस्य सीताभवत्सुता ॥ ५१ ॥ भ्राता कुशध्वजस्तस्य सीरध्वजात्तु भानुमान् ॥
शतद्युम्नो भानुमतः शतद्युम्नाच्छुचिः स्मृतः ॥ ५२ ॥ ऊर्जनामा शुचेः पुत्रः सनद्वाजस्तदात्मजः ॥ सनद्वाजात्कुलिर्जातोऽनञ्जनस्तु कुलेः सुतः॥५३॥
अनञ्जनाच्च कुलजित्तस्यापि चाधिनेमिकः ॥ श्रुतायुस्तस्य पुत्रोऽभूत्सुपार्श्वश्च तदात्मजः॥५४॥सुपार्श्वात्सृंजयो जातः क्षेमारिः सृंजयात्स्मृतः ॥ क्षेमारि

तस्त्वनेनाश्च तस्य रामरथः स्मृतः ॥५५॥ सत्यरथो रामरथात्तस्मादुपगुरुः स्मृतः ॥ उपगुरोरुपगुप्तः स्वागतश्चोपगुप्ततः ॥ ५६ ॥ स्वनरः स्वागता ज्जज्ञे सुवर्चास्तस्य चात्मजः ॥ सुवर्चसः सुपार्श्वस्तु सुश्रुतश्च सुपार्श्वतः ॥५७॥ जयस्तु सुश्रुताज्जज्ञे जयात्तु विजयोऽभवत् ॥ विजयस्य ऋतः पुत्रः ऋतस्य सुनयः सुतः ॥ ५८ ॥ सुनयाद्वीतहव्यस्तु वीतहव्याद्धृतिः स्मृतः ॥ बहुलाश्वो धृतेः पुत्रो बहुलाश्वात्कृतिः स्मृतः ॥५९॥जनकस्य द्वये वंशे उक्तो योगसमाश्रयः॥६०॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सूर्य्यवंशवर्णनं नामाष्टत्रिंशदुत्तरशततमोऽध्यायः॥१३८॥ हरिरुवाच ॥ सूर्य्यस्य कथितो वंशः सोमवंशं शृणुष्व मे ॥ नारायणसुतो ब्रह्मा ब्रह्मणोऽत्रेः समुद्भवः ॥ १ ॥ अत्रेः सोमस्तस्य भार्य्या तारा सुरगुरोः प्रिया ॥ सोमात्तारा बुधं जज्ञे बुधपुत्रः पुरूरवाः ॥ २ ॥ बुधपुत्रादथोर्वश्यां षट् पुत्रास्तु श्रुतात्मकः ॥ विश्वावसुः शतायुश्च आयुर्धीमानमावसुः ॥३॥ अमावसोर्भीमनामा भीमपुत्रश्च काञ्चनः ॥ काञ्चनस्य सुहोत्रोऽभूज्जह्नुश्चाभूत्सुहोत्रतः ॥ ४ ॥ ॥ जह्नोः सुमन्तुरभवत्सुमन्तोरपजापकः ॥ बलाकाश्व स्तस्य पुत्रो बलाकाश्वात् कुशः स्मृतः ॥ ५ ॥ कुशाश्वः कुशनाभश्चामूर्त्तरयो वसुः कुशात् ॥ गाधिः कुशाश्वात्संजज्ञे विश्वामित्रस्तदात्मजः ॥ ६ ॥ कन्या सत्यवती दत्ता ऋचीकाय द्विजाय सा ॥ ऋचीकाज्जमदग्निश्च रामस्तस्याभवत्सुतः ॥ ७ ॥ विश्वामित्राद्देवरातमधुच्छन्दादयः सुताः ॥ आयु षो नहुषस्तस्मादनेना रजिरम्भकौ ॥ ८ ॥ क्षत्रवृद्धः क्षत्रवृद्धात्सुहोत्रश्चाभवन्नृपः ॥ काश्यकाशौगृत्समदः सुहोत्रादभवंस्त्रयः ॥ ९ ॥ गृत्समदाच्छौन कोऽभूत्काश्याद्दीर्घतमास्तथा ॥ वैद्यो धन्वन्तरिस्तस्मात्केतुमांश्च तदात्मजः ॥ १० ॥ भीमरथः केतुमतो दिवोदासस्तदात्मजः ॥ दिवोदासात्प्रतर्दनः शत्रुजित्सोऽत्र विश्रुतः ॥११॥ ऋतध्वजस्तस्य पुत्रो ह्यलर्कश्च ऋतध्वजात् ॥ अलर्कात्सन्नतिर्जज्ञे सुनीतः सन्नतेः सुतः ॥१२॥ सत्यकेतुः सुनीतस्य सत्यकेतोर्विभुः सुतः ॥ विभोस्तु सुविभुः पुत्रः सुविभोः सुकुमारकः ॥१३॥ सुकुमाराद्धृष्टकेतुर्वीतिहोत्रस्तदात्मजः ॥ वीतिहोत्रस्य भर्गोऽभूद्भर्गभूमिस्त दात्मजः ॥ १४ ॥ वैष्णवाः स्युर्महात्मान इत्येते काशयो नृपाः ॥ पञ्चपुत्रशतान्यासन्रजेः शक्रेण संहृताः ॥ १५ ॥ प्रतिक्षत्रः क्षत्रवृद्धात्संजयश्च त दात्मजः ॥ विजयः संजयस्यापि विजयस्य कृतः सुतः ॥ १६ ॥ कृताद्वृषधनश्चाभूत्सहदेवस्तदात्मजः ॥ सहदेवाददीनोऽभूज्जयत्सेनोऽप्यदी नतः ॥ १७ ॥ जयत्सेनात्संकृतिश्च क्षत्रधर्मा च संकृतेः ॥ यतिर्ययातिः संयातिरयातिर्विकृतिः क्रमात् ॥ १८ ॥ नहुषस्य सुताः ख्याता ययातेर्नृपते स्तथा ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ १९ ॥ द्रुह्युं चानुं च पूरुंच शर्मिष्ठा वार्षपार्वणी ॥ सहस्राजित्क्रोष्टुमना रघुश्चैव यदोः सुताः ॥२०॥

---

१ श्रुतायुक इति वा पा० ।

सहस्राजितः शताजित्तस्माद्वै हयहैहयौ॥अनरण्यो हयात्पुत्रो धर्मो हैहयतोऽभवत्॥२१॥धर्मस्य धर्मनेत्रोऽभूत्कुन्तिर्वै धर्मनेत्रतः ॥ कुन्तेर्बभूव साहंजिर्महि
ष्मांश्च तदात्मजः॥२२॥भद्रश्रेण्यस्तस्य पुत्रो भद्रश्रेण्यस्य दुर्दमः॥धनको दुर्दमाच्चैव कृतवीर्य्यश्च जानकिः॥२३॥कृताग्निः कृतकर्मा च कृतौजाः सुमहा
बलः ॥ कृतवीर्य्यादर्जुनोऽभूदर्जुनाच्छूरसेनकः ॥ २४ ॥ जयध्वजो मधुः शूरो वृषणः पंच सव्रताः ॥ जयध्वजात्तालजङ्घो भरतस्तालजङ्घतः ॥ २५ ॥
वृषणस्य मधुः पुत्रो मधोर्वृष्ण्यादिवंशकः ॥ क्रोष्टोर्विजज्ञिवान्पुत्र आहिस्तस्य महात्मनः ॥२६॥ आहेरुशंकुः संजज्ञे तस्य चित्ररथः सतः ॥ शशबि
न्दुश्चित्ररथात्पत्न्यो लक्षश्च तस्य ह॥२७॥दशलक्षश्च पुत्राणां पृथुकीर्त्त्यादयो वराः॥पृथुकीर्तिः पृथुजयः पृथुदानः पृथुश्रवाः ॥२८॥ पृथुश्रवसोऽभूत्तम
उशनास्तमसोऽभवत् ॥ तत्पुत्रः शितगुर्नाम श्रीरुक्मकवचस्ततः ॥ २९ ॥ रुक्मश्च पृथुरुक्मश्च ज्यामघः पालितो हरिः ॥ श्रीरुक्मकवचस्यैते
विदर्भौ ज्यामघात्तथा ॥ ३० ॥ भार्य्यायाश्चैव शैब्यायां विदर्भात्क्रथकौशिकौ ॥ रोमपादो रोमपादाद्बभ्रुर्बभ्रोर्धृतिस्तथा ॥ ३१ ॥ कौशिकस्य ऋचिः
पुत्रः ततश्चैद्यो नृपः किल ॥ कुन्तिः किलास्य पुत्रोऽभूत्कुन्तेर्वृष्णिः सुतः स्मृतः ॥ ३२ ॥ वृष्णेश्च निवृतिः पुत्रो दशार्हो निवृतेस्तथा ॥ दशार्हस्य
सुतो व्योमा जीमूतश्च तदात्मजः ॥ ३३ ॥ जीमूताद्विकृतिर्जज्ञे ततो भीमरथोऽभवत् ॥ ततो मधुरथो जज्ञे शकुनिस्तस्य चात्मजः॥ ३४ ॥ करम्भिः
शकुनेः पुत्रस्तस्य वै देववान्स्मृतः ॥ देवक्षत्रो देवनतो देवक्षत्रान्मधुः स्मृतः ॥३५॥ कुरुवंशो मधोः पुत्रो ह्यनुश्च कुरुवंशतः ॥ पुरुहोत्रो ह्यनोः पुत्रो
ह्यंशुश्च पुरुहोत्रतः ॥ ३६ ॥ सत्त्वश्रुतः सुतश्चांशोस्ततो वै सात्त्वतो नृपः ॥ भजिनो भजमानश्च सात्वतादन्धकः सुतः ॥ ३७ ॥ महाभोजो वृष्णि
र्दिव्यावन्यो देवावृधोऽभवत् ॥ निमिवृष्णी भजमानादयुताजित्तथैव च ॥ ३८ ॥ शतजिच्च सहस्राजिद्बभ्रुर्देवो बृहस्पतिः ॥ महाभोजात्तु भोजोऽभूत्तद्वृ
ष्णेश्च सुमित्रकः ॥ ३९ ॥ स्वधाजित्संज्ञकस्तस्मादनमित्राशिनी तथा ॥ अनमित्रस्य निघ्नोऽभून्निघ्नाच्छत्राजितोऽभवत् ॥ ४० ॥ प्रसेनश्चापरः
ख्यातो ह्यनमित्राच्छिबिस्तथा ॥ शिबेस्तु सत्यकः पुत्रः सत्यकात्सात्यकिस्तथा ॥ ४१ ॥ सात्यकेः सञ्जयः पुत्रः कुलिश्चैव तदात्मजः ॥ कुले
र्युगन्धरः पुत्रस्ते शैबेयाः प्रकीर्त्तिताः ॥ ४२ ॥ अनमित्रान्वये वृष्णिः श्वफल्कश्चित्रकः सुतः ॥ श्वफल्काच्चैव गान्दिन्यामक्रूरो वैष्णवोऽभवत् ॥४३॥
उपमद्गुरथाक्रूराद्देवद्योतस्ततः सुतः ॥ देववानुपदेवश्च ह्यक्रूरस्य सुतौ स्मृतौ ॥ ४४ ॥ पृथुर्विपृथुश्चित्रस्य त्वन्धकस्य शुचिः स्मृतः ॥ कुकुरो भज
मानस्य तथा कम्बलबर्हिषः ॥ ४५ ॥ धृष्टस्तु कुकुराज्जज्ञे तस्मात्कापोतरोमकः ॥ तदात्मजो विलोमा च विलोम्नस्तुम्बुरुः सुतः ॥ ४६ ॥ तस्माच्च
दुन्दुभिर्जज्ञे पुनर्वसुरतः स्मृतः ॥ तस्याहुकश्चाहुकी च कन्या चैवाहुकस्य तु ॥ ४७ ॥ देवकश्चोग्रसेनश्च देवकाद्देवकी त्वभूत् ॥ वृकदेवोपदेवा

च सहदेवा सुरक्षिता ॥४८॥ श्रीदेवी शान्तिदेवी च वसुदेव उवाह ताः ॥ देववानुपदेवश्च सहदेवासुतौ स्मृतौ ॥ ४९ ॥ उग्रसेनस्य कंसोऽभूत्सुनामा च
वटादयः ॥ विदूरथो भजमानाच्छूरश्चाभूद्विदूरथात् ॥ ५० ॥ विदूरथसुतस्याथ शूरस्यापि शमी सुतः ॥ प्रतिक्षत्त्रश्च शमिनः स्वयम्भोजस्तदा
त्मजः ॥ ५१ ॥ हृदिकश्च स्वयम्भोजात्कृतवर्मा तदात्मजः ॥ देवः शतधनुश्चैव शूराद्वै देवमीढुषः ॥ ५२ ॥ दश पुत्रा मारिषायां वसुदेवादयोऽभवन् ॥
पृथा च श्रुतदेवी च श्रुतकीर्त्तिः श्रुतश्रवाः॥५३॥ राजाधिदेवो शूराच्च पृथां कुन्तेः सुतामदात्॥सा दत्ता कुन्तिना पाण्डोस्तस्यां धर्मानिलेन्द्रकैः॥५४॥
युधिष्ठिरो भीमपार्थौ नकुलः सहदेवकः ॥ माद्र्यां नासत्यदस्राभ्यां कुन्त्यां कर्णः पुराऽभवत् ॥ ५५ ॥ श्रुतदेव्यां दन्तवक्रो जज्ञे वै युद्धदुर्मदः ॥
सन्तर्द्दनादयः पञ्च श्रुतकीर्त्यांश्च कैकयात् ॥ ५६ ॥ राजाधिदेव्यां जज्ञाते विन्दश्चैवानुविन्दकः ॥ श्रुतश्रवा दमघोषात्प्रजज्ञे शिशुपालकम् ॥५७॥
पौरवी रोहिणी भार्य्या मदिरानकदुन्दुभेः ॥ देवकीप्रमुखा भद्रा रोहिण्यां बलभद्रकः॥५८॥सारणाद्याः शठश्चैव रेवत्यां बलभद्रतः॥निशठश्चोल्मुको
जातो देवक्यां षट् च जज्ञिरे ॥ ५९ ॥ कीर्त्तिमांश्च सुषेणश्च ह्युदार्य्यो भद्रसेनकः ॥ ऋजुदासो भद्रदेवः कंस एवावधीच्च तान् ॥ ६० ॥ संकर्षणः
सप्तमोऽभूदष्टमः कृष्ण एव च ॥ षोडशस्त्रीसहस्राणि भार्य्याणाञ्चाभवन्हरेः ॥ ६१ ॥ रुक्मिणी सत्यभामा च लक्ष्मणा चारुहासिनी ॥ श्रेष्ठा जाम्ब
वती चाष्टौ जज्ञिरे ताः सुतान्बहून् ॥ ६२ ॥ प्रद्युम्नश्चारुदेष्णश्च प्रधानाः साम्ब एव च ॥ प्रद्युम्नादनिरुद्धोऽभूत्ककुद्मिन्यां महाबलः ॥ ६३ ॥
अनिरुद्धात्सुभद्रायां वज्रो नाम नृपोऽभवत् ॥ प्रतिबाहुर्वज्रसुतश्चारुस्तस्य सुतोऽभवत् ॥ ६४ ॥ वह्निस्तु तुर्वसोर्वंशे वह्नेर्भर्गोऽभवत्सुतः ॥ भर्गा
द्भानुरभूत्पुत्रो भानोः पुत्रः करन्धमः ॥ ६५ ॥ करन्धमस्य मरुतो द्रुह्योर्वंशं निबोध मे ॥ द्रुह्योस्तु तनयः सेतुरारद्धश्च तदात्मजः ॥ ६६ ॥ आर
द्धस्यैव गान्धारो धर्मो गान्धारतोऽभवत् ॥ घृतस्तु धर्मपुत्रोऽभूद्दुर्गमश्च घृतस्य तु ॥ ६७ ॥ प्रचेता दुर्गमस्यैव अनोर्वंशं शृणुष्व मे ॥ अनोः सभा
नरः पुत्रस्तस्मा कालञ्जयोऽभवत् ॥ ६८ ॥ कालञ्जयात्सृञ्जयोऽभूत्सृञ्जयात्तु पुरञ्जयः ॥ जनमेजयस्तु तत्पुत्रो महाशालस्तदात्मजः ॥ ६९ ॥
महामना महाशालादुशीनर इह स्मृतः ॥ उशीनराच्छिबिर्जज्ञे वृषदर्भः शिबेः सुतः ॥ ७० ॥ महामनोजात्तितिक्षोः पुत्रोऽभूच्च रुषद्रथः ॥ हेमो रुषद्र
थाज्जज्ञे सुतपा हेमतोऽभवत् ॥ ७१ ॥ बलिः सुतपसो जज्ञे ह्यङ्गवङ्गकलिङ्गकाः ॥ अन्धः पौंड्रश्च बालेया ह्यनपानस्तथाङ्गतः ॥ ७२ ॥ अनपाना
द्दिविरथस्ततो धर्मरथोऽभवत् ॥ रोमपादो धर्मरथाच्चतुरंगस्तदात्मजः ॥ ७३ ॥ पृथुलाक्षस्तस्य पुत्रश्चम्पोऽभूत्पृथुलाक्षतः ॥ चम्पपुत्रश्च हर्य्यंग
स्तस्य भद्ररथः सुतः ॥ ७४ ॥ बृहत्कर्मा सुतस्तस्य बृहद्भानुस्ततोऽभवत् ॥ बृहन्मना बृहद्भानोस्तस्य पुत्रो जयद्रथः ॥ ७५ ॥ जयद्रथस्य विजयो

विजयस्य धृतिः सुतः ॥ धृतेर्धृतव्रतः पुत्रः सत्यधर्मा धृतव्रतात् ॥ ७६ ॥ तस्य पुत्रस्त्वधिरथः कर्णस्तस्य सुतोऽभवत् ॥ ७७ ॥ वृषसेनस्तु कर्णस्य पुरुवंश्यान्छृणुष्व मे॥७८॥इतिश्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे चन्द्रवंशवर्णनं नामैकोनचत्वारिंशदुत्तरशततमोऽध्यायः॥१३९॥

हरिरुवाच ॥ जनमेजयः पुरोश्चाभून्नमस्युर्जनमेजयात् ॥ तस्य पुत्रश्चाभयदः सुद्युश्चाभयदादभूत् ॥ १ ॥ सुद्योर्बहुगतिः पुत्रः संजातिस्तस्य चात्मजः ॥ वत्सजातिश्च सञ्जातेः रौद्राश्वश्च तदात्मजः ॥२॥ ऋतेयुः स्थण्डिलेयुश्च कक्षेयुश्च कृतेयुकः ॥ जलेयुः सन्ततेयुश्च रौद्राश्वस्य सुता वराः ॥ ३ ॥ रतिनार ऋतेयोश्च तस्य प्रतिरथः सुतः ॥ तस्य मेधातिथिः पुत्रस्तत्पुत्रश्चैनिलः स्मृतः ॥ ४ ॥ ऐनिलस्य तु दुष्यन्तो भरतस्तस्य चात्मजः॥शकुन्तलायां संजज्ञे वितथो भरतादभूत् ॥ ५ ॥ वितथस्य सुतो मन्युर्मन्योश्चैव नरः स्मृतः ॥ नरस्य संकृतिः पुत्रो गर्गो वै संकृतेः सुतः ॥ ६ ॥ गर्गादमन्युः पुत्रो वै शिनिः पुत्रो व्यजायत ॥ मन्युपुत्रान्महावीर्य्यात्सुतोऽभवदुरुक्षयः ॥ ७ ॥ उरुक्षयात्त्रय्यारुणिर्व्यूहक्षत्राच्च मन्युजात् ॥ सुहोत्रस्तस्य हस्ती च अजमीढद्विमीढकौ ॥ ८ ॥ हस्तिनः पुरुमीढश्च कण्वोऽभूदजमीढतः ॥ कण्वान्मेधातिथिर्जज्ञे यतः काण्वायना द्विजाः ॥९॥ अजमीढाद्बृहदिषुस्तत्पुत्रश्च बृहद्धनुः ॥ बृहत्कर्मा तस्य पुत्रस्तस्य पुत्रो जयद्रथः ॥ १० ॥ जयद्रथाद्विश्वजिच्च सेनजिच्च तदात्मजः ॥ रुचिराश्वः सेनजितः पृथुसेनस्तदात्मजः ॥ ११ ॥ पारस्तु पृथुसेनस्य पाराद्वीपोऽभवन्नृपः ॥ नृपस्य सृमरः पुत्रः सुकृतिश्च पृथोः सुतः ॥ १२ ॥ विभ्राजः सुकृतेः पुत्रो विभ्राजादश्वहोऽभवत् ॥ कृत्यां तस्माद्ब्रह्मदत्तो विष्वक्सेनस्तदात्मजः ॥ १३ ॥ यवीनरो द्विमीढस्य धृतिमांश्च यवीनरात् ॥ धृतिमतः सत्यधृतिर्दृढनेमिस्तदात्मजः ॥ १४ ॥ दृढनेमेः सुपार्श्वोऽभूत् सुपार्श्वात्सन्नतिस्तथा ॥ कृतस्तु सन्नतेः पुत्रः कृतादुग्रायुधोऽभवत् ॥ १५॥ उग्रायुधाच्च क्षेम्यौऽभूत्सुधीरस्तु तदात्मजः ॥ पुरञ्जयः सुधीराच्च तस्य पुत्रो विदूरथः ॥ १६ ॥ अजमीढान्नलिन्याश्च नीलो नाम नृपोऽभवत् ॥ नीलाच्छान्तिरभूत्पुत्रः सुशान्तिस्तस्य चात्मजः ॥ १७ ॥ सुशान्तेश्च पुरुर्जातो ह्यर्कस्तस्य सुतोऽभवत् ॥ अर्कस्य चैव हर्य्यश्वो हर्य्यश्वान्मुकुलोऽभवत् ॥ १८ ॥ यवीनरो बृहद्भानुः काम्पिल्लः सृञ्जयस्तथा ॥ पांचालान्मुकुलाज्जज्ञे शरद्वान्वैष्णवो महान् ॥ १९ ॥ दिवोदासो द्वितीयोऽस्य ह्यहल्यायां शरद्वतः ॥ शतानन्दोऽभवत्पुत्रस्तस्य सत्यधृतिः सतः ॥ २० ॥ कृपः कृपी सत्यधृतेरुर्वश्यां वीर्य्यहानितः ॥ द्रोणपत्नी कृपी जज्ञे अश्वत्थामानमुत्तमम् ॥ २१ ॥ दिवोदासान्मित्रयुश्च मित्रयोश्च्यवनोऽभवत् ॥ सुदासश्च्यवनाज्जज्ञे सौदासस्तस्य चात्मजः ॥ २२ ॥ सहदेवस्तस्य पुत्रः सहदेवात्तु सोमकः ॥ जन्तुस्तु सोमकाज्जज्ञे पृषतश्चापरो महान् ॥ २३ ॥ पृषताद्द्रुपदो जज्ञे धृष्टद्युम्नस्ततोऽभवत् ॥ धृष्टद्युम्नाद्धृष्टकेतुर्ऋक्षोऽभूदजमी

ढतः ॥ २४ ॥ ऋक्षात्संवरणो जज्ञे कुरुः संवरणादभूत् ॥ सुधनुश्च परीक्षिच्च जह्नुश्चैव कुरोः सुताः ॥ २८ ॥ सुधनुषः सुहोत्रोऽभूच्च्यवनोऽभूत्सुहोत्रतः ॥ च्यवनात्कृतको जज्ञे तथोपरिचरो वसुः ॥ २६ ॥ बृहद्रथश्च प्रत्यग्रः सत्याद्याश्च वसोः सुताः ॥ बृहद्रथात्कुशाग्रश्च कुशाग्रादृषभोऽभवत् ॥ २७ ॥ ऋषभात्पुष्पवांस्तस्माज्जज्ञे सत्यहितो नृपः ॥ सत्यहितात्सुधन्वाभूज्जह्नुश्च सुधन्वनः ॥ २८ ॥ बृहद्रथाज्जरासन्धः सहदेवस्तदात्मजः ॥ सहदेवाच्च च सोमापिः सोमापेः श्रुतवान्सुतः ॥ २९ ॥ भीमसेनोग्रसेनौ च श्रुतसेनोऽपराजितः ॥ जनमेजयस्तथान्योऽभूज्जह्नोस्तु सुरथोऽभवत् ॥ ३० ॥ विदूरथस्तु सुरथात्सार्वभौमो विदूरथात् ॥ जयसेनः सार्वभौमादावधीतस्तदात्मजः ॥ ३१ ॥ अयुतायुस्तस्य पुत्रस्तस्य चाक्रोधनः सुतः ॥ अक्रोधनस्यातिथिश्च ऋक्षोऽभूदतिथेः सुतः ॥ ३२ ॥ ऋक्षाच्च भीमसेनोऽभूद्दिलीपो भीमसेनतः ॥ प्रतीपोऽभूद्दिलीपाच्च देवापिस्तु प्रतीपतः ॥ ३३ ॥ शन्तनुश्चैव बाह्लीकस्त्रयस्ते भ्रातरो नृपाः ॥ बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः ॥ ३४ ॥ शलश्च शन्तनोर्भीष्मो गंगायां धार्मिको महान् ॥ चित्रांगदविचित्रौ तु सत्यवत्यान्तु शन्तनोः ॥ ३५ ॥ भार्य्ये विचित्रवीर्य्यस्य त्वम्बिकाम्बालिके तयोः ॥ धृतराष्ट्रं च पाण्डुञ्च तद्दास्यां विदुरन्तथा ॥ ३६ ॥ व्यास उत्पादयामास गान्धारी धृतराष्ट्रतः ॥ शतपुत्रं दुर्योधनाद्यं पाण्डोः पंच प्रजज्ञिरे ॥ ३७ ॥ प्रतिविन्ध्यः श्रुतसोमः श्रुतकीर्त्तिस्तथार्जुनात् ॥ शतानीकः श्रुतकर्मा द्रौपद्यां पंच वै क्रमात् ॥ ३८ ॥ यौधेयी च हिडिम्बा च कौशी चैव सुभद्रिका ॥ विजया वै रेणुमती पंचभ्यस्तु सुताः क्रमात ॥ ३९ ॥ देवको घटोत्कचश्च ह्यभिमन्युश्च सर्वगः ॥ सुहोत्रो निरमित्रश्च परीक्षिदभिमन्युजः ॥ ४० ॥ जनमेजयोऽस्य ततो भविष्यांश्च नृपाञ्छृणु॥४१॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे चन्द्रवंशवर्णनं नाम चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४० ॥ हरिरुवाच ॥ शतानीको ह्यश्वमेधदत्तश्चाप्यधिसोमकः ॥ कृष्णोऽनिरुद्धश्चाप्युष्णस्ततश्चित्ररथो नृपः ॥ १ ॥ शुचिद्रथो वृष्णिमांश्च सुषेणश्च सुनीथकः ॥ नृचक्षुश्च सुखावाणः मेधावी च नृपञ्जयः ॥ २ ॥ पारिप्लवश्च सुनयो मेधावी च नृपंजयः ॥ बृहद्रथो हरिस्तिग्मो शतानीकः सुदानकः ॥ ३ ॥ उदानोऽह्निनरश्चैव दण्डपाणिर्निमित्तकः ॥ क्षेमकश्च ततः शूद्रः पिता पूर्वस्ततः सुतः ॥ ४ ॥ बृहद्बलास्तु कथ्यन्ते नृपाश्चेक्ष्वाकुवंशजाः ॥ बृहद्बलादुरुक्षयो वत्सव्यूहस्ततः परः ॥ ५ ॥ वत्सव्यूहात्ततः सूर्यः सहदेवस्तदात्मजः ॥ बृहदश्वो भानुरथः प्रतीच्यश्च प्रतीतकः ॥ मनुदेवः सुनक्षत्रः किन्नरश्चान्तरिक्षकः ॥ ६ ॥ सुपर्णः कृतजिच्चैव बृहद्भ्राजश्च धार्मिकः ॥ कृतंजयो धनंजयः संजयः शाक्य एव च ॥ ७ ॥ शुद्धोदनो बाहुलश्च सेनजित्क्षुद्रकस्तथा ॥ सुमित्रः कुडवश्चातः सुमित्रान्मागधाञ्छृणु ॥ ८ ॥ जरासन्धः सहदेवः सोमापिश्च श्रुतश्रवाः ॥

अयुतायुर्निरमित्रः सुक्षत्रो बहुकर्मकः ॥ ९ ॥ श्रुतंजयः सेनजिच्च भूरिश्चैव शुचिस्तथा ॥ क्षेम्यश्च सुव्रतो धर्मः श्मश्रुलो दृढसेनकः ॥ १० ॥ सुम
तिः सुबलो नीतो सत्यजिद्विश्वजित्तथा ॥ इषुञ्जयश्च इत्येते नृपा बार्हद्रथाः स्मृताः ॥ ११ ॥ अधर्मिष्ठाश्च शूद्राश्च भविष्यन्ति नृपास्ततः ॥ स्व
र्गादिकृद्धि भगवान्साक्षान्नारायणोऽव्ययः ॥१२॥ नैमित्तिकः प्राकृतिकस्तथैवात्यन्तिको लयः ॥ याति भूः प्रलयं चाप्सु ह्यापस्तेजसि पावकः ॥१३॥
वायौ वायुश्च वियति त्वाकाशो यात्यहंकृतौ ॥ अहं बुद्धौ मतिर्जीवे जीवोऽव्यक्ते तदात्मनि ॥ १४ ॥ आत्मा परेश्वरो विष्णुरेको नारायणो नरः ॥
अविनाश्यपरं सर्वं जगत्स्वर्गादि नाशि हि ॥ १५ ॥ नृपादयो गता नाशमतः पापं विवर्जयेत् ॥ धर्मं कुर्यात्स्थिरं येन पापं हित्वा हरिं व्रजेत्॥१६॥
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भविष्य राजवंश० नामैकचत्वारिंशदुत्तरशततमोऽध्यायः॥१४१॥ ब्रह्मोवाच ॥ वंशादी
न्पालयामास ह्यवतीर्णो हरिः प्रभुः ॥ दैत्यधर्मस्य नाशार्थं वेदधर्मादिगुप्तये ॥ १ ॥ मत्स्यादिकस्वरूपेण त्ववतारं करोत्यजः ॥ मत्स्यो भूत्वा हय
ग्रीवं दैत्यं हत्वाजिकण्टकम् ॥ २ ॥ वेदानानीय मन्वादीन्पालयामास केशवः ॥ मन्दरं धारयामास कूर्मो भूत्वा हिताय च ॥ ३ ॥ क्षीरोदमथने वै
द्यो देवो धन्वन्तरिर्ह्यभूत् ॥ बिभ्रत्कमण्डलुं पूर्णममृतेन समुत्थितः ॥ ४ ॥ आयुर्वेदमथाष्टाङ्गं सुश्रुताय स उक्तवान् ॥ अमृतं पाययामास स्त्रीरूपी च
सुरान्हरिः ॥ ५ ॥ अवतीर्णो वराहोऽथ हिरण्याक्षं जघान ह ॥ पृथिवीं धारयामास पालयामास देवताः ॥ ६ ॥ नरसिंहोऽवतीर्णोऽथ हिरण्यकशिपुं
रिपुम् ॥ दैत्यान्निहतवान्वेदधर्मादीनभ्यपालयत् ॥ ७ ॥ ततः परशुरामोऽभूज्जमदग्नेर्जगत्प्रभुः ॥ त्रिःसप्तकृत्वः पृथिवीं चक्रे निःक्षत्रियां हरिः ॥ ८ ॥
कार्त्तवीर्यं जघानाजौ कश्यपाय महीं ददौ ॥ यागं कृत्वा महाबाहुर्महेन्द्रे पर्वते स्थितः ॥ ९ ॥ ततो रामो भविष्णुश्च चतुर्धा दुष्टमर्दनः ॥ पुत्रो
दशरथाज्जज्ञे रामश्च भरतोऽनुजः ॥ १० ॥ लक्ष्मणश्चाथ शत्रुघ्नो रामभार्या च जानकी ॥ रामश्च पितृसत्यार्थं मातृभ्यो हितमाचरन् ॥ ११ ॥
शृंगवेरं चित्रकूटं दण्डकारण्यमागतः ॥ नासां शूर्पणखायाश्च च्छित्त्वाथ खरदूषणम् ॥ १२ ॥ हत्वा स राक्षसं सीतापहारिरजनीचरम् ॥
रावणं चानुजं तस्य लङ्कापुर्य्यां विभीषणम् ॥ १३ ॥ रक्षोराज्ये च संस्थाप्य सुग्रीवहनुमन्मुखैः ॥ आरुह्य पुष्पकं सार्द्धं सीतया
पतिभक्तया ॥ १४ ॥ लक्ष्मणेनानुकूलेन ह्ययोध्यां स्वपुरीं गतः ॥ राज्यं चकार देवादीन्पालयामास स प्रजाः ॥ १५ ॥ धर्मसं
रक्षणं चक्रे ह्यश्वमेधादिकान्क्रतून् ॥ सा महीपतिना रेमे रामेणैव यथासुखम् ॥ १६ ॥ रावणस्य गृहे सीता स्थिता भेजे न रावणम् ॥

कर्मणा मनसा वाचा सा गता राघवं सदा ॥ १७ ॥ पतिव्रता तु सा सीता ह्यनसूया यथैव तु ॥ पतिव्रताया माहात्म्यं शृणु त्वं कथयाम्यहम् ॥१८॥
कौशिको ब्राह्मणः कुष्ठी प्रतिष्ठानेऽभवत्पुरा ॥ तं तथा व्याधितं भार्य्या पतिं देवमिवार्चयत् ॥ १९ ॥ निर्भर्त्सितापि भर्त्तारं तममन्यत दैवतम् ॥
भर्त्रोक्ता सानयद्वेश्यां शुल्कमादाय चाधिकम् ॥ २० ॥ पथि शूले तदा प्रोतमचौरं चौरशङ्कया ॥ माण्डव्यमतिदुःखार्त्तमन्धकारेऽथ स द्विजः ॥२१॥
पत्नीस्कन्धसमारूढश्चालयामास कौशिकः ॥ पादावमर्शणात्क्रुद्धो माण्डव्यस्तमुवाच ह ॥ २२ ॥ सूर्य्योदये मृतिस्तस्य येनाहं चालितः पदा ॥
तच्छ्रुत्वा प्राह तद्भार्य्या सूर्य्यो नोदयमेष्यति ॥ २३ ॥ ततः सूर्य्योदयाभावादभवत्सततं निशा ॥ बहून्यब्दप्रमाणानि ततो देवा भयं ययुः ॥ २४ ॥
ब्रह्माणं शरणं जग्मुस्तामूचे पद्मसम्भवः ॥ प्रशाम्यते तेजसैव तपस्तेजस्त्वनेन वै ॥ २५ ॥ पतिव्रताया माहात्म्यान्नोद्गच्छति दिवाकरः ॥ तस्य चानु
दयाद्धानिर्मर्त्त्यानां भवतां तथा ॥ २६ ॥ तस्मात्पतिव्रतामत्रेरनसूयां तपस्विनीम् ॥ प्रसादयत वै पत्नीं भानोरुदयकाम्यया ॥ २७ ॥ तैः सा प्रसा
दिता गत्वा ह्यनसूया पतिव्रता ॥ कृत्वादित्योदयं सा च तं भर्त्तारमजीवयत् ॥ पतिव्रतानसूयायाः सीताभूदधिका किल ॥ २८ ॥ इति श्रीगारुडे
महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे दशावतार० नाम द्विचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४२ ॥ ब्रह्मोवाच ॥ रामायणमतो
वक्ष्ये श्रुतं पापविनाशनम् ॥ विष्णुनाभ्यब्जतो ब्रह्मा मरीचिस्तत्सुतोऽभवत् ॥ १ ॥ मरीचेः कश्यपस्तस्माद्रविस्तस्मान्मनुः स्मृतः ॥ मनोरिक्ष्वाकु
रस्याभूद्वंशे राजा रघुः स्मृतः ॥ २ ॥ रघोरजस्ततो जातो राजा दशरथो बली ॥ तस्य पुत्रास्तु चत्वारो महाबलपराक्रमाः ॥ ३ ॥ कौसल्यायाम
भूद्रामो भरतः कैकयीसुतः ॥ सुतौ लक्ष्मणशत्रुघ्नौ सुमित्रायां बभूवतुः ॥ ४ ॥ रामो भक्तः पितुर्मातुर्विश्वामित्रादवाप्तवान् ॥ अस्त्रग्रामं ततो यक्षीं
ताटकां प्रजघान ह ॥ ५ ॥ विश्वामित्रस्य यज्ञे वै सुबाहुं न्यवधीद्बली ॥ जनकस्य क्रतुं गत्वा उपयेमेऽथ जानकीम् ॥ ६ ॥ ऊर्मिलां लक्ष्मणो
वीरो भरतो माण्डवीं सुताम् ॥ शत्रुघ्नो वै कीर्त्तिमतीं कुशध्वजसुते उभे ॥ ७ ॥ पित्रादिभिरयोध्यायां गत्वा रामादयः स्थिताः ॥ युधाजितं मातुलश्च
शत्रुघ्नभरतौ गतौ ॥ ८ ॥ गतयोर्नृपवर्य्योऽसौ राज्यं दातुं समुद्यतः ॥ स रामाय तत्पुत्राय कैकेय्या प्रार्थितस्तदा ॥ ९ ॥ चतुर्दशसमा
वासो वनेरामस्य वाञ्छितः ॥ रामः पितृहितार्थञ्च लक्ष्मणेन च सीतया ॥ १० ॥ राज्यञ्च तृणवत्त्यक्त्वा शृङ्गवेरपुरं गतः ॥ रथं त्यक्त्वा
प्रयागञ्च चित्रकूटगिरिं गतः ॥ ११ ॥ रामस्य तु वियोगेन राजा स्वर्गं समाश्रितः ॥ संस्कृत्य भरतश्चागाद्राममाह बलान्वितः ॥ १२ ॥

१ तमीत्यपि पा० ।

अयोध्यान्तु समागत्य राज्यं कुरु महामते ॥ स नैच्छत्पादुके दत्त्वा राज्याय भरताय तु ॥ १३ ॥ विसर्जितोऽथ भरतो रामराज्यमपालयत् ॥
नन्दिग्रामे स्थितो भक्तो ह्ययोध्यां नाविशद्व्रती ॥ १४ ॥ रामोऽपि चित्रकूटाच्च ह्यत्रेराश्रममाययौ ॥ नत्वा सुतीक्ष्णं चागस्त्यं दण्डकारण्यमागतः
॥ १५ ॥ तत्र शूर्पणखा नाम राक्षसी चात्तुमागता ॥ निकृत्य कर्णौ नासे च रामेणाथापवारिता ॥ १६ ॥ तत्प्रेरितः खरश्चागाद्दूषणस्त्रिशिरास्त
था ॥ चतुर्दशसहस्रेण रक्षसान्तु बलेन च ॥ १७ ॥ रामोऽपि प्रेषयामास बाणैर्यमपुरञ्च तान् ॥ राक्षस्या प्रेरितोऽभ्यागाद्रावणो हरणाय हि ॥ १८ ॥
मृगरूपं स मारीचं कृत्वाग्रेऽथ त्रिदण्डधृक्॥सीतया प्रेरितो रामो मारीचं निजघान ह॥१९॥ म्रियमाणः स च प्राह हा सीते ! लक्ष्मणेति च ॥ सीतो
क्तो लक्ष्मणोऽथागाद्रामश्चानुददर्श तम् ॥ २० ॥ उवाच राक्षसी माया नूनं सीता हृतेति सः ॥ रावणोऽन्तरमासाद्य ह्यङ्केनादाय जानकीम् ॥ २१ ॥
जटायुषं विनिर्भिद्य ययौ लङ्कां ततो बली ॥ अशोकवृक्षच्छायायां रक्षितां तामधारयत् ॥ २२ ॥ आगत्य रामः शून्याञ्च पर्णशालां ददर्श ह ॥
शोकं कृत्वाथ जानक्या मार्गणं कृतवान्प्रभुः ॥ २३ ॥ जटायुषञ्च संस्कृत्य तदुक्तो दक्षिणां दिशम् ॥ गत्वा सख्यं ततश्चक्रे सुग्रीवेण च राघवः
॥ २४ ॥ सप्त तालान्विनिर्भिद्य शरेणानतपर्वणा ॥ वालिनञ्च विनिर्भिद्य किष्किन्धायां हरीश्वरम् ॥ २५ ॥ सुग्रीवं कृतवान्राम ऋश्यमूके स्वयं
स्थितः ॥ सुग्रीवः प्रेषयामास वानरान्पर्वतोपमान् ॥ २६ ॥ सीताया मार्गणं कर्तुं पूर्वाद्याशासु सोत्सवान् ॥ प्रतीचीमुत्तरां प्राचीं दिशं गत्वा
समागताः ॥ २७ ॥ दक्षिणान्तु दिशं ये च मार्गयन्तोऽथ जानकीम् ॥ वनानि पर्वतान्द्वीपान्नदीनां पुलिनानि च ॥ २८ ॥ जानकीन्ते ह्यपश्यन्तो
मरणे कृतनिश्चयाः ॥ सम्पातिवचनाज्ज्ञात्वा हनूमान्कपिकुञ्जरः ॥ २९ ॥ शतयोजनविस्तीर्णं पुप्लुवे मकरालयम् ॥ अपश्यज्जानकीं तत्र ह्यशोकव
निकास्थिताम् ॥ ३० ॥ भर्त्सितां राक्षसीभिश्च रावणेन च रक्षसा ॥ भव भार्य्येति वदता चिन्तयन्तीञ्च राघवम् ॥ ३१ ॥ अङ्गुलीयं कपिर्दत्त्वा
सीतां कौशल्यमब्रवीत् ॥ रामस्य तस्य दूतोऽहं शोकं मा कुरु मैथिलि ॥ ३२ ॥ स्वाभिज्ञानञ्च मे देहि येन रामः स्मरिष्यति॥तच्छ्रुत्वा प्रददौ सीता
वेणीरत्नं हनूमते ॥ ३३ ॥ यथा रामो नयेच्छीघ्रं तथा वाच्यं त्वया कपे ॥ तथेत्युक्त्वा तु हनुमान्वनं दिव्यं बभञ्ज ह ॥ ३४ ॥ हत्वाक्षं राक्षसांश्चान्या
न्बन्धनं स्वयमागतः॥सर्वैरिन्द्रजितो बाणैर्दृष्ट्वा रावणमब्रवीत् ॥ ३५ ॥ रामदूतोऽस्मि हनुमान्देहि रामाय मैथिलीम्॥एतच्छ्रुत्वा प्रकुपितो दीपयामास
पुच्छकम् ॥ ३६ ॥ कपिर्ज्वलितलांगूलो लङ्कां देहे[1] महाबलः ॥ दग्ध्वा लङ्कां समायातो रामपार्श्वं स वानरः ॥ ३७ ॥ जग्ध्वा फलं मधुवने दृष्टा

१ आत्मनेपदमार्षम् ।

सीतेत्यवेदयत् ॥ वेणीरत्नञ्च रामाय रामो लङ्कापुरीं ययौ ॥ ३८ ॥ ससुग्रीवः स हनुमान्सांगदश्च सलक्ष्मणः ॥ विभीषणोऽपि सम्प्राप्तः शरणं राघवं प्रति ॥ ३९ ॥ लङ्कैश्वर्य्येष्वभ्यषिञ्चद्रामस्तं रावणानुजम् ॥ रामो नलेन सेतुञ्च कृत्वाब्धौ चोत्ततार तम् ॥ ४० ॥ सुवेलावस्थितश्चैव पुरीं लङ्कां ददर्श ह ॥ अथ ते वानरा वीरा नीलांगदनलादयः ॥ ४१ ॥ धूम्रधूम्राक्षवीरेन्द्रा जाम्बवत्प्रमुखास्तदा ॥ मैन्दाद्विविदमुख्यास्ते पुरीं लंकां बभञ्जिरे ॥ ४२ ॥ राक्षसांश्च महाकायान्कालाञ्जनचयोपमान् ॥ रामः सलक्ष्मणो हत्वा सकपिः सर्वराक्षसान् ॥ ४३ ॥ विद्युज्जिह्वञ्च धूम्राक्षं देवान्तकनरान्तकौ ॥ महोदरमहापार्श्वातिकायं महाबलम् ॥ ४४ ॥ कुम्भं निकुम्भं मत्तञ्च मकराक्षं ह्यकम्पनम् ॥ प्रहस्तं वीरमुन्मत्तं कुम्भकर्णं महाबलम् ॥ ४५ ॥ रावणिं लक्ष्मणोऽच्छिन्त्त ह्यस्त्राद्यै राघवो बली ॥ निकृत्य बाहुचक्राणि रावणन्तु न्यपातयत् ॥४६॥ सीतां शुद्धां गृहीत्वाथ विमाने पुष्पके स्थितः॥ सवानरः समायातो ह्ययोध्यां प्रवरां पुरीम् ॥ ४७ ॥ तत्र राज्यं चकाराथ पुत्रवत्पालयन्प्रजाः ॥ दशाश्वमेधानाहृत्य गयाशिरसि पातनम् ॥ ४८ ॥ पिण्डानां विधिवत्कृत्वा दत्त्वा दानानि राघवः॥पुत्रौ कुशलवौ दृष्ट्वा तौ च राज्येऽभ्यषेचयत् ॥ ४९ ॥ एकादशसहस्राणि रामो राज्यमकारयत् ॥ शत्रुघ्नो लवणं जघ्ने शैलूषं भरतस्ततः॥ ५० ॥ अगस्त्यादीन्मुनीन्नत्वा श्रुत्वोत्पत्तिञ्च रक्षसाम् ॥ स्वर्गं गतो जनैः सार्द्धमयोध्यास्थैः कृतार्थकः ॥५१॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे रामायणवर्णनं नाम त्रिचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४३ ॥

॥ ब्रह्मोवाच ॥

हरिवंशं प्रवक्ष्यामि कृष्णमाहात्म्यमुत्तमम् ॥ वसुदेवात्तु देवक्यां वासुदेवो वलोऽभवत् ॥ १ ॥ धर्मादिरक्षणार्थाय ह्यधर्मादिविनष्टये ॥ कृष्णः पीत्वा स्तनौ गाढं पूतनामनयत्क्षयम् ॥ २ ॥ शकटः परिवृत्तोऽथ भग्नौ च यमलार्जुनौ ॥ दमितः कालियो नागो धेनुको विनिपातितः ॥ ३ ॥ धृतो गोवर्द्धनः शैल इन्द्रेण परिपूजितः ॥ भारावतरणं चक्रे प्रतिज्ञां कृतवान्हरिः ॥ ४ ॥ रक्षणायार्ज्जुनादेश्च ह्यरिष्टादिर्निपातितः ॥ केशी विनिहतो दैत्यो गोपाद्याः परितोषिताः ॥ ५ ॥ चाणूरो मुष्टिको मल्लः कंसो मञ्चान्निपातितः ॥ रुक्मिणीसत्यभामाद्याः ह्यष्टौ पत्न्यो हरेः पराः ॥ ६ ॥ षोडश स्त्रीसहस्राणि ह्यन्यान्यासन्महात्मनः ॥ तासां पुत्राश्च पौत्राद्याः शतशोऽथ सहस्रशः ॥ ७ ॥ रुक्मिण्याञ्चैव प्रद्युम्नो न्यवधीच्छंबरञ्च यः ॥ तस्य पुत्रोऽनिरुद्धोऽभूदुषाबाणसुतापतिः ॥ ८ ॥ हरिशंकरयोर्यत्र महायुद्धं बभूव ह ॥ बाणबाहुसहस्रञ्च च्छिन्नं बाहुद्वयं ह्यभूत् ॥ ९ ॥ नरको निहतो येन पारिजातं जहार यः॥बलश्च शिशुपालश्च हतश्च द्विविदः कपिः॥१०॥अनिरुद्धादभूद्वज्रः स च राजा गते हरौ॥सान्दीपनिं गुरुश्चक्रे सपुत्रश्च चकार सः॥

१ आत्मनेपदमार्षम् ।

मथुरायां चोग्रसेनं पालनं च दिवौकसाम्॥११॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे हरिवंशवर्णनं नाम चतुश्चत्वारिंशदुत्तर
शततमोऽध्यायः ॥ १४४ ॥ ब्रह्मोवाच ॥ भारतं संप्रवक्ष्यामि भारावतरणं भुवः ॥ चक्रे कृष्णो युध्यमानः पाण्डवादिनिमित्ततः ॥ १ ॥ विष्णुना
भ्यब्जतो ब्रह्मा ब्रह्मपुत्रोऽत्रिरत्रितः ॥ सोमस्ततो बुधस्तस्मादिलायां च पुरूरवाः ॥ २ ॥ तस्यायुस्तत्र वंशेऽभूद्ययातिर्भरतः कुरुः॥शन्तनुस्तस्य
वंशेऽभूद्गंगायां शन्तनोः सुतः ॥ ३ ॥ भीष्मः सर्वगुणैर्युक्तो ब्रह्मवैवर्त्तपारगः ॥ ४ ॥ शन्तनोः सत्यवत्यां च द्वौ पुत्रौ संबभूवतुः ॥ चित्रांगदन्तु
गन्धर्वः पुत्रं चित्राङ्गदोऽवधीत् ॥ ५ ॥ अन्यो विचित्रवीर्य्योऽभूत्काशीराजसुतापतिः ॥ विचित्रवीर्य्ये स्वर्याते व्यासात्तत्क्षेत्रतोऽभवत् ॥ ६ ॥ धृतरा
ष्ट्रोऽम्बिकापुत्रः पाण्डुरम्बालिकासुतः॥भुजिष्यायान्तु विदुरो गान्धार्य्यां धृतराष्ट्रतः॥७॥दुर्य्योधनप्रधानास्तु शतसंख्या महाबलाः॥पाण्डोः कुन्त्याञ्च
माद्यां च पञ्च पुत्राः प्रजज्ञिरे ॥८॥ युधिष्ठिरो भीमसेनो ह्यर्जुनो नकुलस्तथा ॥ सहदेवश्च पञ्चैते महाबलपराक्रमाः ॥ ९ ॥ कुरुपाण्डवयोर्वैरं दैवयो
गाद्बभूव ह ॥ दुर्य्योधनेनाधीरेण[1] पाण्डवाः समुपद्रुताः ॥ १० ॥ दग्धा जतुगृहे वीरास्ते मुक्ताः स्वधियामलाः ॥ ११ ॥ ततस्तदेकचक्रायां ब्राह्मणस्य
निवेशने ॥ विविशुस्ते महात्मानो निहत्य बकराक्षसम् ॥ १२ ॥ ततः पाञ्चालविषये द्रौपद्यास्ते स्वयंवरम्॥विज्ञाय वीर्य्यशुल्कान्तां पाण्डवा उपयेमिरे
॥ १३ ॥ द्रोणभीष्मानुमत्या तु धृतराष्ट्रः समानयत् ॥ अर्द्धराज्यं ततः प्राप्ता इन्द्रप्रस्थे पुरोत्तमे ॥ १४ ॥ राजसूयन्ततश्चक्रुः सभां कृत्वा यतव्रताः॥
अर्जुनो द्वारवत्यान्तु सुभद्रां प्राप्तवान्प्रियाम् ॥ वासुदेवस्य भगिनीमनुमत्या मुरद्विषः ॥१५॥ नन्दिघोषं रथं दिव्यमग्नेर्धनुरनुत्तमम् ॥ गाण्डीवं नाम
तद्दिव्यं त्रिषु लोकेषु विश्रुतम् ॥ अक्षयान्सायकांश्चैव तथाभेद्यञ्च दंशनम् ॥ १६ ॥ स तेन धनुषा वीरः पाण्डवो जातवेदसम् ॥ कृष्णाद्वितीयो बीभ
त्सुरतर्पयत वीर्य्यवान् ॥ १७ ॥ नृपान्दिग्विजये जित्वा रत्नान्यादाय वै ददौ ॥ युधिष्ठिराय महते भ्रात्रे नीतिविदे मुदा ॥१८॥ युधिष्ठिरोऽपि धर्मा
त्मा भ्रातृभिः परिवारितः॥जितो दुर्य्योधनेनैव मायाद्यूतेन पापिना॥कर्णदुःशासनमते स्थितेन शकुनेर्मते॥१९॥अथ द्वादश वर्षाणि वने तेपुर्महत्तपः॥
सधौम्या द्रौपदीषष्ठा मुनिवृन्दाभिसंवृताः ॥ २० ॥ ययुर्विराटनगरं गुप्तरूपेण संश्रिताः ॥ वर्षमेकं महाप्राज्ञा गोग्रहात्तमपालयन् ॥ २१ ॥
तते याताः स्वकं राष्ट्रं प्रार्थयामासुराहताः ॥ पञ्चग्रामानर्द्धराज्याद्वीरा दुर्य्योधनं नृपम् ॥ २२ ॥ नाप्तवन्तः कुरुक्षेत्रे युद्धञ्चक्रुर्बलान्विताः ॥
अक्षौहिणीभिर्दिव्याभिः सप्तभिः परिवारिताः ॥ २३ ॥ एकादशभिरुद्युक्ता युक्ता दुर्य्योधनादयः ॥ आसीद्युद्धं संकुलं च देवासुररणोपमम् ॥ २४ ॥

[1] नेन वीरेण ।

भीष्मः सेनापतिरभूदादौ दौर्य्योधने बले ॥ पाण्डवानां शिखंडी च तयोर्युद्धं बभूव ह ॥ शस्त्राशस्त्रि महाघोरं दशरात्रं शराशरि ॥ २५ ॥
शिखण्ड्यर्जुनबाणैश्च भीष्मः शरशतैश्चितः ॥ उत्तरायणमावीक्ष्य ध्यात्वा देवं गदाधरम् ॥ २६ ॥ उक्त्वा धर्मान्बहुविधांस्तर्पयित्वा पितॄन्बहून् ॥
आनन्दे तु पदे लीनो विमले मुक्तकिल्बिषे ॥ २७ ॥ ततो द्रोणो ययौ योद्धुं धृष्टद्युम्नेन वीर्य्यवान् ॥ दिनानि पंच तद्युद्धमासीत्परमदारुणम् ॥ २८ ॥
यत्र ते पृथिवीपाला हताः पार्थेन संगरे ॥ शोकसागरमासाद्य द्रोणोऽपि स्वर्गमाप्तवान् ॥ २९ ॥ ततः कर्णो ययौ योद्धुमर्जुनेन महात्मना ॥
दिनद्वयं महायुद्धं कृत्वा पार्थास्त्रसागरे ॥ निमग्नः सूर्य्यलोकन्तु ततः प्राप स वीर्य्यवान् ॥ ३० ॥ ततः शल्यो ययौ योद्धुं धर्मराजेन धीमता ॥
दिनार्द्धेन हतः शल्यो बाणैर्ज्वलनसन्निभैः ॥ ३१ ॥ दुर्य्योधनोऽथ वेगेन गदामादाय वीर्य्यवान् ॥ अभ्यधावत वै भीमं कालान्तकयमोपमः ॥३२॥
अथ भीमेन वीरेण गदया विनिपातितः ॥ अश्वत्थामा गतो द्रौणिः सुप्तसैन्यं ततो निशि ॥ ३३ ॥ जघान बाहुवीर्य्येण पितुर्वधमनुस्मरन् ॥
धृष्टद्युम्नं जघानाथ द्रौपदेयांश्च वीर्य्यवान् ॥ ३४ ॥ द्रौपद्यां रुद्यमानायामश्वत्थाम्नः शिरोमणिम् ॥ ऐषिकास्त्रेण तं जित्वा जग्राहार्जुन उत्तमम् ॥३५॥
युधिष्ठिरः समाश्वास्य स्त्रीजनं शोकसंकुलम् ॥ स्नात्वा सन्तर्प्य देवांश्च पितॄनथ पितामहान् ॥ ३६ ॥ आश्वासितोऽथ भीष्मेण राज्यञ्चैवाकरोन्म
हत् ॥ विष्णुमीजेऽश्वमेधेन विधिवद्दक्षिणावता ॥ ३७ ॥ राज्ये परीक्षितं स्थाप्य यादवानां विनाशनम् ॥ श्रुत्वा तु मौसले राजा जप्त्वा नामसह
स्रकम् ॥ ३८ ॥ विष्णोः स्वर्गं जगामाथ भीमाद्यैर्भ्रातृभिर्युतः ॥ वासुदेवः पुनर्बुद्धः संमोहाय सुरद्विषाम् ॥ ३९ ॥ कल्किर्विष्णुश्च भविता शंभल
ग्रामके पुनः ॥ अश्वारूढोऽखिलाँल्लोकांस्तदा भस्मीकरिष्यति ॥४०॥ देवादीनां रक्षणाय ह्यधर्महरणाय च ॥ दुष्टानाञ्च वधार्थाय ह्यवतारं करोति च
॥ ४१ ॥ यथा धन्वन्तरिर्वंशे जातः क्षीरोदमन्थने ॥ देवादीनां जीवनाय ह्यायुर्वेदमुवाच ह ॥ ४२ ॥ विश्वामित्रसुतायैव सुश्रुताय महात्मने ॥
भारतांश्चावतारांश्च श्रुत्वा स्वर्गं व्रजेन्नरः ॥ ४३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भारतादिवर्णनं नाम पञ्चचत्वारिंश
दुत्तरशततमोऽध्यायः ॥ १४५ ॥ ॥ धन्वन्तरिरुवाच ॥ सर्वरोगनिदानञ्च वक्ष्ये सुश्रुत तत्त्वतः ॥ आत्रेयाद्यैर्मुनिवरैर्यथा पूर्वमुदीरितम् ॥ १ ॥
रोगः पाप्मा ज्वरो व्याधिर्विकारो दुष्ट आमयः ॥ यक्ष्मातङ्कगदा बाधाः शब्दाः पर्य्यायवाचिनः ॥ २ ॥ निदानं पूर्वरूपाणि रूपाण्युपशयस्तथा ॥
संप्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ॥ ३ ॥ निमित्तहेत्वायतनप्रत्ययोत्थानकारणैः ॥ निदानमाहुः पर्य्यायैः प्राग्रूपं येन लक्ष्यते ॥ ४ ॥
उत्पित्सुरामयो दोषविशेषेणानधिष्ठितः ॥ लिङ्गमव्यक्तमल्पत्वाद्व्याधीनां तद्यथायथम् ॥ ५ ॥ तदेव व्यक्ततां यातं रूपमित्यभिधीयते ॥

संस्थानं व्यञ्जनं लिङ्गं लक्षणं चिह्नमाकृतिः ॥ ६ ॥ हेतुव्याधिविपर्य्यस्तविपर्य्यस्तार्थकारिणाम् ॥ औषधान्नविहाराणामुपयोगं सुखावहम् ॥ ७ ॥ विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतः ॥ विपरीतोऽनुपशयो व्याध्यसात्म्येतिसंज्ञितः ॥ ८ ॥ यथा दुष्टेन दोषेण यथा चानुविसर्पता ॥ निर्वृत्तिरामयस्यासौ संप्राप्तिरभिधीयते ॥ ९ ॥ संख्याविकल्पप्राधान्यबलकालविशेषतः ॥ सा भिद्यते यथात्रैव वक्ष्यन्तेऽष्टौ ज्वरा इति ॥ १० ॥ दोषाणां समवेतानां विकल्पोंशांशकल्पना ॥ स्वातन्त्र्यपारतन्त्र्याभ्यां व्याधेः प्राधान्यमादिशेत् ॥ ११ ॥ हेत्वादिकात्स्न्यार्वयवैर्बलाबलविशेषणम् ॥ नक्तंदिनार्द्धभुक्तांशैर्व्याधिकालो यथामलम् ॥ १२ ॥ इति प्रोक्तो निदानार्थः स व्यासेनोपदेक्ष्यते ॥ सर्वेषामेव रोगाणां निदानं कुपिता मलाः ॥ १३ ॥ तत्प्रकोपस्य तु प्रोक्तं विविधाहितसेवनम् ॥ अहितस्त्रिविधो योगस्त्रयाणां प्रागुदाहृतः ॥ १४ ॥ तिक्तोषणकषायाम्लरूक्षाप्रमितभोजनैः ॥ धावनोदीरणनिशाजागरात्युच्चभाषणैः ॥ १५ ॥ क्रियाभियोगभीशोकचिन्ताव्यायाममैथुनैः ॥ ग्रीष्माहोरात्रभुक्त्यन्ते प्रकुप्यति समीरणः ॥ १६ ॥ पित्तं कट्वम्लतीक्ष्णोष्णकटुक्रोधविदाहिभिः ॥ शरन्मध्याह्नरात्र्यर्द्धविदाहसमयेषु च ॥ १७ ॥ स्वाद्वम्ललवणस्निग्धगुर्वभिष्यन्दिशीतलैः ॥ आस्यास्वप्नसुखाजीर्णदिवास्वप्नादिबृंहणैः ॥ १८ ॥ प्रच्छर्दनाद्ययोगेन भुक्तान्नस्याप्यजीर्णके ॥ पूर्वाह्ने पूर्वरात्रे च श्लेष्मा वक्ष्यामि सङ्करान् ॥ १९ ॥ मिश्रीभावात्समस्तानां सन्निपातस्तथा पुनः ॥ संकीर्णाजीर्णविषमविरुद्धाद्यशनादिभिः ॥ २० ॥ व्यापन्नमद्यपानीयशुष्कशाकाममूलकैः ॥ पिण्याकमृत्यवसग्पूतिशुष्ककृशामिषैः ॥ २१ ॥ दोषत्रयकरैस्तैस्तैस्तथान्नपरिवर्ततः ॥ धातोर्दुष्टात्पुरो वाताद्दिग्रहावेशविप्लुवात् ॥ २२ ॥ दुष्टामान्नैरतिश्लेष्मग्रहैर्जन्मर्क्षपीडनात् ॥ मिथ्यायोगाच्च विविधात्पापानाञ्च निषेवणात् ॥ स्त्रीणां प्रसववैषम्यात्तथा मिथ्योपचारतः ॥ २३ ॥ प्रतिरोगमिति क्रुद्धा रोगविध्यनुगामिनः ॥ रसायनं प्रपद्याशु दोषा देहे विकुर्वते ॥ २४ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे सर्वरोगनिदानं नाम षट्चत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४६ ॥ ॥ धन्वन्तरिरुवाच ॥ वक्ष्ये ज्वरनिदानं हि सर्वज्वरविबुद्धये ॥ ज्वरो रोगपतिः पाप्मा मृत्युराजोऽशनोऽन्तकः ॥ क्रुद्धदक्षाध्वरध्वंसिरुद्रोर्द्ध्वनयनोद्भवः ॥ १ ॥ तत्सन्तापो मोहमयः सन्तापात्मापचारजः ॥ विविधैर्नामभिः क्रूरो नानायोनिषु वर्त्तते ॥ २ ॥ पाकलो गजेष्वभितापो वाजिष्वलर्कः कुक्करेषु ॥ इन्द्रमदो जलदेष्वप्सु नीलिका ज्योतिरोषधीषु भूम्यामूषरो नाम ॥ ३ ॥ हृल्लासश्छर्दनं कासः स्तंभः शैत्यं त्वगादिषु ॥ अंगेषु च समुद्भूताः पिडकाश्च कफोद्भवे ॥ ४ ॥ काले यथास्वं सर्वेषां प्रवृत्तिर्वृद्धिरेव वा ॥ निदानोक्तोनुपशयो विपरीतोपशायिता ॥ ५ ॥ अरुचिश्चाविपाकश्च स्तंभमालस्यमेव च ॥ हृद्दाहश्च विपाकश्च तन्द्रा चालस्यमेव च ॥ वस्तिर्विमर्दावनया

दोषाणामप्रवर्त्तनम् ॥ ६ ॥ लालाप्रसेको हृल्लासः क्षुन्नाशो रसदं मुखम् ॥ स्वच्छमुष्णगुरुत्वञ्च गात्राणां बहुमूत्रता ॥ न विजीर्णं न च म्लानिर्ज्वरं स्यामस्य लक्षणम् ॥ ७ ॥ क्षुत्क्षामता लघुत्वं च गात्राणां ज्वरमार्दवम् ॥ दोषप्रवृत्तिरष्टाहान्निरामज्वरलक्षणम् ॥८॥ यथा स्वलिंगं संसर्गे ज्वरसंसर्गजोऽपि वा ॥ शिरोर्त्तिमूर्च्छावमिदेहदाहकण्ठास्यशोषारुचिपर्वभेदाः ॥ उन्निद्रता संभ्रमरोमहर्षा जृंभातिवाक्त्वं पवनात्सपित्तात् ॥ ९ ॥ तापहान्यरुचिपर्वशिरोरुक्ष्ठीवनश्वसनकासविवर्णाः ॥ शीतजाड्यतिमिरभ्रमितन्द्राश्लेष्मवातजनितज्वरलिंगम् ॥ १० ॥ शीतस्तम्भस्वेददाहाव्यवस्थास्तृष्णा कासः श्लेष्मपित्तप्रवृत्तिः॥मोहस्तन्द्रालिप्ततिक्तास्यता च ज्ञेयं रूपं श्लेष्मपित्तज्वरस्य॥११॥सर्वजो लक्षणैः सर्वैर्दाहोऽत्र च मुहुर्मुहुः ॥ तदुच्छीतं महानिद्रा दिवा जागरणं निशि ॥ १२ ॥ सदा वा नैव वा निद्रा महास्वेदो हि नैव वा ॥ गीतनर्त्तनहास्यादिः प्रकृतेहाप्रवर्त्तनम् ॥ १३ ॥ साश्रुणी कलुषे रक्ते भुग्ने लुलितपक्ष्मणी ॥ अक्षिणी पिण्डिकापार्श्वशिरःपर्वास्थिरुग्भ्रमः ॥ १४॥ सस्वनौ सरुजौ कर्णौ महाशीतौ हि नैव वा ॥ परिदग्धा खरा जिह्वा गुरुस्रस्तांगसन्धिता ॥ १५ ॥ ष्ठीवनं रक्तपित्तस्य लोठनं शिरसोऽतितृट् ॥ कोष्ठानां श्यावरक्तानां मण्डलानां च दर्शनम् ॥१६॥ हृव्यथा मलसंसर्गः प्रवृत्तिर्वाल्पशोऽति वा ॥ स्निग्धास्यता बलभ्रंशः स्वरसादः प्रलापितः ॥ १७ ॥ दोषपाकश्चिरं तन्द्रा प्रततं कण्ठकूजनम् ॥ सन्निपातमभिन्यासं तं ब्रूयाच्च हतौजसम् ॥ १८ ॥ वायुना कण्ठरुद्धेन पित्तमन्तः सुपीडितम् ॥ व्यवायित्वाच्च सौख्याच्च बहिर्मार्गं प्रपद्यते ॥ तेन हारिद्रनेत्रत्वं सन्निपातोद्भवे ज्वरे ॥१९॥ दोषे विवृद्धे नष्टेऽग्नौ सर्वसंपूर्णलक्षणः ॥ सान्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥२०॥ अन्यत्र सन्निपातोत्थं यत्र पित्तं पृथक्स्थितम् ॥ त्वचि कोष्ठे च वा दाहं विदधाति पुरोऽनु वा॥२१॥तद्वद्वातकफे शीतं दाहादिर्दुस्तरस्तयोः ॥ शीतादौ तत्र पित्तेन कफे स्यन्दितशोषिते॥२२॥ पित्ते शान्तेऽथ वै मूर्च्छा मदस्तृष्णा च जायते ॥ दाहादौ पुनरन्तेषु तन्द्रालस्ये वमिः क्रमात् ॥ २३ ॥ आगन्तुरभिघाताभिषंगशापाभिचारतः ॥ चतुर्धा तु कृतः स्वेदो दाहाद्यैरभिघातजः ॥ २४ ॥ श्रमाच्च तस्मिन्पवनः प्रायो रक्तं प्रदूषयन् ॥ सव्यथाशोकवैवर्ण्यं सरुजं कुरुते ज्वरम् ॥ २५ ॥ ग्रहावेशौषधिविषक्रोधभीशोककामजः ॥ २६ ॥ अभिषंगग्रहोऽप्यस्मिन्नकस्माद्धासरोदने ॥ ओषधीगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षयः ॥ २७ ॥ विषान्मूर्च्छातिसारश्च श्यावता दाहकृद्भ्रमः ॥ क्रोधात्कम्पः शिरोरुक्च प्रलापो भयशोकजे ॥२८॥ कामाद्भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयाः ॥ ग्रहादौ सन्निपातस्य रूपादौ मरुतस्तयोः ॥ २९ ॥ कोपात्कोपेऽपि पित्तस्य यौ तु शापाभिचारजौ ॥ सन्निपातज्वरौ घोरौ तावसह्यतमौ मतौ ॥ ३० ॥ तंत्राभिचारिकैर्मन्त्रैर्हूयमानञ्च तप्यते ॥ पूर्वञ्चेतस्ततो देहस्ततो विस्फोटदिग्भ्रमैः ॥ ३१ ॥ सदाहमूर्च्छाग्रस्तस्य प्रत्यहं वर्द्धते ज्वरः ॥ इति ज्वरोऽष्ट

धा दृष्टः समासाद्विविधस्तु सः ॥ ३२ ॥ शारीरो मानसः सौम्यस्तीक्ष्णोऽन्तर्बहिराश्रयः ॥ प्राकृतो वैकृतः साध्योऽसाध्यः सामो निरामकः ॥ ३३ ॥
पूर्वं शरीरे शारीरे तापो मनसि मानसे ॥ पवनैर्योगवाहित्वाच्छीतं श्लेष्मयुते भवेत् ॥ ३४ ॥ दाहः पित्तयुते मिश्रं मिश्रेऽन्तःसंश्रये पुनः ॥ ज्वरेऽधि
कं विकाराः स्युरन्तःक्षोभो मलग्रहः ॥ ३५ ॥ बहिरेव बहिर्वेगे तापोऽपि च स साधितः ॥ वर्षाशरद्वसन्तेषु वाताद्यैः प्राकृतः क्रमात् ॥ ३६ ॥ वैकृतो
ऽन्यः स दुःसाध्यः प्रायश्च प्राकृतोऽनिलात् ॥ वर्षासु मारुतो दुष्टः पित्तश्लेष्मान्वितं ज्वरम् ॥ ३७ ॥ कुर्य्याच्च पित्तं शरदि तस्य चानुचरः कफः ॥
तत्प्रकृत्या विसर्गाच्च तत्र नानशनाद्भयम् ॥ ३८ ॥ कफो वसन्ते तमपि वातपित्तं भवेदनु ॥ बलवत्स्वल्पदोषेषु ज्वरः साध्योऽनुपद्रवः ॥ ३९ ॥ सर्व
था विकृतिज्ञाने प्रागसाध्य उदाहृतः ॥ ज्वरोपद्रवतीक्ष्णत्वं मन्दाग्निर्बहुमूत्रता ॥ ४० ॥ न प्रवृत्तिर्न विजीर्णा न क्षुत्सामज्वराकृतिः ॥ ज्वरवेगोऽधिक
स्तृष्णा प्रलापः श्वसनं भ्रमः ॥ ४१ ॥ मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥ जीर्णतामविपर्य्यासात्सततरात्रं च लंघनम् ॥ ४२ ॥ ज्वरः पंचवि
धः प्रोक्तो मलकालबलाबलात् ॥ प्रायशः सन्निपातेन भूयसामुपदिश्यते ॥ ४३ ॥ सन्ततः सततोऽन्येद्युस्तृतीयकचतुर्थकौ ॥ धातुमूत्रशकृद्वाहिस्रोत
सां व्यापिनो मलाः ॥ ४४ ॥ तापयन्तस्तनुं सर्वां तुल्यदृष्ट्यादिवर्द्धिताः ॥ बलिनो गुरवस्तस्याविशेषेण रसाश्रिताः ॥ ४५ ॥ सततं निष्प्रतिद्वंद्वा
ज्वरं कुर्य्युः सुदुःसहम् ॥ मलं ज्वरोष्णधातून्वा स शीघ्रं क्षपयेत्ततः ॥४६॥सर्वाकारं रसादीनां शुद्ध्याशुद्ध्यापि वा क्रमात् ॥ वातपित्तकफैःसप्तद
शद्वादशवासरात्॥४७॥प्रायोऽनुयाति मर्य्यादां मोक्षाय च वधाय च॥इत्यग्निवेशस्य मतं हारीतस्य पुनः स्मृतिः ॥४८॥ द्विगुणा सप्तमी या च नवम्येकाद
शी तथा॥ एषा त्रिदोषमर्य्यादा मोक्षाय च वधाय च ॥४९॥ शुद्ध्याशुद्ध्या ज्वरः कालं दीर्घमप्यत्र वर्त्तते ॥ कृशानां व्याधियुक्तानां मिथ्याहारादिसेविनाम्
॥५०॥ अल्पोऽपि दोषो दुष्ट्यादेर्लब्ध्वान्यतमतो बलम्॥स प्रत्यनीको विषमं यस्माद्वृद्धिक्षयान्वितः॥५१॥सविक्षेपो ज्वरं कुर्य्याद्विषमक्षयवृद्धिभाक्॥
दोषः प्रवर्त्तते तेषां स्वे काले ज्वरयन्बली ॥ ५२ ॥ निवर्त्तते पुनश्चैव प्रत्यनीकबलाबलः ॥ क्षीणदोषो ज्वरः सूक्ष्मो रसादिष्वेव लीयते ॥ ५३ ॥
लीनत्वात्कार्श्यवैवर्ण्यजाड्यादीनां दधाति सः ॥ आसन्नविकृतास्यत्वात्स्रोतसां रसवाहिनाम् ॥ ५४ ॥ आशु सर्वस्य वपुषो व्याप्तिदोषो न जायते ॥
सन्ततः सततस्तेन विपरीतो विपर्य्ययात् ॥ ५५ ॥ विषमो विषमारम्भः क्षपाकालेन सङ्गवान् ॥ दोषो रक्ताश्रयः प्रायः करोति सन्ततं ज्वरम्॥५६॥
अहोरात्रस्य सन्धौ स्यात्सकृदन्येद्युराश्रितः ॥ तस्मिन्मांसवहा नाडी मेदोनाडी तृतीयके ॥ ५७ ॥ ग्राही पित्तानिलान्मूर्ध्नस्त्रिकस्य कफपित्ततः ॥
सपृष्ठस्यानिलकफात्स चैकाहान्तरः स्मृतः ॥ ५८ ॥ चतुर्थको मलैर्मेदोमज्जास्थ्यन्यतरे स्थितः ॥ मज्जास्थ एव ह्यपरः प्रभावमनुदर्शयेत् ॥ ५९ ॥

द्विधा कफोणिजंघाभ्यां स पूर्वं शिरसानिलात् ॥ अस्थिमज्जोरुपगतश्चतुर्थकविपर्य्ययः ॥ ६० ॥ त्रिधा त्र्यहं ज्वरयति दिनमेकन्तु मुञ्चति ॥ बला बलेन दोषाणामन्यचेष्टादिजन्मनाम् ॥ ६१ ॥ पक्वानामविपर्यासात्सप्तरात्रञ्च लंघयेत् ॥ ज्वरः स्यान्मनसस्तद्वत्कर्मणश्च तदातदा ॥ ६२ ॥ गम्भीरधातुचारित्वात्सन्निपातेन सम्भवात् ॥ तुल्योच्छ्रयाच्च दोषाणां दुश्चिकित्स्यश्चतुर्थकः ॥ ६३ ॥ सूक्ष्मात्सूक्ष्मज्वरेष्वेषु दूराद्दूरतरेषु च ॥ दोषो रक्तादिमार्गेषु शनैरल्पश्चिरेण यत् ॥ ६४ ॥ याति देहश्च नाशेषं सन्तापादीन्करोत्यतः ॥ क्रमो यत्नेन विच्छिन्नः सतापो लक्ष्यते ज्वरः ॥ ६५ ॥ विषमो विषमारम्भः क्षपाकालानुसारवान् ॥ यथोत्तरं मन्दगतिर्मन्दशक्तिर्यथायथम् ॥ ६६ ॥ कालेनाप्नोति सदृशान्स रसादींस्तथातथा ॥ दोषो ज्वरयति क्रुद्धश्चिराच्चिरतरेण च ॥ ६७ ॥ भूमौ स्थितं जलैः सिक्तं कालं नैव प्रतीक्षते ॥ अंकुराय यथा बीजं दोषबीजं भवेत्तथा ॥ ६८ ॥ वेगं कृत्वा विषं यद्वदाशये नयते बलम् ॥ कुप्यत्याप्तबलं भूयः कालदोषविषन्तथा ॥ ६९ ॥ एवं ज्वराः प्रवर्त्तन्ते विषमाः सततादयः ॥ उत्क्लेशो गौरवं दैन्यं भङ्गोऽङ्गानां विजृम्भणम् ॥ ७० ॥ अरोचको वमिः श्वासः सर्वस्मिन्रसगे ज्वरे ॥ रक्तनिष्ठीवनं तृष्णा रूक्षोष्णं पीडकोद्गमः ॥ ७१ ॥ दाहराग भ्रममदप्रलापो रक्तसंश्रिते ॥ तृड्ग्लानिःस्पृष्टवर्चस्कमन्तर्दाहो भ्रमस्तमः ॥ ७२ ॥ दौर्गन्ध्यं गात्रविक्षेपो मांसस्थे मेदसि स्थिते ॥ स्वेदोऽतितृष्णा वमनं दौर्गन्ध्यं वा सहिष्णुता ॥ ७३ ॥ प्रलापो ग्लानिररुचिरस्थिगे त्वास्थिभेदनम् ॥ दोषप्रवृत्तिरुद्बोधः श्वासांगक्षेपकूजनम् ॥ ७४ ॥ अन्तर्दाहो बहिः शैत्यं श्वासो हिक्का हि मज्जगे ॥ तमसो दर्शनं मर्मच्छेदनं स्तब्धमेढ्रता ॥ ७५ ॥ शुक्रप्रवृत्तौ मृत्युस्तु जायते शुक्रसंश्रये ॥ उत्तरोत्तरदुःसाध्याः पञ्चान्ये तु विपर्य्यये ॥७६॥ प्रलिम्पन्निव गात्राणि श्लेष्मणा गौरवेण च ॥ मन्दज्वरप्रलापस्तु सशीतः स्यात्प्रलेपकः ॥ ७७ ॥ नित्यं मन्दज्वरो रूक्षः शीतकृच्छ्रेण गच्छति ॥ स्तब्धांगः श्लेष्मभूयिष्ठो भवेदंगबलाशकः ॥७८॥ हरिद्राभेदवर्णाभस्तद्वल्लेपं प्रमेहति ॥ स वै हारिद्रको नाम ज्वरभेदोऽन्तकः स्मृतः ॥ ७९ ॥ कफवातौ समौ यत्र हीनपित्तस्य देहिनः ॥ तीक्ष्णोऽथ वा दिवा मन्दो जायते रात्रिजो ज्वरः ॥ ८० ॥ दिवाकरार्पितबले व्यायामाच्च विशोषिते ॥ शरीरे नियतं वाताज्वरः स्यात्पौर्वरात्रिकः ॥ ८१ ॥ आमाशये यदात्मस्थे श्लेष्मपित्ते ह्यधः स्थिते ॥ तदर्द्धं शीतलं देहे ह्यर्द्धं चोष्णं प्रजायते ॥ ८२ ॥ काये पित्तं यदा न्यस्तं श्लेष्मा चान्ते व्यवस्थितः ॥ उष्णत्वं तेन देहस्य शीतत्वं करपादयोः ॥ ८३ ॥ रसरक्ताश्रयः साध्यो मांस मेदोगतश्च यः ॥ अस्थिमज्जागतः कृच्छ्रस्तैस्तैः स्वांगैर्हतप्रभः ॥ ८४ ॥ विसंज्ञो ज्वरवेगार्त्तः सक्रोध इव वीक्षते ॥ सदोषमुष्णञ्च सदा शुक्रन्मुञ्चति वेगवत् ॥ ८५ ॥ देहो लघुर्व्यपगतक्लममोहतापः पाको मुखे करणसौष्ठवमव्यथत्वम् ॥ स्वेदः क्षुवः प्रकृतियोगिमनोऽन्नलिप्सा कण्डूश्च मूर्ध्नि विगत

ज्वरलक्षणानि॥८६॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्वरनिदानादिकं नाम सप्तचत्वारिंशदुत्तरशततमोऽध्यायः॥१४७॥
धन्वन्तरिरुवाच ॥ अथातो रक्तपित्तस्य निदानं प्रवदाम्यहम् ॥ भृशोष्णतिक्तकट्वम्ललवणादिविदाहिभिः ॥ १ ॥ कोद्रवोद्दालकैश्चान्यैस्तदुक्तैरति
सेवितैः ॥ कुपितं पैत्तिकैः पित्तं द्रवं रक्तञ्च मूर्च्छति ॥ २ ॥ तैर्मिथस्तुल्यरूपत्वमागम्य व्याप्नुवंस्तनुम् ॥ पित्तरक्तस्य विकृतेः संसर्गाद्दूषणादपि ॥३॥
गन्धवर्णानुवृत्तेषु रक्तेन व्यपदिश्यते ॥ प्रभवत्यसृजः स्थानात्प्लीहतो यकृतश्च सः॥४॥ शिरोगुरुत्वमरुचिः शीतेच्छा धूमकोऽम्लकः ॥ छर्द्दितश्छर्दिबी
भत्स्यं कासः श्वासो भ्रमः क्लमः ॥ ५ ॥ लोहितो न हितो मत्स्यगन्धास्यत्वञ्च विज्वरे ॥ रक्तहारिद्रहरितवर्णता नयनादिषु ॥ ६ ॥ नीललोहित
पीतानां वर्णानामविवेचनम् ॥ स्वप्ने इन्मादधर्मित्वं भवत्यस्मिन्भविष्यति ॥ ७ ॥ ऊर्द्ध्वं नासाक्षिकर्णास्यैर्मेढ्रयोनिगुदैरधः ॥ कुपितं रोमकूपैश्च सम
स्तैस्तत्प्रवर्त्तते ॥ ८ ॥ ऊर्द्ध्वं साध्यं कफाद्यस्मात्तद्विरेचनसाधितम् ॥ बह्वौषधानि पित्तस्य विरेको हि वरौषधम् ॥ ९ ॥ अनुबन्धी कफो यत्र तत्र
तस्यापि शुद्धिकृत् ॥ कषायाः स्वादवो यस्य विशुद्धौ श्लेष्मला हिताः ॥ १० ॥ कटुतिक्तकषाया वा ये निसर्गात्कफावहाः ॥ अधो याप्यञ्च नायु
ष्मांस्तत्प्रच्छर्दनसाधकम् ॥ ११ ॥ अल्पौषधञ्च पित्तस्य वमनं नावमौषधम् ॥ अनुबन्धि बलं यस्य शान्तपित्तनरस्य च ॥ १२ ॥ कषायश्च
हितस्तस्य मधुरा एव केवलम् ॥ कफमारुतसंस्पृष्टमसाध्यमुपनामनम् ॥ १३ ॥ असह्यं प्रतिलोमत्वादसाध्यादौषधस्य च ॥ न हि
संशोधनं किञ्चिदस्य च प्रतिलोमिनः ॥ १४ ॥ शोधनं प्रतिलोमञ्च रक्तपित्तेऽभिसर्जितम् ॥ एवमेवोपशमनं संशोधनमिहेष्यते ॥
॥ १५ ॥ संसृष्टेषु हि दोषेषु सर्वथा छर्दनं हितम् ॥ तत्र दोषोऽत्र गमनं शिवास्त्र इव लक्ष्यते ॥ १६ ॥ उपद्रवाश्च विकृतिं फलतस्तेषु साधितम् ॥
॥ १७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे रक्तपित्तनिदानं नामाष्टचत्वारिंशदुत्तरशततमोऽध्यायः ॥ १४८ ॥
धन्वन्तरिरुवाच ॥ आशुकारी यतः कासः स एवातः प्रवक्ष्यते ॥ पञ्च कासाः स्मृता वातपित्तश्लेष्मक्षतक्षयैः ॥ १ ॥ क्षयायोपेक्षिताः सर्वे
बलिनश्चोत्तरोत्तरम् ॥ तेषां भविष्यतां रूपं कण्ठे कण्डूररोचकः ॥ २ ॥ शुष्ककर्णास्यकण्ठत्वं तत्राधोविहितोऽनिलः ॥ ऊर्द्ध्वं प्रवृत्तः प्राप्यो
रस्तस्मिन्कण्ठे च संसृजन् ॥ ३ ॥ शिरास्रोतांसि संपूर्य्य ततोऽङ्गान्युत्क्षिपन्ति च ॥ क्षिपन्निवाक्षिणी क्लिष्टस्वरः पार्श्वे च पीडयन् ॥ ४ ॥ प्रव
र्त्तते सवक्रेण भिन्नकांस्योपमध्वनिः ॥ हृत्पार्श्वोरुशिरःशूलमोहक्षोभस्वरक्षयान् ॥ ५ ॥ करोति शुष्ककासञ्च महावेगरुजास्वनम् ॥ सोंगहर्षी कफं
नप्यहं कफात्सपक्वाल्पतां व्रजेत ॥ ६ ॥ पित्तात्पीताक्षिकत्वं च तिक्तास्यत्वं ज्वरो भ्रमः ॥ पित्तासृग्वमनं तृष्णा वैस्वर्य्यं धूमको मदः ॥७॥ प्रततं कास

वेगे च ज्योतिषामिव दर्शनम् ॥ कफादुरोऽल्परुङ्मूर्द्धि हृदयं स्तिमितं गुरु ॥ ८ ॥ कण्ठे प्रलेपमदजं पीनसच्छर्द्यरोचकाः ॥ रोमहर्षो घनास्निग्धं श्लेष्मणाश्च प्रवर्त्तनम् ॥ ९ ॥ युद्धाद्यैः साहसैस्तैस्तैः सेवितैरयथाबलम् ॥ उरस्यन्तःक्षतो वायुः पित्तेनानुगतो बली ॥ १० ॥ कुपितः कुरुते कासं कफं तेन सशोणितम् ॥ पीतं श्यावञ्च शुष्कञ्च ग्रथितं कुपितं बहु ॥ ११ ॥ ष्ठीवेत्कण्ठेन रुजता विभिन्नेनैव चोरसा ॥ सूचीभिरिव तीक्ष्णाभिस्तुद्यमानेन शूलिना ॥ १२ ॥ दुःखस्पर्शेन शूलेन भेदपीडाहितापिना ॥ पर्वभेदज्वरश्वासतृष्णावैस्वर्य्यकम्पवान् ॥ १३ ॥ पारावत इवोत्कूजन्पार्श्वशूली ततोऽस्य च ॥ कफाद्यैर्वमनं पक्तिबलवर्णश्च हीयते ॥ १४ ॥ क्षीणस्य सासृङ्मूत्रत्वं श्वासपृष्ठकटिग्रहः ॥ वायुप्रधानाः कुपिता धावतो राजयक्ष्मणः ॥ १५ ॥ कुर्वन्ति यक्ष्मायतने कासं ष्ठीवेत्कफं ततः ॥ पूतिपूयोपमं वीतं मिश्रं हरितलोहितम् ॥ १६ ॥ सुप्यते तुद्यत इव हृदयं पचतीव च ॥ अकस्मादुष्णशीतेच्छा बह्वाशित्वं बलक्षयः ॥ १७ ॥ स्निग्धप्रसन्नवक्त्रत्वं श्रीमद्दर्शननेत्रता ॥ ततोऽस्य क्षयरूपाणि सर्वाण्याविर्भवन्ति च ॥ १८ ॥ इत्येष क्षयजः कासः क्षीणानां देहनाशनः ॥ याप्यौ वा बलिनां तद्वत्क्षतजोऽपि नवौ तु तौ ॥ १९ ॥ सिध्येतामपि सामर्थ्यात्साध्यादौ च पृथक्क्रमः ॥ मिश्रा याप्याश्च ये सर्वे जरसः स्थविरस्य च ॥ २० ॥ कासश्वासक्षयच्छर्दिस्वरसादादयो गदाः ॥ भवन्त्युपेक्षया यस्मात्तस्मात्तांस्त्वरया जयेत् ॥ २१ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कासनिदानं नामैकोनपंचाशदुत्तरशततमोऽध्यायः ॥ १४९ ॥

धन्वन्तरिरुवाच ॥ अथातः श्वासरोगस्य निदानं प्रवदाम्यहम् ॥ कासवृद्ध्या भवेच्छ्वासः पूर्वैर्वा दोषकोपनैः ॥ १ ॥ आमातिसारवमथुविषपाण्डुज्वरैरपि ॥ रजोधूमानिलैर्मर्मघातादपि हिमाम्बुना ॥ २ ॥ क्षुद्रकस्तमकश्छिन्नो महानूर्द्ध्वश्च पंचमः ॥ कफोपरुद्धगमनपवनो विष्वगास्थितः ॥ ३ ॥ प्राणोदकान्नवाहीनि दुष्टस्रोतांसि दूषयन् ॥ उरःस्थः कुरुते श्वासमामाशयसमुद्भवम् ॥ ४ ॥ प्राग्रूपं तस्य हृत्पार्श्वशूलं प्राणविलोमता ॥ आनाहः शङ्खभेदश्च तत्रायासोऽतिभोजनैः ॥ ५ ॥ प्रेरितः प्रेरयन्क्षुद्रं स्वयं स समलं मरुत् ॥ प्रतिलोमं शिरा गच्छेदुदीर्य्य पवनः कफम् ॥ ६ ॥ परिगृह्य शिरोग्रीवमुरःपार्श्वे च पीडयन् ॥ कासं घुर्घुरकं मोहमरुचिम्पीनसं भृशम् ॥ ७ ॥ करोति तीव्रवेगश्च श्वासं प्राणोपतापिनम् ॥ प्रताम्येत्तस्य वेगेन ष्ठीवनान्ते क्षणं सुखी ॥ ८ ॥ कृच्छ्राच्छयानः श्वसिति निषण्णः स्वास्थ्यमर्हति ॥ उच्छ्रिताक्षो ललाटेन स्विद्यता भृशमार्त्तिमान् ॥ ९ ॥ विशुष्कास्यो मुहुःश्वासः काङ्क्षत्युष्णं सवेपथुः ॥ मेघाम्बुशीतप्राग्वातैः श्लेष्मलैश्च विवर्द्धते ॥ १० ॥ स याप्यस्तमकः साध्यो नरस्य बलिनो भवेत् ॥ ज्वरमूर्च्छावतः शीतैर्न शाम्येत्प्रथमस्तु सः ॥ ११ ॥ कासश्वसितवच्छीर्णमर्मच्छेदरुजार्दितः ॥ सस्वेदमूर्च्छः सानाहो बस्तिदाहविबोधवान् ॥ १२ ॥ अ

धोहृष्टिः द्रुताक्षस्तु स्निह्यद्वक्त्रैकलोचनः ॥ शुष्कास्यः प्रलपन्दीनो नष्टच्छायो विचेतनः ॥ १३ ॥ महतामहता दीनो नादेन श्वसिति क्वथन् ॥ उद्धूयमानः संरब्धो मत्तर्षभ इवानिशम् ॥ १४ ॥ प्रनष्टज्ञानविज्ञानो विभ्रान्तनयनाननः ॥ नेत्रे समाक्षिपन्बद्धमूत्रवर्चा विशीर्णवाक् ॥ १५ ॥ शुष्ककण्ठो मुहुश्चैव कर्णशंखशिरोऽतिरुक् ॥ यो दीर्घमुच्छ्वसित्यूर्द्ध्वं न च प्रत्याहरत्यधः ॥ १६ ॥ श्लेष्मावृतमुखश्रोत्रः क्रुद्धगन्धवहार्दितः ॥ ऊर्द्ध्वं समीक्षते भ्रान्तमक्षिणी परितः क्षिपन् ॥ १७ ॥ मर्मसु च्छिद्यमानेषु परिदेवी निरुद्धवाक् ॥ एते सिध्येयुरव्यक्ताः व्यक्ताः प्राणहरा ध्रुवम् ॥१८॥इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकाण्डे श्वासनिदाना० नाम पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५० ॥ धन्वन्तरिरुवाच ॥ हिक्कारोगनिदानञ्च वक्ष्ये सुश्रुत ! तच्छृणु ॥ श्वासैकहेतुः प्राग्रूपं संख्या प्रकृतिसंश्रया ॥ १ ॥ हिक्का भक्ष्योद्भवा क्षुद्रा यमला महतीति च ॥ गम्भीरा च मरुत्तत्र त्वरया युक्तिसेवितैः ॥ २ ॥ रूक्षतीक्ष्णखराशान्तैरन्नपानैः प्रपीडितः ॥ करोति हिक्कां श्वसनः मन्दशब्दां क्षुधानुगाम् ॥३॥ समं सन्ध्यान्नपानेन या प्रयाति च सान्नजा ॥ आयासात्पवनः क्रुद्धः क्षुद्रां हिक्कां प्रवर्त्तयेत् ॥ ४ ॥ जत्रुमूलात्परिसृता मन्दवेगवती हि सा ॥ वृद्धिमायासतो याति भुक्तमात्रे च मार्दवम् ॥ ५ ॥ चिरेण यमलैर्वेगैर्या हिक्का संप्रवर्त्तते ॥ परिणामान्मुखे वृद्धिं परिणामे च गच्छति ॥ ६ ॥ कम्पयन्ती शिरो ग्रीवां यमलां तां विनिर्दिशेत् ॥ प्रलापच्छर्द्यतीसारनेत्रविप्लुतजृम्भिता ॥ ७ ॥ यमला वेगिनी हिक्का परिणामवती च सा ॥ ध्वस्तभ्रूशंखयुग्मस्य श्रुतिविप्लुतचक्षुषः ॥ ८ ॥ स्तम्भयन्ती तनुं वाचं स्मृतिं संज्ञां च मुंचती ॥ तुदन्ती मार्गमाणस्य कुर्वती मर्मघट्टनम् ॥ ९ ॥ पृष्ठतो नमनं साध्यं महाहिक्का प्रवर्त्तते ॥ महाशूला महाशब्दा महावेगा महाबला ॥ १० ॥ पक्वाशयाच्च नाभेर्वा पूर्ववत्सा प्रवर्त्तते ॥ ११ ॥ तद्रूपा सा महत्कुर्य्याज्जृम्भणां गप्रसारणम् ॥ गम्भीरेण निदानेन गम्भीरा तु सुसाधयेत् ॥ १२ ॥ आद्ये द्वे वर्जयेदन्ये सर्वलिङ्गां च वेगिनीम् ॥ सर्वस्य संचितामस्य स्थविरस्य व्यवायिनः ॥ १३ ॥ व्याधिभिः क्षीणदेहस्य भक्तच्छेदकृशस्य च ॥ सर्वेऽपि रोगा नाशाय न त्वेवं शीघ्रकारिणः ॥ १४ ॥ हिक्काश्वासौ यथा तौ हि मृत्युकाले कृतालयौ ॥१५॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकांडे हिक्कानिदाना० नामैकपञ्चाशदुत्तरशततमोऽध्यायः ॥ ॥ १५१ ॥ धन्वन्तरिरुवाच ॥ अथातो यक्ष्मरोगस्य निदानं प्रवदाम्यहम् ॥ अनेकरोगानुगतो बहुरोगपुरोगमः ॥ १ ॥ राजयक्ष्मा क्षयः शोषो रोगराडिति कथ्यते ॥ नक्षत्राणां द्विजानाञ्च राज्ञोऽभूद्यदयं पुरा ॥ २ ॥ यच्च राजा च यक्ष्मा च राजयक्ष्मा ततो मतः ॥ देहौषधक्षयकृतेः क्षयस्तत्सम्भवाच्च सः ॥ ३ ॥ रसादिशोषणाच्छोषो रोगराडिति राजवत् ॥ साहसं वेगसंरोधः शुक्रौजःस्नेहसंक्षयः ॥ ४ ॥ अन्नपानविधित्यागश्चत्वारस्तस्य

हेतवः ॥ तैरुदीर्णोऽनिलः पित्तं व्यर्थं चोदीर्य्यं सर्वतः ॥ ५ ॥ शरीरसन्धिमाविश्य ताः शिराः प्रतिपीडयन् ॥ मुखानि स्रोतसां रुद्ध्वा तथैवातिविसृ
ज्य वा ॥ ६ ॥ मध्यमूर्द्धमधस्तिर्य्यग्व्यथां सञ्जनयेद्रुदः ॥ रूपं भविष्यतस्तस्य प्रतिश्यायो भृशं ज्वरः ॥ ७ ॥ प्रसेको मुखमाधुर्य्यं मार्दवं वह्निदे
हयोः ॥ लौल्यभावोऽन्नपानादौ शुचावशुचिवीक्षणम् ॥८॥ मक्षिकातृणकेशादिपातः प्रायोऽन्नपानयोः ॥ हृल्लासश्छर्दिररुचिरश्नतेऽपि बलक्षयः ॥९॥
पाण्योरुवक्षःपादास्यकुक्ष्यक्ष्णोरतिशुक्लता ॥ बाह्वोः प्रतोदो जिह्वायाः काये बैभत्स्यदर्शनम् ॥ १० ॥ स्त्रीमद्यमांसप्रियता घृणिता मूर्द्धगुण्ठनम् ॥
नखकेशास्थिवृद्धिश्च स्वप्ने चाभिभवो भवेत् ॥ ११ ॥ पतनं कृकलासाहिकपिश्वापदपक्षिभिः ॥ केशास्थितुषभस्मादितरौ समधिरोहणम् ॥ १२ ॥
शून्यानां ग्रामदेशानां दर्शनं शुष्यतोऽम्भसः ॥ ज्योतिर्दिवि दवाग्नीनां ज्वलतां च महीरुहाम् ॥ १३ ॥ पीनसश्वासकासं च स्वरमूर्द्धरुजोऽरुचिः ॥
ऊर्द्धंनिःश्वाससंशोषावधश्छर्दिश्च कोष्ठगे ॥१४॥ स्थिते पार्श्वे च रुग्बोधे सन्धिस्थे भवति ज्वरः ॥ रूपाण्यैकादशैतानि जायन्ते राजयक्ष्मणः ॥ १५ ॥
तेषामुपद्रवान्विद्यात्कण्ठध्वंसकरी रुजाः ॥ जृम्भांगमर्दनिष्ठीववह्निमान्द्यास्यपूतिता ॥ १६ ॥ तत्र वाताच्छिरःपार्श्वशूलनं सांगमर्दनम् ॥ कण्ठरोधः
स्वरभ्रंशः पित्तात्पादांसपाणिषु ॥ १७ ॥ दाहोऽतिसारोऽसृक्छर्दिर्मुखगन्धो ज्वरो मदः ॥ कफादरोचकच्छर्दिकासा अर्द्धांगगौरवम् ॥ १८ ॥
प्रसेकः पीनसः श्वासः स्वरभेदोऽल्पवह्निता ॥ दोषैर्मन्दानलत्वेन शोथलेपकफोल्बणैः ॥ १९ ॥ स्रोतोमुखेषु रुद्धेषु धातुषु स्वल्पकेषु च ॥
विदाहो मनसः स्थाने भवन्त्यन्ये ह्युपद्रवाः ॥ २० ॥ पच्यते कोष्ठ एवान्नमम्लयुक्तं रसैर्युतम् ॥ प्रायोऽस्य क्षयभागानां नैवान्नं चांगपुष्टये ॥ २१ ॥
रसो ह्यस्य न रक्ताय मांसाय कुरुते तु तत् ॥ उपष्टब्धः समन्ताच्च केवलं वर्त्तते क्षयी ॥ २२ ॥ लिंगेष्वल्पेष्वातिक्षीणं व्याधौ षट्कारणक्षयम् ॥
वर्जयेत्साधयेदेव सर्वेष्वपि ततोऽन्यथा ॥ २३ ॥ दोषैर्व्यस्तैः समस्तैश्च क्षयात्सर्वस्य मेदसः ॥ स्वरभेदो भवेत्तस्य क्षामो रूक्षश्चलः स्वरः ॥ २४ ॥
शुकवर्णाभकण्ठत्वं स्निग्धोष्णोपशमोऽनिलात् ॥ पित्तात्तालुगले दाहः शोषो भवति सन्ततम् ॥ २५ ॥ लिम्पन्निव कफैः कण्ठं मुखं घुरघुरायते ॥
स्वयं विरुद्धैः सर्वैस्तु सर्वलिंगैः क्षयो भवेत् ॥ २६ ॥ धूमायतीव चात्यर्थमुदेति श्लेष्मलक्षणम् ॥ कृच्छ्रसाध्याः क्षयाश्चात्र सर्वैरल्पश्च वर्जयेत्
॥ २७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे यक्ष्मनिदानं नाम द्विपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५२ ॥ धन्वन्तरि
रुवाच ॥ अरोचकनिदानन्ते वक्ष्येऽहं सुश्रुताधुना ॥ अरोचको भवेद्दोषैर्जिह्वाहृदयसंश्रयैः ॥ १ ॥ ॥ सन्निपातेन मनसः सन्तापेन च पञ्चमः ॥
कषायतिक्तमधुरं वातादिषु मुखं क्रमात् ॥ २ ॥ सर्वं वीतरसं शोकक्रोधादिषु यथा मनः ॥ छर्दिर्दोषैः पृथक्सर्वैर्दुष्टैरन्यैश्च पंचमः ॥ ३ ॥ उदानो

ऽधिकृतान्दोषान्सर्वं सन्ध्यर्हमस्यति ॥ आशु क्लेशोऽस्य लावण्यप्रसेकारुचयः क्रमात् ॥ ४ ॥ नाभिपृष्ठं रुजत्याशु पार्श्वे चाहारमुत्क्षिपेत् ॥ ततो विच्छिन्नमल्पाल्पकषायं फेनिलं वमेत् ॥ ५ ॥ शब्दोद्गारयुतः कृच्छ्रमनुकृच्छ्रेण वेगवत् ॥ कासास्यशोषकं वातात्स्वरपीडासमन्वितम् ॥ ६ ॥ पित्तात्क्षारोदकनिभं धूम्रं हरितपीतकम् ॥ सासृगम्लं कटुतिक्तं तृण्मूर्च्छादाहपाकवत् ॥ ७ ॥ कफात्स्निग्धं घनं पीतं श्लेष्मतस्तु समाक्षिकम् ॥ मधुरं लवणं भूरि प्रसक्तं लोमहर्षणम् ॥ ८ ॥ मखश्वयथुमाधुर्य्यतन्द्राहृल्लासकासवान् ॥ सर्वैर्लिङ्गैः समापन्नस्त्याज्यो भवति सर्वथा ॥ ९ ॥ सर्वं यस्य च विद्विष्टं दर्शनश्रवणादिभिः ॥ वातादिनैव संक्रुद्धकृमिदुष्टान्नजे गदे ॥ शूलवेपथुहृल्लासो विशेषात्कृमिजे भवेत् ॥ १० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽरोचकनिदाना० नाम त्रिपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५३ ॥

धन्वन्तरिरुवाच ॥ हृद्रोगादिनिदानं ते वक्ष्येऽहं सुश्रुताधुना ॥ कृमिहृद्रोगलिंगैश्च स्मृताः पञ्च तु हृद्गताः ॥ १ ॥ वातेन शून्यतात्यर्थं भुज्यते रोरुदीति च ॥ भिद्यते शुष्यते स्तब्धं हृदयं शून्यता भ्रमः ॥ २ ॥ अकस्माद्दीनता शोको भयं शब्देऽसहिष्णुता ॥ वेपथुर्वेपनान्मोहः श्वासरोधोऽल्पनिद्रता ॥ ३ ॥ पित्तात्तृष्णा श्रमो दाहो स्वेदोऽम्लकफजः क्रमः ॥ छर्दनं ह्यम्लपित्तस्य धूमकल्पितको ज्वरः ॥ ४ ॥ श्लेष्मणा हृदयं स्तब्धं भारिकं साश्मगर्भवत् ॥ कासास्थिसादनिष्ठीवनिद्रालस्यारुचिज्वराः ॥ ५ ॥ हृद्रोगे हि त्रिभिर्दोषैः कृमिभिः श्यावनेत्रता ॥ तमः प्रवेशो हृल्लासः शोथः कण्डूः कफस्रुतिः ॥ ६ ॥ हृदयं सततं चात्र क्रकचेनेव दीर्य्यते ॥ चिकित्सदामयं ( रं ) घोरं तच्छीघ्रं शीघ्रमारिणम् ॥ ७ ॥ वातात्पित्तात्कफात्तृष्णा सन्निपाताद्बलक्षयः ॥ षष्ठी स्यादुपसर्गाच्च वातपित्ते च कारणम् ॥ ८ ॥ सर्वेषु तत्प्रकोपो हि सम्यग्धातुप्रशोषणात् ॥ सर्वदेहभ्रमोत्कम्पतापहृद्दाहमोहकृत् ॥ ९ ॥ जिह्वामूलगलक्लोमतालुतोयवहाः शिराः ॥ संशोष्य तृष्णा जायन्ते तासां सामान्यलक्षणम् ॥ १० ॥ मुखशोषो जलातृप्तिरन्नद्वेषः स्वरक्षयः ॥ कण्ठोष्ठतालुकार्कश्याज्जिह्वानिष्क्रमणे क्लमः ॥ ११ ॥ प्रलापश्चित्तविभ्रंशो ह्युद्गाराद्यस्तथामयः ॥ मारुतात्क्षामता दैन्यं शंखभे ( तो ) दः शिरोभ्रमः ॥ १२ ॥ गन्धाज्ञानास्यवैरस्यश्रुतिनिद्राबलक्षयाः ॥ शीताम्लफेनवृद्धिश्च पित्तान्मूर्च्छास्यतिक्तता ॥ १३ ॥ रक्तेक्षणत्वं सततं शोषो दाहोऽतिधूमकः ॥ कफो रसाद्विकुपितस्तोयवाहिषु मारुतः ॥ १४ ॥ स्रोतस्तु सकफं तेन पङ्कवच्छोष्यते ततः ॥ शूकैरिवाचितः कण्ठो निद्रा मधुरवक्त्रता ॥१५॥ आध्मानं शिरसो जाड्यं स्तैमित्यच्छर्द्यरोचकम् ॥ आलस्यमविपाकश्च यः स स्यात्सर्वलक्षणः॥१६॥

१ भ्रतात्कृष्णु० । २ अग्निमान्द्योस्य वैकृतम्० । ३ सर्वलिङ्गादिभिर्दोषै० । ४ शीघ्रकारणम्० । ५ सर्वाङ्गुत० ।

आमोद्भवाच्च रक्तस्य संरोधाद्वातपित्तता ॥ उष्णाक्रान्तस्य सहसा शीताम्भो भजतस्तृषा ॥ १७ ॥ उष्णादूर्ध्वं गतः कोष्ठं कुर्य्याद्वै पित्तजैव सा ॥ या च पानातिपानोत्था तीक्ष्णाग्ने स्नेहपाकजा ॥ १८ ॥ स्निग्धकट्वम्ललवणभोजनेन कफोद्भवा ॥ तृष्णारसक्षयोक्तेन लक्षणेन क्षयात्मिका ॥ ॥ १९ ॥ शोषमोहज्वराद्यन्यदीर्घरोगोपसर्गतः ॥ या तृष्णा जायते तीव्रा सोपसर्गात्मिका स्मृता ॥ २० ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकाण्डे आम्लपित्तनिदाना० नाम चतुःपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५४ ॥ धन्वन्तरिरुवाच ॥ वक्ष्ये मदात्ययादेश्च निदानं मुनिभाषितम् ॥ तीक्ष्णाम्लरूक्षसूक्ष्माम्लव्यवायासुकरं लघु ॥ १ ॥ विकाशि विशदं मद्यं मेदसोऽस्माद्विपर्य्ययः ॥ तीक्ष्णोदयाश्च दिव्युक्ताश्चित्तोपप्लविनो गुणाः ॥ २ ॥ जीवितान्ताः प्रजायन्ते विषेणोत्कर्षवर्तिना ॥ तीक्ष्णादिभिर्गुणैर्मद्यं मान्द्यदीनोजसो गुणान् ॥ ३ ॥ दशभिर्गुणैः संक्षोभ्यं चेतो नयति चाक्रियम् ॥ आद्ये मदे द्वितीयेऽपि प्रम ( मो ) दायतने स्थितः ॥ ४ ॥ दुर्विकल्पहतो मूढः सुखमित्यभिमुच्यते ॥ मध्यमोत्तमयोः सन्धिं प्राप्य राजासनो मदः ॥ ५ ॥ निरंकुश इव व्यालो न किञ्चिन्नाचरेत्ततः ॥ इयं भूमिरवाच्यानां दौःशील्यस्येदमास्पदम् ॥६॥ एकोऽयं बहुमार्गायाः दुर्ग ( र्म ) तेर्देशकः परम् ॥ निश्चेष्टः सन्नवाक्शेते तृतीयेऽत्र मदे स्थितः ॥ ७ ॥ मरणादपि पापात्मा गतः पापतरां दशाम् ॥ धर्माधर्मं सुखं दुःखं मानानर्थं हिताहितम् ॥ ८ ॥ न वेद शोकमोहार्त्तं शोष ( क ) मोहादिसंपुतः ॥ सोन्मादभ्रमपूर्च्छायां सापस्मारः पतत्यधः ॥९॥ नाति माद्यन्ति बलिनः कृताहारा महाशनाः ॥ वातात्पित्तात्कफात्सर्वैर्भवेद्रोगो मदात्ययः ॥१०॥ सामान्यलक्षणं तेषां प्रमोहो हृदयव्यथा ॥ विभेदः प्रसभं तृष्णा सौम्यो ग्लानिर्ज्वरोऽरुचिः ॥ ११ ॥ पुरोविबन्धस्तिमिरं कासः श्वासः प्रजागरः ॥ स्वेदोऽतिमात्रं विष्टम्भः श्वयथुश्चित्तविभ्रमः ॥ १२ ॥ स्वप्नेनैवाभिभवति न चोक्तश्च स भाषते ॥ पित्ताद्दाहज्वरः स्वेदो मोहो नित्यं च विभ्रमः ॥ १३ ॥ श्लेष्मणश्छर्दिर्हृल्लासो निद्रा चोदरगौरवम् ॥ सर्वजे सर्वलिङ्गत्वं ज्ञात्वा मद्यं पिबेत्तु यः ॥ १४ ॥ सहसा रुचिरं चान्यतरध्वंसकशोषिणौ ॥ भवेतां ? मारुतात्कष्टाद्भवेत्तस्य विशेषतः ॥ १५ ॥ ध्वंसकश्लेष्मनिष्ठीवाः कण्ठशोषोऽतिनिद्रता ॥ शब्दासहत्वं तच्चित्तविक्षेपोऽङ्गे हि वातरुक् ॥ १६ ॥ हृत्कण्ठरोगः सम्मोहः श्वासतृष्णावमिज्वराः ॥ निवर्तेद्यस्तु मद्येभ्यो जितात्मा बुद्धिपूर्वकृत् ॥ १७ ॥ विकारैः क्लिश्यते जातु न स शारीरमानसः ॥ रजोमोहहिताहारपरस्य स्युस्त्रयो गदाः ॥ १८ ॥

१ कुर्य्याद्वै पित्तजेरसा० । २ इन्द्रियाणि च संक्षोभ्य चे० । ३ नयति विक्रियाम्० । ४ मध्यपाने मतिर्यस्य० । ५ सौम्यामयोज्वरो० । ६ स्वप्नैर्भ्रमस्तु पतति० ७ नित्यं च हृद्भ्रमः० ।

वसासृक्क्लेदनावाहिस्रोतोरोधैःसमुद्भवाः ॥ मदमूर्च्छापसंन्यासा यथोत्तरबलोद्भवाः ॥ १९ ॥ मदोऽत्र दोषैः सर्वैस्तु रक्तमद्यविषैरपि ॥ शक्त्यान
न्त्याद्रुताभासश्चलेश्छलितचेष्टितः ॥ २० ॥ रूक्षश्यामारुणतनुर्मद्ये वातोद्भवे भवेत् ॥ पित्तेन क्रोधनो रक्तपीताभः कलहप्रियः ॥ २१ ॥ स्वप्नेऽसम्ब
द्धवाक्यादिः कफाद्ध्यानपरो हि सः ॥ सर्वोत्थसन्निपातेन रक्तस्तम्भाङ्गदूषणम् ॥ २२ ॥ पित्तलिंगत्वमाद्येन विकृतेहा स्वराज्ञता ॥ विसत्कम्पोति
निद्रा च सर्वेभ्योऽभ्यधिकं श्रमः ॥ २३ ॥ लक्षयेल्लक्षणोत्कर्षाद्वातादीञ्छोणितादिषु ॥ अरुणं नीलकृष्णं वा सम्प्रविश्यन्विशेत्तमः ॥ २४ ॥ शीघ्रं
च प्रतिबुध्येत हृत्पीडा वेपथुर्भ्रमः ॥ कासः श्यावारुणा च्छाया मूर्च्छायां मारुतात्मकः ॥ २५ ॥ पित्तेन रक्तं पीतं वा नभः पश्यन्विशेत्तमः ॥ विबु
ध्येत च सस्वेदो दाहतृष्णोपपीडितः ॥ २६ ॥ भिन्नवत्पीतनीलाभो रक्तनीलाकुलेक्षणः ॥ कफेन मेघसंकाशं पश्यत्याकाशमाविशेत् ॥ २७ ॥
तमश्चिराच्च बुध्येत हृदुरःसुप्रसेकवान् ॥ गुरुभिस्तिमितै ( रै ) रंगै राजधर्मावबन्धवान् ( वत् ) ॥ २८ ॥ सर्वाकृतिस्त्रिभिर्दोषैरपस्मार इवापरः ॥
पातयत्याशु निश्चेष्टं विना बीभत्सचेष्टितैः ॥ २९ ॥ दोषैस्तु मदमूर्च्छायां कृतवेगेषु देहिनाम् ॥ स्वयमेवोपशाम्यन्ति संन्यासेनौषधैर्विना ॥ ३० ॥
वाग्देहमनसां चेष्टामाक्षिप्यातिबलाऽबलाः ॥ ससन्यासं निपतिताः प्राणाघातनसंश्रयाः ॥ ३१ ॥ भवन्ति तेन पुरुषाः काष्ठभूता मृतोपमाः ॥ म्रियेत शीघ्रं
शीघ्रं चेच्चिकित्सा न प्रयुज्यते ॥ ३२ ॥ अगाधे ग्राहबहुले सलिलौघ इवार्णवे ॥ संन्यासे विनिमज्जन्तं नरमाशु निवर्त्तयेत् ॥ ३३ ॥ मदमानरोषतोष
प्रवृत्तिभिरितस्ततः ॥ युक्तायुक्तं च समं युक्तिं युङ्क्ते न मद्येन ॥ ३४ ॥ बलकासदेशपात्रं प्रकृतिसहतामथवा वयांसि? ॥ प्रविभज्यात्तनुरूपं पिबति
ततः पिबत्यमृत ॥ ३५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मदात्ययादिनिदानं नाम पञ्चपञ्चाशदुत्तरशततमोऽध्यायः
॥ १५५ ॥ धन्वन्तरिरुवाच ॥ अथार्शसां निदानं च व्याख्यास्यामि च सुश्रुत ! ॥ सर्वदा प्राणिनां मांसे कीलकाः प्रभवन्ति ये ॥ १ ॥
अर्शांसि तस्मादुच्यन्ते गुदमार्गनिरोधनात् ॥ दोषस्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन् ॥ २ ॥ मांसांकुरानपानादौ कुर्वन्त्यर्शांसि ताञ्जगुः ॥
सहजन्मान्तरोत्थेन भेदो द्वेधा समासतः ॥ ३ ॥ शुष्कार्द्रावाविभेदाश्च गुदस्थानानुसंश्रयाः ॥ अर्द्धपञ्चांगुलिस्तस्मिंस्तिस्रोऽध्यर्द्धांगुलिस्थिताः
॥ ४ ॥ वाल्यंप्रवाहिणी तासामन्त्रमध्ये विसर्जिनी ॥ बाह्यासंवरणे तस्या गुदादौ बहिरंगुले ॥ ५ ॥ सार्द्धांगुलप्रमाणेन रोमाण्यत्र ततः परम् ॥
तत्र हेतुः सहोत्थानां बाल्ये बीजोपतप्तता ॥ ६ ॥ अर्शसां बीजसृष्टिस्तु मातापित्रपचारतः ॥ देवतानां प्रकोपे हि सान्निपातस्य चान्यतः ॥ ७ ॥

१ स्रोतोवाहिसमु० । २ सश्चैलज्वलितचेष्टितः । ३ इवातटे० । ४ सूक्ष्मलावा० । ५ रक्तमवा० । ६ मातापित्रुपचा० । ७ दैवतायताभ्यांकोपो हि० ? ।

असाध्या एवमाख्याताः सर्वे रोगाः कुलोद्भवाः ॥ सहजानि विशेषेण रूक्षदुर्दर्शनानि तु ॥ ८ ॥ अन्तर्मुखानि पाण्डूनि दारुणोपद्रवाणि च ॥ योज्यानि च पृथग्दोषसंसर्गनिचयात्स्वतः ॥ ९ ॥ शुष्काणि वातश्लेष्मभ्यामार्द्राणि त्वस्य पित्ततः ॥ दोषप्रकोपहेतुस्तु प्रागुक्तेवस्त्रसादिनि ॥ १० ॥ अग्नौ मलेऽतिनिचिते पुनश्चायं (ति) व्यवायतः ॥ पानसंक्षोभविषमकठिनक्षुद्रकाशनात् ॥ ११ ॥ बस्तिनेत्रगलोष्ठोत्थतलभेदादिघट्टनात् ॥ भृशशीताम्बुसंस्पर्शप्रतताप्रवाहणात् ॥ १२ ॥ गतमूत्रशकृद्वेगधारणात्तदुदीरणात् ॥ जुगुप्सातीसारमेव ग्रहणी सोऽप्युपद्रवः ॥ १३ ॥ कर्षणाद्विषमादेश्च चेष्टाभ्यो योषितां पुनः ॥ आमगर्भप्रपतनाद्गर्भवृद्धिप्रपीडनात् ॥ १४ ॥ ईदृशैश्चापरैर्वायुरपानः कुपितो मले ॥ पायोर्वलीषु सद्वृत्तिभास्वन्निःपूर्णमूर्त्तिषु ॥ १५ ॥ जायन्तेऽर्शांसितु तत्पूर्वं लक्षणं वह्निमन्दता ॥ विष्टम्भः सास्थिसदनं पिण्डि (ष्ट) कोद्वेष्टनं भ्रमः ॥ १६ ॥ सान्द्रोत्थोनेत्रयोः शोथः शकृद्भेदोऽथ वा ग्रहः ॥ मारुतः पुरतो मूढः प्रायो नाभेरधश्चरन् ॥ १७ ॥ सरक्तः परिकृन्तंश्च कृच्छ्रादाकुञ्चति श्वसन् ॥ अन्त्रकूजनमाटोपः क्षारितोद्गारभूरिता ॥ १८ ॥ प्रभूतमूत्रमल्पा विडश्रद्धा धूम्रकोष्ठकः ॥ शिरःपृष्ठोरसां शूलमालस्यं भिन्नवर्चसम् ॥ १९ ॥ इन्द्रियार्थेषु लौल्यं च क्रोधो दुःखोपचारतः ॥ आशङ्का ग्रहणी शोथः पाण्डुगुल्मोदरेषु च ॥ २० ॥ एतान्येव विवर्द्धन्ते जातेष्वहतनामसु ॥ निवर्त्तमानो मानो हि तैरधोमार्गरोधतः ॥ २१ ॥ क्षोभयेदनिलानन्यान् सर्वेन्द्रियशरीगान् ॥ तथा मूत्रशकृत्पित्तकफान्वायुश्च शोषयन् ॥ २२ ॥ मुष्णात्यग्निं ततः सर्वे भवन्ति प्रायशोऽर्शसः ॥ कृशो भृशं हतोत्साहो दीनः क्षामोऽथ निष्प्रभः ॥ २३ ॥ असारी विगतच्छायो जन्तुदग्ध इव द्रुमः ॥ कृच्छ्रैरुपद्रवैर्ग्रस्तो यक्ष्मोक्तैर्मर्मपीडनैः ॥ २४ ॥ तथा काशपिपासास्यवैरस्यश्वासपीनसैः ॥ क्लमाङ्गभङ्गवमथुक्षवथुश्वयथुज्वरैः ॥ २५ ॥ क्लैव्यबाधिर्य्यस्तैमित्यशर्करापरिपीडितः ॥ क्षामो भिन्नस्वरो ध्यायन्मुहुः ष्ठीवन्नरोचकी ॥ २६ ॥ सर्वपर्वास्थिहृन्नाभीपायुवंक्षणशूलवान् ॥ गुदेन स्रवता पित्तं बलाकोदरसन्निभम् ॥ २७ ॥ विशुष्कं चैव मुक्ताग्रं पक्कामं चान्तरान्तरम् ॥ पाण्डुपित्तं हारिद्राक्तं पिच्छिलं चोपवेश्यते ॥ २८ ॥ गुदांकुरा बह्वनिलाः शुष्काश्चिमचिमान्विताः ॥ पीनाङ्गारारुणाः स्तब्धा विषमाः परुषाकराः ॥ २९ ॥ मिथो विसदृशा वक्रास्तीक्ष्णा विस्फुटि (रि) ताननाः ॥ शिंम्बीखर्जूरकर्कन्धूकार्पासफलसन्निभाः ॥ ३० ॥ केचित्कदम्बपुष्पाभाः केचित्सिद्धार्थकोपमाः ॥ शिरः पार्श्वांसजंघोरुवंक्षणाद्याधि

१ घोढार्शांसि० । २ सारमामग्रहिणी० । ३ त्पित्तकफस्थानानि शोष० । ४ सर्वमर्मास्थि० । ५ गुदानिलाव० । ६ विषमाः परुषस्वराः पा० । पुरुषाषराः पा० । ७ विम्बखर्जूर० ।

कव्यथाः ॥ ३१ ॥ क्षवथूद्गारविष्टम्भहृद्ग्रहारोचकप्रदाः ॥ कासश्वासाग्निवैषम्यकर्णनादभ्रमावहाः ॥ ३२ ॥ तैरार्त्तो ग्रथितं स्तोकं सशब्दं सप्रवाहि
कम् ॥ रुक्फेनपिच्छानुगतं विबद्धमुपवेश्यते ॥ ३३ ॥ कृष्णत्वग्बद्धविण्मूत्रनेत्रवक्त्रश्च जायते ॥ गुल्मप्लीहोदराष्ठीलासंभवस्तस्य चैव हि ॥ ३४ ॥
पित्तोत्तरा नीलमुखा रक्तपीतासितप्रभाः ॥ तन्वस्रस्राविणो विश्रास्तनवो मृदवः श्लथाः ॥ ३५ ॥ शुकजिह्वा यकृत्खण्डजलौकावक्त्रसन्निभाः ॥
दाहशो ( ष ) कज्वरस्वेदतृण्मूर्च्छारुचिमोहदाः ॥ ३६ ॥ सोष्माणो द्रवनीलोष्णपीतरक्तामवर्चसः ॥ यवमध्या हरित्पीतहारिद्रत्वङ्नखादयः ॥ ३७ ॥
श्लेष्मोल्बणा महामूला घना मन्दरुजः सिताः ॥ उत्सन्नोपचितास्निग्धस्तब्धवृत्तगुरुस्थिराः ॥ ३८ ॥ पिच्छिलाः स्तिमिताः श्लक्ष्णाः कण्ड्वाढ्याः
स्पर्शनप्रियाः ॥ करीरपनसास्थ्याभास्तथा गोस्तनसन्निभाः ॥ ३९ ॥ वंक्षणानाहिनः पायुबस्तिनाभिविकर्तनाः ॥ सकाशश्वासहृल्लासप्रसेकारुचिपी
नसाः ॥ ४० ॥ मेहकृच्छ्रशिरोजाड्यशिशिरक्षारकारिणः ॥ क्लैब्याग्निमार्दवच्छर्द्यतीसारादिविकारदाः ॥ ४१ ॥ वसाभसकफप्राज्यपुरीषासृक्प्रवाहिकाः ॥
न स्रवन्ति न भिद्यन्ते पाण्डुस्निग्धत्वगादयः ॥ ४२ ॥ संसृष्टलिङ्गात् संसर्गनिचयात्सर्वलक्षणाः ॥ रक्तोल्बणा गुदे कीलाः पीताकृतिसमन्विताः
॥ ४३ ॥ वटप्ररोहसदृशाः गुञ्जाविद्रुमसन्निभाः ॥ तेऽत्यर्थं दुष्टमुष्णं च गाढविष्टंभपीडिताः ॥ ४४ ॥ स्रवन्ति सहसा रक्तं तस्य चातिप्रवृत्तितः ॥
भेकाभः पीड्यते दुःखैः शोणितक्षयसम्भवैः ॥ ४५ ॥ हीनवर्णबलोत्साहो हतौजाः कलुषेन्द्रियः ॥ मुद्गकोद्रवजंबीरकरीरचणकादिभिः ॥ ४६ ॥
रूक्षैः संग्राहिभिर्वायुर्विट्स्थाने कुपितो बली ॥ अधोवहानि स्रोतांसि संरुध्याधः प्रशोषयन् ॥ ४७ ॥ पुरीषं वातविण्मूत्रसंगं कुर्वीत दारुणम् ? ॥
तेन तीव्रा रुजा कोष्ठपृष्ठहृत्पार्श्वगा भवेत् ॥ ४८ ॥ आध्मानमुदरे विष्टा हृल्लासपरिकर्तने ॥ बस्तौ च सुतरां शूलो गण्डश्वयथुसंभवः ॥ ४९ ॥
पवनस्योर्ध्वगामित्वात्ततश्छर्द्यरुचिज्वराः ॥ हृद्रोगग्रहणीदोषमूत्रसंगप्रवाहिकाः ॥ ५० ॥ बाधिर्यातिशिरःश्वासाशिरोरुक्काशपीनसाः ? ॥ मनोवि
कारस्तृट्श्वासापित्तगुल्मोदरादयः ॥ ५१ ॥ एते च वातजा रोगा जायन्ते भृशदारुणाः ॥ दुर्नामामृत्यूदावर्तपरमोऽयमुपद्रवः ॥ ५२ ॥ वाताभि
भूतकोष्ठानां तैर्विनापि विजायते ॥ सहजानि तु दोषाणि यानि चाभ्यन्तरे वलौ ॥ ५३ ॥ स्थितानि तान्यसाध्यानि याप्यन्तेऽग्निबलादिभिः ॥
द्वन्द्वजानि द्वितीयायां वला यान्याश्रितानि च ॥ ५४ ॥ कृच्छ्रसाध्यानि तान्याहुः परिसंवत्सराणि च ॥ बाह्यायां तु वलौ जातान्येकदोषोल्ब

१ हृद्गेगारोच० । २ द्रवतालोष्ण पी० । ३ यत्र मध्या हरेत्पीडांते हरिद्रत्वङ्नखा० । ४ स्थिराः । ५ सोत्सक्षापिप्रसन्नि० । ६ गाढविद्रूम० । ७ भेकाभः० । ८ हृल्लासप
रिवर्तनात्० । ९ परमं वत्सराणि० ।

णानि च ॥ ५९ ॥ अर्शांसि सुखसाध्यानि न चिरोत्पत्तिकानि च ॥ मेढ्रादिष्वपि वक्ष्यन्ते यथास्वं नाभिजानि तु ॥ ५६ ॥ गण्डूपदस्य रूपाणि पिच्छिलानि मृदूनि च ॥ व्यानो गृहीत्वा श्लेष्माणं करोत्यर्शस्त्वचो बहिः ॥ ५७ ॥ कीलोपमं स्थिरखरं चर्मकीलं च तद्विदुः ॥ वातेन तोदः पारुष्यं पित्तादसितवक्त्रता ॥ ५८ ॥ श्लेष्मणः स्निग्धता तस्य ग्रथितत्वं सवर्णता ॥ अर्शसां प्रशमे यत्नमाशु कुर्वीत बुद्धिमान् ॥ तान्याशु हि गदं धा ( का ) र्य्यं कुर्य्युर्बद्धगुदोदरम् ॥ ५९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽर्शोनिदाना० नाम षट्पञ्चाशदुत्तरशततमोऽध्यायः ॥ १५६ ॥

॥ धन्वन्तरिरुवाच ॥ अतीसारग्रहण्योश्च निदानं वच्मि सुश्रुत ॥ दोषैर्व्यस्तैः समस्तैश्च भयाच्छोकाच्च षड्विधः ॥ १ ॥ अतीसारः स सुतरां जायतेऽत्यम्बुपानतः ॥ विशुष्कान्नवसास्नेहतिलपिष्टविरूढकैः ॥ २ ॥ मद्यरूक्षातिमात्रादिरसातिस्नेहविभ्रमात् ॥ कृमिदोषविरोधाच्च तद्विधैः कुपितोऽनिलः ॥ ३ ॥ विस्रंसयत्यधोवातं हत्वा तेनैव चानलम् ॥ व्यापाद्यान्नशकृत्कोष्ठपुरीषद्रवतादयः ॥ ४ ॥ प्रकल्पतेऽतीसारस्य लक्षणं तस्य भाविनः ॥ भेदो हृद्गुदकोष्ठेषु गात्रस्वेदो मलग्रहः ॥ ५ ॥ आध्मानमविपाकश्च तत्र वातेन विज्वरम् ॥ अल्पाल्पं शब्दशून्याढ्यं विड् ( ब ) द्धमुपवेश्यते ॥ ६ ॥ रूक्षं सफेनमच्छं च गृहीतं व मुहुर्मुहुः ॥ तथा दग्धगदाभासं पिच्छिलं परिकर्त्तयन् ॥ ७ ॥ सशुष्कभ्रष्टपायुश्च हृष्टरोमा विनिश्वसन् ॥ पित्तेन पीतमशितं हारिद्रं शाद्वलप्रभम् ॥ ८ ॥ सरक्तमतिदुर्गन्धं तृण्मूर्च्छास्वेददाहवान् ॥ सशूलपायुसन्तापपाकवाञ्छ्लेष्मणा घनम् ॥ ९ ॥ पिच्छिलं तन्त्रानुसारमल्पाल्पं सप्रवाहिकम् ॥ सरोमहर्षः सोत्क्लेशो गुरुबस्तिगुदोदरः ॥ १० ॥ कृतेऽप्यकृतसञ्ज्ञश्च सर्वात्मा सर्वलक्षणः ॥ भयेन क्षुभिते चित्ते शायिते द्रावयेत्स ( च्छ ) कृत् ॥ ११ ॥ वायुस्ततो निवार्य्येत क्षिप्रमुष्णं द्रवं प्लवम् ॥ वातपित्ते समं लिङ्गमाहुस्तद्वच्च शोकतः ॥ १२ ॥ अतीसारः समासेन द्वेधा सामो निरामकः ॥ सासृग्जातं रसद्रोगो गौरवादप्सु मुञ्चति ? ॥ शकृद्दुर्गन्धमाटोपविष्टम्भार्त्तिप्रसेकिनः ॥ १३ ॥ विपरीतो निरामस्तु कफात्कोऽपि न मज्जति ॥ अतीसारेषु यो नातियत्नवान् ग्रहणीगदः ॥ १४ ॥ तस्य स्यादग्निनिर्वाणकार्यैरत्यर्थसञ्चितैः ॥ सामं शकृन्निरामं वा जीर्णे येनातिसार्य्यते ॥ १५ ॥ सोऽतिसारोऽतिसरणादाशुकारीःस्वभावतः ॥ सामंशीर्णमजीर्णेन जीर्णे पक्कं तु नैव च ॥ १६ ॥ चिरकृद् ग्रहणीदोषः सञ्चयांश्चोपवेशयेत् ॥ अकस्माद्द्रारसुवैधमकस्मा

१ पित्तादिहितरक्तता० । २ कुर्युरूर्ध्वगुदो० । ३ कृशरूक्ष्यानिवार्थतिलपिष्टाधिरूढकैः० । ४ क्रिमिभ्यो वेग० । ५ त्यधोरक्तं हत्वा० । ६ चालनम्० । ७ सेनमच्छं च० । ८ अनुसारो बाल्यार्थम० । ९ गुरुरन्ति । १० द्रवं लवम्० पा० । ११ कफात्कोलोपिम० ।

त्सान्धिनीमुहुः ? ॥ स चतुर्द्धा पृथग्दोषैः सन्निपाताच्च जायते ॥ १७ ॥ प्राग्रूपाङ्गस्य सदनं चिरात्पवनअल्पकः ॥ प्रसेको वक्त्रवैरस्यमरुचिस्तृट्श्रमो भ्रमः ॥१८॥ आब (न) द्धोदरता छर्दिः कर्णकेऽप्यनुकूजकम् ॥ सामान्यलक्षणं कार्श्यं वमक स्तमको ज्वरः ॥ १९ ॥ मूर्च्छा शिरोरुविष्टम्भः श्वयथुः करपादयोः ॥ तन्द्रानिलात्तालुशोषस्तिमिरं कर्णयोः स्वनः ॥ २० ॥ पार्श्वोरुवङ्क्षणग्रीवारुजा तीक्ष्णविषूचिका ॥ रुग्णेषु वृद्धिः सर्वेषु क्षुत्तृष्णापरिहर्त्रिका ॥२१॥ जीर्णेजीर्य्यंति चाध्मानं भुक्ते स्वास्थ्यं समश्नुते ॥ वाताद्धृद्रोगगुल्मार्शःप्लीहपाण्डुरशङ्किताः ॥ २२ ॥ चिराद्दुःखं द्रवं शुष्कं तुन्दारं शब्दफेनवत् ॥ पुनःपुनः सृजेद्वर्चः पायुरुच्छ्वासकासवान् ॥ २३ ॥ पीतेन पीतनीलाभं पीताभं सृजति द्रवम् ॥ पूत्यम्लोद्गारहृत्कण्ठदाहारुचितृडर्दितः ॥२४॥ श्लेष्मणा पच्यते दुःखे मनश्छर्दिररोचकः ॥ आस्योपदाहनिष्ठीवकासहृल्लासपीनसाः ॥२५॥ हृदयं मन्यते स्त्यानमुदरं स्तिमितं गुरु ॥ उद्गारो दुष्टमधुरः सदनं सप्रहर्षणम् ॥ २६ ॥ सम्भिन्नश्लेष्मसंश्लिष्टगुरुचाम्लैः (वर्चः) प्रवर्त्तनम् ॥ अकृशस्यापि दौर्बल्यं सर्वजे सर्वदर्शनम् ॥२७॥ विभागेऽङ्गस्य ये प्रोक्ता पिपासाद्यास्त्रयो मलाः ॥ तेऽप्यस्य ग्रहणीदोषाः समन्तेष्वस्ति कारणम्॥२८॥वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दरम् ॥ अर्शांसि ग्रहणी त्यष्टौ महारोगाः सुदुस्तराः ॥२९॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेतिसारनिदान० नाम सप्तपञ्चाशदुत्तरशततमोऽध्यायः ॥१५७॥ धन्वन्तरिरुवाच ॥ अथातो मूत्रघातस्य निदानं शृणु सुश्रुत ॥ बस्तिबस्तिशिरामेढ्रकटीवृषणपायु च ॥ १ ॥ एकसंवहनाः प्रोक्ता गुदास्थिविवराश्रयाः॥अधोमुखोऽपि बस्तिर्हि मूत्रवाहिशिरामुखैः॥२॥पार्श्वेभ्यः पूर्य्यते श्लक्ष्णै(सूक्ष्मै)ःस्यन्दमानैरनारतम् ॥ तैस्तैरेव प्रविश्यैवं दोषान्कुर्वन्ति विंशतिम् ॥३॥ मूत्राघातः प्रमेहश्च कृच्छ्रान्मर्म समाश्रयेत्॥बस्तिवङ्क्षणमेढ्रार्तियुक्तोल्पाल्पं मुहुर्मुहुः॥४॥मूत्राण्यावातजे कृच्छ्रपित्ते पीतं सदाहरुक् ॥ रक्तं वा कफजो बस्तिमेढ्रगौरवशोथवान् ॥ ५ ॥ सपिच्छं सनिरुद्धं च सर्वैः सर्वात्मकं मलैः ॥ यदा वायुर्मुखं बस्तेर्व्यावर्त्त्य परिशोषयन् ॥६॥ मूत्रं सपित्तं सकफं सशुक्रं वा तदा क्रमात् ॥ संजायतेऽश्मरी घोरा पित्तं गोरिव रोचना ॥७॥ श्लेष्माश्रया च सर्वा स्यादथास्याः पूर्वलक्षणम् ॥ बस्त्याध्मानं तदासन्नदेशो हि परितोऽतिरुक् ॥ ८ ॥ बस्तौ च मूत्रसाङ्गित्वं मूत्रकृच्छ्रं ज्वरोऽरुचिः ॥ सामान्यलिङ्गं रुङ्नाभिसीवनीबस्तिमूर्द्धसु ॥ ९ ॥ विस्तीर्णवासं मूत्रं स्यात्तथा मार्गनिरोधने ॥ बद्धं बद्धा सुखं मेहेदच्छं गोमेदकोपमम् ॥१०॥ तत्संक्षोभाद्भवेत्सासृङ्मांसमध्वानि रुग्भवेत ॥ तत्र वाताभिसृत्यार्त्तो दन्तान् खादति वेपते ॥ ११ ॥ गृह्णाति मेहनं नाभिं पीडयत्यातिलक्षणम् ॥ सानिलं मुञ्चति शकृन्मुहुर्मेहति बिन्दुशः ॥ १२ ॥ श्यामरूक्षाश्मरी चा

१ ग्रपंतस्य० । २ कर्णकल्पान्तकूंजनम्० । ३ कच्चाभाक्षु वि० । ४ सर्वात्मकम्मलैः । ५ तथावाद्धुरिरोधमे० ।

स्य स्याचिता कण्टकैरिव ॥ पित्तेन दह्यते बस्तिः पच्यमान इवोष्णवान् ॥ १३ ॥ भल्लातकास्थिसंस्थाना रक्ता पीता सिताश्मरा ॥ बस्तिर्निस्तुद्यत इव श्लेष्मणा शीतलो गुरुः ॥ १४ ॥ अश्मरी महती श्लक्ष्णा मधुवर्णाथ वा सिता ॥ एता भवन्ति बालानां तेषामेव च भूयसाम् ॥ १५ ॥ आशयोपच याल्पत्वाद्ग्रहणाहरणे सुखी ॥ शुक्राश्मरी तु महती जायते शुक्रधारणात् ॥ १६ ॥ स्थानच्युतममुक्तं वा अण्डयोरन्तरेऽनिलः ॥ शोषयत्युपसंगृह्य शुक्रं तच्छुक्रमश्मरी ॥ १७ ॥ बस्तिरुक्कृच्छ्रमूत्रत्वं शुक्रा श्वयथुकारिणी ॥ तस्यामुत्पन्नमात्रायां शुष्कमेत्य विलीयते ॥ १८ ॥ पीडिते ज्वरकासेऽस्मिन्नश्मर्य्येव च शर्करा ॥ असौ वा वायुना भिन्ना सा त्वस्मिन्ननुलोमगे ॥ १९ ॥ निरेति सह मूत्रेण प्रतिलोमे विपच्यते ॥ मूत्रसंधारणं कुर्य्यात्क्रुद्धो बस्तेर्मुखे मरुत् ॥ २० ॥ मूत्रसङ्गं रुजं कण्डूं कदाचिच्चं सुवामतः ॥ प्रच्छाद्य बस्तिमुद्धृत्य गर्भान्तं स्थूलविप्लुताम् ॥२१॥ करोति तत्र रुग्दाहं स्पन्दनोद्वेष्टनानि च ॥ बिन्दुशश्च प्रवर्त्तेत मूत्रं बस्तौ तु पीडिते ॥ २२ ॥ धारावरोधश्चाप्येष वातबस्तिरिति स्मृतः ॥ दुस्तरो दुस्तरतरो द्वितीयः प्रबलोऽनिलः ॥ २३ ॥ शकृन्मार्गस्य बस्तेश्च वायुरन्तरमाश्रितः ॥ अष्ठीलाभं घनं ग्रन्थिं करोत्यच ( ब ) लमुन्नतम् ॥ २४ ॥ वाताष्ठीलेति सात्मानं विण्मूत्रानिल ( ति ) सर्गकृत् ॥ विगुणः कुण्डलीभूतो बस्तौ तीव्रव्यथोनिलः ॥२५॥ आबध्य मूत्रं भ्रमति संस्तम्भोद्वेष्टगौरवम् ॥ मूत्रमल्पाल्पमथवा विमुञ्चति सकृत्सकृत् ॥ २६ ॥ वातकुण्डलिकेत्येव मूत्रं तु विधृतेऽचिरम् ॥ न निरेति निरुद्धं वा मूत्रातीतं तदल्परुक् ॥ २७ ॥ विधारणात्प्रतिहतं वातादावर्त्तितं यदा ॥ नाभेरधस्तादुदरं मूत्रमापूरयेत्तदा ॥२८॥ कुर्य्यात्तीव्ररुगाध्मानमशक्तिं मलसंग्रहम् ॥ तन्मूत्रं जाठरच्छिद्रवैगुण्येनानिलेन वा ॥ २९ ॥ आक्षिप्तमल्पमूत्रस्य वस्तौ नाभौ च वा मले ॥ स्थित्वा स्रवेच्छनैः पश्चात्सरुजं वाथवाऽरुजम् ॥ ३० ॥ मूत्रोत्सर्गं सविच्छिन्नं तच्छेषो गुरुशेफसोः ॥ अन्तर्वस्ति मुखे तृष्णा स्थिराऽल्पं सहसा भवेत् ॥३१॥ अश्मरीतुल्यरुग्ग्रन्थिर्मूत्रग्रन्थिः स उच्यते ॥ मूत्रितस्य स्त्रियं यातो वायुना शुक्रमुद्धृतम् ॥ ३२ ॥ स्थानाच्युतं मूत्रयतः प्राक् पश्चाद्वा प्रवर्त्तते ॥ भस्मोदकप्रतीकाशं मूत्रशुक्रं तदुच्यते ॥ ३३ ॥ रूक्षदुर्बलयोर्वातेनोदावर्त्तं शकृद्यदा ॥ मूत्रस्रोतोऽनुपर्येति संसृष्टं शकृता तदा ॥ ३४ ॥ मूत्रविन्दुं तुल्यगन्धं स्याद्विवातं तमादिशेत् ॥ पित्तव्यायामतीक्ष्णाम्लभोजनाध्मानकादिभिः ॥ ३५ ॥ प्रवृद्धवायुना मूत्रे वस्तिस्थे चैव दाहकृत् ॥ मूत्रं वर्त्तयते पूर्वं सरक्तं रक्तमेव वा ॥ ३६ ॥ उष्णं पुनःपुनः कृच्छ्रादुष्णवातं वदन्ति तम् ॥ रूक्षस्य क्लान्तदेहस्य बस्तिस्थौ पित्तमारुतौ ॥ ३७ ॥ मूत्रक्षयं सरुग्दाहं जनयेतां तदाह्वयम् ॥ पित्तं कफो द्वावपि वा संहन्येतेनिलेन

१ पीडिते त्ववकाशेस्मि० । २ प्रतिलोमे विरुध्यते० । ३ चिच्चमुखागतः० पा० । चिच्चस्वधामतः०। ४ शुक्रं तु० । ५ हतोवातो० । ६ तच्छेषं गुरु शोषवत्० । ७ सुखे वृत्तः० ।

चेत् ॥ ३८ ॥ कृच्छ्रान्मूत्रं तदा पीतं रक्तं श्वेतं घनं सृजेत् ॥ सदाहं रोचनाशंखचूर्णवर्णं भवेच्च तत् ॥ ३९ ॥ शुष्कं समस्तवर्णं वा मूत्रसादं वदन्ति तम् ॥ इति विस्तारतः प्रोक्ता रोगा मूत्रप्रवर्तिताः ॥ ४० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे मूत्राघातमूत्रकृच्छ्रनिदान० नामाष्टपञ्चाशदुत्तरशततमोऽध्यायः ॥ १५८ ॥ धन्वन्तरिरुवाच ॥ प्रमेहाणां निदानन्ते वक्ष्येऽहं शृणु सुश्रुत ! ॥ प्रमेहा विंशतिस्तत्र श्लेष्मणो दश पित्ततः ॥ १ ॥ षट्चत्वारोऽनिलात्तेच मेदोमत्रकफावहाः ॥ हारिद्रमेही कटुकं हरिद्रासन्निभं शकृत् ॥ २ ॥ विस्रं माञ्जिष्ठमेहेच माञ्जिष्ठासलिलोपमम् ॥ विस्रमुष्णं सलवणं रक्ताभ रक्तमेहतः ॥ ३ ॥ वसामेही वसामिश्रं वसाभं मूत्रयेन्मुहुः ॥ मज्जाभं मज्जमिश्रं वा मज्जमेही मुहुर्मुहुः ॥ ४ ॥ हस्ती मत्त इवाजस्रं मूत्रं वेगविवर्जितम ॥ सलसीकं विबद्धं च हस्तिमेही प्रमेहति ॥ ५ ॥ मधुमेही मधुसमं जायते स किल द्विधा ॥ क्रुद्धे धातुक्षयाद्वायौ दोषावृतपथे यदा ॥६॥ आवृतो दोषलिङ्गानि सोऽनिमित्तं प्रदर्शयेत् ॥ क्षणात्क्षीणः क्षणात्पूर्णो भजते कृच्छ्रसाध्यताम् ॥७॥ कालेनोपेक्षितः सर्वो ह्यायाति मधुमेहताम् ॥ मधुरं यच्च मेहेषु प्रायो मध्विव मेहति ॥८॥ सर्वे ते मधुमेहाख्या माधुर्य्याच्च तनोर्यतः ॥ अविपाकोऽरुचिश्छर्दिर्निद्रा कासः सपीनसः ॥९॥ उपद्रवाः प्रजायन्ते मेहानां कफजन्मनाम् ॥ बस्तिमेहनयोस्तोदो मुष्कावदरणं ज्वरः ॥१०॥ दाहस्तृष्णाम्लिका मूर्च्छा विड्भेदः पित्तजन्मनाम् ॥ वातजानामुदावर्त्तः कम्पहृद्ग्रहलोलताः ॥ ११ ॥ शूलमुन्निद्रता शोषः श्वासः कासश्च जायते ॥ शराविका कच्छपिका ज्वालिनी विनतालजी ॥ १२ ॥ मसूरिका सर्षपिका पुत्रिणी सविदारिका ॥ विद्रधिश्चेति पिडिकाः प्रमेहोपेक्षया दश ॥१३॥ अन्नस्य कफसंश्लेषात्प्रायस्तत्र प्रवर्त्तनम् ॥ स्वाद्वम्ललवणस्निग्धगुरुपिच्छिलशीतलम् ॥ १४ ॥ नवं धान्यं सुरासूपमांसेक्षुगुडगोरसम् ॥ एकस्थानासनवति शयनं विनिवर्त्तनम् ॥ १५ ॥ बस्तिमाश्रित्य कुरुते प्रमेहान्दूषितः कफः ॥ दूषयित्वा वपुःक्लेदं स्वेदमेदोवसामिषम् ॥ १६ ॥ पित्तं रक्तमतिक्षीणे कफादौ मूत्रसंश्रयम् ॥ धातुं बस्तिमुपानीय तत्क्षयेच्चैव मारुतः ॥ १७ ॥ साध्यासाध्यप्रतीत्याद्याः मेहास्तेनैव तद्भवाः ॥ समे समकृता दोषे परमत्वात्तथापि च ॥ १८ ॥ सामान्यलक्षणन्तेषां प्रभूताविलमूत्रता ॥ दोषदूष्या विशेषेऽपि तत्संयोगाविशेषतः ॥ १९ ॥ मूत्रवर्णादिभेदेन भेदो मेहेषु कल्प्यते ॥ अच्छं बहु सितं शीतं निर्गन्धमुदकोपमम् ॥ २० ॥ मेहत्युदकमेहेन किञ्चिदाविलपिच्छिलम् ॥ इक्षो रसमिवात्यर्थं मधुरं चेक्षुमेहतः ॥ २१ ॥ सान्द्रीभवेत्पर्य्युषितं सान्द्रमेहेन मेहति ॥ सुरामेही सुरातुल्यमुपर्य्यच्छमधोघनम् ॥ २२ ॥ सहष्टरोमा पिष्टेन पिष्टवद्बहुलं सितम् ॥ शुक्राभं शुक्रमिश्रं वा शुक्रमेही प्रमेहति ॥ २३ ॥ मूत्रयेत्सिकतामेही सिकतारूपिणो मलान् ॥ शीतमेही सुबहुशो मधुरं भृशशीतलम् ॥ २४ ॥

शनैःशनैः शनैर्मेही मन्दं मन्दंप्रमेहति ॥ लालातन्तुयुतं मूत्रं लालामेहेन पिच्छिलम् ॥ २५ ॥ गन्धवर्णरसस्पर्शैः क्षारेण क्षारतोयवत् ॥ नीलमेहेन नीलाभं कालमेही मसीनिभम् ॥ २६ ॥ सन्धिमर्मसु जायन्ते मांसलेषु च धामसु ॥ अन्तोन्नता मध्यनिम्ना अक्लेदसुरुजान्विता ॥ ॥ २७ ॥ शरावमानसंस्थाना पिडिका स्याच्छराविका ॥ सदाहा कूर्मसंस्थाना ज्ञेया कच्छपिका बुधैः ॥ २८ ॥ महती पिडिका नीला विनता नाम सा स्मृता ॥ दहति त्वचमुत्थाने ज्वालिनी कष्टदायिनी ॥ २९ ॥ रक्ता सिता स्फोटचिता दारुणा त्वलजी भवेत् ॥ मसूराकृति संस्थाना विज्ञेया तु मसूरिका ॥ ३० ॥ सर्षपोपमसंस्थाना जिह्वापाकमहारुजा ॥ पुत्रिणी महती चाल्पा सुसूक्ष्मा पिडिका स्मृता ॥ ३१ ॥ विदारीकन्दवद्वृत्ता कठिना च विदारिका ॥ विद्रधेर्लक्षणैर्युक्ता ज्ञेया विद्रधिका तु सा ॥ ३२ ॥ पुत्रिणी च विदारी च दुःसहा बहुमेदसः ॥ सद्यः पित्तोल्वणास्त्वन्याः सम्भवन्त्यल्पमेदसः ॥ ३३ ॥ पिडिकास्ता भवेयुः स्याद्दोषोद्रेका यथायथम् ॥ प्रमेहेण विनाप्येता जायन्ते दुष्टमेदसः ॥ ३४ ॥ तावच्च नोपलक्ष्यन्ते यावद्वर्णञ्च वर्जितम् ॥ हारिद्रं रक्तवर्णं वा मेहप्रागूपवर्जितम् ॥ ३५ ॥ यो मूत्रयेत तन्मेहं रक्तपित्तन्तु तद्विदुः ॥ स्वेदोऽङ्गगन्धः शिथिलत्वमङ्गे शय्याशनस्वप्नसुखाभिषंगः ॥ हृन्नेत्रजिह्वाश्रवणोपदाहा घनाङ्गता केशनखाभिवृद्धिः ॥ ३६ ॥ शीतप्रियत्वं गलतालुशोषो माधुर्यमास्ये करपाददाहः ॥ भविष्यतो मेहगणस्य रूपं मूत्रेऽपि धावन्ति पिपीलिकाश्च ॥३७॥ तृष्णा प्रमेहे मधुरं प्रपिच्छं मध्वामये स्याद्विविधो विकारः॥ सम्पूरणाद्वा कफसम्भवः स्यात्क्षीणेषु दोषेष्वनिलात्मको वा ॥ ३८ ॥ सम्पूर्णरूपाः कफपित्तमेहाः क्रमेण ये वै रतिसम्भवाश्च ॥ संक्रामते पित्तकृतास्तु याप्याः साध्योऽस्ति मेहो यदि नास्ति दिष्टम्॥३९॥इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकाण्डे प्रमेहनिदानं नामैकोनषष्ट्युत्तरशततमोऽध्यायः ॥ १५९ ॥ धन्वन्तरिरुवाच ॥ निदानं विद्रधेर्वक्ष्ये गुलमस्य शृणु सुश्रुत ! ॥ भुक्तैः पर्य्युषितात्युष्णशुष्करूक्षविदाहिभिः ॥ १ ॥ जिह्मशय्याविचेष्टाभिस्तैस्तैश्चासृक्प्रदूषणैः ॥ दुष्टस्त्वङ्मांसमेदोऽस्थिमदामृष्टादराश्रयः ॥ २ ॥ यः शोथो बहिरन्तश्च महाशूलो महारुजः ॥ वृत्तः स्यादायतो यो वा स्मृतो रोगः स विद्रधिः ॥ ३ ॥ दोषैः पृथक्समुदितैः शोणितेन क्षतेन च ॥ वहते तत्र तत्रांगे दारुणे ग्रथितोऽस्रुतः ॥ ४ ॥ अन्तरा दारुणश्चैव गम्भीरो गुल्मवर्द्धनः ॥ वल्मीकवत्समुत्स्रावी ह्यग्निमान्द्यञ्च जायते ॥ ५ ॥ नाभिबस्तियकृत्प्लीहक्लोमहृत्कुक्षिवंक्षणि ॥ हृदये वेपमाने तु तत्रतत्रातितीव्ररुक् ॥ ६ ॥ श्यामारुणाशिरोत्थानपाको विषमसंस्थितिः ॥ संज्ञाच्छेदभ्रमानाहस्यन्दसर्पणशब्दवान् ॥ ७ ॥

१ एकवचनमार्षम् ।

रक्तताम्रासितः पित्तात्तृण्मोहज्वरदाहवान् ॥ क्षिप्रोत्थानप्रपाकश्च पाण्डुः कण्डूयुतः कफात् ॥ ८ ॥ संक्लेशशीतकस्तम्भजृम्भारोचकगौरवाः ॥
चिरोत्थानोऽविपाकश्च संकीर्णः सन्निपातजः ॥ ९ ॥ सामर्थ्याच्चात्र विद्धेदो बाह्याभ्यन्तरलक्षणम् ॥ कृष्णस्फोटावृतश्यामस्तीव्रदाहरुजाज्वरः
॥ १० ॥ पित्तलिंगोऽसृजा बाह्ये स्त्रीणामेव तथान्तरम् ॥ शस्त्राद्यैरभिघातोत्थरक्तैश्च रोगकारणम् ॥ ११ ॥ क्षतोत्थो वायुना क्षिप्तः स रक्तः
पित्तमीरयन् ॥ पित्तासृग्लक्षणं कुर्य्याद्विद्रधिं भूर्य्युपद्रवम् ॥ १२ ॥ तेनोपद्रवभेदश्च स्मृतोऽधिष्ठानभेदतः ॥ नाभौ हि ध्मातं चेद्वस्तौ मूत्रकृच्छ्रश्च
जायते ॥ १३ ॥ श्वासप्रश्वासरोधश्च प्लीहायामतितृट् परम् ॥ गलरोधश्च क्लोम्नि स्यात्सर्वांगप्ररुजा हृदि ॥ १४ ॥ प्रमोहस्तमकः कासो हृदयोद्घट्टनं
तथा ॥ कुक्षिपार्श्वान्तरे चैव कुक्षौ दोषोपजन्म च ॥ १५ ॥ तथा चेदूरुसन्धौ च वंक्षणे कटिपृष्ठयोः ॥ पार्श्वयोश्च व्यथा पायौ पवनस्य निरोधनम्
॥ १६ ॥ आमपक्वविदग्धत्वं तेषां शोथवदादिशेत् ॥ नाभेरूर्ध्वमुखात्पक्वात्प्रद्रवन्त्यपरे गुदात् ॥ १७ ॥ गुदास्यनाभिजे विद्याद्दोषक्लेदोच्चविद्रधौ ॥
कुरुते स्वाधिष्ठानस्य विवर्त्तं सन्निपातजः॥१८॥पक्वो हि नाभिवस्तिस्थो भिन्नोऽन्तर्बहिरेव वा ॥ पाकश्चान्तः प्रवृद्धस्य क्षीणस्योपद्रवार्दितः ॥ १९ ॥
विद्रधिश्च भवेत्तत्र पापानां पापयोषिताम् ॥ मृते तु गर्भंगे चैव सम्भवेच्छ्वयथुर्घनः ॥ २० ॥ स्तने समुत्थे दुःखं वा बाह्यविद्रधिलक्षणम् ॥
नारीणां सूक्ष्मरक्तत्वात्कन्यायान्तु न जायते ॥ २१ ॥ क्रुद्धो रुद्धगतिर्वायुः शेफमूलकरो? हि सः ॥ मुष्कवंक्षणतः प्राप्य फलकोषातिवाहिनीम् ॥२२॥
आपीड्य धमनीर्वृद्धिं करोति फलकोषयोः ॥ दोषो मेदस्सु तत्रास्ते सवृद्धिः सप्तधा गदः ॥ २३ ॥ मूत्रन्तयोरप्यनिलाद्बाह्ये वाभ्यन्तरे तथा ॥
वातपूर्णः खरस्पर्शो रूक्षो वाताच्च दाहकृत् ॥ २४ ॥ पक्वोदुम्बरसङ्काशः पित्ताद्दाहोष्मपाकवान् ॥ कफात्तीव्रो गुरुः स्निग्धः कण्डूमान्कठिनोऽल्प
रुक् ॥ २५ ॥ कृष्णः स्फोटावृतः पिण्डो वृद्धिलिंगश्च रक्ततः ॥ कफवन्मेदसां वृद्धिर्मृदुतालफलोपमः ॥ २६ ॥ मूत्रधारणशीलस्य मूत्रजस्तत्र
गच्छतः ॥ अलोभः पूर्णधृतिमान्क्षोभं याति सरन्मृदु ॥ २७ ॥ मूत्रकृच्छ्रमधस्ताच्च वलयः फलकोषयोः ॥ वातकोपिभिराहारैः शीततोयावगाहनैः
॥ २८ ॥ विण्मूत्रधारणाच्चैव विषमांगविचेष्टनैः ॥ क्षोभितैः क्षोभितौजाश्च क्षीणान्तर्देहिनो यदा ॥ २९ ॥ पवनो विगुणीभूय शोणितं तदधो
नयेत् ॥ कुर्य्यात्तत्क्षणसन्धिस्थो ग्रन्थ्याभः श्वयथुस्तदा ॥ ३० ॥ उपेक्ष्यमाणस्य च गुल्मवृद्धिमाध्मानरुग्वै विविधाश्च रोगाः ॥ सुपीडितोऽन्तः
स्वनवान् प्रयाति प्रध्मापयन्नेति पुनश्च मूर्ध्नि ॥ ३१ ॥ रक्तवृद्धिरसाध्येऽयं वातवृद्धिसमाकृतिः ॥ रूक्षकृष्णारुणाशिरा ऊर्णावृतगवाक्षवत् ॥ ३२ ॥

१ विस्फोटका इति शेषः।

वातोऽष्टधा पृथग्दोषैः संस्पृष्टैर्निचयं गतः ॥ आर्त्तवस्य च दोषेण नारीणां जायतेऽष्टमः ॥ ३३ ॥ ज्वरमूर्च्छातिसारैश्च वमनाद्यैश्च कर्मभिः ॥
कर्शितो बलवान्याति शीतार्त्तश्च बुभुक्षितः ॥ ३४ ॥ यः पिबत्यन्नपानानि लंघनप्लावनादिकम् ॥ सेवते हीनसंज्ञाभिरर्दितः सन्नुदीरयन् ॥ ३५ ॥
स्नेहस्वेदावनभ्यस्य शोषणं वा निषेवयेत् ॥ शुद्धो वा शुद्धिहानिर्वा भजेत स्पन्दनानि वा ॥ ३६ ॥ वातोल्बणास्तस्य मलाः पृथक्चैव हि तेऽथ
वा ॥ सर्वो रक्तयुतो वातादेहस्रोतोऽनुसारिणः ॥ ३७ ॥ ऊर्ध्वाधोमार्गमावृत्य वायुः शूलं करोति वै ॥ स्पर्शोपलभ्यं गुल्मोत्थमुष्णं ग्रन्थि
स्वरूपिणम् ॥ ३८ ॥ कर्षणात्कफविड्घातैर्मार्गस्यावरणेन वा ॥ वायुः कृताश्रयः कोष्ठे रौक्ष्यात्काठिन्यमागतः ॥ ३९ ॥ स्वतन्त्रः स्वाश्रये
दुष्टः परतन्त्रः पराश्रये ॥ ततः पिण्डकवच्छ्लेष्मा मलसंसृष्ट एव च ॥ ४० ॥ गुल्म इत्युच्यते बस्तिनाभिहृत्पार्श्वसंश्रयः ॥ वातजन्ये शिरःशूलज्वर
प्लीहान्त्रकूजनम्॥४१॥वेधः सूच्येव विड्भ्रंशः कृच्छ्रे मूत्रं प्रवर्त्तते॥गात्रे मुखे पदे शोथः ह्यग्निमान्द्यं तथैव च॥४२॥ रूक्षकृष्णत्वगादित्वं चलत्वादनिलस्य
च॥अनिरूपितसंस्थानो विविधाञ्जनयेद्व्यथाम्॥४३॥पिपीलिकाव्याप्त इव गुल्मः स्फुरति नुद्यते॥पित्ताद्दाहाम्लकौ मूर्च्छा विड्भेदः स्वेदतृड्ज्वराः॥४४॥
हारिद्र्यं सर्वगात्रेषु गुल्माच्छोथस्य दर्शनम्॥हीयते दीप्यते श्लेष्मा स्वस्थानं दहतीव च॥४५॥ कफात्स्तैमित्यमरुचिः सदनं शिरसि ज्वरः॥ पीनसाल
स्यहृल्लासौ शुक्लकृष्णत्वगादिता ॥ ४६ ॥ गुल्मो गभीरः कठिनो गुरुर्गर्भस्थबालवत् ॥ स्वस्थानस्था अधावन्तस्तत एवात्र मारकाः ॥ ४७ ॥
प्रायस्तु यत्तद्द्वन्द्वोत्था गुल्माः संसृष्टमैथुनाः ॥ सर्वजस्तीव्ररुग्दाहः शीघ्रपाकी घनोन्नतः ॥ ४८ ॥ सोऽसाध्यो रक्तगुल्मस्तु स्त्रिया एव प्रजायते ॥
ऋतौ या चैव शूलार्त्ता यदि वा योनिरोगिणी ॥ ४९ ॥ सेवते वानिलांश्च स्त्री क्रुद्धस्तस्याः समीरणः ॥ निरुध्यात्यार्त्तवं योन्यां प्रतिमासं व्यव
स्थितम् ॥ ५० ॥ कुक्षौ करोति तद्गर्भे लिंगमाविष्करोति च ॥ हृल्लासदौहृदस्तन्यदर्शनं कामचारिता ॥ ५१ ॥ क्रमेण वायोः संसर्गात्पित्तं योनिषु
सञ्चयम् ॥ रक्तस्य कुरुते तस्या वातपित्तोक्तगुल्मजान् ॥५२॥ गर्भाशये च सुतरां शूलांश्चैवासृगाश्रये ॥ योनिस्रावश्च दौर्गन्ध्यं भूयः स्पन्दनवेदने
॥ ५३ ॥ कदापि गर्भवद्गुल्मः सर्वे ते रतिसम्भवाः ॥ पाकश्चिरेण भजते नैधते विद्रधिः पुनः ॥ ५४ ॥ पच्यते शीघ्रमत्यर्थं दुष्टरक्ताश्रयस्तु सः ॥
अतः शीघ्रं विदाहित्वाद्विद्रधिः सोऽभिधीयते ॥ ५५ ॥ गुल्मान्तराश्रये बस्तिदाहश्च प्लीहवेदना ॥ अग्निवर्णबलभ्रंशो वेगानां वा प्रवर्त्तनम् ॥ ५६ ॥
अतो विपर्य्यये वाह्यकोष्ठांगेषु च नातिरुक् ॥ वैवर्ण्यमथ वा कासो बहिरुन्नतताधिकम् ॥ ५७ ॥ साटोपमत्युग्ररुजमाध्मानमुदरे भृशम् ॥ ऊर्द्ध्वाधो
वातरोधेन तमानाहं प्रचक्षते ॥ ५८ ॥ घनश्चाष्ठ्युपमो ग्रन्थिलोऽष्ठीलातु समुन्नता ॥ समस्तालिंगसंयुक्तः प्रत्यष्ठीला तदाकृतिः ॥ ५९ ॥ पक्व

शयोद्भवोऽप्येवं वायुस्तीव्ररुजाश्रयात् ॥ उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि ॥ ६० ॥ आटोपमाध्मानमपक्तिशक्तिः आसन्नगुल्मस्य भवेच्च चिह्नम् ॥६१॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विद्रधिगुल्मनिदानं० नाम षष्ट्युत्तरशततमोऽध्यायः ॥ १६० ॥

धन्वन्तरिरुवाच ॥ उदराणां निदानञ्च वक्ष्ये सुश्रुत तच्छृणु ॥ रोगाः सर्वेऽपि मन्दाग्नौ सुतरामुदराणि तु ॥ १ ॥ अजीर्णामयाश्चाप्यन्ये जायन्ते मलसंचयात् ॥ ऊर्द्ध्वाधो वायवो रुद्धा व्याकुलाविप्रवाहिणी ? ॥ २ ॥ प्राणानपानान्संदूष्य कुर्य्युस्तान्मांससन्धिगान् ॥ आध्माप्य कुक्षिमुदरमष्टधा ते च भेदतः ॥ ३ ॥ पृथग्दोषैः समस्तैश्च प्लीहवद्धक्षतोदकैः ॥ तेनार्त्ताः शुष्कताल्वोष्ठाः सर्वपादकरोदराः ॥ ४ ॥ नष्टचेष्टबलाहाराः कृतप्रध्मातकुक्षयः ॥ पुरुषाः स्युः प्रेतरूपा भाविनस्तस्य लक्षणम् ॥ ५ ॥ क्षुन्नाशोऽरुचिवत्सर्वं सविदाहश्च पच्यते ॥ जीर्णान्नं यो न जानाति सोऽपथ्यं सेवते नरः ॥ ६ ॥ क्षीयते बलमंगस्य श्वसित्यल्पोऽविचेष्टितः ॥ विषयावृत्तिबुद्धिश्च शोकशोषादयोऽपि च ॥ ७ ॥ रुग्बस्तिसन्धौ सततं लघ्वल्पभोजनैरपि॥ जराजीर्णो बलभ्रंशो भवेज्जठररोगिणः ॥ ८ ॥ स्वतन्त्रतन्द्रालसता मलसर्गोऽल्पवह्निता ॥ दाहः श्वयथुराध्मानमन्त्रे सलिलसम्भवे ॥ ९ ॥ सर्वत्र तोये मरणं शोचनं तत्र निष्फलम् ॥ गवाक्षवच्छिराजालैरुदरं गुड्गुडायते ॥ १० ॥ नाभिमन्त्रश्च विष्टभ्य वेगं कृत्वा प्रणश्यति ॥ मारुते हृत्कटीनाभिपायुवङ्क्षणवेदनाः ॥ ११ ॥ सशब्दो निःसरेद्वायुर्वहते मूत्रमल्पकम् ॥ नातिमात्रं भवेल्लौल्यं नरस्य विरसं मुखम् ॥ १२ ॥ तत्र वातोदरे शोथः पाणिपान्मुष्कुक्षिषु ॥ कुक्षिपार्श्वोदरकटीपृष्ठरुक्पर्वभेदनम् ॥ १३ ॥ शुष्ककासाङ्गमर्दाधोगुरुतामलसंग्रहः ॥ श्यामारुणत्वगादित्वं मुखे च रसवद्धिता ॥ १४ ॥ सतोदभेदमुदरं नीलकृष्णाशिराततम् ॥ आध्मातमुदरं शब्दमद्भुतं वा करोति सः ॥ १५ ॥ वायुश्चात्र सरुक्छब्दं विधत्ते सर्वथा गतिम् ॥ पित्तोदरे ज्वरो मूर्च्छा दाहित्वं कटुकास्यता ॥ १६ ॥ भ्रमातिसारः पीतत्वं त्वगादावुदरं हरित् ॥ पीतताम्रशिरादित्वं सस्वेदं सोष्म दह्यते ॥ १७ ॥ धूमायते मृदुस्पर्शं क्षिप्रपाकं प्रदूयते ॥ श्लेष्मोदरेषु सदनं स्वेदश्वयथुगौरवम् ॥ १८ ॥ निद्रा क्लेशोऽरुचिः श्वासः काशः शुक्लत्वगादिता ॥ उदरं तिमिरं स्निग्धं शुक्लकृष्णाशिरावृतम् ॥ १९ ॥ नीरातिवृद्धौ कठिनं शीतस्पर्शं गुरु स्थिरम् ॥ त्रिदोषकोपने तैस्तैस्त्रिदोषजनितैर्मलैः ॥ २० ॥ सर्वदूषणदुष्टाश्च सरक्ताः सञ्चिता मलाः ॥ कोष्ठं प्राप्य विकुर्वाणाः शोषमूर्च्छाभ्रमान्वितम् ॥ २१ ॥ कुर्य्युस्त्रिलिङ्गमुदरं शीघ्रपाकं सुदारुणम् ॥ वर्द्धते तच्च सुतरां शीतवातप्रदर्शने ॥ २२ ॥ अत्यशनाच्च संक्षोभाद्यानपानादिचेष्टितैः ॥ अविहितैश्च पानाद्यैर्वमनव्याधिकर्षणैः ॥ २३ ॥ वा

मपार्श्वेस्थितः प्लीहा च्युतस्थानो विवर्द्धते ॥ शोणिताद्वा रसादिभ्यो विवृद्धो जनयेद्व्यथाम् ॥ २४ ॥ सोऽष्ठीला चातिकठिनः प्रोन्नतः कूर्मपृष्ठवत्[1] ॥ क्रमेण वर्द्धमानश्च कुक्षौ व्याततिमाहरेत् ॥ २५ ॥ श्वासकासपिपासास्यवैरस्याध्मानकज्वरैः ॥ पाण्डुत्वमूर्च्छाछर्दित्वग्दाहमोहैश्च संयुतः ॥ २६ ॥ अरुणाभं विचित्राभं नीलहारिद्रराजितम् ॥ उदावर्त्तेन चानाहमोहतृड्दहनज्वरैः ॥ २७ ॥ गौरवारुचिकाठिन्यैर्विघातश्रमसंक्रमात् ॥ प्लीहवदक्षिणात्पार्श्वात्कुर्य्याद्यकृदपि च्युतम् ॥ २८ ॥ पक्के भूते यकृति च सदा बद्धमलो गुदे ॥ दुर्नामभिरुदावर्त्तैरन्यैर्वा पीडितो भवेत् ॥ २९ ॥ वर्चः पित्तकफान्बद्धान्करोति कुपितोऽनिलः ॥ अपानो जठरे तेन संरुद्धो ज्वररुक्करः ॥ ३० ॥ काशश्वासोरुसदनं शिरोरुङ्नाभिपार्श्वरुक् ॥ मलासंगोऽरुचिश्छर्दिरुदरे मलमारुतः ॥ ३१ ॥ स्थिरनीलारुणशिराजालैरुदरमावृतम् ॥ नाभेरुपरि च प्रायो गोपुच्छाकृति जायते ॥ ३२ ॥ अस्थ्यादिशल्यैरन्यैश्च विद्धे चैवोदरे तथा ॥ स्रवते यकृतादिश्च तच्छिद्रैश्च सरन्बहिः ॥ ३३ ॥ आम एव गुदादेति ततोऽल्पाल्पः शकृद्रसः ॥ स स्याद्विकृतगन्धोऽपि पिच्छिलः पीतलोहितः ॥ ३४ ॥ शेषश्चापूर्य्य जठरं घोरमारभते ततः ॥ वर्द्धते तदधो नाभेराशु चैति जलात्मताम् ॥ ३५ ॥ उद्रिक्ते दोषरूपे च व्याप्ते च श्वासतृड्भ्रमैः ॥ छिद्रोदरमिदं प्राहुः परिस्राविति चापरे ॥ ३६ ॥ प्रवृत्तस्नेहपानादेः सहसापथ्यसेविनः ॥ अत्यम्बुपानान्मन्दाग्नेः क्षीणस्यातिकृशस्य च ॥ ३७ ॥ रुद्धः स्वमार्गादनिलः कफश्च जलमूर्च्छितः ॥ वर्धेते तु तदेवाम्बु तन्मात्राद्बिन्दुराशितः ॥ ३८ ॥ तत्कोपादुदरं तृष्णागुदस्रुतिरुजान्वितम् ॥ काशश्वासारुचियुतं नानावर्णाशिराततम् ॥ ३९ ॥ तोयपूर्णान्मृदुस्पर्शात्सशब्दक्षोभवेपथु ॥ बकोदरं स्थिरं स्निग्धं नाडीमावृत्य जायते ॥ ४० ॥ उपेक्षायाश्च सर्वेषां स्वस्थानां परिचालिताः ॥ पाका द्रवा द्रवीकुर्युः सन्धिस्रोतोमुखान्यपि ॥ ४१ ॥ स्वेदे चैव तु संरुद्धे मूर्च्छिताश्चान्तरस्थिताः ॥ तदेवोदरमापूर्य्य कुर्य्यादुदरामयम् ॥ ४२ ॥ गुरूदरं स्थितं वृत्तमाहतश्च न शब्दकृत् ॥ हीनबलं तथा घोरं नाड्यां स्पृष्टश्च सर्पति ॥ ४३ ॥ शिरान्तर्धानमुदरे सर्वलक्षणमुच्यते ॥ वातपित्तकफप्लीहसन्निपातोदकोदरम् ॥ ४४ ॥ पश्चाच्च जातसलिलं विष्टम्भोपद्रवान्वितम् ॥ जन्मनैवोदरं सर्वं प्रायः कृच्छ्रतमं मतम् ॥ ४५ ॥ इतिश्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकषष्ट्यधिकशततमोऽध्यायः ॥१६१॥ धन्वन्तरिरुवाच ॥ पाण्डुशोथनिदानञ्च शृणु सुश्रुत वच्मि ते ॥ पित्तप्रधानाः कुपिता यथोक्तैः कोपनैर्मलाः ॥१॥ तत्रानिलेन बलिना क्षिप्ताक्षिप्तं यदि स्थितम् ॥ धमनीर्दशमीः प्राप्य व्याप्नुवन्सकलां तनुम् ॥ २ ॥ त्वगसृक्छ्लेष्ममांसानि प्रदूष्यन्नसमाश्रितम् ॥

१ उदरे इति प्रसङ्गलभ्योऽर्थः ।

ग. म. पु. त्वङ्मांसयोस्तु कुरुते त्वचि वर्णान् पृथग्विधान् ॥३॥ स्वयं हरिद्रा हारिद्रं पाण्डुत्वं तेषु चाधिकम् ॥ यातोऽयं प्रहरेदुग्रः स रोगस्तेन गौरवम् ॥ ४ ॥ खं.
॥१०२॥ धातूनां स्पर्शशैथिल्यमामजश्च गुणक्षयः ॥ ततोऽल्परक्तमेदोऽस्थिनिःसारः स्याच्छ्लथेन्द्रियः ॥ ५ ॥ शीर्यमाणैरिवाङ्गैस्तु द्रवता हृदयेन च ॥
शूलोक्षिकूटवदने स्तैमित्यं तत्र लालया ॥ ६ ॥ हीनतृट् शिशिरद्वेषी शीर्णलोमा हतानलः ॥ मन्दशक्तिर्ज्वरी श्वासी कर्णशूली तथा भ्रमी ॥ ७ ॥ आ. का
स पञ्चधा पृथग्दोषैः समस्तैर्मृत्तिकादनात् ॥ प्राग्रूपमस्य हृदयस्पन्दनं रूक्षता त्वचि ॥ ८ ॥ अरुचिः पीतमूत्रत्वं स्वेदाभावोऽल्पमूत्रता ॥ मेदः प. १६२
समानिलात्तत्र गाढरुक्क्लेदगात्रता ॥ ९ ॥ कृष्णेक्षणं कृष्णशिरानखविण्मूत्रनेत्रता ॥ शोथो नासास्यवैरस्यं विट्शोषः पार्श्वमूर्च्छना ॥ १० ॥
पित्ते हारितपित्ताभः शिरादिषु ज्वरस्तमः ॥ तृट्शोषमूर्च्छादौर्गन्ध्यं शीतेच्छा कटुवक्त्रता ॥ ११ ॥ विड्भेदश्चाऽम्लको दाहः कफाच्च हृदयार्द्रता ॥
तन्द्रा लवणवक्त्रत्वं रोमहर्षः स्वरक्षयः ॥ १२ ॥ कासश्छर्दिश्च निचयान्नष्टलिङ्गोऽतिदुःसहः ॥ उत्क्लेशेनिलपित्ताभ्यां कटुर्वा
मधुरः कफः ॥ १३ ॥ दूषयित्वा वसादींश्च रौक्ष्याद्रक्तविमोक्षणम् ॥ स्रोतसां संक्षयं कुर्य्यादनुरुध्य च पूर्ववत् ॥ १४ ॥ पाण्डुरोगेक्षये
जाते नाभिपादास्यमेहनम् ॥ पुरीषं कृमिवन्मुश्चेद्भिन्नं सास्रं कफान्वितम् ॥ १५ ॥ यः पित्तरोगी सेवेत पित्तलं तस्य कामलम् ॥ कोष्ठशा
खोद्गतं पित्तं दग्ध्वासृङ्मांसमाहरेत् ॥ १६ ॥ हारिद्रमूत्रनेत्रत्वं मुखं रक्तं शकृत्तथा ॥ दाही विपाकतृष्णावान् भेकाभो दुर्बलेन्द्रियः ॥ १७ ॥
भवेत्पित्तानुगः शोथः पाण्डुरोगावृतस्य च ॥ उपेक्षया च शोथाद्याः सकृच्छ्राः कुम्भकामलाः ॥ १८ ॥ हरितश्यामपित्तत्वे पाण्डुरोगो यदा
भवेत् ॥ वातपित्ते भ्रमस्तृष्णा स्त्रीषु हर्षो मृदुज्वरः ॥ १९ ॥ तन्द्रा वा चानलभ्रंशस्तं वदन्ति हलीमकम् ॥ आलस्यश्चातिभवति तेषां पूर्वमुप
द्रवः ॥ २० ॥ शोथः प्रधानः कथितः स एवातो निगद्यते ॥ पित्तरक्तकफान्वायुर्दुष्टो दुष्टान्बहिःशिराः ॥ २१ ॥ नीत्वा रुद्धगतिस्तैर्हि कुर्य्यात्त्व
ङ्मांससंश्रयम् ॥ उत्सेधं संहतं शोथं तमाहुर्निचयादतः ॥ २२ ॥ सर्वहेतुविशेषैस्तु रूपभेदान्नवात्मकम् ॥ दोषैः पृथग्विधैः सर्वैरभिघाताद्विषा
दपि ॥ २३ ॥ तदेव नीयमानन्तु सर्वाङ्गे कामजम्भवेत् ॥ पृथून्नताग्रग्रथितैर्विशेषैश्च त्रिधा विदुः ॥ २४ ॥ सामान्यहेतुः शोथानां दोषजातो
विशेषतः ॥ व्याधिःकर्मोपवासादिक्षीणस्य भवति द्रुतम् ॥ २५ ॥ अतिमात्रं यदासेवेद्गुरुमत्यन्तशीतलम् ॥ लवणक्षारतीक्ष्णाम्लशाका
म्बुस्वप्नजागरम् ॥ २६ ॥ रोधो वेगस्य वल्लूरमजीर्णश्रममैथुनम् ॥ पच्यते मार्गगमनं यानेन क्षोभिणापि वा ॥ २७ ॥ श्वासकासातिसारार्शो ॥१०२॥
जठरप्रदरज्वराः ॥ विष्टम्भालस्यकच्छर्दिहिक्कापाण्डुविसर्पकम् ॥ २८ ॥ ऊर्द्ध्वंशोथमधो वस्तौ मध्ये कुर्वन्ति मध्यगाः ॥ सर्वाङ्गगः सर्वगतः प्रत्य

प्रत्यगेति तदाश्रयः ॥ २९ ॥ तत्पूर्वरूपं क्षवथुः शिरायामङ्गगौरवम् ॥ वाताच्छोथश्चलो रूक्षः खररोमारुणोऽसितः ॥ ३० ॥ शङ्खबस्त्यन्त्रशोफार्त्ति
मेदोभेदाः प्रसुप्तिता ॥ वातोत्तानः क्रमः शीघ्रमुन्नमेत्पीडितां तनुम् ॥ ३१ ॥ स्निग्धस्तु मर्दनैः शाम्येद्रात्रावल्पो दिवा महान् ॥ त्वक्सर्षपविलिप्ते
च तस्मिंश्चिमिचिमायते ॥ ३२ ॥ पीतरक्तासिताभासः पित्तजातश्च शोषकृत् ॥ शीघ्रं नासौ वा प्रशमेन्मध्ये प्राग्दहते तनुम् ॥ ३३ ॥ सतृड्दा
हज्वरस्वेदो भ्रमक्लेदमदभ्रमाः ॥ साभिलाषी शकृद्भेदो गन्धः स्पर्शसहो मृदुः ॥ ३४ ॥ कण्डूमान्पाण्डुरोमा त्वक्कठिनः शीतलो गुरुः ॥ स्निग्धः
श्लक्ष्णः स्थिरः शूलो निद्राच्छर्द्यग्निमान्द्यकृत् ॥ ३५ ॥ आघातेन च शस्त्रादिच्छेदभेदक्षतादिभिः ॥ हिमानिलैर्दध्यनिलैर्भल्लातकपिकच्छजैः ॥३६॥
रसैः शुष्कैश्च संस्पर्शाच्छ्वयथुः स्याद्विसर्पवान् ॥ भृशोष्मा लोहिताभासः प्रायशः पित्तलक्षणः ॥ ३७ ॥ विषजः सविषप्राणिपरिसर्पणमूत्रणात् ॥
दंष्ट्रादन्तनखाघातादविषप्राणिनामपि ॥ ३८ ॥ विण्मूत्रशुक्रोपहतमलवद्वस्तुसंकरात् ॥ विषवृक्षानिलस्पर्शाद्गरयोगावचूर्णनात् ॥ ३९ ॥ मृदुश्चलोऽ
वलम्बी च शीघ्रो दाहरुजाकरः ॥ नवोऽनुपद्रवः शोथः साध्योऽसाध्यः पुरेरितः ॥ ४० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये
आचारकाण्डे पाण्डुशोथनिदानं नाम द्विषष्ट्यधिकशततमोऽध्यायः ॥ १६२ ॥ ॥ धन्वन्तरिरुवाच ॥ विसर्पादिनिदानंते वक्ष्ये सुश्रुत तच्छृणु ॥
स्याद्विसर्पो विघाताच्च दोषैर्दुष्टैश्च शोथवत् ॥ १ ॥ अधिष्ठानञ्च तं प्राहुर्बाह्यं तत्र भयाच्छ्रमात् ॥ यथोत्तरश्च दुःसाध्यस्तत्र दोषो यथायथम् ॥ २ ॥
प्रकोपनैः प्रकुपिता विशेषेण विदाहिभिः ॥ देहे शीघ्रं विशन्तीह तेऽन्तरे हि स्थिता बहिः ॥ ३ ॥ तृष्णाभियोगाद्वेगानां विषमाच्च प्रवर्त्तनात् ॥
आशु चाग्निबलभ्रंशादतो बाह्यं विसर्पयेत् ॥ ४ ॥ तत्र वातात्स वीसर्पो वातज्वरसमव्यथः ॥ शोथस्फुरणनिस्तोदभेदायासार्त्तिहर्षवान् ॥ ५ ॥
पित्ताद्द्रुतगतिः पित्तज्वरलिङ्गोऽतिलोहितः ॥ कफात्कण्डूयुतः स्निग्धः कफज्वरसमानरुक् ॥ ६ ॥ सन्निपातसमुत्थाश्च सर्वलिंगसमन्विताः ॥
स्वदोषलिंगैश्चीयन्ते सर्वैः स्फोटैरुपेक्षिताः ॥ तेऽपि स्वेदान्विमुञ्चति बिभ्रतो व्रणलक्षणम् ॥ ७ ॥ वातपित्ताज्ज्वरच्छर्दिमूर्च्छातीसारतृड्भ्रमैः ॥
ग्रन्थिभेदाग्निसदनतमकारोचकैर्युतः ॥ ८ ॥ करोति सर्वमङ्गञ्च दीप्ताङ्गारावकीर्णवत् ॥ यंयं देशं विसर्पश्च विसर्पति भवेत्ससः ॥ ९ ॥ शान्ता
ङ्गारासितो नीलो रक्तो वाशु च चीयते ॥ अग्निदग्ध इव स्फोटैः शीघ्रगत्वाद्द्रुतं स च ॥ १० ॥ मर्मानुसारी वीसर्पः स्याद्वातोऽतिबलस्ततः ॥
व्यथतेऽङ्गं हरेत्संज्ञां निद्राञ्च श्वासमीरयेत् ॥ ११ ॥ हिक्काञ्च स गतोऽवस्थामीदृशीं लभते नरः ॥ क्वचिन्मर्मारतिग्रस्तो भूमिशय्यासना
दिषु ॥ १२ ॥ चेष्टमानस्ततः क्लिष्टो मनोदेहप्रमोहवान् ॥ दुष्प्रबोधोऽश्नुते निद्रां सोऽग्निवीसर्प उच्यते ॥ १३ ॥ कफेन रुद्धः पवनो भित्त्वा

तं बहुधा कफम् ॥ रक्तं वा वृद्धरक्तस्य त्वक्छिरास्नायुमांसगम् ॥ १४ ॥ दूषयित्वा तु दीर्घाणुवृत्तस्थूलखरात्मिकाम् ॥ ग्रन्थीनां कुरुते मालां सरक्तां
तीव्ररुग्ज्वराम् ॥ १५ ॥ श्वासकासातिसारास्यशोषहिक्कावमिभ्रमैः ॥ मोहवैवर्ण्यमूर्च्छाङ्गभङ्गाग्निसदनैर्युताम् ॥ इत्ययं ग्रन्थिवीसर्पः कफमारुत
कोपजः ॥ १६ ॥ कफपित्ताज्ज्वरः स्तम्भो निद्रा तन्द्रा शिरोरुजा ॥ अङ्गावसादविक्षेपौ प्रलापारोचकभ्रमाः ॥ १७ ॥ मूर्च्छाग्निहानिर्भेदोऽस्थ्नां
पिपासेन्द्रियगौरवम् ॥ आमोपवेशनं लेपः स्रोतसां स च सर्पति ॥ १८ ॥ प्रायेणामाशयं गृह्णन्नेकदेशं. न चातिरुक् ॥ पीडकैरवकीर्णोऽ
तिपीतलोहितपाण्डुरैः ॥ १९ ॥ स्निग्धोऽसितो मेचकाभो मलिनः शोथवान्गुरुः ॥ गम्भीरपाकः प्राज्योष्मस्पृष्टः क्लिन्नोऽवदीर्य्यते ॥ २० ॥
पङ्कवच्छीर्णमांसश्च स्पष्टस्नायुशिरागणः ॥ सर्वगो लक्षणैः सर्वैः सर्वगत्वक्समर्पणः ॥ शवगन्धी च वीसर्पः कर्दमाख्यमुशन्ति तम् ॥ २१ ॥
बाह्यहेतोः क्षतात्क्रुद्धः सरक्तं पित्तमीरयन् ॥ वीसर्पं मारुतः कुर्य्यात्कुलत्थसदृशैश्चितम् ॥ २२ ॥ स्फोटैः शोथज्वररुजादाहाढ्यं श्यावशो
णितम् ॥ पृथग्दोषैस्त्रयः साध्या द्वन्द्वजाश्चानुपद्रवाः ॥ २३ ॥ असाध्याः क्षतसर्वोत्थाः सर्वे चाक्रान्तमर्म्मणः ॥ शीर्णस्नायुशिरामांसाः क्लिन्नाश्च
शवगन्धयः ॥ २४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वीसर्पनिदानं नाम त्रिषष्ट्यधिकशततमोऽध्यायः ॥ १६३ ॥
धन्वन्तरिरुवाच ॥ मिथ्याहारविहारेण विशेषेण विरोधिना ॥ साधुनिन्दावधान्यस्वहरणाद्यैश्च सेवितैः ॥ १ ॥ पाप्मभिः कर्म्मभिः सद्यः प्राक्तनैः प्रेरिता
मलाः ॥ शिराः प्रपद्य तैर्युक्तास्त्वग्वसारक्तमामिषम् ॥ २ ॥ दूषयन्ति च संशोष्य निश्चरन्तस्ततो बहिः ॥ त्वचः कुर्वन्ति वैवर्ण्यं शिष्टाः कुष्ठमुशन्ति
तम् ॥ ३ ॥ कालेनोपेक्षितं यत्स्यात्सर्वं कोष्ठानि तद्वपुः ॥ प्रपद्य धातून्व्याप्यान्तः सर्वान्संक्लेद्य चावहेत् ॥ ४ ॥ सस्वेदक्लेदसङ्कोचान्कृमीन् सूक्ष्मांश्च
दारुणान् ॥ लोमत्वक्स्नायुधमनीरोक्षामाति यथाक्रमम् ॥ ५ ॥ भस्माच्छादितवत्कुर्य्याद्बाह्यं कुष्ठमुदाहृतम् ॥ कुष्ठानि सप्तधा दोषैः पृथग्द्वन्द्वैः समा
गतैः ॥ ६ ॥ सर्वेष्वपि त्रिदोषेषु व्यपदेशोऽधिकस्ततः ॥ वातेन कुष्ठं कापालं पित्तेनौदुम्बरं कफात् ॥ ७ ॥ मण्डलाख्यं विचर्चीं च ऋष्याख्यं
वातपित्तजम् ॥ चर्मैककुष्ठं किटिमं सिध्मालसविपादिकाः ॥ ८ ॥ वातश्लेष्मोद्भवाः श्लेष्मपित्ताद्दद्रूशतारुषी ॥ पुण्डरीकं सविस्फोटं पामा चर्मदलं
तथा ॥ ९ ॥ सर्वेभ्यः काकणं पूर्वत्रिकं दद्रु सकाकणम् ॥ पुण्डरीकर्य्यजिह्वे च महाकुष्ठानि सप्त तु ॥ १० ॥ अतिश्लक्ष्णखरस्पर्शस्वेदास्वेदविव
र्णताः ॥ दाहः कण्डूस्त्वचि स्वापस्तोदः कोठोन्नतिस्तमः ॥ ११ ॥ व्रणानामधिकं शूलं शीघ्रोत्पत्तिश्चिरस्थितिः ॥ रूढानामपि रूक्षत्वं निमित्तेऽ
ल्पेऽतिकोपनम् ॥ १२ ॥ रोमहर्षोऽसृजः कार्ष्ण्यं कुष्ठलक्षणमग्रजम् ॥ कृष्णारुणकपालाभं यद्रूक्षं परुषं तनु ॥ १३ ॥ विस्तृताकृतिपर्य्यस्तं

दूषितैर्लोमभिश्चितम् ॥ कापालं तोदबहुलं तत्कुष्ठं विषमं स्मृतम् ॥ १४ ॥ उदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् ॥ वर्तुलं बहुलोत्सेधं सा
रुजाधिकम् ॥ १५ ॥ असंच्छन्नमदरणं कृमिवत्स्यादुदुम्बरम् ॥ स्थिरं स्त्यानं गुरु स्निग्धं श्वेतरक्तं मलान्वितम् ॥ १६ ॥ अन्योन्यसंसक्त
च्छूनबहुकण्डूस्रुतिकृमि ॥ श्लक्ष्णपीताभासंयुक्तं मण्डलं परिकीर्तितम् ॥ १७ ॥ सकण्डूपिटिका श्यावा सक्लेदा च विचर्चिका ॥ परुषं तन्
रक्तान्तमन्तःश्यामं समुन्नतम् ॥ १८ ॥ ऋष्यजिह्वाकृतिप्रोक्तं ऋष्यजिह्वं बहुक्रिमि ॥ हस्तिचर्मखरस्पर्शं चर्माख्यं कुष्ठमुच्यते ॥ १९ ॥ अस्वेदञ्च
मत्स्यशल्कसन्निभं किटिमं पुनः ॥ रूक्षाग्निवर्णं दुःस्पर्शं कण्डूमत्परुषासितम् ॥ २० ॥ अन्ता रूक्षं बहिः स्निग्धमन्तर्घृष्टं रजः किरेत् ॥ श्लक्ष्ण
स्पर्शं तनु स्निग्धं स्वच्छमस्वेदपुष्पवत् ॥ २१ ॥ प्रायेण चोर्ध्वकार्यश्च कुण्डैः कण्डूपरैश्चितम् ॥ रक्तैरलंशुका पाणिपादे कुर्य्याद्विपादिका ॥ २२ ॥
तीव्रार्त्तिं गाढकण्डूञ्च सरागपिडिकाचितम् ॥ दीर्घप्रतानदूर्वावदतसीकुसुमच्छवि ॥ २३ ॥ उच्छूनमण्डलो दद्रुः कण्डूमानिति कथ्यते ॥
स्थूलमूलं सदाहार्त्ति रक्तस्रावं बहुव्रणम् ॥ २४ ॥ सदाहकक्लेदरुजं प्रायशः सर्वजन्म च ॥ रक्ताक्तमण्डलं पाण्डु कण्डूदाहरुजान्वितम् ॥ २५ ॥
सोत्सेधमाचितं रक्तैः कंजपर्णमिवाम्बुभिः ॥ पुण्डरीकं भवेत्ताद्धि चितं स्फोटैः सितारुणैः ॥ २६ ॥ विस्फोटपिटिका पामा कण्डूक्लेदरुजान्विता ॥
सूक्ष्मा श्यामारुणा रूक्षा प्रायः स्फिक्पाणिकूर्परे ॥ २७ ॥ सस्फोटसंस्पर्शसहं कण्डूरक्तातिदाहवत् ॥ रक्तदलं चर्मदलं काकणं तीव्रदाहरुक् ॥ २८ ॥
पूर्वरक्तञ्च कृष्णञ्च काकणं त्रिफलोपमम् ॥ कृष्णलिङ्गैर्युतैः सर्वैः स्वस्वकारणतो भवेत् ॥ २९ ॥ दोषभेदाय विहितैरादिशेल्लिङ्गकर्मभिः ॥ कुष्ठं
स्वदोषानुगतं सर्वदोषगतं त्यजेत् ॥ ३० ॥ कुष्ठोक्तं यच्च यच्चास्थिमज्जाशुक्रसमाश्रयम् ॥ कृच्छ्रं मेदोगतञ्चैव याप्यं स्नाय्वास्थिमांसगम् ॥ ३१ ॥
अकृच्छ्रं कफवातोत्थं त्वग्गतं त्वमलञ्च यत् ॥ तत्र त्वचि स्थिते कुष्ठे काये वैवर्ण्यरूक्षता ॥ ३२ ॥ स्वेदतापश्वयथवः शोणिते पिशिते पुनः ॥
पाणिपादाश्रिताः स्फोटाः क्लेशात्सन्धिषु चाधिकम् ॥ ३३ ॥ दोषस्याभीक्ष्णयोगेन दलनं स्याच्च मेदसि ॥ नासिकाभङ्गोऽस्ति मज्जास्थिनेत्रवेगस्वरक्षयः ॥
॥ ३४ ॥ क्षते च क्रिमिभिः शुक्रे स्वदारापत्यबाधनम् ॥ यथापूर्वाणि सर्वाणि स्वलिंगानि मृगादिषु ॥ ३५ ॥ कष्टैकसम्भवं श्वित्रं किलासं दारुणं
भवेत् ॥ निर्दिष्टमपरिस्रावि त्रिधातूद्भवसंश्रयम् ॥ ३६ ॥ वाताद्रूक्षारुणं पित्तात्ताम्रं कमलपत्रवत् ॥ सदाहं रोमविध्वंसि कफाच्छ्वेतं घन
गुरु ॥ ३७ ॥ सकण्डूरं क्रमाद्रक्तमांसमेदःसु चादिशेत् ॥ वर्णेनैवेदृगुभयं कृच्छ्रं तच्चोत्तरोत्तरम् ॥ ३८ ॥ अशुक्लरोमबहुलमसंश्लिष्टं मिथो नवम् ॥
अनग्निदग्धजं साध्यं श्वित्रं वर्ज्यमतोऽन्यथा ॥ ३९ ॥ गुह्यपाणितलौष्ठेषु जातमप्यचिरन्तनम् ॥ वर्जनीयं विशेषेण किलासं सिद्धिमिच्छता ॥ ४० ॥

स्पर्शैकाहारसंगादिसेवनात्प्रायशो गदाः ॥ एकशय्यासनाच्चैव वस्त्रमाल्यानुलेपनात् ॥ ४१ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे कुष्ठरोगनिदानं नाम चतुःषष्ट्युत्तरशततमोऽध्यायः ॥ १६४ ॥ ॥ धन्वन्तरिरुवाच ॥ क्रिमयश्च द्विधा प्रोक्ता बाह्याभ्यन्तरभेदतः ॥ बहिर्मलकफासृग्विट्जन्मभेदाच्चतुर्विधाः ॥ १ ॥ नामतो विंशतिविधा बाह्यास्तत्र मलोद्भवाः ॥ तिलप्रमाणसंस्थानवर्णाः केशाम्बराश्रयाः ॥ २ ॥ बहुपादाश्च सूक्ष्माश्च यूका लिक्षाश्च नामतः ॥ द्विधा ते कोष्टपिडिकाः कण्डूगण्डान्प्रकुर्वते ॥ ३ ॥ कुष्ठैकहेतवोऽन्तर्जाः श्लेष्मजा बाह्यसम्भवाः ॥ मधुरान्नगुडक्षीरदधिमत्स्यनवौदनैः ॥ ४ ॥ कफादामाशये जाता वृद्धाः सर्पन्ति सर्वतः ॥ पृथुब्रध्ननिभाः केचित्केचिद्गण्डूपदोपमाः ॥ ५ ॥ रूढधान्याङ्कुराकारास्तनुदीर्घास्तथाणवः ॥ श्वेतास्ताम्रावभासाश्च नामतः सप्तधा तु ते ॥ ६ ॥ अन्त्रादा उदरावेष्टा हृदयादा महागुदाः ॥ च्युरवो दर्भकुसुमाः सुगन्धास्ते च कुर्वते ॥ ७ ॥ हृल्लासमास्यश्रवणमविपाकमरोचकम् ॥ मूर्च्छाच्छर्दिज्वरानाहकार्श्यक्षवथुपीनसान् ॥ ८ ॥ रक्तवाहिशिरास्थानरक्तजा जन्तवोऽणवः ॥ अपादा वृत्तताम्राश्च सौक्ष्म्यात्केचिददर्शनाः ॥ ९ ॥ केशादा रोमविध्वंसा रोमद्वीपा उदुम्बराः ॥ षट् ते कुष्ठैककर्माणः सहसौरसमातरः ॥ १० ॥ पक्वाशये पुरीषोत्था जायन्तेऽधोविसर्पिणः ॥ वृद्धास्ते स्युर्भवेयुश्च ते यदामाशयोन्मुखाः ॥ ११ ॥ तदास्योद्गारनिःश्वासविड्गन्धानुविधायिनः ॥ पृथुवृत्ततनुस्थूलाः श्यावपीतसितासिताः ॥ १२ ॥ ते पञ्चनाम्ना क्रिमयः ककेरुकमकेरुकाः ॥ सौसुरादाः सशूलाख्या लेलिहा जनयन्ति हि ॥ १३ ॥ विड्भेदशूलविष्टम्भकार्श्यपारुष्यपाण्डुताः ॥ रोमहर्षाग्निसदनं गुदकण्डूंर्विमार्गगाः ॥ १४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे क्रिमिनिदानं नाम पञ्चषष्ठ्यधिकशततमोऽध्यायः ॥ १६५ ॥ धन्वन्तरिरुवाच ॥ वातव्याधिनिदानं ते वक्ष्ये सुश्रुत तच्छृणु ॥ सर्वथानर्थकथने विघ्न एव च कारणम् ॥ १ ॥ अदृष्टदुष्टपवनशरीरमविशेषतः ॥ स विश्वकर्मा विश्वात्मा विश्वरूपः प्रजापतिः ॥ २ ॥ स्रष्टा धाता विभुर्विष्णुः संहर्त्ता मृत्युरन्तकः ॥ तद्वदुक्तं च यत्नेन यतितव्यमतः सदा ॥ ३ ॥ तस्योक्ते दोषविज्ञाने कर्म प्राकृतवैकृतम् ॥ समासव्यासतो दोषभेदानामवधार्य च ॥ ४ ॥ प्रत्येकं पंचधा वीरो व्यापारश्चेह वैकृतः ॥ तस्योच्यते विभागेन सनिदानं सलक्षणम् ॥ ५ ॥ धातुक्षयकरैर्वायुः क्रुद्धो नातिनिषेव्यते ॥ चतुःस्रोतोऽवकाशेषु भूयस्तान्येव पूरयेत् ॥ ६ ॥ तेभ्यस्तु दोषपूर्णेभ्यः प्रच्छाद्य विवरं ततः ॥ तत्र वायुः सकृत्क्रुद्धः शूलानाहान्त्रकूजनम् ॥ ७ ॥ मलरोधं स्वरभ्रंशं दृष्टिपृष्ठकटिग्रहम् ॥ करोत्येव पुनः काये कृच्छ्रानन्यानुपद्रवान् ॥ ८ ॥ आमाशयोत्थवमथुश्वासकासविपूचिकाः ॥ कण्डूपरोधघर्मादिव्याधिर्नूर्द्ध्वं च नाभितः ॥ ९ ॥ श्रोत्रादीन्द्रियबाधां च त्वचि स्फोटनरूक्षताम् ॥ चके

तीव्ररुजाश्वासगरामयविवर्णताः ॥ १० ॥ अन्त्रस्यान्तश्च विष्टम्भमरुचिं कृशतां भ्रमम् ॥ मांसमेदोगतग्रन्थिं चर्मादावुपकर्कशम् ॥ ११ ॥ गुर्वङ्गं तुद्यतेऽत्यर्थं दण्डमुष्टिहतं यथा ॥ अस्थिस्थः सक्थिसन्ध्यस्थिशूलं तीव्रञ्च लक्षयेत् ॥ १२ ॥ मज्जस्थोऽस्थिषु चास्थैर्य्यमस्वप्नं यत्तदा रुजाम् ॥ शुक्रस्य शीघ्रमुत्सङ्गसर्गान्विकृतिमेव वा ॥ १३ ॥ तत्तद्गर्भस्थशुक्रस्थः शिरस्याध्मानरिक्तता ॥ तत्र स्थानस्थितः कुर्य्यात् क्रुद्धः श्वयथुकृच्छ्रताम् ॥ १४ ॥ जलपूर्णदृतिस्पर्शं शोथं सन्धिगतोऽनिलः ॥ सर्वाङ्गसंश्रयस्तोदभेदस्फुरणभञ्जनम् ॥ १५ ॥ स्तम्भनाक्षेपणं स्वप्नः सन्धिभञ्जनकम्पनम् ॥ यदा तु धमनीः सर्वाः क्रुद्धोऽभ्येति मुहुर्मुहुः ॥ तदाङ्गमाक्षिपत्येष व्याधिराक्षेपणः स्मृतः ॥ १६ ॥ अधः प्रतिहतो वायुर्व्रजेदूर्द्धं यदा पुनः ॥ तदा वष्टभ्य हृदयं शिरःशङ्खौ च पीडयेत् ॥ १७ ॥ स क्षिपेत्परितो गात्रं हनुं वा चास्य नामयेत् ॥ कृच्छ्रादुच्छ्वसितं चापि निमीलन्नयनद्वयम् ॥ १८ ॥ कपोत इव कूजेच्च निःसंगः सोपतन्त्रकः ॥ स एव वामनासायां युक्तस्तु मरुता हृदि ॥ १९ ॥ प्राप्नोति च मुहुः स्वास्थ्यं मुहुरस्वास्थ्यवान्भवेत् ॥ अभिघातसमुत्थश्च दुश्चिकित्स्यतमो मतः ॥ २० ॥ स्वेदस्तम्भं तदा तस्य वायुश्छिन्नतनुर्यदा ॥ व्याप्नोति सकलं देहं यत्र चायाम्यते पुनः ॥२१॥ अन्तर्धातुगतश्चैव वेगस्तम्भं च नेत्रयोः ॥ करोति जृम्भां सदनं दशनानां हतोद्यमम् ॥ २२ ॥ पार्श्वयोर्वेदनां बाह्यां हनुपृष्ठशिरोग्रहम् ॥ देहस्य बहि रायामं पृष्ठतो हृदये शिरः ॥ २३ ॥ उरश्चोत्क्षिप्यते तत्र स्कन्धो वा नाम्यते तदा ॥ दन्तेष्वास्ये च वैवर्ण्यं ह्यस्वेदस्तत्र गात्रतः ॥२४॥ बाह्यायामं हनुस्तम्भं ब्रुवते वातरोगिणम् ॥ विण्मूत्रमसृजं प्राप्य ससर्मीरसमीरणाः? ॥ २५ ॥ आयच्छन्ति तनोर्दोषाः सर्वमापादमस्तकम् ॥ तिष्ठतः पाण्डु मात्रस्य व्रणायामः सुवर्द्धितः ॥ २६ ॥ गात्रवेगे भवेत्स्वास्थ्यं सर्वेष्वाक्षेपणेन तत् ॥ जिह्वाविलेखनादुष्णभक्षणादतिमानतः ॥ २७ ॥ कुपितो हनुमूलस्थः स्तम्भयित्वानिलो हनुम् ॥ करोति विवृतास्यत्वमथवा संवृतास्यताम् ॥ २८ ॥ हनस्तम्भः स तेन स्यात्कृच्छ्राच्चर्वणभाषणम् ॥ वाग्वादिनी शिरास्तम्भो जिह्वां स्तम्भयतेऽनिलः ॥ २९ ॥ जिह्वास्तम्भः स तेनान्नपानवाक्येष्वनीशता ॥ शिरसा भारहरणादतिहास्यप्रभाषणात् ॥ ३० ॥ विषमादुपधानाच्च कठिनानां च चर्वणात् ॥ वायुर्विवर्द्धते तैश्च वातूलैरूर्द्धमास्थितः ॥ ३१ ॥ वक्रीकरोति वक्रं च ह्युच्चैर्हसितमीक्षितम् ॥ ततोऽस्य कुरुते मूर्द्धा वाक्शक्तिं स्तब्धनेत्रताम् ॥ ३२ ॥ दन्तचालं स्वरभ्रंशः श्रुतिहानीक्षितग्रहौ ॥ गन्धाज्ञानं स्मृतिध्वंसस्त्रासः श्वासश्च जायते ॥ ३३ ॥ निष्ठीवः पार्श्वतोदश्च ह्येकस्याक्ष्णो निमीलनम् ॥ जत्रोरूर्द्धं रुजस्तीव्राः शरीरार्द्धधरोऽपि वा ॥ ३४ ॥ तमाहुरर्दितं केचिदेकांगमथ चापरे ॥ रक्तमाश्रित्य च शिराः कुर्य्यान्मूर्द्धधराः शिराः ? ॥३५॥ रूक्षः सवेदनः कृष्णः सोऽसाध्यः स्याच्छिरोग्रहः ॥ तनुं गृहीत्वा वायुश्च शिराः स्नायुस्तथैव च ॥३६॥

पक्षमन्यतरं हन्ति पक्षाघातः स उच्यते ॥ कृत्स्नस्य कायस्यार्द्धं स्यादकर्मण्यमचेतनम् ॥ ३७ ॥ एकांगरोगतां केचिदन्ये कक्षरुजां विदुः ॥
सर्वांगरोधः स्तम्भश्च सर्वकायाश्रितेऽनिले ॥ ३८ ॥ शुद्धवातकृतः पक्षः कृच्छ्रसाध्यतमो मतः ॥ कृच्छ्रश्चान्येन संसृष्टो विवृद्धः क्षयहेतुकः
॥ ३९ ॥ आमबद्धायनः कुर्य्यात्संस्तभ्यांगं कफान्वितः ॥ असाध्य एव सर्वो हि भवेद्दण्डापतानकः ॥ ४० ॥ अंसमूलोत्थितो
वायुः शिराः संकुच्य तत्रगः ॥ बहिः प्रस्यन्दितहरं जनयत्येव बाहुकम् ॥ ४१ ॥ तलं प्रत्यंगुलीनां यः कण्डरा बाहुपृष्ठतः ॥ बाह्वोः
कर्मक्षयकरी विषूची वेति सोच्यते ॥ ४२ ॥ वायुः कट्याश्रितः सक्थ्नः कण्डरामाक्षिपेद्यदा ॥ तदा खञ्जो भवेज्जन्तुः पंगुः सक्थ्नोर्द्वयोर्वधात् ॥ ४३ ॥
कम्पते गमनारम्भे खञ्जन्निव च गच्छति ॥ कलायखञ्जं तं विद्यान्मुक्तसन्धिप्रबन्धनम् ॥ ४४ ॥ शीतोष्णद्रवसंशुष्कगुरुस्निग्धैश्च सेवितैः ॥
जीर्णाजीर्णे तथायासक्षोभस्निग्धप्रजागरैः ॥४५॥ सश्लेष्ममेदः समये परमत्यर्थसंचितम् ॥ अभिभूयेतरं दोषं शरीरं प्रतिपद्यते ॥ ४६ ॥ सक्थ्यस्थीनि
प्रपूर्यान्तःश्लेष्मणा स्तम्भितेन तत् ॥ तदास्थि स्नाति तेनोरोस्तथा शीतानिलेन तु ॥ ४७ ॥ श्यामांगमंगस्तैमित्यतन्द्रामूर्च्छारुचिज्वरैः ॥
तमूरुस्तम्भमित्याह बाह्यवातमथापरे ॥ ४८ ॥ वातशोणितसंशोथो जानुमध्ये महारुजः ॥ ज्ञेयः क्रोष्टुकशीर्षस्तु स्थूलक्रोष्टुकशीर्षवत् ॥ ४९ ॥
रुक्पादविषमन्यस्ते श्रमाद्वा जायते यदा ॥ वातेन गुल्फमाश्रित्य तमाहुर्वातकण्टकम् ॥ ५० ॥ पार्ष्णिप्रत्यंगुलीनाभौ कण्ठे वा मारुतार्दिते ॥
सातिक्षेपं निगृह्णाति गृध्रसीं तां प्रचक्षते ॥ ५१ ॥ हृष्येते चरणौ यस्य भवेतां चापि सुप्तकौ ॥ पादहर्षः स विज्ञेयः कफमारुतकोपजः ॥ ५२ ॥
पादयोः कुरुते दाहं पित्तासृक्सहितोऽनिलः ॥ विशेषतश्चंक्रमतः पाददाहं तमादिशेत् ॥ ५३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये
आचारकाण्डे वातव्याधिनिदानं नाम षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥ धन्वन्तरिरुवाच ॥ वातरक्तनिदानं ते वक्ष्ये सुश्रुत तच्छृणु ॥
विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः ॥ १ ॥ प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् ॥ स्थूलानां सुखिनां चापि कुप्यते वातशोणितम् ॥ २ ॥
अभिघातादशुद्धेश्च नृणामसृजि दूषिते ॥ वातलैः शीतलैर्वायुर्वृद्धः क्रुद्धो विमार्गगः ॥ ३ ॥ तादृशैवासृजा रुद्धः प्राक्तदेव प्रदूषयेत् ॥
तथा गतो गुदे पीडां बलासं वातशोणितम् ॥ ४ ॥ संस्तभ्य जनयेत्पूर्वं पश्चात्सर्वत्र धावति ॥ विशेषाद्गमनाद्यैश्च प्रलम्बस्तस्य लक्षणम् ॥ ५ ॥
भविष्यतः कुष्ठसमं तथा साम्बुदसंज्ञकम् ॥ जानुजङ्घोरुकट्यंसहस्तपादांगसन्धिषु ॥ ६ ॥ कण्डूस्फुरणनिस्तोदभेदगौरवसुप्तताः ॥
भूत्वा भूत्वा प्रशाम्यन्ति मुहुराविर्भवन्ति च ॥ ७ ॥ पादयोर्मूलमास्थाय कदाचिद्धस्तयोरपि ॥ आखोरिव विलं क्रुद्धः कृत्स्नं देहं विधावति ॥ ८ ॥

त्वङ्मांसाश्रयमुत्तानं तत्पूर्वं जायते ततः ॥ कालान्तरेण गम्भीरं सर्वधातूनभिद्रवेत् ॥ ९ ॥ कट्यादिसंयतस्थाने त्वक्ताम्रश्यावलो
हिताः ॥ श्वयथुर्ग्रथितः पाकः स वायुश्चास्थिमज्जसु ॥१०॥ छिन्दन्निव चरत्यन्तश्चक्रीकुर्वंश्च वेगवान् ॥ करोति खञ्जं पङ्गुं वा शरीरं सर्वतश्चरन् ॥
॥ ११ ॥ वाताधिकेऽधिकं तत्र शूलस्फुरणभञ्जनम् ॥ शोथस्य रौक्ष्यं कृष्णत्वं श्यावतावृद्धिहानयः ॥ १२ ॥ धमन्यंगुलिसन्धीनां संकोचोंगग्रहो
तिरुक् ॥शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः ॥१३॥रक्ते शोथोऽतिरुक्तोदस्ताम्रश्चिमिचिमायते ॥ स्निग्धरूक्षैः समं नैति कण्डुक्लेदसमन्वितः ॥१४॥
पित्ते विदाहः सम्मोहः स्वादो मूर्च्छा मदस्तृषा ॥ स्पर्शासहत्वं रुग्रागः शोथः पाको भृशोष्मता ॥ १५ ॥ कफे स्तैमित्यगुरुता सुप्तिस्निग्धत्वशीतता ॥
कण्डूर्मन्दा च रुग्द्वन्द्वं सर्वलिङ्गञ्च संकरात् ॥ १६ ॥ एकदोषञ्च संसाध्यं याप्यञ्चैव द्विदोषजम् ॥ त्रिदोषजन्त्यजेदाशु रक्तपित्तं सुदारुणम् ॥१७॥
रक्तमङ्गे निहन्त्याशु शाखासन्धिषु मारुतः ॥ निवेश्यान्योन्यमावार्य्य वेदनाभिर्हरत्यसून् ॥ १८ ॥ वायौ पञ्चात्मके प्राणे रौक्ष्याच्चापल्यलङ्घनैः ॥
अत्याहाराभिघाताच्च वेगोदीरणचारणैः ॥ १९ ॥ कुपितश्चक्षुरादीनामुपघातं प्रकल्पयेत् ॥ पीनसो दाहतृट्कासश्वासादिश्चैव जायते ॥ २० ॥ कण्ठ
रोधोमलभ्रंशच्छर्द्यरोचकपीनसान् ॥ कुर्य्याच्च गलगण्डादींस्तान्जत्रूर्ध्वसंश्रयः ॥ २१ ॥ व्यानोऽतिगमनस्नानक्रीडाविषयचेष्टितैः ॥ विरुद्धरू[illegible]भी
हर्षविषादाद्यैश्च दूषितः ॥ २२ ॥ पुंस्त्वोत्साहबलभ्रंशशोकचित्तप्लवज्वरान् ॥ सर्वांकारादिनिस्तोदरोमहर्षं सुप्तताम् ॥ २३ ॥ कुष्ठं विसर्पमन्य
च्च कुर्य्यात् सर्वाङ्गसादनम् ॥ समानो विषमाजीर्णशीतसङ्कीर्णभोजनैः ॥ २४ ॥ करोत्यकालशयनजागराद्यैश्च दूषितः ॥ शूलगुल्मग्रहण्यादी
न्पक्वामाश्रयान्गदान् ॥ २५ ॥ अपानो रूक्षगुर्वन्नवेगाघातातिवाहनैः ॥ यानपानसमुत्थानचङ्क्रमैश्चातिसेवितैः ॥ २६ ॥ कुपितः कुरुते
रोगान्कृत्स्नान् पक्वाशयाश्रयान् ॥ मूत्रशुक्रप्रदोषार्शोगुदभ्रंशादिकान्बहून् ॥ २७ ॥ सर्वाङ्गमाततं सामं तन्द्रास्तैमित्यगौरवैः ॥ स्निग्धत्वाद्रोच
कालस्य शैत्यशोथाग्निहानयः ॥ २८ ॥ कण्डूरूक्षातिनाशेन तद्विधोपशमेन च ॥ मुक्तिं विद्यान्निरामं तं तन्द्रादीनां विपर्ययात् ॥ २९ ॥ वायो
रावरणं वातो बहुभेदं प्रचक्षते ॥ पित्तलिङ्गावृते दाहस्तृष्णा शूलं भ्रमस्तमः ॥ ३० ॥ कटुकोष्णाम्ललवणैर्विदाहशीतकामता ॥ शैत्यगौरवशूला
भ्यिकट्वाज्यपयसोऽधिकम् ॥ ३१ ॥ लंघनायासरूक्षोष्णकामता च कफावृते ॥ कफावृतेऽङ्गमर्दः स्याद्हृल्लासो गुरुताऽरुचिः ॥ ३२ ॥ रक्तावृते सदाहा
र्तिस्त्वङ्मांसाश्रयजा भृशम् ॥ भवेत्सरागः श्वयथुर्जायन्ते मण्डलानि च ॥ ३३ ॥ शोथो मांसेन कठिनो ह्लासपिटिकास्तथा ॥ हर्षः पिपीलिकानां
च संचार इव जायते ॥ चललग्नो मृदुः शीतः शोथो गात्रेषु रोचकः ॥ ३४ ॥ आढ्यवात इव ज्ञेयः स कृच्छ्रो मेदसावृतः ॥ स्पर्शे आच्छादितत्युष्ण

शीतलश्च त्वनावृते ॥ मज्जावृते तु विषमं जृम्भणं परिवेष्टनम् ॥३५॥शूलञ्च पीड्यमानश्च पाणिभ्यां लभते सुखम् ॥ शुक्रावृते तु शोथे वै चातिवेगो न विद्यते ॥३६॥ भुक्ते कुक्षौ रुजा जीर्णे निवृत्तिर्भवति ध्रुवम् ॥ मूत्राप्रवृत्तिराध्मानं बस्तेर्मूत्रावृते भवेत् ॥३७॥ छिद्रावृते विबन्धोऽथ स्वस्थानं परिकृंतति ॥ पतत्याशु ज्वराक्रांतो मूर्च्छां च लभते नरः॥३८॥सकृत् पीडितमन्येन दुष्टं शुक्रं चिरात्सृजेत् ॥ सर्वधात्वावृते वायौ श्रोणिवङ्क्षणपृष्ठरुक् ॥३९॥ विलोमे मारुते चैव हृदयं परिपीड्यते ॥ भ्रमो मूर्च्छा रुजा दाहः पित्तेन प्राण आवृते ॥ ४० ॥ रुजा तन्द्रा स्वरभ्रंशो दाहो व्याने तु सर्वशः ॥ क्रमों गचेष्टाभंगश्च सन्तापः सहवेदनः॥४१॥समान ऊष्मोपहतिः सस्वेदोपरतिः सुतृट् ॥ दाहश्च स्यादपाने तु मले हारिद्रवर्णता॥४२॥ रजोवृद्धिस्तापनश्च तथा चानाहमेहनम् ॥ श्लेष्मणा प्रावृते प्राणे नादः स्रोतोऽवरोधनम् ॥ ४३ ॥ ष्ठीवनश्चैव सस्वेदश्वासानिःश्वाससंग्रहः ॥ उदाने गुरुगात्रत्वमरुचिर्वाक्स्वरग्रहः ॥४४॥ बलवर्णप्रणाशश्चा पाने पर्वास्थिसंग्रहः ॥ गुरुतांगेषु सर्वेषु स्थूलत्वञ्चागतं भृशम् ॥४५॥ समानेऽतिक्रियाज्ञत्वमस्वेदो मन्दवह्निता ॥ अपाने सकलं मूत्रं शकृतः स्यात्प्रवर्त्तनम् ? ॥४६॥ इति द्वाविंशतिविधं वातरक्तामयं विदुः ॥ प्राणादयस्तथान्योऽन्यं समाक्रान्ता यथाक्रमम् ॥४७॥ सर्वेऽपि विंशतिविधं विद्यादावरणञ्च यत् ॥ हृष्टासोच्छ्वाससंरोधः प्रतिश्यायः शिरोग्रहः ॥ ४८ ॥ हृद्रोगो मुखशोषश्च प्राणेनापान आवृते ॥ उदानेनावृते प्राणे भवेद्धि बलसंक्षयः ॥ ४९ ॥ विचारणेन विभजेत्सर्वमावरणं भिषक् ॥ स्थानान्यपेक्ष्य वातानां वृद्धिंहानिं च कर्मणाम् ॥ ५० ॥ प्राणादीनाञ्च पञ्चानां पित्तमावरणं मिथः ॥ पित्तादीनामावसातिर्मिश्राणां मिश्रितैश्च तैः ॥ ५१ ॥ मिश्रैः पित्तादिभिस्तद्वन्मिश्राण्यपि त्वनेकधा ॥ ताँल्लक्षयेदवहितो यथास्वं लक्षणोदयात् ॥ ५२ ॥ शनैः शनैश्चोपशयान्हृढानपि मुहुर्मुहुः ॥ विशेषाज्जीवितं प्राण उदानो बलमुच्यते ॥ स्यात्तयोः पीडनाद्धानिरायुषश्च बलस्य च ॥ ५३ ॥ आवृता वायवोऽज्ञाता ज्ञाता वा स्थानविच्युताः ॥ प्रयत्नेनापि दुःसाध्या भवेयुर्वानुपद्रवाः ॥ ५४ ॥ विद्रधिप्लीहहृद्रोगगुल्माग्निसदनादयः ॥ भवन्त्युपद्रवास्तेषामावृतानामुपेक्षया ॥ ५५ ॥ निदानं सुश्रुत ! मया आत्रेयोक्तं समीरितम् ॥ सर्वरोगविवेकाय नराद्यायुः प्रवृद्धये ॥ ५६ ॥ एवं विज्ञाय रोगादींश्चिकित्सामथ वै चरेत् ॥ त्रिफला सर्वरोगघ्नी मध्वाज्यगुडसंयुता ॥ ५७ ॥ सव्योषा त्रिफला वापि सर्वरोगप्रमर्दिनी ॥ शतावरीगुडूच्यग्निविडंगेन युताथवा ॥ ५८ ॥ शतावरी गुडूच्याग्निः शुण्ठी मूषलिका बला ॥ पुनर्नवा च बृहती निर्गुण्डी निम्बपत्रकम् ॥ ५९ ॥ भृंगराजश्चामलकं वासकस्तद्रसेन वा ॥ भाविता त्रिफला सप्तवारमेकमथापि वा ॥ ६० ॥ पूर्वोक्तश्च यथालाभयतैश्चूर्णश्च मोदकः ॥ [illegible]

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वातरक्तानि०सप्तषष्ट्यधिकशततमोऽध्यायः॥१६७॥निदानं समाप्तम्॥धन्वन्तरिरुवाच ॥
सर्वरोगहरं सिद्धं योगसारं वदाम्यहम् ॥ शृणु सुश्रुत संक्षेपात्प्राणिनां जीवहेतवे ॥ १ ॥ कषायकटुतिक्ताम्लरूक्षाहारादिभोजनात् ॥ चिन्ताव्यवायव्या
यामभयशोकप्रजागरात् ॥ २ ॥ उच्चैर्भाषातिभाराच्च कर्मयोगातिकर्षणात् ॥ वायुः कुप्यति पर्जन्ये जीर्णान्ने दिनसंक्षये ॥ ३ ॥ उष्णाम्ल
लवणक्षारकटुकाजीर्णभोजनात् ॥ तीक्ष्णातपाग्निसन्तापमद्यक्रोधनिषेवणात् ॥ ४ ॥ विदाहकाले भुक्तस्य मध्याह्ने जलदात्यये ॥ ग्रीष्मकालेऽर्द्ध
रात्रेऽपि पित्तं कुप्यति देहिनः ॥ ५ ॥ स्वाद्वम्ललवणस्निग्धगुरुशीतातिभोजनात् ॥ नवान्नपिच्छिलानूपमांसादेःसेवनादपि ॥ ६ ॥ अव्यायाम
दिवास्वप्नशय्यासनसुखादिभिः ॥ कफप्रदोषो भुक्ते च वसन्ते च प्रकुप्यति ॥ ७ ॥ देहपारुष्यसंकोचतोदविष्टम्भकादयः ॥ तथा च सुप्तता रोम
हर्षस्तम्भनशोषणम् ॥ ८ ॥ श्यामत्वमङ्गविश्लेषबलमायासवर्द्धनम् ॥ वायोर्लिङ्गानि तैर्युक्तं रोगं वातात्मकं वदेत् ॥ ९ ॥ दाहोष्मपादसंक्लेदकोपरा
गपरिश्रमाः ॥ कट्वम्लशवैवगन्ध्यस्वेदमूर्च्छातितृड्भ्रमाः ॥ १० ॥ हारिद्रं हरितत्वञ्च पित्तलिङ्गान्वितैर्नरैः ॥ देहे स्निग्धत्वमाधुर्य्यचिरकारित्वब
न्धनम् ॥ ११ ॥ स्तैमित्यतृप्तिसङ्घातशोथशीतलगौरवम् ॥ कण्डूनिद्राभियोगश्च लक्षणं कफसम्भवम् ॥ १२ ॥ हेतुलक्षणसंसर्गाद्विद्याद्व्याधिं द्विदो
षजम् ॥ सर्वहेतुसमुत्पन्नं त्रिलिङ्गं सान्निपातिकम् ॥ १३ ॥ दोषधातुमलाधारो देहिनां देह उच्यते ॥ तेषां समत्वमारोग्यं क्षयवृद्ध्योर्विपर्य्ययः ॥ १४ ॥
वसासृङ्मांसमेदोऽस्थिमज्जाशुक्राणि धातवः ॥ वातपित्तकफा दोषा विण्मूत्राद्या मलाः स्मृताः ॥ १५ ॥ वायुः शीतो लघुः सूक्ष्मः स्वरनाशी
स्थिरो बली ॥ पित्तमम्लकटूष्णञ्चापङ्क्ती रोगकारणम् ॥ १६ ॥ मधुरो लवणः स्निग्धो गुरुः श्लेष्मातिपिच्छिलः ॥ गुदश्रोण्याश्रयो वायुः पित्तं
पक्वाशयस्थितम् ॥ १७ ॥ कफस्यामाशयस्थानं कण्ठो वा मूर्द्धसन्धयः ॥ कटुतिक्तकषायाश्च कोपयन्ति समीरणम् ॥ १८ ॥ कट्वम्ललवणाः
पित्तं स्वादूष्णलवणाः कफम् ॥ एत एव विपर्य्यस्ताः शमायैषां प्रयोजिताः ॥ भवन्ति रोगिणां शान्त्यै स्वस्थाने सुखहेतवः ॥ १९ ॥ चक्षुष्यो
मधुरो ज्ञेयो रसधातुविवर्द्धनः ॥ अम्लोत्तरो मनोहृद्यं तथा दीपनपाचनम् ॥ २० ॥ दीपनोज्वरतृष्णाघ्नस्तिक्तः शोधनशोषणः ॥ पित्तलो लेखन
स्तम्भी कषायो ग्राहिशोषणः ॥ २१ ॥ रसवीर्य्यविपाकानामाश्रयं द्रव्यमुत्तमम् ॥ रसपाकान्तरस्थायि सर्वद्रव्याश्रयं द्रुतम् ॥ २२ ॥ शीतोष्णं
लवणं वीर्य्यमथ वा शक्तिरिष्यते ॥ रसानां द्विविधः पाको मधुरः कटुरेव च ॥ २३ ॥ भिषग्भेषजरोगार्त्तपरिचारकसम्पदः ॥ चिकित्साङ्गानि
चत्वारि विपरीतान्यसिद्धये ॥ २४ ॥ देशकालवयोवह्निसाम्यप्रकृतिभेषजम् ॥ देहसत्त्वबलव्याधीन्बुद्ध्वा [illegible] समाचरेत् ॥ २५ ॥ ( बहूदकनगोऽ

नूपः कफमारुतकोपवान् ॥ जाङ्गलोऽपरशाखी च रक्तपित्तगदोत्तरः ॥ १ ॥ ) संसृष्टलक्षणोपेतो देशः साधारणः स्मृतः ॥ बाल आ षोडशान्मध्यः सप्ततेर्वृद्ध उच्यते ॥ २६ ॥ कफपित्तानिलाः प्रायो यथाक्रमसुदीरिताः ॥ क्षाराग्निशस्त्ररहिता क्षीणे प्रवक्ष्यसि क्रियाः ॥ २७ ॥ कृशस्य बृंहणं कार्य्यं स्थूलदेहस्य कर्षणम् ॥ रक्षणं मध्यकायस्य देहभेदास्त्रयो मताः ॥ २८ ॥ स्थैर्य्यव्यायामसन्तोषैर्बोद्धव्यं यत्नतो बलम् ॥ अविकारी महोत्साहो महासाहसिको नरः ॥ २९ ॥ पानाहारादयो यस्य विरुद्धाः प्रकृतेरपि ॥ श्वसुखायोपकल्प्यन्ते तत्साम्यमिति कथ्यते ॥ ३० ॥ गर्भिण्याः श्लैष्मिकैर्भक्ष्यैः श्लैष्मिको जायते नरः ॥ वातलैः पित्तलैस्तद्वत्समधातुर्हिताशनात् ॥३१॥ कृशो रूक्षोऽल्पकेशश्च चलचित्तो नरः स्थितः ॥ बहुवाक्यरतः स्वप्ने वातप्रकृतिको नरः ॥३२॥ अकालपलितो गौरः प्रस्वेदी कोपनो बुधः ॥ स्वप्नेऽपि दीप्तिमत्प्रेक्षी पित्तप्रकृतिरुच्यते ॥३३॥ स्थिरचित्तः स्वरः सूक्ष्मः प्रसन्नः स्निग्धमूर्द्धजः ॥ स्वप्ने जलशिलालोकी श्लेष्म प्रकृतिको नरः ॥ ३४ ॥ सम्मिश्रलक्षणैर्ज्ञेयो द्वित्रिदोषान्वयो नरः ॥ दोषस्येतरसद्भावेऽप्यधिका प्रकृतिः स्मृताः ॥ ३५ ॥ मन्दस्तीक्ष्णोऽथ विषमः समश्चेति चतुर्विधाः ॥ कफपित्तानिलाधिक्यात्तत्साम्याज्जाठरोऽनलः ॥ ३६ ॥ समस्य पालनं कार्य्यं विषमे वातनिग्रहः ॥ तीक्ष्णे पित्तप्रतीकारो मन्दे श्लेष्मविशोधनम् ॥ ३७ ॥ प्रभवः सर्वरोगाणामजीर्णं चाग्निनाशनम् ॥ आमाम्लरसविष्टम्भलक्षणंतच्चतुर्विधम् ॥ ३८ ॥ आमाद्विषूचिका चैव हृदालस्यादयस्तथा ॥ वचालवणतोयेन छर्दनं तत्र कारयेत् ॥ ३९ ॥ शुक्राभावो भ्रमो मूर्च्छा तर्षोऽम्लात्संप्रवर्त्तते ॥ अपक्वं तत्र शीताम्बुपानं वातनिषेवणम् ॥ ४० ॥ गात्रभंगं शिरोजाड्यं भक्तदोषादयो गदान् ॥ तस्मिन्स्वापो दिवा कार्यो लंघनं च विवर्जनम् ॥ ४१ ॥ शूलगुल्मौ च विण्मूत्रस्थानविष्टम्भसूचकौ ॥ विधेयं स्वेदनं तत्र पानीयं लवणोदकम् ॥ ४२ ॥ आमसम्लं च विष्टब्धं कफपित्तानिलैः क्रमात् ॥ आलिप्य जठरं प्राज्ञो हिंगुत्र्यूषणसैन्धवैः ॥ ४३ ॥ दिवास्वप्नं प्रकुर्वीत सर्वाजीर्णविनाशनम् ॥ अहितान्नं रोगराशिरहितान्नं ततस्त्यजेत् ॥ ४४ ॥ उष्णाम्बु वानुपानं च माक्षिकैः पाचनं भवेत् ॥ करीरदधिमत्स्यैश्च प्रायः क्षीरं विरुध्यते ॥ ४५ ॥ बिल्वः शोणा च गम्भारी पाटला गणिकारिका ॥ दीपनं कफवातघ्नं पञ्चमूलमिदं महत् ॥ ४६ ॥ शालपर्णी पृश्निपर्णी बृहतीद्वयगोक्षुरम् ॥ वातपित्तहरं वृष्यं कनीयः पञ्चमूलकम् ॥ ४७ ॥ उभयं दशमूलं स्यात्सान्निपातज्वरापहम् ॥ कासे श्वासे च तन्द्रायां पार्श्वशूले च शस्यते ॥ ४८ ॥ एतैस्तैलानि सर्पींषि प्रलेपादलकां जयेत ॥ क्वाथाच्चतुर्गुणं वारि पादस्थं स्याच्चतुर्गुणम ॥४९॥ स्नेहश्च तत्समं क्षीरं कल्कश्च स्नेहपादकः ॥ [illegible]

स्वरोऽभ्यंगे मृदुर्नस्ये पाकोऽपि संप्रकल्पयेत् ॥ ५० ॥ स्थूलदेहेन्द्रियांश्चिन्त्याः प्रकृतिर्या त्वधिष्ठिता ॥ आरोग्यमिति तं विद्यादायुष्मन्तमुपाचरेत ॥५१॥यो गृह्णातीन्द्रियैरर्थान्विपरीतान्स मृत्युभाक् ॥ भिषग्द्विड्गुरुद्वेषी प्रियारातिश्च यो भवेत् ॥५२॥ गुल्फजानुललाटं च हनुर्गण्डस्तथैव च ॥ भ्रष्टं स्थानच्युतं यस्य स जहात्यचिरादसून् ॥ ५३ ॥ वामाक्षिमज्जनं जिह्वा श्यामा नासा विकारिणी ॥ कृष्णौ स्थानच्युतौ चोष्ठौ कृष्णास्यं यस्य तं त्यजेत् ॥ ५४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैद्यकशास्त्रपरिभाषा० नामाष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥ धन्वन्तरिरुवाच ॥ हिताहितविवेकाय अनुपानविधिं ब्रुवे ॥ रक्तशालि त्रिदोषघ्नं तृष्णामेदोनिवारकम् ॥ १ ॥ महाशालि परं वृष्यं कलमः श्लेष्मपित्तहा ॥ शीतो गुरुस्त्रिदोषघ्नः प्रायशो गौरषष्टिकः ॥ २ ॥ श्यामाकः शोषणो रूक्षो वातलः श्लेष्मपित्तहा ॥ तद्वत्प्रियंगुनीवारकोरदूषाः प्रकीर्तिताः ॥ ३ ॥ बहुवारः सकृच्छीतः श्लेष्मपित्तहरो यवः ॥ वृष्यः शीतो गुरुः स्वादुर्गोधूमो वातनाशनः ॥ ४ ॥ कफपित्तास्रजिन्मुद्गः कषायो मधुरो लघुः ॥ माषो बहुबलो वृष्यः पित्तश्लेष्महरो गुरुः ॥५॥ अवृष्यः श्लेष्मपित्तघ्नो राजमाषोऽनिलार्त्तिनुत् ॥ कुलत्थः श्वासहिक्काहृत्कफगुल्मानिलापहः ॥ ६ ॥ रक्तपित्तज्वरोन्माथो शीतो ग्राही मकुष्ठकः ॥ पुंस्त्वामृक्कफपित्तघ्नश्चणको वातलः स्मृतः ॥ ७ ॥ मसूरो मधुरः शीतः संग्राही कफपित्तहा ॥ तद्वत्सर्वगुणाढ्यश्च कलायश्चातिवातलः ॥ ८ ॥ आढकी कफपित्तघ्नी शुकला च तथा स्मृता ॥ अतसी पित्तला ज्ञेया सिद्धार्थः कफवातजित ॥ ९ ॥ सक्षारमधुरस्निग्धो बलोष्णपित्तकृत्तिलः ॥ बलघ्ना रूक्षलाः शीता विविधाः सस्यजातयः ॥ १० ॥ चित्रकेंगुदिनालीकाः पिप्पलीमधुशिग्रवः ॥ चव्याचरणनिर्गुण्डीतर्कारीकाशमर्दकाः ॥ ११ ॥ सबिल्वाः कफपित्तघ्नाः क्रिमिघ्ना लघुदीपकाः ॥ वर्षाभूमार्करौ वातकफघ्नौ दोषनाशनौ ॥ ॥ १२ ॥ तिक्तरसः स्यादेरण्डः काकमाची त्रिदोषहृत् ॥ चांगेरी कफवातघ्नी सर्षपः सर्वदोषदम् ॥१३॥ तद्वदेव च कौसुम्भं राजिका वातपित्तला ॥ नाडीचः कफपित्तघ्नः चुचुर्मधुरशीतलः ॥ १४ ॥ दोषघ्नं पद्मपत्रञ्च त्रिपुटं वातकृत्परम् ॥ सक्षारः सर्वदोषघ्नो वास्तुको रोचनः परः ॥१५॥ तण्डुलीयोविषहरः पालङ्क्याश्च तथापरे ॥ मूलकं दोषकृच्चामं स्विन्नं वातकफापहम् ॥१६॥ सर्वदोषहरं हृद्यं कंव्यं तत्पक्वमिष्यते ॥ कर्कोटकं सवार्ताकं पटोलं कारवेल्लकम् ॥ १७ ॥ कुष्ठमेहज्वरश्वासकासपित्तकफापहम् ॥ सर्वदोषहरं हृद्यं कूष्माण्डं बस्तिशोधनम् ॥ १८ ॥ कालिंगालाबुनी पित्तनाशिनी वातकारिणी ॥ त्रपुषोर्वारुके वातश्लेष्मले पित्तवारणे ॥ १९ ॥ वृक्षाम्लं कफवातघ्नं जम्बीरं कफवातनुत् ॥ वातघ्नं दाडिमं

१ पुंस्त्वमार्षम् । २ सर्वदोषान्यतीतीति विग्रहः ।

ग्राहि नागरंगफलं गुरु ॥ २० ॥ केशरं मातुलुंगं च दीपनं कफवातनुत् ॥ वातपित्तहरो माषस्त्वक्स्निग्धोष्णानिलापहः ॥ २१ ॥ सरसा मलकं वृष्यं मधुरं हृद्यमम्लकृत् ॥ भुक्तमरोचका पुण्या हरीतक्यमृतोपमा ॥ २२ ॥ स्रंसनी कफवातघ्नी ह्यक्षस्तद्वत्त्रिदोषजित् ॥ वातश्लेष्महरं त्वम्लं स्रंसनं तिन्तिडीफलम् ॥ २३ ॥ दोषलं लकुचं स्वादु बकुलं कफवातजित् ॥ गुल्मवातकफश्वासकासघ्नं बीजपूरकम् ॥ २४ ॥ कपित्थं ग्राहि दोषघ्नं पक्वं गुरु विषापहम् ॥ कफपित्तकरं बालमापूर्णं पित्तवर्द्धनम् ॥ २५ ॥ पक्वाम्रं वातकृन्मांसशुक्रवर्णबलप्रदम् ॥ वातघ्नं कफ पित्तघ्नं ग्राहि विष्टम्भि जाम्बवम् ॥ २६ ॥ तिन्दुकं कफवातघ्नं बदरं वातपित्तहृत् ॥ विष्टम्भि वातलं बिल्वं प्रियालं पवनापहम् ॥ २७ ॥ राजादन फलं मोचं पनसं नारिकेलजम् ॥ शुक्रमांसकराण्याहुः स्वादुस्निग्धगुरूणि च ॥ २८ ॥ द्राक्षामधूकखर्जूरं कुङ्कुमं वातरक्तजित् ॥ मागधी मधुरा पक्वा श्वासपित्तहरा परा ॥ २९ ॥ आर्द्रकं रोचकं वृष्यं दीपनं कफवातहृत् ॥ शुण्ठीमरिचपिप्पल्यः कफवातजितो मताः ॥ ३० ॥ अवृष्यं मरिचं विद्यादिति वैद्यकसम्मतम् ॥ गुल्मशूलविबंधघ्नं हिङ्गुवातकफापहम् ॥ ३१ ॥ यवानीधन्यकाजाज्यः वातश्लेष्मनुदः परम् ॥ चक्षुष्यं सैन्धवं वृष्यं त्रिदोषशमनं स्मृतम् ॥ ३२ ॥ सौवर्चलं विबन्धघ्नमुष्णं हृच्छूलनाशनम् ॥ उष्णं शूलहरं तीक्ष्णं विडङ्गं वातनाशनम् ॥ ३३ ॥ रोमकं वातलं स्वादु रोचनं क्लेदनं गुरु ॥ हृत्पाण्डुगलरोगघ्नं यवक्षारोऽग्निदीपनः ॥ ३४ ॥ दहनो दीपनस्तीक्ष्णः सर्जिक्षारो विदारणः ॥ दोषघ्नं नाभसं वारि लघु हृद्यं विषापहम् ॥ ३५ ॥ नादेयं वातलं रूक्षं सारसं मधुरं लघु ॥ वातश्लेष्महरं वाप्यं ताडागं वातलं स्मृतम् ॥ ३६ ॥ रौच्यमग्निकरं रूक्षं कफघ्नं लघु नैर्झरम् ॥ दीपनं पित्तलं कौपमौद्भिदं पित्तनाशनम् ॥ ३७ ॥ दिवार्ककिरणैर्जुष्टं रात्रौ चैवेन्दुरश्मिभिः ॥ सर्वदोषविनिर्मुक्तं तत्तुल्यं गगना म्बुना ॥ ३८ ॥ उष्णं वारि ज्वरश्वासमेदोऽनिलकफापहम् ॥ शृतं शीतत्रिदोषघ्नमुषितं तच्च दोषलम् ॥ ३९ ॥ गोक्षीरं वातपित्तघ्नं स्निग्धं गुरु रसायनम् ॥ गव्याद्गुरुतरं स्निग्धं माहिषं वह्निनाशनम् ॥ ४० ॥ छागं रक्तातिसारघ्नं कासश्वासकफापहम् ॥ चक्षुष्यं जीवनं स्त्रीणां रक्तपित्ते च नावनम् ॥ ४१ ॥ परं वातहरं वृष्यं पित्तश्लेष्मकरं दधि ॥ दोषघ्नं मन्थजातन्तु मस्तु स्रोतोविशोधनम् ॥ ४२ ॥ ग्रहण्यर्शोऽर्दितार्त्तिघ्नं नवनीतं नवोद्धृतम् ॥ विकाराश्च किलाटाद्या गुरवः कुष्ठहेतवः ॥ ४३ ॥ परं ग्रहणीशोथार्शःपाण्डूतीसारगुल्मनुत् ॥ त्रिदोषशमनं तक्रं कथितं पूर्वसूरि भिः ॥ ४४ ॥ वृष्यश्च मधुरं सर्पिर्वातपित्तकफापहम् ॥ गव्यं मेध्यञ्च चाक्षुष्यं संस्काराच्च त्रिदोषजित् ॥ ४५ ॥ अपस्मारगदोन्मादमूर्च्छाघ्नं संस्कृतं घृतम् ॥ अजादीनाञ्च सर्पींषि विद्याद्गोक्षीरसद्गुणैः ॥ कफवातहरं मूत्रं सर्वक्रिमिविषापहम् ॥ ४६ ॥ पाण्डुत्वोदरकुष्ठार्शःशोथगुल्मप्रमेहनुत् ॥

वातश्लेष्महरं बल्यं तैलं केश्यं तिलोद्भवम् ॥ ४७ ॥ सार्षपं कृमिपाण्डुघ्नं कफमेदोऽनिलापहम् ॥ क्षौमं तैलमचक्षुष्यं पित्तहृद्वातनाशनम् ॥ ४८ ॥ अक्षजं कफपित्तघ्नं केश्यं त्वक्श्रोत्रतर्पणम् ॥ त्रिदोषघ्नं मधु प्रोक्तं वातलश्च प्रकीर्त्तितम् ॥ ४९ ॥ हिक्काश्वासकृमिच्छर्दिमेहतृष्णाविषापहम् ॥ इक्षवो रक्तपित्तघ्ना बल्या वृष्याः कफप्रदाः ॥ ५० ॥ फाणितं पित्तलं तन्निं सुरा मत्स्यण्डिका लघुः ॥ खण्डं वृष्यं तथा स्निग्धं स्वाद्वसृक्पित्तवात जित् ॥ ५१ ॥ वातपित्तहरो रूक्षो वातघ्नः कफकृद्गुडः ॥ स पित्तघ्नः परः पथ्यः पुराणोऽसृक्प्रसादनः ॥ ५२ ॥ रक्तपित्तहरा वृष्या सस्नेहा गडश र्करा ॥ सर्वपित्तकरं मद्यमम्लत्वात्कफवाताजित् ॥ ५३ ॥ रक्तपित्तकरास्तीक्ष्णास्तथा सौवीरजातयः ॥ पाचनो दीपनः पथ्यो मण्डः स्याद्भृष्ट तण्डुलः ॥ ५४ ॥ वातानुलोमनी लघ्वी पेया बस्तिविशोधनी ॥ सतक्रदाडिमव्योषा सगुडा मधुपिप्पली ॥ ५५ ॥ हन्तीयं सुकृता पेया कासश्वा सप्रवाहिकाः ॥ पायसः कफकृद्बल्यः कृशरा वातनाशिनी ॥ ५६ ॥ सुधौतः प्रस्रुतः स्निग्धः सुखोष्णो लघुरोचनः ॥ कन्दमूलफलैर्हैः साधितो बृंहणो गुरुः ॥ ५७ ॥ ईषदुष्णसेवनाच्च लघुः सूपः सुसाधितः ॥ स्विन्नं निष्पीडितं शाकं हितं स्नेहादिसंस्कृतम् ॥ ५८ ॥ दाडिमामलकैर्यूषो वह्निकृद्वा तपित्तहा ॥ श्वासकासप्रतिश्यायकफघ्नो मलकैः कृतः ॥ ५९ ॥ यवकोलकुलत्थानां यूषः कण्ठ्योऽनिलापहः ॥ मुद्गामलकजो ग्राही श्लेष्मपित्तवि नाशनः ॥ ६० ॥ सगुडं दधि वातघ्नं सक्तवो रूक्षवातुलाः ॥ घृतपूर्णोऽग्निकारी स्याद्वृष्या गुर्वी च शष्कुली ॥ ६१ ॥ बृंहणाः सामिषा भक्ष्यपिष्ट का गुरवः स्मृताः ॥ तैलसिद्धाश्च दृष्टिघ्नास्तोयास्विन्नाश्च दुर्जराः ॥ ६२ ॥ अत्युष्णा मण्डकाः पथ्याः शीतला गुरवो मताः ॥ अनुपानश्च पानीयं श्रमतृ ष्णादिनाशनम् ॥ ६३ ॥ अन्नपानादिना रक्षा कृत्स्याद्रोगवर्जितः ॥ अनुष्णः शिखिकण्ठाभो विषश्चैव विवर्णकृत् ॥ ६४ ॥ गन्धस्पर्शरसास्तीव्रा भोक्तुश्च स्यान्मनोव्यथा ॥ आघ्राणे चाक्षिरोगः स्यादसाध्यश्च भिषग्वरैः ॥ वेपथुर्जृम्भणाद्यं स्याद्विषस्यैतत्तु लक्षणम् ॥ ६५ ॥ इति श्रीगारुडे महा पुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे अनुपानादिविधिकथनं नामैकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥ धन्वन्तरिरुवाच ॥ ज्वरोऽष्टधा पृथग्द्वन्द्वसंघातागन्तुजः स्मृतः ॥ मुस्तपर्पटकोशीरचन्दनोदीच्यनागरैः ॥ शृतशीतं जलं दद्यात्पिपासाज्वरशान्तये ॥१॥ नागरं देवकाष्ठञ्च धान्याकं बृहतीद्वयम् ॥ दद्यात्पाचनकं पूर्वं ज्वरिताय ज्वरापहम् ॥ २ ॥ आरग्वधाभयामुस्तातिक्ताग्रन्थिकनिर्मितः ॥ कषायः पाचनः सामे सशूले च ज्वरे हितः ॥३॥ मधूकसारसिन्धूत्थवचोषणकणाः समाः ॥ श्लक्ष्णं पिष्टाम्भसा नस्यं कुर्यात्संज्ञाप्रबोधनम् ॥४॥ त्रिवृद्विशालात्रिफलाकटुकारग्वधैः कृतः ॥ सक्षारो भेदनः क्काथः पेयः सर्वज्वरापहः ॥ ५ ॥ महौषधामृतामुस्तचन्दनोशीरधान्यकैः ॥ क्काथस्तृतीयकं हन्ति शर्करामधुयोजितः ॥ ६ ॥

अपामार्गजटाकट्यां लोहितैः सप्ततन्तुभिः ॥ बद्ध्वा वारे रवेर्नूनं ज्वरं हन्ति तृतीयकम् ॥ ७ ॥ गङ्गाया उत्तरे कूले अपुत्रस्तापसो मृतः ॥ तस्मै
तिलोदकं दद्यान्मुञ्चत्यैकाहिको ज्वरः ॥ ८ ॥ गुडूच्याः क्वाथकल्काभ्यां त्रिफलावासकस्य च ॥ मृद्वीकाया बलायाश्च सिद्धाः स्नेहा ज्वरच्छिदः ॥
॥ ९ ॥ धात्रीशिवाकणावह्निक्वाथः सर्वज्वरान्तकः ॥ ज्वरातिसारहरणमौषधं प्रवदाम्यथ ॥ १० ॥ पृश्निपर्णीबलाबिल्वनागरोत्पलधान्यकैः ॥
पाठेन्द्रयवभूनिम्बमुस्तपर्पटकैः शृताः ॥ जयन्त्याममतीसारं सज्वरं समहौषधाः ॥ ११ ॥ नागरातिविषामुस्तभूनिम्बामृतवत्सकैः ॥ सर्वज्वरहरः
क्वाथः सर्वातीसारनाशनः ॥ १२ ॥ मुस्तपर्पटकोदीच्यशृङ्गबेरशृतं पयः ॥ शालपर्णी पृश्निपर्णी बृहती कण्टकारिका ॥ १३ ॥ बलाश्वदंष्ट्राबिल्वादि
पाठानागरधान्यकम् ॥ एतदाहारसंयोगे हितं सर्वातिसारिणाम् ॥ १४ ॥ बिल्वचूतास्थिक्वाथश्च खण्डं मध्वतिसारनुत् ॥ अतिसारे हिता तद्वत्कु
टजत्वक्कणायुता ॥ १५ ॥ वत्सकातिविषाविश्वकणाकन्दकषायकः ॥ प्रयुक्तश्चामशूलाढ्ये ह्यतीसारे सशोणिते ॥ १६ ॥ चिकित्साथ ग्रहण्यास्तु
ग्रहणी चाग्निनाशिनी ॥ चित्रकक्वाथकल्काभ्यां ग्रहणीघ्नं शृतं हविः ॥ गुल्मशोथोदरप्लीहशूलार्शोघ्नं प्रदीपनम् ॥ १७ ॥ सौवर्चलं सैन्धवञ्च बिडमौ
द्भिदमेव च ॥ सामुद्रेण समं पञ्चलवणान्यत्र योजयेत् ॥ १८ ॥ भेषजं शस्त्रक्षाराग्न्यास्त्रिधा वै चार्शसां हरम् ॥ विद्धि तच्चार्शसोघ्नं तु यदि तक्रं
नवोद्धृतम् ॥ १९ ॥ गुडूचीं पिप्पलीयुक्तामभयां घृतभर्जिताम् ॥ त्रिवृदर्शोविनाशार्थं भक्षयेदम्ललोणिकाम् ॥ २० ॥ तिलेक्षुरससंयोगश्चार्शःकुष्ट
विनाशनः ॥ पञ्चकोलं समरिचं सत्र्यूषणमथाग्निकृत् ॥ २१ ॥ हरीतकी भक्ष्यमाणा नागरेण गुडेन वा ॥ सैन्धवोपहिता वापि सातत्येनाग्निदीपनी
॥ २२ ॥ फलत्रिकामृतावासातिक्ताभूनिम्बनिम्बजः ॥ क्वाथः क्षौद्रयुतो हन्यात्पाण्डुरोगं सकामलम् ॥ २३ ॥ त्रिवृच्च त्रिफला श्यामा पिप्पली
शर्करा मधु ॥ मोदकः सन्निपातान्तो रक्तपित्तज्वरापहः ॥ २४ ॥ वासायां विद्यमानायामाशायां जीवितस्य च ॥ रक्तपित्ती क्षयी कासी किमर्थमव
सीदति ॥ २५ ॥ आटरूपकमृद्वीकापथ्याक्वाथः सशर्करः ॥ क्षौद्राढ्यः कासनिःश्वासरक्तपित्तनिबर्हणः ॥ २६ ॥ वासारसः खण्डमधुयुतः पीतोऽथ
रक्तजित् ॥ मल्लकीबदरीजम्बुप्रियालाम्रार्जुनं धवः ॥ पीतं क्षीरश्च मध्वाढ्यं पृथक्छोणितवारणम् ॥ २७ ॥ समूलफलपत्राया निर्गुण्ड्याः स्वरसैर्घृतम् ॥
सिद्धं पीत्वा क्षयक्षीणो निर्व्याधिर्भाति देववत् ॥ २८ ॥ हरीतकी कणा शुण्ठी मरिचं गुडसंयुतम् ॥ कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥२९॥
कण्टकारिगुडूचीभ्यां पृथक्त्रिंशत्पले रसे । प्रस्थं सिद्धं घृतं स्याच्च कासनुद्वह्निदीपनम् ॥ ३० ॥ कृष्णा धात्री शिता शुण्ठी हिक्काघ्नी मधुसंयुता ॥
हिक्काश्वासी पिबेद्भार्ङ्गीं सविश्वामुष्णवारिणा ॥ ३१ ॥ तैलाक्तं स्वरभेदे वा खदिरं धारयेन्मुखे ॥ पथ्यां पिप्पलिकायुक्तां संयुक्तां नागरेण वा ॥ ३२ ॥

विडङ्गत्रिफलाचूर्णं छर्दिहृन्मधुना सह ॥ आम्रजम्बूकषायं वा पिबेन्माक्षिकसंयुतम् ॥३३॥ छर्दिं सर्वां प्रणुदति तृष्णाश्चैवापकर्षति ॥ त्रिफला भ्रममू च्छार्हत्पीता सा मधुनापि वा ॥ ३४ ॥ पञ्चगव्यं हितं पानादपस्मारग्रहादिनुत ॥ कूष्माण्डकरसो वाज्यं सयष्टिकं तदर्थकृत् ॥ ३५ ॥ ब्राह्मीरसवचा कुष्ठशङ्खपुष्पीभिरेव च ॥ पुराणं सेव्यमुन्मादग्रहापस्मारहृद्घृतुतम् ॥ ३६ ॥ अश्वगन्धाकषाये च कल्के क्षीरे चतुर्गुणे ॥ घृतपक्वंतु वातघ्नं वृष्यं मांसाय पुत्रकृत् ॥ ३७ ॥ नीलीमुण्डीरिकाचूर्णं मधुसर्पिःसमान्वितम् ॥ छिन्नाक्वाथं पिबन्हन्ति वातरक्तं सुदुस्तरम् ॥ ३८ ॥ सगुडाः पञ्च पथ्याश्च कुष्ठशोंवातसादनाः ॥ गडूचीस्वरसं कल्कं चूर्णं वा क्वाथमेव वा ॥ ३९ ॥ वातरक्तान्तकं कालागुडूचीक्वाथकल्कतः ॥ कुष्ठव्रणादिशमनं शृतमाज्यं सदुग्धकम् ॥ ४० ॥ त्रिफलागुग्गुलुर्वातरक्तमूर्च्छापहारकः ॥ ऊरुस्तम्भविनाशाय गोमूत्रेण च गुग्गुलुः ॥ ४१ ॥ शुण्ठीगोक्षुरकक्वाथः सामवातार्त्तिशूलनुत् ॥ दशमूलामृतैरण्डरास्नानागरदारुभिः ॥ ४२ ॥ क्वाथो हन्ति महाशोथं मरीचगुडसंयुतः ॥ कासघ्नो मोदकः प्रोक्तस्तृष्णारोचकनाशनः ॥ ४३ ॥ कण्टकारिगुडूचीभ्यां पृथक् त्रिंशत्पले रसे ॥ प्रस्थसिद्धं घृतश्चैव कासनुद्वह्नि दीपनः ॥ ४४ ॥ कृष्णाधात्रीसिताशुण्ठीमरीचसैन्धवान्वितः ॥ क्वाथ एरण्डतैलेन सामं हन्त्यनिलं गुरुम् ॥ ४५ ॥ बला पुनर्नवैरण्डबृहतीद्वयगोक्षुरैः ॥ सहिंगुलवणं पीतं वातशूलविमर्दनम् ॥ ४६ ॥ त्रिफलानिम्बयष्टीककटुकारग्वधैः शृतम् ॥ पाययेन्मधुना मिश्रं दाहशूलोपशान्तये ॥ ४७ ॥ त्रिफलापः सयष्टीकाः परिणामार्त्तिनाशनाः ॥ गोमूत्रशुद्धमण्डूरं त्रिफलाचूर्णसंयुतम् ॥ विलिहन्मधुसर्पिर्भ्यां शूलं हन्ति त्रिदोषजम् ॥ ४८ ॥ त्रिवृत्कृष्णाहरीतक्यो द्विचतुष्पञ्चभागिकाः ॥ गुटिका गुडतुल्यास्ता विड्बन्धगदापहाः ॥ ४९ ॥ हरीतकीयवक्षारपिप्पलीत्रिवृतस्तथा ॥ घृतैश्चूर्णमिदं पेयमुदावर्त्तविनाशनम् ॥ ५० ॥ त्रिवृद्धरीतकीश्यामाः स्नुहीक्षीरेण भाविताः ॥ वटिका मूत्रपीतास्ताः श्रेष्ठाश्चानाहभेदिकाः ॥ ५१ ॥ त्र्यूषणत्रिफलाधन्यविडंगचव्यचित्रकैः ॥ कल्कीकृतैर्घृतं सिद्धं संस्कारं वातगुल्मनुत् ॥ ५२ ॥ मूलं नागरमानीतं सक्षीरं हृदयार्त्तिनुत ॥ सौवचलं तदर्द्धंतु शिवानांच घृतं पिबेत् ॥ ५३ ॥ कणापाषाणभेदैर्वा शिलाजतुकचूर्णकम् ॥ तण्डुलीभिर्गुडेनापि मूत्रकृच्छ्रीति जीवति ॥ ५४ ॥ अमृतानागरीधात्रीवाजिगन्धात्रिकण्टकाम् ॥ प्रपिबेद्वातरोगार्त्तः सशूलो मूत्रकृच्छ्रवान् ॥ ५५ ॥ सितातुल्यो यवक्षारः सर्वकृच्छ्रनिवारणः ॥ निदिग्धिकारसो वापि सक्षौद्रः कृच्छ्रनाशनः ॥ ५६ ॥ लवणं त्रिफलाकल्कैर्मूत्रावातहरं स्मृतम् ॥ मूत्रे विरुद्धे कर्पूरचूर्णं लिंगे प्रवेशयेत् ॥ ५७ ॥ क्वाथश्च शिग्रुमूलोत्थः कटूष्णोश्मानिपातनः ॥ सर्वमेहहरो धान्या रसः क्षौद्रनिशायुतः ॥ त्रिफलादारुदार्व्येब्दक्वाथः क्षौद्रेण मेहहा ॥ ५८ ॥ अस्वप्नं च व्यवायं च व्यायामाश्चिन्तनानि च ॥ स्थौल्यमिच्छन्

परित्यक्तं क्रमेणाभिप्रवर्द्धयेत् ॥ ५९ ॥ यवश्यामाकभोजी स्यात्स्थौल्यकृन्मधुवारिणा ॥ उष्णमन्नं समण्डं वा पिबन्कृशतनुर्भवेत् ॥ ६० ॥ सचव्य जीरकं व्योषं हिंगुसौवर्चलामलाः ॥ मधुना सक्तवः पीता मेदोघ्ना सर्वदीपनाः ॥ ६१ ॥ चतुर्गुणे जले मूत्रे द्विगुणे चित्रकाणि च ॥ कल्कैः सिद्धं घृत प्रस्थं सक्षीरं जठरी पिबेत् ॥ ६२ ॥ क्रमवृद्ध्या दशाहानि दश पैप्पलिकं दिनम् ॥ वर्द्धयेत्पयसा सार्द्धं तथैवापानयेत्पुनः ॥ ६३ ॥ क्षीरषष्टिकभोजी स्यादेवं कृष्णसहस्रकम् ॥ बृंहणं सुद्ममायुष्यं प्लीहोदरविनाशनम् ॥ ६४ ॥ पुनर्नवाक्वाथकल्कैः सिद्धं शोथहरं घृतम् ॥ गवां मूत्रेण संसेव्यं पिप्पली वा पयोऽन्विताः ॥ गुडेन वाभयां तुल्यां विश्वं वा शोथरोगिणा ॥ ६५ ॥ तैलमेरण्डजं पीत्वा बलासिद्धं पयोऽन्वितम् ॥ आध्मानशूलोपचितामन्त्रवृद्धिं जयेन्नरः ॥ ६६ ॥ अष्टोरुचकतैलेन कल्कः पथ्यासमुद्भवः ॥ कृष्णसैन्धवसंयुक्तो वध्मरोगहरः परः ॥६७॥ निर्गुडीमूलनस्येन गण्डमाला विनश्यति ॥ स्नुहीगण्डीरिकास्वेदो नाशयेदर्बुदानि च ॥ ६८ ॥ हस्तिकर्णपलाशस्य गलगण्डं तु लेपतः ॥ धत्तूरैरण्डनिर्गुण्डीवर्षाभूशिग्रुसर्षपैः ॥ ६९ ॥ प्रलेपः श्लीपदं हन्ति चिरोत्थमतिदारुणम् ॥ शोभाञ्जनकसिन्धूत्थहिंगुं विद्रधिनाशनम् ॥ ७० ॥ शरपुंखा मधुयुता यात्सर्वव्रणरोपणी ॥ निम्बपत्रस्य वा लेपः श्वयथुव्रणरोपणः ॥ ७१ ॥ त्रिफला खदिरो दार्वी न्यग्रोधो व्रणशोधनः ॥ सद्यः क्षतं व्रणं वैद्यः सशूलं परिषेचयेत् ॥ ७२ ॥ यष्टीमधुकयुक्तेन किञ्चिदुष्णेन सर्पिषा ॥ बुद्ध्वागन्तुव्रणान्वैद्यो घृतक्षौद्रसमन्वितान् ॥ ७३ ॥ शीतां क्रियां प्रयुञ्जीत पित्तरक्तोष्मनाशिनीम् ॥ क्वाथो वंशत्वगेरण्डश्वदंष्ट्रावनिदाकृतः ॥ ७४ ॥ सहिंगुसैन्धवः पीतः कोष्ठस्थं स्रावयेदसृक् ॥ यवकोलकुलत्थानां निःस्नेहेन रसेन वा ॥ ७५ ॥ भुञ्जीतान्नं यवाग्वा वा पिबेत्सैन्धवसंयुतम् ॥ करञ्जारिष्टनिर्गुण्डीरसो हन्याद्व्रणक्रिमीन् ॥ ७६ ॥ त्रिफलाचूर्णसंयुक्तो गुग्गुलुर्वटकीकृतः ॥ निर्यन्त्रणो विबन्धघ्नो व्रणरोपणः ॥ ७७ ॥ दूर्वास्वरससिद्धं वा तैलं कम्पिल्लकेन वा ॥ दार्वीत्वचश्च कल्केन प्रधानं व्रणरोपणम् ॥ ७८ ॥ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ज्वरादिचिकित्सानिरूपणं नाम सप्तत्युत्तरशततमोऽध्यायः ॥ १७० ॥ ॥ धन्वन्तरिरुवाच ॥ ॥ नाडीव्रणादिरोगाणां चिकित्सां शृणु सुश्रुत ॥ नाडीं शस्त्रेण संपाट्य नाडीनां व्रणवत्क्रिया ॥ १ ॥ गुग्गुलुत्रिफलाव्योषैः समांशैराज्ययोजितैः ॥ नाडीदुष्टव्रणं शूलं भगन्दरमथो जयेत् ॥ २ ॥ निर्गुण्डीरसतस्तैलं नाडीदुष्टव्रणापहम् ॥ हितं पामामयानां तु पानाभ्यञ्जननावनैः ॥३॥ गुग्गुत्रिफलाकृष्णात्रिपञ्चैकांशयोजिता ॥ घुटि ( गुडि ) का शोथगुल्मार्शोभगन्दरवतां हिता ॥ ४ ॥ ध्वजमध्ये शिरावेधे

१ चित्रकोत्पले० । २ जवरी० । ३ परं मूत्रे० । ४ अध्रुरण्डक० । ५ दंष्ट्राणां समाक्षिक० । ६ पानाभ्यञ्जननस्यकैः ० । ७ शिरोव्यथाध्वजमध्ये० ।

विशुद्धिरुपदंशके ॥ पाको रक्ष्यः प्रयत्नेन शिश्नक्षयकरो हि सः ॥ ५ ॥ पटोलनिम्बात्रिफलागुडूचीक्काथमापिबेत् ॥ सगुग्गुलुं सखादिरमुपदंशो विनश्यति ॥ ६ ॥ दहेत्कटाहे त्रिफलां सामसी ( षी ) मधुसंयुताम् ॥ उपदंशे प्रलेपोऽय सद्यो रोपयते व्रणम् ॥ ७ ॥ त्रिफलानिम्बभूनिम्बकरञ्जखादिरादिभिः ॥ कल्कैः क्काथैर्घृतं पक्कमुपदंशहरं परम् ॥ ८ ॥ आदौ भग्नं विदित्वा तु सेचयेच्छीतलांबुना ॥ पक्केनालेपनं कार्य्यं बन्धनं च कुशान्वितम् ॥ ९ ॥ माषं मांसं तथा सर्पिः क्षीरं यूषः सतीजलः ॥ बृंहणं चान्नपानं स्यात्प्रदेयं भग्नरोगिणे ॥ १० ॥ रसोनमधुनासाज्यासिताकल्कं समश्नुता ॥ छिन्नभिन्नच्युतास्थीनां सन्धानमचिराद्भवेत् ॥११॥ अश्वत्थत्रिफलाव्योषाः सवराभिः समीकृतैः ॥ तुल्यो गुग्गुलुना योज्यो भग्नसन्धिप्रसाध (कृत्) कः ॥ १२ ॥ सर्वकुष्ठेषु वमनं रेचनं रक्तमोक्षण ॥ वचावासापटोलानां निम्बस्य फलिनीत्वचः ॥१३॥ कषायो मधुना पीतो वातहन्मदनान्वितः ॥ विरेचनं प्रयोक्तव्यं त्रिवृत्कंपिफलत्रिकैः ॥ १४ ॥ मनःशिलामरीचैस्तु तैलं कुष्ठविनाशनम् ॥ सर्वकुष्ठे विलेपोऽयं शिवापञ्चगुडोदनम् ॥ १५ ॥ करंजैलगजैः कुष्ठं गोमूत्रेण प्रलेपतः ॥ करवीरोद्वर्त्तनं च तैलाक्तस्य च कुष्ठहृत् ॥ १६ ॥ हरिद्रा मलयं रास्ना गुडूच्येडगजस्तथा ॥ आरग्वधः करञ्जश्च लेपः कुष्ठहरः परः ॥ १७ ॥ मनःशिलाविडङ्गानि वागजी सर्षपास्तथा ॥ करञ्जैर्मूत्रपिष्टोऽयं लेपः कुष्ठहरोऽर्कवत् ॥ १८ ॥ विडंगैडवचा कुष्ठनिशासिन्धूत्थसर्षपैः ॥ मूत्राम्लपिष्टो लेपोऽयं दद्रूकुष्ठविनाशनः ॥ १९ ॥ प्रपुन्नाटसुबीजानि धात्री सर्ज्जरसः स्नुही ॥ सौवीरपिष्टं दद्रूणामेतदुद्वर्त्तनं परम् ॥ २० ॥ आरग्वधस्य पत्राणि आरनालेन पेषयेत् ॥ दद्रूकिट्टिम ( भ ) कुष्ठानि हन्ति सिध्मानमेव च ॥ २१ ॥ उष्णा पीता वागुजी च कुष्ठजित्क्षीरभोजनः ॥ तिलाज्यत्रिफलाक्षौद्रव्योषभल्लातशर्कराः ॥ वृष्याः सप्त समा मेध्याः कष्टहाः कामचारिणः ॥ २२ ॥ विडंगत्रिफलाकृष्णाचूर्णं लीढं समाक्षिकम् ॥ हन्ति कुष्ठक्रिमिमेहनाडीव्रणभगन्दरान् ॥ २३ ॥ यः खादेदभयारिष्टमरिष्टामलकानिशाः ॥ स जयेत्सर्वकुष्ठानि मासादूर्द्ध्वं न संशयः ॥ २४ ॥ दह्यमानाद्युतः कुम्भे मूलगे खदिरांकुरः ॥ साक्षधात्रीरसः क्षौद्रो हन्यात्कुष्ठं रसायनम् ॥ २५ ॥ धात्रीखदिरयोः क्काथं पीत्वा वागजिसंयुतम् ॥ शङ्खेन्दुधवलं श्वित्रं हन्ति तूर्णं न संशयः ॥ २६ ॥ पीत्वा भल्लातकं तैलं मासाद्व्याधिं जयेन्नरः ॥ सेवितं खादिरं वारि पानाद्यैः कुष्ठजिद्भवेत् ॥२७॥ भावितं मलपूक्काथैः सोमराजीफलं बहु ॥ कर्षं भक्षेदलवणो ह्यक्षफलगुःसृतं पिबेत् ॥ २८ ॥ हन्ति श्वित्रम

---

१ विधनश्च० । २ मासमांसासमर्णिः० । ३ क्षीरयूषेस० । ४ भग्नाय जानता० । ५ फलिनीत्वंति पाठो युक्त इति भाति । ६ त्रिवृद्दन्तीफ० । ७ लामरिचानां ( नि ) तैलपाकं पयोहरेत्० । ८ करञ्जैर्मात्र० । ९ लेपयेत्० । १० यः स्वादे० । ११ दह्यमानश्च्युतः कु० । १२ मासव्याधिं०

साध्यं च लेपे योज्यापराजिता ॥ वासा शुद्धा च त्रिफला पटोलं च करञ्जकम्॥२९॥निम्बाशनं कृष्णवेत्रं क्वाथकल्केन यद्धृतम्॥वज्रकं तद्भवेत्कुष्ठं शतव र्षाणि जीवति॥३०॥स्वरसेन च दूर्वायाः पचेत्तैलं चतुर्गुणम्॥कच्छूर्विचर्चिका पामा अभ्यङ्गादेव नश्यति॥३१॥ द्रुमत्वगर्ककुष्ठानि लवणानि च मूत्रक म् ॥ गम्भारिकाचित्रकैस्तैस्तैलं कुष्ठव्रणादिनुत्॥३२॥ (अथाम्लपित्तचिकित्सा) धात्रीनिम्बफलं तद्वद्गोमूत्रेण च चित्रकम् ॥ वासामृतापर्पटिकानिम्बभू निम्बमार्कवैः(वैः)॥ त्रिफलाकुलत्थैः क्वाथः सक्षौद्रश्चाम्लपित्तहा॥३३॥फलत्रिकं पटोलं च तिक्तक्वाथः सितायुतः॥पीतो यष्टीमधुयुतो ज्वरच्छर्द्यम्लपित्त जित् ॥३४॥ वासाघृतं तिक्तघृतं पिप्पलीघृतमेव च ॥ अम्लपित्ते प्रयोक्तव्यं गुडकूष्माण्डकं तथा॥३५॥पिप्पली मधुसंयुक्ता अम्लपित्तविनाशिनी ॥ श्लेष्माग्निमान्द्यनुत्पथ्यापिप्पलीगुडमोदकः ॥ ३६ ॥ पिष्ट्वाजाजीं सधन्याकां घृतप्रस्थं विपाचयेत् ॥ कफपित्तारुचिहरं मन्दानलवमिं हरेत् ॥३७॥ ( इत्यम्लपित्तचिकित्सा ) पिप्पल्यमृतभूनिम्बवासकारिष्टपर्पटैः ॥ खदिरारिष्टकैः क्वाथो विस्फोटार्तिज्वरापहः ॥३८॥ त्रिफलारससंयुक्तं सर्पिस्त्रिवृतया सह ॥ प्रयोक्तव्यं विरेकार्थं वीसर्पज्वरशान्तये ॥ ३९ ॥ खादिरात्रिफलारिष्टपटोलामृतवासकैः ॥ क्वाथोऽष्टकाख्यो जयति रोमान्तिकमसूरिकाम् ॥ ४० ॥ कुष्ठवीसर्पविस्फोटकण्ड्वादीनां विघातकः ॥ लशुनानां तु चूर्णस्य वर्षो मशकनाशनः ॥ ४१ ॥ चर्मकीलं जरुमणिं मशकांस्तिलकालकान् ॥ उत्कृत्य शस्त्रेण दहेत्क्षाराग्निभ्यामशेषतः ॥ ४२ ॥ पटोलनीलीलेपः स्याज्जाल ( ज्वाला ) गर्दभरोगनुत् ॥ गुञ्जाफलैः शृतं तैलं भृङ्गराजरसेन तु ॥ कण्ठ ( ण्डु ) दारुणहृत्कुष्ठवातव्याधिविनाशनम् ॥ ४३ ॥ अर्कास्थिमज्जात्रिफलानालीछा भृङ्गराजकम् ॥ जीर्णे पक्के लोहचूर्णं काञ्जिकं कृष्णकेशकृत् ॥ ४४ ॥ क्षीरात्मशर्करासार्द्धप्रस्थं मधुकात्पले ॥ तैलस्य कुडवं पक्कं तन्नस्यं पलितापहम् ॥ ४५ ॥ मुखरोगे तु त्रिफलागण्डूषपरिधारणम् ॥ गृहधूम यवक्षारपाठाव्योषरसाञ्जनम् ॥ ४६ ॥ तेजोह्वं त्रिफलालोध्रं चित्रकं चेति चूर्णितम् ॥ सक्षौद्रं धारयेद्वक्त्रे ग्रीवादन्तास्यरोगनुत् ॥ ४७ ॥ पटोल निम्बजम्ब्वाम्रमालतीनवपल्लवाः ॥ पञ्चपल्लवकः श्रेष्ठः कषायो मुखधावने ॥ ४८ ॥ लशुनार्द्रकशिग्रूणां पारुल्या मूलकस्य च ॥ रुदन्त्याश्च रसः श्रेष्ठः कदुष्णः कर्णपूरणे ॥ ४९ ॥ तीव्रशूलोत्तरे कर्णे सशब्दे क्लेदवाहिनि ॥ बस्तमूत्रं क्षिपेत्कोष्णं सैन्धवेनावचूर्णितम् ॥ ५० ॥ जातीपत्ररसे तैलं पक्कं पूतिककर्णजित् ॥ शुण्ठीतैलं सार्षपं च कोष्णं स्यात्कर्णशूलनुत् ॥ ५१ ॥ पञ्चमूलीशृतं क्षीरं स्याच्चित्रकहरीतकी ॥ सर्पिर्गुडः षडङ्गश्च

१ पिप्पलीमृत० । २ खदिरालाक्षयुतै० । ३ लशुनानां तु स्ववर्षोमासकनाशनैः । ४ चर्मकीलं जीर्णमानं मशकां० । पा० । मणिमसकीस्तिल० । ५ क्षामाग्निधामशे० । ६ आघास्थि० । ७ नीलैश्च भृङ्गराजकैः० । ८ खरस्यामूल० ।

यूषः पीनसशान्तये ॥ ५२ ॥ अक्षिकुक्षिभवा रोगाः प्रतिश्यायव्रणज्वराः ॥ पञ्चैते पञ्चरात्रेण प्रशमं यान्ति लंघनात् ॥ ५३ ॥ धात्रीरसानांच हशः कोपं हरति पूरणात् ॥ सक्षौद्रः सैन्धवो वापि शिग्रुदार्वीरसाञ्जनम् ॥ ५४ ॥ हरिद्रादारुसिन्धूत्थपथ्याजनवगौरिकैः ॥ पिष्टैर्दत्तो बहिर्लेपो नेत्रव्याधिनिवारकः ॥ ५५॥ मृतभ्रष्टाभयालेपात्रिफला क्षीरसंयुता ॥ शुण्ठीनिम्बदलैः पिष्टैः सुखोष्णैः स्वल्पसैन्धवैः ॥ धार्य्यश्चक्षुषि संक्षेपाच्छोथकण्डूरुजापहः ॥५६॥ अभयाक्षामृतं चैकाद्रिचतुर्भागिकं युतम् ॥ मध्वाज्यलीढं क्राथो वा सर्वनेत्ररुगर्दनम्॥५७॥चन्दनत्रिफलापूगपलाशतरुमूलकैः ॥ जलपिष्टैरियं वर्त्तिरशेषतिमिरापहा ॥५८॥दध्नातिघृष्टं मरिचं राज्यान्ध्यापहमञ्जनम् ॥ त्रिफलाक्राथकल्काभ्यां सपयस्कं शृतं घृतम्॥५९॥ तिमिराण्यचिराद्धन्यात्पीतमेतन्निशामुखे ॥ पिप्पलीत्रिफला द्राक्षालोहचूर्णं ससैन्धवम् ॥ ६० ॥ भृंगराजरसैर्घृष्टं घुटिकाञ्जनमिष्यते ॥ आन्ध्यं सतिमिरं काचं हन्त्यन्यान्नेत्ररोगकान् ॥ ६१ ॥ त्रिकटु त्रिफला नक्त सैन्धवं च मनःशिला ॥ रुचकं शंखनाभिश्च जातीपुष्पाणि निम्बकम् ॥ ६२ ॥ रसाञ्जनं भृंगराजं घृतं मधु पयस्तथा ॥ एतत्पिष्टा च वटिका सर्वनेत्ररुगर्दिनी ॥ ६३ ॥ दग्धमेरण्डकं[6] मूलं लेपात्काञ्जिकपेषितम् ॥ शिरोऽर्त्तिं नाशयत्याशु पुष्पं वा मुचुकुन्दक ( ज ) म् ॥ ६४ ॥ शतमूल्यैरण्डमूलचक्राव्याघ्रीपलैः शृतम् ॥ तैलं नस्यमरुश्लेष्मतिमिरोर्ध्वं ( र्द्ध ) गदापहम् ॥ ६५ ॥ नाचनं ( लवणं ) सगुडं विश्वं पिप्पली वा ससैन्धवा ॥ भुजस्तम्भादिरोगेषु सर्वेषूर्ध्वगदेषु च ॥ ६६ ॥ सूर्य्यावर्त्ते विधातव्यं नस्यकर्मादिभेषजम् ॥ दशमूलीकषायं तु सर्पिः सैन्धवसंयुतम् ॥ नस्यमंगविभेदघ्नं सूर्य्यावर्त्तशिरोऽर्त्तिनुत् ॥ ६७ ॥ दध्ना सौवर्चलाजाजीमधूकं नीलमुत्पलम् ॥ पिबेत्क्षौद्रयुतं नारी वातासृग्दरपीडिता ॥ ६८ ॥ वासकस्वरसं पैत्ते गुडूच्या रसमेव वा ॥ जलेनामलकीबीजं कल्कं वासासिता मधु ॥ ६९ ॥ आमलक्या मधुरसं मूलं कार्पासमेव वा ॥ पाण्डुप्रदरशान्त्यर्थं पिबेत्तण्डुलवारिणा ॥ ७० ॥ तण्डुलीयकमूलं तु सक्षौद्रं सरसाञ्जनम् ॥ तण्डुलोदकसंपीतं सर्वाश्चासृक्दराञ्जयेत् ॥ कुशमूलं तण्डुलाद्भिः पीतं चासृक्दरं जयेत् ॥ ७१ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नाडीव्रणादिचिकित्सावर्णनं नामैकसप्तत्युत्तरशततमोऽध्यायः ॥ १७१ ॥

धन्वन्तरिरुवाच ॥ स्त्रीरोगादिचिकित्सां च वक्ष्ये सुश्रुत तच्छृणु ॥ योनिव्यापत्सु भूयिष्ठं शस्यते कर्म वातजित् ॥ १ ॥ वचोपकुञ्चिकाजातीकृष्णावासकसैन्धवम् ॥ अजमोदा

१ घृतभ्र० । २ त्रिफलाक्षिक्षगर्दभाः० । ३ पिण्डसुखाँक्तैः सुखसैन्धवैः । ४ पलाशतनुशोणितैः० । ५ त्रिफलाक्षारलोह० । ६ कुसुमैरण्डजं० मूलं । ७ शतसंगैरण्डमूलोग्रावकव्याघ्रीपलैर्घनम्० ।

यवक्षारं चित्रकं शर्करान्वितम् ॥ २ ॥ पिष्ट्वालोड्य जलाद्यैश्च खादयेद्धृतभर्जितम् ॥ योनिपार्श्वार्त्तिहृद्रोगगुल्मार्शो विनिवर्त्तयेत् ॥ ३ ॥
बदरीपत्रसंलेपाद्योनिर्भिन्ना प्रशाम्यति ॥ लोध्रतुम्बीफलालेपाद्योनेर्दार्ढ्यं करोति च ॥ ४ ॥ पञ्चपल्लवपिष्टाह्वमालतीकुसुमैर्घृतम् ॥
रविपक्वमसृग्धारं योनिगन्धविनाशनम् ॥ ५ ॥ सकाञ्जिकं जपापुष्पपुष्पं ज्योतिष्मतीदलम् ॥ दूर्वापिष्टं च संप्राश्य चित्रकं शर्करान्वितम् ॥ ६ ॥
धान्यञ्जनाभयाचूर्णं तोयपीतं रजो हरेत् ॥ सदुग्धा लक्ष्मणा पीता नस्याद्वा पुत्रदा ऋतौ ॥ ७ ॥ दुग्धस्याढकं चाज्यमश्वगन्धा च पुत्रदा ॥ वन्ध्या
पुत्रं लभेत्पीत्वा घृतेनं व्योषकेसरम् ॥ ८ ॥ कुशकाशोरुबूकानां मूलैर्गोक्षुरकस्य च ॥ शृतं दुग्धं सितायुक्तं गर्भिण्याः शूलनुत्परम् ॥ ९ ॥ पाठाला
ङ्गलिसिंहास्यमयूरकुटजैः पृथक् ॥ नाभिबस्तिभगालेपात्सुखं नारी प्रसूयते ॥ १० ॥ सूताया हृच्छिरोबस्तिशूलमर्कन्द ( कल्क ) संज्ञितम् ॥ यव
क्षारं पिबेत्तत्र मस्तु कोष्णोदकेन वा ॥ ११ ॥ दशमूलीकृतः क्वाथः साज्यः सूतिरुजापहः ॥ शालितण्डुलचूर्णं तु सदुग्धं दुग्धकृद्भवेत् ॥ १२ ॥
विदारी कन्दस्वरसं मूलं कार्पासजं तथा ॥ धात्री स्तन्यविशुद्ध्यर्थं मुद्गयूषरसाशिनी ॥ १३ ॥ कुष्ठा वचाभया ब्राह्मी मधुरा क्षौद्रसर्पिषा ॥ वर्णा
युःकान्तिजननं लेह्यं बालस्य दापयेत् ॥ १४ ॥ स्तन्याभावे पयश्छागं गव्यं वा तद्गुणं पिबेत् ॥ स्वेदनं नाभिशोफार्ते मृदा स्यादग्नितप्तया ॥ १५ ॥
लेह्यो मुस्तविषायाश्च वमिकासज्वरे पिबेत् ॥ मुस्तशुण्ठीविषाबिल्वकूटजैरतिसारनुत् ॥ १६ ॥ मधु व्योषं मातुलुंगं हिक्काच्छर्दिनिवारणम् ॥ कुष्ठे
कुष्ठवचासिद्धार्था निशा दूर्वा च कुष्ठजित् ॥ १७ ॥ महासुण्डितिकोदीच्यकाथैः स्नानं ग्रहापहम् ॥ सतच्छदामयनिशाचन्दनैश्चानुलेपनम् ॥ १८ ॥
गंगाय्यबीजरुद्राक्षवचालोहादिधारणम् ॥ ॐ कं टं यं गं वैनतेयाय नमः ॥ ॐ ह्रों ह्रां ह्रः मन्त्रेण शान्तिर्बालानां मार्जनाद्बलिदानतः॥ॐ ह्रीं बाल
ग्रहाञ्छिलं मुञ्च बालं मुञ्च स्वाहा ॥ १९ ॥ तण्डुलाद्भिः शिरीषस्य मूलं पीतं विषापहम् ॥ तण्डुलाद्भिश्च वर्षाभ्वाः शुक्लायाः सर्पदंशनुत् ॥ २० ॥
दश्याज्यं तण्डुलीयं च गृहधूमो निशा तथा ॥ पिष्टं पानं तथा क्षौद्रं सिन्धुत्थस्य विषान्तकम् ॥ २१ ॥ अङ्कोटमूलनिष्काथः साज्यः पीतो विषा
न्तकः ॥ यज्ञगव्याधिविध्वंसि भेषजं तद्रसायनम् ॥ २२ ॥ सिन्धूत्थशर्कराशुण्ठीकणामधुगुडैः क्रमात् ॥ वर्षादिष्वभया सेव्या रसायनगुणैषिणा
॥ २३ ॥ त्वन्म्यान्लेऽभयां चैकां प्रभुञ्जीत द्वे बिभीतके ॥ भुक्ता मध्वाज्यधात्रीणां चतुष्कं शतवर्षकृत् ॥ २४ ॥ पीताश्वगन्धा पयसा घृतेनाशेष
रोगनुत् ॥ मण्डूकपर्ण्याः स्वरसो विदार्य्याश्चामृतोपमः ॥ २५ ॥ तिलधात्रीभृंगराजौ जग्ध्वा वर्षशती भवेत् ॥ त्रिकटु त्रिफला वह्निर्गुडूची च शता

॥११२॥

१ क्षयव्यध्रुचर्करा० । २ वनिता नन्दकं लभेत० । ३ पुत्रदा ऋतौ० । ४ घृतेन व्योष० । ५ मधेनोष्णोद० । ६ गव्यं बालस्तदापिबेत्० । ७ महासुण्ड्यतिकादिव्याक्वाथस्नानं० ।

वरी ॥ २६ ॥ विडंगलोहचूर्णं तु मधुना सह रोगनुत् ॥ त्रिफला च कणा शुण्ठी गुडूची च शतावरी ॥२७॥ विडंगभृंगराजादि भावितं सर्वरोगनुत् ॥
चूर्णं विदार्य्या मध्वाज्यं लीढ्वा दश स्त्रियो व्रजेत् ॥२८॥ घृतं शतावरीकल्कैः क्षीरैर्दशगुणैः पचेत् ॥ शर्करापिप्पलीक्षौद्रयुक्तं वा जारकं विदुः ॥२९॥
प्रतिमर्षोऽवपीडश्च नस्यं प्रधमनं तथा ॥ शिरोविरेचनं चेति पञ्चकर्म च कथ्यते ॥३०॥ मासैर्द्विसंख्यैर्माघाद्यैः क्रमात्षडृतवः स्मृताः ॥ अग्निसेवामधु
क्षीरविकृतीः परिसेवयेत् ॥३१॥ स्त्रीयुक्तः शिशिरे तद्वद्वसन्ते न दिवा स्वपेत् ॥ त्यजेद्वर्षासु स्वप्नादींश्छरदिन्दोश्च रश्मयः ॥ ३२ ॥ पथ्यानि शालयो
मुद्गा वर्षाम्भः क्वथितं पयः ॥ निम्बातसीकुसुम्भानां शिग्रुसर्षपयोस्तथा ॥३३॥ ज्योतिष्मतीमूलकानां तैलानि च हरन्ति हि ॥ कृमिकुष्ठप्रमेहांश्च वातश्ले
ष्मशिरोरुजः ॥३४॥ दाडिमामलकीकोलकरमर्दप्रियालकम् ॥ जम्बीरं नागरंगं च आम्रातककपित्थकम् ॥३५॥ पित्तलान्यनिलघ्नानि कफोत्क्लेशकराणि
च ॥ जलं जीमूतकेक्ष्वाकुकुटजाकृतवेधनम् ॥३६॥ धामार्गवश्च संयोज्याः सर्वथा वमनेष्वमी ॥ पूर्वाह्णे वमनार्थेन मदनेन्द्रयवौ वचा ॥३७॥ मृदुको
ष्ठश्च पित्तेन क्रूरो वातकफाश्रयात् ॥ मध्यमः समदोषे स्यात्त्रिवृत्स्निग्धे विरेचनम् ॥३८॥ शर्करामधुसंयुक्तं सैन्धवं नागरं त्रिवृत् ॥ हरीतकीविडंगानि गोमू
त्रेण विरेचनम् ॥ ३९ ॥ एरण्डतैलं त्रिफलाक्वाथश्च द्विगुणस्तथा ॥ वातोल्वणेषु दोषेषु भोजयित्वाथ वामयेत् ॥ ४० ॥ वंशादिनेत्रं कुर्वीत षडष्ट
द्वादशांगुलम् ॥ कर्कन्धुफलवच्छिद्रं बस्तिस्त्वानशायिने ॥ ४१ ॥ निरूहदानेऽपि विधिरयमेवमुदीरितः ॥ अर्द्धत्रिषट्पले मात्रा लघुमध्योत्तमः क्र
मात् ॥ ४२ ॥ पथ्याक्षधात्र्यापक्वचित्रत्रिभागा नरर्द्धिताः ॥ शतावर्य्यमृताभृङ्गमिन्दुवारादिभाविताः ॥ ४३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे
प्रथमांशाख्ये आचारकाण्डे रोगनाचिकित्सादिकथनं नाम द्विसप्तत्युत्तरशततमोऽध्यायः ॥ १७२ ॥ धन्वन्तरिरुवाच ॥ द्रव्याणि मधुरादीनि वक्ष्ये
रोगहराण्यहम् ॥ शालिषष्टिकगोधूममक्षीरं घृतं रसो मधु ॥ १ ॥ मज्जा शृङ्गाटकयवकशेरुर्विदारिगोक्षुरम् ॥ गम्भारी पौष्करं बीजं द्राक्षा खर्जूरकं बला
॥ २ ॥ नारिकेलेक्षुवात्सकुमा विदारी च प्रियालकम् ॥ मधूकं तालकूष्माण्डं मुख्योऽयं मधुरो गणः ॥ ३ ॥ मूर्च्छादाहप्रशमनः षडिन्द्रियप्रसादनः ॥
कृमिकृत्कफकृच्चैव स्थौल्योऽत्यर्थं निषेवितः ॥ ४ ॥ श्वासकासास्यमाधुर्य्यस्वरघातार्बुदानि च ॥ गलगण्डश्लीपदानि गुडलेपादि कारयेत् ॥
॥ ५ ॥ दाडिमामलकाम्रं च कपित्थकरमर्दकौ ॥ मातुलुङ्गाम्रातकं च बदरं तिन्तिडीफलम् ॥ ६ ॥ दधि तक्रं काञ्जिकं च लकुचं चाम्लवे
तसम् ॥ अम्लो लोणः शुण्ठीयुक्तो जारणः पाचनो रसः ॥ ७ ॥ क्लेदनो वातकृत्पथ्यो विदाही चानुलोमनः ॥ अम्लोऽत्यर्थं सेव्य
मानः कुर्य्याद्दन्तहर्षकम् ॥ ८ ॥ शरीरस्य च शैथिल्यं स्वरकण्ठास्यहृद्दहेत् ॥ छिन्नभिन्नव्रणादीनि पाचयित्वाग्निभावितः ॥ ९ ॥

लवणानि यवक्षारसर्जिकादिश्च लावणः ॥ शोधनः पाचनः क्लेदी विश्लेषसर्पणादिकृत् ॥ १० ॥ मार्गरोधी मार्दवकृत्स एकः परिषेवितः ॥
गात्रकण्डूकोष्ठशोथवैवर्ण्यं जनयेद्रसः ॥ रक्तवातं पित्तरक्तं पुंस्त्वेन्द्रियरुजादिकम् ॥ ११ ॥ व्योषशिग्रूमूलकं देवदारु च कुष्ठकम् ॥ लशुनं वल्गुजी
फलं मुस्तागुग्गुलुलाङ्गली ॥ १२ ॥ कटुको दीपनः शोधी कुष्ठकण्डूकफान्तकृत् ॥ स्थौल्यालस्यक्रिमिहरः शुक्रमेदोविरोधनः ॥ एकोऽत्यर्थं
सेव्यमानः भ्रमदाहादिकृद्भवेत् ॥ १३ ॥ कृतमालः करीराणि हरिद्रेन्द्रयवास्तथा ॥ स्वादुकण्टकवेत्राणि बृहतीद्वयशङ्खिनी ॥ १४ ॥ गुडूची च
द्रवन्ती च त्रिवृन्मण्डूकपर्ण्यपि ॥ कारवेल्लकवार्त्ताकुकरवीरकवासकाः ॥ १५ ॥ रोहिणी शङ्खचूर्णं च कर्कोटो वै जयन्तिका ॥ जातीवारुणकं
निम्बो ज्योतिष्मती पुनर्नवा ॥ १६ ॥ तिक्तो रसश्छेदनः स्याद्रोचनी दीपनस्तथा ॥ शोधनो ज्वरतृष्णाघ्नो मूर्च्छाकण्ठार्तिकादिजित् ॥ १७ ॥
विण्मूत्रक्लेदसंशोषो ह्यत्यर्थं स च सेवितः ॥ हनुस्तम्भाक्षेपकार्त्तिशिरःशूलव्रणादिकृत् ॥ १८ ॥ त्रिफलासल्लकीजम्बु आम्रातकवटादिकम् ॥ तिन्दुकं
वकुलं शालं पालङ्कीमुद्गचिल्लकम् ॥ १९ ॥ कषायो ग्राहको रोपी स्तम्भनक्लेदशोषणः ॥ एकोऽत्यर्थं सेव्यमानो हृदये चाथ पीडकः ॥ मुखशो
षज्वराध्मानमन्यास्तम्भादिकारकः ॥ २० ॥ हरिद्राकुष्ठलवणं मेषशृङ्गिबलाद्वयम् ॥ कच्छुरा सल्लकी पाठा पुनर्नवा शतावरी ॥ २१ ॥ अग्नि
मन्थो ब्रह्मदण्डी श्वदंष्ट्रैरण्डके तथा ॥ यवकोलकुलत्थादिकर्षांशी दशमूलकम् ॥ पृथक् समस्तो वातार्तौ बहुपित्तहरस्तथा ॥ २२ ॥ शतावरी
विदारी च बालकोशीरचन्दनम् ॥ दूर्वा वटः पिप्पली च बदरी सल्लकी तथा ॥ २३ ॥ कदली चोत्पलं पद्ममुदुम्बरपटोलकम् ॥ अथ श्लेष्महरो
वर्गो हरिद्रागुडकुष्ठकम ॥ २४ ॥ शतपुष्पी च जाती च व्योषारग्वधलाङ्गली ॥ सर्पिस्तैलवसामज्जाः स्नेहेषु प्रवरं स्मृतम् ॥ २५ ॥ तथा धीस्मृ
तिमेधाग्निकाङ्क्षिणां शस्यते घृतम् ॥ केवलं पैत्तिके सर्पिर्वातिके लवणान्वितम् ॥ २६ ॥ देयं बहुकफे वापि व्योषक्षारसमायुतम् ॥ ग्रन्थिनाडीक्रि
मिश्लेष्ममेदोमारुतरोगिषु ॥ २७ ॥ तैलं लाघवदार्ढ्याय क्रूरकोष्ठेषु देहिषु ॥ वातातपाम्बुभारस्त्रीव्यायामक्षीणधातुषु ॥ २८ ॥ रूक्षक्लेशक्षमात्यग्निवाता
वृतपथेषु ॥ ॥ अथ दग्धा शिराजालं योनिकर्म शिरोरुजि ( जम् ) ॥ २९ ॥ उत्तमस्य पलं मात्रा त्रिभिश्चाक्षैश्च मध्यमे ॥ जघन्यस्य पलार्द्धेन
स्नेहक्वाथौषधेषु च ॥ ३० ॥ जलमुष्णं घृते देयं पृथक्के तैले तु शस्यते ॥ स्नेहे पित्ते तु तृष्णायां पिबेदुष्णोदकं नरः ॥ ३१ ॥ वातानुलोमं दीप्ता

१ शङ्खपुष्पी च० । २ व्रणादिहृत्० । ३ हृदन्यपीलुकृत्० । ४ हनुस्तम्भा० । ५ रुद्धरः सल्ल० पा० । नुबूरः सल्ल० पा० । ६ कषार्णादश० । ७ नःकफपित्त० । ८ तथादग्धा
हर भ्रष्टा० । ९ विषम्तैलेषु० । १० नाग्निवर्चः स्निग्धमर्हसतम० ।

स्वेदैः स्निग्धस्य तन्मतम् ॥ रूक्षस्य स्नेहनं कार्य्यमतिस्निग्धस्य रूक्षणम् ॥ २२ ॥ श्यामाककोरदोषान्नतक्रपिण्याकसक्तुभिः ॥ वातश्लेष्माणि वाते वा कफे वा स्वेद इष्यते ॥ न स्वेदयेदतिस्थूलरूक्षदुर्बलमूर्च्छितान् ॥ २३ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे योगसारादिवर्णनं नाम त्रिसप्तत्युत्तरशततमोऽध्यायः ॥ १७३ ॥

॥ धन्वन्तरिरुवाच ॥ घृततैलादि वक्ष्यामि शृणु सुश्रुत रोगनुत् ॥ शंखपुष्पी वचा सोमा ब्राह्मी ब्रह्मसुवर्चला ॥ १ ॥ अभया च गुडूची च अटरूषकवागुजी ॥ एतैरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ २ ॥ कण्टकार्य्या रसप्रस्थक्षीरप्रस्थसमन्वितम ॥ एतद्ब्राह्मीघृतं नाम स्मृतिमेधाकरं परम ॥ ३ ॥ त्रिफलाचित्रकबलानिर्गुण्डी निम्बवासकाः ॥ पुनर्नवा गुडूची च बृहती च शतावरी ॥ ४ ॥ एतैर्घृतं यथालाभं सर्वरोगविमर्दनम् ॥ बलाशतकषाये तु तैलस्यार्द्धाढकं पचेत् ॥ कल्कैः सशर्करामिश्रैश्चन्दनोत्पलपद्मकैः ॥ ५ ॥ सूक्ष्मैलापिप्पलीकुष्ठत्वगेलागुरुकेसरैः ॥ गन्धाश्वजीवनीयैश्च श्रीगडकसमाश्रितम् ॥ ६ ॥ एतत्सु अग्निना पक्वं स्थापयेद्राजते शुभे ॥ सर्ववातविकारांस्तु सर्वधात्वन्तराश्रयान् ॥ ७ ॥ तैलमेतत्प्रशमयेद्बल्याख्यं राजवल्लभम् ॥ शतावरीरसप्रस्थं क्षीरप्रस्थं तथैव च ॥ ८ ॥ शतपुष्पं देवदारु मांसी शैलेयकं बला ॥ चन्दनं तगरं कुष्ठं मनःशिला ज्योतिष्मती ॥ ९ ॥ एतैः कर्षसमैः कल्कैः घृतप्रस्थं विपाचयेत ॥ कुब्जवामनपंगूनां बधिरव्यंगकुष्ठिनाम ॥ १० ॥ वायुना भग्नगात्राणां ये च सीदन्ति मैथुने ॥ जराजर्जरगात्राणां चाध्मानसुखशोषिणाम ॥ ११ ॥ त्वग्गताश्चापि ये वाता शिरास्नायुगताश्च ये ॥ सर्वांस्तान्नाशयत्याशु तैलं रोगकुलान्तकम् ॥ १२ ॥ नारायणमिदं तैलं विष्णुनोक्तं रुजार्दनम ॥ पृथक्तैलं घृतं कुर्य्यात्समस्तैरौषधैः पृथक् ॥१३॥ शतावर्य्या गुडूच्या वा चित्रकै रोचनान्वितैः ॥ निर्गुण्ड्या वा प्रसारः स्यात्कण्टकार्य्या रसादिभिः ॥१४॥ वर्षाभूबालया वापि वासकेन फलत्रिकैः॥ ब्राह्म्या चैरण्डकेनापि भृंगराजेन कुष्ठिना ॥१५॥ मुसल्या दशमूलेन खदिरेण वटादिभिः॥ वटिका मोदको वापि चूर्णं स्यात्सर्वरोगनुत ॥१६॥ घृतेन मधुना वापि अद्भिः खण्डगुडादिभिः ॥ लवणैः कटुकैर्युक्तं यथालाभं च रोगनुत ॥१७॥ चित्रकार्कत्रिवृद्वापि यवानीहयमारकम् ॥ सुधां च वाल्कं गणिकां सप्तपर्णसुवर्चिकाम्॥१८॥ज्योतिष्मतीश्च संभृत्य तैलं धीरो विपाचयेत ॥ एतद्विष्यन्दनं तैलं भृशं दद्याद्भगन्दरे ॥१९॥ शोधनं रोपणं चैव सवर्णकरं परम् ॥ चित्रकाद्यं महातैलं सर्वरोगप्रभंजनम् ॥२०॥ अजमोदं ससिन्दूरं

---

१ बृहती च शतावरी० । २ मालाबाधुमती ? तथा० । ३ कल्कैः श्रे० प्रस्थं० । ४ सैंधवस्याढकांशकः० । ५ चित्रकैर्या रनिम्बकैः० । ६ वर्षाबालत्वयावापि० । ७ त्रिवृत्याढाम लम्नहय० । ८ स्वधाचराणां गणिकामम० ।

हरितालं निशाद्वयम् ॥ क्षारद्वयं फेनयुतमार्द्रक सर (शव) लोद्भवम्॥२१॥इन्द्रवारुण्यपामार्गकदलैः स्यन्दनैः समम् ॥ एभिः सर्षपजं तैलमजामूत्रैश्च
योजितम् ॥२२॥ मृद्वग्निना पचेदेतद्द्रव्यक्षीरेण संयुतम्॥अजमोदादिकं तैलं गण्डमालां व्यपोहति॥२३॥ विदग्धस्तु पचेत्पक्वं पक्वं चैव विशोधयेत् ॥
रोपणं मृदुभावं च तैलेनानेन कारयेत् ॥ २४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ब्राह्मीघृतादिवर्णनं नाम चतुः सप्त
त्युत्तरशततमोऽध्यायः ॥ १७४ ॥ ॥ रुद्र उवाच ॥ एवं धन्वन्तरिर्विष्णुः सुश्रुतादीनुवाच ह ॥ हरिः पुनर्हरायाह नानायोगाञ्ज्वरार्दनान् ॥ १ ॥
॥ हरिरुवाच ॥ सर्वज्वरेषु प्रथमं कार्य्यं शङ्कर लङ्घनम् ॥ क्वथितोदकपानं च तथा निर्वातसेवनम् ॥ २ ॥ अग्निस्वेदाज्ज्वरास्त्वेवं नाशमायान्ति
हीश्वर ॥ वातज्वरहरः क्वाथो गुडूच्या मुस्तकेन च ॥ ३ ॥ दुरालभैश्चैव घृतं पित्तज्वरहरः शृणु ॥ शुण्ठीपर्पटमुस्तैश्च वालकोशीरचन्दनैः ॥ ४ ॥
साज्यः क्वाथः श्लेष्मजं तु सशुण्ठिः सदुरालभः ॥ सवालकः सर्वज्वरं सशुण्ठिः सहपर्पटः ॥ ५ ॥ किराततिक्तैर्नागरीगुडूचीशुण्ठिमुस्तकैः ॥ पित्त
ज्वरहरः स्याच्च शृण्वन्यं योगमुत्तमम् ॥ ६ ॥ वालकोशीरपाठाभिः कण्टकारिकमुस्तकैः ॥ ज्वरनुच्च कृतः क्वाथस्तथा वै सुरदारुणा ॥ ७ ॥
धन्याकनिम्बमुस्तानां समधुः स तु शङ्कर ॥ पटोलपत्रयुक्तस्तु गुडूचीत्रिफलायुतः ॥ ८ ॥ पीतोऽखिलज्वरहरः क्षुधाकृद्वातनुत्त्विदम् ॥ हरीतकी
पिप्पलीनामामलीचित्रकोद्भवम् ॥९॥ चूर्णं ज्वरं च क्वथितं धान्य ( धन्या ) कोशीरपपर्पटैः ॥ आमलक्या गुडूच्या च मधुयुक्तं सचन्दनम् ॥ १० ॥
समस्तज्वरनुच्च स्यात्सन्निपातहरं शृणु ॥ हरिद्रानिम्बत्रिफलामुस्तकैर्देवदारुणा ॥ ११ ॥ कषायं कटुरोहिण्या सपटोलं सपत्रकम् ॥ त्रिदोषज्वरनुच्च
स्यात्पीतं तु क्वथितं जलम् ॥ १२ ॥ कण्टकार्य्या नागरस्य गुडूच्या पुष्करेण च ॥ जग्ध्वा नागबलाचूर्णं श्वासकासादिनुद्भवेत् ॥ १३ ॥ कफ
वातज्वरे देयं जलमुष्णं पिपासिने ॥ विश्वपर्पटकोशीरमुस्तचन्दनसाधितम् ॥ १४ ॥ दद्यात्सुशीतलं वारि तृट्छर्दिज्वरदाहनुत् ॥ बिल्वादिप
पञ्चमूलस्य क्वाथः स्याद्वातिके ज्वरे ॥ १५ ॥ पाचनं पिप्पलीमूलं गुडूचीविश्वभेषजम् ॥ वातज्वरे त्वयं क्वाथो दत्तः शान्तिकरः परः ॥ १६ ॥
पित्तज्वरघ्नः समधुः क्वाथः पर्पटनिम्बयोः ॥ विधाने क्रियमाणेऽपि यस्य संज्ञा न जायते ॥ १७ ॥ पादयोस्तु ललाटे वा दहेल्लौहशलाकया ॥ तिक्ता
पाठा पर्पटाश्च विशाला त्रिफला त्रिवृत् ॥ सक्षीरो भेदनः क्वाथः सर्वज्वरविशोधनः ॥ १८ ॥ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये
आचारकाण्डे ज्वरहरनानायोगादिवर्णनं नाम पञ्चसप्तत्युत्तरशततमोऽध्यायः ॥ १७५ ॥ श्रीभगवानुवाच ॥ सप्तरात्रात्प्रजायन्ते खल्वाटस्य कचाः

१ वम् । इति श्रीगारुडे० रुद्ररुवा० । २ सुश्रुतात्तमुवा० । ३ ततिक्तकैरण्डगुडू० । ४ वित्रज्वरं० । ५ पाठापटालश्च० ।

शुभाः ॥ दग्धहस्तिदन्तेलेपात्साजाक्षीरसाञ्जनात् ॥ १ ॥ भृङ्गराजरसेनैव चतुर्भागेन साधितम् ॥ केशवृद्धिकरं तैलं गुञ्जाचूर्णान्वितेन च ॥ २ ॥ एलामांसीकुष्टमुगयुक्तमभ्यङ्गतः शिवम् ॥ गुञ्जाफलं समादेयं लेपनं चन्द्रलुप्तनुत् ॥ ३ ॥ आम्रास्थिचूर्णलेपाद्वै केशाः सूक्ष्मा भवन्ति च ॥ करंजामलकैलाललाक्षालेपोऽरुणापहः ॥ ४ ॥ आम्रास्थिमज्जामलकलेपात्केशा भवन्ति वै ॥ बद्धमूला घना दीर्घाः स्निग्धाः स्युर्नोत्पतन्ति च ॥ ॥ ५ ॥ विडंगगन्धपाषाणसाधितं तैलमुत्तमम् ॥ सचतुर्गुणगोमूत्रं मनसः शिलमेव वा ॥ ६ ॥ शिरोऽभ्यंगाच्छिराजन्मयूकालिख्याः क्षयं नयेत् ॥ नवदग्धं शंखचूर्णं घृष्टसीसकलेपितम् ॥ ७ ॥ कचाः श्लक्ष्णा महाकृष्णा भवन्ति वृषभध्वज ॥ भृंगराजं लोहचूर्णं त्रिफला बीजपूरकम् ॥ ८ ॥ नीली च करवीरं च गुडमेतैः समं मृतम् ॥ पलितानीह कृष्णानि कुर्याल्लेपान्महौषधम् ॥ ९ ॥ आम्रास्थिमज्जा त्रिफला नी ( ता ) ली च भृंगराजकम् ॥ जीर्णं पक्वं लोहचूर्णं कांजिकं कृष्णकेशकृत् ॥ १० ॥ चक्रमर्दकबीजानि कुष्टमेरण्डमूलकम् ॥ अत्यम्लकांजिकं पिष्ट्वा लेपान्मस्तकरोगनुत् ॥ ११ ॥ सैन्धवं च वचा हिंगु कुष्टं नागेश्वरं तथा ॥ शतपुष्पा देवदारु एभिस्तैलं तु साधितम् ॥ १२ ॥ गोपुरीपरसेनैव चतुर्भागेन संयुतम् ॥ तत्कर्णभरणाद्दुग्रकर्णशूलं क्षयं नयेत् ॥१३॥ मेषमूत्रसैन्धवाभ्यां कर्णयोर्भरणाच्छिव ॥ कर्णयोः पूतिनाशः स्यात्कृमिस्रावादिकस्य च ॥१४॥ मालतीपुष्पदलयो रसेन भरणात्तथा ॥ गोजलेनैव पूरेण पूयस्रावो विनश्यति ॥१५ ॥ कुष्ठमाषमरीचानि तगरं मधु पिप्पली ॥ अपामार्गोऽश्वगन्धा च बृहती सितसर्षपाः ॥ १६ ॥ यवास्तिलाः सैन्धवं च पादिकोद्वर्त्तनं शुभम् ॥ लिंगबाहुस्तनानां च कर्णयोर्वृद्धिकृद्भवेत् ॥ कटुतैलं भल्लातकं बृहतीफलदाडिमम् ॥ १७ ॥ वल्कलैः साधितैर्लिप्तं लिंगं तेन विवर्द्धते ॥ १८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे केशोत्पत्त्यादिवर्णनं नाम षट्सप्तत्युत्तरशततमोऽध्यायः ॥ १७६ ॥ हरिरुवाच ॥ सोभांजनपत्ररसं मधुयुक्तं हि चक्षुषोः ॥ भ ( च ) रणाद्रोगहरणं भवेन्नास्त्यत्र संशयः ॥ १ ॥ अशीतितिलपुष्पाणि जात्याश्च कुसुमानि च ॥ उषानिम्बामलाशुण्ठीपिप्पलीतंडुलीयकम् ॥ २ ॥ छायाशुष्कां वर्टी कुर्यात्पिष्ट्वा तण्डुलवारिणा ॥ मधुना सहसा चाक्ष्णोरंजनात्तिमिरादिनुत् ॥ ३ ॥ बिभीतकास्थिमज्जा तु शंखनाभिर्मनःशिला ॥ निम्बपत्रमरीचानि अजामूत्रेण पेषयेत् ॥ ४ ॥ पुष्पं रात्र्यन्धतां हन्ति तिमिरं पटलं तथा ॥ चतुर्भागानि शंखस्य तदर्द्धेन मनःशिला ॥ ५ ॥ सैन्धवं च तदर्द्धेन त्वेतत्पिष्ट्वोदकेन तु ॥ छायाशुष्कां तु वटिकां कृत्वा नयनमंजयेत् ॥ ६ ॥ तिमिरं पटलं हन्ति पिचिटं च महौषधम् ॥ त्रिकटु त्रिफलां चैव करं

१ लेखासोजाक्षी० । २ शुष्कास्तु वटिकाः कुर्यात्पिष्ट्वा तु वारि० । ३ पिञ्जटं म० ।

जस्य फलानि च ॥ ७ ॥ सैन्धवं रजनी द्वे च भृंगराजरसेन हि ॥ पिष्ट्वा तदंजनादेव तिमिरादिविनाशनम् ॥८॥ आटरूषकमूलं तु कांजिकापिष्टमेव तु ॥
तेनांक्षिभ्रूमिलेपाच्च चक्षुःशूलं विनश्यति ॥ ९ ॥ सतकं बदरीमूलं पीतं चाक्षिव्यथां हरेत् ॥ सैन्धवं कटुतैलं च अपामार्गस्य मूलकम् ॥ १० ॥
क्षीरकांजिकसंघृष्टं ताम्रपात्रे तु तेन च ॥ अञ्जनात्पिञ्जटस्यैव नाशो भवति शंकर ॥ ११ ॥ ॐ दद्दु सर क्रों ह्रीं ठः ठः दद्दु सर ह्रीं ह्रीं ॐ उं ऊ सर
क्रीं क्रीं ठः ठः ॥ आद्या हि वशमायान्ति मन्त्रेणानेन चाञ्जनात् ॥ १२ ॥ बिल्वकर्नीलिकामूलं पिष्टमभ्यञ्जनेन च ॥ अनेनाञ्जितमात्रेण नश्यंति
तिमिराणि हि ॥१३॥ कटुकं (पिप्पली) तगरं चैव हरिद्रामलकं वचा ॥ खदिरापिष्टवात्तश्च अञ्जनान्नेत्ररोगनुत् ॥१४॥ नीरपूर्णमुखो धौति बृहन्मानेन
योऽक्षिणी ॥ प्रभाते नेत्ररोगैश्च नित्यं सर्वैः प्रमुच्यते ॥ १५ ॥ शुक्लैरण्डस्य मूलेन पत्रेणापि प्रसाधितम् ॥ छागदुग्धसेकमौष्ण्याच्चक्षुषोर्वातशलन्नुत ॥
॥ १६ ॥ चन्दनं सैन्धवं वृद्धपालाशश्च हरीतकी ॥ पटलं कुसुमं नीली च (व)क्रिका हरतेऽञ्जनम् ॥ १७ ॥ गुञ्जामूलं छागमूत्रे घृष्टं तिमिरनुच्च तत्
रौप्यताम्रसुवर्णानां हस्तघृष्टशलाकया ॥१८॥ घृष्टमुद्वर्त्तनं रुद्र कामलाव्याधिनाशनम् ॥ घोषाफलमपाघ्रातं पीतकामलनाशनम् ॥ १९ ॥
दूर्वादाडिमपुष्पं तु अलक्तकहरीतकी ॥ नासार्शवातरक्तनुन्नस्याद्धि स्वरसेन हि ॥ २० ॥ आपिष्ट्वा जाङ्गली मू (मू) लं तद्रसेन वृषध्वज ॥
नस्यादाराद्विनश्येत नाशार्शो नीललोहित ॥ २१ ॥ गव्यं घृतं सर्ज्जरसं रुद्र धन्याकसैन्धवम् ॥ धुत्तूरकं गैरिकं च एतैः साधितसिक्थकम् ॥
॥ २२ ॥ सतैलं व्रणनुत्स्याच्च स्फुटितोद्घटिताधरे ॥ जातीपत्रं च चर्वित्वा विधृतं मुखरोगनुत् ॥ २३ ॥ भक्षात्केसरबीजस्य दन्ताः स्युश्चलिताः
स्थिराः ॥ मुष्टकं कुष्ठमेला च यष्टिकं मधुवालकम् ॥ २४ ॥ धन्याकमेतदद्नान्मुखदुर्गन्धनुद्धर ॥ कषायं कटुकं वापि तिक्तशाकस्य भक्षणात्
॥ २५ ॥ तलयुक्तस्य नित्यं स्यान्मुखदुर्गन्धताक्षयः ॥ दन्तव्रणानि सर्वाणि क्षयं गच्छन्त्यनेन तु ॥ २६ ॥ काञ्जिकस्य सतैलस्य गण्डूषकवला
स्थितिः ॥ ताम्बूलचूर्णदग्धस्य मुखस्य व्याधिनुच्छिव ! ॥ २७ ॥ परित्यक्तश्लेष्मणश्च शुण्ठीचर्वणतो यथा ॥ मातुलुंगदलान्येला यष्टी मधु च
पिप्पली ॥ २८ ॥ जातीपत्रमथैषां च चूर्णं लीढ्वा तथा कृतम् ॥ शेफालिकजटायाश्च चर्वणं गलशुण्ठिनुत् ॥ २९ ॥ नासाशिरारक्तकर्षान्नश्ये
च्छंशकर जिह्विका ॥ रसः शिरीषबीजानां हरिद्रायाश्चतुर्गुणः ॥ ३० ॥ तेन पक्केन भूतेश नस्यं मस्तकरोगनुत् ॥ गलरोगा विनश्यंति नस्यमात्रेण ॥११६॥

१ तेनाक्ष्णोर्भ्रूरिलेपा० । २ ॐ दण्डामर ह्रीं ह्रीं ठठ नवाद्यावशमायान्ति मन्त्रेणानेन० । ३ धौति क्षिप्तजलेन यो० । ४ घृष्टं तद्वयनं रुद्रं० । ५ नाशाशिवारक्त० नस्यान्नैशरसे नहि० । ६ याष्टि मधुपवान्धकम् । ७ तिक्तं वै तस्य भक्ष० । ८ हलदस्य चतुर्गुणः ।

तच्छगात् ॥ २१ ॥ दन्तकीटविनाशः स्याद्धुआमूलस्य चर्वणात ॥ काकजंघाशुद्धीनीलीकेशायो मधुनाजितः ॥ २२ ॥ दन्ताकान्तान्दन्तजांश्च कृमी
न्नाशयेत शिव ॥ घृतं कर्कटपादेन दुग्धेन्मिश्रेण साधितम् ॥ २३ ॥ तेन चाभ्यंगितादन्ताः कुर्युः कटकटाशब्द हि ॥ लिम्बां कर्कटपादेन केश्ठेनाथवा
शिव ॥२४॥ त्रिवताहं वारिपिष्टानि* ज्योतिष्मत्याः फलानि हि ॥ शुद्धाभयामज्जलेपादन्तस्याङ्ककलङ्कनुत् ॥ २५ ॥ लोध्रकुंकुममञ्जिष्ठालोहका
लेयकानि च ॥ यवतण्डुलमेतैश्च यष्टी मधुसमन्वितैः ॥२६॥ वारिपिष्टैर्वक्त्रलेपः स्त्रीणां शोभनवक्त्रकृत ॥ द्विभागं छागदुग्धेन तैलप्रस्थं तु साधितम्
॥ २७ ॥ रक्तचन्दनमञ्जिष्ठालाक्षाणां कर्षकेण वा ॥ यष्टीमधुकुंकुमाभ्यां मतात्मान्मुखकान्तिकृत ॥२८॥ शुण्ठीपिप्पलिचूर्णं तु गुडूची कंटकारिका ॥
एभिश्च क्वथितं वारि पीतं चाग्निं करोति वै ॥ २९ ॥ वातमूत्रक्षयं चैव करोति प्रथमेश्वर ॥ कर्णपर्पटोशीरं बृहती कटुरोहिणी ॥४०॥ गोक्षुरं क्वथितं
त्वमिश्रांश्चि पीतं श्रमापहम् ॥ दाहं पित्तं ज्वरं शोषं मूर्च्छां चैव भ्रमं नयेत ॥ ४१ ॥ मध्वाज्यपिप्पलीचूर्णं क्वथितं क्षीरसंयुतम् ॥ पीतं हृद्रोगकासस्य
विषमज्वरानुद्भवेत् ॥ ४२ ॥ कार्थापर्णानां सर्वासां कर्षार्द्धं माध्यमेव च ॥ वयोऽनुक्रमतो ज्ञेयो विशेषो वृषभध्वज ॥ ४३ ॥ दुग्धं पीतं तु संयुक्तं
गोपुरीषरसेन च ॥ विषमज्वरनुत्स्याच्च काकजंघारसेन्नथा ॥ ४४ ॥ मधुष्टि क्वथितं ज्ञिग्मजाया ज्वरनुद्भवेत् ॥ यष्टीमधुकमुस्तं च सैन्धवं बृहतीफल
म् ॥ ४५ ॥ एतैर्नस्यप्रदानाच्च निद्रा स्यात्पुरुषस्य च ॥ मरीचमध्वकलाऽज्ञानस्याक्षिदृश्य सर्वेच्छिव ॥ ४६ ॥ मूलं तु काकजंघाया निद्राकृत्स्याच्छि
रस्थितम ॥ सिद्धं तैलं काञ्जिकेन तथा सर्जरसेन च ॥ ४७ ॥ शीतोदकसमायुक्तं लेपात्सन्तापनाशनम् ॥ शोणितज्वरदाहेभ्यो जातसन्तापनुत्तथा
॥ ४८ ॥ शूकशैवालमन्थाश्च शुण्ठीपाषाणभेदकम् ॥ शोभाञ्जनं गोक्षुरं वा वरुणच्छन्नमेव च ॥४९॥ सौभांजनस्य मूलं च एतैः क्वथितवारि च ॥
दत्त्वा हिंगुयवक्षारं पीतं वातविनाशनम ॥ ५० ॥ पिप्पली पिप्पलीमूलं तथा भल्लातकं शिव ॥ वार्येतैः क्वथितं पीतं वरशूलापहारकृत ॥ ५१ ॥
अश्वगन्धामूलकाभ्यां सिद्धा वल्मीकमृत्तिका ॥ एतया मर्दनाद्रुद्र ऊरुस्तम्भः प्रशाम्यति ॥ ५२ ॥ बृहतीकस्य वै मूलं संपिष्टमुदकेन च ॥ पीतं
संघातवातस्य विपाटनेकृदेव च ॥ ५३ ॥ पीतं तक्रेण मूलं च आर्कस्य तगरस्य च ॥ हरेत् झिञ्जिनीवातं ? वै वृक्षमिन्द्राशनिर्यथा ॥ ५४ ॥ अ
स्थिसंहारमेकेन भक्तेन सह खादितम् ॥ पीतं मांसरसेनापि वातनुच्चास्थिभङ्गनुत ॥५५॥ घृतलिप्तं सशुष्कं च छागीक्षीरेण संयुतम् ॥ तल्लेपात्पादया

१ कषायश्चकमूलकम्० । २ लिम्बैडकार्कपादेन० पा० लिम्पैडकैकपादेन० । ३ मज्जा तयाच शुकस्यलेपादङ्कक० । ४ कर्कटोशीर० । ५ रसस्य च० । ६ शैलिशैवाला ग्निमन्था० । ७ शोभाञ्जनं० । ८ पीतमक्षिपिलातस्य० । ९ विपाटनकृतेन० । १० रेत्सिझिणिवाताच्चैवं० । * वारिपीष्टानि ।

नंश्येत्सक्षेप्ये चात्र संशयः ॥ ५६ ॥ मध्वाज्यसैन्धवं सिक्थं गुडगैरिकगुग्गुलैः ॥ ससर्जरसस्फुटितः क्षोमशुद्धिश्च लेपनात् ॥ ५७ ॥ कटुतैलेन लिप्तो वै विधूमाग्नौ प्रतापितः ॥ मृत्तिकाखादितः पादः समः स्याद्वृषभध्वज ॥ ५८ ॥ सर्जरसाः सिक्थकं च जीरकं च हरीतकी ॥ उत्साधितघृताभ्यङ्गो ह्यग्निदग्धव्यथापनुत् ॥ ५९ ॥ तिलतैलं चाग्निदग्धं यवभस्मसमन्वितम् ॥ अग्निदग्धव्रणं नश्येद्बहुशः कृतलेपतः ॥ ६० ॥ नवनीतं माहिषं च दग्धापिष्टतिलानि च ॥ सभल्लाकं व्रणं नश्येद्वृच्छूलं नस्यलेपनात् ॥ ६१ ॥ कर्पूरगव्यसर्पिर्भ्यां प्रहारः पूरितो हर ॥ शस्त्रोद्भवः सबद्धश्च शुक्लवर्णेन शङ्कर ! ॥ पाकं च वेदनां चैव संस्पृशेद्वृषभध्वज ॥ ६२ ॥ आम्र ( तस्य ) मूलरसेनैव शस्त्रघातः प्रपूरितः ॥ ढौकते शस्त्रघाताभ्यां निर्व्रणो घृतपूरितः ॥ ६३ ॥ शरपुङ्खा लज्जालुका पाठा चैषां तु मूलकम् ॥ जलपिष्टं तस्य लेपाच्छस्त्रवातः प्रशाम्यति ॥ ६४ ॥ मूलं च काकजङ्घायास्त्रिरात्रेणैव शोषितैः ॥ पाकपूर्तिं वेदनां च हन्ति वै रोहितो व्रणे ॥ ६५ ॥ सजलं तिलतैलं च अपामार्गस्य मूलकम् ॥ तत्सेकदा नान्नश्येच्च प्रहारोद्भववेदना ॥ ६६ ॥ अभयां सैन्धवं शुण्ठीमेतत्पिष्टोदकेन तु ॥ भक्षयित्वा ह्यजीर्णस्य नाशो भवति शङ्कर ! ॥ ६७ ॥ कटिबद्धं निम्बमूलमाक्षिशूलहरं भवेत् ॥ शणमूलं सताम्बूलं दग्धमिन्द्रियकस्य (लप) हृत् ॥६८॥अन्नस्विन्नहरिद्रा च श्वेतसर्षपमूलकम् ॥ बीजानि मातुलुङ्गस्य एषामुद्वर्तनं समम् ॥ सप्तरात्रप्रयोगेण शुभदेहकरं भवेत् ॥ ६९ ॥ श्वेतापराजितापत्रं निम्बपत्ररसेन तु ॥ नस्यदानाड्डाकिनीनां मातॄणां ब्रह्मरक्षसाम् ॥ मोक्षः स्यान्मधुसारेण नस्याच्च वृषभध्वज ॥७०॥ मूलं श्वेतजयन्त्याश्च पुष्यर्क्षे तु समाहृतम् ॥ श्वेतापराजितार्कस्य चित्रकस्य च मूलकम् ॥ कृत्वा तु वटिकां नारी तिलकेन वशी भवेत् ॥ ७१ ॥ पिप्पलीलोहचूर्णं तु शुण्ठीश्चामलकानि च ॥ समानि रुद्र जानीयात्सैन्धवं मधुशर्करा ॥७२॥ उदुम्बरप्रमाणेन सप्ताहं भक्षणात्समम् ॥ पुमांश्च बलवान्स स्याज्जीवेद्वर्षशतद्वयम् ॥ ॐ ठं ठ ठ इति सर्ववश्यप्रयोगेषु प्रयुक्तः सर्वकामकृत् ॥ ७३ ॥ संगृह्य विद्वान्काकस्य निलयं प्रदहेच्च तत् ॥ चिताग्नौ भस्म तच्छत्रोर्दत्तं शिरसि शङ्कर ॥ ७४ ॥ तमुच्चाटयते रुद्र शृणु तद्योगमुत्तमम् ॥ संक्षिप्तं च पुरीषं वै वनमूषिकचर्मणि ॥ ७५ ॥ कटितन्तुनिबद्धं वै कुर्यान्मलनिरोधनम् ॥ कृष्णकाकस्य रक्तेन यस्य नाम प्रलिप्य च ॥ ७६ ॥ च्युतदले मध्यमध्ये ततो निः क्षिप्यते हर ! ॥ स खाद्यते काकवृन्दैर्नारी पुरुष एव च ॥ ७७ ॥ शर्करामध्वजाक्षीरं तिलगोक्षुरकं समम् ॥ स शत्रुं नाशयेद्रुद्र ! उच्चाटितमिदं हर ! ॥ ७८ ॥ उलूककृष्णकाकस्य बिल्वस्याथ समिच्छतम् ॥ रुधिरेण समायुक्तं ययोर्नाम्ना तु हूयते ॥ तयोर्मध्ये



१ त्संक्षयो नात्र० । २ सर्ज रसस्फुटितं कोमलापार्श्वलेप० । ३ शुक्ल वस्त्रेण० । ४ शेषतः० । ५ बीजानि मङ्गलदिने० । १ ॐ ठ ठ इति ।

महावैरं भवेन्नास्त्यत्र संशयः ॥ ७९ ॥ भावितं ऋक्षदुग्धेन मत्स्यस्य रोहितस्य च ॥ मांसं तत्साधितं तैलं तदभ्यङ्गाच्च रोगनुत् ॥ चन्दनोदकन स्यात्तु रोमोत्थानं भवेत्पुनः ॥ ८० ॥ हस्ते लाङ्गलिकाकन्दं गृहीतं तेन लेपितम् ॥ शरीरं येन स पुमान्वृद्धेर्दर्पं व्यपोहति ॥ ८१ ॥ मयूररुधिरेणैव जीवं संहरते शिव ॥ ज्वलतां तु भुजङ्गानां बिलस्थानामपीश्वर ॥ ८२ ॥ देहश्चिताग्नौ दग्धश्च सर्पस्याजगरस्य हि ॥ तद्भस्म संमुखे क्षिप्तं शत्रूणां भङ्गकृद्भवेत् ॥ ८३ ॥ मन्त्रेणानेन तत्क्षिप्तं महाभङ्गकरं रिपोः ॥ ॐ ठ ठ ठ चाहीहिचाहीहि स्वाहा ॥ ॐ उदरं पाहिहि पाहिहिस्वाहा ॥ ८४ ॥ सुदर्शनाया मलं तु पुष्यर्क्षे तु समाहृतम् ॥ निःक्षिप्तं गृहमध्ये तु भुजंगा वर्जयन्ति तत् ॥ ८५ ॥ अर्कमूलेन रात्रिणा अर्काग्निज्वालिता शिव ॥ युक्ता सिद्धार्थतैलेन वर्त्तिर्मार्गाहिनाशिनी ॥ ८६ ॥ मार्जारपललं विष्ठा हरितालं च भावितम् ॥ छागमूत्रेण तल्लिप्तो मूषिको मूषिकान्हरेत् ॥ ८७ ॥ मुक्तो हि मन्दिरे रुद्र नात्र कार्य्या विचारणा ॥ विफलार्जुनपुष्पाणि भल्लातकशिरीषकम् ॥ ८८ ॥ लाक्षा सर्जरसश्चैव विडंगश्चैव गुग्गुलुः ॥ एतैर्धूपो मक्षिकाणां मशकाणां विनाशनः ॥ ८९ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकाण्डे नेत्राञ्जनादिनिरूपणं नाम सप्तसप्तत्युत्तरशततमोऽध्यायः ॥ १७७ ॥ हरिरुवाच ॥ ब्रह्मदण्डीवचाकुष्ठं प्रियंगर्नागकेशरम् ॥ दद्यात्ताम्बूलसंयुक्तं स्त्रीणां मन्त्रेण तद्वशम् ॥ ॐ [1]नारायण्यै स्वाहा ॥ १ ॥ ताम्बूलं यस्य दीयेत स वशी स्यात्सुमन्त्रतः ॥ ॐ हरिः हरिः स्वाहा ॥ २ ॥ गोदन्तं हरितालञ्च संयुक्तं काकजिह्वया ॥ चूर्णीकृत्य यस्य शिरे दीयते स वशी भवेत् ॥ श्वेतसर्षपनिर्माल्यं यद्गृहे तद्विनाशकृत् ॥ ३ ॥ वैभीतकं शाखोटकं मूलं पत्रेण संयुतम् ॥ स्थाप्यते यद्गृहद्वारे तत्र वै कलहो भवेत् ॥ ४ ॥ खञ्जरीटस्य मांसं तु मधुना सह पेषयेत् ॥ ऋतुकाले योनिलेपात्पुरुषो दासतामियात् ॥ ५ ॥ अगुरुं गुग्गुलुं चैव नीलोत्पलसमन्वितम् ॥ गुडेन धूपयित्वा तु राजद्वारे प्रियो भवेत् ॥ ६ ॥ श्वेतापराजितामूलं पिष्टं रोचनया युतम् ॥ यं पश्येत्तिलकेनैव वशी कुर्य्यान्नृपालये ॥ ७ ॥ काकजंघा वचा कुष्ठं निम्बपत्रं सुकुंकुमम् ॥ आत्मरक्त[3]समायुक्तं वशी भवति मानवः ॥ ८ ॥ आरण्यस्य बिडालस्य गृहीत्वा रुधिरं शुभम् ॥ करञ्जतैले तद्भाव्यं रुद्राग्नौ कज्जलं ततः ॥ पातयेत्पद्मपत्रेण ह्यदृश्यः स्यात्तदञ्जनात् ॥ ९ ॥ ॐ नमः खड्गवज्रपाणये महायक्षसेनापतये स्वाहा ॥ ॐ रुद्रं ह्रां ह्रीं वरशक्ता त्वरिताविद्या ॥ ॐ मातरः स्तम्भय

१ ॐ नमो नारायणाय स्वाहा पा० । २ अस्यादन्तत्वमपि कोशादौ तदुक्तं भारते । कुण्डलैर्घृष्टगण्डानां कुमाराणां तरस्विनाम् ॥ निचकर्त्त शिरान्द्रौणिर्न्निर्लिभ्य इव पंकजान् ॥ १ ॥ ३ एतैस्तिलके कृते इति शेषः । ४ वज्रं पा० ।

स्वाहा ॥ सहस्रं परिजप्यात्तु विद्येयं चौरवारिणी ॥ महासुगन्धिकामूलं शुक्रं स्तम्भेत्कटौ स्थितम् ॥ १० ॥ ॐ नमः सर्वसत्त्वेभ्यो नमः सिद्धिं
कुरु कुरु स्वाहा ॥ सप्ताभिमन्त्रितं कृत्वा करवीरस्य पुष्पकम् ॥ स्त्रीणामग्रे भ्रामयच्च क्षणाद्वै सा वशे भवेत् ॥ ११ ॥ ब्रह्मदण्डीं वचां पत्रं
मधुना सह पेषयेत् ॥ अंगलेपाच्च वनिता नान्यं भर्त्तारमिच्छति ॥ १२ ॥ ब्रह्मदण्डीशिखा वक्रे क्षिप्ता शुक्रस्य स्तम्भनम् ॥ मूलं जयन्त्या
वक्रस्थं व्यवहारे जयप्रदम् ॥ १३ ॥ भृंगराजस्य मूलं तु पिष्टं शुक्रेण संयुतम् ॥ अक्षिणी चांजयित्वा तु वशी कुर्य्यान्नरं किल ॥ १४ ॥ अपराजि
ताशिखान्तु नीलोत्पलसमन्विताम् ॥ ताम्बूलेन प्र ( दाना ) दद्याच्च वशीकरणमुत्तमम् ॥ १५ ॥ अंगुष्ठे च पदे गुल्फे जानौ च जघने तथा ॥
नाभौ वक्षसि कुक्षौ च कक्षे कण्ठे कपोलके॥१६॥ ओष्ठे नेत्रे ललाटे च मूर्ध्नि चन्द्रकलाः स्थिताः ॥ स्त्रीणां पक्षे सिते कृष्णे ऊर्द्ध्वाधः संस्थिता नृणाम्
॥ १७ ॥ वामांगे दक्षिणांगे च क्रमाद्रुद्र द्रवादिकृत् ॥ चतुःषष्टि कलाः प्रोक्ताः कामशास्त्रे वशीकराः ॥ आलिंगनाद्या नारीणां कमारीणां वशीकराः ॥
॥ १८ ॥ रोचनागन्धपुष्पाणि निम्बपुष्पं प्रियंगवः॥ कुंकमं चन्दनञ्चैव तिलकेन जगद्वशेत् ॥ १९ ॥ ओं ह्रीं गौरि देवि सौभाग्यं पुत्रवशादि देहि मे ॥
ओं ह्रीं लक्ष्मि ! देवि सौभाग्यं सर्वं त्रैलोक्यमोहनम् ॥ २० ॥ सगन्धस्य हरिद्रायाः कुंकमानां च लेपतः ॥ वशयेद्रुद्र धूपश्च तथापुष्पसुगन्धयोः ॥
॥ २१ ॥ दुरालभा वचा कुष्ठं कुंकुमञ्च शतावरी ॥ तिलतैलेन संयुक्तं योनिलेपाद्वशी नरः ॥२२॥ निम्बकाष्ठस्य धूमेन धूपयित्वा भगं वधूः ॥ सुभगा
स्यात्सा ति रुद्र पतिर्दासो भविष्यति ॥ २३ ॥ माहिषं नवनीतञ्च क[illegible]श्च मधुयष्टिका ॥ सौभाग्यं भगलेपात्स्यात् पतिर्दासो भवेत्तथा ॥ २४ ॥ मधुय
ष्टिश्च गोक्षीरं तथा च कण्टकारिका ॥ एतानि समभागानि पिबेदुष्णेन वारिणा ॥ चतुर्भागावशेषेण गर्भसम्भवमुत्तमम् ॥ २५ ॥ मातुलुंगस्य बीजानि
क्षीरेण सह भावयेत् ॥ तत्पीत्वा लभते गर्भं नात्र कार्य्या विचारणा ॥ २६ ॥ मातुलुंगस्य बीजानि मूलान्यैरण्डकस्य च ॥ घृतेन सह संयोज्य
पाययेत्पुत्रकांक्षिणी ॥ २७ ॥ अश्वगन्धा घृतं दुग्धं क्वथितं पुत्रकारकम् । पलाशस्य तु बीजानि क्षौद्रेण सह पेषयेत् ॥ रजस्वला तु पीत्वा स्यात्तु
ष्पगर्भविवर्जिता ॥ २८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ह्यष्टसप्तत्यधिकशततमोऽध्यायः ॥ १७८ ॥ हरिरुवाच ॥
हरितालं यवक्षारं पत्राङ्गं रक्तचन्दनम् ॥ जातिहिंगुलकं लाक्षां पक्वा दन्तान्प्रलेपयेत् ॥ १ ॥ हरीतकीकषायेण मृक्षा दन्तान्प्रलेपयेत् ॥ दन्ताः
स्युर्लोहिताः पुंसः श्वेता रुद्र न संशयः ॥ २ ॥ मूलकं स्विद्य मन्दाग्नौ रसं तस्य प्रपूरयेत् ॥ कर्णयोः पूरणात्तेन कर्णस्रावो विनश्यति ॥ ३ ॥

१ शब्दुगभावसंप्रसारणाभावावार्षौ । २ संपिष्य मधुना सह पा० ।

अर्कपत्रं गृहीत्वा तु मन्दाग्नौ तापयेच्छनैः ॥ निष्पीड्य पूरयेत्कर्णौ कर्णशूलं विनश्यति ॥ ४ ॥ प्रियंगुमधुका चैव धातक्युत्पलपंक्तिभिः ॥ मञ्जिष्ठा लोध्रलाक्षाभिः कपित्थस्वरसेन च ॥ पचेत्तैलं तथा स्त्रीणां नश्येत्क्लेदः प्रपूरणात् ॥ ५ ॥ शुष्कमूलकशुण्ठीनां क्षारो हिंगुमहौषधम् ॥ शतपुष्पा वचा कुष्ठं दारु शिग्रु रसाञ्जनम् ॥ ६ ॥ सौवर्चलं यवक्षारं तथा सर्जकसैन्धवम् ॥ तथा ग्रन्थिर्विडं मुस्तं मधुयुक्तं चतुर्गुणम् ॥ ७ ॥ मातुलुंगरसस्तद्वत्कदल्याश्च रसो हि तैः ॥ पक्वतैलं हरेदाशु स्रावादींश्च न संशयः ॥ ८ ॥ कर्णयोः कृमिनाशः स्यात्कटुतैलस्य पूरणात् ॥ हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ॥ ९ ॥ विडंगभद्रं मुस्तश्च सप्तमं विश्वभेषजम् ॥ गोमूत्रेण च पिष्ट्वैव कृत्वा च वटिकां हर ! ॥ अजीर्णहृद्भवेच्चैकं द्वयं विषूचिकापहम् ॥ १० ॥ पटोलं मधुना हन्ति गोमूत्रेण तथार्बुदम् ॥ एषा च शङ्करी वर्त्तिः सर्वनेत्रामयापहा ॥ ११ ॥ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकोनाशीत्यधिकशततमोऽध्यायः ॥ १७९ ॥ ॥

हरिरुवाच ॥ वचा मांसी च बिल्वश्च तगरं पद्मकेसरम् ॥ नागपुष्पं प्रियंगुश्च समभागानि चूर्णयेत् ॥ अनेन धूपितो मर्त्यः कामवद्विचरेन्महीम् ॥ ॥ १ ॥ कर्पूरं देवदारुश्च मधुना सह योजयेत् । लिंगलेपाच्च तेनैव वशीकुर्य्यात्स्त्रियं किल ॥ २ ॥ मैथुनं पुरुषो गच्छेद्गृह्णीयात्स्वकमिन्द्रियम् ॥ वामहस्तेन वामश्च हस्तं लिंपेत्तु यत्स्त्रियाः ॥ आलिता स्त्री वशं याति नान्यं पुरुषमिच्छति ॥ ३ ॥ ओं रक्तचामुण्डे अमुकं मे वशमानय आनय ओं ह्रीं ह्रौं ह्रः फट् ॥ इमं जप्त्वायुतं मन्त्रं तिलकेन च शङ्कर ॥ गोरोचनासंयुतेन स्वरक्तेन वशी भवेत् ॥ ४ ॥ सैन्धवं कृष्णलवणं सौवीरं मत्स्यपित्तकम् ॥ मधु सर्पिःसितायुक्तं स्त्रीणां तद्भगलेपनात् ॥ ५ ॥ यः पुमान्मैथुनं गच्छेन्नान्यां नारीं गमिष्यति ॥ शङ्खपुष्पी वचा मांसी सोमराजी च फल्गुकम् ॥ ६ ॥ माहिषं नवनीतश्च त्वेकीकृत्य भिषग्वरः ॥ समूलानि स पत्राणि क्षीरेणाज्येन पेषयेत् ॥ ७ ॥ गुटिकां शोधितां कृत्वा नारी योन्यां प्रवेशयेत् ॥ दशवारं प्रसूतापि पुनः कन्या भविष्यति ॥८॥ सर्षपाश्च वचा चैव मदनस्य फलानि च ॥ मार्जारविष्ठा धत्तूरं स्त्रीकेशेन समन्वितः ॥ ९ ॥ चातुर्थिकहरो धूपो डाकिनीज्वरनाशकः ॥ अर्जुनस्य च पुष्पाणि भल्लातकविडङ्गके ॥ १० ॥ बाला चैव सर्जरसं सौवीरसर्षपास्तथा ॥ सर्पयूकामाक्षिकाणां धूमो मशकनाशनः ॥ ११ ॥ भूतलायाश्च चूर्णेन स्तम्भः स्याद्योनिपूरणात् ॥ तेन लेपनतो योनौ भगस्तम्भस्तु जायते ॥१२॥ इतिश्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे अशीत्यधिकशततमोऽध्यायः ॥ १८० ॥ ॥ हरिरुवाच ॥ ताम्बूलञ्च घृतं क्षौद्रं

१ भगस्येतिशेषः ।

लवणं ताम्रभाजने ॥ तथा पयःसमायुक्तं चक्षुःशूलहरं परम् ॥ १ ॥ हरीतकी वचा कुष्ठं व्योषं हिङ्गु मनःशिला ॥ कासे श्वासे च हिक्कायां लिह्यात्क्षौद्रं घृतप्लुतम् ॥ २ ॥ पिप्पलीत्रिफलाचूर्णं मधुना लेहयेन्नरः ॥ नश्यते पीनसः कासः श्वासश्च बलवत्तरः ॥ ३ ॥ समूलाचित्रकं भस्म पिप्पलीचूर्णकं लिहेत् ॥ श्वासं कासञ्च हिक्काञ्च मधुमिश्रं वृषध्वज ! ॥ ४ ॥ नीलोत्पलं शर्करा च मधुकं पद्मकं समम् ॥ तण्डुलोदकसंमिश्रं प्रशमेद्रक्तविक्रियाः ॥ ५ ॥ शुण्ठी च शर्करा चैव तथा क्षौद्रेण संयुता ॥ कोकिलस्वर एव स्याद्गुटिका भुक्तिमात्रतः ॥ ६ ॥ हरितालं शङ्खचूर्णं कदलीदलभस्मना ॥ एतद्द्रव्येण चोद्वर्त्य लोमशातनमुत्तमम् ॥७॥ लवणं हरितालञ्च तुम्बिन्याश्च फलानि च ॥ लाक्षारससमायुक्तं लोमशातनमुत्तमम् ॥ ८ ॥ सुधा च हरितालञ्च शङ्खभस्म मनःशिला ॥ सैन्धवेन सहैकत्र छागमूत्रेण पेषयेत् ॥ ९ ॥ तत्क्षणोद्वर्त्तनादेव लोमशातनमुत्तमम् ॥ शङ्खमामलकं पत्रं धातक्याः कुसुमानि च ॥ १० ॥ पिष्ट्वा तत्पयसा सार्द्धं सप्ताहं धारयेन्मुखे ॥ स्निग्धाः श्वेताश्च दन्ताश्च भवन्ति विमलप्रभाः॥११॥इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकाशीत्यधिकशततमोऽध्यायः॥१८१॥ हरिरुवाच ॥ शरद्ग्रीष्मवसन्तेषु प्रायशो दधि गर्हितम् ॥ हेमन्ते शिशिरे चैव वर्षासु दधि शस्यते ॥ १ ॥ भुक्ते तु शर्करा पीता नवनीतेन बुद्धिकृत् ॥ गुडस्य तु पुराणस्य पलमेकन्तु भक्षयेत् ॥ स्त्रीसहस्रञ्च संगच्छेत्पुमान्बलयुतो हर ! ॥ २ ॥ कुष्ठं संचूर्णितं कृत्वा घृतमाक्षिकसंयुतम् ॥ भक्षयेत्स्वप्नवेलायां बलीपलितनाशनम् ॥ ॥ ३ ॥ अतसीमाषगोधूमचूर्णं कृत्वा तु पिप्पली ॥ घृतेन लेपयेद्गात्रमेभिः सार्द्धं विचक्षणः ॥ कन्दर्पसदृशो मर्त्यो नित्यं भवति शङ्कर ! ॥ ४ ॥ यवास्तिलाश्वगन्धा च मुशली सरला गुडम् ॥ एभिश्च रचितां जग्ध्वा तरुणो बलवान्भवेत् ॥ ५ ॥ हिङ्गु सौवर्चलं शुण्ठीं पीत्वा तु क्वथितोदकैः ॥ परिणामाख्यशूलञ्च अजीर्णञ्चैव नश्यति ॥ ६ ॥ धातकीं सोमराजीञ्च क्षीरेण सह पेषयेत् ॥ दुर्बलश्च भवेत्स्थूलो नात्र कार्य्या विचारणा ॥ ७ ॥ शर्करामधुसंयुक्तं नवनीतं बली लिहेत् ॥ क्षीराशी च क्षयी पुष्टिं मेधाञ्चैवातुलां व्रजेत् ॥ ८ ॥ कुलीरचूर्णं सक्षीरं पीतञ्च क्षयरोगनुत् ॥ भल्लातकं विडङ्गञ्च यवक्षारञ्च सैन्धवम् ॥ ९ ॥ मनःशिला शङ्खचूर्णं तैलपक्वं तथैव च ॥ लोमानि शातयत्येव नात्र कार्य्या विचारणा ॥ १० ॥ मालूरस्य रसं गृह्य जलौकां तत्र पेषयेत् ॥ हस्तौ संलेपयेत्तेन त्वग्निस्तम्भनमुत्तमम् ॥ ११ ॥ शाल्मलीरसमादाय खरमूत्रे निधाय तम् ॥ अग्न्यादौ विक्षिपेत्तेन ह्यग्निस्तम्भनमुत्तमम् ॥ १२ ॥ वायस्या उदरं गृह्य मण्डूकवसया सह ॥ गुटिकां कारयेत्तेन ततोऽग्नौ संक्षिपेत्सुधीः ॥ एवमेतत्प्रयोगेण ह्यग्निस्तम्भनमु

१ शवार्षः । २ गुटिकामिति शेषः । ३ त्यवार्षः ।

तमम् ॥ १३ ॥ मुण्डीत्वक्च वचा मुस्तं मरिचं तगरं तथा ॥ चर्वित्वा च त्विमं सद्यो जिह्वया ज्वलनं लिहेत् ॥१४ ॥ गोरोचनां भृंगराजं चूर्णीकृत्य घृतं समम् ॥ दिव्याम्भसः स्तम्भनं स्यान्मन्त्रेणानेन वै तथा ॥ ओं अग्निस्तम्भनं कुरु कुरु ॥ १५ ॥ ओं नमो भगवते जलं स्तम्भय सं सं सं केक केकः चरचर ॥ जलस्तम्भनमन्त्रोऽयं जलं स्तम्भयते शिव ! ॥ १६॥ गृध्रास्थिश्च गवास्थिश्च तथा निर्माल्यमेव च ॥ अरेर्यो निखनेद्द्वारे पञ्चत्वमुपयाति सः ॥ १७ ॥ पञ्चरक्तानि पुष्पाणि पृथग्जात्या समालभेत्[१] ॥ कुंकुमेन समायुक्तमात्मरक्तसमन्वितम् ॥ १८ ॥ पुष्पेण तु समं पिष्ट्वा रोचनायाः पलैकतः ॥ स्त्रिया पुंसा कृतो रुद्र ! तिलकोऽयं वशीकरः ॥ १९ ॥ ब्रह्मदण्डी तु पुष्येण भक्ष्ये पाने वशीकरः ॥ यष्टि मधु पलैकेन पक्वमुष्णोदकं पिबेत् ॥ २० ॥ विष्टम्भिकाश्च हृच्छूलं हरत्येव महेश्वर ! ॥ ओं ह्रूं जः ॥ मन्त्रोऽयं हरते रुद्र ! सर्ववृश्चिकजं विषम् ॥ २१ ॥ पिप्पली नवनीतञ्च शृंगवेरं च सैन्धवम् ॥ मरिचं दधि कुष्ठञ्च नस्ये पाने विषं हरेत् ॥ २२ ॥ त्रिफलार्द्रककुष्ठं च चन्दनं घृतसंयुतम् ॥ एतत्पानाच्च लेपाच्च विषनाशो भवेच्छिव! ॥ २३ ॥ पारावतस्य चाक्षीणि हरितालं मनःशिला ॥ एतद्योगाद्विषं हन्ति वैनतेय इवोरगान् ॥ २४ ॥ सैन्धवं त्र्यूषणं चैव दधिमध्वाज्यसंयुतम् ॥ वृश्चिकस्य विषं हन्ति लेपोऽयं वृषभध्वज ! ॥ २५ ॥ ब्रह्मदण्डीतिलान्क्वाथ्य[२] चूर्णं त्रिकटुकं पिबेत् ॥ नाशयेद्रुद्र ! गुल्मानि निरुद्धं रक्तमेव च ॥ २६ ॥ पीत्वा क्षीरं क्षौद्रयुतं नाशयेदसृजः स्रुतिम् ॥ आटरूषकमूलेन भगं नाभिं च लेपयेत् ॥ सुखं प्रसूयते नारी नात्र कार्य्या विचारणा ॥२७ ॥ शर्करां मधुसंयुक्तां पीत्वा तण्डुलवारिणा ॥ रक्तातिसारशमनं भवतीति वृषध्वज ! ॥ २८ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे द्व्याशीत्यधिकशततमोऽध्यायः ॥१८२॥ हरिरुवाच ॥ मरिचं शृंगवेरं च कुटजत्वचमेव च ॥ पानाच्च ग्रहणी नश्येच्छशाङ्काङ्कितशेखर ! ॥१॥ पिप्पली पिप्पलीमूलं मरिचं तगरं वचा ॥ देवदारुरसं पाठां क्षीरेण सह पेषयेत् ॥२॥ अनेनैव प्रयोगेण ह्यतिसारो विनश्यति ॥ मरीचतिलपुष्पाभ्यामञ्जनं कामलापहम् ॥ ३ ॥ हरीतकी समगुडा मधुना सह योजिता ॥ विरेचनकरी रुद्र ! भवतीति न संशयः ॥ ४ ॥ त्रिफला चित्रकं चित्रं तथा कटुकरोहिणी ॥ ऊरुस्तम्भहरं ह्येतदुक्तमन्तु विरेचनम् ॥ ५ ॥ हरीतकी शृंगवेरं देवदारु च चन्दनम् ॥ क्वाथयेच्छागदुग्धेन अपामार्गस्य मूलकम् ॥ ऊरुस्तम्भं जयन्त्या वा सप्तरात्रेण नाशयेत ॥ ६ ॥ अनन्ताशृंगवेरस्य सूक्ष्मचूर्णानि कारयेत् ॥ गुग्गुलं गुडतुल्यं च गुटिकामुपयुज्य च ॥ वायुः स्नायुगतं चैव अग्निमान्द्यं च नाशयेत ॥ ७ ॥ [illegible]पुष्पीन्तु पुष्येण समुद्धृत्य सपत्रिकाम् ॥ समूलां छागदुग्धेन

१ पुंस्त्वमार्षम् । २ आत्मनेपदमार्षम् । ३ ल्यबार्षः ।

अपस्मारहरं पिबेत् ॥ ८ ॥ अश्वगन्धाभये चैव उदकेन समं पिबेत् ॥ रक्तपित्तं विनश्येत्तु नात्र कार्य्या विचारणा ॥ ९ ॥
हरीतकीकुष्ठचूर्णं कृत्वा आस्यं च पूरयेत् ॥ शीतं पीत्वाथ पानीयं सर्वच्छर्दिनिवारणम् ॥ १० ॥ गडूचीपद्मकारिष्टधान्याकं रक्तचन्दनम् ॥
पित्तश्लेष्मज्वरच्छर्दिदाहतृष्णाघ्नमग्निकृत् ॥ ओं हुं नम इति ॥ ११ ॥ श्रोत्रे बद्ध्वा शंखपुष्पीं ज्वरं मन्त्रेण वै हरेत् ॥ ओं जम्भिनी स्तम्भिनी मोहय
सर्वव्याधीन्मे वज्रेण ठः ठः सर्वव्याधीन्मे वज्रेण फट् इति ॥ १२ ॥ पुष्पमष्टशतं जप्त्वा हस्ते दत्त्वा नखं स्पृशेत् ॥ चातुर्थिको ज्वरो रुद्र
अन्ये चैव ज्वरास्तथा ॥ १३ ॥ जम्बूफलं हरिद्रा च सर्पस्यैव तु कंचुकम् ॥ सर्वज्वराणां धूपोऽयं हरश्चातुर्थिकस्य च ॥ १४ ॥ करवीरं भृङ्गपत्रं
लवणं कुष्ठकर्कटे ॥ चतुर्गुणेन मूत्रेण पचेत्तैलं हरेच्च तत् ॥ पामां विचर्चिकां कुष्ठमभ्यङ्गाद्धि व्रणानि वै ॥ १५ ॥ पिप्पलीमधुपानाच्च तथा मधु
रभोजनात् ॥ प्लीहा विनश्यते रुद्र तथा सूरणसेवनात् ॥ १६ ॥ पिप्पलीश्च हरिद्राश्च गोमूत्रेण समन्विताम् ॥ प्रक्षिपेच्च गुदद्वारे अर्शांसि विनि
वारयेत् ॥ १७ ॥ अजादुग्धमार्द्रकञ्च पीतं प्लीहादिनाशनम् ॥ सैन्धवश्च विडङ्गानि सोमराजी तु सर्षपाः ॥ १८ ॥ रजनी द्वे विषश्चैव गोमूत्रेणैव
पेषयेत् ॥ कुष्ठनाशश्च तल्लेपान्निम्बपत्रादिना तथा ॥ १९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे त्र्यशीत्यधिकशततमोऽ
ध्यायः ॥१८३॥ हरिरुवाच ॥ रजनीकदलीक्षारलेपः सिध्मविनाशनः ॥ कुष्ठस्य भागमेकन्तु पथ्याभागद्वयं तथा ॥ उष्णोदकेन संपीय कटिशूलवि
नाशनम् ॥१॥ अभया नवनीतञ्च शर्करापिप्पलीयुतम् ॥ पानादर्शोहरं स्याच्च नात्र कार्य्या विचारणा ॥२॥ आटरूषकपत्रेण घृतं मृद्वग्निना पचेत् ॥
चूर्णं कृत्वा तु लेपोऽयं अर्शोरोगहरः परः ॥ ३ ॥ गुग्गुलुत्रिफलायुक्तं पीत्वा नश्येद्भगन्दरम् ॥ अजाजीशृङ्गवेरञ्च दथा मण्डं विपाचयेत् ॥ ४ ॥
लवणेन तु संयुक्तं मूत्रकृच्छ्रविनाशनम् ॥ यवक्षारं शर्करा च मूत्रकृच्छ्रविनाशकृत् ॥ ५ ॥ चिताग्निः खंजरीटस्य विष्ठा फेनो हयस्य च ॥ सौभा
ञ्जनं वासनेत्रं नर एतैस्तु धूपितः ॥ अदृश्यस्त्रिदशैः सर्वैः किं पुनर्मानवैः शिव ॥ ६ ॥ तिलतैलं यवान्दग्ध्वा मषीं कृत्वा तु लेपयेत् ॥ तेनैव
सह तैलेन अग्निदग्धः सुखी भवेत् ॥ ७ ॥ लज्जालोः शरपुंखाया लेपः साज्योऽग्निनाशनः ॥ ॐ नमो भगवते ठ ठ छिन्धि छिन्धि ज्वलनं प्रज्व
लितं नाशय नाशय हुं फट् ॥ ८ ॥ करे बद्धं तु निर्गुण्ड्या मूलं ज्वरहरं द्रुतम् ॥ मूलञ्च श्वेतगुञ्जायाः कृत्वा तत्सप्तखण्डकम् ॥९॥ हस्ते बध्वा ना
शयेच्च अर्शांस्येव न संशयः ॥ विष्णुक्रान्ताजमूत्रेण चौरव्याघ्रादिरक्षणम् ॥१०॥ ब्रह्मदण्ड्यास्तु मूलानि सर्वकर्माणि कारयेत् ॥ त्रिफलायास्तु चूर्णं
हि साज्यं कुष्ठविनाशनम् ॥ ११॥ आज्यं पुनर्नवाबिल्वैः पिप्पलीभिः साधितम् ॥ हरेद्धिक्कां श्वासकासौ पीतं स्त्रीणाञ्च गर्भकृत् ॥ १२ ॥ भक्षयेद्वा

नरीबीजं पयसाज्येन पाचितम् ॥ घृतशर्करया युक्तं शुक्रः स्यादक्षयस्ततः ॥ १३ ॥ विडंगं मधुकं पाठां मांसीं सर्ज्जरसं तथा ॥ हरिद्रां त्रिफलाञ्चैव मपामार्गं मनःशिलाम् ॥ १४ ॥ उदुम्बरं धातकीञ्च तिलतैलेन पेषयेत् ॥ योनिं लिंगं च म्रक्षेत स्त्रीपुंसोः स्यात्प्रियं मिथः ॥ १५ ॥ नमस्ते ईश वरदाय आकर्षिणि विकर्षिणि मुग्धे स्वाहा इति ॥ योनिलिंगस्य तैलेन शंकर म्लक्षणात्ततः ॥ १६ ॥ पुनर्नवामृता दूर्वा कनकश्चेन्द्रवारुणी ॥ बीजे नैषां जातिकाया रसेन रसमर्द्दनम् ॥ १७ ॥ मूषाया मध्यगं कृत्वा रसं मारणमीरितम् ॥ मध्वाज्यसहितं दुग्धं वलीपलितनाशनम् ॥ १८ ॥ मध्वाज्यं गुडताम्रञ्च कारवेल्लरसस्तथा ॥ दहनाच्च भवेद्रौप्यं सुवर्णकरणं शृणु ॥ १९ ॥ पीतं धत्तूरपुष्पञ्च सीसकञ्च पलं मतम् ॥ लांगलिकायाः शाखा च स्वर्णञ्च दहनाद्भवेत् ॥ २० ॥ धत्तूरबीजतैलेन दीपप्रज्वलनाद्धर ॥ समाधावुपविष्टन्तु गगनस्थो न पश्यति ॥ २१ ॥ वृषस्य मृन्मयस्यैव युक्तो भेको निगृह्यते ॥ शंकरावयवैर्युक्तो धूपं घ्रात्वा च गर्जति ॥ विस्मयं कुरुते चैव वृषवन्नात्र संशयः ॥ २२ ॥ रात्रौ च सार्षपं तैलं कीटं खद्यो तनामकम् ॥ ताभ्यां दीपः प्रज्वलितो वाग्मिज्वालकलापवत् ॥२३॥ चूर्णं छुच्छुन्दरीदेहं दग्ध्वा रुद्र प्रलेपयेत् ॥ तप्यते तक्षणाद्दग्धो यदि सम्यक्प्र लेपयेत् ॥ चन्दनेन भवेन्मोक्षः पानाल्लेपात्सुखी भवेत् ॥ २४ ॥ कुञ्जरस्य मदाक्तस्य स्वयं नेत्रे शिवांजयेत् ॥ युद्धे विजयते सोऽपि महाशूरश्च जायते ॥ २५ ॥ दन्तं डुण्डुभसर्पस्य मुखे संगृह्य वै क्षिपेत् ॥ तिष्ठते च जलान्तस्तु निर्विकल्पं स्थले यथा ॥ २६ ॥ कुम्भीरनेत्रदंष्ट्राश्च अस्थीनि रुधिरं तथा ॥ वसातैलसमायुक्तमेकत्र तन्नियोजयेत् ॥ आत्मानं म्लक्षयेत्तेन जले तिष्ठेद्दिनत्रयम् ॥ २७ ॥ कुम्भीरकस्य नेत्राणि हृदयं कच्छपस्य च ॥ मूषिकस्य वसास्थीनि शिशुमारवसा तथा ॥ एतान्येकत्र संलेपाज्जले तिष्ठेद्यथा गृहे ॥ २८ ॥ लोहचूर्णं तक्रपीतं पाण्डुरोगहरं भवेत् ॥ तण्डुलीय कगोक्षूरमूलं पीतं पयोन्वितम् ॥ २९ ॥ कमलादिहरंपीतं मुत्ररोगहरं तथा ॥ जातीमूलं तक्रपीतं कोलमूलं त्वजीर्णनुत् ॥ ३० ॥ सतक्रं कुशमूलं वा मर्कटी मूलमेव वा ॥ कांजिकेन च वाकुच्या मूलं वै दन्तरोगनुत् ॥ ३१ ॥ तथेन्द्रवारुणीमूलं वारिपीतं विषादिहृत् ॥ सुरभिकामूलपा नाद्वा तन्नाशो भवेच्छिव ॥ ३२ ॥ शिरोरोगहरं लेपाद्गुंजाचूर्णं सकांजिकम् ॥ बला चातिबला यष्टी शर्करा मधुसंयुता ॥ ३३ ॥ वन्ध्यागर्भकरी पीता नात्र कार्य्या विचारणा ॥ श्वेतापराजितामूलं पिप्पलीशुण्ठकायुतम् ॥ ३४ ॥ परिपिष्टं शिरोलेपाच्छिरःशूलविनाशनम् ॥ निर्गुण्डिका शिखां पीत्वा गण्डमालां विनाशयेत् ॥ ३५ ॥ केतकीपत्रजं क्षारं गुडेन सह भक्षयेत् ॥ तक्रेण शरपुंखां वा पीत्वा प्लीहां विनाशयेत् ॥ ३६ ॥

१ अचतुरेति समान्ताभाव आर्षः।

मातुलंगस्य निर्यासं गुडाज्येन समन्वितम् ॥ वातपित्तजशूलानि हन्ति वै पानयोगतः ॥ शुण्ठी सौवर्चलं हिंगु पीतं हृदयरोगनुत् ॥ ३७ ॥
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैद्यशास्त्रे चतुरशीत्यधिकशततमोऽध्यायः ॥ १८४ ॥ हरिरुवाच ॥ ओं गणपतये इति अयं गणपतेर्मन्त्रो धनविद्याप्रदायकः ॥ १ ॥ इममष्टसहस्रञ्च जप्त्वा बद्ध्वा शिखां ततः ॥ व्यवहारे जयः स्याच्च शतं जापान्नृणां प्रियः ॥ २ ॥ तिलानां तु घृताक्तानां कृष्णानां रुद्र होमयेत् ॥ अष्टोत्तरसहस्रन्तु राजा वश्यस्त्रिभिर्दिनैः ॥ ३ ॥ अष्टम्याञ्च चतुर्दश्यामुपोष्याभ्यर्च्य विघ्नराट् ॥ तिलाक्षतानां जुहुयादष्टोत्तरसहस्रकम् ॥ अपाजितः स्याद्युद्धे च सर्वे तञ्च सिषेविरे[2] ॥ ४ ॥ जप्त्वा चाष्टसहस्रन्तु ततश्चाष्टशतेन हि ॥ शिखां बद्ध्वा राजकुले व्यवहारे जयो भवेत् ॥ ५ ॥ ह्रींकारं सविसर्गञ्च प्रातःकाले नरस्तु यः ॥ स्त्रीणां ललाटे विन्यस्य वशतां नयति ध्रुवम् ॥ ६ ॥ सुसमाहितचित्तेन विन्यस्य प्रमदालये ॥ सोत्कामां कामिनीं कुर्यान्नात्र कार्य्या विचारणा ॥ ७ ॥ जुहुयादयुतं यस्तु शुचिः प्रयतमानसः ॥ दृष्टिमात्रे सदा तस्य वश्यमायान्ति योषितः ॥ ८ ॥ मनः शिलापत्रकञ्च सगोरोचनकुंकुमम् ॥ कृत एभिश्च तिलके वश्यमायांति योषितः ॥ ९ ॥ भृंगराट् सहदेवा च वचा श्वेतापराजिता ॥ तेनैव तिलकं कृत्वा त्रैलोक्यं वशतां नयेत् ॥ १० ॥ गोरोचना मीनपित्तमाभ्याञ्च कृतवर्त्तिकः ॥ यः पुमांस्तिलकं कुर्याद्वामहस्तकनिष्ठया ॥ स करोति वशे सर्वं त्रैलोक्यं नात्र संशयः ॥ ११ ॥ गोरोचना महादेव ! धातुशोणितभाविता ॥ एतैर्वै तिलकं कृत्वा सा नरं यं निरीक्षते ॥ तत्क्षणात्तं वशे कुर्य्यान्नात्र कार्य्या विचारणा ॥ १२ ॥ नागेश्वरञ्च शैलेयं त्वक्पत्रञ्च हरीतकी ॥ चन्दनं कुष्ठमूक्ष्मैलारक्तशालिसमन्विता ॥ १३ ॥ एतैर्धूपो वशकरः स्मरबाणैः स्मरार्दनः ॥ रतिकाले महादेव पार्वतीप्रिय शंकर ॥ १४ ॥ निजशुक्रं गृहीत्वा तु वामहस्तेन यः पुमान् ॥ कामिनीचरणं वामं लिंपेत्स स्यात्स्त्रियाः प्रियः ॥ १५ ॥ सैन्धवञ्च महादेव पारावतमलं मधु ॥ एभिर्लिप्ते तु लिंगे वै कामिनीवशकृद्भवेत् ॥ १६ ॥ पुष्पाणि पञ्चरक्तानि गृहीत्वा यानि कानि च ॥ तत्तुल्यञ्च प्रियंगुञ्च पेषयेदेकयोगतः ॥ अनेन लिप्तलिङ्गस्य कामिनीवशतामियात् ॥ १७ ॥ हयगन्धा च मञ्जिष्ठा मालतीकुसुमानि च ॥ श्वेतसर्षप एतैश्च लिप्तलिङ्गः स्त्रियाः प्रियः ॥ १८ ॥ मूलन्तु काकजंघाया दुग्धपीतन्तु शोषनुत् ॥ अश्वगन्धानागबलागुडमाषनिषेविणः ॥ रूपं भवेद्यथा तद्वन्नवयौवनचारिणाम् ॥ १९ ॥ लौहचूर्णसमायुक्तं त्रिफलाचूर्णमेव वा ॥ मधुना सेवितं रुद्र परिणामाख्यशूलनुत् ॥ २० ॥ क्वथितोदकपानन्तु

१ अम्लुगार्षः । विन्नपमिति वा । पा०। २ तं भजंते समे जनाः । ३ सकामामिति पा० ।

शम्बूकक्षारकं तथा ॥ मृगशृङ्गं ह्यग्निदग्धं गव्याज्येन समन्वितम् ॥ पीतं हृत्पृष्ठशूलानां भवेन्नाशकरं शिव ॥ २१ ॥ हिङ्गु सौवर्चलं शुण्ठी वृषध्वज महौषधम् [1]॥ एभिस्तु क्वथितं वारि पीतं वै सर्वशूलनुत् ॥ २२ ॥ अपामार्गस्य वै मूलं सामुद्रलवणान्वितम् ॥ आस्वादितमजीर्णस्य शूलस्य स्याद्विमर्दनम् ॥ २३ ॥ वटरोहाङ्कुरो रुद्र तण्डुलोदकघर्षितः ॥ पीतः सतक्रोऽतीसारं क्षयं नयति शङ्कर ॥ २४ ॥ अङ्कोटमूलं कर्षार्धं पिष्टं तण्डुलवारिणा ॥ सर्वातीसारग्रहणीं पीतं हरति भूतप ॥ २५ ॥ मरीचशुण्ठिकुटजत्वक्चूर्णञ्च गुडान्वितम् ॥ क्रमात्तद्द्विगुणं पीतं ग्रहणीव्याधिनाशनम् ॥ २६ ॥ श्वेतापराजितामूलं हरिद्रासिक्थतण्डुलाः ॥ अपामार्गत्रिकटुकमेषाञ्च वटिका शिव ॥ विषूचिकामहाव्याधिं हरत्येव न संशयः ॥ २७ ॥ त्रिफलागुरु भूतेश शिलाजतु हरीतकी ॥ एकैकमेषां चूर्णन्तु मधुना च विमिश्रितम् ॥ पीतं सर्वञ्च मेहन्तु क्षयं नयति शङ्कर ॥ २८ ॥ अर्कक्षीरप्रस्थमेकं तिलतैलं तथैव च ॥ मनःशिलामरीचानां सिन्दूरस्य पलं पलम् ॥ २९ ॥ चूर्णं कृत्वा ताम्रपात्रे त्वातपैः शोषयेत्ततः ॥ पीतं स्नुहीगतं दुग्धं सैन्धवं शूलनुद्भवेत् ॥ ३० ॥ त्रिकटुत्रिफलानक्तं तिलतैलं तथैव च ॥ मनःशिला निम्बपत्रं जातीपुष्पमजापयः ॥३१॥ तन्मूत्रं शङ्खनाभिश्च चन्दनं घर्षयेत्ततः ॥ एभिश्च वर्त्तिकां कृत्वा त्वक्षिणी चाञ्जयेत्ततः ॥ ३२ ॥ नश्यते पटलं काचं पुष्पञ्च तिमिरादिकम् ॥ विभीतकस्य वै चूर्णं समधु श्वासनाशनम् ॥ ३३ ॥ पिप्पलीत्रिफलाचूर्णं मधुसैन्धवसंयुतम् ॥ सर्वरोगज्वरश्वासशोषपीनसहृद्भवेत् ॥३४॥ देवदारोश्च वै चूर्णं अजामूत्रेण भावयेत् ॥ एकविंशतिवारंवैत्वक्षिणी तेन चाञ्जयेत् ॥ रात्र्यन्धता पटलता नश्येन्निर्लोमता तथा ॥ ३५ ॥ पिप्पली केतकं रुद्र हरिद्रामलकं वचा ॥ सर्वाक्षिरोगा नश्येयुः सक्षीरादञ्जनात्ततः ॥ ३६ ॥ काकजंघाशिग्रुमूले मुखेन विधृते शिव ॥ चर्वित्वा दन्तकीटानां विनाशो हि भवेद्धर ॥ ३७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकांडे मन्त्रतन्त्रवैद्यप्रयो० पञ्चाशीत्यधिशततमोऽध्यायः ॥ ॥१८५॥ हरिरुवाच ॥ पीतः सारो गुडूच्याश्च मधुना च प्रमेहनुत् ॥ पीतं गोहालिकामूलं तिलदध्याज्यसंयुतम् ॥१॥ निरुद्धमूत्रं क्वथितं निवर्त्तयति शङ्कर ॥ तथा हिक्कां हरेत्पीतं सौवर्चलयुतञ्च वै ॥ २ ॥ गोरक्षकर्कटीमूलं पिष्टं शीतोदकेन च ॥ पीतं दिनत्रयेणैव नाशयेद्रुद्र शर्कराम् ॥ ३ ॥ पिष्ट्वा वै मालतीमूलं ग्रीष्मकाले समाहितम् ॥ साधितं छागदुग्धेन पीतं शर्करयान्वितम् ॥ हरेन्मूत्रनिरोधञ्च हरेद्वै पाण्डुशर्कराम् ॥ ४ ॥ द्विजयष्टयाश्च वै मूलं पिष्टं तण्डुलवारिणा ॥ गण्डमालां हरेल्लेपादसाध्यं गलगण्डकम् ॥ ५ ॥ रसाञ्जनं हरीतक्याश्चूर्णं तेनैव गुण्ठनात् ॥ नाशये

१ प्रत्ययलुगार्षः । २ तगरमिति पा० ।

त्पुरुषो व्याधीन्नात्र कार्य्या विचारणा ॥ ६ ॥ करवीरमूललेपाद्वै लेपात्पूगफलस्य च ॥ पुंव्याधिर्नश्यते रुद्र योगमन्यं वदाम्यहम् ॥ ७ ॥ दन्तीमूलं हरिद्रा च चित्रकं तस्य लेपनात् ॥ भगन्दरविनाशः स्यादन्यं योगं वदाम्यहम् ॥ जलौकाजग्धरक्तश्च भगन्दरश्चुमापते ॥ ८ ॥ त्रिफलाजलघृष्टश्च मार्जारास्थि विलेपितम् ॥ ततो न प्रस्रवेद्रक्तं नात्र कार्या विचारणा ॥ ९ ॥ हरिद्राऽनेकवारञ्च स्नुहीक्षीरेण भाविता ॥ वटिकाऽर्शोविनाशाय तल्लेपाद्वृ षभध्वज ॥ घोषाफलं सैन्धवञ्च पिष्ट्वा चार्शोहरं परम् ॥ १० ॥ गव्याज्यं साधितं पीतं पलाशक्षारवारिणा ॥ त्रिगुणेन त्रिकटुकं अर्शांसि क्षपये च्छिव ॥ ११ ॥ बिल्वस्य च फलं दग्धं रक्तार्शःप्रविनाशनम् ॥ जग्ध्वा कृष्णतिलानेव नवनीतयुतानपि ॥ १२ ॥ शुण्ठीचूर्णं यवक्षारयुक्तं तुल्यगुडान्वितम् ॥ अग्निवृद्धिं करोत्येव प्रत्यूषे वृषभध्वज ॥ १३ ॥ शुण्ठ्या च क्वथितं वारि पीतं चाग्निं करोति वै ॥ हरीतकीं सैन्धवञ्च चित्रकं रुद्र पिप्पली ॥ १४ ॥ चूर्णमुष्णोदकेनैषां पीतं चातिक्षुधाकरम् ॥ साज्यं सूकरमांसं वै पीतं चातिक्षुधाकरम् ॥ १५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे षडशीत्यधिकशततमोऽध्यायः ॥ १८६ ॥ हरिरुवाच ॥ हस्तिकर्णपलाशस्य पत्राणि ? चूर्णयेद्धर ॥ सर्वरोगवि निर्मुक्तं चूर्णं पलशतं शिव ॥ १ ॥ सक्षीरं भक्षितं कुर्यात्सप्ताहेन वृषध्वज ॥ नरं श्रुतिधरं रुद्र मृगेन्द्रगतिविक्रमम् ॥ २ ॥ पद्मरागप्रतीकाशं युक्तं दशशतायुषा ॥ षोडशाब्दाकृतिं रुद्र सततं दुग्धभोजनात् ॥ ३ ॥ मधुसर्पिस्समायुक्तं दुग्धमायुष्करं भवेत् ॥ तज्जग्धं मधुना सार्द्धं दशवर्ष सहस्रिणम् ॥ ४ ॥ कुर्य्यान्नरं श्रुतिधरं प्रमदाजनवल्लभम् ॥ दध्ना नित्यं भक्षितन्तु वज्रदेहकरं भवेत् ॥ ५ ॥ केशराजिसमायुक्तं नरं वर्षसहस्रिणम् ॥ तच्च कांजिकसंयुक्तं नरं कुर्य्याच्च भक्षितम् ॥ ६ ॥ शतवर्षं दिव्यदेहं वलीपलितवर्जितम् ॥ जग्धं त्रिफलया क्षौद्रं चक्षुष्मन्तं करोति वै ॥ ७ ॥ अन्धः पश्येत्तु चूर्णस्य साज्यस्यैव तु भक्षणात् ॥ महिषीक्षीरसंयुक्तस्तल्लेपः कृष्णकेशकृत् ॥ ८ ॥ खल्वाटस्य च वै केशा भवन्ति वृषभध्वज ॥ तैलयुक्तेन चूर्णेन वलीपलितनाशनम् ॥ ९ ॥ तदुद्वर्त्तनमात्रेण सर्वरागः प्रमुच्यते ॥ सच्छागक्षीरचूर्णेन दृष्टिः स्यान्मासतोऽञ्जनात् ॥ ॥ १० ॥ पलाशस्य च बीजानि श्रावणे वितुषाणि च ॥ गृहीत्वा नवनीतेन तेषां चूर्णं च भक्षयेत् ॥ ११ ॥ कर्षार्द्धमेकं सेवेत नत्वा नित्यं हरिं प्रभुम् ॥ पुराणषष्टिधान्यस्य पथ्यमम्बु पिबन्हर ॥ जीवेद्वर्षसहस्राणि वलीपलितवर्जितः ॥ १२ ॥ भृङ्गराजस्य वै मूलं पुष्यर्क्षे तु समाहृतम् ॥ विधाय तस्य चूर्णं वै ससौवीरञ्च भक्षयेत् ॥ १३ ॥ मासमात्रप्रयोगेण वलीपलितवर्जितः ॥ शतानि पञ्च जीवेच्च नरो नागबलो भवेत् ॥ भवेच्छ्रुतिधरो रुद्र पुष्यर्क्षे चैव भक्षणात् ॥ १४ ॥ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये

आचारकाण्डे आयुष्करयोगो॰सप्ताशीत्यधिकशततमोऽध्यायः ॥ १८७ ॥ हरिरुवाच ॥ निर्व्रणः स्यात्पूयहीनो प्रहारो घृतपूरितः ॥ अपामार्गस्य वै मूलं हस्ताभ्याञ्च विमर्दितम् ॥ तद्रसेन प्रहारस्य रक्तस्रावो न पूरणात् ॥१॥ रुद्र लाङ्गलिकामूलं चेक्षुदर्भस्तथैव च ॥ तेन व्रणमुखं लिप्तं शल्यं निःसरति व्रणात् ॥ चिरकालप्रविष्टोऽपि तेन मार्गेण शङ्कर ॥ २ ॥ बालमूलं मेषशृङ्गीमूलं वा वारिघर्षितम् ॥ तेन लिप्तं चिरं जातं व्रणं नाड्याः प्रशाम्यति ॥ ३ ॥ जग्धं माहिषदध्ना च युक्तं कोद्रवभक्तकम् ॥ हिङ्गुमूलस्य वै चूर्णं दत्तं नाडीव्रणापहम् ॥ ४ ॥ ब्रह्मयष्टिफलं पिष्टं वारिणा तेन लेपितम् ॥ तेन घृष्टं रक्तदोषः प्रणश्यति न संशयः ॥ ५ ॥ यवभस्म विडङ्गञ्च गन्धपाषाणमेव च ॥ शुण्ठिरेषाञ्चैव चूर्णं भावितं रुधिरेण वै ॥ ६ ॥ कृकलासस्य तल्लिप्तं विद्रधिं नाशयेच्छिव ॥ सौभाञ्जनस्य बीजानि त्वतसीमसिना सह ॥ ७ ॥ गौरसर्षपयुक्तानि सर्वाण्येतानि शङ्कर ॥ पिष्टान्यनम्लतक्रेण ग्रन्थिकं नाशयेद्धि वै ॥ ८ ॥ श्वेतापराजितामूलं पिष्टं तण्डुलवारिणा ॥ तेन नस्यप्रदानात्स्याद्भूतवृन्दस्य विद्रवः ॥ ९ ॥ अगस्त्यपुष्पनस्यं वै समरीचं तु शूलहृत् ॥ भुजङ्गचर्म वै हिङ्गु निम्बपत्रं तथा यवाः ॥ गौरसर्षप एभिः स्याल्लेपो भूतहरः शिव ॥ १० ॥ गोरोचना मरीचानि पिप्पली सैन्धवं मधु ॥ अञ्जनं कृतमेभिः स्याद्ग्रहभूतहरं शिव॥११॥ गुग्गुलूलूकपुच्छाभ्यां धूपो ग्रहहरो भवेत् ॥ चातुर्थिकज्वरैर्मुक्तो कृष्णवस्त्रावगुण्ठितः ॥ १२ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे व्रणचि॰ माष्टाशीत्यधिकशततमोऽध्यायः ॥ १८८ ॥

॥ हरिरुवाच ॥ श्वेतापराजितापुष्परसेनाक्ष्णोश्च पूरणे ॥ पटलं नाशमायाति नात्र कार्य्या विचारणा ॥ १ ॥ मूलं गोक्षुरकस्यैव चर्वित्वा नीललोहित ॥ दन्तकीटव्यथा नश्येत्सुरासुरविमर्दन ॥ २ ॥ नारी पुष्पादिने पीत्वा गोक्षीरेणोपवासतः ॥ श्वेतार्कस्य तु वै मूलं तस्यास्तद्गुल्मशूलनुत् ॥ ॥ ३ ॥ श्वेतार्कपुष्पं विधिना गृहीतं पूर्वमन्त्रितम् ॥ ऋतुशुद्धा च ललना कटौ बद्ध्वा प्रसूयते ॥ ४ ॥ हस्तबद्धं पलाशस्य अपामार्गस्य वा हर ॥ मूलं सर्वज्वरहरं भूतप्रेतादिनुद्भवेत् ॥ ५ ॥ पीतं वृश्चिकमूलञ्च प्रातः पर्युषिताम्बुना ॥ सार्द्धं विनाशयेद्दाहज्वरञ्च परमेश्वर ॥ ६ ॥ शिखायाञ्चैव तद्बद्धं भवेदैकाहिकादिनुत् ॥ पीतं पर्युषिताद्भिश्च भवेत्सर्वविषापहृत् ॥ ७ ॥ यस्य लज्जालुकामूलं दीयते च स्वरेतसा ॥ सार्द्धं स वैरं संयाति पुमान्स्त्री वा न संशयः ॥ ८ ॥ पिष्ट्वा गव्यघृतेनैव पाठामूलं पिबेत्तु यः ॥ सर्वं विषं विनश्येच्च नात्र कार्य्या विचारणा ॥ ९ ॥ मूलं पर्युषितोदेन शिरीषस्य यथा तथा ॥ रक्तचित्रकमूलस्य रसस्य भरणाद्धर ॥ कर्णयोः कामलाव्याधिनाशः स्यान्नात्र संशयः ॥ १० ॥ श्वेतकोकिलाक्षमूलं छागीक्षीरेण संयुतम् ॥ त्रिसप्ताहेन वै पीतं क्षयरोगं क्षयं नयेत् ॥ ११ ॥ नारिकेलस्य वै पुष्पं छागक्षीरेण संयुतम् ॥ पिबेच्च त्रिविधस्तस्य

रक्तवातो विनश्यति ॥ १२ ॥ कुर्य्यात्सुदर्शनामूलं माल्येन सुसमाहतम् ॥ कण्ठबद्धं त्र्याहिकादिग्रहभूतविनाशनम् ॥ १३ ॥ पुष्पं धवलगुंजाया गृहीतं मूलमेव च ॥ मुखे तु निहितं रुद्र हरेन्नानाविषं बहु ॥१४॥ हस्ते बद्धं कांडयुक्तं कंठे बद्धं ग्रहादिहृत् ॥ कृष्णायान्तु चतुर्दश्यां कटिबद्धं सम्माहृतम् ॥ सिंहादिश्वापदाद्भीतिं हरेच्च नीललोहित ॥ १५ ॥ विष्णुक्रान्तामूलमीश कर्णबद्धन्तु धारयेत् ॥ पट्टसूत्रेण भूतेश मकरादिभयं न वै ॥ १६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकोननवत्यधिकशततमोऽध्यायः ॥१८९॥ हरिरुवाच ॥ अपराजिताया मूलञ्च गोमूत्रेण समन्वितम् ॥ पीतश्चाशु हरत्येव गण्डमालां न संशयः ॥ १ ॥ अथेन्द्रवारुणीमूलं विधिना पीतमीश्वर ॥ जिंगिण्यैरण्डकं रुद्र शुक्रशिम्ब्या समन्वितम् ॥ शीतोदकञ्च तन्न्यस्तं बाहुग्रीवाव्यथां हरेत् ॥ २ ॥ माहिषं नवनीतञ्च अश्वगन्धा च पिप्पली ॥ वचा कुष्ठद्वयं लेपो लिंगस्त्रोतस्तनार्त्तिहृत् ॥ ३ ॥ कुष्ठनागबलाचूर्णं नवनीतसमन्वितम् ॥ तल्लेपो युवतीनाञ्च कुर्य्याद्वृत्तोजकौ शुभौ ॥ ४ ॥ इन्द्रवारुणिकामूलं यस्य नाम्ना सुदूरतः ॥ निःक्षिप्यते समुत्पाट्य तस्य प्लीहा विनश्यति ॥ ५ ॥ पुनर्नवायाः शुक्लाया मूलं तण्डुलवारिणा ॥ पीतं विद्रधिनुत्स्याच्च नात्र कार्य्या विचारणा ॥ ६ ॥ कदलीदलक्षारन्तु पानीयेन प्रसाधितम् ॥ तस्यादनाद्विनश्यन्ति उदरव्याधयोऽखिलाः ॥ ७ ॥ कदल्या मूलमादाय गुडाज्येन समन्वितम् ॥ अग्निना साधितं जग्धमुदरस्थक्रिमीन्हरेत् ॥ ८ ॥ नित्यं निम्बदलानाञ्च चूर्णमामलकस्य च ॥ प्रत्यूषे भक्षयेच्चैव तस्य कुष्ठं विनश्यति ॥ ९ ॥ हरितकीविडंगञ्च हरिद्रा सितसर्षपाः ॥ सोमराजस्य मूलानि करञ्जस्य च सैन्धवम् ॥ गोमूत्रपिष्टान्येतानि कुष्ठरोगहराणि वै ॥ १० ॥ एकश्च त्रिफलाभागस्तथा भागद्वयं शिवा ॥ सोमराजस्य बीजानां जग्धं पथ्येन दद्रुनुत् ॥ ११ ॥ अम्लतक्रं सगोमूत्रं कथितं लवणान्वितम् ॥ कांस्यघृष्टं खरं लेपात्कुष्ठदद्रुविनाशनम् ॥ १२ ॥ हरिद्रा हरितालञ्च दूर्वागोमूत्रसैन्धवम् ॥ अयं लेपो हन्ति दद्रुं पामानं च गरं तथा ॥ १३ ॥ सोमराजस्य बीजानि नवनीतयुतानि च ॥ मधुनास्वादितानि स्युः शुक्लकुष्ठहराणि वै ॥ तक्रान्नपानतो रुद्र नात्र कार्य्या विचारणा ॥ १४ ॥ श्वेतापराजितामूलं वर्त्तितं चास्य वारिणा ॥ तल्लेपो रुद्र मासेन शुक्लकुष्ठविनाशनः ॥ १५ ॥ माहिषं नवनीतञ्च सिन्दूरं समरीचकम् ॥ पामा विलेपनान्नश्येद्धु नामा वृषभध्वज ॥ १६ ॥ विशुष्कगाम्भारीमूलं पक्वं क्षीरेण संयुतम् ॥ भक्षितं शुक्लपित्तस्य विनाशकरमीश्वर ॥ १७ ॥ मूलकस्य तु बीजानि ह्यपामार्गरसेन वै ॥ पिष्टानि तेन लेपेन सिध्मकं रुद्र नश्यति ॥ १८ ॥ कदलीक्षारसंयुक्तहरिद्रा सिध्मकापहा ॥ रम्भापामार्गयोः क्षार एरण्डेन विमिश्रितः ॥ तदभ्यङ्गान्महादेव !सद्यः !सिध्म विनश्यति ॥ १९ ॥ कूष्मांडनालक्षारश्च सगोमूत्रश्च तत्त्वतः ॥ जलपिष्टा हरिद्रा च सिद्धा मन्दानलेन

हि ॥ २० ॥ माहिषेण पुरीषेण वेष्टिता वृषभध्वज ॥ अस्या उद्वर्त्तनं कुर्य्यादंगसौष्ठवमीश्वर ॥ २१ ॥ तिलसर्षपसंयुक्तं हरिद्राद्वयकुष्ठकम् ॥ तेनोद्व र्त्तितदेहः स्याद्दुर्गन्धः सुरभिः पुमान् ॥ २२ ॥ मनोहरश्चानुदिनं दूर्वाणां काकजंघाया ॥ अर्जुनस्य तु पुष्पाणि जम्बूपत्रयुतानि च ॥ सलोध्राणि च तल्लेपो देहदुर्गन्धतां हरेत् ॥ २३ ॥ युक्तं लोध्रभवैर्नीरैश्चूर्णन्तु कनकस्य च ॥ तेनोद्वर्त्तितदेहस्य न स्याद्ग्रीष्मप्रबाधिका ॥ २४ ॥ दुग्धेनोषसि सेक श्च घर्मदोषश्च नश्यति ॥ काकजंघोद्वर्त्तनन्तु ह्यंगरागकरं भवेत् ॥ २५ ॥ मधुयष्टी शर्करा च वासकस्य रसो मधु ॥ एतत्पीतं रक्तपित्तकामलापाण्डु रोगनुत् ॥ २६ ॥ रक्तपित्तं हरेत्पीतो वासकस्य रसो मधु ॥ प्रातः काले तोयपानात्पीनसं दारुणं हरेत् ॥ २७ ॥ बिभीतकस्य वै चूर्णं पिप्पल्याः सैन्धवस्य च ॥ पीतं सकांजिकं हन्ति स्वरभेदं महेश्वर ॥ २८ ॥ चूर्णमामलकं सेव्यं पीतं गव्यपयोऽन्वितम् ॥ मनःशिला बलामूलं कोलपण च गुग्गुलुः ॥ २९ ॥ जातिपत्रं कोलपत्रं तथा चैव मनःशिला ॥ एभिश्चैव कृता वर्त्तिर्वदर्य्यग्नौ महेश्वर ॥ धूमपानं कासहरं नात्र कार्य्या विचारणा ॥ ३० ॥ त्रिफलापिप्पलीचूर्णं भक्षितं मधुना युतम् ॥ भोजनादौ हि समधु पिपासाज्व(त्व)रितं हरेत ॥ ३१ ॥ बिल्वमूलश्च समधु गुडूचीक्वथितं जलम् ॥ पीतं हरेच्च त्रिविधं छर्दिं नैवात्र संशयः ॥ पीता दूर्वा छर्दिनुत्स्यात्पिष्टा तण्डुलवारिणा ॥ ३२ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे नवत्यधिक शततमोऽध्यायः ॥ १९० ॥ हरिरुवाच ॥ पुनर्नवाया मूलञ्च श्वेतं पुष्ये समाहृतम् ॥ वारि पीतं तस्य पार्श्वे भवनेषु न पन्नगाः ॥ १ ॥ तार्क्ष्यमूर्त्ति र्वहेद्यो वै भल्लूकदन्तनिर्मिताम् ॥ स पन्नगैर्न दृश्येत यावज्जीवं वृषध्वज ॥ २ ॥ पिबेच्छल्मलिमूलं यः पुष्यर्क्षे रुद्र वारिणा ॥ तस्मिन्नपा स्तदशना नागाः स्युर्नात्र संशयः ॥ ३ ॥ पुष्ये लज्जालुकामूले हस्तबद्धे तु पन्नगान् ॥ गृह्णीयाल्लेपतो वापि नात्र कार्य्या विचारणा ॥ ४ ॥ पुष्ये श्वेतार्कमूलन्तु पीतं शीतेन वारिणा ॥ नश्येत्तु दंशकविषं करवीरादिजं विषम् ॥ ५ ॥ महाकालस्य वै मूलं पिष्टं तत्कांजिकेन वै ॥ वोड्राणां डुण्डुभा नां च तल्लेपो हरते विषम् ॥ ६ ॥ तण्डुलीयकमूलं च पिष्टं तण्डुलवारिणा ॥ घृतेन सह पीतन्तु हरेत्सर्वविषाणि च ॥ ७ ॥ नीलीलज्जालुकामूलं पिष्टं तण्डुलवारिणा ॥ पीतं तद्दंशकविषं नश्येदेकेन वोभयोः ॥ ८ ॥ कूष्माण्डकस्य स्वरसः सगुडः सहशर्करः ॥ पीतः सदुग्धो हन्याच्च दंशकस्य विषं च वै ॥ ९ ॥ तथा कोद्रवमूलस्य मोहस्य हर एव च ॥ यष्टीमधुसमायुक्ता तथा पीता च शर्करा ॥ १० ॥ सदुग्धा च त्रिरात्रेण मूषकानां विषं हरेत् ॥ चुलुकत्रयपानाच्च वारिणः शीतलस्य वै ॥ ११ ॥ ताम्बूलदग्धमुखस्य लालास्रावो विनश्यति ॥ घृतं सशर्करं पीत्वा मद्यपानमदो न वै ॥ १२ ॥ कृष्णांकोलस्य मूलेन पीतं सुक्वथितं जलम् ॥ ततो नश्येद्गरविषं त्रिरात्रेण महेश्वर ॥ १३ ॥ उष्णं गव्यघृतं चैव सैन्धवेन समन्वितम् ॥

नाशयेत्तन्महादेव वेदनां वृश्चिकोद्भवाम् ॥ १४ ॥ कुसुभं कंकुमश्चैव हरितालं मनःशिला ॥ करंजं पिषितं चैव ह्यर्कमूलं च शंकर ॥ १५ ॥ विषं नृणां विनश्येत्तु एतेषां भक्षणाच्छिव ॥ दीपतैलप्रदानाच्च दंशैराकीटजैः शिव ॥ खर्जूरकविषं नश्येत्तदा वै नात्र संशयः ॥ १६ ॥ दंशस्थानं वृश्चिकस्य शुण्ठी तगरसंयुता ॥ नश्येन्मधुमाक्षिकाया एतेषां लेपतो विषम् ॥ १७ ॥ शतपुष्पा सैन्धवश्च साज्यं वा तेन लेपयेत् ॥ शिरीषस्य तु बीजं वै सिद्ध क्षीरेण घर्षितम् ॥ १८ ॥ तल्लेपेन महादेव नश्येत्कुक्कुरजं विषम् ॥ ज्वलिताग्निर्वारिसेको तथा दर्दुरजं विषम् ॥ १९ ॥ धत्तूरकरसोन्मिश्रं क्षीराद्यगुडपानतः ॥ शूनां विषं विनश्येत्तु शशांकांकितशेखर ॥ २० ॥ वटनिम्बशमीनाञ्च वल्कलैः क्वथितं जलम् ॥ तत्सेकान्मुखदन्तानां नश्येद्वै विषवेदना ॥ २१ ॥ लेपनाद्देवदारोश्च गैरिकस्य च लेपनात् ॥ नागेश्वरो हरिद्रे द्वे तथा मञ्जिष्ठका हर ॥ एभिर्लेपाद्विनश्येत्तु लूताविषमुमापते ॥ २२ ॥ करञ्जस्य तु बीजानि वरुणच्छदमेव च ॥ तिलाश्च सर्षपा हन्युर्विषं वै नात्र संशयः ॥ २३ ॥ घृतं कुमारीपत्रं वै दत्तं सलवणं हर ॥ तुरंगमशरीराणां कण्डूर्नश्येद्दशाहतः ॥२४॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकनवत्यधिकशततमोऽध्यायः ॥१९१॥

हरिरुवाच ॥ चित्रकस्याष्टभागाश्च शूरणस्य च षोडश ॥ शुण्ठ्या भागाश्च चत्वारो मरिचानां द्वयं तथा ॥ १ ॥ त्रितयं पिप्पलीमूलं विडङ्गानां चतुष्टयम् ॥ अष्टौ मुशलिकाभागास्त्रिफलायाश्चतुष्टयम् ॥ द्विगुणेन गुडेनैषां मोदकानिह कारयेत् ॥ २ ॥ तद्भक्षणमजीर्णं हि पाण्डुरोगश्च कामलम् ॥ अतीसारांश्च मन्दाग्निं प्लीहाश्चैव निवारयेत् ॥ ३ ॥ बिल्वाग्निमन्थः श्योनाकपाटलापारिभद्रकम् ॥ प्रसारण्यश्वगन्धा च बृहती कण्टकारिका ॥ ४ ॥ बला चातिबला रास्ना श्वदंष्ट्रा च पुनर्नवा ॥ एरंडः शारिवा पर्णी गुडूची कपिकच्छुका ॥ ५ ॥ एषां दशपलान्भागान्क्वाथयेत्सलिलेऽमले ॥ तेन पादावशेषेण तैलपात्रे विपाचयेत् ॥ ६ ॥ आजं वा यदि गव्यं क्षीरं दत्त्वा चतुर्गुणम् ॥ शतावरीं सैन्धवञ्च तैलतुल्यं प्रदापयेत् ॥ ७ ॥ द्रव्याणि यानि पेष्याणि तानि वक्ष्यामि तच्छृणु ॥ शतपुष्पा देवदारुर्बला पर्णी वचागुरु ॥ ८ ॥ कुष्ठं मांसी सैन्धवञ्च पलमेकं पुनर्नवा ॥ पाने नस्ये तथाभ्यङ्गे तैलमेतत्प्रदापयेत् ॥ ९ ॥ हृच्छूलं पार्श्वशूलञ्च गण्डमालाञ्च नाशयेत् ॥ अपस्मारं वातरक्तं वपुष्मांश्च पुमान्भवेत् ॥ १० ॥ गर्भमश्वतरी विन्द्यात्किं पुनर्मानुषी हर ॥ अश्वानां वातभग्नानां कुञ्जराणां नृणां तथा ॥ तैलमेतत्प्रयोक्तव्यं सर्ववातविकारिणाम् ॥ ११ ॥ हिङ्गुतुम्बुरुशुण्ठीभिः सिद्धं तैलन्तु सार्षपम् ॥ एतद्धि पूरणं श्रेष्ठं कर्णशूलापहं परम् ॥ १२ ॥ शुष्कमूलकशुण्ठीनां क्षारो हिंगुलनागरम् ॥ तक्रं चतुर्गुणं दद्यात्तैलमेतद्विपाच

१ इडार्षः ।

येत् ॥ १३ ॥ बाधिर्य्यं कर्णशूलञ्च पूयस्रावश्च कर्णयोः ॥ क्रिमयश्च विनश्यन्ति तैलस्यास्य प्रपूरणात् ॥ १४ ॥ शुष्कमूलकशुण्ठीनां क्षारो हिंगुल नागरम् ॥ शतपुष्पा वचा कुष्ठं दारुशिग्रुरसाञ्जनम् ॥ १५ ॥ सौवर्चलं यवक्षारं सामुद्रं सैन्धवं तथा ॥ ग्रन्थिकं विडमुस्तं च मधु शुक्तं चतुर्गुणम् ॥ १६ ॥ मातुलुङ्गरसश्चैव कदलीरस एव च ॥ तैलमेभिर्विपक्तव्यं कर्णशूलापहं परम् ॥ १७ ॥ बाधिर्य्यं कर्णनादश्च पूयस्रावश्च दारुणम् ॥ पूरणाद स्य तैलस्य क्रिमयः कर्णयोर्हर ॥ १८ ॥ सद्यो विनाशमायान्ति शशाङ्ककृतशेखर ॥ क्षारतैलमिदं श्रेष्ठं मुखदन्तमलापहम् ॥ १९ ॥ चन्दनं कुंकुमं मांसी कर्पूरं जातिपत्रिका ॥ जातीकङ्कोलपूगानां लवङ्गस्य फलानि च ॥ २० ॥ अगुरूणि च कस्तूरी कुष्ठं तगरपादिका ॥ गोरोचना प्रियङ्गुश्च ब ला चैव तथा नखी ॥ २१ ॥ सरलं सप्तपर्णं च लाक्षा चामलकी तथा ॥ तथा तु पद्मकं चैव ह्येतैस्तैलं प्रसाधयेत् ॥ २२ ॥ प्रस्वेदमलदुर्गन्धकंडू कुष्ठहरं परम् ॥ गच्छति स्त्रीशतं रुद्र बन्ध्यापि लभते सुतम् ॥ २३ ॥ यवानी चित्रकं धान्यं त्र्यूषणं जीरकं तथा ॥ सौवर्चलं विडगंच पिप्पलीमूल राजिकम् ॥ २४ ॥ एभिः पचेद्घृतप्रस्थं जलप्रस्थाष्टसंयुतम् ॥ तथाऽर्शोगुल्मश्वयथुं हन्ति वह्निं करोति वै ॥२५॥ मरिचं त्रिवृतं कुष्ठं हरितालं मनः शिला ॥ देवदारु हरिद्रे द्वे कुष्ठं मांसी च चन्दनम् ॥ २६ ॥ विशाला करवीरश्च अर्कक्षीरं शकृद्रसः ॥ एषाञ्च[1] कार्षिको भागो विषस्यार्द्धपलं भवेत् ॥ २७ ॥ प्रस्थं कटुकतैलस्य गोमूत्रेऽष्टगुणे पचेत् ॥ मृत्पात्रे लोहपात्रे वा शनैर्मृद्वग्निना पचेत् ॥ २८ ॥ पामा विचर्चिका चैव दद्रुर्विस्फोटकानि च ॥ अभ्यंगेन प्रणश्यन्ति कोमलत्वञ्च जायते ॥२९॥ प्रभूतान्यपि श्वित्राणि तैलेनानेन मर्दयेत्॥चिरोत्थितमपि श्वित्रं विनष्टं तत्क्षणाद्भवेत्॥३०॥ पटोलपत्रं कटुका मञ्जिष्ठा शारिवा निशा ॥ जातीशमीनिम्बपत्रं मधुकं क्वथितं घृतम् ॥ ३१ ॥ एभिर्लेपात्स्युररुजो व्रणा विस्राविणः शिव ॥ शंख पुष्पी वचा सोमो ब्राह्मी ब्रह्मसुवर्चलाः ॥३२॥ अभया च गुडूची च आटरूषकवाकुची ॥ एतैरक्षसमैर्भागैर्घृतप्रस्थं विपाचयेत् ॥ ३३ ॥ कण्टकार्य्या रसप्रस्थं क्षीरप्रस्थसमन्वितम् ॥ एतद्ब्राह्मीघृतं नाम स्मृतिमेधाकरं परम् ॥ ३४ ॥ अग्निमन्थो वचा वासा पिप्पली मधु सैन्धवम् ॥ सप्तरात्रप्रयोगेण किन्नरैरिव गीयते ॥३५॥ अपामार्गः गुडूची च वचा कुष्ठं शतावरी ॥ शंखपुष्पाभया साज्यं विडङ्गं भक्षितं समम् ॥ त्रिभिर्दिनैर्नरं कुर्य्याद्ग्रन्थाष्टशत धारिणम् ॥ ३६ ॥ अद्भिर्वा पयसाज्येन मासमेकन्तु सेविता ॥ वचा कुर्य्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम् ॥ ३७ ॥ चन्द्रसूर्य्यग्रहे पीतं पलमेकं पयोऽ न्वितम् ॥ वचायास्तत्क्षणं कुर्य्यान्महाप्रज्ञायुतं नरम् ॥ ३८ ॥ भूनिम्बनिम्बत्रिफलापर्पटैश्च शृतं जलम् ॥ पटोलीमुस्तकाभ्याञ्च वासकेन च नाशये

[1] एषामिति शेषः ।

त् ॥ ३९ ॥ विस्फोटकानि रक्तश्च नात्र कार्य्या विचारणा ॥ कतकस्य फलं शंखं सैन्धवं त्र्यूषणं वचा ॥ ४० ॥ फेनी रसाञ्जनं क्षौद्रं विडङ्गानि म
नःशिला ॥ एषां वर्त्तिर्हन्ति काचं तिमिरं पटलं तथा ॥ ४१ ॥ प्रस्थद्वयं माषकस्य क्काथश्च द्रोणमम्भसाम् ॥ चतुर्भागावशेषेण तैलप्रस्थं विपाचयेत
॥ ४२ ॥ काञ्जिकस्याढकं दत्त्वा पिष्टान्येतानि दापयेत् ॥ पुनर्नवा गोक्षुरकं सैन्धवं त्र्यूषणं वचा ॥४३॥ लवणं सुरदारुश्च मञ्जिष्ठा कण्टकारिका ॥
नस्यात्पानाद्धरत्येव कर्णशूलं सुदारुणम् ॥ ४४ ॥ व्याधिर्य्यै सर्वरोगांश्च ह्यभ्यंगाच्च महेश्वर ॥ पलद्वयं सैन्धवञ्च शुण्ठी चित्रकपंचकम् ॥ ४५ ॥
सौवीरपंचप्रस्थं च तैलप्रस्थं पचेत्ततः ॥ असृग्दरस्वरप्लीहासर्ववातविकारनुत् ॥ ४६ ॥ उदुम्बरं वटं प्लक्षं जम्बूद्वयमथार्जुनम् ॥ पिप्पली च
कदम्बश्च पलाशं लोध्रतिन्दुकम् ॥ ४७ ॥ मधूकमाम्रसर्ज्जश्च बदरं पद्मकेशरम् ॥ शिरीषबीजङ्कतकमेतत्क्काथेन साधितम् ॥ तैलं हन्ति
व्रणाँल्लेपाच्चिरकालभवानपि ॥ ४८ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकांडे द्विनवत्यधिक शततमोऽध्यायः ॥ १९२ ॥
॥ हरिरुवाच ॥ पलाण्डुजीरके कुष्ठमश्वगन्धाजमोदकम् ॥ वचा त्रिकटुकञ्चैव लवणं चूर्णमुत्तमम् ॥ १ ॥ ब्राह्मीरसैर्भावितश्च सर्पिर्मधुसमान्वितम् ॥
सप्ताहं भक्षितं कुर्य्यान्निर्मलाञ्च मतिं पराम् ॥ २ ॥ सिद्धार्थकं वचा हिङ्गु करञ्जं देवदारु च ॥ मञ्जिष्ठा त्रिफला विश्वं शिरीषो रजनीद्वयम् ॥ ३ ॥
प्रियङ्गुनिम्बत्रिकटु गोमूत्रेणैव घर्षितम् ॥ नस्यमालेपनञ्चैव तथा चोद्वर्त्तनं हितम् ॥ ४ ॥ अपस्मारविषोन्मादशोषालक्ष्मीज्वरापहम् ॥ भूतेभ्यश्च
भयं हन्ति राजद्वारेषु योजनात् ॥ ५ ॥ निम्बं कुष्ठं हरिद्रे द्वे शिग्रु सर्षपजं तथा ॥ देवदारु पटोलञ्च धान्यं तक्रेण घर्षितम् ॥ ६ ॥ देहं तैलाक्त
गात्रं वै नयेदुद्वर्त्तनेन च ॥ पामाः कुष्ठानि नश्येयुः कण्डूं हन्ति च निश्चितम् ॥ ७ ॥ सामुद्रं सैन्धवं क्षारो राजिका लवणं विडम् ॥ कटुलोहरजश्चैवं
त्रिवृत्सूरणकं समम् ॥ दधिगोमूत्रपयसा मन्दपावकपाचितम् ॥ ८ ॥ बलाग्निवर्धकं चूर्णं पिबेदुष्णेन वारिणा ॥ जीर्णेऽजीर्णे तु भुञ्जीत मांस्यादिघृतमु
त्तमम् ॥ ९ ॥ नाभिशूलं मूत्रशूलं गुल्मप्लीहभवञ्च यत् ॥ सर्वशूलहरं चूर्णं जठरानलदीपनम् ॥ परिणामसमुत्थस्य शूलस्य च हितं परम् ॥ १० ॥
अभयामलकं द्राक्षा पिप्पली कण्टकारिका ॥ शृङ्गी पुनर्नवा शुण्ठी जग्धा कासं निहन्ति वै ॥ ११ ॥ अभयामलकं द्राक्षा पाठा चैव बिभीतकम् ॥
शर्करया समं चैव जग्धं ज्वरहरं भवेत् ॥ १२ ॥ त्रिफला बदरं द्राक्षा पिप्पली च विरेककृत् ॥ हरीतकी सोष्णानीरलवणञ्च विरेककृत् ॥ १३ ॥
कूर्ममत्स्याश्वमहिषगोशृगालाश्च वानराः ॥ विडालबर्हिकाकाश्च वराहोलूककुक्कुटाः ॥ १४ ॥ हंस एषाञ्च विण्मूत्रं मांसं वा रोम शोणितम् ॥ धूपं
दद्याज्ज्वरार्तेभ्य उन्मत्तेभ्यश्च शान्तये ॥१५॥ एतान्यौषधजातानि कथितानि उमापते ॥ निघ्नन्ति तांश्च रोगांश्च वृक्षमिन्द्राशनिर्यथा ॥१६॥ औषधं

भगवान्विष्णुः संस्मृतो रोगनुद्भवेत् ॥ ध्यातोऽर्चितः स्तुतो वापि नात्र कार्य्या विचारणा ॥ १७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमां
शाख्ये आचारकाण्डे त्रिनवत्यधिकशततमोऽध्यायः ॥ १९३ ॥ ॥ हरिरुवाच ॥ सर्वव्याधिहरं वक्ष्ये वैष्णवं कवचं शुभम् ॥ येन रक्षा कृता शम्भो
दैत्यान्क्षपयतः पुरा ॥ १ ॥ प्रणम्य देवमीशानमजं नित्यमनामयम् ॥ देवं सर्वेश्वरं विष्णुं सर्वव्यापिनमव्ययम् ॥ २ ॥ बध्नाम्यहं प्रतिसरं नमस्कृत्य
जनार्दनम् ॥ अमोघाप्रतिमं सर्वं सर्वदुःखनिवारणम् ॥ ३ ॥ विष्णुर्मामग्रतः पातु कृष्णो रक्षतु पृष्ठतः ॥ हरिर्मे रक्षतु शिरो हृदयञ्च जनार्दनः ॥ ४ ॥
मनो मम हृषीकेशो जिह्वां रक्षतु केशवः ॥ पातु नेत्रे वासुदेवः श्रोत्रे सङ्कर्षणो विभुः ॥ ५ ॥ प्रद्युम्नः पातु मे घ्राणमनिरुद्धस्तु चर्म च ॥ वनमाली
गलस्यान्तं श्रीवत्सो रक्षतामधः ॥ ६ ॥ पार्श्वं रक्षतु मे चक्रं वामं दैत्यनिवारणम् ॥ दक्षिणन्तु गदा देवी सर्वासुरनिवारिणी ॥ ७ ॥ उदरं मुसलं
पातु पृष्ठं मे पातु लाङ्गलम् ॥ ऊर्द्ध्वं रक्षतु मे शार्ङ्गं जङ्घे रक्षतु नन्दकः ॥ ८ ॥ पार्ष्णी रक्षतु शङ्खश्च पद्मं मे चरणावुभौ ॥ सर्वकार्य्यार्थसिद्ध्यर्थं
पातु मां गरुडः सदा ॥ ९ ॥ वराहो रक्षतु जले विषमेषु च वामनः ॥ अटव्यां नरसिंहश्च सर्वतः पातु केशवः ॥ १० ॥ हिरण्यगर्भो भग
वान्हिरण्यं मे प्रयच्छतु ॥ सांख्याचार्य्यस्तु कपिलो धातुसाम्यं करोतु मे ॥ ११ ॥ श्वेतद्वीपनिवासी च श्वेतद्वीपं नयत्वजः ॥ सर्वान्सूदयतां शत्रू
न्मधुकैटभमर्दनः ॥१२॥ सदाकर्षतु विष्णुश्च किल्बिषं मम विग्रहात् ॥ हंसो मत्स्यस्तथा कूर्मः पातु मां सर्वतोदिशम् ॥ १३ ॥ त्रिविक्रमस्तु मे देवः
सर्वपापानि कृन्ततु ॥ तथा नारायणो देवो बुद्धिं पालयतां मम ॥ १४ ॥ शेषो मे निर्मलं ज्ञानं करोत्वज्ञाननाशनम् ॥ वडवामुखो नाशयतां कल्मषं
यत्कृतं मया ॥ १५ ॥ पद्भ्यां ददातु परमं सुखं मूर्ध्नि मम प्रभुः ॥ दत्तात्रेयः प्रकुरुतां सपुत्रपशुबान्धवम् ॥ १६ ॥ सर्वानरीन्नाशयतु रामः पर
शुना मम ॥ रक्षोघ्नस्तु दाशरथिः पातु नित्यं महाभुजः ॥ १७ ॥ शत्रून्हलेन मे हन्याद्रामो यादवनन्दनः ॥ प्रलम्बकेशिचाणूरपूतनाकंसनाशनः ॥
कृष्णस्य यो बालभावः स मे कामान्प्रयच्छतु ॥ १८ ॥ अन्धकारतमोघोरं पुरुषं कृष्णपिङ्गलम् ॥ पश्यामि भयसन्त्रस्तः पाशहस्तमिवान्त
कम् ॥ १९ ॥ ततोऽहं पुण्डरीकाक्षमच्युतं शरणं गतः ॥ धन्योऽहं निर्भयो नित्यं यस्य मे भगवान्हरिः ॥ २० ॥ ध्यात्वा नारायणं देवं
सर्वोपद्रवनाशनम् ॥ वैष्णवं कवचं बद्धा विचरामि महीतले ॥ २१ ॥ अप्रधृष्योऽस्मि भूतानां सर्वदेवमयो ह्यहम् ॥ स्मरणाद्देवदेवस्य विष्णो
रमिततेजसः ॥ २२ ॥ सिद्धिर्भवतु मे नित्यं यथामन्त्रमुदाहृतम् ॥ यो मां पश्यति चक्षुर्भ्यां यञ्च पश्यामि चक्षुषा ॥ सर्वेषां पापदुष्टानां
विष्णुर्बध्नातु चक्षुषी ॥ २३ ॥ वासुदेवस्य यच्चक्रं तस्य चक्रस्य ये त्वराः ॥ ते हि च्छिन्दन्तु पापान्मे मम हिंसन्तु हिंसकान् ॥ २४ ॥

राक्षसेषु पिशाचेषु कान्तारेष्वटवीषु च ॥ विवादे राजमार्गेषु द्यूतेषु कलहेषु च ॥ २५ ॥ नदीसन्तारणे घोरे संप्राप्ते प्राणसंशये ॥ अग्निचौरनि
पातेषु सर्वग्रहनिवारणे ॥ २६ ॥ विद्युत्सर्पविषोद्वेगे रोगे वै विघ्नसङ्कटे ॥ जप्यमेतज्जपेन्नित्यं शरीरे भयमागते ॥ २७ ॥ अयं भगवतो मन्त्रो
मन्त्राणां परमो महान् ॥ विख्यातं कवचं गुह्यं सर्वपापप्रणाशनम् ॥ स्वमायाकृतिनिर्माणं कल्पान्तगहनं महत ॥ २८ ॥ अनाद्यन्त ! जगद्बीज !
पद्मनाभ ! नमोऽस्तु ते ॥ ओं कालाय स्वाहा । ओं कालपुरुषाय स्वाहा । ओं कृष्णाय स्वाहा । ओं कृष्णरूपाय स्वाहा । ओं चण्डाय स्वाहा ।
ॐ चण्डरूपाय स्वाहा । ॐ प्रचण्डाय स्वाहा । ॐ प्रचण्डरूपाय स्वाहा । ॐ सर्वाय स्वाहा । ॐ सर्वरूपाय स्वाहा । ॐ नमो भुवनेशाय
त्रिलोकधात्रे इह विटि सिविटि सिविटि स्वाहा । ॐ नमः अयोखेतये ये ये संज्ञापय दैत्यदानवयक्षराक्षसभूतपिशाचकूष्माण्डान्तापस्मारकच्छर्दन
दुर्द्धराणामेकाहिकव्याहिकत्र्याहिकचातुर्थिकमौहूर्त्तिकदिनज्वररात्रिज्वरसन्ध्याज्वरसर्वज्वरादीनां लूताकीटकण्टकपूतनाभुजङ्गस्थावरजङ्गमविषादी
नामिदं शरीरं मम पथ्यं त्वं कुरु स्फुट स्फुट प्रकोट लफट विकटदंष्ट्र पूर्वतो रक्षतु ॐ हे हे हे हे दिनकरसहस्रकालसमाहतो जय पश्चिमतो रक्ष
ॐ निवि निवि प्रदीप्तज्वलनज्वालाकार महाकपिल उत्तरतो रक्ष ॐ विलि विलि मिलि मिलि गरुडि गरुडि गौरीगान्धारीविषमोहविषमविषमां
मोहयतु स्वाहा दक्षिणतो रक्ष मां पश्य सर्वभूतभयोपद्रवेभ्यो रक्ष रक्ष जय जय विजय तेन हीयते रिपुत्रासाहंकृतवाद्यतो भयनुदभयतोऽभयं दिशतु
च्युतं ॥ तदुदरमखिलं विशन्तु युगपरिवर्त्तसहस्रसंख्येयोऽस्तंहंसमिव प्रविशन्ति रश्मयः ॥ वासुदेवसङ्कर्षणप्रद्युम्नाश्चानिरुद्धकः ॥ सर्वज्वरान्मम
घ्नन्तु विष्णुर्नारायणो हरिः ॥ २९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैष्णवकवचकथनं नाम चतुर्नवत्युत्तर
शततमोऽध्यायः ॥ १९४ ॥ हरिरुवाच ॥ सर्वकामप्रदां विद्यां सप्तरात्रेण तां शृणु ॥ नमस्तुभ्यं भगवते वासुदेवाय धीमहि ॥ १ ॥ प्रद्युम्नायानिरु
द्धाय नमः सङ्कर्षणाय च ॥ नमो विज्ञानमात्राय परमानन्दमूर्त्तये ॥ २ ॥ आत्मारामाय शान्ताय निवृत्तद्वैतदृष्टये ॥ त्वद्रूपाणि च सर्वाणि तस्मा
त्तुभ्यं नमो नमः ॥ ३ ॥ हृषीकेशाय महते नमस्तेऽनन्तमूर्त्तये ॥ यस्मिन्निदं यतश्चैतत्तिष्ठत्यग्रेऽपि जायते ॥४॥ मृन्मयीं वहसि क्षोणीं तस्मै ते ब्रह्मणे
नमः ॥ यन्न स्पृशन्ति न विदुः मनोबुद्धीन्द्रियासवः ॥ अन्तर्बहिस्त्वं चरसि व्योमतुल्यं नमाम्यहम् ॥ ५ ॥ ॐ नमो भगवते महापुरुषाय महाभू
तपतये सकलसत्त्वभाविव्रीडनिकरकमलरेणूत्पलनिभधर्माख्यविद्यया ? चरणारविन्दयुगल परमेष्ठिन् नमस्ते ॥ अवाप विद्याधरतां चित्रकेतोश्च विद्यया
॥ ६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पञ्चनवत्यधिकशततमोऽध्यायः ॥ १९५ ॥ हरिरुवाच ॥ अवाप जप्त्वा

चेन्द्रत्वं विष्णुधर्माख्यविद्यया ॥ सर्वाञ्छत्रून्विनिर्जित्य ताश्च वक्ष्ये महेश्वर ॥ १ ॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ मुखे शिरस्यानुपूर्व्यमोंकारादीनि विन्यसेत् ॥ २ ॥ नमो नारायणायेति विपर्य्यासमथापि च ॥ करन्यासं ततः कुर्य्याद्द्वादशाक्षरविद्यया ॥ ३ ॥ प्रणवादियकारान्तमंगुल्यंगुष्ठपर्वसु ॥ न्यसेद्धृदग्र ओंकारं मनुं मूर्ध्नि समस्तकम् ॥ ४ ॥ ओंकारन्तु भ्रुवोर्मध्ये शिखानेत्रादिमूर्द्धतः ॥ ॐ विष्णवे इति इमं मन्त्रन्यासमुदीरयेत् ॥ ५ ॥ आत्मानं परमं ध्यायेच्छेषं यच्छक्तिभिर्युतम् ॥ मम रक्षां हरिः कुर्य्यान्मत्स्यमूर्त्तिर्जलेऽवतु ॥ ६ ॥ त्रिविक्रमस्तथाकाशे स्थले रक्षतु वामनः ॥ अटव्यां नरसिंहस्तु रामो रक्षतु पर्वते ॥ ७ ॥ भूमौ रक्षतु वाराहो व्योम्नि नारायणोऽवतु ॥ कर्मबन्धाच्च कपिलो दत्तो रोगाच्च रक्षतु ॥ ८ ॥ हयग्रीवो देवताभ्यः कुमारो मकरध्वजात् ॥ नारदोऽन्यार्चनाद्देवः कूर्मो वै नैर्ऋते सदा ॥ ९ ॥ धन्वन्तरिश्चापथ्याच्च नागः क्रोधवशात्किल ॥ यज्ञो रोगात्समस्ताच्च व्यासोऽज्ञानाच्च रक्षतु ॥ १० ॥ बुद्धः पाषण्डसंघातात्कल्की रक्षतु कल्मषात् ॥ पायान्मध्यन्दिने विष्णुः प्रातर्नारायणोऽवतु ॥ ११ ॥ मधुहा चापराह्णे च सायं रक्षतु माधवः ॥ हृषीकेशः प्रदोषेऽव्यात्प्रत्यूषेऽव्याज्जनार्दनः ॥ १२ ॥ श्रीधरोऽव्यादर्द्धरात्रे पद्मनाभो निशीथके ॥ चक्रकौमोदकीबाणा घ्नन्तु शत्रूंश्च राक्षसान् ॥ १३ ॥ शंखः पद्मं च शत्रुभ्यः शार्ङ्गं वै गरुडस्तथा ॥ बुद्धीन्द्रियमनःप्राणान्पान्तु पार्श्वविभूषणः ॥ १४ ॥ शेषः सर्पस्वरूपश्च सदा सर्वत्र पातु माम् ॥ विदिक्षु दिक्षु च सदा नारसिंहश्च रक्षतु ॥ १५ ॥ एतद्धारयमाणश्च यं यं पश्यति चक्षुषा ॥ स वशी स्याद्द्विपाप्मा च रोगमुक्तो दिवं व्रजेत् ॥ १६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे षण्णवत्यधिकशततमोऽध्यायः ॥ १९६ ॥

धन्वन्तरिरुवाच ॥ गारुडं संप्रवक्ष्यामि गरुडेन ह्युदीरितम् ॥ कश्यपाय सुमित्रेण विषघ्नेन गारुडः ॥ १ ॥ पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ क्षित्यादिष्वेव वर्गाश्च ह्येते वै मण्डलाधिपाः ॥ २ ॥ पञ्चतत्त्वे स्थिता देवाः प्राप्यंते विष्णुसेवकैः ॥ दीर्घस्वरविभिन्नाश्च नपुंसकविवर्जिताः ॥ ३ ॥ सषडङ्गः शिवः प्रोक्तो हृच्छिरश्च शिखा क्रमात् ॥ कवचं नेत्रमस्त्रं स्यान्न्यासः स्वस्थलसंस्थितिः ॥ ४ ॥ सर्वसिद्धिप्रदस्यान्ते कालवह्निर धोऽनिलः ॥ षष्ठस्वरसमायुक्तमर्द्धेन्दुसंयुतं परम् ॥ ५ ॥ परापरविभिन्नाश्च शिवस्योर्द्धाध ईरिताः ॥ रेफेणाङ्गेषु सर्वत्र न्यासं कुर्य्याद्यथाविधि ॥ ६ ॥ हृदि पाणितले देहे कर्णे नेत्रे करोति च ॥ जपात्तु सर्वसिद्धिः स्याच्चतुर्वक्रसमायुताम् ॥ ७ ॥ चतुरश्रां सुविस्तारां पीतवर्णान्तु चिन्तयेत् ॥ पृथिवीं चेन्द्रदैवत्यां मध्ये वरुणमण्डलम् ॥ ८ ॥ मध्ये पद्मं तथायुक्तमर्द्धचन्द्रं सुशीतलम् ॥ इन्द्रनीलद्युतिं सौम्यमथवाग्नेयमण्डलम् ॥ ९ ॥ त्रिकोणं स्वस्तिकैर्युक्तं ज्वालामालानलं स्मरेत् ॥ भिन्नाञ्जननिभाकारं स्ववृत्तं बिन्दुभूषितम् ॥ १० ॥ क्षीरोर्मिसदृशाकारं शुद्धस्फटिकवर्चसम् ॥ प्लावयन्तं जगत्सर्वं व्योमामृतमर्द्धं

स्मरेत् ॥ ११ ॥ वासुकिः शंखपालश्च स्थितौ पार्थिवमण्डले ॥ कर्कोटः पद्मनाभश्च वारुणे तौ व्यवस्थितौ ॥१२॥ आग्नेये चापि कुलिकस्तक्षश्चैव महा
ब्जकौ॥ वायुमण्डलसंस्थौ च पञ्च भूतानि विन्यसेत्॥१३॥अंगुष्ठादिकनिष्ठान्तमनुलोमविलोमतः ॥ पर्वसन्धिषु च न्यस्या जया च विजया तथा ॥१४॥
आस्यादिस्वपुरस्थाने न्यस्याच्छिवषडंगकम् ॥ कनिष्ठादौ हृदादौ च शिखायां करयोर्न्यसेत् ॥ १५ ॥ व्यापकन्तु तत्वपूर्वं क्रमादंगुलिपर्वसु ॥
भूतानाञ्च पुनर्न्यासः शिवांगानि तथैव च ॥ १६ ॥ प्रणवादिनमश्चान्ते नाम्नैव च समन्वितः ॥ सर्वमन्त्रेषु कथितो विधिः स्थापनपूजने ॥ १७ ॥
आद्याक्षरं तन्नाम्नश्च मन्त्रोऽयं परिकीर्त्तितः ॥ अष्टानां नागजातीनां मन्त्रः सान्निध्यकारकः ॥ १८ ॥ ॐ स्वाहा क्रमशश्चैव पञ्चभूतपुरोगतम् ॥
एष साक्षाद्भवेत्तार्क्ष्यः सर्वकर्मप्रसाधकः ॥ १९ ॥ करन्यासं स्वरैः कृत्वा शरीरे तु पुनर्न्यसेत् ॥ ज्वलन्तं चिन्तयेत्प्राणमात्मसंशुद्धिकारकम्॥ २० ॥
बीजन्तु चिन्तयेत्पश्चाद्दर्पान्तममृतात्मकम् ॥ एवञ्चाप्यायनं कृत्वा मूर्ध्नि सञ्चिन्त्य चात्मनः ॥ २१ ॥ पृथिवीं पादयोर्दद्यात्ततकांचनसप्रभाम् ॥
अशेषभुवनाकीर्णां लोकपालसमन्विताम् ॥ २२ ॥ एतां भगवतीं पृथ्वीं स्वदेहे विन्यसेद् बुधः ॥ श्यामवर्णमयं ध्यायेत्पृथिवीद्विगुणं भवेत् ॥ २३ ॥
ज्वालामालाकुलं दीप्तमाब्रह्मभुवनान्तकम् ॥ नाभिग्रीवान्तरे न्यस्य त्रिकोणं मण्डलं रवेः ॥ २४ ॥ भिन्नाञ्जननिभाकारं निखिलं व्याप्य संस्थितम् ॥
आत्ममूर्त्तिस्थितं ध्यायेद्वायव्यं तीक्ष्णमण्डलम् ॥२५॥ शिखोपरि स्थितं दिव्यं शुद्धस्फटिकवर्चसम् ॥ अप्रमाणमहाव्योमव्यापकं चामृतोपमम् ॥२६॥
भूतन्यासं पुरा कृत्वा नागानाञ्च यथाक्रमम् ॥ लकारान्ता बिन्दुयुता मन्त्रा भूतक्रमेण तु ॥ २७ ॥ शिवबीजं ततो दद्यात्ततो ध्यायेच्च मण्डलम् ॥
योयस्य क्रमआख्यातो मण्डलस्य विचक्षणः ॥ तस्य तच्चिन्तयेद्वर्णं कर्मकाले विधानवित् ॥ २८ ॥ पादपक्षैस्तथा चंचत्कृष्णनागैर्विभूषितम् ॥
तार्क्ष्यं ध्यायेत्ततो नित्यं विषे स्थावरजंगमे ॥ २९ ॥ ग्रहभूतपिशाचे च डाकिनीयक्षराक्षसे ॥ नागैर्विवेष्टितं कृत्वा स्वदेहे विन्यसेच्छिवम् ॥ ३० ॥
द्विधा न्यासः समाख्यातो नागानां चैव भूतयोः ॥ एवं ध्यात्वा कर्म कुर्य्यादात्मतत्त्वादिकं क्रमात् ॥३१॥ त्रितत्त्वं प्रथमं दत्त्वा शिवतत्त्वं ततः परम् ॥
यथा देहे तथा देवे अंगुलीनां च पर्वसु ॥ ३२ ॥ देहे न्यासं पुरा कृत्वा ह्यनुलोमविलोमतः ॥ कन्दं नालं तथा पद्मं धर्मं ज्ञानादिमेव च ॥ ३३ ॥
द्वितीयस्वरसम्भिन्नं वर्गांतेन तु पूजयेत् ॥ शौमिति कर्णिकामध्ये मूर्ध्नि रेफेण संयुतम् ॥ ३४ ॥ अकचटतपयशा वर्गाः पूर्वादिके न्यसेत् ॥
पत्रान्तकेसरान्ते तु द्वौ द्वौ पूर्वादिकौ तथा ॥३५॥ केशरे तु स्वरान्न्यस्यादीशांतान्षोडशार्चयेत्॥वामाद्याः शक्तयः प्रोक्तास्त्रितत्त्वन्तु ततो न्यसेत् ॥
॥३६॥ आवाहयेत्ततो मूर्ध्नि शिवमंगं ततः परम् ॥ कर्णिकायां न्यसेद्देवं सांगं तत्र पुरःसरम् ॥ ३७ ॥ पृथिवी पश्चिमे पत्रे आपश्चोत्तरसंस्थिताः ॥

तेजस्तु दक्षिणे पत्रे वायुं पूर्वेण पूजयेत् ॥ ३८ ॥ स्वबीजं मूर्त्तिरूपन्तु प्रागुक्तं परिकल्पयेत् ॥ यं वायुमूलं नैर्ऋत्ये रेफस्त्वनलसंस्थितः ॥ ३९ ॥
वं च त्वीशे सदा पूज्य ॐ हृदिस्थश्च पूजयेत् ॥ तन्मात्रान्भूतमात्रांस्तान्बहिरेव प्रपूजयेत् ॥ ४० ॥ शिवाङ्गानि ततः पश्चाद्ध्यात्वा संपूजयेत्ततः ॥
आग्नेय्यां हृदयं पूज्य शिर ईशानगोचरे ॥ ४१ ॥ नैर्ऋत्ये तु शिखां दद्याद्वायव्यां कवचं न्यसेत् ॥ अस्त्रन्तु वाह्यतो दद्यान्नेत्रमुत्तरसंस्थितम् ॥ ४२ ॥
पत्राग्रे कर्णिकाग्रे तु बीजानि परिपूजयेत् ॥ अनन्तादिकुलीरान्ता अष्टौ नागाः क्रमात्स्थिताः ॥ ४३ ॥ पूर्वादिकक्रमेणैव त्वीशपर्यन्तमेव च ॥
पूजयेच्च सदा मन्त्री विधानेन पृथक्पृथक् ॥ ४४ ॥ हृदि पद्मे विधानेन शिलादौ दत्तमण्डले ॥ एतत्कार्य्यं समुद्दिष्टं नित्यनैमित्तिकेऽपि च ॥ ४५ ॥
आत्मानं चिन्तयेन्नित्यं कामरूपं मनोहरम् ॥ प्लावयन्तं जगत्सर्वं सृष्टिसंहारकारकम् ॥ ४६ ॥ ज्वालामालाभिरुद्दीप्तं आब्रह्मभुवनान्तकम् ॥
दशबाहुं चतुर्वक्त्रं पिङ्गाक्षं शूलपाणिनम् ॥ ४७ ॥ दंष्ट्राकरालमत्युग्रं त्रिनेत्रं शशिशेखरम् ॥ भैरवन्तु स्मरेत्सिद्ध्यै गरुडं सर्वकर्मसु ॥ ४८ ॥
नागानां नाशनार्थाय गरुडं भीमभीषणम् ॥ पादौ पाताल संस्थौ च दिशः पक्षास्तु संश्रिताः ॥ ४९ ॥ सप्त स्वर्गा उरसि च ब्रह्माण्डं कण्ठमाश्रितम् ॥
पूर्वादीशानपर्यन्तं शिरस्तस्य विचिन्तयेत् ॥ ५० ॥ सदाशिवाशिखान्तस्थं शक्तित्रितयमेव च ॥ परात्परं शिवं साक्षात्तार्क्ष्यं भुवननायकम् ॥ ५१ ॥
त्रिनेत्रमुग्ररूपञ्च विषनागक्षयङ्करम् ॥ ग्रसनं भीमवक्त्रं च गरुडं मन्त्रविग्रहम् ॥ ५२ ॥ कालाग्निमिव दीप्तं च चिंतयेत्सर्वकर्मसु ॥ एवं न्यासविधिं
कृत्वा यद्यन्मनासि चिंतयेत् ॥ ५३ ॥ तत्तदेव भवेत्साध्यं नरो वै गरुडायते ॥ प्रेता भूतास्तथा यक्षा नागा गंधर्वराक्षसाः ॥ दर्शनात्तस्य नश्यंति
ज्वराश्चातुर्थिकादयः ॥ ५४ ॥ धन्वन्तरिरुवाच ॥ एवं स गरुडं प्रोचे गरुडः कश्यपाय च ॥ महेश्वरो यथा गौरीं प्राह विद्यां तथा शृणु ॥ ५५ ॥
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे सप्तनवत्यधिकशततमोऽध्यायः ॥ १९७ ॥ भैरव उवाच ॥ नित्यक्लिन्नामथो वक्ष्ये
त्रिपुरां भुक्तिमुक्तिदाम् ॥ ॐ ह्रीं आगच्छ देवि ऐं ह्रीं ह्रीं रेखाकारणम् ॥ ओं ह्रीं क्लेदिनी भं नमः मदनक्षोभिणा तथा ॥ ऐं यं यं क्रीं वा
गुणरेखया ह्रीं मदनांतरे च ॥ ऐं ह्रीं ह्रीं च निरञ्जना वागाति मदनांतरेखे खनेत्रावलीति च ॥ वेगवति महाप्रेतासनाय च पूजयेत् ॥ ओं ह्रीं
क्लैं नैं क्लैं नित्यं मदद्रवे क्रीं नमः ॥ ऐं ह्रीं त्रिपुरायै नमः ॥ ओं ह्रीं क्रीं पश्चिमवक्त्रं ओं ऐं ह्रीं ह्रीं च तथोत्तरम् ॥ ऐं ह्रीं दक्षिणमूर्द्धवक्त्रं तु
पाश्चिमम् ॥ ओं ह्रीं पाशाय क्रीं अंकुशाय ऐं कपालाय नमः ॥ आद्यं भयं ऐं ह्रीं च तथा शिरः तथा शिखायै कवचे ॥ ऐं ह्रीं क्रीं अस्त्राय
फट् ॥ १ ॥ पूर्वे कामरूपाय असितांगाय भैरवाय नमो ब्रह्माण्यै ॥ दक्षिणे चैव कन्दाय वै नमः रुरुभैवाय माहेश्वर्या वा आवाहयेत् ॥ २ ॥

तथा पश्चिमे चण्डाय वै नमः ॥ कौमार्य्यै चोत्तरे चोल्काय क्रोधाय नमः वैष्णव्यै ॥ ३ ॥ अग्निकोणे अघोरायोन्मत्तभैरवायेति वाराह्यै ॥ रक्षःकोणे
साराय कपालिने भैरवाय माहेन्द्र्यै ॥ ४ ॥ वायुकोणे जालन्धराय भीषणाय भैरवाय चामुण्डायै ॥ ईशकोणके वटुकाय संहारश्चण्डिकाञ्च प्रपूजये
त् ॥ ५ ॥ रतिप्रीतिकामदेवान्पञ्चबाणान्यजेदथ ॥ ध्यानार्चनाज्जप्यहोमादेवी सिद्धा च सर्वदा ॥ ६ ॥ नित्या च त्रिपुरा व्याधिं हन्याज्ज्वालामुखी
क्रमात् ॥ ज्वालामुखीक्रमं वक्ष्ये सा पूज्या मध्यतः शुभा ॥ ७ ॥ नित्यारुणा मदनातुरा महामोहा प्रकृत्यपि ॥ महेन्द्राणी च कलनाकर्षिणी
भारती तथा ॥ ८ ॥ ब्रह्माणी चैव माहेशी कौमारी वैष्णवी तथा ॥ वाराही चैव माहेन्द्री चामुण्डा चापराजिता ॥ ९ ॥ विजया चाजिता चैव
मोहिनी त्वरिता तथा ॥ स्तम्भिनी जृम्भिणी पूज्या कालिका पत्रबाह्यतः ॥ ज्वालामुखीक्रमं चार्चेद्विषादिहरणं भवेत् ॥ १० ॥ इति श्रीगारुडे
महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे अष्टनवत्यधिकशततमोऽध्यायः ॥ १९८ ॥ ॥ भैरव उवाच ॥ अथ चूडामणिं वक्ष्ये शुभाशुभवि
शुद्धये ॥ सूर्य्यं देवीं गणं सोम स्मृत्वा तु विलिखेन्नरः ॥ १ ॥ त्रिरेखा गोमूत्रिकाभा अथवा प्रश्नवाक्यतः ॥ दिशस्थानप्रसूतो वा ध्वजादीन्गणये
त्क्रमात् ॥ २ ॥ ध्वजो धूमोऽथ सिंहश्च श्वा वृषः खरदन्तिनौ ॥ ध्वांक्षश्च अष्टमो ज्ञेयो नाम मन्त्रैश्च तान्न्यसेत् ॥ ३ ॥ ध्वजस्थाने ध्वजं दृष्ट्वा
राज्यचिन्ताधनादिकम् ॥ ध्वजस्थाने स्थितो धूम्रो धातुचिन्ता च लाभकृत् ॥ ४ ॥ ध्वजस्थाने स्थिते सिंहे धनलाभादिकं भवेत् ॥ स्थिते शुनि
ध्वजस्थाने दासीचिन्तासुखादिकम् ॥ ५ ॥ ध्वजस्थाने वृषं दृष्ट्वा स्थानचिन्ता च लाभकम् ॥ ध्वजस्थाने खरं दृष्ट्वा दुःखक्लेशादिकं भवेत् ॥ ६ ॥
ध्वजस्थाने गजं दृष्ट्वा स्थानचिन्ताजयादिकम् ॥ ध्वजस्थाने तथा ध्वांक्षे क्लेशचिन्ता धनक्षयः ॥ ७ ॥ धूम्रस्थाने ध्वजं दृष्ट्वा पूर्वं दुःखं ततो धनम् ॥
धूम्रे धूम्रं तथा दृष्ट्वा कलिदुःखादिकं भवेत् ॥ ८ ॥ धूम्रस्थाने स्थिते सिंहे मनश्चिन्ताधनादिकम् ॥ धूम्रस्थाने शुनि स्थिते जयलाभादिकं
भवेत् ॥ ९ ॥ धूम्रस्थाने वृषं दृष्ट्वा नारीगोऽश्वधनादिकम् ॥ धूम्रस्थाने खरं दृष्ट्वा व्याधिश्चापि धनक्षयः ॥ १० ॥ धूम्रस्थाने गजे दृष्टे राज्यलाभजया
दिकम् ॥ धूम्रस्थाने स्थिते ध्वांक्षे धनराज्यविनाशनम् ॥ ११ ॥ सिंहस्थाने ध्वजं दृष्ट्वा राज्यलाभादि निर्दिशेत् ॥ सिंहस्थाने स्थिते धूम्रे
कन्याप्राप्तिर्धनादिकम् ॥ १२ ॥ सिंहस्थाने स्थिते सिंहे जयो मित्रसमागमः ॥ कौलेयके सिंहगते स्त्रीचिन्ता ग्रामलाभकम् ॥ १३ ॥ सिंह स्थाने
वृषं दृष्ट्वा गृहक्षेत्रार्थलाभकम् ॥ सिंहस्थाने गजं दृष्ट्वा ग्रामस्वामित्वमेव च ॥ १४ ॥ सिंहस्थाने गजं दृष्ट्वा आरोग्यायुःसुखादिकम् ॥ सिंहस्थाने
स्थिते ध्वांक्षे कन्याधान्यगुणादिकम् ॥ १५ ॥ शुनःस्थाने ध्वजं दृष्ट्वा स्थानचिन्तासुखादिकम् ॥ शुनःस्थाने स्थिते धूम्रे कलहं कार्य्यनाशनम् ॥१६॥

शुनः स्थान स्थिते सिंहे कार्य्यसिद्धिर्भविष्यति ॥ स्थिते शुनि शुनः स्थाने धननाशो भविष्यति ॥ १७ ॥ शुनः स्थाने वृषं दृष्ट्वा रोगी रोगाद्वि
मुच्यते ॥ शुनः स्थाने खरं दृष्ट्वा कलहस्य भयं भवेत् ॥ १८ ॥ शुनः स्थाने गजं दृष्ट्वा पुत्रभार्य्यासमागमः ॥ श्वस्थाने च स्थिते ध्वांक्षे पीडा
स्यात्कुलनाशनम् ॥ १९ ॥ वृषस्थाने ध्वजं दृष्ट्वा राजपूजासुखादिकम् ॥ वृषस्थाने स्थिते धूम्रे राजपूजासुखादिकम् ॥ २० ॥ वृषस्थाने स्थिते
सिंहे सौभाग्यश्च धनादिकम् ॥ स्थिते शुनि वृषस्थाने बलश्रीकाम ईरितः ॥ २१ ॥ वृषस्थाने वृषं दृष्ट्वा कीर्त्तितुष्टिसुखादिकम् ॥ वृषस्थाने खरं दृ
ष्ट्वा महालाभादिकं भवेत् ॥ २२ ॥ वृषस्थाने गजं दृष्ट्वा स्त्रीगजादिसमागमः ॥ वृषस्थाने स्थिते ध्वांक्षे स्थानमानसमागमः ॥ २३ ॥ खरस्थाने
ध्वजं दृष्ट्वा रोगशोकादिकं भवेत् ॥ खरस्थाने स्थिते धूम्रे तस्करादिभयं भवेत् ॥ २४ ॥ खरस्थाने स्थिते सिंहे पूजाश्रीविजयादिकम् ॥ स्थिते शुनि
खरस्थाने सन्तापधननाशनम् ॥ २५ ॥ खरस्थाने वृषं दृष्ट्वा सुखं प्रियसमागमः ॥ खरस्थाने खरं दृष्ट्वा दुःखपीडादि निर्दिशेत् ॥ २६ ॥ खरस्थाने
गजं दृष्ट्वा सुखपुत्रादिकं भवेत् ॥ खरस्थाने स्थिते ध्वांक्षे कलहो व्याधिरेव च ॥ २७ ॥ गजस्थाने ध्वजं दृष्ट्वा स्त्रीजयश्रीसुखादिकम् ॥ गजस्थाने
स्थिते धूम्रे धनधान्यसमागमः ॥ २८ ॥ गजस्थाने स्थिते सिंहे जयसिद्धिसमागमः ॥ स्थिते शुनि गजस्थाने आरोग्यं सुखसम्पदः ॥ २९ ॥ गज
स्थाने वृषं दृष्ट्वा राजमानधनादिकम् ॥ गजस्थाने खरं दृष्ट्वा पूर्वं दुःखं ततः सुखम् ॥ ३० ॥ गजस्थाने गजं दृष्ट्वा क्षेत्रधान्यसुखादिकम् ॥ गजस्थाने
स्थिते ध्वांक्षे धनधान्यसमागमः ॥ ३१ ॥ ध्वांक्षस्थाने ध्वजं दृष्ट्वा कार्य्यनाशो भविष्यति ॥ ध्वांक्षस्थाने स्थिते धूम्रे कलिदुःखं[1] गमिष्यति ॥३२॥
ध्वांक्षस्थाने स्थिते सिंहे विग्रहो दुःखमेव च ॥ ध्वांक्षस्थाने स्थिते श्वाने गृहभंगभयादिकम् ॥ ३३ ॥ ध्वांक्षस्थाने वृषं दृष्ट्वा स्थानभ्रंशभयादिकम्॥
ध्वांक्षस्थाने खरं दृष्ट्वा धननाशपराजयौ ॥३४॥ ध्वांक्षस्थाने गजं दृष्ट्वा धनकीर्त्त्यादिकं भवेत् ॥ ध्वांक्षस्थाने स्थिते ध्वांक्षे विदेशगमनादिकम्॥३५॥
इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकांडे नवनवत्यधिकशततमोऽध्यायः ॥ १९९ ॥ भैरव उवाच ॥ वक्ष्ये वायुजयं देवि जया
जयविदेशकम् ॥ वाय्वग्निजलशक्राख्यं मंगलानाञ्चतुष्टयम् ॥ १ ॥ वामदक्षिणसंस्थश्च वायुश्च वहुलो भवेत् ॥ ऊर्द्ध्ववाही भवेदग्निरधस्तु वरुणो भवे
त् ॥ २ ॥ महेन्द्रो मध्यसंस्थस्तु शुक्लपक्षे तु वामगः ॥ कृष्णपक्षे दक्षिणग उदयस्य त्र्यहंत्र्यहम्[2] ॥ ३ ॥ वहेत्प्रातिपदाद्ये च विपरीते भवेन्नतिः ॥

१ कलिं कृत्वा । २ अस्यादन्तमार्षम् ।

उदयः सूर्य्यमार्गेण चन्द्रेणास्तमयो यदि ॥ ४ ॥ वर्द्धन्ते गुणसंघाता अन्यथा विघ्नमौचितम् ॥ संक्रान्त्यः षोडश प्रोक्ता दिवा रात्रौ वरानने ॥ ५ ॥ यदा च संक्रमेद्वायुरर्द्धार्द्धप्रहरे स्थितः ॥ स्वास्थ्याहानिस्तदा ज्ञेया वायुर्भ्रमति देहिषु ॥ ६ ॥ दक्षिणे च पुटे वायुर्हितो भोजनमैथुने ॥ खड्गहस्तो जयेद्युद्धे रिपून्कामसमन्वितः ॥ ७ ॥ वामेन गमनं श्रेष्ठं सर्वकार्य्येषु भूषितम् ॥ वायुर्वहति तत्रस्थः प्रश्नो भूतस्य शोभनः ॥ ८ ॥ माहेन्द्रे वारुणे वाते कोऽपि दोषो न जायते ॥ अनावृष्टिर्दक्षवाहे वृष्टिः स्याद्वामवाहके ॥ ९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे द्विशततमोऽध्यायः ॥२००॥ धन्वन्तरिरुवाच ॥ हयायुर्वेदमाख्यास्ये हयं सर्वार्थलक्षणम् ॥ काकतुण्डः कृष्णजिह्वो वृक्षास्यश्चोष्णतालुकः ॥१॥ करालो हीनदन्तश्च शृङ्गी विरलदन्तकः ॥ एकाण्डश्चैव जाताण्डः कंचुकी द्विखुरी स्तनी ॥ २ ॥ मार्जारपादो व्याघ्राभः कुष्ठविद्रधिसन्निभः ॥ यमजो वामनश्चैव मार्जारः कपिलोचनः ॥ ३ ॥ एतद्दोषी हयस्त्याज्य उत्तमोऽश्वस्तुरुष्कजः ॥ मध्यमः पञ्चहस्तश्च कनीयांश्च त्रिहस्तकः ॥ ४ ॥ असंहता ये च वाहा ह्रस्वकर्णास्तथैव च ॥ शवलाभाः प्रभावेषु न दीनाश्चिरजीविनः ॥ ५ ॥ रेवन्तपूजनाद्धोमाद्रक्ष्याश्च द्विजभोजनात् ॥ सरलं निम्बपत्राणि गुग्गुलं सर्षपान्घृतम् ?॥ ६ ॥ तिलश्चैव वचां हिंगुं बध्नीयाद्वाजिनो गले ॥ आगन्तुजं दोषजन्तु व्रणं द्विविधमीरितम् ॥ ७ ॥ चिरपाकं वातजन्तु श्लेष्मजं क्षिप्रपाककम्[1] ॥ कण्ठदाहात्मकं पित्ताच्छोणितान्मन्दवेदनम् ॥८॥ आगन्तुजन्तु शस्त्राद्यैर्दुष्टव्रणविशोधनम् ॥ एरण्डमूलं द्विनिशं चित्रकं विश्वभेषजम् ॥ ॥ ९ ॥ रसोनं सैन्धवं वापि तक्रकाञ्जिकपेषितम् ॥ तिलसक्तुकपिण्डिका दधियुक्ता ससैन्धवा ॥ निम्बपत्रयुतं पिण्डं व्रणशोधनरोपणम् ॥ १० ॥ पटोलं निम्बपत्रञ्च वचा चित्रकमेव च ॥ पिप्पलीशृङ्गवेरञ्च चूर्णमेकत्र कारयेत् ॥ ११ ॥ एतत्पानात्क्रिमिश्लेष्ममंदानिलविनाशनम् ॥ निम्बपत्रं पटोलञ्च त्रिफला खदिरं तथा ॥ १२ ॥ क्राथयित्वा ततो वाहं सूतरक्तं विचक्षणः ॥ त्र्यहमेव प्रदातव्यं हयकुष्ठोपशान्तये ॥ १३ ॥ सव्रणेषु च कुष्ठेषु तैलं सर्षपजं हितम् ॥ लशुनादिकषायश्च पानभुक्त्युपशान्तये ॥१४॥ मातुलुंगरसोपेतं मांसीनां रसकेन वा ॥ सद्यो दद्यात्तत्र नस्यमन्यैर्वा तैः सुसंयुतैः ॥ ॥१५॥ पलद्वयं प्रथमेऽह्नि एकैकपलवृद्धितः॥यावद्दिनानि पूर्णानि पलान्यष्टादशोत्तमे ॥१६॥ अधमेऽष्टपलानि स्युर्मध्यमे स्युश्चतुर्दश॥शरन्निदाघयोर्नैव देयं नैव तु दापयेत्॥१७॥तैलेन वातिके रोगे शर्कराज्यपयोन्वितैः॥कटुतैलैः कफे व्योषैः पित्ते च त्रिफलाम्बुभिः॥१८॥ शालिषष्टिकदुग्धाशी हयो हि न ज्

१ कटकः इति पा० ।

गुप्सितः॥ पक्वजम्बूनिभो हेमवर्णोऽश्वो न जुगुप्सितः॥१९॥ अर्द्धप्रहरणे धुर्य्ये गुग्गुलुं प्राशयेद्धयम्॥ भोजयेत्पायसं दुग्धं सत्वरं सुस्थिरो हयः ॥ २० ॥
विकारे भोजने दुग्धं शाल्यन्नं वातले ददेत् ॥ कर्षमांसरसैः पित्ते मधुमुद्गरसाज्यकैः ॥ २१ ॥ कफे मुद्गान्कुलत्थान्वा कटुतिक्तान्कफे हये ॥
बाधिर्य्ये व्याधिते श्वासे त्रिदोषादौ तु गुग्गुलुः ॥ २२ ॥ वासैर्दूर्वा सर्वरोगे प्रथमेऽह्नि पलं ददेत् ॥ विवर्द्धयेत्ततः कर्षमेकाऽह्नि पलपञ्चकम् ॥ २३ ॥
पाने च भोजने चैव अशीतिपलकं परम् ॥ मध्ये षष्टिश्चाधमेषु चत्वारिंशच्च भोगिषु ॥ २४ ॥ व्रणे कुष्ठेषु खञ्जेषु त्रिफलाक्काथसंयुतम् ॥ मन्दाग्नौ
शोथरोगे च गवां मूत्रेण योजितम् ॥ २५ ॥ वातपित्ते व्रणे व्याधौ गोक्षीरं घृतसंयुतम् ॥ देयं कृशानां पुष्ट्यर्थं मांसैर्युक्तं च भोजनम् ॥ २६ ॥ सुपि
ष्टायाः प्रदातव्यं गुडूच्याः पलपंचकम् ॥ प्रभाते घृतसंयुक्तं शरद्ग्रीष्मे च वाजिनाम् ॥ २७ ॥ रोगघ्नं पुष्टिदं चापि बलतेजोविवर्द्धनम् ॥ तदेवाश्वाय
दातव्यं क्षीरयुक्तमथापि वा ॥ २८ ॥ गुडूचीकल्पयोगेन शतावर्य्यश्वगन्धयोः ॥ चत्वारि त्रीणि मध्यस्य जघन्यस्य पलानि हि ॥ २९ ॥ अक
स्माद्यत्र वाहानामेकरूपं यदा भवेत् ॥ म्रियते च यदा क्षिप्रमुपसर्गं तमादिशेत् ॥ ३० ॥ होमाद्यै रक्षया विप्रभोजनैर्बलिकर्मणा ॥ शान्त्योपसर्ग
शान्तिः स्याद्धरीतक्यादिकल्पतः ॥ ३१ ॥ हरीतकी गवां मूत्रैस्तैलेन लवणान्विता ॥ आदौ पंच ततः पंच वृद्ध्या पूर्णशतावधि ॥ उत्तमा च
शतं मात्रास्त्वशीतिः षष्टिरेव वा ॥ ३२ ॥ गजायुर्वेदमाख्यास्ये उक्ताः कल्पा गजे हिताः ॥ गजे चतुर्गुणा मात्रास्ताभिर्गजरुगर्दनः ॥ ३३ ॥ गजो
पसर्गव्याधीनां शमनं शान्तिकर्म च ॥ पूजयित्वा सुरान्विप्रान्नैर्गां कपिलां ददेत् ॥ ३४ ॥ दन्तिदन्तद्वये मालां निबध्नीयादुपोषितः ॥ मन्त्रेण
मन्त्रितान्वैद्यैर्वचासिद्धार्थकांस्तथा ॥ ३५ ॥ सूर्य्यादिशिवदुर्गाश्रीविष्ण्वर्चा रक्षयेद्गजम् ॥ बलिं दद्याच्च भूतेभ्यः स्नापयेच्च चतुर्घटैः ॥ ३६ ॥
भोजनं मन्त्रितं दद्याद्भस्मनोद्धूनयेद्गजम् ॥ भूतरक्षा शुभा मेध्या वारणं रक्षयेत्सदा ॥ ३७ ॥ त्रिफलापंचकोले च दशमूलं विडंगकम् ॥ शतावरी
गुडूची च निम्बवासककिंशुकाः ॥ ३८ ॥ गजरोगविनाशाय हितो रूक्षः कषायकः ॥ आयुर्वेदद्वयोक्तानामुक्तं संक्षेपसारतः ॥ ३९ ॥
॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकाण्डे गजाश्वायुर्वेदनिरूपणं नामैकाधिकद्विशततमोऽध्यायः ॥ २०१ ॥ हरिरुवाच ॥
एकं पुनर्नवामूलमपामार्गस्य वा शिव ॥ सरसं योनिनिः क्षिप्तं वराङ्गस्य व्यथां हरेत् ॥ प्रसूतिवेदनाश्चैव तरुणीनां व्यथां हरेत् ॥ १ ॥ भूमि

१ परस्मैपदमार्षम् ।

कूष्माण्डमूलं वै शालिचूर्णमथापि वा ॥ सप्ताहं दुग्धपीतं स्यात्स्त्रीणां बहुपयस्करम् ॥ २ ॥ रुद्रेन्द्रवारुणीमूलं लेपात्स्त्रीस्तनवेदना ॥
नश्येत घृतपक्का च काय्याविश्यन्तु पोलिका ॥ ३ ॥ भक्षिता सा महेशान: योनिशूलं विनाशयेत ॥ प्रलेपिता कारवेल्लमूलैनैव विनिर्गता ॥ ४ ॥
योनिः प्रवेशमायाति नात्र काय्य्या विचारणा ॥ नीलीपटोलमूलानि साज्यानि तिलवारिणा ॥ ५ ॥ पिष्टान्येषां प्रलेपो वै ज्वालागर्दभरोगनुत् ॥
पाठामूलं रुद्र पीतं पिष्टं तण्डुलवारिणा ॥ ६ ॥ पापरोगहरं स्याच्च कुष्ठपानं तथैव च ॥ वास्योदकञ्च समधु पीतमन्तर्गतस्य वै ॥ ७ ॥ पापरो
गस्य सन्तापनिवृत्तिं कुरुते शिव ॥ घृततुल्या रुद्र लाक्षा पीता क्षीरेण वै सह ॥ ८ ॥ प्रदरं हरते रोगं नात्र काय्य्या विचारणा ॥ द्विजयष्टी
त्रिकटुकं चूर्णं पीतं हरेच्छिव ॥ ९ ॥ तिलक्काथेन संयुक्तं रक्तगुल्मं स्त्रिया हर ॥ कुसुमस्य निबद्धञ्च तरुणीनां महेश्वर ॥ १० ॥ रक्तोत्पलस्य वै
कन्दं-शर्करातिलसंयुतम् ॥ पीतं सशर्करं स्त्रीणां धारयेद्गर्भपातनम् ॥ ११ ॥ रक्तस्रावस्य नाशः स्याच्छीतोदकानिषेवणात ॥ पीतन्तु काञ्जिकं
रुद्र कथितं शरपुङ्खया ॥१२॥ हिंगुसैन्धवसंयुक्तं शीघ्रं स्त्रीणां प्रसूतिकृत् ॥ मातुलुङ्गस्य वै मूलं कटिबद्धं प्रसूतिकृत ॥ १३ ॥ अपामार्गस्य वै
मूले गर्भवत्यास्तु नामतः ॥ उत्पाद्यमाने सकले पुत्रः स्यादान्यथा सुता ॥ १४ ॥ अपामार्गस्य वै मूले नारीणां शिरसि स्थिते ॥ गर्भशूलं विन
श्येत नात्र काय्य्या विचारणा ॥ १५ ॥ कर्पूर-मदनफल-मधुकैः पूरितः शिव ॥ योनिः शुभा स्याद्वृद्धाया युवत्याः किं पुनर्हर ॥ १६ ॥ यस्य बाल
स्य तिलकः कृतो गौरोचनाख्यया ॥ शर्करा-कुष्ठपानञ्च दत्तं स स्याच्च निर्भयः ॥ विष-भूत-ग्रहादिभ्यो व्याधिभ्यो बालकः शिव ॥ १७ ॥ शङ्ख-ना
भि-वचा-कुष्ठ-लोहानां धारणं सदा ॥ बालानामुपसर्गेभ्यो रुद्र रक्षाकरं भवेत् ॥ १८ ॥ पलाशचूर्णं समधु गव्याज्यामलकान्वितम् ॥ सविडङ्गं
पीतमात्रं नरं कुर्य्यान्महामतिम् ॥ १९ ॥ मासैकेन महादेव जरा-मरणवर्जितः ॥ २० ॥ पलाशबीजं सघृतं तिल-मध्वन्वितं समम् ॥ सप्ताहं भक्षितं
रुद्र जरां नयति संक्षयम् ॥ २१ ॥ रुद्रामलकचूर्णं वै मधु-तैल घृतान्वितम् ॥ जग्ध्वा मासं युवा स्याच्च नरो वागीश्वरो भवेत् ॥ २२ ॥ शिवामलक
चूर्णं वै मधुना उदकेन वा ॥ बलानि कुर्य्यान्नासायाः प्रत्यूषे भक्षितं शिव ॥ २३ ॥ कुष्ठचूर्णं साज्य-मधु प्रातर्जग्ध्वा भवेन्नरः ॥ साक्षात्सुरभिदेहो वै
जीवेद्वर्षसहस्रकम् ॥ २४ ॥ माषस्य विदलान्येव वितुषाणि महेश्वर ॥ घृतभावितशुष्काणि पयसा साधितानि वै ॥ २५ ॥ समध्वाज्यपयोभिश्च



१ शालितण्डुलवारिणेति पाठान्तरम् ।

भक्षयित्वा च कामयेत् ॥ स्त्रीणां शतं महादेव तत्क्षणान्नात्र संशयः ॥ २६ ॥ रसश्चैरण्डतैलेन गन्धकेन शुभो भवेत् ॥ त्रिकालोदकसंघुष्टो बलं कृद्भक्षणाद्भवेत् ॥ २७ ॥ दुग्धं वितुषमाषैश्च शिम्बाबीजैश्च साधितम् ॥ अपामार्गस्य तैलेन पीतं स्त्रीशतकामकृत् ॥ २८ ॥ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नानाविधौषधप्रयोगनिरूपणं नाम द्व्युत्तरद्विशततमोऽध्यायः ॥ २०२ ॥ ॥

॥ हरिरुवाच ॥ या गौर्द्वेष्टि स्वकं वत्सं तस्या देयं स्वकं पयः ॥ लवणेन समायुक्तं तस्या वत्सः प्रियो भवेत् ॥ १ ॥ शुनोऽस्थि कण्ठबद्धं हि महिषाणां गवां तथा ॥ कृमिजालं पातयति सकलं नात्र संशयः ॥ २ ॥ गोजंगनाभिपातः स्याद्भुञ्जामूलस्य भक्षणात् ॥ ३ ॥ वरुणफलस्यरसं करेण मथितं शिव ॥ चतुष्पाद-द्विपदयोः कृमिजालं निपातयेत् ॥ ४ ॥ व्रणञ्च शमयेद्रुद्र जयायाः पूरणात् तथा ॥ गजमूत्रस्य वै पानं गो-महिष्युपसर्गनुत् ॥ ५ ॥ समसूर शालिवीजं पीतं तक्रेण घर्षितम् ॥ क्षीरे गो-महिषस्यैव गोः पुंसश्च हितं भवेत् ॥ ६ ॥ पत्रञ्च शरपुङ्खाया दत्तं सलवणं शिव ॥ वारिस्फोटं हयानांच केसराणां विनाशयेत् ॥ ७ ॥ घृतकुमारीपत्रमेव दत्तं सलक्षणं हर ॥ तुरंगम-केसराणां कण्डूर्नश्येन्न संशयः ॥ ८ ॥ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नानौषधप्रयोगनिरूपणं नाम त्र्युत्तरद्विशततमोऽध्यायः ॥ २०३ ॥ ॥

सूत उवाच ॥ एवं धन्वन्तरिः प्राह सुश्रुताय च वैद्यकम् ॥ अथ नामानि वक्ष्यामि ओषधीनां समासतः ॥१॥ स्थिरा विदारिगन्धा च शालपर्ण्यंशुमत्यपि ॥ लांगली कलसी[1] चैव क्रोष्टुपुच्छा गुहा मता ॥२॥ पुनर्नवाथ वर्षाभूः कठिल्यां कारुणा तथा ॥ एरण्डश्चोरुवूकः स्यादामर्दो वर्द्धमानकः ॥३॥ झषा नागबला ज्ञेया श्वदंष्ट्रा गोक्षुरो मतः ॥ शतावरी वरा भीरु पीवरीन्दीवरी वरी ॥ ४ ॥ व्याघ्री तु बृहती कृष्णा हंसपादी मधुस्रवा ॥ धामनी कण्टकारी स्यात्क्षुद्रा सिंही निदिग्धिका ॥ ५ ॥ वृश्चिका त्र्यमृता काली विषघ्नी सर्पदंष्ट्रिका ॥ मर्कटी चात्मगुप्ता स्यादार्षेयी कपिकच्छुका ॥ ६ ॥ मुद्गपर्णी क्षुद्रसहा माषपर्णी महासहा ॥ त्यजा परा च महा ज्ञेया दण्डयोन्यंकसंज्ञया ॥ न्यग्रोधस्तु वटो ज्ञेयः अश्वत्थः कपिलो मतः ॥ ७ ॥ प्लक्षोऽथ गर्दभाण्डः स्यात्पर्कटी च कपीतनः ॥ पार्थस्तु ककुभो धन्वी विज्ञेयोऽर्जुननामभिः ॥ ८ ॥ नन्दीवृक्षः प्ररोही स्यात्पुष्टिकारीति चोच्यते ॥ वंजुलो वेतसो ज्ञेयो भल्लातश्चाप्यरुष्करः ॥ ९ ॥ लोध्रः सारवको धृष्टस्तिरीटश्चापि कीर्त्तितः ॥[2] बृहत्फला महाजम्बूर्ज्ञेया बालफला परा ॥ १० ॥

१ कलहीति पा० । २ दार(रु)वेल्लः कविल्लकः० पा० ।

तृतीया जलजम्बूः स्यान्नादेयी सा च कीर्त्तिता ॥ कणा कृष्णोपकुंची च शौण्डी मागधिकेति च ॥ ११ ॥ कथिता पिप्पली तज्ज्ञैस्तन्मूलं ग्रन्थिकं स्मृतम् ॥ ऊषणं मरिचं ज्ञेयं शुण्ठी विश्वं महौषधम् ॥ १२॥ व्योषं कटुत्रयं विद्यात्त्र्यूषणं तच्च कीर्त्त्यते ॥ लांगली हलिनी च स्याच्छ्रेयसी गज पिप्पली ॥ १३ ॥ त्रायन्ती त्रायमाणा स्याद्दुत्साया सुवहा स्मृता ॥ चित्रकः स्याच्छिखी वह्निरग्निसंज्ञाभिरुच्यते ॥ १४ ॥ षड्ग्रन्थोग्रा वचा ज्ञेया श्वेता हैमवतीति च ॥ कुटजो वृक्षकः शक्रो वत्सको गिरिमाल्लिका ॥ १५ ॥ कलिंगेन्द्रयवारिष्टं तस्य बीजानि लक्षयेत् ॥ मुस्तको मेघनामा स्यात्कौन्ती ज्ञेया हरेणुका ॥ १६ ॥ एला च बहुला प्रोक्ता सूक्ष्मैला च तथा त्रुटिः ॥ पद्मा भार्ङ्गी तथा कांजी ज्ञेया ब्राह्मणयष्टिका ॥ १७ ॥ मूर्वा मधुरसा ज्ञेया तेजनी तिक्तवल्लिका ॥ महानिम्बो बृहन्निम्बो दीप्यकः स्याद्यवानिका ॥ १८ ॥ विडङ्गं क्रिमशत्रुः स्याद्रामठं हिंगुरुच्यते ॥ अजाजी जीरकं ज्ञेया कारवी चोपकुञ्चिका ॥१९॥ विज्ञेया कटुका तिक्ता तथा कटुकरोहिणी ॥ तगरं स्यान्नतं वक्रं चोचं त्वचवरांगकम् ॥२०॥ उदीच्यं बालकं प्रोक्तं ह्रीबेरं चाम्बुनामभिः ॥ पत्रकं दलसंज्ञाभिश्चारकं तस्कराह्वयम् ॥२१॥ हेमाभं नागसंज्ञाभिर्नागकेशर उच्यते ॥ असृक्कुंकुममाख्यातं तथा काश्मीरबाह्लिकम् ॥ २२ ॥ अयो लोहं समुद्दिष्टं यौगिकैर्लोहनामभिः ॥ पुरं कुटनटं विद्यान्महिषाक्षः पलङ्कषा ॥ २३ ॥ काश्मरी कट्फला ज्ञेया श्रीपर्णी चेति कीर्त्तिता ॥ शल्लकी गजभक्ष्या च पत्री च सुरभी स्रवः ॥ २४ ॥ धात्रीमामलकीं विद्यादक्षश्चैव विभीतकः ॥ पथ्याभया च विज्ञेया पूतना च हरीतकी ॥ २५ ॥ त्रिफला फलमेवोक्ता तच्च ज्ञेयं फलत्रिकम् ॥ उदकीर्य्यो दीर्घवृन्तः करंजश्चेति कीर्त्तितः ॥ २६ ॥ यष्टी यष्ट्याह्वयं प्रोक्तं मधुकं मधुयष्टिका ॥ धातकी ताम्रपर्णी स्यात्समंगा कुंजरा मता ॥ २७ ॥ सितं मलयजं शीतं गोशीर्षं सितचन्दनम् ॥ विद्याद्रक्तं चन्दनं च द्वितीयं रक्तचन्दनम् ॥ ॥ २८ ॥ काकोली च स्मृता वीरा वयस्या चार्कपुष्पिका ॥ शृंगी कर्कटशृंगी च महाघोषा च कीर्त्तिता ॥ २९ ॥ तुगाक्षीरी शुभा वांशी विज्ञेया वंशलोचना ॥ मृद्विका च स्मृता द्राक्षा तथा गोस्तनिका मता ॥ ३० ॥ स्यादुशीरं मृणालञ्च सेव्यं लामज्जकं तथा ॥ सारश्च गोपवल्ली च गोपी भद्रा च कथ्यते ॥ ३१ ॥ दन्ती कटङ्कटेरी च ज्ञेया दारुनिशेति च ॥ हरिद्रा रजनी प्रोक्ता पीतिका रात्रिनामिका ॥ ३२ ॥ वृक्षादनी छिन्नरुहा नीलवल्ली रसामृता ॥ वसुकोटश्च विज्ञेयो वाशिरः काम्पिल्लो मतः॥ ३३ ॥ पाषाणभेदकोऽरिष्टो ह्यश्मभित्कुट्टभेदकः ॥ घण्टाकः

१ ग्रथितमिति पा० । २ दुरज्येति पा० । स्यादुदस्येति पा० प्रतिभाति ।

शुष्कको ज्ञेयो वचोऽथ सूचको मतः ॥ ३४ ॥ सुरसो बीजकश्चैव पीतशालोऽभिधीयेत ॥ वज्रवृक्षो महावृक्षः स्नुही स्नुक्च सुधा गुडा ॥ ३५ ॥ तुलसीं सुरसां विद्यादुपस्थेति च कथ्यते ॥ कुठेरकोऽप्यर्जुनकः पर्णी सौगन्धिपर्णिकः ॥ ३६ ॥ नीलश्च सिन्धुवारश्च निर्गुण्डीति सुगन्धिका ॥ ज्ञेया सुगन्धिपर्णीति वासन्ती कुलजेति च ॥ ३७ ॥ कालीयकं पीतकाष्ठं कतकाख्यः पुनः स्मृतः ॥ गायत्री[१]खदिरो ज्ञेयस्तद्भेदः कन्दरो मतः ॥ ३८ ॥ इन्दीवरं कुवलयं पद्मं नीलोत्पलं स्मृतम् ॥ सौगन्धिकं शतदलमब्जं कमलमुच्यते ॥ ३९ ॥ अजवर्णो भवेदूर्जो वाजिकर्णोऽश्वकर्णकः ॥ श्लेष्मांतकस्तथा शेलुर्बहुवारश्च कथ्यते ॥ ४० ॥ सुनन्दकः ककुद्भद्रं छत्राकी छत्रसंज्ञका ॥ कबरी कुम्भको धृष्टः क्षुद्रिधो धनकृत्तथा ॥ ४१ ॥ कृष्णार्जकः करालश्च कालमानः[१] प्रकीर्त्तितः ॥ प्राची बला नदीकान्ता काकजङ्घाथ वायसी ॥ ४२ ॥ ज्ञेया मूषिकपर्णी तु भ्रमन्ती चाखुपर्णिका ॥ विषमुष्टिर्द्रावणश्च केशमुष्टिरुदाहृता ॥ ४३ ॥ किंलिहीं[२] कटुकीं विद्यादन्तकश्चाम्लवेतसः ॥ अश्वत्था[३] बहुपत्रा[४] च विज्ञेया चामलक्यपि ॥ ४४ ॥ अरूषकं पत्रशूकं क्षीरी राजादनं मतम् ॥ महापत्रं[५] दाडिमं च तमेव करकं वदेत् ॥ ४५ ॥ मसूरी[६] विदली शष्पा कालिन्दीति निरुच्यते ॥ कण्टकाख्या महाश्यामा वृक्षपादीति वक्ष्यते ॥ ४६ ॥ विद्या कुन्ती निकुम्भा च त्रिभङ्गी त्रिपुटी त्रिवृत् ॥ सप्तला यवतिक्ता च चर्मा चर्मकसेति च ॥ ४७ ॥ शङ्खिनी सुकुमारी च तिक्ताक्षी चाक्षिपीलुकम् ॥ गवाक्षी चामृता श्वेता गिरिकर्णी गवादिनी ॥४८॥ काम्पिल्लकोऽथ रक्ताङ्गो गुण्डा रोचनिकेति च ॥ हेमक्षीरी स्मृता पीता गौरी वै कालदुग्धिका ॥ ४९ ॥ गाङ्गेरुकी नागबला विशाला चेन्द्रवारुणी ॥ तार्क्ष्यं शैलं नीलवर्णमञ्जनञ्च रसाञ्जनम् ॥ ५० ॥ निर्यासो यश्च शालमल्याः स मोचरससंज्ञकः ॥ प्रत्यक्पुष्पी खरी ज्ञेया अपामार्गो मयूरकः ॥ ५१ ॥ सिंहास्यवृषवासाकमाटरूषकमादिशेत् ॥ जीवको जीवशाकश्च कर्बुरश्च शटीं विदुः ॥ ५२ ॥ कट्फलं सोमवृक्षः स्यादग्निगन्धा सुगन्धिका ॥ शताङ्गं शतपुष्पा च मिंसिर्मधुरिका मता ॥ ५३ ॥ ज्ञेयं पुष्करमूलञ्च पुष्करं पुष्कराह्वयम् ॥ यासोऽथ धन्वयासश्च दुष्पर्शोऽथ दुरालभा ॥ ५४ ॥ वाकुची सोमराजी च सोमवल्लीति कीर्त्तिता ॥ मार्कवः केशराजश्च भृङ्गराजो निगद्यते ॥ ५५ ॥ प्रोक्तस्त्वेडगजस्तज्ज्ञैश्चक्रमर्दकसंज्ञकः[७] ॥ सुरङ्गी

१ काममान इति पा० । २ किणिहीमिति पा० । ३ अश्मघेति पा० । ४ बहुपुत्रेति पा० । ५ महापत्रः स्मृतः शाकः चक्षुष्यं करकं वदेत् पा० । ६ मूर्वाविष्ठलीश्यामेति पा० । चर्मरुहेति च० पा० । ७ चक्रामर्दश्च चक्रकः ।

तगरः स्नायुः कलनाशा तु वायसी ॥ ५६ ॥ महाकालः स्मृतो बेलस्तण्डुलीयो घनस्तनः ॥ इक्ष्वाकुस्तिक्ततुम्बी स्यात्तिक्तालाबु निगद्यते ॥ ५७ ॥ धामार्गवोऽथ विज्ञेयः कोषातक्यथ यामिनी ॥ विद्यात्कोशातकीभेदं कृतभेदनसंज्ञका ॥ ५८ ॥ तथा जीमूतकाख्या च खुड्डाको देवताडकः ॥ गृध्रादना गृध्रनखी हिंगुकाकादनी मता ॥ ५९ ॥ अश्वारिश्चैव बोद्धव्यः करवीरोऽश्वमारकः ॥ सिन्धुः सैन्धवसिन्धूत्थमणिमन्थमुदाहृतम् ॥ ६० ॥ क्षारो यवाग्रजश्चैव यवक्षारोऽभिधीयते ॥ सर्जिका सर्जिकाक्षारो द्वितीयः परिकीर्त्तितः ॥ ६१ ॥ काशीशं पुष्पकाशीशं विज्ञेयं नेत्रभेषजम् ॥ धातुकाशीशकाशी च संज्ञेयं तच्च कीर्त्तितम् ॥ ६२ ॥ सौराष्ट्री मृत्तिकाक्षारं काक्षी वै पङ्कपर्पटी ॥ विद्यात्समाक्षिकं धातु ताप्यं ताप्युत्थसम्भवम् ॥ ६३ ॥ शिला मनःशिला ज्ञेया नेपाली कुलटीति च ॥ आलं मनस्तालकं वा हरितालं विनिर्दिशेत् ॥ ॥ ६४ ॥ गन्धको गन्धपाषाणो रसः पारद उच्यते ॥ ताम्रमौदुम्बरं शुल्बं विद्यान्म्लेच्छमुखं तथा ॥ ६५ ॥ अद्रिसारस्त्वयस्तीक्ष्णं लोहकश्चापि कथ्यते ॥ माक्षिकं मधु च क्षौद्रं तच्च पुष्परसं स्मृतम् ॥ ६६ ॥ ज्येष्ठन्तु सोदकं तत्स्यात्काञ्जिकन्तु सुवीरकम् ॥ सिता सितोपला चैव मत्स्यण्डी शर्करा स्मृता ॥ ६७ ॥ त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् ॥ नागकेशरसंयुक्तं तच्चतुर्जातमिष्यते ॥ ६८ ॥ पिप्पली पिप्पलीमूलं चव्यचित्रकनागरैः ॥ कथितं पञ्चकोलञ्च कोलकं कोलसंज्ञया ॥ ६९ ॥ प्रियंगुः कंगुका ज्ञेया कोरदूषश्च कोद्रवः ॥ त्रिपुटः पुटसंज्ञश्च कलापो लङ्गको मतः ॥ ७० ॥ सतीनो वर्त्तुलश्चैव वेणुश्चापि प्रकीर्त्तितः ॥ पिचुकं पित्तलं चाक्षं बिडालपदकं तथा ॥ ७१ ॥ विद्यात्कर्षं तथा चापि सुवर्णं कवलग्रहम् ॥ पलार्द्धं शुक्तिमिच्छन्ति तथाष्टौमाषकास्त्विति ॥ ७२ ॥ पलं बिल्वञ्च मुष्टिः स्याद्द्वे पले प्रसृतिं वदेत् ॥ अञ्जलिं कुडवञ्चैव विद्यात्पलचतुष्टयम् ॥ ७३ ॥ अष्टमानं पलान्यष्टौ तच्च मानमिति स्मृतम् ॥ चतुर्भिः कुडवैः प्रस्थं प्रस्थाश्चत्वार आढकः ॥ ७४ ॥ काशपात्रञ्च संप्रोक्तो द्रोणश्च चतुराढके ॥ तुला पलशतं प्रोक्तं भागो विंशत्पलैः स्मृतः ॥ ७५ ॥ मानमेवं विधं प्रोक्तं प्रस्थद्रव्येषु पण्डितैः ॥ द्रवद्रव्येषु चोद्दिष्टं द्विगुणं परिकीर्त्तितम् ॥ ७६ ॥ भद्रदारु देवकाष्ठं दारु स्याद्देवदारुकम् ॥ कुष्ठमामयमाख्यातं मांसीञ्च नलदंशनम् ॥ ७७ ॥ शङ्खः शुक्तिनखः शंखो व्याघ्रो व्याघ्रनखः स्मृतः ॥ पुरं पलङ्कषं विद्यान्महिषाक्षश्च गुग्गुलुः ॥ ७८ ॥ रसो गन्धरसो बोले सर्जः सर्जरसो मतः ॥ प्रियङ्गुः फलिनी श्यामा गौरी

१ औकारस्योकार आर्षः।

कान्तेति चोच्यते ॥ ७९ ॥ करञ्जो नक्तमालः स्यात्पूतिकश्चिरबिल्वकः ॥ शिग्रुः शोभाञ्जनो नाम ज्ञानमानश्च कीर्त्तितः ॥ ८० ॥ जया जयन्ती शरणी निर्गुण्डी सिन्धुवारकः ॥ मोरटा पीलुपर्णी च तुण्डी स्यात्तुण्डिकेरिका ॥ ८१ ॥ मदनो गालवो बोधो घोटा घोटी च कथ्यते ॥ चतुरंगुल सम्पाको व्याधिघाताभिसंज्ञकः ॥ ८२ ॥ विग्रादारग्वधं राजवृक्षं रैवतसंज्ञकम् ॥ दन्ती काकेन्दुतिक्ता स्यात्कण्टकी च विकङ्कतः ॥ ८३ ॥ निम्बोऽरिष्टः समाख्यातः पटोलं कोलकं विदुः ॥ वयस्था च विशल्या च च्छिन्ना छिन्नरुहा मता ॥ ८४ ॥ वशा दन्त्यमृता चेति गुडूचीनामसंग्रहः ॥ किराततिक्तकश्चैव भूनिम्बः काण्डतिक्तकः ॥ ८५ ॥ सूत उवाच ॥ नामान्येतानि च हरे वन्यानां भेषजां तथा ॥ अतो व्याकरणं वक्ष्ये कुमारोक्तञ्च शौनक ॥ ८६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे चतुरुत्तरद्विशततमोऽध्यायः ॥ २०४ ॥ कुमार उवाच ॥ अथ व्याकरणं वक्ष्ये कात्यायन समासतः ॥ सिद्धशब्दविवेकाय बालव्युत्पत्तिहेतवे ॥ १ ॥ सुप्तिङन्तं पदं ख्यातं सुपः सप्त विभक्तयः ॥ स्वौजसः प्रथमा प्रोक्ता सा प्रातिपदिकात्मके ॥ २ ॥ सम्बोधने च लिंगादावुक्ते कर्मणि कर्त्तरि ॥ अर्थवत्प्रातिपदिकं धातुप्रत्ययवर्जितम् ॥ ३ ॥ अमौशसो द्वितीया स्यात्तत्कर्म क्रियते च यत् ॥ द्वितीया कर्मणि प्रोक्तान्तरान्तरेण संयुते ॥ ४ ॥ टाभ्यांभिसस्तृतीया स्यात्करणे कर्त्तरीरिता ॥ येन क्रियते करणं तत्कर्त्ता यः करोति सः ॥ ५ ॥ ङेभ्यांभ्यसश्चतुर्थी स्यात्सम्प्रदाने च कारके ॥ यस्मै दित्सा धारयते रोचते सम्प्रदानकम् ॥ ६ ॥ पंचमी स्यान्ङसिभ्यांभ्यो ह्यपादाने च कारके ॥ यतोऽपैति समादत्ते उपादत्ते भयं यतः ॥ ७ ॥ ङसोसामश्च षष्ठी स्यात्स्वामिसम्बन्धमुख्यके ॥ ङ्योःसुपो वै सप्तमी स्यात्सा चाधिकरणे भवेत् ॥ ८ ॥ आधारश्चाधिकरणं रक्षार्थानां प्रयोगतः ॥ ईप्सितं चानीप्सितं यत्तदपादानकं स्मृतम् ॥ ९ ॥ पंचमी पर्य्युपाङ्योगे इतरर्त्तेऽन्यदिङ्मुखे ॥ एनयोगे द्वितीया स्यात्कर्मप्रवचनीयकैः ॥ १० ॥ वीप्सेत्थम्भावचिह्नेऽभिर्भागेनैव परिप्रती ॥ अनुरेषु सहार्थे च हीनेऽनूपश्च कथ्यते ॥ ११ ॥ द्वितीया च चतुर्थी स्याच्चेष्टायां गतिकर्मणि ॥ अप्राणे हि विभक्ती द्वे मन्यकर्मण्यनादरे ॥ १२ ॥ नमः स्वस्तिस्वधास्वाहालंवषड्योग ईरिता ॥ चतुर्थी चैव तादर्थ्ये तुमर्थाद्भाववाचिनः ॥ १३ ॥ तृतीया सहयोगे स्यात्कुत्सितेंगे विशेषणे ॥ काले भावे सप्तमी स्यादेतैर्योगेऽपि षष्ठ्यपि ॥ १४ ॥ स्वामीश्वराधिपतिभिः साक्षिदायादप्रसूतैः ॥ निर्द्धारणे द्वे विभक्ती षष्ठी हेतुप्रयोगके ॥ १५ ॥ स्मृत्यर्थकर्मणि तथा करोतेः प्रतियत्नके ॥ हिंसार्थानां प्रयोगे च कृति कर्मणि कर्त्तरि ॥१६॥ न कर्तृकर्मणोः षष्ठी निष्ठयोः प्रातिपदिके॥द्विविधं प्रातिपदिकं नाम धातुस्तथैव च॥१७॥

१ नामान्येतानि च हरिरन्यानि च विश्वेश्वरि । रोगिहन्ता रोगिरोगी विष्णुर्व्याकरणादिकम् । गारुडो गरुडं विष्णुं गारुडी गरुडध्वज । अतो व्याकरणं० । २ दायादसूतकैः०।

भूवांदिभ्यस्तिङो लः स्याल्लकारा दश वै स्मृताः ॥ तिंतस्झि प्रथमो मध्यः सिप्थस्थोत्तमपूरुषः ॥ १८ ॥ मिब्वस्मस्तु परस्मै हि पदानां चात्म
नेपदम् ॥ तातांझ प्रथमो मध्य स्थासाथान्ध्वमथोत्तमः ॥ १९ ॥ आदेशाइड्वहिमहि धातुतोथ णिजादिवत् ॥ नाम्नि प्रयुज्यमानेऽपि[1] प्रथमः
पुरुषो भवेत् ॥ २० ॥ मध्यमो युष्मदि प्रोक्त उत्तमः पुरुषोऽस्मदि ॥ भूवाद्या धातवः प्रोक्ताः सनाद्यन्तास्तथा ततः ॥ २१ ॥
लडीरितो वर्त्तमाने स्मेनातीते च धातुतः ॥ भूतेऽनद्यतने लङ्वा लोडाद्याशिषि धातुतः ॥ २२ ॥ विध्यादावेवानुमतो लेङ्वाच्यो मन्त्रणे भवेत् ॥
निमन्त्रणाधीष्टसंप्रश्ने प्रार्थनेषु तथाशिषि ॥२३॥ लिङतीते परोक्षे स्याल्लिड् भूते लृड् भविष्यति ॥ स्यादनद्यतने तद्वद्भविष्यति तु धातुतः ॥२४॥
धातोर्लृङ् क्रियातिपत्तौ लिङर्थे लेट् प्रकीर्त्तितः ॥ कृतस्त्रिष्वपि वर्त्तन्ते भावे कर्मणि कर्त्तरि ॥ २५ ॥ सद्दशास्तव्यता ण्यद्यदनीयाश्च तृजादयः ॥
॥ २६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे व्याकरणनिरूपणं नाम पञ्चोत्तरद्विशततमोऽध्यायः ॥२०५॥ सूत उवाच ॥
सिद्धोदाहरणं वक्ष्ये संहितादिपुरःसरम् ॥ विप्राः स्वसागता वीदं सूत्तमं स्यात्पितृषभः ॥ १ ॥ लृकारो विश्रुता सेवं लाङ्गलीषा मनीषया ॥ गङ्गोदकं
तवल्कार ऋणार्णं प्रार्णमित्यपि ॥ २ ॥ शीतार्त्तश्च तवल्कारः सैन्द्री सौकार इत्यपि ॥ वध्वासनञ्च पित्रर्थो लनुबन्धो नये जयेत ॥ ३ ॥ नायको
लवणं गावस्त एते न त ईश्वराः ॥ देवीगृहमथो अत्र अ अवेहि पटू इमौ ॥ ४ ॥ अमी अश्वाः षडस्येति तन्न वाक् षड्दलानि च ॥ तच्चरेत्तल्लु
नातीति तज्जलं तच्छ्मशानकम् ॥ ५ ॥ सुगन्नत्र पचन्नत्र भवांश्छादयतीति च ॥ भवाञ्झनत्करश्चैव भवांस्तरति संस्मृतम् ॥ ६ ॥ भवाँल्लिखति
ताश्चक्रे भवाञ्शेतेऽप्यनीदृशः ॥ भवाण्डीनं त्वन्तरसि त्वङ्करोषि सदार्चनम् ॥ ७ ॥ कश्चरेत्कष्टकारेण क ≍ कुर्य्यात्क ≍ फले स्थितः ॥ कश्शेते चैव
कष्षण्डः कस्को याति च गौरवम् ॥८॥ क इहात्र क एवाहुर्देवा आहुश्च भो व्रज ॥ स्वभूर्विष्णुर्व्रजति च गीष्पतिश्चैव धूर्पतिः ॥ ९ ॥ अस्मानेष व्रजे
त्सस्याद्दक्साम स च गच्छति ॥ कुटीच्छाया तथा छाया सन्धयोऽन्ये तथेदृशाः ॥ १० ॥ समासाः षट् समाख्याताः स द्विजः कर्मधारयः ॥ द्विगु
स्त्रिवेदी ग्रामश्च अयं तत्पुरुषः स्मृतः ॥ ११ ॥ तत्कृतश्च तदर्थश्च वृकभीतिश्च यद्वनम् ॥ ज्ञानदक्षेण तत्त्वज्ञो बहुव्रीहिरथाव्ययी ॥ १२ ॥ भावोऽ
धिस्त्रि यथोक्तं तु द्वन्द्वो देवर्षिमानवाः ॥ तद्धिताः पाण्डवः शैवो ब्राह्मयं च ब्रह्मतादयः ॥ १३ ॥ देवाग्निसखिपत्यंशुक्रोष्टुस्वायम्भुवः पिता ॥
ना प्रशस्ताश्च रा गौग्लौरबजन्ताश्च पुंस्यपि ॥ १४ ॥ हलन्तश्चाश्वयुक्क्ष्माभुङ्मरुत्कव्यान्मृगाविधः ॥ आत्मा राजा युवा पन्थाः पूषब्रह्महणौ

१ नैकमासं स०।

हली ॥ १५ ॥ विड्घा उशनानड्वान्मधुलिट् काष्ठतट् तथा ॥ बनवार्य्यस्थिवस्तूनि जगत्सामाहनी तथा ॥ १६ ॥ कर्मसार्पिर्वपुस्तेज अज्झ
लन्ता नपुंसके ॥ जाया जरा नदी लक्ष्मीः श्रीस्त्रीभूमिर्वधूरपि ॥ १७ ॥ भ्रूः पुनर्भूस्तथा धेनुः स्वसा माता च नौ स्त्रियः ॥ वाक्स्रग्दिङ्मुत्क्षुधः
प्रायो युवतिः कुकुभस्तथा ॥ १८ ॥ द्योर्दिवौ प्रावृषश्चैव सुमना उष्णिगस्त्रियाम् ॥ गुणद्रव्यक्रियायोगात्त्रीलिङ्गांश्च वदामि ते ॥ १९ ॥ शुक्ल
कीलालपाश्चैव शुचिश्च ग्रामणीः सुधीः॥पटुः कमलभूः कर्त्ता सुमतो बह्वः सुनौः ॥२०॥ सत्या नाम्यस्तथा पुंसो ह्यभक्षयत दर्षिपात् ॥ सर्वविश्वोभ
ये चोभौ एकोन्यान्यतराणि च ॥२१॥ डतरो डतमो नेमस्त्वः समोऽथ स्मिमेतरौ॥पूर्वश्चैवाधरश्चैव दक्षिणश्चोत्तरावरौ ॥२२॥ परश्चान्तरमप्येतद्यत्त्य
त्किमदसस्त्विदम् ॥ युष्मदस्मत्तत्प्रथमचरमाल्पतयार्धकाः ॥ २३ ॥ तथा कतिपयो द्वौ चेत्येवं सर्वादयस्तथा ॥ शृणोत्याद्या जुहोतिश्च जहातिश्च दधा
त्यपि ॥२४॥ दीप्यतिः स्तूयतिश्चैव पुत्रीयति धनीयति ॥ त्रुट्यति म्रियते चैव चिचीषति निनीषति॥२५॥ सर्वे तिष्ठन्ति सर्वस्मै सर्वस्मात्सर्वतो गतः॥
सर्वेषां चैव सर्वस्मिन्नेवं विश्वादयस्तथा ॥ २६ ॥ पूर्वे पूर्वांश्च पूर्वस्मात्पूर्वस्मिन्पूर्व ईरितः ॥ सूत उवाच॥ सुतिङन्तं सिद्धरूपं नाममात्रेण दर्शितम् ॥
कात्यायनः कुमारात्तु श्रुत्वा विस्तरमब्रवीत् ॥२७॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमां० आचार० नाम षडुत्तरद्विशततमोऽध्यायः ॥२०६॥
सूत उवाच ॥ वासुदेवं गुरुं नत्वा गणं शम्भुं सरस्वतीम् ॥ मात्रावर्णप्रभेदेन च्छन्दो वक्ष्येऽल्पबुद्धये ॥ १ ॥ सर्व्वादिमध्यान्तगलौ म्नौ भ्यौ ज्रौ स्तौ
त्रिका गणाः ॥ आर्य्या चतुष्कलाद्यन्तसर्व्वमध्ये चतुर्गणाः ॥ २ ॥ व्यञ्जनान्तो विसर्गान्तौ दीर्घो युक्तपरो गुरुः ॥ सानुस्वारश्च पादान्तो वा इत्युक्तो
द्विमात्रकः ॥ ३ ॥ यदा नापि क्रमं योगे लघुतापि क्वचिद्गुरोः ॥ श्लोकचार्यादिसंज्ञा स्याद्यतिर्विच्छेदसंज्ञिका ॥ ४ ॥ ज्ञेयः पादश्च तुर्यांशो
युक् समं विषमन्त्वयुक् ॥ सममर्द्धसमं वृत्तं विषमञ्च तृतीयकम् ॥ ५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे छन्दःशास्त्रे
छन्दस्संज्ञापरिभाषानिरूपणं नाम सप्तोत्तरद्विशततमोऽध्यायः ॥ २०७ ॥ सूत उवाच ॥ आर्य्यालक्ष्म त्वष्ट गणाः सदा जो विषमे न हि ॥
षष्ठे जो न्लौ वापि भवेत पदं षष्ठे द्वितीयलात् ॥ १ ॥ आदितः सप्तमे ह्रस्वा द्वितीयार्द्धे, शरे ततः ॥ त्रिगणाड्ग्रिश्च पथ्या स्याद्विपुला
वह्निलङ्घनात् ॥ २ ॥ ग्मध्ये द्वितुर्य्यौ जौ चपला मुखपूर्व्वादिचापला ॥ द्वितीयार्द्धे सजघना आर्य्याजातेश्च लक्षणम् ॥ ३ ॥ आर्य्या
प्रथमार्द्धलक्ष्म गीतिः स्याच्चेदलद्वये ॥ उपगीतिर्द्वितीयार्द्धादुद्गीतिर्व्यत्ययाद्भवेत् ॥ ४ ॥ आर्य्यागीतिश्चान्तगुरुर्गीतिजातेश्च लक्षणम् ॥ षट् कला
विषमे चेत्स्युः समेऽष्टौ न निरन्तराः ॥ समा पराश्रिता न स्याद्वैतालीये रलौ गुरुः ॥ ५ ॥ अन्ते यौ पूर्व्ववदिदमौपच्छन्दसिकं मतम् ॥ ६ ॥

भाद्रौ स्यादापातलिका ज्ञेयाथो दक्षिणान्तिका ॥ पराश्रितो द्वितीयो लः पादेषु निखिलेष्वपि ॥७॥ उदीच्यवृत्तिरसमे प्राच्यवृत्तिस्तु युग्मके ॥ सप
ञ्चमश्चतुर्थांशे युगपत्तौ प्रवृत्तकम् ॥ ८ ॥ उदीच्याद्यङ्घ्रिसंयोगाद्युग्मपादैकपादिका ॥ चारुहासिन्ययुग्माङ्घ्रौ वैतालीयस्य संग्रहः ॥ ९ ॥ वक्रं
नाद्यान्नसौ स्यातां चतुर्थाद्यगणो भवेत् ॥ पथ्यावक्रं जेन समे विपरीतादिरन्यथा ॥ १० ॥ असमे नश्च चपला विपुला लघुसप्तमा ॥ निखिले वा
सैतवस्य म्रौ न्तौ चाब्धेस्तत्पूर्वकौ ॥ ११ ॥ षोडशलोऽचलधृतिर्मात्रासमकमुच्यते ॥ १२ ॥ नवमलस्तथा गोऽन्त्यः जो न्लौवाथाम्बुधेर्यथा ॥
विश्लोकः स्यात्तच्चतुष्कद्विगुणाद्वानवासिका ॥ १३ ॥ बाणाष्टनवकेषु स्याल्लाश्चित्रा षोडशात्मिका ॥ सममात्रासमादिष्टं पदाकुलकमीरितम् ॥ १४ ॥
वृत्तमात्रा विना वर्णैर्ला वर्णा गुरुभिर्विना ॥ गुरुवो लैर्दले नित्यं प्रमाणमिति निश्चितम् ॥ १५ ॥ अष्टाविंशतिला गन्ता प्रथमार्द्धेद्वितीयके ॥ त्रिं
शदस्यां शिखा गन्ता खञ्जातद्व्यत्ययाद्भवेत् ॥ १६ ॥ षोडशानङ्गक्रीडा गा द्वात्रिंशच्चरमे च लाः ॥ सप्तविंशतिला गन्ता दलयो रुचिरा द्वयोः ॥१७॥
मात्रावृत्तानि चोक्तानि वर्णवृत्तानि वच्मि वै ॥ १८ ॥ इति श्रीगारुडे महापुराणे पूर्व्वखण्डे प्रथमांशाख्ये आचारकाण्डे छन्दःशास्त्रे आर्यावृत्तादि
छन्दोलक्षणनिरूपणं नामाष्टोत्तरद्विशततमोऽध्यायः ॥ २०८ ॥ सूत उवाच ॥ श्रीरुक्था गेन सा ज्ञेया अत्युक्था स्त्री गुरुद्वयम् ॥ मो नारी रो
मृगी मध्या मगौ कन्या प्रतिष्ठया ॥ १ ॥ भो गौ पङ्क्तिः सुप्रतिष्ठा तनुमध्या तयौ स्मृता ॥ नयाभ्यां बालललितां गायत्रीच्छन्द एव हि ॥ २ ॥
मसगैर्मदलेखा स्यादुष्णिक्छन्दः स्मृतं बुधैः ॥ भौ गौ चित्रपदा ख्याता विद्युन्माला ममौ गगौ ॥ ३ ॥ माणवकं भात्तलगा म्नौ गौ हंसरुतं स्मृतम् ॥
समानिका रजगला जरला गः प्रमाणिका ॥ आभ्यामन्याद्वितानं स्यादनुष्टुप्छन्द ईरितम् ॥ ४ ॥ रनसैः स्याद्धलमुखी नौ मः शिशुभृता भवेत् ॥
बृहतीछन्द इत्युक्तं स्मौ जगौ स विराजितम्[3] ॥ ५ ॥ पणवं स्यान्मनयगैर्मयूरसारिणी भवेत् ॥ रजाभ्याञ्च रगाभ्याञ्च रुक्मवती भमौ सगौ ॥ ६ ॥
मत्ता मभसगैर्युक्ता नरजा गो मनोरमा ॥ पङ्क्तिच्छन्दः समाख्यातं जसता गावुपस्थितम् ॥ ७ ॥ तौ जो गाविन्द्रवज्रा स्याज्जतज्गा गुपपूर्विका ॥८॥
उपजातयोऽन्याद्यन्ताः सुमुखी नजजा लगौ ॥ भभभा गौ दोधकं स्याच्छालिनी मतता गगौ ॥९॥ अब्धिलोकैश्च विच्छेदो वातोर्म्मी ममता गगौ ॥
श्रीर्भतौ ननगाः प्रोक्ता पञ्चभिः षड्भिरेव च ॥१०॥ मगना नो गो भ्रमरविलासितमुदाहृतम् ॥ रथोद्धता नौ रलगाः स्वागता रनभा गगौ ॥ ११ ॥
वृत्ता ननौ सगौ गः स्यान्नौ रलौ गः समाद्रिका ॥ रजरा ल्गौ श्येनिका स्याज्जसता गौ शिखण्डितम् ॥त्रिष्टुप्छन्दःसमाख्यातं पिङ्गलेन महात्मना॥१२॥



१ अपरान्तिकेति पिङ्गलादौ । २ चण्डरसेति प्राकृतपैङ्गले नाम । शशिवदनेति वृत्तरत्नाकरादौ । ३ शुद्धविराडिति पैङ्गलादौ ।

रनौ भसौ चन्द्रवर्त्म वंशस्थं स्याज्जतौ जरौ ॥ ततो जराविन्द्रवंशा वेदसैस्तोटकं स्मृतम् ॥ न्भौ भ्रौ द्रुतविलम्बितं पुटश्च स्यान्ननौ मयौ ॥ १३ ॥ वसुवेदैश्च विरतिर्मुदितवदना त्वियम् ॥ ननररैः समाख्याता नयना यस्तथा भवेत् ॥ १४ ॥ सा तु कुसुमविचित्रा जलोद्धतगती रसैः ॥ जसौ जसौ च पादेषु चतूरैः स्रग्विणी मता ॥ १५ ॥ भुजङ्गप्रयातं वृत्तं चतुर्भिर्यैः प्रकीर्तितम् ॥ प्रियंवदा नभजैश्च मणिमाला तयौ तयौ ॥ १६ ॥ गुहवक्त्रैश्च सन्निद्रा ललिता स्यात्तभौ जरौ ॥ प्रमिताक्षरा सजससैरुज्ज्वला तु ननौ भरौ ॥ १७ ॥ ममौ ययौ वैश्वदेवी पञ्चाश्वैश्च यतिर्भवेत् ॥ मभौ समौ जलधरमालाब्ध्यन्त्यैर्यतिर्भवेत् ॥ १८ ॥ नौ ततौ गः क्षमावृत्तं तुरगैश्च रसैर्यतिः ॥ प्रहर्षिणी मनौ ज्रौ गा वह्निभिर्दशभिर्यतिः ॥ १९ ॥ जभौ सजौ गो रुचिरा चतुर्भिश्च ग्रहैर्यतिः ॥ मत्तमयूरं मतयाः सगौ वेदग्रहैर्यतिः ॥२०॥ मञ्जुभाषिणी सजसा जगौ सुनन्दिनी सजसा मगौ ॥ ननौ ततौ चन्द्रिका गः सप्तभिश्च रसैर्यतिः ॥२१॥ असम्बाधा मतनसा गगौ बाणग्रहैर्यतिः ॥ ननराः सो लघुगुरुः स्वरैः प्रोक्तापराजिता ॥ २२ ॥ ननौ भनौ प्रहरणकलिकेयं लगौ तथा ॥ वसन्ततिलका सिंहोन्नता तभजा जगौ गुरुः ॥ २३ ॥ भजौ सनौ गगाविन्दुवदनाथ सुकेशरम् ॥ नरना रलगाः पादे शर्करी प्रतिपादिता ॥ २४ ॥ चतुर्दशलघुः स्याच्च श्रेष्ठा शशिकला सगा ॥ रसग्रहयतिः स्रक्स्रा वसुशैलयतिस्तथा ॥ २५ ॥ स्यान्मणिगुणनिकरो मालिनी ननमा ययौ ॥ वसुस्वरयतिः स्याच्च नजौ भज्राः प्रभद्रकम् ॥ २६ ॥ एला सयौ ननौ यस्स्याच्चित्रलेखास्वराष्टकैः ॥ मरौ मयौ यश्च भवेदुक्तेयमतिशर्करी ॥ २७ ॥ स्वरात्स्वं वृषभगजजृम्भितं भ्रनना नगौ ॥ नजभजरा वाणिनी गः पिङ्गलेनाधिरीरिता ॥ २८ ॥ रसरुद्रैः शिखरिणी यमौ नसभला गुरुः ॥ वसुग्रहयातिः पृथ्वी जसौ जसयला गुरुः ॥ २९ ॥ दशस्वरैर्वंशपत्रपतितं भ्रौन्नभा लगौ ॥ षड्वेदाश्वैश्च हरिणी नसमा रसला गुरुः ॥ ३० ॥ मन्दाक्रान्ताब्धिषड्नगैर्मभनास्ततगा गुरुः ॥ नर्दटकं नजभजा जलौ गो यतिरेव च ॥ ३१ ॥ सप्तर्त्वब्धिः कोकिलकमत्यष्टिः स्याच्च पूर्ववत् ॥ भूतर्त्वश्वैः कुसुमितलता म्तौ न्यौ ययौ धृतिः ॥ ३२ ॥ रसर्त्वश्वैर्यमौ न्सौ रौ मेघविस्फूर्जिता रगौ ॥ शार्दूलविक्रीडितं मः सूर्याश्वैः सज्सतास्तगौ ॥ ३३ ॥ छन्दो ह्यतिधृतिः प्रोक्तमत ऊर्द्ध्वं कृतिर्भवेत् ॥ सप्ताश्वर्त्तुः सुवदना भ्रौ मनौ यभला गुरुः ॥ ३४ ॥ वृत्तं रजौ रजौ पादे रजौ गो लः कृतिर्भवेत् ॥ त्रिसप्तकैः स्रग्धरा स्यात्प्रकृतिर्म्रभनैस्त्रियैः ॥ ३५ ॥ दिगर्कैर्भद्रकं भ्रौ न्रौ नरना गो यथाकृतिः ॥ नजौ भश्वाश्व ललितं जभौ जभलगा भवेत् ॥ ३६ ॥ मत्ताक्रीडश्चाष्टबाणदशकैर्मौ तनौ ननौ ॥ नलौ गुरुश्च विकृतिश्छिन्ना संकृतिरुच्यते ॥ ३७ ॥ पञ्चाश्वाकैर्भतौ तन्वी नसभा भनया गणाः ॥ क्रौञ्चपदा बाणशरवसुशैलैर्भमौ सभौ ॥ ३८ ॥ नौ नौ गोऽतिकृतिः प्रोक्ता च्छन्दो ह्युत्क्

तिरुच्यते ॥ वस्वीशाश्वैर्मभतनैः स्याद्भुजङ्गविजृम्भितम् ॥ ३९ ॥ ननरसैर्लगयुक्तैश्च अपवाहाख्यकं यतिः ॥ गुहैः षड्भी रसैर्वाणैर्मोनाः षट् सगगा गणाः ॥ ४० ॥ चण्डवृत्तिप्रपातोऽसौ दण्डको नौ ततोऽगराः ॥ रेफवृद्ध्यान्तकादस्य व्यालजीमूतकादयः ॥ ४१ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे समवृत्तलक्षणादिनिरूपणं नाम नवोत्तरद्विशततमोऽध्यायः ॥ २०९ ॥ ॥ सूत उवाच ॥ ससससलगाश्च विषमे पादे यद्युपचित्रकम् ॥ समे भौ भगगाः स्युश्च द्रुतमध्या भभौ भगौ ॥ १ ॥ गः पादे विषमेऽन्यत्र नजौ ज्यौ च गणौ स्मृतौ ॥ २ ॥ विषमे वेगवती सा गः समे भौ भो गगौ गणाः ॥ पादेऽसमे तजौ रो गः समे मसौ जगौ गरुः ॥ भवेद्भद्रविराट् केतुमती तु विषमे सजौ ॥ ३ ॥ सगौ समे भ्रौ नगगा आख्यानकी तथासमे ॥ तौ जो गगौ समे पादे जतजा गुरुकद्वयम् ॥ ४ ॥ विपरीताख्यानकं स्याद्विषमे जस्तजौ गगौ ॥ ततौ जगौ समे गः स्यात् पिङ्गलेन ह्युदाहृतम् ॥ ५ ॥ पादेऽथ विषमे चैव पुष्पिताग्रा ननौ रयौ ॥ समे नजौ जरौ गश्च वैतालीयं वदन्ति हि ॥ वृत्तश्चापरवक्राख्यमौपच्छन्दसिकं परम् ॥ ६ ॥ वाङ्मती[1] रजरा यः स्याद्युग्मे जरजा रगौ ॥ ॥ ७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽर्द्धसमवृत्तलक्षणादिनिरूपणं नाम दशोत्तरद्विशततमोऽध्यायः ॥ २१० ॥ सूत उवाच ॥ प्रथमोऽष्टाक्षरैः पादो द्वितीयो द्वादशाक्षरैः ॥ तृतीयः षोडशार्णैश्च विंशद्वर्णैश्चतुर्थकः ॥१॥ सामान्यलक्षणं पदचतुरूर्ध्वाभिरधस्य हि ॥ १ ॥ आपीडः सर्वलः प्रोक्तः पूर्वपादान्तगद्वयः ॥ २ ॥ द्वितीयेऽष्टाक्षरैः पादे कलिका प्रथमेऽर्कजे ॥ लवली स्यात्तृतीयेऽथ पूर्ववच्चाष्टकाक्षरे ॥ प्रोक्ता चामृतधारेयं चतुरष्टाक्षरे सति ॥ ३ ॥ (इति पदचतुरूर्ध्वप्रकरणम्) ॥ सजौ सलौ च प्रथमे नसजा गो द्वितीयके ॥ तृतीये भनभा गश्च चतुर्थे सजसा जगौ ॥ ४ ॥ पूर्ववत्स्यात्सौरभकं तृतीयेऽस्रौ रनौ भगौ ॥ ललितश्चोद्गतावत्स्यात्तृतीयेंऽस्रौ ननौ ससौ ॥ ५ ॥ (इत्युद्गताप्रकरणम्) ॥ उपस्थितप्रचुपितं प्रथमेंऽस्रौ मसौ जभौ ॥ गौ द्वितीये सनजरा गस्तृतीये ननौ च सः ॥ नौ नजौ यश्चतुर्थे स्याच्छेषपादाश्च पूर्ववत् ॥ ६ ॥ तृतीयेंऽस्रौ विशेषश्च वृत्तं स्यान्नौ सनौ नसौ ॥ ७ ॥ आर्षभं तजराः पादे तृतीयेऽन्यच्च पूर्ववत् ॥ पूर्ववत्प्रथमं शेषे तत्राः शुद्धविराड्भवेत् ॥ ८ ॥ (इत्युपस्थितप्रचुपितप्रकरणम्) ॥ विषमाक्षरपादं वा पञ्चषट्कादि यावकम् ॥ छन्दोऽत्र नोक्ता गाथेति दशधर्म्मादिवद्भवेत ॥ ९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विषममवृत्तलक्षणादिनिरूपणं नामैकादशोत्तरद्विशशततमोऽध्यायः ॥ २११ ॥

१ मतीति पैङ्गले ।

सूत उवाच ॥ प्रस्तार आद्यगोऽथो लः परतुल्योऽथ पूर्वगः ॥ नष्टमध्ये समेऽके लः समेऽर्द्धे विषमे गुरुः ॥१॥ प्रतिलोमगुणं लाद्यं द्विरुद्दिष्टक एकनु
त् ॥२॥ संख्या द्विरर्द्धे रूपे तु शून्यं शून्ये द्विरीरितम् ॥ तावदर्द्धे तद्गुणितं द्विद्व्यूनन्तु तदन्ततः ॥३॥ परे पूर्णे परे पूर्णे मेरुः प्रस्तारतो भवेत् ॥४॥
लगसंख्या वृत्तसंख्या चाद्यांगुलमथोद्धृतः ॥ संख्यैव द्विगुणैकोनाच्छन्दःसारोऽयमीरितः ॥ ५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमां०
आचा० छन्दोलक्षणं नाम द्वादशोत्तरद्विशततमोऽध्यायः ॥२१२॥ सूत उवाच ॥हरेः श्रुत्वाऽब्रवीद्ब्रह्मा यथा व्यासाय शौनक ॥ ब्राह्मणादिसमाचारं
सर्वदं ते तथा वदे ॥१॥ श्रुतिस्मृती तु विज्ञाय श्रौतं कर्म समाचरेत् ॥ श्रौतं कर्म न चेदुक्तं तदा स्मार्त्तं समाचरेत्॥२॥ तत्राप्यशक्तः करणे सदाचारं
चरेद्बुधः ॥ श्रुतिस्मृती ह विप्राणां लोचने कर्मदर्शने ॥ ३ ॥ श्रुत्युक्तः परमो धर्मः स्मृतिशास्त्रगतोऽपरः ॥ शिष्टाचारेण संप्राप्तस्त्रयो धर्माः सनातनाः
॥ ४ ॥ सत्यं दानं दयाऽलोभो विद्येज्या पूजनं दमः ॥ अष्टौ तानि पवित्राणि शिष्टाचारस्य लक्षणम् ॥ ५ ॥ तेजोमयानि पूर्वेषां शरीराणीन्द्रिया
णि च ॥ न लिप्यते पातकेन पद्मपत्रमिवाम्भसा ॥ ६ ॥ निवासमुख्या वर्णानां धर्माचाराः प्रकीर्त्तिताः ॥ सत्यं यज्ञस्तपो दानमेतद्धर्मस्य लक्षणम्
॥ ७ ॥ अदत्तस्यानुपादानं दानमध्ययनं जपः ॥ विद्या वित्तं तपः शौचं कुले जन्म त्वरोगिता ॥ ८ ॥ संसारोच्छित्तिहेतुश्च धर्मादेव प्रवर्त्तते ॥ धर्मा
त्सुखं च ज्ञानं च ज्ञानान्मोक्षोऽधिगम्यते ॥ ९ ॥ इज्याध्ययनदानानि यथाशास्त्रं सनातनः ॥ ब्रह्मक्षत्रियवैश्यानां सामान्यो धर्म उच्यते ॥ १० ॥
याजनाध्ययने शुद्धे विशुद्धाच्च प्रतिग्रहः ॥ वृत्तित्रयमिदं प्राहुर्मुनयः श्रेष्ठवर्णिनः ॥ ११ ॥ शस्त्रेणाजीवनं राज्ञो भूतानाञ्चाभिरक्षणम् ॥ पाशुपाल्यं कृ
षिः पण्यं वैश्यस्याजीवनं स्मृतम् ॥ १२ ॥ शूद्रस्य द्विजशुश्रूषा द्विजानामनुपूर्वशः ॥ गुरौ वासोऽग्निशुश्रूषा स्वाध्यायो ब्रह्मचारिणः ॥ १३ ॥
त्रिः स्नाता स्नापिता भैक्ष्यं गुरौ प्राणान्तिकी स्थितिः ॥ समेखलो जटी दण्डी मुण्डी वा गुरुसंश्रयः ॥ १४ ॥ अग्निहोत्रोपचरणं जीवनं च स्वकर्म
भिः ॥ धर्मदारेषु कल्पेत पर्ववर्जं रतिक्रियाः ॥ १५ ॥ देवपित्रतिथिभ्यश्च पूजादिष्वनुकल्पनम् ॥ श्रुतिस्मृत्यर्थसंस्थानं धर्मोऽयं गृहमेधिनः ॥ १६ ॥
जटित्वमग्निहोत्रत्वं भूशय्याजिनधारणम् ॥ वने वासः पयोमूलनीवारफलवृत्तिता ॥ १७ ॥ प्रतिषिद्धान्निवृत्तिश्च त्रिःस्नानं व्रतधारिता ॥ देवतातिथिपू
जा च धर्मोऽयं वनवासिनः ॥ १८ ॥ सर्वारम्भपरित्यागो भिक्षान्नं वृक्षमूलता ॥ निष्परिग्रहताऽद्रोहः समता सर्वजन्तुषु ॥ १९ ॥ प्रियाप्रियपरिष्वंगे
सुखदुःखाधिकारिता ॥ सबाह्याभ्यन्तरे शौचं वाग्यमो ध्यानचारिता ॥ २० ॥ सर्वेन्द्रियसमाहारो धारणाध्याननित्यता ॥ भावसंशुद्धिरेत्येष परिव्राड्
धर्म उच्यते ॥ २१ ॥ अहिंसा सूनृता वाणी सत्यशौचे क्षमा दया ॥ वर्णिनां लिंगिनां चैव सामान्यो धर्म उच्यते ॥ २२ ॥ यथोक्तकारिणः सर्वे

प्रयान्ति परमां गतिम् ॥ आ बोधात्स्वपनं यावत् गृहिधर्मं च वच्मि ते ॥२३॥ ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ॥ कायक्लेशांश्च तन्मूलान्वेदतत्त्वार्थमेव च ॥ २४ ॥ शर्वर्य्यन्ते समुत्थाय कृतशौचः समाहितः ॥ स्नात्वा सन्ध्यामुपासीत सर्वकालमतन्द्रितः ॥ २५ ॥ प्रातःसन्ध्यामुपासीत दन्तधावनपूर्विकाम् ॥ उभे मूत्रपुरीषे च दिवा कुर्य्यादुदङ्मुखः ॥२६॥ रात्रौ च दक्षिणे कुर्य्यादुभे सन्ध्ये यथा दिवा ॥ छायायामन्धकारे वा रात्रौ वाहनि वा द्विजः ॥ २७ ॥ यथा तु समुखः कुर्य्यात्प्राणबाधाभयेषु च ॥ गोमयांगारवल्मीकफालाकृष्टे जले शुभे ॥ २८ ॥ मार्गोपजीव्यच्छायासु न मूत्रं च पुरीषकम् ॥ अन्तर्जलाद्देवगृहाद्वल्मीकान्मूषिकस्थलात् ॥ २९ ॥ परेषां शौचशिष्टाच्च श्मशानाच्च मृदं त्यजेत् ॥ एकां लिंगे मृदं दद्याद्वामहस्ते मृदं द्विधा ॥ ३० ॥ उभयोर्द्धे च दातव्ये मूत्रशौचं प्रचक्षते ॥ एकां लिंगे गुदे तिस्रस्तथा वामकरे दश ॥३१॥ पञ्च पादे दशैकस्मिन्करयोः सप्त मृत्तिकाः ॥ अर्द्धप्रसृतिमात्रा तु प्रथमा मृत्तिका स्मृता ॥ ३२ ॥ द्वितीया च तृतीया च तदर्द्धा परिकीर्त्तिता ॥ उपविष्टस्तु विण्मूत्रं कर्त्तुं यस्तु न विन्दति ॥ ३३ ॥ स कुर्य्यादर्द्धशौचं तु स्वस्य शौचस्य सर्वदा ॥ दिवा शौचस्य रात्र्यर्द्धं यद्वा पादो विधीयते ॥ ३४ ॥ स्वस्थस्य तु यथोद्दिष्टमार्त्तः कुर्य्याद्यथाबलम् ॥ वसा शुक्रमसृङ् मज्जा लाला विण्मूत्रकर्णविट् ॥ ३५ ॥ श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः ॥ मन्येत यावता शुद्धिं तावच्छौचं समाचरेत् ॥ ३६ ॥ प्रमाणं शौचसंख्याया नादिष्टैरवशिष्यते[1] ॥ शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा ॥ ३७ ॥ मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिरथान्तरम् ॥ त्रिराचामेदपः पूर्वं द्विः प्रमृज्यात्ततो मुखम् ॥ ३८ ॥ संमृज्यांगुष्ठमूलेन त्रिभिरास्यमुपस्पृशेत् ॥ अंगुष्ठेन प्रदेशिन्या घ्राणं पश्चादनन्तरम् ॥ ३९ ॥ अंगुष्ठानामिकाभ्यां च चक्षुःश्रोत्रे पुनःपुनः ॥ कनिष्ठांगष्ठयोर्नाभिं हृदयं तु तलेन वै ॥ ४० ॥ सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥ ऋचो यजूंषि सामानि त्रिः पठन्प्रीणयेत्क्रमात् ॥ ४१ ॥ अथर्वांगिरसौ पूर्वं द्विः प्रमाष्टर्यथ तन्मुखम् ॥ इतिहासपुराणानि वेदांगानि यथाक्रमम् ॥४२॥ खं मुखे नासिके वायुं नेत्रे सूर्य्यं श्रुती ( तीर्दि ) दिशः ॥ प्राणग्रन्थिमथो नाभिं ब्रह्माणं हृदये स्पृशेत् ॥ ४३ ॥ रुद्रं मूर्ध्ना समालभ्य प्रीणात्यथ शिखामृषीन् ॥ बाहू यमेन्द्रवरुणकुबेरवसुधानलान् ॥ ४४ ॥ अभ्युक्ष्य चरणौ विष्णुमिन्द्रं विष्णुं करद्वयम् ॥ अग्निर्वायुश्च सूर्य्येन्दुगिरयोऽङ्गुलिपर्वसु ॥ ४५ ॥ गंगाद्याः सरितस्तासु या रेखाः करमध्यगाः ॥ उषःकाले तु संप्राप्ते शौचं कृत्वा यथार्थवत् ॥ ४६ ॥ ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम् ॥ मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः ॥ ४७ ॥

१ नादिष्टैरुपाशिष्य ( दिश्य ) ते० ।

तस्मात्सर्वप्रयत्नेन कुर्य्याद्वै दन्तधावनम् ॥ कदम्बबिल्वखदिरकरवीरवटार्जुनाः ॥ ४८ ॥ यूथी च बृहती जाती करञ्जार्कातिमुक्तकाः ॥ जम्बूमधूकापामार्गशिरीषोदुम्बरासनाः ॥ ४९ ॥ क्षीरिकण्टकिवृक्षाद्याः प्रशस्ता दन्तधावने ॥ कटुतिक्तकषायाश्च धनारोग्यसुखप्रदाः ॥ ५० ॥ प्रक्षाल्य भुक्त्वा च शुचौ देशे त्यक्त्वा तदाचामेत् ॥ अमायां च तथा षष्ठ्यां नवम्यां प्रतिपद्यपि ॥ ५१ ॥ वर्जयेद्दन्तकाष्ठंतु तथैवार्कस्य वासरे ॥ अभावे दन्तकाष्ठस्य निषिद्धायां तथा तिथौ ॥ ५२ ॥ अपां द्वादशगण्डूषैः कुर्वीत मुखशोधनम् ॥ प्रातः स्नानं प्रशंसन्ति दृष्टादृष्टकरं हितम् ॥ ५३ ॥ सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥ अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ॥ ५४ ॥ स्रवत्येष दिवा रात्रौ प्रातःस्नानं विशोधनम् ॥ मनःप्रसादजननं रूपसौभाग्यवर्द्धनम् ॥ ५५ ॥ शोकदुःखप्रशमनं गंगास्नानवदाचरेत् ॥ अद्य हस्ते तु नक्षत्रे दशम्यां ज्येष्ठके सिते ॥ ५६ ॥ दशपापहरायां च अदत्वा दानकल्मषम् ॥ विरुद्धाचरणं हिंसा परदारोपसेवनम् ॥ ५७ ॥ पारुष्यानृतपैशुन्यमसम्बद्धाभिभाषणम् ॥ परद्रव्याभिधानं च मनसानिष्टचिन्तनम् ॥ ५८ ॥ एतद्दशाघघातार्थं गंगास्नानं करोम्यहम् ॥ प्रातः संक्षेपतः स्नानं वानप्रस्थगृहस्थयोः ॥ ५९ ॥ यतेस्त्रिषवणं स्नानं सकृत्त ब्रह्मचारिणः ॥ आचम्य तीर्थमावाह्य स्नायात्स्मृत्वाव्ययं हरिम् ॥ ६० ॥ तिस्रः कोट्यस्तु विज्ञेया मन्देहा नाम राक्षसाः ॥ उदयन्तं दुरात्मानः सूर्य्यमिच्छन्ति खादितुम् ॥ ६१ ॥ स हन्ति सूर्य्यं सन्ध्यायां नोपास्तिं कुरुते तु यः ॥ दहन्ति मन्त्रपूतेन तोयेनानलरूपिणा ॥ ६२ ॥ अहोरात्रस्य यः सन्धिः सा सन्ध्या भवतीति ह ॥ द्विनाडिका भवेत्सन्ध्या यावद्भवति दर्शनम् ॥ ६३ ॥ सन्ध्याकर्मावसाने तु स्वयं होमो विधीयते ॥ स्वयं होमफलं यत्तु तदन्येन न जायते ॥ ६४ ॥ ऋत्विक्पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ॥ एभिरेव हुतं यत्तु तद्धुतं स्वयमेव हि ॥ ६५ ॥ ब्रह्मा वै गार्हपत्याग्निर्दक्षिणाग्निस्त्रिलोचनः ॥ विष्णुराहवनीयाऽग्निः कुमारः सत्य उच्यते ॥ ६६ ॥ कृत्वा होमं यथाकालं सौरान्मन्त्राञ्जपेत्ततः ॥ समाहितात्मा सावित्रीं प्रणवं च यथोदितम् ॥ ६७ ॥ प्रणवे नित्ययुक्तस्य व्याहृतीषु च सप्तसु ॥ त्रिपदायां च सावित्र्यां न भयं विद्यते क्वचित् ॥ ॥ ६८ ॥ गायत्रीं यो जपेन्नित्यं कल्यमुत्थाय मानवः ॥ लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ ६९ ॥ श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा॥ अक्षसूत्रधरा देवी पद्मासनगता शुभा ॥ ७० ॥ आवाह्य यजुषानेन तेजोऽसीति विधानतः ॥ एतद्यजुः पुरा देवैर्दृष्टिदर्शनकांक्षिभिः ॥ ७१ ॥ आदि

१ तदावसेत्० ।

त्यमण्डलान्तःस्थां ब्रह्मलोकस्थितामपि ॥ तत्रावाह्य जपित्वातो नमस्काराद्विसर्जयेत् ॥ ७२ ॥ पूर्वाह्ण एव कुर्वीत देवतानां च पूजनम् ॥ न विष्णोः
परमो देवस्तस्मात्तं पूजयेत्सदा ॥ ७३ ॥ ब्रह्मविष्णुशिवान्देवान्न पृथग्भावयेत्सुधीः ॥ लोकेऽस्मिन्मंगलान्यष्टौ ब्राह्मणो गौर्हुताशनः ॥ ७४ ॥
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥ एतानि सततं पश्येदर्चयेच्च प्रदक्षिणम् ॥ ७५ ॥ वेदस्याध्ययनं पूर्वं विचारोभ्यसनं जपः ॥ तद्दानं चैव
शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥७६॥ वेदार्थं यज्ञशास्त्राणि धर्मशास्त्राणि चैव हि ॥ मूल्येन लेखयित्वा यो दद्याद्याति स वैदिकम् ॥७७॥ इतिहा
सपुराणानि लिखित्वा यः प्रयच्छति ॥ ब्रह्मदानसमं पुण्यं प्राप्नोति द्विगुणीकृतम्॥७८॥तृतीये च तथा भागे पोष्यवर्गार्थसाधनम् ॥ माता पिता गुरुर्भ्रा
ता प्रजा दीनाः समाश्रिताः ॥ ७९ ॥ अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा उदाहृताः ॥ भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ॥८०॥भरणं पोष्य
वर्गस्य तस्माद्यत्नेन कारयेत् ॥ स जीवति वरश्चैको बहुभिर्योपजीव्यति ॥ ८१ ॥ जीवन्तो मृतकास्त्वन्ये पुरुषाः स्वोदरम्भराः ॥ स्वकीयोदरपूर्तिश्च
कुक्कुरस्यापि विद्यते ॥८२॥ अर्थेभ्योऽपि विवृद्धेभ्यः सम्भूतेभ्यस्ततस्ततः ॥ क्रियाः सर्वाः प्रवर्तन्ते पर्वतेभ्य इवापगाः ॥ ८३ ॥ सर्वरत्नाकरा भूमिर्धा
न्यानि पशवः स्त्रियः ॥ अर्थस्य कार्य्ययोगित्वादर्थ इत्यभिधीयते ॥८४॥ अद्रोहेणैव भूतानामल्पद्रोहेण वा पुनः ॥ या वृत्तिस्तां समास्थाय विप्रो
जीवेदनापदि ॥ ८५ ॥ धनं तु त्रिविधं ज्ञेयं शुक्लं शबलमेव च ॥ कृष्णं च तस्य विज्ञेयो विभागः सप्तधा पृथक् ॥८६॥ क्रमायत्तं प्रीतिदत्तं प्राप्तं च
सह भार्य्यया ॥ अविशेषेण सर्वेषां वर्णानां त्रिविधं धनम् ॥८७॥ वैशेषिकं धनं दृष्टं ब्राह्मणस्य त्रिलक्षणम् ॥ याजनाध्यापने नित्यं विशुद्धश्च (द्धाच्च)
प्रतिग्रहः॥८८॥ त्रिविधं क्षत्रियस्यापि प्राहुर्वैशेषिकं धनम्॥शुद्धार्थं लब्धकरजं दण्डाप्तं जयजं तथा॥८९॥वैशेषिकं धनं दृष्टं वैश्यस्यापि विलक्षणम् ॥
कृषिगोरक्षवाणिज्यं शूद्रस्यैभ्यस्त्वनुग्रहात्॥९०॥कुसीदकृषिवाणिज्यं प्रकुर्वीत स्वयं परम् (कृतम्)॥आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः॥९१॥
कृष्यादिके
बहवो वर्त्तनोपाया ऋषिभिः परिकीर्तिताः ॥ सर्वेषामपि चैवैषां कुसीदमधिकं विदुः ॥ ९२ ॥ अनावृष्ट्या राजभयान्मूषिकाद्यैरुपद्रवैः ॥
देशं गतानां या
भवेद्बाधा सा कुसीदे न विद्यते ॥९३॥ शुक्लपक्षे तथा कृष्णे रजन्यां दिवसेपि वा ॥ उष्णे वर्षति शीते वा वर्द्धनं न निवर्तते ॥ ९४ ॥
वृद्धिर्नानापण्योपजीविनाम् ॥ कुसीदं कुर्वतः सम्यक् संस्थितस्यैव जायते ॥९५॥ लब्धलाभः पितॄन्देवान्ब्राह्मणांश्चैव पूजयेत् ॥ ते तृप्तास्तस्य तद्दोषं
शमयन्ति न संशयः॥९६॥वणिक्कुसीदं दद्याद्यो वस्त्रं गांकाञ्चनादिकम् ॥ कृषीवलोऽन्नपानादियानशय्यासनानि च ॥९७ ॥ राजभ्यो विंशतिं दत्त्वा
पशुस्वर्णादिकं शतम् ॥ पादेनास्य च यावक्यं कुर्यात्संचयमात्मवान्॥९८॥अर्धेन चात्मभरणं नित्यनैमित्तिकान्वितम्॥ पादं चेत्यर्थयामस्य मूलभूतं

विवर्धयेत् ॥ ९९ ॥ विद्या शिल्पं भृतिः सेवा गोरक्षा विपणिः कृषिः ॥ वृत्तिर्भैक्ष्यं कुसीदं च दश जीवनहेतवः ॥ १०० ॥ प्रतिग्रहार्जिता विप्रे क्षत्रिये शस्त्रनिर्जिता ॥ वैश्ये न्यायार्जिताः स्वार्थाः शूद्रे शुश्रूषयार्जिताः ॥१०१॥ नदी बहूदका शाकमृत्पर्णानि समित्कुशाः ॥ आग्नेयो ब्रह्मघोषश्च विप्राणां धनमुत्तमम् ॥ १०२ ॥ अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे ॥ अमृतं तद्विदुर्देवास्तस्मात्तन्नैव वर्जयेत् ॥ १०३ ॥ गुरुद्रव्यांश्चोज्जिहीर्षुरर्चिष्यन्दे वतातिथीन् ॥ सर्वतः प्रतिगृह्णीयान्न तुष्येत्तु स्वयं ततः ॥ १०४ ॥ साधुतः प्रतिगृह्णीयादथ वासाधुतो द्विजः ॥ गुणवानल्पदोषश्च निर्गुणो हि निम ज्जति ॥१०५॥ एवं त्वक्षरवृत्त्या वा कृत्वा भरणमात्मनः ॥ कुर्याद्विशुद्धिं परतः प्रायश्चित्तं द्विजोत्तमः ॥ १०६ ॥ चतुर्थे च तथा भागे स्नानार्थं मृद माहरेत् ॥ तिलपुष्पकुशादीनि स्नानं चाकृत्रिमे जले ॥१०७॥ नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ॥ मार्जनाचमावगाहाश्चाष्टस्नानं प्रकीर्त्ति तम् ॥ १०८॥ अस्नातस्तु पुमान्नार्हो जपाग्निहवनादिषु ॥ प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्त्तितम् ॥ १०९॥ चाण्डालशवविष्ठाद्यान्स्पृष्ट्वा स्नानं रज स्वलाम् ॥ स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत् ॥ ११० ॥ पुष्यस्नानादिकं स्नानं दैवज्ञविधिचोदितम् ॥ तद्धि काम्यं समुद्दिष्टं नाकाम स्तत्प्रयोजयेत् ॥ १११ ॥ जप्तुकामः पवित्राणि अर्चिष्यन्देवतातिथीन् ॥ स्नानं समाचरेद्यस्तु क्रियाङ्गं तच्च कीर्त्तितम् ॥ ११२ ॥ मलापकर्षणार्थाय प्रवृत्तिस्तत्र नान्यथा ॥ सरःसु देवखातेषु तीर्थेषु च नदीषु च ॥ ११३ ॥ स्नानमेव क्रिया यस्मात्क्रियास्नानमतः परम् ॥ अद्भिर्गात्राणि शुध्यन्ति तीर्थस्नानात्फलं लभेत् ॥ ११४ ॥ मार्जनान्मज्जनैर्मन्त्रैः पापमाशु प्रणश्यति ॥ नित्यं नैमित्तिकं चापि क्रियाङ्गं मलकर्षणम् ॥ ११५ ॥ तीर्था भावे तु कर्त्तव्यमुष्णोदकपरोदकैः ॥ भूमिष्ठादुद्धृतं पुण्यं ततः प्रस्रवणोदकम् ॥ ११६ ॥ ततोऽपि सारसं पुण्यं तस्मान्नादेयमुच्यते ॥ तीर्थतोयं ततः पुण्यं गाङ्गं पुण्यं तु सर्वतः ॥ ११७ ॥ गाङ्गं पयः पुनात्याशु पापमामरणान्तिकम् ॥ गयायां च कुरुक्षेत्रे यत्तोयं समुपस्थितम् ॥ ११८ ॥ तस्मात्तु गाङ्गमपरं जानीयात्तोयमुत्तमम् ॥ पुत्रजन्मानि योगेषु तथा संक्रमणे रवेः ॥ ११९ ॥ राहोश्च दर्शने स्नानं प्रशस्तं निशि नान्यथा ॥ उषस्युषसि यत्स्नानं सन्ध्यायामुदिते रवौ ॥ १२० ॥ प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥ यत्फलं द्वादशाब्दानि प्राजापत्ये कृते भवेत् ॥ १२१ ॥ प्रातः स्नायी तदाप्नोति वर्षेण श्रद्धयान्वितः ॥ य इच्छेद्विपुलान् भोगांश्चन्द्रसूर्य्यग्रहोपमान् ॥ १२२ ॥ प्रातःस्नायी भवेन्नित्यं मासौ द्वौ माघफाल्गुनौ ॥ यस्तु माघं समासाद्य प्रातःस्नायी हविष्यभुक् ॥ १२३ ॥ अतिपापं महाघोरं मासादेव व्यपोहति ॥ मातरं पितरं वापि भ्रातरं सुहृदं गुरुम् ॥१२४ ॥

१ एवं तस्करवृ० । २ उद्धिन्नगाङ्ग० ।

यमुद्दिश्य निमज्जेत द्वादशांशं लभेत्तु सः ॥ तुष्यत्यामलकैर्विष्णुरेकादश्या विशेषतः ॥ १२५ ॥ श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः ॥
सन्तापः कीर्त्तिरल्पायुर्धनं निधनमेव च ॥ १२६ ॥ आरोग्यं सर्वकामाप्तिरभ्यंगाद्भास्करादिषु ॥ उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः ॥
॥१२७॥ तावच्छ्रीस्तिष्ठति प्रीता यावत्तैलं न संस्पृशेत् ॥ एवं स्नात्वा पितॄन्देवान्मनुष्यांस्तर्पयेन्नरः ॥ १२८ ॥ नाभिमात्रे जले स्थित्वा चिन्तयेदूर्ज
मानसः ॥ आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ॥ १२९ ॥ त्रींस्त्रीनेवाञ्जलीन्दद्यादाकाशे दक्षिणे तथा ॥ वसित्वा वसनं शुष्कं स्थलस्था
स्तीर्णबर्हिषि ॥ १३० ॥ विधिज्ञास्तर्पणं कुर्य्युर्न पात्रे तु कदाचन ॥ यदपां क्रूरमांसात्तु यदमेध्यं तु किञ्चन ॥ १३१ ॥ अशान्तं मलिनं यच्च
तत्सर्वमपगच्छतु ॥ गृहीत्वानेन मन्त्रेण तोयं सव्येन पाणिना ॥ १३२ ॥ प्रक्षिपेद्दिशि नैर्ऋत्यां रक्षोऽपहतये तु तत् ॥ निषिद्धभक्षणाद्यत्तु पापाद्य
च्च प्रतिग्रहात् ॥ १३३ ॥ दुष्कृतं यच्च मे किञ्चिद्वाङ्मनःकायकर्मभिः ॥ पुनातु मे तदिन्द्रस्तु वरुणः सबृहस्पतिः ॥ १३४ ॥ सविता च भगश्चैव
मुनयः सनकादयः ॥ आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यत्विति ब्रुवन् ॥ १३५ ॥ क्षिपेदब्जलींस्त्रींस्तु कुर्वन्संक्षेपतर्पणम् ॥ सुराणामर्चनं कुर्य्याद्ब्रह्मा
दीनाममत्सरी ॥१३६॥ ब्राह्मवैष्णवरौद्रैश्च सावित्रैर्मैत्रवारुणैः ॥ तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वदेवान्नमस्य च ॥ १३७ ॥ नमस्कारेण पुष्पाणि विन्यसेत्तु
पृथक्पृथक् ॥ सर्वदेवमयं विष्णुं भास्करं चाप्यथार्चयेत् ॥ १३८ ॥ दद्यात्पुरुषसूक्तेन यः पुष्पाण्यप एव वा ॥ अर्चितं स्याज्जगदिदं तेन सर्वं
चराचरम् ॥ १३९ ॥ अन्यैश्च तान्त्रिकैर्मन्त्रैः पूजयेच्च जनार्दनम् ॥ आदावर्घ्यं प्रदातव्यं ततः पश्चाद्विलेपनम् ॥ १४० ॥ ततः पुष्पाञ्जलिं धूपमु
पहारफलानि च ॥ स्नानमन्तर्जले चैव मार्जनाचमनं तथा ॥१४१॥ जलाभिमन्त्रणं यच्च तीर्थस्य परिकल्पयेत् ॥ अघमर्षणसूक्तेन त्रिवारं त्वेव नि
त्यशः ॥१४२॥ स्नाने चरितमित्येतत्समुद्दिष्टं महात्मभिः ॥ ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते ॥ १४३ ॥ तूष्णीमेव तु शूद्रस्य सनमस्कारकं
स्मृतम् ॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्॥१४४॥ होमो दैवी बलिर्भौतो न यज्ञोऽतिथिपूजनम् ॥ गवा गोष्ठे दशगुणं अग्न्यगारे शताधिकम्॥
॥१४५॥ सिद्धक्षेत्रेषु तीर्थेषु देवतायतनेषु च ॥ सहस्रशतकोटीनामनन्तं विष्णुसन्निधौ ॥१४६॥ पञ्चमे च तथा भागे संविभागो यथार्थतः ॥ पितृदे
वमनुष्याणां कोटीनां चोपदिश्यते ॥१४७॥ ब्राह्मणेभ्यः प्रदायाग्र्यं यः सुहृद्भिः सहाश्नुते ॥ स प्रेत्य लभते स्वर्गमन्नदानं समाचरन् ॥ १४८ ॥ पूर्वं
मधुरमश्नीयाल्लवणाम्लौ च मध्यतः ॥ कटुतिक्तकषायांश्च पयश्चैव तथान्ततः ॥ १४९ ॥ शाकं च रात्रौ भूमिष्ठमत्यन्तं च विवर्जयेत् ॥ न

१ दायान्नं पः० ।

चैकरससेवायां प्रसज्जेत कदाचन ॥ १५० ॥ अमृतं ब्राह्मणस्यान्नं क्षत्रियान्नं पयः स्मृतम् ॥ वैश्यस्य चान्नमेवान्नं शूद्रान्नं रुधिरं स्मृतम् ॥ १५१ ॥
अमावासी वसेदत्र एकहायनमेव वा ॥ १५२ ॥ तत्र श्रीश्चैव लक्ष्मीश्च वसते नात्र संशयः ॥ उदरे गार्हपत्याग्निः पृष्ठदेशे तु दक्षिणः ॥ १५३ ॥
आस्ये चाहवनीयोऽग्निः सत्यः पर्व च मूर्द्धनि ॥ यः पंचाग्नीनिमान्वेद आहिताग्निः स उच्यते ॥ १५४ ॥ शरीरमापः सोमं च विविधं चान्नमुच्य
ते ॥ प्राणो ह्यग्निस्तथादित्यस्त्रिभोक्ता एक एव तु ॥ १५५ ॥ अन्नं बलाय मे भूमेरपामग्न्यनिलस्य च ॥ भवत्येतत्परिणतौ ममाप्यव्याहतं सुखम्
॥ १५६ ॥ हस्तेन परिमार्ज्याथ कुर्य्यात्ताम्बूलभक्षणम् ॥ श्रवणं चेतिहासस्य तत्कुर्य्यात्सुसमाहितः ॥ १५७ ॥ इतिहासपुराणाद्यैः षष्ठसप्तमके
नयेत् ॥ ततः सन्ध्यामुपासीत स्नात्वा वै पश्चिमां नरः ॥ १५८ ॥ एतद्धो दिवसे प्रोक्तमनुष्ठानं मया द्विज ॥ आचारं यः पठेद्विद्वाञ्छृणुयात्स दिवं
व्रजेत् ॥ आचारादिर्धर्मकर्त्ता केशवो हि स्मृतो द्विज ॥ १५९ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पञ्चोत्तर
द्विशततमोऽध्यायः ॥ २१३ ॥ ब्रह्मोवाच ॥ अथ स्नानविधिं वक्ष्ये स्नानमूला क्रिया यतः ॥ मृद्गोमयतिलान्दर्भान्पुष्पाणि सुरभीणि च ॥१॥ आहरे
त्स्नानकाले च स्नानार्थी प्रयतः शुचिः ॥ गन्धोदकान्तं विविक्ते ( धं ) स्थापयेत्तान्यथ क्षितौ ॥ २ ॥ त्रिधा कृत्वा मृदं तां तु गोमयं च [redacted]क्षणः ॥
अद्भिर्मृद्भिश्च चरणौ प्रक्षाल्याथ करौ तथा ॥ ३ ॥ उपवीती बद्धशिखः सम्यगाचम्य वाग्यतः ॥ उरुं राजेत्यृचा तोयमुपस्थाय प्रदक्षिणम् ॥ ४ ॥
आवर्त्तयेत्तदुदकं ये ते शतमितित्र्यृचा ॥५॥ ॐ उरुं हि राजा वरुणश्चकार सूर्य्याय पन्थानमन्वेतं वाउ ॥ प्रतिधाता च वक्तारस्ताहृद्याविपश्चित् ॥
नमोऽग्न्यरुणाया भिष्टुतोवरुणस्य पाशः ॥ वरुणाय नमः ॥ ६ ॥ ॐ ये ते शतं वरुणये सहस्रं यज्ञियाः पाशा वितता महान्तः ॥ तेभिर्नो अद्य
सवितोत विष्णुर्विश्वे मुंचन्तु मरुतः स्वर्काः स्वाहा ॥ सुमित्रियान इत्यवञ्जलिमाकृत्योत्तरेण तोयं पश्चाद्विराज्य चैव विनिःक्षिपेत् ॥ ॐ सुमित्रिया न
आप ओषधयः सन्तु ॥ दुर्मित्रियास्तस्मै सन्तु योऽस्मान्द्वेष्टि यञ्च वयं द्विष्मः ॥ ७ ॥ पादौ जंघे कटिं चैव पूर्वं मृद्भिस्त्रिभिस्त्रिभिः ॥ प्रक्षाल्य हस्ता
वाचम्य नमस्कृत्य जलं ततः ॥ ८ ॥ ॐ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् समूढमस्य पांसुरे ॥ महाव्याहृतिभिः पश्चादाचामेत्प्रयतोऽपि सन्
॥ ९ ॥ मार्जयेद्धै मृदांगानि इदं विष्णुरिति त्वृचा ॥ भास्कराभिमुखो मज्जेदापो अस्मानितित्यृचा ॥ १० ॥ ॐ आपो अस्मान्मातरः शुन्धयन्तु

१ मासं मासार्धमेव वा० पा० । अमावासीं वसे० पा० । २ एतदुद्देशतः प्रो० । ३ उरुंहिश्च त्र्यृचा० । ४ तवाउ अपदे पादाप्रतिधातवे क उतापवक्ताहृदयाविध (प) श्चित् । नमोवरुणायाभिष्ठितो० ।

घृतेन नो घृतप्वः पुनन्तु ॥ विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुंचरापूत एमि ॥११॥ ततोऽवघृष्य पात्राणि निमज्योन्मज्य वै शनैः ॥ गोम
येन विलिप्याथ मानस्तोक इत्यृचा ॥ १२ ॥ ॐ मानस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ॥ मा नो वीरान्रुद्र
भामिनोऽवधीर्हविष्मन्तः सदमित्वा हवामहे ॥ १३ ॥ ततोऽभिषिंचेन्मन्त्रैस्तु वरुणैस्तु यथाक्रमम् ॥ इमम्मे वरुणे द्वाभ्यां त्वंन्नः सत्वन्न इत्यपि
॥ १४ ॥ आपो त्वन्तुमसीति च मुञ्चंत्ववभृतेति च ॥ ॐ इमम्मे वरुण श्रुधीहवमद्या च मृडयत्वा मवस्युराचके ॥ १५ ॥ ॐ तत्त्व
यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥ अहेडमानो वरुणेह बोध्युरुशं समान आयुः प्रमोषीः ॥ ॐ त्वन्नो अग्ने वरुणस्य विद्वान्देव
स्य हेडो अवयासिसीष्ठाः ॥ यजिष्ठो वह्नितमः शोशुचानो विश्वा द्वेषांसिप्रमुमुग्ध्यस्मत्स्वाहा ॥ ॐ स त्वन्नो अग्नेवमो भवती नेदिष्ठो अस्या उषसो
व्युष्टौ ॥ अवयक्ष्वनो वरुणं रराणो वीहिमृडीकं सुहवो न एधि ॥ ॐ आपो नौषधि हिंसार्धम्नो राजस्ततो वरुणो नोमुञ्च यदाहरघ्न्या इति वरुणे
ति शपामहे ततो वरुण नो मुञ्च ॥ ॐ उदुत्तमं वरुण पाशमस्मदवाधमं विमध्यमंश्रथाय॥अथावयमादित्यव्रते तवानागसो अदितये स्याम ॥ मुञ्चन्तु
मामप्यथाद्वरुणस्य त्वत् ॥ अहो यमस्य पत्नीमानः सर्वस्मादेव किल्बिषात्॥ अवभृथनिचं पुनर्विचेरुसि नित्यं प्रन्नः॥अवदेवैर्देवकृता मनोयासि सम
वमर्त्यै कृतं पुष्पाच्छा देवधीमल्पाही ॥ १६ ॥ अभिषिच्य तथात्मानं निमज्याचम्य वै पुनः ॥ दर्भेण पाययेन्मन्त्रैरलिङ्गैः पावनीरिमैः ॥ १७ ॥
आपोहिष्ठेति तिसृभिरिदमापो हविष्मतीः ॥ देवीराप इति द्वाभ्यां आपोदेवा इति त्र्यृचा ॥१८॥ द्रुपदादिव इति च शन्नो देवीरपां रसः ॥ आपो देवो
पावमान्यः पुनन्त्वाद्या ऋचो नव ॥ १९ ॥ चित्पतिर्मेति च शनैः प्लाव्यात्मानं समाहितः ॥ हिरण्यवर्णा इति च पावमान्यस्तथा पराः ॥२०॥ तर
त्समा शुद्धवत्यः पवित्राणि च शक्तितः ॥ वारुण्या बहवः पुण्याः शक्तितः संप्रयोजयेत् ॥ २१ ॥ ॐकारेण व्याहृतिभिर्गायत्र्या च समन्वितः ॥
आदावन्ते च कुर्वीत अभिषेकं यथाक्रमम् ॥ २२ ॥ जलमध्यस्थितस्यैव मार्जनं तु विधीयते ॥ अन्तर्जले जपेन्मन्त्रं त्रिः कृत्वा चाघमर्षणम् ॥
॥२३॥ द्रुपदाद्यास्त्रिरावर्तेदयं गौरिति च त्र्यृचम् ॥ अन्यांश्चैव तु मन्त्रान्वा स्मृतिदृष्टान्समाहितः ॥ २४ ॥ सव्याहृतिं सप्रणवां गायत्रीं वा जपेद्बुधः
आवर्त्तयेद्वा प्रणवं स्मरेद्वा विष्णुमव्ययम्॥२५॥विष्णोरायतनं त्वापः स एवाप्पतिरुच्यते ॥ तस्यैवं तनवस्त्वेतास्तस्मात्तं ह्यप्सु संस्मरेत्॥२६॥ तद्वि
ष्णोरिति मन्त्रेण निमज्याप्सु पुनःपुनः ॥ गायत्री वैष्णवी ह्येषा विष्णोः संस्मरणाय वै ॥२७॥ ॐ इदमापप्रवहता स्वं मलं क्षालल्लोहितम् ॥ यथा

१ मायोवेहंत्वमिति ।

त्वहोत्रामृतं यच्च शोफे अभीषणम् ॥२८॥ आपो मा तस्मादेनसः पावमानश्च मुञ्चतु हविष्मतो विमा आपोहविष्मान् आविरासाति ॥ हविष्मान् देवअ सुरो हविष्मान् अस्तु सूर्य्यः॥देवीरापो अपा पत्न्या यश्च ऊर्मिर्हविष्यः इन्द्रियवान्मादित्यन्तनः तं देवेभ्यो देवता दाभ्रुशुक्रलेभ्यस्तेषां भागकर्षिवसिस सुद्रस्य दक्षिण्याग्रयासिमेनापोग्रर्भिरश्मतमोधोः॥ आपो देवी मधुमतीरगृह्णन्तु ह्यन्वती राजस्वतिलाः ॥ याभिर्मित्रावरुणस्य सिञ्चयाभिरिन्द्रमनयत्यत्र वाती वद्रुपदां शन्नो देवी अपामसृग्द्वयसंसूर्य्ये सन्तं समाहितं अपां रसस्य यो रस्य यो गृह्णास्युत्तमम् ॥ आपो देवीरुपसूर्य्यं मधुमतीवयस्याय प्रजाभ्यः तासा मास्थानातर्वजिहतामोषधयः सपिप्पलाः ॥ पुनंतु मा पितरः सौम्यासः पुनन्त्वनापि पिता सहसाः पवित्रेण गतायुषा ॥ पुनंतु मा पितामहाः पुनंतु प्रपितामहाः॥ पवित्रेण गतायुषा विश्वमायुर्व्यश्नवैः ॥ अग्न आयूंषि परसत्माचरोर्जमिषञ्च त्वचे वावस्वत्वच्छूनाम् ॥ पुनन्तु मा देवजनाः पुनन्तु मनसा धियः ॥ पुनन्तु विश्वा भूतानि जातवेदः ! पुनीहि मा ॥ पवित्रेण पुनीहि मा शुक्रेण देव दीद्यत् ॥ अग्ने क्रत्वा क्रतूँरनु ॥ यत्ते पवित्रमर्चि ष्यग्ने विततमन्तरा ब्रह्म तेन पुनातु मा ॥ पवमानः सुवर्जनः। पवित्रेण विचर्षणिः । यः पोता स पुनातु मा॥ उभाभ्यां देव सवितः। पवित्रेण सवेन च। इदं ब्रह्मपुनीमहे ॥ वैश्वदेवीः पुनती देव्या गृभ्नास्यामिसावक्ष्यस्तान्नोवीत पूज्याः ॥ तयामदन्तः सधमादेषु वयँ स्याम पतयो रयीणाम् ॥ चित्प तिर्मा पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ॥ तस्य ते पवित्रपूतस्य यत्कामः ॥ प्रणितच्छकेयं देवो वाक्पतिर्मा सविता त्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ॥ तस्य ते पवित्रपते ! पवित्रपूतस्य यत्कामः ॥ पुनस्तच्छकेयं द्युपतिं अयं गौः पृश्निरक्रमीसदशशतं मातरं पुनः पितरञ्च प्रयस्मः ॥ देवो मा सविता पुनात्वच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः॥तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनातच्छकेयम् ? ॥ ॐ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ॥ दिवीव चक्षुराततम् ॥२९॥ स्नात्वैवं वाससी धौते अच्छिन्ने परिधाय च ॥ प्रक्षाल्य च मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तदा ॥ ३० ॥ आचान्ते पुनराचामेन्मन्त्रेण स्नानभोजने ॥ द्रुपदां च त्रिरावर्त्त्य तथा चैवाघमर्षणम् ॥ ३१ ॥ आचम्याप्लाव्य चात्मानं त्रिराचम्य शनैरसून् ॥ अथोपतिष्ठेदादित्यं मूर्ध्नि पुष्पान्विताञ्जलिः ॥ ३२ ॥ प्रक्षिप्योदकमद्भ्य उदुत्यं चित्रमित्यपि ॥ तच्चक्षुर्देव इति च हँसः शुचिषदित्यपि ॥ ३३ ॥ एताञ्जपेदूर्द्ध्वबाहुः सूर्य्यमीक्ष्य समाहितः ॥ गायत्रीं च तथा शक्त्या उपस्थाय दिवाकरम् ॥३४॥ विभ्राडित्यनुवाकेन सूक्तेन पुरुषस्य च ॥ शिवसङ्कल्पेन च तथा मण्डलब्राह्मणेन च ॥ ३५ ॥ दिवाकीर्त्या तथा चान्यैः सौरैर्मन्त्रैश्च शक्तितः ॥ जपयज्ञस्तु कर्त्तव्यः सर्वदेवप्रणीतकैः ॥३६॥ अध्यात्मविद्यां विधिवज्जपेद्वा जपसिद्धये ॥ सव्यं कृत्वा त्रिराचम्य ।श्रियं मेधां धृतिं क्षितिम् ॥ ३७॥ वाचं वागीश्वरीं पुष्टिं तुष्टिञ्च परितर्पयेत् ॥

उमामरुन्धतीं चैव शचीं मातरमेव च ॥ ३८ ॥ जयां च विजयां चैव सावित्रीं शान्तिमेव च ॥ स्वाहां स्वधां धृतिं चैव तथैवादितिमुत्तमाम् ॥ ॥ ३९ ॥ ऋषिपत्नीश्च कन्याश्च तर्पयेत्काम्यदेवताः ॥ सर्वमङ्गलकामस्तु तर्पयेत्सर्वमङ्गलाम् ॥ ४० ॥ आब्रह्मस्तम्बपर्य्यन्तं जगत्तृप्यत्विदं ब्रुवन् ॥ क्षिपेदपोऽञ्जलींस्त्रींश्च कुर्वन्काङ्क्षेत तर्पणम् ॥४१॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे स्नानविधिविवरणं नाम चतुर्दशोत्तरद्विशततमोऽध्यायः ॥ २१४ ॥ ब्रह्मोवाच ॥ तर्पणं सम्प्रवक्ष्यामि देवादिपितृतुष्टिदम् ॥ १ ॥ ॐ मोदास्तृप्यन्ताम् । ॐ प्रमोदास्तृप्यन्ताम् । ॐ सुमुखास्तृप्यन्ताम् । ॐ दुर्मुखास्तृप्यन्ताम् । ॐ विघ्नास्तृप्यन्ताम् । ॐ विघ्नकर्त्तारस्तृप्यन्ताम् । ॐ छन्दांसि तृप्यन्ताम् । ॐ वेदास्तृप्यन्ताम् । ॐ ओषधयस्तृप्यन्ताम् । ॐ सनातनस्तृप्यताम् । ॐ इतराचार्य्यास्तृप्यन्ताम् । ॐ संवत्सरस्सावयवस्तृप्यताम् । ॐ देवास्तृप्यन्ताम् । ॐ अप्सरसस्तृप्यन्ताम् । ॐ देवान्धकास्तृप्यन्ताम् । ॐ सागरास्तृप्यन्ताम् । ॐ नागास्तृप्यन्ताम् । ॐ पर्वतास्तृप्यन्ताम् । ॐ सरिन्मनुष्या यक्षास्तृप्यन्ताम् । ॐ रक्षांसि तृप्यन्ताम् । ॐ पिशाचास्तृप्यन्ताम् । ॐ सुपर्णास्तृप्यन्ताम् । ॐ भूतानि तृप्यन्ताम् । ॐ भूतग्रामाश्चतुर्विधास्तृप्यन्ताम् ॥ ॐ दक्षस्तृप्यताम् । ॐ प्रचेतारतृप्यताम् । ॐ मरीचिस्तृप्यताम् । ॐ अत्रिस्तृप्यताम् । ॐ अङ्गिरास्तृप्यताम् । ॐ पुलस्त्यस्तृप्यताम् । ॐ पुलहस्तृप्यताम् । ॐ क्रतुस्तृप्यताम् । ॐ नारदस्तृप्यताम् ! ॐ भृगुस्तृप्यताम्। ॐ विश्वामित्रस्तृप्यताम् । ॐ कश्यपस्तृप्यताम् । ॐ जमदग्निस्तृप्यताम् । ॐ वसिष्ठस्तृप्यताम् । ॐ स्वायम्भुवस्तृप्यताम् ।ॐ स्वारोचिषस्तृप्यताम् । ॐ तामसस्तृप्यताम् । ॐ रैवतस्तृप्यताम् । ॐ चाक्षुषस्तृप्यताम् । ॐ महातेजास्तृप्यताम्। ॐ वैवस्वतस्तृप्यताम्। ॐ ध्रुवस्तृप्यताम् । ॐ धवस्तृप्यताम् । ॐ अनिलस्तृप्यताम् ॥ ॐ प्रभासस्तृप्यताम् ॥ २ ॥ नीवीती । ॐ सनकस्तृप्यताम् । ॐ सनन्दनस्तृप्यताम् । ॐ सनातनस्तृप्यताम् । ॐ कपिलस्तृप्यताम् । ॐ आसुरिस्तृप्यताम् । ॐ वोढुस्तृप्यताम् । ॐ पञ्चशिखस्तृप्यताम् । ॐ मनुष्याणां कव्यवाहस्तृप्यताम् । ॐ अनलस्तृप्यंताम् । ॐ सोमस्तृताम् । ॐ यमस्तृप्यताम् । ॐ अर्य्यमातृप्यताम् ॥ ३ ॥ प्राचीनावीती । ॐ अग्निष्वात्ताः पितरस्तृप्यंताम् । ॐ सोमपाः पितरस्तृप्यंताम् । ॐ बर्हिषदः पितरस्तृप्यन्ताम् ॥ यमाय नमः । धर्मराजाय नमः । मृत्यवे नमः । अन्तकाय नमः । वैवस्वताय नमः । कालाय नमः । सर्वभूतक्षयाय नमः । औदुम्बराय नमः ! दध्नाय नमः । नीलाय नमः । परमेष्ठिने नमः । वृकोदराय नमः । चित्राय नमः । चित्रगुप्ताय नमः ॥ ४ ॥ ब्रह्मादिस्तम्बपर्य्यन्तं जगत्तृप्यतु ॥ ॐ पितृभ्यः स्वधा नमः । ॐ पितामहेभ्यः स्वधा नमः । ॐ प्रपितामहेभ्यः स्वधा नमः । ॐ मातृभ्यः स्वधा

नमः । ॐ पितामहीभ्यः स्वधा नमः । ॐ प्रपितामहीभ्यः स्वधा नमः। ॐ मातामहेभ्यः स्वधा नमः । ॐ प्रमातामहेभ्यः स्वधा नमः । ॐ वृद्धप्रमातामहेभ्यः स्वधानमः तृप्यतामिति । उदीरतामवर उत्परासो उन्मध्यमाः पितरः सोम्यासः । असुंय ईयुरवृकाऋतज्ञास्तेनोऽवन्तुपितरोहवेषु। गोत्रोच्चारणेन प्रथमाञ्जलिः पितुः । ॐ अङ्गिरसो नः पितरो०— । अथर्वाणोभृगवः०— । तेषां वयं सुमतौ यज्ञियानां अपि भद्रे सौमनसे स्याम । ॐ आयन्तु नः पितरः सौम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ ५ ॥ ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधा स्थ तर्पयत मे पितॄन् ॥ ॐ पितृभ्यः स्वधा नमः । ॐ पितामहेभ्यः स्वधा नमः । ॐ प्रपितामहेभ्यः स्वधा नमः । ॐ मातामहेभ्यः स्वधा नमः । ॐ प्रमातामहेभ्यः स्वधा नमः । ॐ वृद्धप्रमातामहेभ्यः स्वधा नमः । पितामहस्य० । ॐअक्षन्पितरो अमीमदन्त पितरो अमी तृप्यन्तः पितरः शुं(स्व)धध्वं पिबेह पितरोऽपि वानत्रयांश्च विश्रयांश्च भवनपवित्रत्वा रथपति ते जातवेदाः स्वधाभिर्यज्ञं सुकृतं जुषस्व ? । ॐ मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीर्मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः । मधु द्यौरस्तु नः पिता मधु मान्नो वनस्पतिर्मधुमाम् अस्तु सूर्य्यो माध्वीर्गावो भवन्तु नः ॥ ६ ॥ प्रपितामहस्याञ्जलिदानम् । ॐ नमो वः पितरो रसाय नमो वः पितरः शुष्माय नमो वः पितरो जीवाय नमो वः पितरः स्वधायै नमो वः पितरो घोराय नमो वः पितरो मन्यवे । नमो वः पितरो गृहान्न पितरो दत्तः । नमो वः पितरो दध्मे तद्वः पितरो वासः । मातामहानां त्रिरञ्जलि० । ततो मात्रादीनां० ॥ ७ ॥ ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ॥ ते तृप्यन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥८॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे देवादितर्पणनिरूपणं नाम पञ्चदशोत्तरद्विशततमोऽध्यायः॥२१५॥ ब्रह्मोवाच ॥ वैश्वदेवं प्रवक्ष्यामि होमलक्षणमुत्तमम् ॥ प्रज्वाल्य चाग्निं पर्युक्ष्य-ॐ क्रव्यादमग्निं प्रहिणोमि दूरं यमराज्यं गच्छतु रिप्रवाहः ॥ इहैवायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानत् ॥ ॐ पावक वैश्वानर इदमासनं अरणीगर्भसंस्कृततेजोरूप महाब्रह्मन् मुहूर्तास्त्रिषु वैश्वानरं प्रतिबोधयामि । ॐ वैश्वानरे न उभयं आप्रयातु परावतः अग्निर्न स्वद्युतीरूपपृष्ठो दिवि पृष्ठोऽश्वि पृथिव्यां पृष्ठा विवेवा ओषधीचाविवेश वैश्वानरः सहसा पृष्ठोऽग्निः नमो दिव्य स षष्टां नक्तम् ॥ १ ॥ ॐ प्रजापतये स्वाहा । ॐ सोमाय स्वाहा । ॐ बृहस्पतये स्वाहा । ॐ अग्निषोमाभ्यां स्वाहा । ॐ इन्द्राग्निभ्यां स्वाहा । ॐ द्यावापृथिवीभ्यां स्वाहा । ॐ इन्द्राय स्वाहा । ॐ विश्वेभ्यो देवेभ्यः स्वाहा । ॐ ब्रह्मणे स्वाहा । ॐ अद्भ्यः स्वाहा । ॐ ओषधिवनस्पतिभ्यः स्वाहा । ॐ गृह्याय स्वाहा । ॐ देवदेवताभ्यः स्वाहा । ॐ इन्द्राय स्वाहा । ॐ इन्द्रपुरुषेभ्यः स्वाहा ।

ॐ यमाय स्वाहा । ॐ यमपुरुषाय स्वाहा । ॐ सर्वेभ्यो भूतेभ्यो दिवाचारिभ्यः स्वाहा । ॐ वसुधापितृभ्यः स्वाहा । ॐ ये भूता प्रचरन्ति दीना च निशिहन्तो भुवनस्य मध्ये । तेभ्यो बलिं पुष्टिकामो ददामि मयि पुष्टिं पुष्टिपतिर्ददातु । ॐ आचाण्डालपतिर्ददातु आचाण्डालपातितवायसेभ्यः॥२॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे वैश्वदेवनिरूपणं नाम षोडशोत्तरद्विशततमोऽध्यायः ॥ २१६ ॥ ॥ ब्रह्मोवाच ॥ अथ सन्ध्याविधिं वक्ष्ये द्विजातीनां समासतः ॥ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ १ ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥ ॥२॥ गायत्रीच्छन्दो विश्वामित्रऋषिस्त्रिपात् ॥ समुद्राः कुक्षिश्चन्द्रादित्यौ लोचनौ । अग्निर्मुखम् । विष्णुर्हृदयम् । ब्रह्मरुद्रौ शिरः । रुद्रः शिखा । उपनयने विनियोगः । ॐ भूः पादे । भुवः जानुनि । स्वः हृदये । महः शिरसि । जनः शिखायाम् । तपः कण्ठे । सत्यं ललाटे । ॐ हृदयाय नमः । ॐ भूः शिरसे स्वाहा । ॐ भुवः शिखायै वौषट् । ॐ स्वः कवचाय हुं । ॐ भूर्भुवः स्वः अस्त्राय फट् ॥ ३ ॥ ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ततस्त्रिपदा । ॐ आपो ज्योऽती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् । ॐ सूर्य्यश्चेत्यादि । ॐ आपः पुनन्त्वित्यादि । ॐ अग्निश्चेत्यादि ॥ ४ ॥ ॐ आयातु वरदे देवि ! पूर्वाह्णे ब्रह्मदेवता ॥ गायत्री नाम या सन्ध्या रक्ताङ्गी रक्तवाससा ॥ वरहंससमारूढा श्रीमत्पुष्करसंस्थिता ॥ ५ ॥ कमण्डलुधरा शान्ता अक्षमालाविधारिणी ॥ आयातु वरदा देवी मध्याह्ने श्वेतरूपिणी ॥ ६ ॥ माहेश्वरी च सावित्री शुक्लवस्त्रादिमण्डिता ॥ वृषस्कन्धसमारूढा त्रिशूलवरधारिणी ॥ ७ ॥ आयातु वरदा देवी अपराह्णे सरस्वती ॥ अतसीकुसुमप्रख्या वैष्णवी गरुडासना ॥ ८ ॥ पीतवस्त्रा शङ्खचक्रगदापद्मसमन्विता ॥ श्वेतवर्णा समुद्दिष्टा रविमण्डलसंस्थिता ॥९॥ श्वेतपद्मसनासीना श्वेतपुष्पोपशोभिता ॥ ॐ आपो हिष्ठा मयो भुवस्ता न उर्जे दधात नः॥१०॥महेरणाय चक्षुसे। ॐ यो वः शिवतमो रसः। तस्य भाजयतेह नः।उशतीरिव मातरः॥ॐ तस्मा अरङ्गमाम वो यस्य क्षयाय जिन्वथ । आपो जन यथा च नः॥ॐ सुमित्रिया न आप ओषधयः सन्तु ॐ दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः।ॐ द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव ॥ पूतं पवित्रेणेवाज्यमापः शुन्धन्तु मैनसः॥ ॐ ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत । ततो रात्र्यजायत । ततः समुद्रोऽर्णवः समुद्रादर्णवादधिसंवत्सरो अजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी।सूर्य्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः॥११॥ गायत्र्या विश्वामित्र ऋषिर्गायत्रीछन्दः। सविता देवता जपे विनियोगः । ॐ उदुत्यं जातवेदसं देवं वहन्ति केतवः । दृशे विश्वाय सूर्य्यम्।ॐ चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च।ॐ तच्चक्षुर्देवहितं

पुरस्ताच्छुक्रमुच्चरत॥पश्येम शरदः शतं जीवेम शरदः शतम्।शृणुयाम शरदः शतम् । ॐ विश्वतश्चक्षुरुत विश्वतोमुखोविश्वतो बाहुरुत विश्वतस्पात् ॥
संबाहुभ्यां धमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः। देवा गातुविदो नाङ्गविद्वानाद्धामितमनसस्पत इमं देवयज्ञं स्वाहा वातेधाः जपेत्॥ १२ ॥ उत्तरे
शिखरे जाते भूम्यां पर्वतवासिनी॥ब्रह्मणा समनुज्ञाता गच्छ देवि ! यथासुखम्॥१३॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे
सन्ध्याविधिनिरूपणं नाम सप्तदशोत्तरद्विशततमोऽध्यायः ॥२१७॥ ब्रह्मोवाच ॥ व्यास ! श्राद्धमहं वक्ष्ये भुक्तिमुक्तिप्रदं नृणाम् ॥ पूर्वं निमन्त्रयेद्विप्रा
न्विशेषाद्ब्रह्मचारिणः ॥ १ ॥ प्रदक्षिणोपवीतेन देवान्वामोपवीतिना ॥ पितॄन्निमन्त्रयेत्पादौ क्षालयेद्वाक्यमन्त्रतः ॥२॥ ॐ स्वागतं भवद्भिरिति प्रश्नः ।
ॐ सुस्वागतमिति तैरुक्ते ॐ विश्वेभ्यो देवेभ्य एतत्पादोदकमर्घ्यं स्वाहेति देवब्राह्मणपादयोर्देवतीर्थेनाभुग्नकुशसहितजलदानम् ॥ ३ ॥ ततो दक्षिणा
भिमुखेन वामोपवीतेनामुकगोत्रेभ्यो अस्मत्पितृपितामहप्रपितामहेभ्यो यथानामशर्मभ्य एतत्पादोदकमर्घ्यं स्वधेति पित्रादिब्राह्मणपादयोः पितृतीर्थेन
आभुग्नकुशकुसुमसहितजलदानम् ॥ ४ ॥ एवं मातामहादिभ्यः । एतदाचमनीयं स्वाहा स्वधेति ब्राह्मणहस्ते एषवोऽर्घ्यं इति ब्राह्मणहस्ते पुष्पदानम् ॥
॥५॥ ॐ सिद्धमिदमासनम् इह सिद्धमित्यभिधाय ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यामिति सप्तव्याहृतिभिः पूर्वमुखदेवब्रा
ह्मणोपवेशनम् । उत्तरदिङ्मुखंपितृब्राह्मयोणोपवेशनम्॥ ॐ देवताभ्यः पितृभ्यश्च महायोगिभ्य एव च ॥ नमः स्वधायै स्वाहायै नित्यमेव भवन्तुते
इति त्रिर्जपेत् ॥६॥ ॐ अद्यास्मिन्देशे अमुकमासे अमुकराशिंगते सवितर्यमुकतिथावमुकगोत्राणामस्मात्पितृपितामहप्रपितामहानां यथानामशर्मणां
विश्वेदेवपूर्वकं० श्राद्धं करिष्ये । ॐ विश्वेभ्यो देवेभ्यः स्वाहा ॐ विश्वेदेवानावाहयिष्ये । आवाहयेत्युक्ते ॐ विश्वेदेवाः स आगत शृणुताम इमँ हवम् ।
एदं बर्हिर्निषीदत ॐ विश्वेदेवाः शृणुतेमँ हवं मे ये अन्तरिक्षे य उपद्यविष्ट । ये अग्निजिह्वा उत वा यजत्रा आसद्यास्मिन्बर्हिषि मादयध्वम् । ॐ
ओषधयः संवदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तँ राजन्पारयामसि । ॐ आगच्छन्तु महाभागा विश्वेदेवा महाबलाः ॥ ये अत्र
विहिताः श्राद्धे सावधाना भवन्तु ते ॥ ॐ अपहतासुरा रक्षांसि वेदिषद इति त्रिभिर्यवविकिरणम् ॥ ७ ॥ ॐ पात्रमहं करिष्ये । ॐ कुरुष्वेत्यनुज्ञातः
साग्रकुशपत्रद्वयं प्रादेशप्रमाणं कृत्वा ॐ पवित्रे स्थो वैष्णव्यौ अनेन कुशान्तरेण छित्त्वा ॐ विष्णुर्मनसा पूतेस्थ इत्यभ्युक्ष्य कुशान्तरेण त्रिवृतं
कृत्वा पात्रे पवित्रनिषेवणम् ॥ ८ ॥ ॐ शन्नो देवीरभिष्टय आपो भवन्तु पीतये । शंयोरभिस्रवन्तु न इति पात्रे जलदानम् ॥ ॐ यवोऽसि यव

१ वासिनि । ब्राह्मणेभ्योभ्यनुज्ञा० । २ नित्यमेवनमोनमः ।

यास्मद्वेषो यवयारातीरिति यवदानम् । गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां ता (त्वा) मिहोपह्वये श्रियमिति गन्धदानम् । ॐ या दिव्या आपः पयसा संबभूवुर्या अन्तरिक्षउत पार्थवीर्य्याः । हिरण्यवर्णा यज्ञियास्तान आपः शिवाः शं स्योना सुहवा भवन्तु । एषोऽर्घो नम इति ब्राह्मणहस्ते जलं दत्त्वानेनैव पात्रेण पवित्रग्रहणं कृत्वा संस्रवं पवित्रं च ब्राह्मणपार्श्वे दद्यात् । ततः प्रथमपात्रे संस्रवजलं संस्थाप्य कुशोपरि ऊर्द्ध्वमुखं स्थापनं कुर्य्यात् । तदुपरि कुशदानम् ॥ ९ ॥ विश्वेभ्यो देवेभ्यः एतानि गन्धपुष्पधूपदीपवासो युगयज्ञोपवीतानि नमः । गन्धादिदानमच्छिद्रमस्तु । अस्त्विति ब्राह्मणप्रतिवचनम् ॥ १० ॥ ततः पितृपितामहप्रपितामहानां मातामहप्रमातामहवृद्धप्रमातामहानां सपत्नीकानां श्राद्धमहं करिष्ये इति अनुज्ञावचनम् । कुरुष्वेति ब्राह्मणैरुक्ते । ॐ देवताभ्यः पितृभ्यश्च० इति त्रिर्जपेत् ॥ ११ ॥ ओं अमुकगोत्रेभ्योऽस्मत्पितृपितामहेभ्यो यथानामशर्मभ्यः सपत्नीकेभ्यः इदमासनं स्वधा इति ब्राह्मणवामे आसनदानम् । ओं पितॄनावाहयिष्ये । ओं । आवाहयेत्युक्ते ओं उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि । उशन्नु शत आवह पितॄन्हविषे अत्तवे । ॐ आयन्तु नः पितरः सौम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन्यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेवन्त्वस्मान् इत्यावाहनम् । ओं अपहता असुरा रक्षांसि वेदिषदः इति तिलविकिरणम् । पूर्ववत्क्रमेण स्थापितपात्रेपूदकदानम् । ओं तिलोऽसि सोमदेवत्यो गोसवो देवनिर्मितः । प्रत्नमद्भिः पृक्तः स्वधया पितॄँल्लोकान्प्रीणीहि नः स्वाहा इति तिलदानम् ॥ १२ ॥ गन्धपुष्पे हस्ताभ्यां दत्त्वा पितृपात्रमुत्थाप्य या दिव्येति पठित्वा अमुकगोत्रास्मत्पितः ! अमुकदेवशर्मन् ! सपत्नीक ! एष तेऽर्घ्यः स्वधा । सपवित्रं पात्रं गृहीत्वा वामपार्श्वे दक्षिणे कुशोपरि ओं पितृभ्यः स्थानमसीत्यधोमुखपात्रस्थापनम् ॥ १३ ॥ ॐ शुंधन्तां लोकाः पितृसदनाः पितृसदनमसि । अधोमुखपात्रस्पर्शनम् । अमुकगोत्रेभ्योऽस्मत्पितृपितामहप्रपितामहेभ्यः सपत्नीकेभ्य एतानि गन्धपुष्पधूपदीपवासोयुगसोत्तरीययज्ञोपवीतानि वः स्वधा पितृतीर्थेन गन्धादिदानम् । गन्धादिदानमक्षय्यमस्तु । संकल्पसिद्धिरस्तु । ब्राह्मणवचनम् । एवं मातामहादीनामनुज्ञापनादिकर्म । ॐ यादिव्येतिभूमिसंमार्जनम् । ततो घृताक्तमन्नं गृहीत्वा दक्षिणोपवीती पितृब्राह्मणम् ॐ अग्नौ करणमहं करिष्ये । ओं कुरुष्वेति तेनोक्ते ओं अग्नये कव्यवाहनाय स्वाहा इति आहुतिद्वयं देवब्राह्मणहस्ते दत्त्वा अवशिष्टान्नं पिण्डार्थं स्थापयित्वा अपरमर्द्धं पित्रादिपात्रे मातामहादिपात्रे च निःक्षिपेत् ॥ १४ ॥ पात्रमुद्रादि निधाय कुशं दत्त्वा अधोमुखाभ्यां पाणिभ्यां पात्रं गृहीत्वा ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा पात्राभिमन्त्रणम् । इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ।

विष्णो हव्यं रक्षस्व इत्यन्नमध्ये अधोमुखद्विजाङ्गुष्ठनिवेशनम्॥१५॥अपहतेति त्रिर्यवविकिरणम्। ॐ निहन्मि सर्वं यदमेध्यवद्भवेद्धताश्च सर्वेऽसुरदानवा मया॥रक्षांसि यक्षाः सपिशाचसङ्घा हता मया यातुधानाश्च सर्वे इति सिद्धार्थविकिरणम् ॥१६॥ ततो धूरिलोचनसंज्ञकेभ्योदेवेभ्यएतदन्नं सघृतं सपानीयं सव्यञ्जनं स्वाहेति वारिकुशाद्यैरनुसङ्कल्पनम्।ॐ अन्नमिदमक्षय्यमस्तु ॐ संङ्कल्पसिद्धिरस्तु॥१७॥ततो विपरीतोपवीतेन सव्यञ्जनं सघृतमन्नं पित्रादिब्राह्मणपात्रे निधाय तदुपरि भूमिसंलग्नकुशं दत्त्वा ॐ पृथिवी ते पात्रं इति मन्त्रेण उत्तानाभ्यां पात्रं गृहीत्वा ॐ इदं विष्णोरित्यन्नोपरि उत्तानं द्विजाङ्गुष्ठं निवेशयेत्।ॐ अपहतेति तिलविकिरणम्। भूमिपातितवामजानुः अमुकगोत्रेभ्यः अस्मत्पितृपितामहेभ्यः सपत्नीकेभ्यः एतदन्नं सघृतं सपानीयं सव्यञ्जनं प्रतिषिद्धवर्जितं स्वधा। अन्नं सङ्कल्प्य ॐ ऊर्जं वहन्तीरमृतं घृत पयः कीलालं परिस्रुतं स्वधास्तु तर्पयत मे पितरम्।दक्षिणामुखवारिधारात्यागः॥॥१८॥ॐ श्राद्धमिदमच्छिद्रमस्तु ॐ सङ्कल्पसिद्धिरस्तु ॥ॐ भूर्भुवः स्वस्तत्सवितुर्वरेण्यं भर्गोदेवस्य धीमहि धियो यो नः प्रचोदयात् इति विसर्जयित्वा ॐ मधुवाता ऋतायते मधुक्षरन्तु सिन्धवः माध्वीर्नः सन्त्वोषधीर्मधुनक्तमुतोषसो मधुमत्पार्थिवं रजः। मधुद्यौरस्तु नः पिता मधुमान्नो वनस्पतिः मधुमानस्तु सूर्य्यो माध्वीर्गावो भवन्तु नः ॥ मधु मधु मधु इति जपः ॥ १९ ॥ यथासुखं वाग्यता जुषध्वम् इति ब्रूयात् ॥ भुक्तवत्सु सप्तव्याधादिकं पितृस्तोत्रं जपेत् ॥ तच्च—सप्तव्याधा दशार्णेषु मृगाः कालञ्जरे गिरौ ॥ चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे ॥ २० ॥ तेऽभिजाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः ॥ प्रस्थिता दूरमध्वानं यूयं किमवसीदथ ॥ २१ ॥ ततस्तृप्यस्व दक्षिणाभिमुखो वामोपवीती तदुत्सृष्टाग्रतः ॥ ॐ अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ॥ भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिम् इति भूमौ कुशोपरि सघृतमन्नं जलप्लुतं विकिरेत ॥ २२ ॥ ततो ब्राह्मणक्रमेण जलगण्डूषं दत्त्वा पूर्ववत्सव्याहृतिकां गायत्रीं मधुवातेतित्र्यृचं जप्त्वा ॐ रुचितं भवद्भिरिति देवब्राह्मणप्रश्नः।सुरुचितमिति तेनोक्ते ॐ शेषमन्नमिति प्रश्नः। इष्टैः सह भोजनम्। पित्रादिब्राह्मणं वामोपवीतेन ॐ तृप्ताः स्थ इति प्रश्नः।ॐ तृप्ताः स्म इति तेनोक्ते भूम्यभ्युक्षणं मण्डलचतुष्कोणं तिलविकिरणम् ॥ २३ ॥ ॐ अमुकगोत्र ! अस्मत्पितः ! अमुकदेवदर्शन् ! सपत्नीक ! एतत्ते पिण्डासनं स्वधा ॥ इत्थं रेखामध्ये पितामहाय सव्याहृतिकां गायत्रीं मधुवातेति त्रिर्जपन्नन्नं साज्यं पिण्डं कृत्वा कुशोपरि अमुकगोत्र अस्मत्पितः ! अमुकदेवशर्मन् ! सपत्नीक एष पिण्डस्ते स्वधा ॥ इत्थं रेखामध्ये पितामहाय। ततः सव्याहृतिकां गायत्रीं मधुवातेति त्रिर्जपन्पिण्डविकिरणं पिण्डान्तिके। ॐ लेपभुजः प्रीयन्तामिति स्तरणकुशेषु हस्तमार्जनं प्रक्षालितपिण्डोदकेन ॐ अमुकगोत्र! अस्मत्पितः ! अमुकशर्मन् सपत्नीक एतत्ते जलमवनेनिक्ष्व ये चात्रत्वामनुजाश्च त्वामनु तस्मै ते

स्वधेति पितृपिण्डसेचनम् ॥ पिण्डपात्रमधोमुखं कृत्वा बद्धाञ्जलिः ॐ पितरो मादयध्वं यथाभागमावृषायध्वमिति जपेत् । अपः स्पृष्ट्वा वामेन परावृत्य उदङ्मुखः प्राणांस्त्रिः संयम्य षड्भ्य ऋतुभ्यो नमः इति जपः ॥२४॥ वामेनैव परावृत्य पुष्पदानम् ॥ अक्षतश्चारिष्टश्चास्तु मे पुण्यं शांतिपुष्टि० । दक्षिणामुखः अमी मदन्तः पितरो यथाभागमावृषायिषत इति जपः ॥ वासः शिथिलीकृत्वाञ्जलिं कृत्वा ॐ नमो वः पितरो नमो वः इति जपः ॥ गृहान्नः पितरो दत्त इति गृहवीक्षणम् । ततः सदा वः पितरो द्वेष्म इति वीक्ष्य एतद्वः पितरो वास इत्युच्चार्य्य अमुकगोत्र एतत्ते वासः स्वधा इति सूत्रदानम् ॥ वामेन पाणिना उदकपात्रं गृहीत्वा ऊर्जं वहन्तीरमृतं घृतं पयः इत्यादि पिण्डोपरि धारात्यागः ॥ २५ ॥ पूर्वस्थापितपात्रशेषोदकैः प्रत्येकं पिण्डसेचनं–पिण्डमावाह्य गन्धादिदानं–पिण्डोपरि कुशपत्रञ्च दत्त्वा ॐ अक्षन्नमीमदन्तह्यव प्रिया अधूषत अस्तोषत स्वभानवो विप्रा नविष्ठयामती । यो जान्विद्र ते हरीति त्रिर्जपः ॥ २६ ॥ ॐ इत्थं मातामहादिब्राह्मणानामाचमनम् । ॐ सुप्रोक्षितमस्त्विति भूम्यभ्युक्षणं कृत्वा ॥ ॐ अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम् ॥ ब्राह्मणस्य करे न्यस्ताः शिवा आपो भवंतु नः ॥ शिवा आपः सन्त्विति ब्राह्मणहस्ते जलदानम् । लक्ष्मीर्वसतिपुष्पेषु लक्ष्मीर्वसति पुष्करे ॥ लक्ष्मीर्वसति गोष्ठेषु सौमनस्यं सदास्तु ते ॥ सौमनस्यमस्त्विति पुष्पदानम्। अक्षतं चास्तु मे पुण्यं शान्तिः पुष्टिर्धृतिश्च मे॥ यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम॥ॐ अक्षतश्चारिष्टश्चास्तु इति यवतण्डुलदानम् ॥ २७ ॥ अमुकगोत्राणामस्मत्पितृपितामहप्रपितामहानां सपत्नीकानामिदमन्नपानादिकमक्षय्यमस्त्विति पित्रादिब्राह्मणहस्ते तिलजलदानम् ॥ अस्त्विति ब्राह्मणो वदेत् । एतन्मातामहादीनामक्षय्यमाशिषः । ॐ अघोराः पितरः सन्तु गोत्रं नो वर्द्धतां–दातारो नोऽभिवर्द्धन्तां वेदाः सन्ततिरेव च ॥ श्रद्धा च नो मा व्यगमद्बहुदेयञ्च नोऽस्त्विति ॥ अन्नञ्च नो बहु भवेदतिथींश्च लभेमहि । याचितारश्च नः सन्तु मा च याचिष्म कञ्चन । एताः सत्याशिषः सन्तु ॥ २८ ॥ सौमनस्यमस्तु । अस्त्वित्युक्ते प्रदत्तपिण्डस्थाने अर्घ्यार्थपवित्रमोचनम् । कुशपवित्रं गृहीत्वा तेन कुशेन पित्रादिब्राह्मणं स्पृष्ट्वा स्वधां वाचयिष्ये–ॐ वाच्यतां–ॐ पितृपितामहेभ्यो यथानामशर्मभ्यः सपत्नीकेभ्यः स्वधोच्यताम् । अस्तु स्वधा इत्युक्ते ऊर्जं वहन्तीरमृतं घृतमिति पिण्डोपरि वारिधारां दध्यात् ॥ २९ ॥ ततः ॐ विश्वेदेवा अस्मिन्यज्ञे प्रीयन्तां–देवब्राह्मणहस्ते यवोदकदानम् ॥ ॐ प्रीयन्तामिति तेनोक्ते ॐ देवताभ्य इति त्रिर्जपेत् ॥ ३० ॥ अधोमुखः पिण्डपात्राणि चालयित्वा आचम्य दक्षिणोपवीती पूर्वाभिमुखः

१ अद्यार्पः ।

ॐ अमुकगोत्राय अमुकदेवशर्मणे ब्राह्मणाय सपत्नीकाय श्राद्धप्रतिष्ठार्थदक्षिणामेतद्रजतं तुभ्यमहं सम्प्रददे इति दक्षिणां दद्यात् ॥ इति देवब्राह्मणाय दक्षिणादानम् ॥ ३१ ॥ ततः पितृब्राह्मणे पिण्डाः सम्पन्ना इति प्रश्नः । सुसम्पन्ना इति पिण्डे क्षीरधारां दत्त्वा पिण्डचालनं अतिथिब्राह्मणे पिण्ड पात्रमुत्तानं कृत्वा ॐ वाजे वाजे वत वाजिनो नो धनेषु विप्रा अमृता ऋतज्ञाः । अस्यमध्वः पिबत मादयध्वं तृप्ता यात पथिभिर्देवयानैरिति पिण्डा दिविसर्जनं-आमावाजस्य प्रसवो जगम्यादेमे द्यावापृथिवी विश्वरूपे आमागन्तां पितरा मातरा चामा सोमोऽमृतत्वेन गम्यात् । इति देवविसर्जनम् ॥ ॐ अभिगम्यतामिति पितृब्राह्मणविसर्जनम् ॥ ब्राह्मणैरनुद्गतस्य निवर्त्तनम् ॥ गवादिषु पिण्डप्रतिपादनमिति शेषः ॥ ३२ ॥ अयं श्राद्धविधिः प्रोक्तः पठितः पापनाशनः ॥ अनेन विधिना श्राद्धं कृतं वै यत्र कुत्रचित् ॥ ३३ ॥ अक्षया स्यातिपतॄणाञ्च स्वर्गप्राप्तिर्ध्रुवा तथा ॥ इत्युक्तं पार्वणं श्राद्धं पितॄणां ब्रह्मलोकदम् ॥ ३४ ॥ इतिश्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे पार्वणश्राद्धकथनं नामाष्टदशाधिकद्विशततमोऽध्यायः ॥ २१८ ॥ ब्रह्मोवाच ॥ नित्यश्राद्धं प्रवक्ष्यामि पूर्ववत्तद्विशेषवत् ॥ ॐ अमुकगोत्राणामस्मत्पितृपितामहानां अमुकशर्मणां सपत्नीकानां श्राद्धं सिद्धान्नेन युष्मास्वहं करिष्ये ॥ आसनादिकमत्र स्याद्विश्वेदेवाविवर्जितम् ॥१॥ वृद्धिश्राद्धं प्रवक्ष्यामि [illegible]तद्विशेषकम् ॥ जातपुत्रमुखदर्शनादौ वृद्धि श्राद्धं पूर्वाभिमुखेषु दक्षिणोपवीतिषु सयवबदरकुशैर्देवतीर्थेन नमस्कारान्तेन दक्षिणोपचारेण कर्त्तव्यम्॥२॥दक्षिणजानु गृहीत्वा अद्यास्मदीयामुकवृद्धौ अमुकगोत्राणामस्मत्प्रपितामहीपितामहीमातॄणाममुकदेवीनाममुकगोत्राणां श्राद्धे कर्त्तव्ये वसुसत्यसंज्ञकानां विश्वेषां देवानां श्राद्धं सिद्धान्नेन युष्मासु मया कर्त्तव्यमिति देवब्राह्मणामन्त्रणम् ॥ ॐ करिष्यसीति तेनोक्त इत्थमेवापरदेवब्राह्मणामन्त्रणम् ॥ ३ ॥ ततः अमुकवृद्धौ अमुकगोत्राया मत्प्रपितामह्या अमुकदेव्या नान्दीमुख्याः श्राद्धं सिद्धान्नेन युष्मासु मया कर्त्तव्यमिति प्रपितामहीब्राह्मणामन्त्रणम् । करिष्यामीति तेनोक्ते इत्थमेव प्रमातामह्यादिब्राह्मणमन्त्रणम् ॥४॥ देवपितृसर्वदेवब्राह्मणं श्राद्धकरणानुज्ञापनम् । आसने ॐ विश्वेदेवास आगत शृणुताम इमँ हवम् । तं बर्हिर्निषीदत । ॐ विश्वेदेवाः शृणुतेमं हवं ये मे अन्तरिक्षे य उपद्यविष्ट । पे अग्निजिह्वा उतवा यजत्रा आसाद्यास्मिन्बर्हिषि मादयध्वम् । ॐ आगच्छन्तु इति विश्वेदेवावाहनं-गन्धादिदानम् । अच्छिद्रावधारणवाचनम् ॥ ५ ॥ ततः प्रपितामहीप्रभृतीनामनुज्ञापनमासनदानं गन्धादिदानञ्च अच्छिद्रावधारण वाचनम् । इत्थं पितामह्याः मातुः । ततः प्रपितामहादीनां अनुज्ञापनम् । आसनमावाहनंगन्धादिदानं-वृद्धप्रमातामहादीनामनुज्ञापनादिकरणम् । ॐ वसुसत्यसंज्ञकेभ्यो देवेभ्य एतदन्नं सघृतं सपानीयं सव्यञ्जनं सबदरं सदधि प्रतिषिद्धवर्जितं नम इति अन्नसङ्कल्पनम् । ॐ अमुकगोत्रे ! मत्पितामहि

अमुकदेवि नान्दीमुखि ! एतदन्नं सबदरं सदधि नमः। एवं मातामहप्रमातामहेभ्यः॥ ६ ॥एकोद्दिष्टं पुरोऽवश्यं तद्विशेषं वदे शृणु ॥ प्रथमं निमन्त्रणं पादप्रक्षालनम् आसनम्। अद्य अमुकगोत्रस्य मत्पितुरमुकदेवशर्मणः प्रतिसांवत्सरिकमेकोद्दिष्टश्राद्धं सिद्धान्नेन युष्मास्वहं करिष्ये। श्राद्धकरणानुज्ञापनम् आसनं गन्धादिदानम् अन्नानुकल्पनम् ॥ जप्यं निवीती। उत्तराभिमुखीभूयातिथिश्राद्धं कुर्य्यात् ॥ ७ ॥ ततस्तृप्तिं ज्ञात्वा दक्षिणाभिमुखी वामोपवीती उच्छिष्टसमीपे अग्निदग्धा इति अन्नविकिरणम् । अमुकगोत्रमत्पितरमुकदेवशर्मन्नेतत्ते जलमवनेनिक्ष्व ये चात्र त्वामनुयाश्च त्वामनु तस्मै ते स्वधा इति रेखोपरि वारिधारादानम् । शेषं पूर्ववत्॥ ८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे एकोनविंशाधिकद्विशततमोऽध्यायः॥ २१९ ॥ ब्रह्मोवाच॥ सपिण्डीकरणं वक्ष्ये पूर्णेऽब्दे तत्क्षयेऽहनि ॥ कृतं सम्यग्यथाकाले प्रेतादेः पितृलोकदम् ॥ १ ॥ सपिण्डीकरणं कुर्य्यादपराह्णे तु पूर्ववत् ॥ पितामहादिब्राह्मणनिमन्त्रणम्। ॐ पुरूरवार्द्रवसंज्ञकेभ्यो देवेभ्य एतदासनं नमः। वामपार्श्वे चासनदानम्। आवाहनम्। ततः पितामहप्रपितामहवृद्धप्रपितामहानां सपत्नीकानां श्राद्धमहं करिष्ये इत्यनुज्ञाग्रहणं–पात्रत्रयकरणं–पात्रोपरि कुशं दत्त्वा पात्रान्तरेण पिधाय अच्छिद्रावधारणान्तं परिसमाप्य तथैव पितुरपि सपत्नीकस्य प्रेतपदान्तनाम्ना श्राद्धकरणानुज्ञापनं देवपात्राच्छिद्रावधारणम् ॥ २ ॥ तत्परिसमाप्य पितामहप्रपितामहवृद्धप्रपितामहक्रमेण पात्राणां मनाक् चालनम् । उद्घाटनं कृत्वा–ॐ ये समानाः समनसः पितरो यमराज्ये॥ तेषां लोकः स्वधा नमो यज्ञो देवेषु कल्पताम् ॥ ॐ ये समानाः समनसो जीवा जीवेषु मामकाः॥ तेषां श्रीर्मयि कल्पतामस्मिन् लोके शतं समाः ॥ एतन्मन्त्रद्वयेन पितृपात्रोदकं पितामहप्रपितामहपात्रे वृद्धप्रपितामहपात्रं परित्यज्य पितामहप्रपितामहयोरुदकं पवित्रञ्च पितृपात्रे क्षिपेत्॥ ३ ॥ ततः पितृब्राह्मणहस्ते पात्रस्थपवित्रदानम् । पात्रस्थपुष्पेण शिरसः करपादार्चनं ब्राह्मणहस्तेऽन्यजलदानं–हस्ताभ्यां पात्रमुत्थाप्य ॐ या दिव्येति पठित्वा ॐ अमुकगोत्र मत्पितामह अमुकदेवशर्मन् सपत्नीक एष ते अर्घ्यः स्वधा। पितृपात्रेणैव पितामहब्राह्मणहस्ते स्तोकमर्घ्योदकं सपवित्रं गृहीत्वास्तोकमुदकं पिण्डसेचनार्थं पात्रान्तरेण पिधाय पितृब्राह्मणवामपार्श्वे दक्षिणाग्रकुशोपरि पितृभ्यः स्थानमसीति अधोमुखपात्रस्थापनम् ॥ ४ ॥ पितामहप्रपितामहवृद्धप्रपितामहेभ्यो गन्धादिदानमग्नौकरणम् । अवशिष्टान्नं प्रपितामहादिपात्रे क्षिपेत्। पितामहपात्राभिमन्त्रणपर्य्यन्तक्रमेण समाप्यापि ब्राह्मणपात्राभिमन्त्रणम् । अंगुष्ठनिवेशनं तिलविकरणं कृत्वा अमुकगोत्र एतत्ते अन्नं सघृतं सपानीयं सव्यञ्जनं प्रतिषिद्धवर्जितं ये चात्र त्वा मनुयाश्च त्वामनु तस्मै ते स्वधा इति ॥ ९ ॥ ततो देवप्रभृतिभ्य अपोशानं

दद्यात् ॥ अतिथिप्राप्तौ अतिथिश्राद्धं कुर्य्यात् । अस्मिन्नवसरे विकिरणम् । पितामहादौ प्रश्नं कृत्वा पितृब्राह्मणम् ॐ स्वदितं भवद्भिरिति प्रश्नः । ॐ अमुकगोत्र मत्पितः अमुकशर्मन् सपत्नीक एष ते पिण्डो ये चात्रत्वामनुयाश्च त्वामनु तस्मै स्वधेति पिण्डपात्रमच्छिद्रमस्तु । ततः सङ्कल्प सिद्धिवाचनं समाप्य पिण्डं द्विधा कृत्वा ये समानाः सुमनस इति मन्त्रद्वयं पठित्वा पितामहवृद्धप्रपितामहपात्रेषु क्षिपेत् ॥ पिण्डेषु गन्धादिकं दत्त्वा पिण्डचालनम् । अतिथिब्राह्मणे स्वदितादिप्रश्नः । ब्राह्मणानामाचमनम् । भुक्तिक्रमेण ताम्बूलदानम् । सुप्रोक्षितमस्तु शिवा आपः सन्तु-वृद्धप्र पितामहक्रमेण ब्राह्मणहस्ते जलदानम् । गोत्रस्याक्षय्यमस्तु पितृब्राह्मणहस्ते उपतिष्ठतामिति सतिजलदानम् ॥ ६ ॥ अघोराः पितरः सन्तु अस्त्वि त्युक्ते स्वधां वाचयिष्य इति पितामहादिब्राह्मणानुज्ञापनम् ॥७॥ ॐ वाच्यतां इत्युक्ते ॐ पितामहादिभ्यः स्वधोच्यताम् । अस्तु स्वधेत्युक्ते पितृब्राह्मण पितृभ्यः स्वधोच्यतामिति । अस्तु स्वधेत्युक्ते ॐ ऊर्जं वहन्तीरिति दक्षिणाभिमुखवारिधारात्यागः । ॐ विश्वेदेवा अस्मिन् यज्ञे प्रीयन्तामिति देवब्रा ह्मणहस्ते ॐ यवोदकदानम् । ॐ देवताभ्य इति त्रिर्जपः ॥ ८ ॥ पिण्डपात्राणि चालयित्वा आचम्य पितामहादिभ्यो दक्षिणां दत्त्वा ततः पितृ ब्राह्मणाय आशिषो मे प्रदीयन्तामित्याशीःप्रार्थनम् । प्रतिगृह्यतामित्युक्ते दातारो नोऽभिवर्द्धन्तामिति पात्रमुत्तानं कृत्वा वाजे वाजे० विसर्जनम्। अभिर म्यतामिति पितृब्राह्मणविसर्जनम् ॥ ९ ॥ सपिण्डीकरणश्राद्धं व्यासप्रोक्तं मया तव ॥ श्राद्धं विष्णुः श्राद्धकर्त्ता फलं श्राद्धादिकं हरिः ॥ १० ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्राद्धानुष्ठानं नाम विंशाधिकद्विशततमोऽध्यायः ॥२२०॥ ब्रह्मोवाच ॥ धर्मसारमहं वक्ष्ये संक्षेपाच्छृणु शंकर॥भुक्तिमुक्तिप्रदं सूक्ष्मं सर्वपापविनाशनम्॥१॥श्रुतं धर्मं बलं धैर्य्यं सुखमुत्साहमेव च॥शोको हरति वै नृणां तस्माच्छोकं परित्यजेत्॥२॥ कर्मदाराः कर्मलोकाः कर्मसम्बन्धिबान्धवाः ॥ कर्माणि प्रेरयन्तीह पुरुषं सुखदुःखयोः ॥ ३ ॥ दानमेव परो धर्मो दानात्सर्वमवाप्यते ॥ दानात्स्वर्गश्च राज्यश्च दद्याद्दानं ततो नरः ॥ ४ ॥ एकतो दानमेवाहुः समग्रवरदक्षिणम् ॥ एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ ५ ॥ तपसा ब्रह्मचर्य्येण यज्ञैः स्नानेन वा पुनः ॥ धर्मस्य नाशका ये च ते वै निरयगामिनः ॥ ६ ॥ ये च होमजपस्नानदेवतार्चनतत्पराः ॥ सत्यक्षमादयायुक्तास्ते नराः स्वर्गगामिनः ॥ ७ ॥ न दाता सुखदुःखानां न च हर्त्तास्ति कश्चन ॥ भुञ्जते स्वकृतान्येव दुःखानि च सुखानि च ॥ ८ ॥ धर्मार्थं जीवितं येषां दुर्गा ण्यतितरन्ति ते ॥ सन्तुष्टः को न शक्नोति फलमूलैश्च वर्त्तितुम् ॥ ९ ॥ सर्व एव हि सौख्येन सङ्कटान्यवगाहते ॥ इदमेव हि लोभस्य कार्य्यं स्या दतिदुष्करम् ॥ १० ॥ लोभात्क्रोधः प्रभवति लोभाद्द्रोहः प्रवर्त्तते ॥ लोभान्मोहश्च माया च मानो मत्सर एव च ॥ ११ ॥ रागद्वेषानृतक्रोधलोभ

मोहमदोज्झितः ॥ यः स शान्तः परं लोकं याति पापविवर्जितः ॥ १२ ॥ देवता मुनयो नागा गन्धर्वा गुह्यका हर ॥ धार्मिकं पूजयन्तीह न धना
ढ्यं न कामिनम् ॥ १३ ॥ अनन्तबलवीर्य्येण प्रज्ञया पौरुषेण वा ॥ अलभ्यं लभते मर्त्त्यस्तत्र का परिवेदना ॥ १४ ॥ सर्वसत्त्वदयालुत्वं सर्वेन्द्रि
यविनिग्रहः ॥ सर्वत्रानित्यबुद्धित्वं श्रेयः परमिदं स्मृतम् ॥ १५ ॥ पश्यन्निवाग्रतो मृत्युं यो धर्मं नाचरेन्नरः ॥ अजागलस्तनस्येव तस्य जन्म निरर्थ
कम् ॥ १६ ॥ भ्रूणहा ब्रह्महा गोघ्नः पितृहा गुरुतल्पगः ॥ भूमिं सर्वगुणोपेतां दत्त्वा पापैः प्रमुच्यते ॥ १७ ॥ न गोदानात्परं दानं किञ्चिदस्तीति मे
मतिः ॥ या गौर्न्यायार्जिता दत्ता कृत्स्नं तारयते कुलम् ॥ १८ ॥ नान्नदानात्परं दानं किंचिदस्ति वृषध्वज ! ॥ अन्नेन धार्य्यते सर्वं चराचरमिदं जग
त् ॥ १९ ॥ कन्यादानं वृषोत्सर्गस्तीर्थसेवा श्रुतं तथा ॥ हस्त्यश्वरथदानानि मणिरत्नवसुन्धराः॥२०॥ अन्नदानस्य सर्वाणि कलां नार्हन्ति षोडशीम्॥
अन्नात्प्राणा बलं तेजश्चान्नाद्वीर्य्यं धृतिः स्मृतिः ॥ २१ ॥ कूपवापीतडागादीनारामांश्चैव कारयेत् ॥ त्रिसप्तकुलमुद्धृत्य विष्णुलोके महीयते ॥ २२ ॥
साधूनां दर्शनं पुण्यं तीर्थादपि विशिष्यते ॥ कालेन तीर्थं फलति सद्यः साधुसमागमः ॥ २३ ॥ सत्यं दमस्तपः शौचं सन्तोषश्च क्षमार्जवम् ॥ ज्ञानं
शमो दया दानमेष धर्मः सनातनः ॥ २४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे धर्मसारकथनं नामैकविंशाधिक
द्विशततमोऽध्यायः ॥ २२१ ॥ ब्रह्मोवाच ॥ प्रायश्चित्तादि वक्ष्येऽहं नरकौघविमर्दनम् ॥ मक्षिका विप्रुषो नारी भुवि तोयं हुताशनः ॥ मार्जारो नकुल
श्चैव शुचीन्येतानि नित्यशः ॥ १ ॥ यः शूद्रोच्छिष्टसंस्पृष्टं प्रमादाद्भक्षयेद्द्विजः ॥ अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ २ ॥ विप्रो विप्रेण
संस्पृष्ट उच्छिष्टेन कदाचन ॥ स्नानं जप्यश्च कर्त्तव्यं दिनस्यान्ते च भोजनम् ॥ ३ ॥ अन्नं समक्षिकाकेशं शुध्येद्वान्तेन तत्क्षणात् ॥ यश्च पाणित
ले भुङ्क्ते अंगुल्या बाहुना च यः ॥ ४ ॥ अहोरात्रेण शुध्येत पिबेद्यदि न वार्य्युत ॥ पीतशेषन्तु यत्तोयं वामहस्तेन मद्यवत् ॥५॥ चर्ममध्यगतं तोय
मशुचि स्यान्न तत्पिबेत् ॥ अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनि ॥ ६ ॥ चान्द्रायणं पराकं वा द्विजातीनां विशोधनम् ॥ प्राजापत्यन्तु शूद्रस्य
पश्चाज्ज्ञाते तथापरे ॥ ७ ॥ यस्तत्र भुङ्क्ते पक्वान्नं कृच्छ्रार्द्धं तस्य दापयेत् ॥ तेषामपि च यो भुङ्क्ते कृच्छ्रपादो विधीयते ॥ ८ ॥ रजकानाञ्च शैलू
षवेणुचर्मोपजीविनाम् ॥ एतदन्नञ्च यो भुङ्क्ते द्विजश्चान्द्रायणं चरेत् ॥ ९ ॥ चाण्डालकूपभाण्डेषु अज्ञानाद्येतिपिबेज्जलम् ॥ कुर्य्यात्सान्तपनं विप्रस्त
द्र्द्धञ्च विशः स्मृतम् ॥ १० ॥ पादं शूद्रस्य दातव्यमज्ञानादन्त्यवेश्मनि ॥ प्रायश्चित्तं त्रिकृच्छ्रं स्यात्पराकमन्त्यजागतौ ॥११॥ अन्त्यजोच्छिष्टमु

१ दयात्यर्थी।

कृच्छ्रं शुध्येद्द्विजश्चान्द्रायणेन च ॥ चाण्डालान्नं यदा भुङ्क्ते प्रमादादैन्दवञ्चरेत् ॥ १२ ॥ क्षत्रजातिः सान्तपनं षड्द्विरात्रं परे तथा ॥ एकवृक्ष तु चण्डालः प्रमादाद्ब्राह्मणो यदि ॥ फलं भक्षयते तत्र अहोरात्रेण शुध्यति ॥ १३ ॥ भुक्तोपविष्टोऽनाचान्तश्चण्डालं यदि संस्पृशेत् ॥ गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् ॥ १४ ॥ चाण्डालश्वपचैर्वापि विण्मूत्रे तु कृते द्विजाः ॥ प्रायश्चित्तं त्रिरात्रं स्यात्पराकश्चान्त्यजागतौ ॥ १५ ॥ अकामतः स्त्रियो गत्वा पराकस्तत्र साधकः ॥ अन्त्यजातिप्रसूतस्य प्रायश्चित्तं न विद्यते ॥ १६ ॥ मद्यादिदुष्टभांडेषु यदापः पिबति द्विजः ॥ कृच्छ्रपादेन शुध्येद्वै पुनःसंस्कारकर्मणा ॥ १७ ॥ ये प्रत्यवसिता विप्रा वज्राग्निपवनादिषु ॥ अन्नपानादि संगृह्य चिकीर्षन्ति गृहान्तरम् ॥१८॥ चारयेत्त्रीणि कृच्छ्राणि त्रीणि चान्द्रायणानि वै ॥ जातकर्मादिसंस्कारं वसिष्ठो मुनिरब्रवीत् ॥ १९ ॥ प्राजापत्यादिभिर्द्दुष्टा स्त्री शुध्येत्तु द्विभोजनात् ॥ उच्छिष्टोच्छिष्टसंस्पृष्टश्शुना शूद्रेण वा द्विजः ॥ २० ॥ उपोष्य रजनीमेकां पञ्चगव्येन शुध्यति ॥ वर्णबाह्येन संस्पृष्टः पञ्चरात्रेण वै तदा ॥ २१ ॥ अदुष्टाः सन्तता धाराः वातोद्धूताश्च रेणवः ॥ स्त्रियो बालाश्च वृद्धाश्च न दुष्यन्ति कदाचन ॥ २२ ॥ नित्यमास्यं शुचि स्त्रीणां शकुन्तैः पातितं फलम् ॥ प्रस्रवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥२३॥ उदके चोदकस्थं तु स्थलेषु स्थलजं शुचि ॥ पादौ स्थाप्यौ च तत्रैव आचान्तः शुचितामियात् ॥२४॥ शुध्येत्तद्भस्मना कांस्यं सुरया यन्न लिप्यते ॥ मूत्रेण सुरया मिश्रं तपनैः खलु शुध्यति ॥ २५ ॥ गवाघ्रातानि कांस्यानि शूद्रोच्छिष्टानि यानि च ॥ काकश्वापहतान्येव शुध्यन्ति दश भस्मना ॥ २६ ॥ शूद्रभाजनभोक्ता यः पञ्चगव्यं त्र्युपोषितः ॥ उच्छिष्टं स्पृशते विप्रः श्वसूद्रश्चापराधिकः ॥ २७ ॥ उपोषितः पञ्चगव्याच्छुध्येत्स्पृष्ट्वा रजस्वलाम् ॥ अनुदकेषु देशेषु चोरव्याघ्राकुले पथि ॥ २८ ॥ कृत्वा मूत्रपुरीषन्तु द्रव्यहस्तो न दुष्यति ॥ भूमौ निःक्षिप्य तद्द्रव्यं शौचं कृत्वा समाहितः ॥ २९ ॥ आरनालं दधि क्षीरं तक्रन्तु कृसरञ्च यत् ॥ शूद्रादपि च तद्ग्राह्यं मांसं मधु तथान्त्यजात् ॥३०॥ गौडीं पैष्टीञ्च माध्वीकं विप्रादिर्यः सुरां पिबेत् ॥ सुरां पिबन्द्विजः शुध्येदग्निवर्णां सुरां पिबन् ॥ ३१ ॥ विप्रैः पञ्चशतं जप्यं गायत्र्याः क्षत्रियस्य च शतं विप्रश्च भुक्तान्नं पानपात्रेण सूतके ॥ ३२ ॥ शुचिर्विप्रो दशाहेन क्षत्रियो द्वादशाहतः ॥ वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥ ३३ ॥ राज्ञां युद्धेषु यज्ञादौ देशान्तरगतेषु च ॥ बाले प्रेते मासिके च सद्यः शौचं विधीयते ॥ ३४ ॥ अविवाहा तथा कन्या द्विजो मौञ्जीविवर्जितः ॥ जातदन्तश्च बालश्च कुमारी च त्रिवर्षिका ॥ ३५ ॥ तेषां शुद्धिस्त्रिरात्रेण गर्भस्रावे त्रिरात्रिभिः ॥ सूतायां मासतुल्याश्च चतुर्थेऽह्नि रजस्वला ॥ ३६ ॥ दुर्भिक्षे राष्ट्रसंपाते सूतके मृतकेपि वा ॥ नियमाश्च न दुष्यन्ति दानधर्मपरास्तथा ॥ ३७ ॥ दीक्षाकाले विवाहादौ देवद्विजनिमन्त्रिते ॥ पूर्वसंकल्पि

ते वापि नाशौचं मृतसूतके ॥३८॥ प्रसूतपत्नीसंस्पर्शादशुचिः स्यात्तथा द्विजः ॥ अग्नयो यत्र हूयन्ते वेदो वा यत्र पठ्यते ॥ ३९ ॥ सततं वैश्वदेवा
दि न तेषां सूतकं भवेत् ॥ अशुद्धे च गृहे भुक्ते त्रिरात्राच्छुध्यति द्विजः ॥४०॥ ब्राह्मणी क्षत्रिया वैश्या शूद्रा चैव रजस्वला ॥ अन्योन्यस्पर्शनात्तत्र
ब्राह्मणी तु त्रिरात्रतः ॥ ४१ ॥ द्विरात्रतः क्षत्रिया च शुद्धा वैश्या ह्युपोषिता ॥ शूद्रा स्नानेन शुध्येतु द्रोणार्थं न विसर्जयेत् ॥४२॥ काकश्वानोपनी
तन्तु अन्नं बाह्यन्तु तत्त्यजेत् ॥ सुवर्णाद्भिः समभ्युक्ष्य हुताशे च प्रतापयेत् ॥ ४३ ॥ कूपे च पतितान्दृष्ट्वा श्वशृगालौ च मर्कटम् ॥ तत्कूपस्योदकं
पीत्वा शुध्येद्विप्रस्त्रिभिर्दिनैः ॥ क्षत्रियोऽह्नर्द्वयेनैव वैश्यो वैकाहतः परम् ॥ ४४ ॥ अस्थि चर्म मलं वापि मूषिकां यदि कूपत ः॥ उद्धृत्य चोदकं पञ्च
गव्याच्छुद्धयेत्तु शोधितम् ॥ ४५ ॥ तडागे पुष्करिण्यादौ भस्मादिं पातयेत्तथा ॥ षट् कुम्भानप उत्धृत्य पञ्चगव्येन शुध्यति ॥ ४६ ॥ स्त्रीरजःपतितं
मध्ये त्रिंशत्कुम्भान्समुद्धरेत् ॥ अगम्यागमनं कृत्वा मद्यगोमांसभक्षणम् ॥ ४७ ॥ शुध्येच्चान्द्रायणाद्विप्रः प्राजापत्येन भूमिपः ॥ वैश्यः सान्तपना
च्छूद्रः पञ्चाहोभिर्विशुध्यति ॥४८॥ प्रायश्चित्ते कृते दद्याद्गवां ब्राह्मणभोजनम् ॥ क्रीडायां शयनीयादौ नीलीवस्त्रं न दुष्यति ॥४९॥ नीलीवस्त्रं न स्पृ
शेच्च नीली च निरयं व्रजेत् ॥ ब्रह्मघ्नश्च सुरापश्च स्तेयी च गुरुतल्पगः ॥ ५० ॥ ऋक्षं दृष्ट्वा विशुध्यन्ते तत्संयोगी च पञ्चमः ॥ ततो धेनुशतं दद्या
द्ब्राह्मणानान्तु भोजनम् ॥५१॥ ब्रह्महा द्वादशाब्दानि कुटीं कृत्वा वने वसेत् ॥ न्यस्येदात्मानमग्नौ वा सुसमिद्धे सुरापकः ॥ ५२ ॥ स्तेयी सर्वं
वेदविदे ब्राह्मणायोपपादयेत ॥ वृषमेकं सहस्रं गां दद्याच्च गुरुतल्पगः ॥ ५३ ॥ कृतपापश्चरेद्रोधे द्वौ पादौ बन्धयन्पशोः ॥ सर्वकृच्छ्रं निपाने
स्यात्कान्तारे गृहदाहतः ॥ ५४ ॥ कण्ठाभरणदोषेण कृच्छ्रपादं मृते गवि ॥ अस्थिभङ्गं गवां कृत्वा शृङ्गभङ्गमथापि वा ॥ ५५ ॥ त्वग्भेदं
पुच्छनाशे वा मासार्द्धं यावकं पिबेत् ॥ सर्वं हस्त्यश्वशस्त्राद्यैर्निश्चयं कृच्छ्रमेव तु ॥ ५६ ॥ अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव च ॥
पुनःसंस्कारमायान्ति त्रयो वर्णा द्विजातयः ॥ ५७ ॥ वपनं मेखला दण्डो भैक्ष्यचर्याव्रतानि च ॥ निवर्त्तन्ते द्विजातीनां पुनःसंस्कारकर्मणि ॥
॥ ५८ ॥ आममांसं घृतं क्षौद्रं स्नेहश्च कालसम्भवाः ॥ अन्त्यभाण्डास्थिताः सर्वे निष्क्रान्ताः शुचयः स्मृताः ॥ ५९ ॥ तैलादिघृतमाध्वीकं
पण्यद्रव्यं द्रवस्तथा ॥ एकभक्तं क्रमान्नक्तं एकैकाहमयाचितम् ॥ उपवासः पादकृच्छ्रं कृच्छ्रार्द्धाद्विगुणं हि यत् ॥ ६० ॥ प्राजापत्यन्तु तत्स्याच्च
सर्वपातकनाशनम् ॥ कृच्छ्रं सतोपवासैश्च महासान्तपनं स्मृतम् ॥ ६१ ॥ त्र्यहमुष्णं पिबेच्चापः त्र्यहमुष्णं पयः पिबेत् ॥ त्र्यहमुष्णं

१ अदन्त्वमार्षम् । २ आत्मनेपदमार्षम् ।

पिबेत्सार्पिस्ततकृच्छ्रमवापहम् ॥ ६२ ॥ द्वादशाहोपवासेन पराकः सर्वपापहा ॥ एकैकं वर्द्धयेत्पिण्डं शुक्ले कृष्णे च ह्रासयेत् ॥ ६३ ॥
पयः काञ्चनवर्णायाः श्वेतवर्णं च गोमयम् ॥ गोमूत्रं ताम्रवर्णाया नीलवर्णभवं घृतम् ॥ ६४ ॥ दधि स्यात्कृष्णवर्णाया दर्भोदकसमायुतम् ॥
गोमूत्रमापकाण्यष्टौ गोमयस्य चतुष्टयम् ॥ ६५ ॥ क्षीरस्य द्वादश प्रोक्ता दध्नस्तु दश उच्यते ॥ घृतस्य माषकाः पञ्च पञ्चगव्यं मलापहम् ॥ ६६ ॥
॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे प्रायश्चितकथनं नाम द्वाविंशत्यधिकद्विशततमोऽध्यायः ॥ २२२ ॥ ब्रह्मोवाच
मुनिभिश्चरिता धर्मा भक्त्या व्यास मयोदिताः ॥ यैर्विष्णुस्तुष्यते चैव सूर्य्यादिपरिचारणात् ॥ १ ॥ तर्पणेन च होमेन सन्ध्याया वन्दनेन च ॥
प्राप्यते भगवान् विष्णुर्धर्मकामार्थमोक्षदः ॥ २ ॥ धर्मो हि भगवान्विष्णुः पूजा विष्णोस्तु तर्पणम् ॥ होमः सन्ध्या तथा ध्यानं धारणा सकलं हरिः
॥ ३ ॥ सूत उवाच ॥ प्रलयं जगतो वक्ष्ये तत्सर्वं शृणु शौनक ॥ चतुर्युगसहस्रन्तु कल्पैकाब्जदिनं स्मृतम् ॥४॥ कृतत्रेताद्वापरादियुगावस्था निबोध
मे ॥ कृते धर्मश्चतुष्पाच्च सत्यं दानं तपो दया ॥ ५ ॥ धर्मपाता हरिश्चेति सन्तुष्टा ज्ञानिनो नराः ॥ चतुर्वर्षसहस्राणि नरा जीवन्ति वै तदा ॥ ६ ॥
कृतान्ते क्षत्रियैर्विप्रा विट्शूद्राश्च जिता द्विजैः ॥ शूरश्चातिबलो विष्णू रक्षांसि च जघान ह ॥ ७ ॥ त्रेतायुगे त्रिपाद्धर्मः सत्यदानदयात्मकः ॥
नरा यज्ञपरास्तस्मिंस्तथा क्षत्रोद्भवं जगत ॥ ८ ॥ रक्तो हरिर्नरैः पूज्यो नरा दशशतायुषः ॥ तत्र विष्णुर्भीमरथः क्षत्रिया राक्षसानहन् ॥ ९ ॥
द्विपादविग्रहो धर्मः पीतताश्चाच्युते गते ॥ चतुःशतायुषो लोका द्विजक्षत्रोद्भवाः प्रजाः ॥ १० ॥ तत्र हृष्टालपबुद्धींश्च विष्णुर्व्यासस्वरूपधृक् ॥
तदेकन्तु यजुर्वेदं ? चतुर्द्धा व्यभजत्पुनः ॥ ११ ॥ शिष्यानध्यापयामास समस्ताँस्तान्निबोध मे ॥ ऋग्वेदमथ पैलन्त सामवेदञ्च जैमिनिम् ॥ १२ ॥
अथर्वाणं सुमन्तुन्तु यजुर्वेदं महामुनिम् ॥ वैशम्पायनमङ्गन्तु पुराणं सूतमेव च ॥ अष्टादशपुराणानि यैं वेद्यो हरिरेव हि ॥ १३ ॥ सर्गश्च
प्रतिसर्गश्च वंशो मन्वन्तराणि च ॥ वंशानुचरितञ्चैव पुराणं पञ्चलक्षणम् ॥ १४ ॥ ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतन्तथा ॥ भविष्यन्नारदीयञ्च
स्कान्दं लिङ्गं वराहकम् ॥ १५ ॥ मार्कण्डेयं तथाग्नेयं ब्रह्मवैवर्त्तमेव च ॥ कौर्मं मात्स्यं गारुडञ्च वायवीयमनन्तरम् ॥ अष्टादशसमुदिष्टं ब्रह्माण्ड
मिति संज्ञितम् ॥ १६ ॥ अन्यान्युपपुराणानि मुनिभिः कथितानि तु ॥ आद्यं सनत्कुमारोक्तं नारसिंहमथापरम् ॥ १७ ॥ तृतीयं स्कान्दमु
दिष्टं कुमारेण तु भाषितम् ॥ चतुर्थं शिवधर्माख्यं स्यान्नन्दीश्वरभाषितम् ॥ १८ ॥ दुर्वाससोक्तमाश्चर्य्यं नारदोक्तमतः परम् ॥ कापिलं वामनञ्चैव

१ एक वचनमार्षम् । २ विभक्त्यभाव आर्षः । ३ यैरीड्यो हरिरिति पा० ।

तथैवोशनसेरितम् ॥ १९ ॥ ब्रह्माण्डं वारुणञ्चाथ कालिकाह्वयमेव च ॥ माहेश्वरं तथा साम्बमेवं सर्वार्थसञ्चयम् ॥ पराशरोक्तमपरं मारीचं भार्गवाह्वयम् ॥ २० ॥ पुराणं धर्मशास्त्रञ्च वेदास्त्वंगानि यन्मुने ॥ न्यायः शौनक मीमांसा आयुर्वेदार्थशास्त्रकम् ॥ गान्धर्वञ्च धनुर्वेदो विद्या ह्यष्टादश स्मृताः ॥ २१ ॥ द्वापरान्तेन च हरिर्गुरुभारमपाहरत् ॥ एकपादस्थिते धर्मे कृष्णत्वञ्चाच्युते गते ॥ २२ ॥ जनास्तदा दुराचारा भविष्यन्ति च निर्दयाः ॥ सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः ॥ कालसञ्चोदितास्तेऽपि परिवर्त्तन्त आत्मनि ॥ २३ ॥ प्रभूतञ्च यदा सत्त्वं मनो बुद्धीन्द्रियाणि च ॥ तदा कृतयुगं विद्याज्ज्ञाने तपसि यद्रतिः ॥ २४ ॥ यदा कर्मसु काम्येषु शक्तिर्यशसि देहिनाम् ॥ तदा त्रेता रजोभूतिरिति जानीहि शौनक ॥ २५ ॥ यदा लोभस्त्वसन्तोषो मानो दम्भश्च मत्सरः ॥ कर्मणाञ्चापि काम्यानां द्वापरं तद्रजस्तमः ॥ २६ ॥ यदा सदानृतं तन्द्रा निद्रा हिंसादिसाधनम् ॥ शोकमोहौ भयं दैन्यं स कलिस्तमसि स्मृतः ॥ २७ ॥ यस्मिञ्जनाः कामिनः स्युः शश्वत्कटुकभाषिणः ॥ दस्यूत्कृष्टा जनपदा वेदाः पाषण्डदूषिताः ॥ २८ ॥ राजानश्च प्रजाभिक्षाः शिश्नोदरपराजिताः ॥ अव्रता वटवोऽशौचा भिक्षवश्च कुटुम्बिनः ॥ २९ ॥ तपस्विनो ग्रामवासाः न्यासिनो ह्यर्थलोलुपाः ॥ ह्रस्वकाया महाहाराश्चौरास्ते[1] साधवः स्मृताः ॥ ३० ॥ त्यक्ष्यन्ति भृत्याश्च पतिं तापसस्त्यक्ष्यति व्रतम् ॥ शूद्राः प्रतिग्रहिष्यन्ति वैश्या व्रतपरायणः ॥ ३१ ॥ उद्विग्नाः सन्ति च जनाः पिशाचसदृशाः प्रजाः ॥ अन्यायभोजनेनाग्निदेवतातिथिपूजनम्[2] ॥ ३२ ॥ करिष्येन्ति कलौ प्राप्ते न च पित्र्योदकक्रियाम् ॥ स्त्रीपराश्च जनाः सर्वे शूद्रप्रायाश्च शौनक ॥ ३३ ॥ बहुप्रजाल्पभाग्याश्च भविष्यन्ति कलौ स्त्रियः ॥ शिरःकण्डूयनपरा आज्ञां भेत्स्यन्ति[3] भर्त्सिताः ॥ ३४ ॥ विष्णुं न पूजयिष्यन्ति पाषण्डोपहता जनाः ॥ कलेर्दोषनिधेर्विप्रा अस्ति ह्येको महागुणः ॥ ३५ ॥ कीर्त्तनादेव कृष्णस्य महाबन्धं परित्यजेत् ॥ कृते यद्ध्यायतो विष्णुं त्रेतायां जपतः फलम् ॥३६॥ द्वापरे परिचर्य्यायां कलौ तद्धरिकीर्त्तनात् ॥ तस्माद्ध्येयो हरिर्नित्यं गेयः पूज्यश्च शौनक ॥ ३७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे युगधर्मकथनं नाम त्रयोविंशत्यधिकद्विशततमोऽध्यायः ॥ २२३ ॥ सूत उवाच ॥ चतुर्युगसहस्रान्ते ब्राह्मो नैमित्तिको लयः ॥ अनावृष्टिश्च कल्पान्ते जायते शतवार्षिकी ॥ १ ॥ उत्तिष्ठन्ति तदा रौद्रा दिवि सप्त दिवाकराः ॥ ते तु पीत्वा जलं सर्वं शोषयंति जगत्त्रयम् ॥ २ ॥ भूर्भुवः स्वर्महर्लोकं चराचरं जनस्तथा ॥ विष्णुश्च रुद्रो भूत्वासौ पातालानि दहत्यधः ॥ ३ ॥

१ चौर्य्यमायोत्साहसाः पा० । २ अस्नानभोजने । ३ भेत्स्यन्ति सत्पतेरिति पा० ।

विष्णुर्देहेत्रिलोकींश्च मुखान्मेघान् सृजत्यलम् ॥ वर्षन्ते वै वर्षशतं नानावर्णा महाघनाः ॥४॥ विष्णुरूपश्शतं वाति वर्षाणां वायुरूर्जितः ॥ विष्णुरेकार्णवी भूते वर्षे ब्रह्मस्वरूपधृक् ॥ शेतेऽनन्तासने विष्णुर्नष्टे स्थावरजंगमे ॥ ५ ॥ सुप्त्वा वर्षसहस्रं स जगद्भूयोऽसृजद्धरिः ॥ अथ प्राकृतिकं वक्ष्ये प्रलयं शृणु शौनक ॥ ६ ॥ पूर्णे संवत्सरशते संहृत्य सकलं जगत् ॥ ब्रह्माणं न्यस्य देहे हि मुक्तो योगबलैर्हरिः ॥ ७ ॥ ये गता ब्रह्मणः स्थानं तेऽपि यान्ति परं पदम् ॥ अनावृष्ट्यर्कसम्पन्ना आसन्मेघास्तथा द्विज ॥ शतं वर्षाणि वर्षद्भिर्मेघैरण्डं प्रपूर्य्यते ॥ ८ ॥ अन्तर्गतेन तोयेन भिन्नमण्डं जगत्पतेः ॥ पूर्णे ब्रह्मायुषि गते भिद्यतेऽम्भसि लीयते ॥ ९ ॥ एवं सा जगदाधारा तोये चोर्वी प्रलीयते ॥ आपस्तेजसि लीयन्ते तेजो वायौ प्रलीयते ॥ १० ॥ वायुः खे खश्च भूतादौ विशते च तदा महान् ॥ महान्प्रपद्यतेऽव्यक्तं प्रकृतिः पुरुषे परे ॥ ११ ॥ शतवर्षं हरिः शेते सृजत्यथ दिनागमे ॥ अव्यक्तादिक्रमेणैव व्यक्तीभूतं चराचरम् ॥१२॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे नैमित्तिकप्रलयोनाम चतुर्विंशत्यधिकद्विशततमोऽध्यायः ॥ २२४ ॥ सूत उवाच ॥ आध्यात्मिकादितापांस्त्रीञ्ज्ञात्वा संसारचक्रवित् ॥ उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥ १ ॥ संसारचक्रं वक्ष्येऽहमादावुत्क्रान्तिकालतः ॥ यद्विना पुरुषार्थो न लीनः स्यात्परमात्मनि ॥ २ ॥ ऊर्द्ध्ववासी नरस्त्यक्त्वा देहमन्यत्प्रपद्यते ॥ नीयते द्वादशाहेन यमस्य यमपूरुषैः ॥ ३ ॥ तत्र यद्बान्धवास्तोयं प्रयच्छन्ति तिलैः सह ॥ यच्च पिण्डं प्रयच्छन्ति यमलोके तदश्नुते ॥ ४ ॥ गतश्च नरकं पापा त्स्वर्गं याति स्वपुण्यतः ॥ पापकृद्याति नरकं पुण्यकृद्याति वै दिवम् ॥ ५ ॥ स्वर्गाच्च नरकात्त्यक्तः स्त्रीणां गर्भे भवत्यपि ॥ नाभिभूतश्च तस्यैव याति बीजद्वयं हि तत् ॥ ६ ॥ कललं बुद्बुदमयं ततः शोणितमेव च ॥ पेश्याः पलसमोऽण्डः स्यादङ्कुरं तत उच्यते ॥७॥ उपांगान्यंगुलीनेत्रनासास्यश्रवणानि च ॥ आवहं याति चांगेभ्यस्तत्परन्तु नखादिकम् ॥ ८ ॥ त्वचो रोमाणि जायन्ते केशाश्चैव ततः परम् ॥ नरश्चाधोमुखः स्थित्वा दशमे च सः जायते ॥९॥ ततस्तु वैष्णवी माया वृणोत्यत्यन्तमोहिनी ॥ बालत्वं त्वथ कौमारं यौवनं वृद्धतामपि ॥१०॥ ततश्च मरणं तत्तद्धर्ममाप्नोति मानवः ॥ एवं संसारचक्रेऽस्मिन् भ्राम्यते घटीयंत्रवत् ॥ ११ ॥ नरकात्प्रतिमुक्तस्तु पापयोनिषु जायते ॥ पतितात्प्रतिगृह्याथ अधोयोनिं व्रजेद्बुधः ॥ १२ ॥ नरकात्प्रतिमुक्तस्तु कृमिर्भवति याचकः ॥ उपाध्यायव्यलीकं तु कृत्वा श्वा भवति द्विज ॥१३॥ तज्जायां मनसा वांछंस्तद्द्रव्यं वाप्यसंशयम् ॥ गर्दभो जायते जन्तुर्मित्रस्यैवापमानकृत् ॥ १४ ॥ पितरौ पीडयित्वा तु कच्छपत्वञ्च जायते ॥ भर्तुः पिण्डमुपाश्नवस्तो वञ्चयित्वा तमेव यः ॥ १५ ॥

१ सृजत्यथेति पा० । २ आत्मनेपदमार्षम् । ३ तदेति पा० । ४ आत्मनेपदमार्षम् ।

सोऽपि मोहसमापन्नो जायते वानरो मृतः ॥ न्यासापहर्त्ता नरकाद्विमुक्तो जायते कृमिः ॥ १६ ॥ असूयकश्च नरकान्मुक्तो भवति राक्षसः ॥
विश्वासहर्त्ता च नरो मीनयोनौ प्रजायते ॥ १७ ॥ यवधान्यानि संहृत्य जायते मूषको मृतः ॥ परदाराभिमर्शात्तु वृको घोरोऽभिजायते ॥ १८ ॥
भ्रातृभार्य्याप्रसंगेन कोकिलो जायते नरः ॥ गुर्वादिभार्य्यागमनाच्छूकरो जायते नरः ॥ १९ ॥ यज्ञदानविवाहानां विघ्नकर्त्ता भवेत्कृमिः ॥
देवतापितृविप्राणामदत्त्वा योऽन्नमश्नुते ॥ २० ॥ प्रमुक्तो नरकाद्वापि वायसः सम्प्रजायते ॥ ज्येष्ठभ्रात्रपमानाच्च क्रौञ्चयोनौ प्रजायते ॥ २१ ॥
शूद्रस्तु ब्राह्मणीं गत्वा कृमियोनौ प्रजायते ॥ तस्यामपत्यमुत्पाद्य काष्ठान्तः कीटको भवेत् ॥ २२ ॥ कृतघ्नः कृमिकः कीटः पतङ्गो वृश्चिकस्तथा ॥
अशस्त्रं पुरुषं हर्ता नरः सञ्जायते खरः ॥ २३ ॥ कृमिः स्त्रीवधकर्त्ता च बालहन्ता च जायते ॥ भोजनञ्चोरयित्वा तु मक्षिका जायते नरः ॥ २४ ॥
हृत्वाज्यञ्चैव मार्जारस्तिलहृच्चैव मूषकः ॥ घृतं हृत्वा च नकुलः काको मद्गुरमामिषम् ॥ २५ ॥ मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलिकः ॥ अपो
हृत्वा तु पापात्मा वायसः सम्प्रजायते ॥ ॥ २६ ॥ हृते काष्ठे च हारीतः कपोतो वा प्रजायते ॥ हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते ॥
॥ २७ ॥ कार्पासिके हृते क्रौञ्चो वह्निहर्ता बकस्तथा ॥ मयूरो वर्णकं हृत्वा शाकपत्रञ्च जायते ॥ २८ ॥ जीवञ्जीवकतां याति रक्तवस्त्रापहृन्नरः ॥
छुछुन्दरिः शुभान्गन्धाञ्छशं हृत्वा शशो भवेत ॥२९॥ षण्डाः कलापहरणे काष्ठहृत्तृणकीटकः ॥ पुष्पं हृत्वा दरिद्रस्तु पंगुर्यानकहृन्नरः ॥ ३० ॥
शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः ॥ गृहहृन्नरकान्गत्वा रौरवादीन्सुदारुणान् ॥ ३१ ॥ तृणगुल्मलतावल्लीत्वग्घारी तरुतां व्रजेत् ॥ एष
एव क्रमो दृष्टो गोसुवर्णादिहारिणाम् ॥ ३२ ॥ विद्यापहारी मूकः स्याद्गत्वा च नरकान्बहून् ॥ असमिद्धे हुते चाग्नौ मन्दाग्निः खलु जायते ॥ ३३ ॥
परनिन्दा कृतघ्नत्वं परसीमाभिघातनम् ॥ नैष्ठुर्य्यं निर्घृणत्वञ्च परदारोपसेवनम् ॥ ३४ ॥ परस्वहरणाशौचं देवतानां च कुत्सनम् ॥ निकृत्य बन्धनं
नृणां कार्पण्यञ्च नृणां वधः ॥ उपलक्षणाद्विजानीयान्मुक्तानां नरकादनु ॥ ३५ ॥ दया भूतेषु संवादः परलोकं प्रति क्रिया ॥ सत्यं हितार्थमुक्तिश्च
वेदप्रामाण्यदर्शनम् ॥ ३६ ॥ गुरुदेवर्षिसिद्धर्षिसेवनं साधुसंयमः ॥ सत्क्रियाभ्यसनं मैत्री स्वर्गस्य लक्षणं विदुः ॥ अष्टांगयोगविज्ञानात्प्राप्नोत्यात्य
न्तिकं फलम् ॥ ३७ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकांडे कर्मविपाकादिकथनं नाम पञ्चविंशत्यधिकद्विशततमोऽध्यायः
॥ २२५ ॥ सूत उवाच ॥ वक्ष्ये साङ्गं महायोगं भुक्तिमुक्तिकरं परम् ॥ सर्वपापप्रशमनं भक्त्यानुपठितं शृणु ॥ १ ॥ ममेति मूलं दुःखस्य न
ममेति निवर्त्तनम् ॥ दत्तात्रेयो ह्यलर्काय इममाह महामतिः ॥ २ ॥ अहमित्यङ्कुरोत्पन्नो ममेति स्कन्धवान्महान् ॥ गृहक्षेत्राणि शाखाश्च यत्र

दाराभिपल्लवः ॥ ३ ॥ धनधान्ये महापत्रे पापमूलोऽतिदुर्गमः ॥ विधिवत्सुखशान्त्यर्थं जातोऽज्ञानमहातरुः ॥ ४ ॥ छिन्नो विद्याकुठारेण ते गता
लयमीश्वरे ॥ प्राप्य ब्रह्मरसं पीतं नीरजस्कमकण्टकम् ॥ ५ ॥ प्राप्नुवन्ति पराः प्राज्ञाः सुखनिर्वृतिमेव च ॥ मूर्त्तेन्द्रियलयं नूनं न त्वं राजन्
न चाप्यहम् ॥ ६ ॥ न तन्मात्रादिकं वाचा नैवान्तःकरणं तथा ॥ कं वा पश्यसि राजेन्द्र प्रधानमिदमावयोः ॥ ७ ॥ मृतः परेऽह्नि क्षेत्रज्ञः
संजातोऽयं गुणात्मकः ॥ एकत्वेऽपि पृथग्भावस्तथा क्षेत्रात्मनो नृप ॥ ८ ॥ ज्ञानपूर्वंवियोगोऽसौ ज्ञाने नष्टे च योगिनः ॥ सा मुक्तिर्ब्रह्मणा चैक्य
मनैक्यं प्राकृतैर्गुणैः ॥ ९ ॥ तद्गृहं यत्र वसति तद्भोज्यं येन जीवति ॥ यन्मुक्तये तदेवोक्तं ज्ञानाज्ञाने न चान्यथा ॥ १० ॥ उपभोगेन पुण्याना
मपुण्यानाञ्च पार्थिव ॥ कर्त्तव्यानाञ्च नित्यानां क्षयन्त्वकरणात्तथा ॥ ११ ॥ अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यापरिग्रहौ ॥ यमाः पञ्चाथ नियमाः
शौचं द्विविधमीरितम् ॥ १२ ॥ सन्तोषस्तपसा शान्तिर्वासुदेवार्चनं दमः ॥ आसनं पद्मकाद्युक्तं प्राणायामो मरुज्जयः ॥ १३ ॥ प्रत्येकं त्रिविधः
सोऽपि पूरकुम्भकरेचकैः ॥ लघुर्यो दशमात्रस्तु द्विगुणः स तु मध्यमः ॥ १४ ॥ त्रिगुणाभिस्तु मात्राभिरुत्तमः स उदाहृतः ॥ जपध्यानयुतौ गर्भो
विपरीतस्त्वगर्भकः ॥ १५ ॥ प्रथमे नजयेत्स्वप्नं मध्यमेन च वेपथुम् ॥ विषादं हि तृतीयेन जातान्दोषास्त्वनुक्रमात् ॥ १६ ॥ आसनस्थन्तु
युञ्जीत कृत्वा च प्रणवं हृदि ॥ पार्ष्णिभ्यां लिंगवृषणौ स्पर्शन्नेकाग्रमानसः ॥ १७ ॥ रजसा तमसो वृत्तिं सत्त्वेन रजसस्तथा ॥ निरुध्य निश्चलो
भूत्वा स्थितो युञ्जीत योगवित् ॥ १८ ॥ इन्द्रियाणीन्द्रियार्थेभ्यः प्राणादीन्मन एव च ॥ निगृह्य समवायेन प्रत्याहार मुपक्रमेत् ॥ १९ ॥ प्राणायामा दशाष्टौ
च धारणा सा विधीयते ॥ द्वे धारणे स्मृतो योगो योगिभिस्तत्त्वदर्शिभिः ॥ २० ॥ प्राङ्नाड्यां हृदये चात्र तृतीया च तथोरसि ॥ कण्ठे मुखे ना
सिकाग्रे नेत्रे भ्रूमध्यमूर्द्धसु ॥ २१ ॥ किञ्चित्तस्मात्परस्मिंश्च धारणा दशधा स्मृता ॥ दशैता धारणाः प्राप्य प्राप्नोत्यक्षररूपताम् ॥ २२ ॥ यथाग्निर
ग्नौ संक्षिप्तस्तथात्मा परमात्मनि ॥ ब्रह्मरूपं महापुण्यमोमित्येकाक्षरं जपेत् ॥ २३ ॥ अकारश्च तथोकारो मकारश्चाक्षरत्रयम् ॥ एतास्तिस्रस्ततो मात्राः
सत्त्वराजसतामसाः ॥ २४ ॥ निर्गुणा योगिगम्याद्यार्द्धमात्रा परा स्थिता ॥ गान्धारीति च विज्ञेया गान्धारस्वरसंश्रया ॥ इत्येतदक्षरं ब्रह्म परमोङ्कारसं
ज्ञितम् ॥ २५ ॥ अहं ब्रह्म परं ज्योतिः स्थूलदेहविवर्जितम् ॥ अहं ब्रह्म परं ज्योतिर्जरामरणवर्जितम् ॥ २६ ॥ अहं ब्रह्म परं ज्योतिः पृथिव्या मलव
र्जितम् ॥ अहं ब्रह्म परं ज्योतिर्वाय्वाकाशविवर्जितम् ॥ २७ ॥ अहं ब्रह्म परं ज्योतिः सूक्ष्मदेहविवर्जितम् ॥ अहं ब्रह्म परं ज्योतिः स्थानास्थानविव

१ संस्थाप्य निश्चले शब्दे इति पा० । २ मात्म्यतामिति पा० ।

जिंतम् ॥ २८ ॥ अहं ब्रह्म परं ज्योतिर्गन्धमात्रविवर्जितम् ॥ अहं ब्रह्म परं ज्योतिः श्रोत्रत्वक्परिवर्जितम् ॥ २९ ॥ अहं ब्रह्म परं ज्योतिर्जिह्वाघ्राणवि
वर्जितम् ॥ अहं ब्रह्म परं ज्योतिः प्राणापानविवर्जितम् ॥ ३० ॥ अहं ब्रह्म परं ज्योतिर्व्यानोदानविवर्जितम् ॥ अहं ब्रह्म परं ज्योतिरज्ञानपरिवर्जितम
॥ ३१ ॥ अहं ब्रह्म परं ज्योतिस्तुरीयं परमं पदम् ॥ देहेन्द्रियमनोबुद्धिप्राणाहङ्कारवर्जितम् ॥ ३२ ॥ नित्यशुद्धबुद्धंमुक्तमहमानन्दमद्वयम् ॥ अहं
ब्रह्म परं ज्योतिर्ज्ञानरूपो विमुक्तये ॥ ३३ ॥ सूत उवाच ॥ इत्यष्टाङ्गो मया योग उक्तः शौनक मुक्तिदः ॥ नित्यनैमित्तिकं गत्वा लयं प्राकृतबन्ध
नाः ॥ ३४ ॥ उत्पद्यन्ते हि संसारे नैकं यात्वा परात्मनाम् ॥ विमुच्यते विमुक्तश्च ज्ञानादज्ञानमोहितः ॥ ३५ ॥ ततो न म्रियते दुःखी न रोगी न
च बन्धवान् ॥ न पापैर्युज्यते योगी नरके न विपच्यते ॥ ३६ ॥ गर्भवासे स नो दुःखी स स्यान्नारायणोऽव्ययः ॥ भक्त्या त्वनन्यया लभ्यो भगवा
न्भुक्तिमुक्तिदः ॥ ३७ ॥ ध्यानेन पूजया जप्यैः सम्यक् स्तोत्रैर्यतव्रतैः ॥ यज्ञैर्दानैश्चित्तशुद्धिस्तया ज्ञानञ्च लभ्यते ॥ ३८ ॥ प्रणवादिकमन्त्रैश्च
जप्यैर्मुक्तिं गता द्विजाः ॥ इन्द्रोऽपि परमं स्थानं गन्धर्वाप्सरसो वराः ॥ ३९ ॥ प्राप्ता देवाश्च देवत्वं मुनित्वं मुनयो गताः ॥ गन्धर्वत्वञ्च गन्धर्वा
राजत्वञ्च नृपादयः ॥ ४० ॥ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेष्टाङ्गयोगकथनं नाम षड्विंशत्यधिकद्विशततमो
ऽध्यायः ॥ २२६ ॥ ॥ सूत उवाच ॥ विष्णुभक्तिं प्रवक्ष्यामि यया सर्वमवाप्यते ॥ यथा भक्त्या हरिस्तुष्येत्तथा नान्येन केनचित् ॥ १ ॥
महतः श्रेयसो मूलं प्रसवः पुण्यसन्ततेः ॥ जीवितस्य फलं स्वादु नियतं स्मरणं हरेः ॥ २ ॥ तस्मात्सेवा बुधैः प्रोक्ता भक्तिसाधनभूयसी ॥
ते भक्ता लोकनाथस्य नामकर्मादिकीर्त्तने ॥ ३ ॥ मुञ्चन्त्यश्रूणि संहर्षाद्ये प्रहृष्टतनूरुहाः ॥ जगद्धातुर्महेशस्य दिव्याज्ञाचरणा वयम् ॥ ४ ॥
इह नित्यक्रियाः कुर्य्युः स्निग्धा ये वैष्णवास्तु ते ॥ ब्रह्माक्षरं न शृण्वन्वै तया भगवतेरितम् ॥ ५ ॥ प्रणामपूर्वकं भक्त्या यो वदेद्वैष्णवो हि सः ॥ त
द्भक्तजनवात्सल्यं पूजनं चानुमोदनम् ॥ ६ ॥ तत्कथाश्रवणे प्रीतिरश्रुनेत्राङ्गविक्रियाः ॥ येन सर्वात्मना विष्णौ भक्त्या भावो निवेशितः ॥ ७ ॥
विप्रेभ्यश्च कृतात्मत्वान्महाभागवतो हि सः ॥ विश्वोपकरणं नित्यं तदर्थं सङ्गवर्जनम् ॥ स्वयमभ्यर्चनञ्चैव यो विष्णुञ्चोपजीवति ॥८॥ भक्तिरष्टविधा
ह्येषा यस्मिन्म्लेच्छोऽपि वर्त्तते ॥ स विप्रेन्द्रो मुनिः श्रीमान्स याति परमां गतिम् ॥ ९ ॥ तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा हरिः ॥ स्मृतः
संभाषितो वापि पूजितो वा द्विजोत्तमः ॥ पुनाति भगवद्भक्तश्चण्डालोऽपि यदृच्छया ॥ १० ॥ दयां कुरु प्रपन्नाय तवास्मीति च यो वदेत् ॥ अभयं
सर्वभूतेभ्यो दद्यादेतद् व्रतं हरेः ॥११॥ मन्त्रजापिसहस्रेभ्यः सर्ववेदान्तपारगः ॥ सर्ववेदान्तवित्कोट्यां विष्णुभक्तो विशिष्यते ॥१२॥ एकान्तिनः स्व

वपुषा गच्छन्ति परमं पदम् ॥ एकान्तेन समो विष्णुस्तस्मादेषां परायणः ॥ १३ ॥ यस्मादेकान्तिनः प्रोक्तास्तद्भागवतचेतसः ॥ प्रियाणामपि सर्वेषां देवदेवस्य सुप्रियः ॥ १४ ॥ आपत्स्वपि सदा यस्य भक्तिरव्यभिचारिणी ॥ या प्रीतिरधिका विष्णोर्विषयेष्वनपायिनी ॥ १५ ॥ विष्णुं संस्मरतः सा मे हृदयान्नोपसर्पति ॥ दृढभक्तोऽपि वेदादिसर्वशास्त्रार्थपारगः ॥ १६ ॥ यो न सर्वेश्वरे भक्तस्तं विद्यात्पुरुषाधमम् ॥ नाधीतवेदशास्त्रोऽपि न कृतोऽध्वरसम्भवः ॥ यो भक्तिं वहते विष्णौ तेन सर्वं कृतं भवेत् ॥ १७ ॥ यज्वानः क्रतुमुख्यानां वेदानां पारगा अपि ॥ न तां यान्ति गतिं भक्ता यां यान्ति मुनिसत्तमाः ॥ १८ ॥ यः कश्चिद्वैष्णवो लोके मिथ्याचारोऽप्यनाश्रमी ॥ पुनाति सकलाँल्लोकान्सहस्रांशुरिवोदितः ॥ १९ ॥ ये नृशंसा दुरात्मानः पापाचाररतास्तथा ॥ तेऽपि यान्ति परं स्थानं नारायणपरायणाः ॥ २० ॥ दृढा जनार्दने भक्तिर्यदैवाव्यभिचारिणी ॥ तदा कियत्स्वर्गसुखं सैव निर्वाणहेतुका ॥ २१ ॥ भ्राम्यतां तत्र संसारे नराणां कर्मदुर्गमे ॥ हस्तावलम्बने ह्येकं येन तुष्येज्जनार्दनः ॥ न शृणोति गुणान्दिव्यान्देवदेवस्य चक्रिणः ॥ स नरो बधिरो ज्ञेयः सर्वधर्मबहिष्कृतः ॥ २२ ॥ नाम्नि संकीर्तिते विष्णोर्यस्य पुंसो न जायते ॥ शरीरं पुलकोद्भासि तद्भवेत्कुणपोपमम् ॥ २३ ॥ यस्मिन्भक्तिर्द्विजश्रेष्ठ मुक्तिरप्यचिराद्भवेत ॥ निर्विष्टमनसां पुंसां सर्वथा वृजिनक्षयः ॥ २४ ॥ स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले ॥ परिहर मधुसूदनप्रपन्नान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ २५ ॥ अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥ साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ २६ ॥ क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं स गच्छति ॥ विप्रेन्द्र प्रतिजानीहि विष्णुभक्तो न नश्यति ॥ ॥२७॥ धर्मार्थकामः किं तस्य मुक्तिस्तस्य करे स्थिता ॥ समस्तजगतां मूलं यस्य भक्तिः स्थिरा हरौ ॥२८॥ दैवी ह्येषा गुणमयी हरेर्माया दुरत्यया ॥ तमेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ २९ ॥ किं यज्ञाराधने पुंसा शिष्यते हरिमेधसाम् ॥ भक्त्यैवाराध्यते विष्णुर्नान्यत्तत्रोपकारकम् ॥ ३० ॥ न दानैर्विविधैर्दत्तैः पुष्पैर्नैवानुलेपनैः ॥ तोषमेति महात्मासौ यथा भक्त्या जनार्दनः ॥ ३१ ॥ संसारविषवृक्षस्य द्वे फले ह्यमृतोपमे ॥ कदाचित्केशवे भक्तिस्तद्भक्तैर्वा समागमः ॥ ३२ ॥ पत्रेषु पुष्पेषु फलेषु तोयेष्वकष्टलभ्येषु सदैव सत्सु ॥ भक्त्यैकलभ्ये पुरुषे पुराणे मुक्त्यैकलाभे क्रियते प्रयत्नः ॥ ३३ ॥ आस्फोटयन्ति पितरः प्रनृत्यन्ति पितामहाः ॥ वैष्णवोऽस्मत्कुले जातः स नः सन्तारयिष्यति ॥ ३४ ॥ अज्ञानिनः सुरवरे समधिक्षिपन्तो यत्पापिनोऽपि शिशुपालसुयोधनाद्याः ॥ मुक्तिं गताः स्मरणमात्रविधूतपापाः कः संशयः परमभक्तिमतां जनानाम् ॥ ३५ ॥ शरणं तं

प्रपन्ना ये ध्यानयोगविवर्जिताः ॥ तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम्॥२६॥भवोद्भवक्लेशशतैर्हतस्तथा परिभ्रमन्निन्द्रियरन्ध्रकैर्हयैः ॥ नियम्य
तां माधव ! मे मनोहयस्त्वदङ्घ्रिशङ्कौ दृढभक्तिबन्धने ॥ ३७ ॥ विष्णुरेव परं ब्रह्म त्रिभेदमिह पठ्यते ॥ वेदसिद्धान्तमार्गेषु तन्न जानन्ति मोहिताः
॥ ३८ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे भगवद्भक्तिविवरणं नाम सप्तविंशत्यधिकद्विशततमोऽध्यायः ॥ २२७ ॥ सूत
उवाच ॥ मुक्तिहेतुमनाद्यन्तमजमव्ययमक्षयम् ॥ यो नमेत् सर्वलोकस्य नमस्यो जायते नरः ॥१॥ विष्णुमानन्दमद्वैतं विज्ञानं सर्वगं प्रभुम् ॥ प्रणमा
मि सदा भक्त्या चेतसा हृदयालयम् ॥ २ ॥ योऽन्तस्तिष्ठन्नशेषस्य पश्यतीशः शुभाशुभम् ॥ तं सर्वसाक्षिणं विष्णुं नमस्ये परमेश्वरम् ॥ ३ ॥ शक्ते
नापि नमस्कारः प्रयुक्तश्चक्रपाणये ॥ संसारतृणवर्गाणामुद्वेजनकरो हि सः ॥ ४ ॥ कृष्णे स्फुरज्जलधरोदरचारुकृष्णे लोकाधिकारपुरुषे परमप्रमेये ॥
एको हि भावगुणमात्रदृढप्रणामः सद्यः श्वपाकमपि साधयितुं सशक्तः ॥ ५ ॥ प्रणम्य दण्डवद्भूमौ नमस्कारेण योऽर्चयेत् ॥ स यां गतिमवाप्नोति न
तां क्रतुशतैरपि ॥ ६ ॥ दुर्गसंसारकान्ताराकूपारेऽपि प्रधावताम् ॥ एकः कृष्णे नमस्कारो मुक्त्या तांस्तारयिष्यति ॥ ७ ॥ आसीनो वा शयानो वा
तिष्ठन् वा यत्र तत्र वा ॥ नमो नारायणायेति मन्त्रैकशरणो भवेत् ॥ ८ ॥ नारायणेति शब्दोऽस्ति वागस्ति वशवर्तिनी ॥ तथापि नरके मूढाः पत
न्तीति किमद्भुतम् ॥ ९ ॥ चतुर्मुखो वा यदि कोटिवक्रो भवेन्नरः कोपि विशुद्धचेताः ॥ स वै गुणानामयुतैकदेशं वदेन्न वा देववरस्य विष्णोः ॥
॥ १० ॥ व्यासाद्या मुनयः सर्वे स्तुवन्तो मधुसूदनम् ॥ मतिक्षयान्निवर्त्तन्ते न गोविन्दगुणक्षयात् ॥ ११ ॥ अवशेनापि यन्नाम्नि कीर्त्तिते सर्वपातकैः॥
पुमान् विमुच्यते सद्यः सिंहत्रस्तो मृगा यथा ॥ बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ १२ ॥ स्वप्नेऽपि नाम स्पृशतोऽपि पुंसः क्षयं करोत्यक्ष
यपापराशिम् ॥ प्रत्यक्षतः किं पुनरत्र पुंसा प्रकीर्त्तिते नाम्नि जनार्दनस्य ॥ १३ ॥ नमः कृष्णाच्युतानन्तवासुदेवेत्युदीरितम् ॥ यैर्भावभावितैर्विप्र
न ते यमपुरं ययुः ॥ १४ ॥ क्षयो भवेद्यथा वह्नेस्तमसो भास्करोदये ॥ तथैव कलुषौघस्य नामसंकीर्त्तनाद्धरेः ॥ १५ ॥ क्व नाकपृष्ठगमनं पुन
रायाति न क्षयम् ॥ गच्छतां दूरमध्वानं कृष्णमूर्च्छितचेतसाम् ॥ १६ ॥ पाथेयं पुण्डरीकाक्षनामसंकीर्त्तनं हरेः ॥ संसारसर्पसंदष्टविषचेष्टैकभेष
जम् ॥ कृष्णेति वैष्णवं क्षान्तं जप्त्वा मुक्तो भवेन्नरः ॥ १७ ॥ ध्यायन् कृते जपेन्मन्त्रैस्त्रेतायां द्वापरेऽर्चयन् ॥ यदाप्नोति तदाप्नोति कलौ संस्मृत्य
केशवम् ॥ १८ ॥ जिह्वाग्रे वर्त्तते यस्य हरिरित्यक्षरद्वयम् ॥ संसारसागरं तीर्त्वा स गच्छेद्वैष्णवं पदम् ॥ १९ ॥ विज्ञातदुष्कृतिसहस्रसमावृतोऽपि

१ श्यन्नभावो विकल्पनात् ।

श्रेयः परन्तु परिशुद्धिमभीप्समानः ॥ स्वप्नान्तरे न हि पुनश्च भवं स पश्येन्नारायणस्तुतिकथापरमो मनुष्यः ॥ २० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकांडे विष्णुभक्तिविवरणं नामाष्टाविंशत्युत्तरद्विशततमोऽध्यायः ॥ २२८ ॥ सूत उवाच ॥ अशेषलोकनाथस्य सारमाराधनं हरेः ॥ दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव च ॥ १ ॥ अर्चितं स्याज्जगदिदं तेन सर्वं चराचरम् ॥ यो न पूजयते विष्णुं तं विद्याद्ब्रह्मघातकम् ॥ २ ॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥ तं यो न ध्यायते विष्णुं स विष्ठायां क्रिमिर्भवेत् ॥ ३ ॥ नरके पच्यमानस्तु यमेन परिभाषितः ॥ किन्त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥ ४ ॥ उदकेनाप्यभावेन द्रव्याणामर्चितः प्रभुः ॥ यो ददाति स्वकं लोकं स त्वया किं न चार्चितः ॥ ५ ॥ न तत्करोति सा माता न पिता नापि बान्धवः ॥ यत्करोति हृषीकेशः सन्तुष्टः श्रद्धयार्चितः ॥ ६ ॥ वर्णाश्रमाचारवता पुरुषेण परः पुमान् ॥ विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥ ७ ॥ न दानैर्विविधैर्दत्तैर्न पुष्पैर्नानुलेपनैः ॥ तोषमेति महात्मासौ यथा भक्त्या जनार्दनः ॥ ८ ॥ सम्पदैश्वर्यमाहात्म्यैः सन्तत्या न च कर्मणा ॥ विमुक्तैश्चैकता लभ्या मूलमाराधनं हरेः ॥ ९ ॥ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे विष्णुपूजानिरूपणं नामैकोनत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २२९ ॥ ॥ सूत उवाच ॥ आलोक्य सर्वशास्त्राणि विचार्य्य च पुनःपुनः ॥ इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा ॥ १ ॥ किं तस्य दानैः किं तीर्थैः किं तपोभिः किमध्वरैः ॥ यो नित्यं ध्यायते देवं नारायणमनन्यधीः ॥ २ ॥ षष्टिस्तीर्थसहस्राणि षष्टिस्तीर्थशतानि च ॥ नारायणप्रणामस्य कलां नार्हन्ति षोडशीम् ॥ ३ ॥ प्रायश्चित्तान्यशेषाणि तपः कर्माणि यानि वै ॥ विद्धि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ ॥ ४ ॥ कृतपापेऽनुरक्तिश्च यस्य पुंसः प्रजायते ॥ प्रायश्चित्तन्तु तस्यैकं हरेः संस्मरणं परम् ॥ ५ ॥ मुहूर्तमपि यो ध्यायेन्नारायणमतन्द्रितः ॥ सोऽपि स्वर्गतिमाप्नोति किं पुनस्तत्परायणः ॥ ६ ॥ जाग्रत्स्वप्नसुषुप्तेषु योगस्थस्य च योगिनः ॥ या काचिन्मनसो वृत्तिः सा भवत्यच्युताश्रयात् ॥ ७ ॥ उत्तिष्ठन्निपतन्विष्णुं प्रलपन्विविशंस्तथा ॥ भुंजञ्जाग्रच्च गोविन्दं माधवं यश्च संस्मरेत् ॥ ८ ॥ स्वेस्वे कर्मण्यभिरतः कुर्य्याच्चित्तं जनार्दने ॥ एषा शास्त्रानुसारोक्तिः किमन्यैर्बहुभाषितैः ॥ ९ ॥ ध्यानमेव परो धर्मो ध्यानमेव परं तपः ॥ ध्यानमेव परं शौचं तस्माद्ध्यानपरो भवेत् ॥ १० ॥ नास्ति विष्णोः परं ध्येयं तपो नानशनात्परम् ॥ तस्मात्प्रधानमत्रोक्तं वासुदेवस्य चिन्तनम् ॥ ११ ॥ यद्दुर्लभं परं प्राप्यं मनसो यन्न गोचरम् ॥ तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः ॥ १२ ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ १३ ॥

ध्यानेन सदृशो नास्ति शोधनं पापकर्मणाम् ॥ आगामिदेहहेतूनां दाहको योगपावकः ॥ १४ ॥ विनिष्पन्नसमाधिस्तु मुक्तिमत्रैव जन्मनि ॥ प्राप्नोति
योगी योगाग्निदग्धकर्मा च योऽचिरात् ॥१५॥ यथाग्निरुद्धतशिखः कक्षं दहति वानिलः ॥ तथा चित्तस्थिते विष्णौ योगिनां सर्वकिल्बिषम् ॥ १६ ॥
यथाग्नियोगात्कनकममलं संप्रजायते॥ संप्लुष्टो वासुदेवेन मनुष्याणां सदा मलः ॥ १७ ॥ गङ्गास्नानसहस्रेषु पुष्करस्नानकोटिषु ॥ यत्पापं निलयं
याति स्मृते नश्यति तद्धरौ ॥ १८ ॥ प्राणायामसहस्रैस्तु यत्पापं नश्यति ध्रुवम् ॥ क्षणमात्रेण तत्पापं हरेर्ध्यानात्प्रणश्यति ॥ १९ ॥ कलिप्रभावा
दुष्टोक्तिः पाषण्डानां तथोक्तयः ॥ न क्रामेन्मानसं तस्य यस्य चेतसि केशवः ॥ २० ॥ सा तिथिस्तदहोरात्रं स योगः स च चन्द्रमाः ॥ लग्नं तदेव
विख्यातं यत्र संस्मर्य्यते हरिः ॥ २१ ॥ सा हानिस्तन्महच्छिद्रं सा चार्थजडमूकता ॥ यन्मुहूर्तं क्षणो वापि वासुदेवो न चिन्त्यते ॥२२॥ कलौ कृत
युगं तस्य कलिस्तस्य कृते युगे ॥ हृदि नो यस्य गोविन्दो यस्य चेतसि नाच्युतः॥२३॥यस्याग्रतस्तथा पृष्ठे गच्छतस्तिष्ठतोऽपि वा ॥ गोविन्दे नियतं
चेतः कृतकृत्यः सदैव सः॥२४॥ वासुदेवे मनो यस्य जपहोमार्चनादिषु ॥ तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम्॥२५॥ असंत्यज्य च गार्हस्थ्यं
स तप्त्वा च महत्तपः॥ छिनत्ति पौरुषीं मायां केशवार्पितमानसः ॥२६॥ क्षमां कुर्वंति क्रुद्धेषु दयां मूर्खेषु मानवाः ॥ मुदश्च धर्मशीलेषु गोविन्दे हृदय
स्थिते ॥२७॥ ध्यायेन्नारायणं देवं स्नानदानादिकर्मसु ॥ प्रायश्चित्तेषु सर्वेषु दुष्कृतेषु विशेषतः ॥ २८ ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराभवः ॥
येषामिन्दीवरश्यामो हृदयस्थो जनार्दनः ॥२९॥ कीटपक्षिगणानाञ्च हरौ संन्यस्तचेतसाम् ॥ ऊर्द्ध्वा ह्येव गतिश्चास्ति किं पुनर्ज्ञानिनां नृणाम् ॥३०॥
वासुदेवतरुच्छाया नातिशीतातितापदा ॥ नरकद्वारशमनी सा किमर्थं न सेव्यते ॥ ३१ ॥ न च दुर्वाससः शापो राज्यश्चापि शचीपतेः ॥ हन्तुं
समर्थं हि सखे हृत्कृते मधुसूदने ॥ ३२ ॥ वदतस्तिष्ठतोऽन्यद्वा स्वेच्छया कर्म कुर्वतः ॥ नापयाति यदा चिन्ता सिद्धां मन्येत धारणाम् ॥ ३३ ॥
ध्येयः सदा सवितृमण्डलमध्यवर्त्ती नारायणः सरसिजासनसन्निविष्टः ॥ केयूरवान्मकरकुण्डलवान्किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥ ३४ ॥
न हि ध्यानेन सदृशं पवित्रमिह विद्यते ॥ श्वपचान्नानि भुञ्जानो पापी नैवात्र लिप्यते ॥ ३५ ॥ सदा चित्तं समासक्तं जन्तोर्विषयगोचरे ॥ यदि
नारायणेऽप्येवं को न मुच्येत बन्धनात् ॥ ३६ ॥ सूत उवाच ॥ विष्णुभक्तिर्यस्य चित्ते कं वा जीवो नमेत्सदा ॥ स तारयति चात्मानं तदैव दुरिता
र्णवात् ॥ ३७ ॥ तज्ज्ञानं यत्र गोविंदः सा कथा यत्र केशवः ॥ तत्कर्म यत्तदर्थाय किमन्यैर्बहुभाषितैः ॥ ३८ ॥ सा जिह्वा या हरिं स्तौति तच्चित्तं
यत्तदर्पितम् ॥ तावेव केवलौ श्लाघ्यौ यौ तत्पूजाकरौ करौ ॥ ३९ ॥ प्रणाममीशस्य शिरःफलं विदुस्तदर्चनं पाणिफलं दिवौकसः ॥ मनःफलं

तद्गुणकर्मचिन्तनं वचस्तु गोविंदगुणस्तुतिः फलम् ॥ ४० ॥ मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः ॥ केशवस्मरणादेव तस्य सर्वं विनश्यति ॥ ४१ ॥ यत्किञ्चित्कुरुते कर्म पुरुषः साध्वसाधु वा ॥ सर्वं नारायणे न्यस्य कुर्वन्नपि न लिम्पति ॥ ४२ ॥ तृणादिचतुरास्यान्तं भूतग्रामं चतुर्विधम् ॥ चराचरं जगत्सर्वं प्रसुप्तं मायया तव ॥४३॥ यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि[1] यच्चिन्तने विघ्नो यत्र नवा विशेत्कथमपि ब्राह्मोऽपि लोकोऽल्पकः ॥ मुक्तिश्चेतासि संस्थितो जडधियां पुंसां ददात्यव्ययः किञ्चित्रं यदयं प्रयाति विलयं तत्राच्युते कीर्त्तिते ॥ ४४ ॥ अग्निकार्य्यं जपः स्नानं विष्णोर्ध्यानञ्च पूजनम् ॥ गन्तुं दुःखोदधेः कुर्य्युर्ये च तत्र तरन्ति ते ॥ ४५ ॥ राष्ट्रस्य शरणं राजा पितरो बालकस्य च ॥ धर्मश्च सर्वमर्त्यानां सर्वस्य शरणं हरिः ॥ ४६ ॥ ये नमन्ति जगद्योनिं वासुदेवं सनातनम् ॥ न तेभ्यो विद्यते तीर्थमधिकं मुनिसत्तम ॥ ४७ ॥ अनर्घरत्नपूजाञ्च कुर्य्यात्स्वाध्यायमेव च ॥ तमेवोद्दिश्य गोविंदं ध्यायन्नित्यमतन्द्रितः ॥ ४८ ॥ शूद्रं वा भगवद्भक्तं निषादं श्वपचं तथा ॥ द्विजजातिसमंमन्यो न याति नरकं नरः ॥ ४९ ॥ आदरेण सदा स्तौति धनवन्तं धनेच्छया ॥ तथा विश्वस्य कर्त्तारं को न मुच्येत बन्धनात् ॥ ५० ॥ यथा ग्रातवनो वह्निर्दहत्यार्द्रमपीन्धनम् ॥ तथाविधः स्थितो विष्णुर्योगिनां सर्वकिल्बिषम् ॥ ५१ ॥ आदीप्तं पर्वतं यद्वन्नाश्रयंति मृगादयः ॥ तद्वत्पापानि सर्वाणि योगाभ्यासरतं नरम् ॥ ५२ ॥ यस्य यावांश्च विश्वासस्तस्य सिद्धिस्तु तावती ॥ एतवानेव कृष्णस्य प्रभावः परिमीयते ॥ ५३ ॥ विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन् ॥ शिशुपालो गतस्तत्त्वं किं पुनस्तत्परायणः ॥ ५४ ॥ इति श्रीगारुडे महापुराणे पूर्वखंडे प्रथमांशाख्ये आचारकाण्डे विष्णुमहात्म्यवर्णनं नाम त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३० ॥ ॥ सूत उवाच ॥ नारसिंहस्तुतिं वक्ष्ये शिवोक्तं शौनकाधुना ॥ पूर्वं मातृगणाः सर्वे शङ्करं वाक्यमब्रुवन् ॥१॥ भगवन् भक्षयिष्यामः सदेवासुरमानुषम् ॥ त्वत्प्रसादाज्जगत्सर्वं तदनुज्ञातुमर्हसि ॥ २ ॥ शङ्कर उवाच ॥ भवतीभिः प्रजाः सर्वा रक्षणीया न संशयः ॥ तस्माद्घोरतरप्रायं मनः शीघ्रं निवर्त्त्यताम् ॥ ३ ॥ इत्येवं शंकरेणोक्तमनादृत्य तु तद्वचः ॥ भक्षयामासुरव्यग्रास्त्रैलोक्यं सचराचरम् ॥ ४ ॥ त्रैलोक्ये भक्ष्यमाणे तु तदा मातृगणेन वै ॥ नृसिंहरूपिणं देवं प्रदध्यौ भगवाञ्छिवः ॥ ५ ॥ अनादिनिधनं देवं सर्वभूतभवोद्भवम् ॥ विद्युज्जिह्वं महादंष्ट्रं स्फुरत्केसरमालिनम् ॥ ६ ॥ रत्नांगदं समुकुटं हेमकेसरभूषितम् ॥ श्रोणिसूत्रेण महता काञ्चनेन विराजितम् ॥ ७ ॥ नीलोत्पलदलश्यामं रत्ननूपुरभूषितम् ॥ तेजसाक्रान्तसकलब्रह्माण्डोदरमण्डपम् ॥ ८ ॥ आवर्त्तसदृशाकारैः संयुक्तं देहरोमभिः ॥

१ वचसइत्यर्थः । २ भवतीति शेषः ।

सर्वपुष्पैर्योजिताश्च धारयंश्च महास्त्रजम् ॥ ९ ॥ स ध्यातमात्रो भगवान्प्रददौ तस्य दर्शनम् ॥ यादृशेनव रूपेण ध्यातो रुद्रैस्तु भक्तितः ॥ १० ॥
तादृशेनैव रूपेण दुर्निरीक्ष्येण दैवतैः ॥ प्रणिपत्य तु देवेशं तदा तुष्टाव शंकरः ॥ ११ ॥ शंकर उवाच ॥ नमस्तेऽस्तु जगन्नाथ नरसिंहवपुर्धर ॥
दैत्येश्वरेन्द्रसंहारिनखशुक्तिविराजित ॥ १२ ॥ नखमण्डलसंभिन्नहेमपिंगलविग्रह ॥ नमोऽस्तु पद्मनाभाय शोभनाय जगद्गुरो ॥ कल्पान्ताऽम्भोदनि
र्घोष सूर्य्यकोटिसमप्रभ ॥ १३ ॥ सहस्त्रयमसंत्रास सहस्त्रेन्द्रपराक्रम ॥ सहस्त्रधनदस्फीत सहस्त्रचरणात्मक ॥ १४ ॥ सहस्त्रचन्द्रप्रतिम ! सहस्रांशु
हरिक्रम ॥ सहस्त्ररुद्रतेजस्क सहस्त्रब्रह्मसंस्तुत ॥ १५ ॥ सहस्त्ररुद्रसंजप्त सहस्राक्षनिरीक्षण ॥ सहस्त्रजन्ममथन सहस्त्रबन्धनमोचन ॥ १६ ॥ सहस्त्र
वायुवेगाक्ष सहस्राज्ञकृपाकर ॥ स्तुत्वैवं देवदेवेशं नृसिंहवपुषं हरिम् ॥ विज्ञापयामास पुनर्विनयावनतः शिवः ॥ १७ ॥ अन्धकस्य विनाशाय या
सृष्टा मातरो मया ॥ अनादृत्य तु मद्वाक्यं भक्षयन्त्यद्भुताः प्रजाः ॥ १८ ॥ सृष्ट्वा ताश्च न शक्तोऽहं संहर्तुमपराजितः ॥ पूर्वं कृत्वा कथं तासां विनाश
मभिरोचये ॥ १९ ॥ एवमुक्तः स रुद्रेण नरसिंहवपुर्हरिः ॥ सहस्त्रदेवीर्जिह्वाग्रात्तदा वागीश्वरो हरिः ॥२०॥ तथा सुरगणान्सर्वान्रौद्रान्मातृगणान्विभुः ॥
संहृत्य जगतः शर्म कृत्वा चान्तर्दधे हरिः ॥ २१ ॥ नारसिंहमिदं स्तोत्रं यः पठेन्नियतेन्द्रियः ॥ मनोरथप्रदस्तस्य रुद्रस्येव न संशयः ॥ २२ ॥
ध्यायेन्नृसिंहं तरुणार्कनेत्रं सिताम्बुजातं ज्वलिताग्निवक्त्रम् ॥ अनादिमध्यान्तमज पुराणं परापरेशं जगतां निधानम् ॥ २३ ॥ जपेदिदं सन्ततदुः
खजालं जहाति नीहारमिवांशुमाली ॥ समातृवर्गस्य करोति मूर्त्तिं यदा तदा तिष्ठति तत्समीपे ॥ २४ ॥ देवेश्वरस्यापि नृसिंहमूर्त्तेः पूजां विधातुं
त्रिपुरान्तकारी ॥ प्रसाद्य तं देववरं स लब्ध्वा अव्याज्जगन्मातृगणेभ्य एव च ॥ २५ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे
नृसिंहस्तोत्रं नामैकत्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३१ ॥ ॥ सूत उवाच ॥ कुलामृतं प्रवक्ष्यामि स्तोत्रं यत्तु हरोऽब्रवीत् ॥ पृष्टः श्रीनारदेनैव नार
दाय तथा शृणु ॥ १ ॥ नारद उवाच ॥ यः संसारे सदा द्वन्द्वैः कामक्रोधैः शुभाशुभैः ॥ शब्दादिविषयैर्बद्धः पीड्यमानः स दुर्मतिः ॥ २ ॥ क्षणं
विमुच्यते जन्तुर्मृत्युसंसारसागरात् ॥ भगवञ्छ्रोतुमिच्छामि त्वत्तो हि त्रिपुरान्तक ॥ ३ ॥ तस्य तद्वचनं श्रुत्वा नारदस्य त्रिलोचनः ॥ उवाच तमृषिं
शम्भुः प्रसन्नवदनो हरः ॥ ४ ॥ महेश्वर उवाच ॥ ज्ञानामृतं परं गुह्यं रहस्यमृषिसत्तम ॥ वक्ष्यामि शृणु दुःस्वप्नं भवबन्धभयापहम् ॥ ५ ॥ तृणादि
चतुरास्यान्तं भूतग्रामं चतुर्विधम् ॥ चराचरं जगत्सर्वं प्रसुप्तं यस्य मायया ॥ ६ ॥ तस्य विष्णोः प्रसादेन यदि कश्चित्प्रबुध्यते ॥ स निस्तरति संसारं
देवानामपि दुस्तरम् ॥ ७ ॥ भोगैश्वर्य्यमदोन्मत्तस्तत्त्वज्ञानपराङ्मुखः ॥ पुत्रदारकुटुम्बेषु मत्ताः सीदन्ति जन्तवः ॥ ८ ॥ सर्वे एकार्णवे मग्ना जीर्णा

वनगजा इव ॥ यस्त्वाननं निबध्नाति दुर्मतिः कोशकारवत् ॥ ९ ॥ तस्य मुक्तिं न पश्यामि जन्मकोटिशतैरपि ॥ तस्मान्नारद सर्वेषां देवानां देवमव्य
यम् ॥ आराधयेत्सदा सम्यग्ध्यायेद्विष्णुं मुदान्वितः ॥ १० ॥ यस्तु विश्वमनाद्यन्तमजमात्मनि संस्थितम् ॥ सर्वज्ञमचलं विष्णुं सदा ध्यायेत्स
मुच्यते ॥ ११ ॥ देवं गर्भोचितं विष्णुं सदा ध्यायन्विमुच्यते ॥ अशरीरं विधातारं सर्वज्ञानमनोरतिम् ॥ अचलं सर्वगं विष्णुं सदा ध्यायन्विमुच्यते
॥ १२ ॥ निर्विकल्पं निराभासं निष्प्रपञ्चं निरामयम् ॥ वासुदेवं गुरुं विष्णुं सदा ध्यायन्विमुच्यते ॥१३॥ सर्वात्मकश्च वै यावदात्मचैतन्यरूपकम् ॥
शुभमेकाक्षरं विष्णुं सदा ध्यायन्विमुच्यते ॥१४॥ वाक्यातीतं त्रिकालज्ञं विश्वेशं लोकसाक्षिणम् ॥ सर्वस्मादुत्तमं विष्णुं सदा ध्यायन्विमुच्यते॥१५॥
ब्रह्मादिदेवगन्धर्वैर्मुनिभिः सिद्धचारणैः॥ योगिभिः सेवितं विष्णुं सदा ध्यायन्विमुच्यते॥१६॥संसारबन्धनान्मुक्तिमिच्छँल्लोको ह्यशेषतः॥ स्तुत्वैवं वरदं
विष्णुं सदा ध्यायन्विमुच्यते ॥१७॥ संसारबन्धनात्कोऽपि मुक्तिमिच्छन्समाहितः ॥ अनन्तमव्ययं देवं विष्णुं विश्वप्रतिष्ठितम् ॥ विश्वेश्वरमजं विष्णुं
सदा ध्यायन्विमुच्यते ॥१८॥ सूत उवाच ॥ नारदेन पुरा पृष्ट एवं स वृषभध्वजः॥ यत्तेन तस्मै व्याख्यातं तन्मया कथितं तव ॥ १९ ॥ तमेव सततं
ध्यायन्निर्व्ययं ब्रह्म निष्कलम् ॥ अवाप्स्यसि ध्रुवं तात ! शाश्वतं पदमव्ययम् ॥२०॥ अश्वमेधसहस्राणि वाजपेयशतानि च ॥ क्षणमेकाग्रचित्तस्य
कलां नार्हन्ति षोडशीम्॥२१॥श्रुत्वा सुरर्षिर्विष्णोः प्राधान्यमिदमीश्वरात् ॥ स विष्णुं सम्यगाराध्य सिद्धः पदमवाप्तवान् ॥२२॥ यः पठेच्छृणुयाद्वा
पि नित्यमेव स्तवोत्तमम् ॥ कोटिजन्मकृतं पापमपि तस्य प्रणश्यति ॥ २३ ॥ विष्णोः स्तवमिदं दिव्यं महादेवेन कीर्तितम् ॥ प्रयताद्यः पठेन्नित्य
ममृतत्वं स गच्छति ॥ २४ ॥ इति श्रीगारुडे महापुराणे कुलामृतस्तोत्रं नाम द्वात्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३२ ॥ सूत उवाच ॥ स्तोत्रं तत्सं
प्रवक्ष्यामि मार्कण्डेयेन भाषितम् ॥ दामोदरं प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥ १ ॥ शङ्खचक्रधरं देवं व्यक्तरूपिणमव्ययम् ॥ अधोऽक्षजं प्रपन्नो
ऽस्मि किन्नो मृत्युः करिष्यति ॥२॥ वराहं वामनं विष्णुं नारसिंहं जनार्दनम् ॥ माधवं च प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥३॥ पुरुषं पुष्करक्षेत्रबीजं
पुण्यं जगत्पतिम् ॥ लोकनाथं प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥ ४ ॥ सहस्रशिरसं देवं व्यक्ताव्यक्तं सनातनम् ॥ महायोगं प्रपन्नोऽस्मि किन्नो
मृत्युः करिष्यति ॥ ५ ॥ भूतात्मानं महात्मानं यज्ञयोनिमयोनिजम् ॥ विश्वरूपं प्रपन्नोऽस्मि किन्नो मृत्युः करिष्यति ॥ ६ ॥ इत्युदीरितमाकर्ण्य स्तोत्रं
तस्य महात्मनः ॥ अपयातस्ततो मृत्युर्विष्णुदूतैः प्रपीडितः ॥ ७ ॥ इति तेन जितो मृत्युर्मार्कण्डेयेन धीमता ॥ प्रसन्ने पुण्डरीकाक्षे नृसिंहे नास्ति
दुर्लभम् ॥ ८ ॥ मृत्य्वष्टकमिदं पुण्यं मृत्युप्रशमनं शुभम् ॥ मार्कण्डेयहितार्थाय स्वयं विष्णुरुवाच ह ॥ ९ ॥ इदं यः पठते भक्त्या त्रिकालं नियतं

शुचिः ॥ नाकाले तस्य मृत्युः स्यान्नरस्याच्युतचेतसः ॥ १०॥ हृत्पद्ममध्ये पुरुषं पुराणं नारायणं शाश्वतमप्रमेयम् ॥ विचिन्त्य सूर्य्यादतिराजमानं
मृत्युं स योगी जितवांस्तथैव ॥ ११ ॥ इति श्रीगारुडे महापुराणे मार्कण्डेयकृतं मृत्य्वष्टकस्तोत्रं नाम त्रयस्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३३ ॥
सूत उवाच ॥ वक्ष्येऽहमच्युतस्तोत्रं शृणु शौनक सर्वदम् ॥ ब्रह्मा पृष्टो नारदाय यथोवाच तथा परम् ॥ १ ॥ ॥ नारद उवाच ॥ यथाक्षयोऽव्ययो
विष्णुः स्तोतव्यो वरदो मया॥प्रत्यहं चार्चनाकाले तथा त्वं वक्तुमर्हसि॥२॥ते धन्यास्ते सुजन्मानस्ते हि सर्वसुखप्रदाः॥सफलं जीवितं तेषां ये स्तुवन्ति
सदाच्युतम्॥३॥ब्रह्मोवाच ॥ मुने स्तोत्रं प्रवक्ष्यामि वासुदेवस्य मुक्तिदम् ॥ शृणु येन स्तुतः सम्यक् पूजाकाले प्रसीदति ॥४॥ ॐ नमो (भगवते)वासुदे
वाय नमः सर्वापहारिणे ॥ नमो विशुद्धदेहाय नमो ज्ञानस्वरूपिणे ॥५॥ नमः सर्वसुरेशाय नमः श्रीवत्सधारिणे ॥ नमश्चर्मासिहस्ताय नमः पङ्कजमा
लिने ॥६॥ नमो विश्वप्रतिष्ठाय नमः पीताम्बराय च ॥ नमो नृसिंहरूपाय वैकुण्ठाय नमोनमः ॥७॥ नमः पङ्कजनाभाय नमः क्षीरोदशायिने ॥ नमः
सहस्रशीर्षाय नमो नागाङ्गशायिने ॥ ८ ॥ नमः परशुहस्ताय नमः क्षत्रान्तकारिणे ॥ नमः सत्यप्रतिज्ञाय ह्यजिताय नमोनमः ॥ ९ ॥ नमस्त्रै
लोक्यनाथाय नमश्चक्रधराय च ॥ नमः शिवाय सूक्ष्माय पुराणाय नमोनमः ॥ १० ॥ नमो वामनरूपाय बलिराज्यापहारिणे ॥ नमो यज्ञवराहाय
गोविन्दाय नमोनमः ॥ ११ ॥ नमस्ते परमानन्द नमस्ते परमाक्षर ॥ नमस्ते ज्ञानसद्भाव नमस्ते ज्ञानदायक ॥ १२ ॥ नमस्ते परमाद्वैत नमस्ते
पुरुषोत्तम ॥ नमस्ते विश्वकृद्देव नमस्ते विश्वभावन ॥ १३ ॥ नमस्ते स्ताद्विश्वनाथ नमस्ते विश्वकारण ॥ नमस्ते मधुदैत्यघ्न नमस्ते रावणा
न्तक ॥ १४ ॥ नमस्ते कंसकेशिघ्न नमस्ते कैटभार्दन ॥ नमस्ते शतपत्राक्ष नमस्ते गरुडध्वज ॥ १५ ॥ नमस्ते कालनेमिघ्न नमस्ते गरुडासन ॥
नमस्ते देवकीपुत्र नमस्ते वृष्णिनन्दन ॥ १६ ॥ नमस्ते रुक्मिणीकान्त नमस्ते दितिनन्दन ॥ नमस्ते गोकुलावास नमस्ते गोकुलप्रिय ॥ १७ ॥
जय गोपवपुः कृष्ण जय गोपीजनप्रिय ॥ जय गोवर्द्धनाधार जय गोकुलवर्द्धन ॥ १८ ॥ जय रावणवीरघ्न जय चाणूरनाशन ॥ जय वृष्णिकुलो
द्योत जय कालीयमर्दन ॥ १९ ॥ जय सत्य जगत्साक्षिन् जय सर्वार्थसाधक ॥ जय वेदान्तविद्वेद्य जय सर्वद माधव ॥२०॥ जय सर्वाश्रयाव्यक्त
जय सर्वग माधव ॥ जय सूक्ष्म चिदानन्द जय चित्तनिरञ्जन ॥ २१ ॥ जयस्तेऽस्तु निरालम्ब जय शान्त सनातन ॥ जय नाथ जगत्पुष्ट ( त्पूज्य )
जय विष्णो नमोऽस्तु ते ॥ २२ ॥ त्वं गुरुस्त्वं हरे शिष्यस्त्वं दीक्षामन्त्रमण्डलम् ॥ त्वं न्यासमुद्रासमयास्त्वं च पुष्पादिसाधनम् ॥ २३ ॥ त्वमाधा
रस्त्वं ह्यनन्तस्त्वं कूर्मस्त्वं धराम्बुजम्॥ धर्मज्ञानादयस्त्वं हि वेदिमण्डलशक्तयः ॥२४॥ त्वं प्रभो छलभृद्रामस्त्वं पुनः स खरान्तकः ॥ त्वं ब्रह्मर्षिश्च

देवस्त्वं विष्णुः सत्यपराक्रमः ॥२५॥ त्वं नृसिंहः परानन्दो वराहस्त्वं धराधरः ॥ त्वं सुपर्णस्तथा चक्रं त्वं गदा शङ्ख एव च ॥ २६ ॥ त्वं श्रीः प्रभो
त्वं सृष्टिस्त्वं त्वं माला देव शाश्वती ॥ श्रीवत्सः कौस्तुभस्त्वं हि शार्ङ्गी त्वं,च तथेषुधिः ॥ २७ ॥ त्वं खड्गचर्मणा सार्द्धं त्वं दिक्पालास्तथा प्रभो ॥
त्वं वेधास्त्वं विधाता च त्वं यमस्त्वं हुताशनः ॥ २८ ॥ त्वं धनेशस्त्वमीशानस्त्वमिन्द्रस्त्वमपांपतिः ॥ त्वं रक्षोऽधिपतिः साध्यस्त्वं वायुस्त्वं
निशाकरः ॥ २९ ॥ आदित्या वसवो रुद्रा अश्विनौ त्वं मरुद्गणाः ॥ त्वं दैत्या दानवा नागास्त्वं यक्षा राक्षसाः खगाः ॥ ३० ॥ गन्धर्वाप्सरसः
सिद्धाः पितरस्त्वं महामराः ॥ भूतानि विषयस्त्वं हि त्वमव्यक्तेन्द्रियाणि च ॥ ३१ ॥ मनोबुद्धिरहङ्कारः क्षेत्रज्ञस्त्वं हृदीश्वरः ॥ त्वं यज्ञस्त्वं
वषट्कारस्त्वमोङ्कारः समित्कुशाः ॥ ३२ ॥ त्वं वेदी त्वं हरे दीक्षा त्वं यूपस्त्वं हुताशनः ॥ त्वं पत्नी त्वं पुरोडाशस्त्वं शाला स्रुक्च त्वं स्रुवः ॥ ३३ ॥
ग्रावाणः सकलं त्वं हि सदस्यस्त्वं सदाक्षिणः ॥ त्वं शूर्पादिस्त्वं च ब्रह्मा मुसलोलूखले ध्रुवम् ॥ ३४ ॥ त्वं होता यजमानस्त्वं त्वं धान्यं पशुयाजकः ॥
त्वमध्वर्य्युस्त्वमुद्गाता त्वं यज्ञः पुरुषोत्तमः ॥ ३५ ॥ दिक्पातालमहि व्योम द्यौस्त्वं नक्षत्रकारकः ॥ देवतिर्य्यङ्मनुष्येषु जगदेतच्चराचरम्
॥ ३६ ॥ यत्किञ्चिद्दृश्यते देव ब्रह्माण्डमखिलं जगत् ॥ तव रूपमिदं सर्वं दृष्ट्यर्थं संप्रकाशितम् ॥ ३७ ॥ नाथयन्ते परं ब्रह्म दैवैरपि दुरासदम् ॥
कस्तज्जानाति विमलं योगगम्यमतीन्द्रियम् ॥ ३८ ॥ अक्षयं पुरुषं नित्यमव्यक्तमजमव्ययम् ॥ प्रलयोत्पत्तिरहितं सर्वव्यापिनमीश्वरम् ॥ ३९ ॥
सर्वज्ञं निर्गुणं शुद्धमानन्दमजरं परम् ॥ बोधरूपं ध्रुवं शान्तं पूर्णमद्वैतमक्षयम् ॥ ४० ॥ अवतारेषु या मूर्त्तिर्विदूरे देव दृश्यते ॥ परं भावमजानन्त
स्त्वां भजान्ति दिवौकसः ॥ ४१ ॥ कथं त्वामीदृशं सूक्ष्मं शक्नोमि पुरुषोत्तम ॥ अराधयितुमीशान मनोगम्यमगोचरम् ॥ ४२ ॥ इह यन्मण्डले नाथ
पूज्यते विधिवत्क्रमैः ॥ पुष्पधूपादिभिर्यत्र तत्र सर्वा विभूतयः ॥ ४३ ॥ संकर्षणादिभेदेन तव यत् पूजिता मया ॥ क्षन्तुमर्हसि तत्सर्वं यत्कृतं न कृतं
मया ॥ ४४ ॥ न शक्नोमि विभो सम्यक्कर्तुं पूजां यथोदिताम् ॥ यत्कृतं जपहोमादि असाध्यं पुरुषोत्तम ॥ ४५ ॥ विनिष्पादयितुं भक्त्या अत स्त्वां
क्षमयाम्यहम् ॥ दिवा रात्रौ च सन्ध्यायां सर्वावस्थासु चेष्टतः ॥ ४६ ॥ अचला तु हरे ! भक्तिस्तवाङ्घ्रियुगले मम ॥ शरीरे न ( ण ) तथा प्रीतिर्न च
धर्मादिकेषु च ॥४७॥ यथा त्वयि जगन्नाथ प्रीतिरात्यन्तिकी मम ॥ किं तेन न कृतं कर्म स्वर्गमोक्षादिसाधनम् ॥ ४८ ॥ यस्य विष्णौ दृढा भक्तिः
सर्वकामफलप्रदे ॥ पूजां कर्तुं तथा स्तोत्रं कः शक्नोति तवाच्युत ॥ ४९ ॥ स्तुतं तु पूजितं मेऽद्य तत्क्षमस्व नमोऽस्तु ते ॥ इति चक्रधरस्तोत्रं मया
सम्यगुदाहृतम् ॥ स्तौहि विष्णुं मुने भक्त्या यदीच्छासि परं पदम् ॥५०॥ स्तोत्रेणानेन यः स्तौति पूजाकाले जगद्गुरुम् ॥ ५१ ॥ अचिराल्लभते मोक्षं

छित्वा संसारबन्धनम् ॥ अन्योऽपि यो जपेद्भक्त्या त्रिसन्ध्यं नियतः शुचिः ॥ ५२ ॥ इदं स्तोत्रं मुने सोऽपि सर्वकाममवाप्नुयात् ॥ पुत्रार्थी लभते
पुत्रान्बद्धो मुच्येत बन्धनात् ॥ ५३ ॥ रोगाद्विमुच्यते रोगी लभते निर्द्धनो धनम् ॥ विद्यार्थी लभते विद्यां भाग्यं कीर्त्तिं च विंदति ॥ ५४ ॥ जाति
स्मरत्वं मेधावी यद्यदिच्छति चेतसा ॥ स धन्यः सर्ववित्प्राज्ञस्स साधुः सर्वकर्मकृत् ॥ ५५ ॥ स सत्यवाक्छुचिर्दाता यः स्तौति पुरुषोत्तमम् ॥
असंभाष्या हि ते सर्वे सर्वधर्मबहिष्कृताः ॥ ५६ ॥ येषां प्रवर्त्तने नास्ति हरिमुद्दिश्य सत्क्रिया ॥ न शुद्धं विद्यते तस्य मनो वाक्च दुरात्मनः ॥
॥ ५७ ॥ यस्य सर्वार्थदे विष्णौ भक्तिर्नाव्यभिचारिणी ॥ आराध्य विधिवद्देवं हरिं सर्वसुखप्रदम् ॥ ५८ ॥ प्राप्नोति पुरुषः सम्यग्यद्यत्प्रार्थयते
फलम् ॥ कर्म कामादिकं सर्वं श्रद्दधानः सुरोत्तमः ॥ असुरादिवपुः सिद्धैर्दीयते यस्य नान्तरम् ॥ ५९ ॥ सकलमुनिभिराद्यश्चिन्त्यते यो हि शुद्धो
निखिलहृदि निविष्टो वेत्ति यः सर्वसाक्षी ॥ तमजममृतमीशं वासुदेवं नतोऽस्मि भयमरणविहीनं नित्यमानन्दरूपम् ॥ ६० ॥ निखिलभुवन
नाथं शाश्वतं सुप्रसन्नं त्वतिविमलविशुद्धं निर्गुणं भावपुष्पैः ॥ सुखमुदितसमस्तं पूजयाम्यात्मभावं विशतु हृदयपद्मे सर्वसाक्षी चिदात्मा
॥ ६१ ॥ एवं मयोक्तं परमप्रभावमाद्यन्तहीनस्य परस्य विष्णोः ॥ तस्माद्विचिन्त्यः परमेश्वरोऽसौ विमुक्तिकामेन नरेण सम्यक् ॥ ६२ ॥
बोधस्वरूपं पुरुषं पुराणमादित्यवर्णं विमलं विशुद्धम् ॥ सञ्चिन्त्य विष्णुं परमद्वितीयं कस्तत्र योगी न लयं प्रयाति ॥ ६३ ॥ इमं स्तवं यः सततं
मनुष्यः पठेच्च तद्धत्प्रयतः प्रशान्तः ॥ स धूतपाप्मा विततप्रभावः प्रयाति लोकं विततं मुरारेः ॥ ६४ ॥ यः प्रार्थयत्यर्थमशेषसौख्यं धर्मं च
कामं च तथैव मोक्षम् ॥ ॥ सर्वमुत्सृज्य परं पुराणं प्रयाति विष्णुं शरणं वरेण्यम् ॥ ६५ ॥ विभुं प्रभुं विश्वधरं विशुद्धमशेषसंसारविनाशहेतुम् ॥
यो वासुदेवं विमलं प्रपन्नः स मोक्षमाप्नोति विमुक्तसङ्गः ॥ ६६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डेऽच्युतस्तोत्रं नाम
चतुस्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३४ ॥ सूत उवाच ॥ वेदांतसाङ्ख्यसिद्धांतब्रह्मज्ञानं वदाम्यहम् ॥ अहं ब्रह्म परं ज्योतिर्विष्णुरित्येव चिन्तयन्
॥ १ ॥ सूर्य्ये हृद्व्योम्नि वह्नौ च ज्योतिरेकं त्रिधा स्थितम् ॥ यथा सर्पिः शरीरस्थं गवां न कुरुते बलम् ॥ २ ॥ निर्गतं कर्मसंयुक्तं दत्तं तासां महा
बलम् ॥ तथा विष्णुः शरीरस्थो न करोति हितं नृणाम् ॥ ३ ॥ विनाराधनया देवः सर्वगः परमेश्वरः ॥ आरुरुक्षुमतीनां तु कर्मज्ञानमुदाहृतम् ॥ ॥१६३॥
॥ ४ ॥ आरूढयोगवृक्षाणां ज्ञानं त्यागं परं मतम् ॥ ज्ञातुमिच्छति शब्दादीन्रागो द्वेषोऽथ जायते ॥ ५ ॥ लोभो मोहः क्रोध एतैर्युक्तः पापं नरश्च
रेत् ॥ हस्तावुपस्थमुदरं वाक्चतुर्थी चतुष्टयम् ॥ ६ ॥ एतत्सुसंयतं यस्य स विप्रः कथ्यते बुधैः ( धः ) ॥ परवित्तं न गृह्णाति न हिंसां कुरुते

तथा ॥७॥ नाक्षक्रीडारतो यस्तु हस्तौ तस्य सुसंयतौ ॥ परस्त्रीवर्जनरतस्तस्योपस्थं सुसंयतम् ॥ ८ ॥ अलोलुपमिदं भुंक्ते जठरं तस्य संयतम् ॥ सत्यं हितं मितं ब्रूते यस्माद्वाक्तस्य संयता ॥ ९ ॥ यस्य संयतान्येतानि तस्य किं तपसाध्वरैः ॥ ऐक्यं यद्बुद्धिमनसोरिन्द्रियाणां च सर्वदा ॥१०॥ सबीजं वापि निर्बीजं ध्यानमेतत्प्रकीर्तितम् ॥ भ्रुवोर्मध्ये स्थितां बुद्धिं विषयेषु युनक्ति यः ॥ ११ ॥ इन्द्रियाणामुपरमे मनासि ह्यव्यवस्थिते ॥ १२ ॥ स्वप्नान्पश्यत्यसौ जीवो बाह्यानाभ्यन्तरानथ ॥ जीवो जाग्रदवस्थायामेवमाहुर्विपश्चितः ॥ १३ ॥ हृदि स्थितः स तमसा मोहितो न स्मरत्यपि ॥ यदा तस्य कुतो वेति सुषुप्तिरिति कथ्यते ॥ १४ ॥ जाग्रतो यस्य नो तन्द्रा न मोहो न भ्रमस्तथा ॥ उत्पद्यते न जानाति शब्दार्थविषयान्वशी ॥ १५ ॥ इन्द्रियाणि समाहृत्य विषयेभ्यो मनस्तथा ॥ बुद्ध्याहङ्कारमपि च प्रकृत्या बुद्धिमेव च ॥ १६ ॥ संयम्य प्रकृतिं चापि चिच्छक्त्या केवले स्थितः ॥ पश्यत्यात्मानि चात्मानमात्मनात्मप्रकाशकम् ॥ १७ ॥ चिद्रूपममृतं शुद्धं निष्क्रियं व्यापकं शिवम् ॥ तुरीयायामवस्थायामास्थितोऽसौ न संशयः ॥ १८ ॥ शब्दादयो गुणाः पञ्च सत्त्वाद्याश्च गुणास्त्रयः ॥ पुर्य्यष्टकस्य पद्मस्य पत्राण्यष्टौ च तानि हि ॥१९॥ साम्यावस्था गुणकृता प्रकृतिस्तत्र कर्णिका ॥ कर्णिकायां स्थितो देवो देही चिद्रूप एव हि ॥ २० ॥ पुर्य्यष्टकं परित्यज्य प्रकृतिञ्च गुणात्मिकाम् ॥ यदा [illegible] तदा जीवो याति मुक्तिं न संशयः ॥ २१ ॥ प्राणायामो जपश्चैव प्रत्याहारोऽथ धारणा ॥ ध्यानं समाधिरित्येते षड् योगस्य प्रसाधकाः ॥ ॥ २२ ॥ पापक्षये देवतानां प्रीतिरिन्द्रियसंयमः ॥ जपध्यानयुतो गर्भो विपरीतस्त्वगर्भकः ॥ २३ ॥ षट्त्रिंशन्मात्रकः श्रेष्ठश्चतुर्विंशतिमात्रकः ॥ मध्यो द्वादशमात्रस्तु ॐकारं सततं जपेत् ॥ २४ ॥ वाचके प्रणवे ज्ञाते वाच्यं ब्रह्म प्रसीदति ॥ ( ॐ नमो विष्णवे )-षष्ठाक्षरश्च जप्तव्यो गायत्री द्वादशाक्षरी ॥ २५ ॥ सर्वेषामिन्द्रियाणां तु प्रवृत्तिर्विषयेषु च ॥ निर्वृत्तिर्मनसस्तस्याः प्रत्याहारः प्रकीर्त्तितः ॥ २६ ॥ इन्द्रियाणीन्द्रियार्थेभ्यः समाहृत्य हितो हि सः ॥ सहसा सह बुद्ध्या च प्रत्याहारेषु संस्थितः ॥ २७ ॥ प्राणायामैर्द्वादशभिर्यावत्कालःकृतो भवेत् ॥ यस्तावत्कालपर्य्यन्तं मनो ब्रह्मणि धारयेत् ॥ २८ ॥ तस्यैव ब्रह्मणा प्रोक्तं ध्यानं द्वादश धारणाः ॥ ( तुष्येत नियतो युक्तः समाधिः सोऽभिधीयते ॥ ) ध्यायन्न चलते यस्य मनोभिध्यायतो भृशम् ॥ २९ ॥ प्राप्यावधिकृतं कालं यावत्सा धारणा स्मृता ॥ ध्येये सक्तं मनो यस्य ध्येयमेवानुपश्याति ॥ ३० ॥ नान्यं पदार्थं जानाति ध्यानमेतत्प्रकीर्त्तितम् ॥ ध्येये मनो निश्चलतां याति ध्येयं विचिन्तयन् ॥ ३१ ॥ यत्तद्ध्यानं परं प्रोक्तं मुनिभिर्ध्यानचिन्तकैः ॥ ध्येयमेव हि सर्वत्र ध्याता तन्मयतां गतः ॥ ३२ ॥ पश्यति द्वैतरहितं समाधिः सोऽभिधीयते ॥ मनः सङ्कल्परहितामिन्द्रियार्थान्न चिन्तयेत् ॥ ३३ ॥

यस्य ब्रह्मणि संलीनं समाधिस्थं तदोच्यते ॥ ध्यायतः परमात्मानमात्मस्थं यस्य योगिनः ॥ ३४ ॥ मनस्तन्मयतां याति समाधिस्थः स कीर्तितः॥ चित्तस्य स्थिरता भ्रान्तिर्दौर्मनस्यं प्रमादता ॥ ३५ ॥ योगिनां कथिता दोषा योगविघ्नप्रवर्त्तकाः ॥ स्थित्यर्थं मनसः सर्वं स्थूलरूपं विचिन्तयेत् ॥ ३६ ॥ तद्गतं निश्चलीभूतं सूक्ष्मस्थं स्थिरतां व्रजेत् ॥ न विना परमात्मानं किञ्चिज्जगति विद्यते ॥ ३७॥ विश्वरूपं तमेवैकमिति ज्ञात्वा विमुञ्चति ॥ ॐकारं परमं ब्रह्म ध्यायेदब्जस्थितं विभुम् ॥ ३८ ॥ क्षेत्रक्षेत्रज्ञरहितं जपेन्मात्रात्रयान्वितम् ॥ हृदि सञ्चिन्तयेत्पूर्वं प्रधानं तस्य चोपरि ॥ ३९ ॥ तमो रजस्तथा सत्त्वं मण्डलत्रितयं क्रमात् ॥ कृष्णरक्तसितं तस्मिन्पुरुषं जीवसंज्ञितम् ॥ ४० ॥ तस्योपरि गुणैश्वर्य्यमष्टपत्रं सरोरुहम् ॥ ज्ञानं तु कर्णिका तत्र विज्ञानं केसराः स्मृताः ॥ ४१ ॥ वैराग्यनालं तत्कन्दो वैष्णवो धर्म उत्तमः ॥ कर्णिकायां स्थितं तत्र जीववान्निश्चलं विभु ॥ ४२ ॥ ध्यायेदुरसि संयुक्तमोङ्कारं मुक्तिसाधकम् ॥ ध्यायन्यदि त्यजेत्प्राणान्याति ब्रह्म स्वसन्निधिम् ॥ ४३ ॥ हरिं संस्थाप्य देहाब्जे ध्यायन्योगी च भक्तिभाक् ॥ आत्मानमात्मना केचित्पश्यन्ति ध्यानचक्षुषः ॥ ४४ ॥ सांख्यबुद्ध्या तथैवान्ये योगेनान्ये तु योगिनः ॥ ब्रह्मप्रकाशकं ज्ञानं भवबन्धविभेदनम् ॥ ४५ ॥ तत्रैकचित्ततायोगो मुक्तिदो नात्र संशयः ॥ जितेन्द्रियात्मकरणो ज्ञानदत्तो हि यो भवेत् ॥ ४६ ॥ स मुक्तः कथ्यते योगी परमात्मन्यवस्थितः ॥ आसनस्थानविधयो न योगस्य प्रसाधकाः ॥ ४७ ॥ विलम्बजनकाः सर्वे विस्तराः परिकीर्त्तिताः ॥ शिशुपालः सिद्धिमाप स्मरणाभ्यासगौरवात् ॥ ४८ ॥ योगाभ्यासं प्रकुर्वन्तः पश्यन्त्यात्मानमात्मना ॥ सर्वभूतेषु कारुण्यं विद्वेषं विषयेषु च ॥ ४९ ॥ गुप्तशिश्नोदरादिश्च कुर्वन्योगी विमुच्यते ॥ इन्द्रियैरिन्द्रियार्थांस्तु न जानाति नरो यदा ॥ ५० ॥ काष्ठवद्ब्रह्मसंलीनो योगी मुक्तस्तदा भवेत् ॥ सर्ववर्णाः श्रियः सर्वाः कृत्वा पापानि भस्मसात् ॥ ५१ ॥ ध्यानाग्निना च मेधावी लभते परमां गतिम् ॥ मन्थनाद्दृश्यते ह्यग्निस्तद्वद्ध्यानेन वै हरिः ॥५२ ॥ ब्रह्मात्मनोर्यदैकत्वं स योगश्चोत्तमोत्तमः ॥ बाह्यरूपैर्न मुक्तिस्तु चान्तस्थैः स्याद्यमादिभिः ॥ ५३॥ साङ्ख्यज्ञानेन योगेन वेदान्तश्रवणेन च॥ प्रत्यक्षतात्मनो या हि सा मुक्तिरभिधीयते ॥ अनात्मन्यात्मरूपत्वमसतः सत्स्वरूपता ॥ ५४ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ब्रह्मविज्ञानस्वरूपनिरूपणं नाम पञ्चत्रिंशदुत्तरद्विशततमोऽध्यायः ॥२३५॥ श्रीभगवानुवाच ॥ आत्मज्ञानं प्रवक्ष्यामि शृणु नारद तत्त्वतः ॥ अद्वैतं साङ्ख्यमित्याहुर्योगस्तत्रैकचित्तता ॥ १ ॥ अद्वैतयोगसम्पन्नास्ते मुच्यन्तेऽतिबन्धनात् ॥ अतीतारब्धमागामि कर्म नश्यति[1]बोधतः ॥ २ ॥

१ ब्रह्मरसालयम्० पा० ।

सद्विचारकुठारेण च्छिन्नसंसारपादपः ॥ ज्ञानवैराग्यतीर्थेन लभते वैष्णवं पदम् ॥ ३ ॥ जाग्रत्स्वप्नसुषुप्तं च माया त्रिपुरमुच्यते ॥ अत्रैवान्तर्गतं सर्वं शाश्वते नाद्वये पदे ॥ ४ ॥ नामरूपक्रियाहीनं सर्वं तत्परमं पदम् ॥ जगत्कृत्वेश्वरोऽनन्तं स्वयमत्र प्रविष्टवान् ॥ ५ ॥ वेदाहमेतं पुरुषं चिद्रूपं तमसः परम् ॥ सोऽहमस्मीति मोक्षाय नान्यः पन्था विमुक्तये ॥ ६ ॥ श्रवणं मननं ध्यानं ज्ञानानां चैव साधनम् ॥ यज्ञदानतपस्तीर्थवेदैर्मुक्तिर्न लभ्यते ॥ ७ ॥ त्यागेन केनचिद्ध्यानपूजाकर्मादिभिर्यथा ॥ द्विविधं वेदवचनं कुरु कर्म त्यजेति च ॥ ८ ॥ यज्ञादयो विमुक्तानां निष्कामानां विमुक्तये ॥ अन्तःकरणशुद्ध्यर्थमूचुरेवात्र केचन ॥ ९ ॥ एकेन जन्मना ज्ञानान्मुक्तिर्न द्वैतभाविनाम् ॥ योगभ्रष्टाः कुयोगाश्च विप्रा योगिकुलोद्भवाः ॥ १० ॥ कर्मणा बध्यते जन्तुर्ज्ञानान्मुक्तो भवाद्भवेत् ॥ आत्मज्ञानन्त्वाश्रयेद्द्वै अज्ञानं यदतोऽन्यथा ॥ ११ ॥ यदा सर्वे विमुच्यन्ते कामा येस्य हृदि स्थिताः ॥ तदामृतत्वमाप्नोति जीवन्नेव न संशयः ॥ १२ ॥ व्यापकत्वात्कथं याति को याति क्व स रतुति च ॥ अनन्तत्वान्न देशोऽस्ति अमूर्त्तित्वाद्गतिः कुतः ॥ १३ ॥ अद्वयत्वान्न कोऽप्यस्ति बोधत्वाज्जडता कुतः ॥ एकोदिष्टं यदन्यस्य मति[1]गतिसंस्थिति ( म् ) ॥१४॥ कथमाकाशकल्पस्य गतिरागतिसंस्थिति ॥ जाग्रत्स्वप्नसुषुप्तं च मायया परिकल्पितम् ॥ १५ ॥ वस्तु तैजसकं प्राज्ञे यत्तु पुण्यमखण्डकम् ॥ यथा ते प्रियआत्मा नः सर्वेषां च तथा प्रियः ॥ १६ ॥ बोधमार्गे यथा चित्तं सर्वेषां च तथा मते ॥ सर्वदा सर्वभूतानां सर्वस्य च महामुने ॥ १७ ॥ नाहम न्नात्मविज्ञानं तस्मात्पूर्णं निरन्तरम् ॥ जाग्रत्स्वप्नं तथा वृत्तं सौषुप्तसुखमेव च ॥ १८ ॥ स्मरणं विस्मृतार्थस्य नास्ति चेत्कस्य जायते ॥ सत्य मस्तु तथा वाणुअशरीरं परं तथा ॥ १९ ॥ नास्ति चेत्सुखदुःखानां सर्वेषां वेदनं कथम् ॥ सदा सर्वत्र सर्वज्ञः सर्वस्य हृदये न चेत् ॥ २० ॥ साक्षि भूतः समाश्रित्य को जानाति विचेष्टितम् ॥ सत्य ज्ञानानन्त भिन्नं स्यान्नसत्यं ज्ञानतः पृथक् ॥२१॥ नानन्त्यात्पृथगानन्दं नाप्यमानन्दतः पृथक् ॥ त्वमेव परमं ब्रह्म सत्यज्ञानादिलक्षणम् ॥ २२ ॥ अहं ब्रह्म परं तत्त्वं ज्ञात्वा त्वखिलविद्भवेत् ॥ यथैकमृन्मये ज्ञाते सर्वमेतच्चराचरम् ॥२३॥ यथैकहे ममणिना सर्वं हेममयं भवेत् ॥ ज्ञानं तथैवमीशेन ज्ञानिनाप्यखिलं जगत् ॥ २४ ॥ यथान्धकारदोषेण रज्जुः सम्यङ्न दृश्यते ॥ यथा सम्मोहदोषेण चात्मा सम्यङ्न दृश्यते ॥ २५ ॥ सर्पधारादिभिर्भेदैरन्यथा वस्तुकल्पनम् ॥ व्योमादिना सरूपाद्यैरन्यथात्मा [2]प्रकल्प्यते ॥ २६ ॥ प्रत्यक्षमपि यद्द्रव्यं दुर्दर्शमिति भाषते ॥ व्योमादिना सरूपाद्यैरन्यथा कल्पितैस्तथा ॥ २७ ॥ तथा हि रज्जुरुरगः शुक्तिः कारजतं यथा ॥ मृगतृष्णापथायाम्भस्त्वर्तिं

१ को नु दिष्टं यदर्थस्य० । २ हत्वैकज्ञो य आत्मनि० पा० ।

 

विष्णो तथा जगत् ॥ २८ ॥ हाहिष्णोद्विजा कथि द्रोहमिति० ॥ ग्रहनाशात्पुनर्ध्यायन्ब्राह्मण्यं मन्यते यथा ॥ २९ ॥ मायाविष्टस्तथा जीवो देहोहमिति मन्यते ॥ मायानाशात्पुनः स्वीयरूपं ब्रह्मास्मि मन्यते ॥ ३० ॥ ग्रहनाशाद्यथा मान्यजनोकूरमवेक्षते ॥ स्वरूपदर्शनाच्चायं माया नाशंतया विना ॥ ३१ ॥ अनादित्वं समं द्वाभ्यां स्वरूपं तद्विलक्षणम् ॥ एकः सत्यं तथा भागी विचारेण परं मृषा ॥ ३२ ॥ अजोपि हि सकृत्प्रे त्य संभवाम्यात्ममायया ॥ मायेच्छया द्विधा स स्यात्पतिः पत्नी सुखं जगत् ॥ ३३ ॥ अष्टाविंशतिभेदैस्तु त्रैगुण्यं विद्यते पृथक् ॥ चतुरशीतिलक्ष्य न्ते नरनार्याकृतीनि च ॥ ३४ ॥ एषुविश्वं प्रभवति खण्डजं मायया यथा ॥ आदावन्ते च सन्त्येते नामरूपक्रियादयः ॥ ३५ ॥ सत्तावकल्पनं काले न सन्ति परमार्थतः ॥ यथा रथादयः स्वप्ने सन्तो नैव च सत्यतः ॥ ३६ ॥ तथा जाग्रदवस्थायां भूतानि न तु सन्निधौ ॥ द्वैरूप्यं मायया याति जाग्रत्स्वप्नपदज्ञ ( क्ष ) योः॥३७॥एवमेतत्परं ब्रह्म स्वप्न जाग्रत्पदद्वये॥सुषुप्तमचलं रूपमद्वयं पदमुच्यते॥३८॥मायाऽविचारसिद्धेव विचारेण विलीयते ॥ आपातरहिता सापि कल्पना कालवर्त्तिनी॥३९॥ एवं तस्या (दात्या) त्मनादित्यं सिद्धमेकस्य सत्यजा ॥ सतोस्तित्वं वसातित्वादस्तित्वात्सत्यतां ततः ॥४०॥ ज्ञानं ततोप्यनन्तो नः पूर्णोन्तः सुखमात्मना ॥ न नित्यभावाज्जातोहमकृत्वादमृतोस्म्यहम् ॥ दीपवद्धृदये ज्योतिरहं ब्रह्मास्मि मुक्तये ॥ ४१ ॥

इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे आत्मज्ञानस्वरूपवर्णनं नाम षट्त्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३६ ॥

श्रीभगवानुवाच ॥ गीतासारं प्रवक्ष्यामि अर्जुनायोदितं पुरा ॥ अष्टाङ्गयोगयुक्तात्मा सर्ववेदान्तपारगः ॥ १ ॥ आत्मलाभः परो नान्य अत्मदेहादिव र्जितः ॥ हीनरूपादिदेहान्तःकरणत्वादिलोचनः ॥ २ ॥ विज्ञानरहितः प्राणः सुषुप्तौ हि प्रतीयते ॥ नाहमात्मा च दुःखादिसंसारादिसमन्वयात् ॥३॥ विधूम इव दीप्तार्चिरादीप्त ( दित्य ) इव दीप्तिमान् ॥ वैद्युतोऽग्निरिवाकाशे हृत्सङ्गे आत्मनात्मनि ॥ ४ ॥ श्रोत्रादीनि न पश्यंति स्वंस्वमात्मानमा त्मना ॥ सर्वज्ञः सर्वदर्शी च क्षेत्रज्ञस्तानि पश्यति ॥ ५ ॥ यदा प्रकाशते ह्यात्मा पटे दीपो ज्वलन्निव ॥ ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥ ॥ ६ ॥ यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि ॥ इन्द्रियाणीन्द्रियार्थांश्च महाभूतानि पञ्चकम् ॥ ७ ॥ मनोबुद्धिरहंकारमव्यक्तं पुरुषं तथा ॥ प्रसंख्याय परंव्यात्तो विमुक्तो बन्धनैर्भवेत् ॥ ८ ॥ इन्द्रियग्राममखिलं मनसाभिनिवेश्य च ॥ मनश्चैवाप्यहंकारे प्रतिष्ठाप्य च पाण्डव ॥ ९ ॥ अहं कारं तथा बुद्धौ बुद्धिं च प्रकृतावपि ॥ प्रकृतिं पुरुषे स्थाप्य पुरुषं ब्रह्मणि न्यसेत् ॥ १० ॥ अहं ब्रह्म परं ज्योतिः प्रसंख्याय विमुच्यते ॥ नवद्वारमिदं गेहं तिसृणां ? पञ्चसाक्षिकम् ॥ ११ ॥ क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स वरः कविः ॥ अश्वमेधसहस्राणि वाजपेयशतानि च ॥ ज्ञानयज्ञस्य

सर्वाणि कलां नार्हन्ति षोड़शीम् ॥ १२ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्रीमद्भगवद्गीतासारनिरूपणं नाम सप्तत्रिंश दुत्तरद्विशततमोऽध्यायः ॥ २३७ ॥ श्रीभगवानुवाच ॥ यमश्च नियम· पार्थ आसनं प्राणसंयमः ॥ प्रत्याहारस्तथा ध्यानं धारणार्जुन सप्तमी ॥ १ ॥ समाधिरिति चाष्टाङ्गो योग उक्तो विमुक्तये ॥ कर्मणा मनसा वाचा सर्वभूतेषु सर्वदा ॥ २ ॥ हिंसाविरामको धर्मो ह्यहिंसा परमं सुखम् ॥ विधिना या भवेद्धिंसा सा त्वहिंसा प्रकीर्त्तिता ॥ ३ ॥ सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ॥ प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ ४ ॥ यच्च द्रव्यापहरणं चौर्य्याद्वाथ बलेन वा ॥ स्तेयं तस्यानाचरणमस्तेयं धर्मसाधनम् ॥ ५ ॥ कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा ॥ सर्वत्र मैथुनत्यागं ब्रह्मचर्य्यं प्रचक्षते ॥ ६ ॥ द्रव्याणामप्यनादानमापत्स्वपि तथेच्छया ॥ अपरिग्रहमित्याहुस्तं प्रयत्नेन वर्जयेत् ॥ ७ ॥ द्विधा शौचं मृज्जलाभ्यां बाह्य भावादथान्तरात् ॥ यदृच्छालाभतस्तुष्टिः सन्तोषः सुखलक्षणम् ॥ ८ ॥ मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः ॥ शरीरशोषणं वापि कृच्छ्रचान्द्रा यणादिभिः ॥ ९ ॥ वेदान्तशतरुद्रीयप्रणवादिजपं बुधाः ॥ सत्त्वशुद्धिकरं पुंसां स्वाध्यायं परिचक्षते ॥ १० ॥ स्तुतिस्मरणपूजादिवाङ्मनःकायकर्म भिः ॥ अनिश्चला हरौ भक्तिरेतदीश्वरचिन्तनम् ॥ आसनं स्वस्तिकं प्रोक्तं पद्ममर्द्धासनं तथा ॥ ११ ॥ प्राणः स्वदेहजो वायुरायामस्तन्निरोधनम् ॥ इन्द्रियाणां विचरतां विषयेषु त्वसत्स्विव ॥ १२ ॥ नियमः प्रोच्यते सद्भिः प्रत्याहारस्तु पाण्डव ॥ मूर्तामूर्तब्रह्मरूपचिन्तनं ध्यानमुच्यते ॥ १३ ॥ योगारम्भे हरिं मूर्त्तममूर्त्तमपि चिन्तयेत् ॥ अग्निमण्डलमध्यस्थो वासुदेवश्चतुर्भुजः ॥ १४ ॥ शंखचक्रगदापद्मयुक्तः कौस्तुभसंयुतः ॥ वनमाली कौस्तु भेन युतोऽहं ब्रह्मसंज्ञकः ॥ १५ ॥ धारणेत्युच्युते चेयं धार्य्यते यन्मनो लये ॥ अहं ब्रह्मेत्यवस्थानं समाधिरभिधीयते ॥ एकाकारः समाधिः स्याद्देशाल म्बनवर्जितः ॥ १६ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे श्री० गीतासारनिरूपणं नामाष्टात्रिंशदुत्तरद्विशततमोऽध्यायः ॥ २३८ ॥ ब्रह्मोवाच ॥ ब्रह्मगीतां प्रवक्ष्यामि यज्ज्ञात्वा मुच्यते भवान् ॥ अहंब्रह्मास्मि वाक्योत्थज्ञानान्मोक्षो भवेन्नृणाम् ॥ १ ॥ वाक्यज्ञानं भवेज्ज्ञानादहंब्रह्म पदार्थयोः ॥ पदद्वयार्थौ द्विविधौ वाच्यौ लक्ष्यौ स्मृतौ बुधैः ॥ २ ॥ वाक्यवाच्यश्च शबलो लक्ष्यः शुद्धः प्रकीर्त्तितः ॥ प्राणपिंडात्मको ः यन चेतसामतुलं न यत् ? ॥ ३ ॥ तथा वेदैरवाग्रूपमहंशब्देन सेव्यते ॥ प्रत्यग्रूपं त्वद्वितीयमहंशब्देन मन्यते ॥ ४ ॥ अव्ययानंदचैतन्यं परोक्षसहितं परम् ॥ प्राणपिंडात्मको योथ स द्वितीयविभागकः ॥ ५ ॥ पारोक्ष्यप्रेक्षणो ह्यन्र भागो लक्ष्येत वाहम ॥ तथा ब्रह्मपदेनैव प्राणपिंडात्मकारणम् ॥ ६ ॥

निष्ठा परोक्षता चेति परित्यागेन वक्ष्यते ॥ अद्वयानंदचैतन्यं प्रत्यग्ब्रह्मपदेन तु ॥ ७ ॥ अद्वयानंदचैतन्यं लक्षयित्वा स्थितस्य च ॥ ब्रह्माहमस्म्यहं ब्रह्म चाहंब्रह्मपदार्थयोः ॥ ८ ॥ अहंब्रह्मास्मिवाक्याच्च स्वानुभूतिफलार्थकम् ॥ ऐक्यज्ञानं तु हि भवेद्वेदांताद्दूरतो ध्रुवम् ॥ ९ ॥ ज्ञानादज्ञानकार्यस्य निवृत्त्या मुक्तिरैक्यतः ॥ १० ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशाख्ये आचारकाण्डे ब्रह्मगीतासारवर्णनं नामैकोनचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २३९ ॥ श्रीभगवानुवाच ॥ सन्नपि ब्रह्म तस्मात्खं मरुत्खाच्च ततोऽनलः ॥ १ ॥ अग्नेरापस्ततः पृथ्वी प्रपंचाकृतिसूतिका ॥ ततः सप्तदशं लिंगं पंचकर्मेंद्रियाणि च ॥ २ ॥ वाक्पाणिपादं पायुश्चाप्युपस्थमथ धींद्रियम् ॥ श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं स्यात्पंच वायवः ॥ ३ ॥ प्राणोपानः समानश्च व्यानस्तूदान एव च ॥ मनोन्तःकरणं धीश्च स्यान्मनः संशयात्मकम् ॥ ४ ॥ बुद्धिर्निश्चयरूपा तु एतत्सूक्ष्मस्वरूपकम् ॥ हिरण्यगर्भमात्मीयसूत्रं तत्कार्यलिंगकम् ॥ ५ ॥ पंचीकृतानि भूतानि ह्यपंचीकृतभूततः ॥ पंचीकृतेभ्यो भूतेभ्यो ब्रह्मांडं समजायत ॥ ६ ॥ लोकप्रसिद्धं स्थूलाख्यं शरीरं चरणादिमत् ॥ पंचीकृतानि भूतानि तत्कार्यं तत्स्थमेव च ॥ ७ ॥ सर्वं शारीरजातं च प्राणिनां स्थूलमीरितम् ॥ त्रिधाद्वि परमात्मस्थं शरीरं प्रोच्यते बुधैः ॥ ८ ॥ देहद्वयाभिगामी च त्वमथो जीव एकतः ॥ स्वभेदवाक्याद्ब्रह्मैव प्रविष्टं देहयोर्द्वयोः ॥ ९ ॥ जलार्कवद्भ्रदरवज्जीवः प्राणादिधारगः ॥ जाग्रत्स्वप्नसुषुप्तीनां साक्षी जीवः स च स्मृतः ॥ १० ॥ जाग्रत्स्वप्नसुषुप्त्याख्यैर्व्यतिरिक्तश्च निर्गुणः ॥ निर्गतावयवोसंगो नित्यशुद्धस्वभावकः ॥ ११ ॥ परमात्मैव यज्जाग्रत्स्वप्नाद्यैर्यस्त्रिधा मतः ॥ अन्तःकरणराशेश्चैवांतःकरणसंस्थित ॥ १२ ॥ जाग्रत्स्वप्नसुषुप्तीश्च पश्यतो विकृतिः सदा ॥ फलक्रियाकारकयोर्जाग्रदादीन्वदाम्यहम् ॥ १३ ॥ इंद्रियैरथ्य विज्ञानं जाग्रत्स्थानमुदीरितम् ॥ जाग्रत्संस्कारसंभूतप्रत्ययो विषयार्थिनः ॥ १४ ॥ स्वप्नं सुषुप्तिः करणोपसंघाते धियः ( प ) स्थित ( ति ) ॥ ब्रह्मणः कारणावस्थायां स्थितिः कालकात्मना ॥ १५ ॥ क्रमतोक्रमतो जीवो जाग्रदादि स पश्यति ॥ समाध्यारंभकाले तु पूर्वमेवावधारयेत् ॥ १६ ॥ मुमुक्षावथ संजाते अंतःकरणकेवल ॥ विलापयेत्क्षेत्रजातं तत्क्षेत्रं परिशेषयेत् ॥ १७ ॥ पंचीकृतेभ्यो भूतेभ्यो भांडादि व्यतिरिक्तकम् ॥ यथा मृदो घटो भिन्नो नास्ति तत्कार्यतस्तथा ॥ १८ ॥ पंचीकृतानि भूतानि अपंचीकृतभूततः ॥ शंसंति व्यतिरेकेण शिष्टाः सूक्ष्मशरीरकम् ॥ १९ ॥ अपंचीकृतभूतेभ्यो न लिंगं व्यतिरिक्तकम् ॥ पृथ्व्याधारं विना नास्ति विना नास्ति च तेन सा ॥ २० ॥ तेजश्च वायुना नास्ति वायुः खेन विना न हि ॥ यद्ब्रह्मणा च खं नास्ति शुद्धं ब्रह्म विना च खम् ॥ २१ ॥ शुद्धभावस्तदा जाग्रत्स्वप्नादीनामसंभवः ॥ जीवत्ववर्जितः प्राप्तात्मचैतन्यानुरूपतः ॥ २२ ॥ नित्यं शुद्धं

बुद्धमुक्तं सत्यं ब्रह्माद्वितीयकम् ॥ तत्त्वंपदांतौ शिष्टौ च तत्कारो ब्रह्मवाचकः ॥ २३ ॥ उकारश्च अकारश्च मकारोयमृगद्वयः ॥ ब्रह्माहमस्म्यहं ब्रह्म
ज्ञानमज्ञानवर्द्धनम् ॥ २४ ॥ अयमात्मा परं ज्योतिश्चिन्नामानंदरूपकः ॥ सत्यं ज्ञानमनतं हि त्वमसीति श्रुतीरितम् ॥ २५ ॥ अहं ब्रह्मास्मि निर्ले
पमहं ब्रह्मास्मि सर्वगम् ॥ योसावादित्यपुरुषसोसावहमनादिमत् ॥ गीतासारोऽर्जुनायोक्तो येन ब्रह्मणि वै लयः ॥ २६ ॥ इति श्रीगारुडे महापु
राणे प्रथमांशे आचारकांडे ब्रह्मगीतासारो नामैकोनचत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २३९ ॥ हरिरुवाच ॥ पुराणं गारुडं रुद्र प्रोक्तं सारं मया
तव ॥ ब्रह्मादीनां शृण्वतां च भुक्तिमुक्तिप्रदायकम् ॥ १ ॥ विद्याकीर्तिप्रभालक्ष्मीजयारोग्यादिकारकम् ॥ यः पठेच्छृणुयाद्रुद्र सर्ववित्स दिवं व्रजेत् ॥
॥ २ ॥ ब्रह्मोवाच ॥ इति व्यास मया विष्णोः पुराणं मुक्तिदं श्रुतम् ॥ व्यास उवाच ॥ श्रुत्वैतद्गारुडं पुण्यं ब्रह्माऽस्मानित्युवाच ह ॥ ३ ॥ दक्षनारद
मुख्यादीन् ब्रह्म ध्यायन्हरिं गतः ॥ मयापि तुभ्यं सूतेन पुराणं कथितं परम् ॥ ४ ॥ यच्छ्रुत्वा सर्ववित्प्राप्तकामो ब्रह्म फलं भवेत् ॥ विष्णुः सारतमं
प्राह गरुडं गारुडं ततः ॥ ५ ॥ महासारं धर्मकामधनमोक्षादिदायकम् ॥ सूत उवाच ॥ शौनक प्रवरं प्रोक्तं पुराणं गारुडं तत्र ॥ ६ ॥ यदब्रवी
त्पुरा व्यासः सारं मां गारुडेरितम् ॥ व्यासः श्रुत्वा ब्रह्मणश्च पुराणं गारुडं शुभम् ॥ देवं ध्यायन्वेदमेकं चतुर्धा व्यभजद्धरिः ॥ ७ ॥ अष्टादश
पुराणानि तानि मां प्राह वै शुकः ॥ इदं तु गारुडं श्रेष्ठं मया ते शौनकेरितम् ॥ ८ ॥ मुनीनां शृण्वतां मध्ये पृच्छतः सर्ववाचकम् ॥ यः पठे
च्छृणुयाद्वापि श्रावयेद्वा समाहितः ॥ ९ ॥ संलिखेल्लेखयेद्वापि धारयेत्पुस्तकं ननु ॥ धर्मार्थी प्राप्नुयाद्धर्ममर्थार्थी चार्थमाप्नुयात् ॥ १० ॥ कामा
नवाप्नुयात्कामी मोक्षार्थी मोक्षमाप्नुयात् ॥ यद्यदिच्छति तत्सर्वं गारुडश्रवणाल्लभेत ॥ ११ ॥ ब्राह्मणो वेदपारस्य गंता स्यान्नात्र संशयः ॥ क्षत्रियो
क्षत्रियस्यापि रक्षिता भवतीह च॥१२॥ नान्यस्य श्रवणं हि स्यात्पुराणं वेदसंमितम् ॥ वदेद्यदि स मूढात्मा कीर्त्तिहानिमवाप्नुयात् ॥१३॥ अन्यस्मै
न वदेद्विद्वान् ब्राह्मणोन्तरितो यदि ॥ ब्राह्मणान्तरितैः सर्वैः श्रोतव्यं गारुडं त्विदम्॥१४॥यथा विष्णुस्तथा तार्क्ष्यस्तार्क्ष्यस्तोत्राद्धरिः स्तुतः ॥ गारुडं
वसुराजश्च श्रुत्वा सर्वमवाप ह ॥ १५ ॥ वसुरुवाच ॥ नमस्यामि महाबाहुं खगेंद्रं हरिवाहनम् ॥ विष्णोर्ध्वजोर्ध्वसंस्थानं वित्रासितमहासुरम् ॥ १६ ॥
नमस्ते नागदर्पघ्न विनतानंदवर्द्धन ॥ सुपक्षपात निर्दंभ दीनदैत्यनिरीक्षित ॥१७॥ परस्परस्य शापेन सुप्रतीकविभावसू ॥ गजकच्छपतां प्राप्तौ भ्रातरौ
चैव संयुतौ ॥१८॥ यदुच्छ्रितौ योजनानि जगर्ताद्विगुणायतः ॥ कूर्मस्त्रियोजनोत्सेधो २ योजनमंडलः ॥१९॥ न खाद्यौ तौ त्वया नीचौ चतुर्भुजौ
च पक्षिप ? ॥ परस्परकृताच्छापदोषाच्च परिमोचितौ॥२०॥निषाददेशखादने देवं वृ... ...हि त्वम् ?॥ निषादीशस्ततो मुक्तस्तत्रापि ब्राह्मणस्त्वया॥२१॥

वटारोहिणवृक्षस्य योजनानां शतायुता ॥ शाखा भिन्ना त्वया यत्र वालखिल्याः समास्थिताः ॥ २२ ॥ त्वया यत्नकृता कृत्वा-नखस्थौ गजकच्छपौ ॥ नभस्पर्पिनिरालंबे सर्वतः परिवारितौ ॥ २३ ॥ त्वया जिता रणे देवाः सर्वे शक्रपुरोगमाः ॥ आहृतं तत्पुरा सोमं वह्निं निर्वाप्य काश्यपे ॥ २४ ॥ नागौ दृष्टिविषौ कृत्वा रजसा तु विचक्षुषौ ॥ तक्ष्णाग्रेण न सा भङ्क्काविक्रवेतौ मनोहतः॥ आहृत्यापि त्वया सोमं नीतमेव न भक्तितः॥ तेन विष्णो ध्वजस्थानं वाहनत्वं गतो ह्यसि ॥ २६ ॥ त्वया निःक्षिप्य दर्भेषु सोमं नागाश्च वञ्चिताः ॥ जहार चामृतं पात्रं शीघ्रं वै ब्रह्मसूदन ॥ ६७ ॥ यत्र जिह्वा द्विधाभूताः पन्नगानां द्विजोत्तम॥विनता मोचिता दास्यात्कद्रूः पूर्वजिता रणे॥२८॥उच्चैःश्रवाः स किंवर्णः शुक्ल इत्येव भाषते॥ कृष्णवर्णमहं मन्ये पूर्वं दृष्टमुवाच ह ॥ २९ ॥ त्वया वज्रप्रहारेण पक्षमुक्तं पुरा स्वतः ? ॥ दधीचवज्रशक्राणां मातुरर्थाय नान्यथा ॥ ३० ॥ तस्य पक्षस्य देवेंद्रो यदानीतं हि दृष्टवान् ॥ तदा तव सुपर्णेति नाम स्थानं जगत्त्रये ॥ ३१ ॥ ध्यानमात्राद्विनश्येत्तु विषं स्थावरजंगमम् ॥ पठेद्वा शृणुयाद्यश्च भुक्तिं मुक्तिमवाप्नुयात् ॥ ३२ ॥ सूत उवाच ॥ वसुराजो गारुडं वै श्रुत्वा सर्वमवाप्तवान् ॥ गरुडो भगवान्विष्णुर्ध्यायन्सर्वमवाप्तवान् ॥ ३३ ॥ तदुक्तं गारुडं पुण्यं पुराणं यः पठेन्नरः ॥ सर्वकाममवाप्याथ प्राप्नोति परमां गतिम् ॥ ३४ ॥ श्लोकपादं पठित्वा च सर्वपापक्षयो भवेत् ॥ यस्येदं वर्त्तते गेहे तस्य सर्वं भवेदिह ॥ ३५ ॥ गारुडं यस्य हस्ते तु तस्य हस्तगतो नयः ॥ यः पठेच्छृणुयादेतद्भुक्तिं मुक्तिं समाप्नुयात् ॥ ३६ ॥ धर्मार्थकाममोक्षांश्च प्राप्नुयाच्छ्रवणादितः ॥ पुत्रार्थी लभते पुत्रान् कामार्थी काममाप्नुयात् ॥ ३७ ॥ विद्यार्थी लभते विद्यां जयार्थी लभते जयम् ॥ ब्रह्महत्यादिना पापी पापशुद्धिमवाप्नुयात् ॥ ३८ ॥ वंध्यापि लभते पुत्रं कन्या विंदति सत्पतिम् ॥ क्षेमार्थी लभते क्षेमं भोगार्थी भोगमाप्नुयात् ॥ ३९ ॥ मंगलार्थी मंगलानि गुणार्थी गुणमाप्नुयात् ॥ काव्यार्थी च कवित्वं च सारार्थी सारमाप्नुयात् ॥ ४० ॥ ज्ञानार्थी लभते ज्ञानं सर्वसंसारमर्दनम् ॥ इदं स्वस्त्ययनं धन्यं गारुडं गरुडेरितम् ॥ ७१ ॥ नाकाले मरणं तस्य श्लोकमेकं तु यः पठेत् ॥ श्लोकार्द्धपठनादस्य दुष्टशत्रुक्षयो ध्रुवम् ॥ ७२ ॥ सूताच्छ्रुत्वा शौनकस्तु नैमिषे मुनिभिः क्रतौ ॥ अहं ब्रह्मेति संध्यायन्मुक्तोभूद्गरुडध्वजात् ॥ ७३ ॥ ॐ ॥ इति श्रीगारुडे महापुराणे पूर्वखण्डे प्रथमांशे आचारकाण्डे गरुडपुराणमाहात्म्यं नाम चत्वारिंशदुत्तरद्विशततमोऽध्यायः ॥ २४० ॥ शुभं भूयात् ॥



१ अयमध्यायः पुस्तकान्तरस्य सर्वथानुपलम्भात्सामान्यतः संशोधितः । पुनर्मुद्रणसमये पुस्तकान्तरं सम्प्राप्ययथावत्संशोधनीयम् । सर्वान्तेऽस्य सन्निवेशो युक्तः ।

श्रीगणेशाय नमः॥ तत्रादिमे द्वितीयांशे प्रेतकाण्डो धर्मकाण्डनामारभ्यते ॥ ॐ नमो भगवते वासुदेवाय ॥ नारायणं०॥१॥ धर्म्मदृढबद्धमूलो वेदस्क
न्धः पुराणशाखाढ्यः ॥ क्रतुकुसुमो मोक्षफलो मधुसूदनपादपो जयति ॥१॥ नैमिषेऽनिमिषक्षेत्रे शौनकाद्या मुनीश्वराः ॥ कर्म्मणामन्तरे सूतं स्वासी
नमिदमब्रुवन् ॥ २ ॥ सूत जानासि सकलं वस्तु व्यासप्रसादतः ॥ तेन नः सन्दिहानानां सन्देहं छेत्तुमर्हसि ॥ ३ ॥ यथा तृणजलौकेति न्यायमा
श्रित्य कंचन ॥ देहिनोऽन्यतनुप्राप्तिं केचित्त्वेवं वदन्ति हि ॥ ४ ॥ केचित्पुनर्यातनानां यामीनामुपभोगतः ॥ पश्चाद्देहान्तरप्राप्तिं वदन्ति किमु तत्र
सत् ॥ ५ ॥ सूत उवाच ॥ साधु पृष्टं महाभागाः शृणुध्वं भवतां पुनः ॥ सन्देहो नोपपद्येत लोकार्थं किल पृच्छताम् ॥ ६ ॥ तदहं कृष्णगरुडसंवा
दद्वारकं द्विजाः ॥ अपाकरिष्ये सन्देहं भवतां भावितात्मनाम् ॥ ७ ॥ नमः कृष्णाय मुनये य एनं समुपाश्रिताः ॥ अञ्जस्तरन्ति संसारसागरं
कुनदीमिव ॥ ८ ॥ एकदा वैनतेयस्य लोकानां लोकनस्पृहा ॥ बभूव सोऽथ बभ्राम तेषु नाम हरेर्गृणन् ॥ ९ ॥ स पातालं भुवं स्वर्गं भ्रान्त्वाऽलब्ध
शमाशयः ॥ लोकदुःखेनातिदुःखी पुनर्वैकुण्ठमागमत् ॥ १० ॥ न रजो न तमश्चैव सत्त्वं ताभ्यां च मिश्रितम् ॥ यत्र प्रवर्त्तते नैव सत्त्वमेव प्रवर्त्त
ते॥११॥न यत्र माया नाशश्च न चै रागादयो मलाः॥ श्यामावदाताः सुरुचः शतपत्रविलोचनाः ॥१२॥ सुरासुरार्चिता यत्र गणा विष्णोः सुपेशसः ॥
पिशंगवस्त्राभरणा मणियुङ्निष्कभूषिताः ॥ १३ ॥ चतुर्भुजाः कुण्डलिनो मौलिनो मालिनस्तथा ॥ भ्राजिष्णुभिर्विमानानां पङ्क्तिभिर्ये महात्मनाम्
॥१४॥ द्योतन्ते द्योतमानानां प्रमदानां च पंक्तिभिः ॥ श्रीर्यत्र नानाविभवैर्हरेः पादौ मुदार्चति ॥१५॥ हरिं गायति दोलास्थं गीयमानालिभिः स्वयम् ॥
ददर्श श्रीहरिं तत्र श्रीपतिं सात्वतां पतिम् ॥ १६ ॥ जगत्पतिं यज्ञपतिं पार्षदैः परिपीवितम् ॥ सुनन्दनन्दप्रबलार्हणमुख्यैर्निरन्तरम् ॥ १७ ॥
भृत्यप्रसादसुमुखमायतारुणलोचनम् ॥ किरीटिनं कुण्डलिनं श्रिया वक्षसि लक्षितम् ॥ १८ ॥ पीतांशुकं चतुर्बाहुं प्रसन्नहसिताननम् ॥ अभ्यर्ह
णासनासीनं ताभिः शक्तिभिरावृतम् ॥ १९ ॥ प्रधानपुरुषाभ्यां च महता चाहमा तथा ॥ एकादशेन्द्रियैश्चैव पञ्चभूतैस्तथैव च ॥ २० ॥ स्वरूपे
रममाणं तमीश्वरं विनतासुतः ॥ तद्दर्शनाह्लादयुतस्वान्तो हृष्यत्तनूरुहः ॥ २१ ॥ लोचनाभ्यामश्रु मुञ्चन्प्रेममग्नो ननाम ह ॥ तमागतं नतं स्वीय

१ सर्वेषु पुस्तकेषूक्ता एव विषयाः प्रश्नभेदेन विषयभेदेन प्रसङ्गसङ्गत्या च तत्रतत्र लोकानां श्रद्धोत्पादनद्वारा प्रवृत्तौ सत्यां नरकपातो न भवेदिति दृढज्ञानोत्पत्तयेऽत्र खण्डे
पुनःपुनरुपन्यस्ता इति न पौनरुक्त्यशंका कार्या। यथाष्टोत्तरशतोपनिषत्सु वेदान्तेषूक्ता एवांशाः पुनःपुनरुक्तास्तैरेव वचनैर्वचनभेदैरपि। २ स जयति कल्पद्रुमो विष्णुः। ३ मुनयः
शौनकादयः। सत्रं स्वर्गाय लोकाय सहस्राब्दमकुर्वत ॥ एकादा मुनयः सर्व प्रातस्ते हुतवह्नयः ॥ पौराणिकं समासीनं सूतं पप्रच्छुरादरात् ॥ सूत जाना०। ४ तथैव च ॥ नैसर्गिकै
रथैश्चैव वाजिभक्तादिभिस्तथा ॥ स्वरूपे० ।

वाहनं विष्णुरब्रवीत् ॥ भूमिः का लंघिता पक्षिंस्त्वयेयन्तमनेहसम् ॥ २२ ॥ गरुड उवाच ॥ तव प्रसादाद्वैकुण्ठ त्रैलोक्यं सचराचरम् ॥ २३ ॥ मया विलोकितं सर्व्वं जगत्स्थावरजंगमम् ॥ भूर्लोकात्सत्यपर्य्यन्तं पुरं याम्यं विना प्रभो ॥ २४ ॥ भूर्लोकः सर्व्वलोकानां प्रचुरः सर्व्वजन्तुषु ॥ मानुष्यं सर्व्वभूतानां भुक्तिमुक्त्यालयं शुभम् ॥ २५ ॥ अतः सुकृतिनां लोको न भूतो न भविष्यति ॥ २६ ॥ गायन्ति देवाः किल गीतकानि धन्यास्तु ये भारतभूमिभागे ॥ स्वर्गापवर्गस्य फलार्ज्जनाय भवन्ति भूयः पुरुषाः सुरत्वात् ॥ २७ ॥ प्रेतःकौक्षिप्यते कस्मात्पञ्चरत्नं मुखे कथम् ॥ अधस्ताच्चालिता दर्भाः पादौ याम्यां व्यवस्थितौ ॥ २८ ॥ किमर्थं पुत्रपौत्राश्च तस्य तिष्ठन्ति चाग्रतः ॥ किमर्थं दीयते दानं गोदानमपि केशव ॥ ॥ २९ ॥ बन्धुर्मित्राण्यमित्राश्च क्षमापयंति तत्कथम् ॥ तिलालोहं हिरण्यं च कर्पासं लवणं तथा ॥ ३० ॥ सप्तधान्यं क्षितिर्गावो दीयन्ते केन हेतुना ॥ कथं हि म्रियते जन्तुर्मृतो वै कुत्र गच्छति ॥ ३१ ॥ अतिवाहशरीरं च कथं हि श्रयते तदा ॥ शवं स्कन्धे वहेत्पुत्रो अग्निदाता च पौत्रकः ॥ ३२ ॥ आज्येनाभ्यञ्जनं कस्मात्कुत एकाहुतिक्रिया ॥ वसुन्धरा किमर्थं च कुतः स्त्रीशब्दकीर्त्तनम् ॥ ३३ ॥ यमसूक्तं किमर्थं च उदीच्यां दिशमाहरेत् ॥ पानीयमेकवस्त्रेण सूर्य्यबिम्बनिरीक्षणम् ॥ ३४ ॥ यवसर्षपदूर्व्वास्तु पाषाणे निम्बपत्रकम् ॥ वस्त्रं नरश्च नारी च विदध्यादधरोत्तरम् ॥ ३५ ॥ अन्नाद्यं गृहमागत्य न भोक्तव्यं जनैः सह ॥ नवकांश्चैव पिण्डांश्च किमर्थं ददते सुताः ॥ ३६ ॥ किमर्थं चत्वरे दुग्धं पात्रे पक्वे च मृन्मये ॥ काष्ठत्रयं गणाबद्धं कृत्वा रात्रौ चतुष्पथे ॥३७॥ निशायां दीयते दीपो यावदब्दं दिनेदिने॥दाहोदकं किमर्थं च किमर्थं च जनैः सह ॥३८॥ भगवन्नातिवाहश्च नव पिण्डाः प्रदापयेत् ॥ कथं देयं पितृभ्यश्च वाहस्यावाहनं कथम् ॥ ३९ ॥ इदश्चेत्क्रियते देव कस्मात्पिण्डं प्रदापयेत् ॥ किं तत्प्रदीयते तस्य पिण्डदानाद्यनन्तरम् ॥ ४० ॥ अस्थिसञ्चयनं चैव घटस्फोटं तथैव च ॥ द्वितीयेऽह्नि कुतः स्नानं चतुर्थे साग्निके द्विजे ॥ ४१ ॥ दशमे किं मलस्नानं कार्य्यं सर्व्वजनैः सह ॥ कस्मात्तैलोद्वर्त्तनं च स्कन्धवाहगृहं नयेत् ॥ ४२ ॥ तैलोद्वर्त्तनकं चापि दद्युः स्थूलजलाशये ॥ दशमेऽहनि यत्पिण्डं तद्द्यादामिषेण तु ॥ ४३ ॥ पिण्डश्चैकादशे कस्माद्वृषोत्सर्गादिपूर्व्वकम् ॥ भाजनोपानहौ च्छत्रं वासांसि त्वंगुलीयकम् ॥ ४४ ॥ त्रयोदशेऽह्नि देयं स्यात्पददानं किमर्थकम् ॥ श्राद्धानि षोडशैतानि अब्दं यावत्कुतो घटः॥४५॥अन्नाद्येनोदकेनैव षष्ट्याधिकशतत्रयम्॥ दिनेदिने च दातव्यं घटान्नं प्रेततृप्तये॥४६॥प्राप्ते काले वै म्रियते अनित्या मानवाः प्रभो ॥४७॥ छिद्रं तु नैव पश्यामि कुतो जीवः स निर्गतः॥ कुतो गच्छन्ति भूतानि पृथिव्यापो

१ सन्तः सुकृतिनो लोके प्रभवन्ति जना यदि । २ सुयत्नात्० ।

मनस्तथा॥तेजो वदस्व मे नाथ वायुराकाशमेव च ॥४८॥ कुतः कर्मेन्द्रियाणीह पञ्चबुद्धीन्द्रियाणि च ॥ वायवश्चैव पञ्चैते कथं गच्छन्ति चात्ययम्
॥४९॥लोभमोहादयः पञ्च शरीरे चैव तस्कराः॥ तृष्णा कामो ह्यहंकारः कुतो यान्ति जनार्दन॥५०॥पुण्यं वाप्यथवाऽपुण्यं यत्किञ्चित्सुकृतं तथा ॥
नष्टे देहे कुतो यान्ति दानानि विविधानि च ॥ ५१ ॥ सपिण्डनं किमर्थं च पूर्णे संवत्सरेऽपि वा ॥ प्रेतस्य मेलनं केषां किंविधं तत्र कारयेत्
॥ ५२ ॥ मूर्च्छनात्पतनाद्वापि विपत्तिर्यदि जायते ॥ ये दग्धा ये त्वदग्धाश्च पतिता ये नरा भुवि ॥ ५३ ॥ यानि चान्यानि भूतानि तेषामन्ते
भवेच्च किम् ॥ पापिनो ये दुराचारा ये चान्ये गतबुद्धयः ॥ ५४ ॥ आत्मघाती ब्रह्महा च स्तेयी विश्वासघातकः ॥ कपिलायाः पिबेच्छूद्रो यः
पठेदिदमक्षरम् ॥ ५५ ॥ धारयेद्ब्रह्मसूत्रं वा का गतिस्तस्य माधव ॥ शूद्रस्य ब्राह्मणी भार्या संगृहीता यदा भवेत् ॥५६॥ भीतोऽहं पापिनस्तस्मात्त
न्मे वद जगत्प्रभो ॥ अन्यच्च शृणु विश्वात्मन्मया कौतुकिना स्यात् ॥ ५७ ॥ लोकाल्लोकयता लोके जगाहे विश्वमण्डलम् ॥ तत्राजनि जनान्दृष्ट्वा
दुःखेष्वेव निमज्जतः ॥ ५८ ॥ स्वान्ते मे दुर्धरा पीडा तत्पीडातो गरीयसी ॥ त्रिदिवे दितिजातेभ्यो भूमौ मृत्युरुगादिभिः ॥ ५९ ॥ इष्टवस्तुवियो
गैश्च पाताले मामकं भयम् ॥ एवं न निर्भयं स्थानमन्यदीश भवत्पदात् ॥ ६० ॥ अमर्त्यं स्वप्नमायावत्कालेन कवलीकृतम् ॥ तत्रापि भारते
वर्षे बहुदुःखस्य भागिनः ॥ ६१ ॥ जना दृष्टा मया रागद्वेषमोहादिविप्लुताः ॥ केचिदन्धाः केकराक्षास्खलद्वाचस्तु पंगवः ॥ ६२ ॥ खञ्जाः का
णाश्च बधिरा मूकाः कुष्ठाश्च लोमशाः ॥ नानारोगपरीताश्च स्वपुष्पाद्याभिमानिनः ॥ ६३ ॥ तेषां दोषस्य वैचित्र्यं मृत्योर्गोचरतामपि ॥ दृष्ट्वा भ्रष्टु
मनाः प्राप्तः को मृत्युश्चित्रता कथम् ॥ ६४ ॥ मृतिर्यस्य विधानेन मरणादप्यनन्तरम् ॥ विधिनाऽद्क्रिया यस्य न स दुर्गतिमाप्नुयात् ॥ ६५ ॥
ऋषिभ्यस्तु मया पूर्वमिति सामान्यतः श्रुतम् ॥ ज्ञानाय तद्विशेषस्य पृच्छामीदमिति प्रभो ॥ ६६ ॥ म्रियमाणस्य किं कृत्यं किं दानं वासवा
नुज ॥ दाहमृत्योरन्तराले को विधिर्दहनस्य च ॥ ६७ ॥ सद्यो विलम्बतो वा किं देहमन्यं प्रपद्यते ॥ संयमन्यां क्रम्यमाणमावर्षं का मृतिक्रिया ॥
॥ ६८ ॥ प्रायश्चित्तं दुर्मतेः किं पञ्चकादिमृतस्य च ॥ प्रसादं कुरु मे मोहं छेत्तुमर्हस्यशेषतः ॥६९॥ सर्वमन्तेमया पृष्टं ब्रूहि लोकहिताय वै॥७०॥
इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशाख्ये धर्मकाण्डे ( प्रेतखण्डे ) श्रीकृष्णगरुडसंवादे प्रश्नप्रपञ्चो नाम प्रथमोऽध्यायः ॥ १ ॥ श्रीकृष्ण
उवाच ॥ साधु पृष्टं त्वया भद्र मानुषाणां हिताय वै ॥ शृणुष्वावहितो भूत्वा सर्वमेवौर्ध्वदैहिकम् ॥ १ ॥ सम्यग्विभेदरहितं श्रुतिस्मृतिसमुद्धृतम् ॥
यन्न दृष्टं सुरैः सेन्द्रैर्योगिभिर्योगचिन्तकैः ॥ २ ॥ गुह्याद्गुह्यतरं तच्च नाख्यातं कस्यचित्क्वचित् ॥ भक्तस्त्वं हि महाभाग वैनतेयं ब्रवीमि ते ॥ ३ ॥

अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ॥ येन केनाप्युपायेन कार्य्यं जन्म सुतस्य हि ॥ ४ ॥ तारयेन्नरकात्पुत्रो यदि मोक्षो न विद्यते ॥
स्कन्धः पुत्रेण कर्त्तव्यो ह्यग्निदाता च पौत्रकः ॥ ५ ॥ तिलदर्भैश्च भूम्यां वै कुटी ऋतुमती भवेत् ॥ पञ्च रत्नानि वक्त्रे तु येन जीवः प्ररोहति ॥६॥
यदा पुष्पं प्रनष्टं हि क्व तदा गर्भधारणम् ॥ आदराच्च ततो भूमौ येन गर्भं प्रधार्य्यते ॥ ७ ॥ लेप्या तु गोमयैर्भूमिस्तिलान्दर्भान्विनिःक्षिपेत् ॥
तस्यामेवातुरो मुक्तः सर्व्वं दहति किल्बिषम् ॥ ८ ॥ दर्भतूली नयेत्स्वर्गमातुरस्य न संशयः ॥ दर्भास्तत्र क्षिपेद्वाथ तूलीगेन्दुकमध्यतः ॥ ९ ॥
सर्व्वत्र वसुधाऽपूता यत्र लेपो न विद्यते ॥ यत्र लेपः स्थितस्तत्र पुनर्लेपेन शुध्यति ॥ १० ॥ यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्म्मिणः ॥
अलेपं ह्यातुरं मुक्तं विशन्त्येते वियोनयः ॥ ११ ॥ नित्यहोमस्तथा श्राद्धं पादशौचं द्विजे तथा ॥ मण्डलेन विना भूम्यामातुरो मुच्यते न हि
॥ १२ ॥ ब्रह्मा विष्णुश्च रुद्रश्च श्रीर्हुताशस्तथैव च ॥ मण्डले चोपतिष्ठन्ति तस्मात्कुर्वीत मण्डलम् ॥ १३ ॥ अन्यथा म्रियते बालो वृद्धस्तार्क्ष्ययुवाऽ
थ वा ॥ योन्यन्तरं न गच्छेत्स क्रीडते वायुना सह ॥१४॥ मिश्रितं लोहितामिश्रं तदेवं जन्म जायते ॥ तस्यैव वायुभूतस्य न श्राद्धं नोदकक्रिया ॥१५॥
मम स्वेदसमुद्भूतास्तिलास्तार्क्ष्य पवित्रकाः ॥ असुरा दानवा दैत्या विद्रवन्ति तिलैस्तथा ॥१६॥ तिलाः श्वेतास्तिला कृष्णास्तिला गोमूत्रसंन्निभाः ॥
दहन्तु ते मे पापानि शरीरेण कृतानि वै ॥ १७ ॥ एक एव तिलो दत्तो हेमद्रोणतिलैः समः ॥ तर्पणे दानहोमेषु दत्तो भवति चाक्षयः ॥ १८ ॥
दर्भा रोमसमुद्भूतास्तिलाः स्वेदेषु नान्यथा ॥ देवता दानवास्तृप्ताः श्राद्धेन पितरस्तथा ॥ १९ ॥ प्रयोगविधिना ब्रह्मा विश्वं चाप्युपजीवनात् ॥ अप
सव्यादितो ब्रह्मा पितरो देवदेवताः ॥ २० ॥ तेन ते पितरस्तृप्ता अपसव्ये कृते सति ॥ दर्भमूले स्थितो ब्रह्मा मध्ये देवो जनार्दनः ॥ २१ ॥ दर्भाग्रे
शंकरं विद्यात्त्रयो देवाः कुशे स्मृताः ॥ विप्रा मन्त्राः कशा वह्निस्तुलसी च खगेश्वर ॥ २२ ॥ नैते निर्म्माल्यतां यान्ति क्रियमाणाः पुनःपुनः ॥
तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग ॥ २३ ॥ पंच प्रवहणान्येव भवाब्धौ मज्जतां नृणाम् ॥ विष्णुरेकादशी गीता तुलसी विप्रधेनवः ॥ २४ ॥
असारे दुर्गसंसारे षट्पदी मुक्तिदायिनी ॥ तिलाः पवित्रमतुलं दर्भाश्चापि तुलस्यथ ॥ २५ ॥ निवारयन्ति चैतानि दुर्गतिं यान्तमातुरम् ॥ हस्ता
भ्यामुद्धरेद्दर्भांस्तोयेन प्रोक्षयेद्भुवि ॥ २६ ॥ मृत्युकाले क्षिपेद्दर्भान्करयोरातुरस्य च ॥ दर्भैस्तु क्षिप्यते योऽसौ दर्भैस्तु परिवेष्टितः ॥ २७ ॥ विष्णु
लोके स वै याति मन्त्रहीनोऽपि मानवः ॥ तूलीं कृत्वा कृतौ पादौ संस्थितौ क्षितिपृष्ठतः ॥ २८ ॥ प्रायश्चित्तं विशुद्धात्मा संसारेऽसारसागरे ॥
गोमयेनोपलिम्पेत्तु दर्भास्तरणसंस्थिते ॥ २९ ॥ यन्ने दत्तेन दानेन सर्व्वं पापं व्यपोहति ॥ लवणं तद्रसं दिव्यं सर्वकामप्रदं नृणाम् ॥ ३० ॥

यस्मादन्नरसाः सर्वे नोत्कटा लवणं विना ॥ पितॄणां च प्रियं भव्यं तस्मात्स्वर्गप्रदं भवेत् ॥ ३१ ॥ विष्णुदेहसमुद्भूतो यतोऽयं लवणो रसः ॥
एतत्सलवणं दानं तेन शंसन्ति योगिनः ॥ ३२ ॥ ब्राह्मणक्षत्रियविशां स्त्रीणां शूद्रजनस्य च ॥ आतुरस्य यदा प्राणा न यान्ति वसुधातले ॥ ३३॥
लवणं तु तदा देयं द्वारस्योद्घाटनं दिवः ॥ अन्यच्च शृणु पक्षीन्द्र मृत्यो रूपं प्रपंचतः ॥ ३४ ॥ यस्य कालेन नो यायाद्वियोगः प्राणदेहयोः ॥
प्राणिनश्च स्वसमये मृत्युरत्यन्तविस्मृतिः ॥ ३५ ॥ यथा वायुर्जलधरान्विकर्षति यतस्ततः ॥ तद्वज्जलदवत्तार्क्ष्य कालस्यैव वशानुगाः ॥ ३६ ॥
सात्त्विका राजसाश्चैव तामसा ये च केचन ॥ भावाः कालात्मकाः सर्व्वे प्रवर्त्तन्ते हि जन्तुषु ॥ ३७ ॥ आदित्यश्चन्द्रमाः शम्भुरापो वायुः शत
क्रतुः ॥ अग्निः खं पृथिवी मित्र ओषध्यो वसवस्तथा ॥ ३८ ॥ सरितः सागराश्चैव भावाभावौ च सर्पहन् ॥ सर्व्वे कालेन सृज्यन्ते संक्षिप्यन्ते यथा
पुनः ॥ ३९ ॥ कालेन संह्रियन्ते च नूनं मृत्यावुपस्थिते ॥ दैवयोगात्तदा व्याधिः कश्चिदुत्पद्यते खग ॥ ४० ॥ वैकल्यमिन्द्रियाणां च बलौ
जोरंहसां भवेत् ॥ युगपद्वृश्चिककोटिशूकदंशो भवेद्यदि ॥ ४१ ॥ तदानुमीयते तेन पीडा मृत्युभवा खग ॥ ततः क्षणेन चैतन्ये विकले जडतां गते
॥ ४२ ॥ प्रचाल्यन्ते ततः प्राणा याम्यैर्निकटवर्त्तिभिः ॥ बीभत्सं तु तदा रूपं प्राणैः कण्ठगतैर्भवेत् ॥ ४३ ॥ फेनमुद्गिरते सोऽथ मुखं लालाकुलं
भवेत् ॥ अंगुष्ठमात्रपुरुषो हाहा कुर्व्वंस्ततस्तनोः ॥ ४४ ॥ तदैव नीयते दूतैर्याम्यैर्वीक्षन्स्वकं गृहम् ॥ भूय एव हितं तात मृत्युकालदशामिमाम्
॥ ४५ ॥ ऊष्मा प्रकुपितः काये तीव्रवायुसमीरितः ॥ भिनत्ति मर्म्मस्थानानि दीप्यमानो निरिन्धनः ॥ ४६ ॥ उदानो नाम पवनस्ततश्चोर्ध्वं प्रव
र्त्तते॥भक्तानामम्बुभुक्षाणामधोगतिनिरोधकृत्॥४७॥यैर्नानृतानि चोक्तानि प्रीतिभेदः कृतो न च॥आस्तिकः श्रद्दधानश्च स सुखं मृत्युमृच्छति ॥४८॥
यो न कामान्न संरम्भान्न द्वेषाद्धर्म्ममुत्सृजेत् ॥ यथोक्तकारी सौम्यश्च स सुखं मृत्युमृच्छति ॥ ४९ ॥ मोहज्ञानप्रदातारः प्राप्नुवन्ति महत्तमः ॥
कूटसाक्षी मृषावादी ये च विश्वासघातकाः ॥ ५० ॥ ते मोहं मृत्युमृच्छन्ति तथा ये वेदनिन्दकाः ॥ विभीषकाः पूतिगन्धा यष्टिमुद्गरपाणयः ॥५१॥
आगच्छन्ति दुरात्मानो यमस्य पुरुषास्तदा ॥ प्राप्ते त्वीदृक्पथे घोरे जायते तस्य वेपथुः ॥ ५२ ॥ क्रन्दत्यविरतं सोऽपि पितृमातृसुतानपि ॥ सास्य
वागस्फुटा यत्नैनैकवर्णा विभासते ॥५३॥ दृष्टिर्वै भ्राम्यते त्रासाच्छ्वासाच्छुष्यति चाननम् ॥ स ततो वेदनाविष्टस्तच्छरीरं विमुञ्चति ॥ ५४ ॥ अस्पृश्यं
कुत्सनीयं च तत्क्षणादेव जायते ॥ उक्तं मृत्योः स्वरूपं तु प्रसङ्गादन्यदप्यथ ॥ ५५ ॥ वैचित्र्यस्योत्तरं प्रश्ने द्वितीयस्य वदामि ते ॥ कर्म्मणां प्राक्तना
नां तु तदसत्त्वेन भेदतः ॥ ५६ ॥ भवेद्रोगस्य वैचित्र्यं भ्राम्यतां प्राणिनामिह ॥ देवत्वमसुरत्वं च यक्षत्वादिसुखप्रदम् ॥ ५७ ॥ मानुषत्वं पशुत्वं च

पक्षित्वाद्यतिदुःखदम् ॥ कर्म्मणां तारतम्येन भवतीह खगेश्वर ॥ ५८ ॥ अत्र ते कीर्त्तयिष्यामि विपाकं कर्म्मणामहम् ॥ वैचित्र्यस्य स्फुटत्वाय
यैर्जीवः संसरत्ययम् ॥ ५९ ॥ महापातकजान्घोरान्नरकान्प्राप्य दारुणान् ॥ कर्म्मक्षयात्प्रजायन्ते महापातकिनः क्षितौ ॥ ६० ॥ जायन्ते लक्षणैर्यैस्तु
तानि मे शृणु सत्तम ॥ मृगाश्वसूकरोष्ट्राणां ब्रह्महा योनिमृच्छति ॥ ६१ ॥ कृमिकीटपतङ्गत्वं स्वर्णहारी समाप्नुयात् ॥ तृणगुल्मलतात्वं च क्रमशो
गुरुतल्पगः ॥ ६२ ॥ ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः ॥ हेमहारी तु कुनखी दुश्चर्म्मा गुरुतल्पगः ॥ ६३ ॥ यो येन संवसत्येषां स तल्लि
ङ्गोऽभिजायते ॥ संवत्सरेण पतति पतितेन सहाचरन् ॥६४॥ संलापस्पर्शनिःश्वाससहयानाशनासनात् ॥ याजनाध्यापनाद्यौनात्पापं संक्रमते नृणाम्
॥ ६५ ॥ गत्वा दारान्परेषाञ्च ब्रह्मस्वमपहृत्य च ॥ अरण्ये निर्जने देशे जायते ब्रह्मराक्षसः ॥ ६६ ॥ हीनजातौ प्रजायेत रत्नानामपहारकः ॥ पत्रं च
शाखिनो हत्वा गन्धांश्छुच्छुन्दरी पुमान् ॥ ६७ ॥ मूषको धान्यहारी स्याद्यानमुष्ट्रः फलं कपिः ॥ निर्म्मन्त्रभोजनात्काको गृध्रो हृत्वा ह्युपस्करम्
॥ ६८ ॥ मधुदंशः फलं गृध्रो गां गोधाग्निं बकस्तथा ॥ स्याच्छ्वेतकुष्ठी स्त्रीवस्त्र ह्यरुची रसहारकः ॥ ६९ ॥ कांस्यहारी तु हंसः स्यात्परस्वस्य च
हारकः ॥ अपस्मारी गुरोर्हन्ता क्रूरकृद्वामनो भवेत् ॥ ७० ॥ धर्म्मपत्नीं त्यजञ्छब्दवेधी प्राणी भवेत्क्षितौ ॥ देवविप्रस्वापहारी पाण्डुरः परमांसभुक्
॥ ७१ ॥ भक्ष्याभक्ष्यो गण्डमाली महारोगी प्रजायते ॥ न्यासापहारी काणः स्यात्स्त्रीजीवः खञ्जको भवेत् ॥ ७२ ॥ कौमारदारत्यागी च दुर्भगोऽथै
कामिष्टभुक् ॥ वातगुल्मी विप्रयोषिद्गामी वा जम्बुको भवेत् ॥ ७३ ॥ शय्याहर्त्ता क्षपणकः पतङ्गो वस्त्रहारकः ॥ मात्सर्य्यादपि जात्यन्धो कपाली
दीपहारकः ॥ ७४ ॥ कौशिको मित्रहन्ता च क्षयी पित्रादिनिन्दकः ॥ स्वलद्वागनृतवादी कूटसाक्षी जलोदरी ॥ ७५ ॥ मशकः सोऽथ च्छिन्नोष्ठो
विवाहे विघ्नकृद्भवेत् ॥ स्याद्वाथ वृषलः सोऽयं चत्वरे वै विण्मूत्रकृत् ॥ ७६ ॥ मूत्रकृच्छ्री दूषकस्तु कन्यायाः क्लीबतामियात् ॥ द्वीपी स्याद्देवविक्रे
ता वराहोऽयाज्ययाजकः ॥ ७७ ॥ यतस्ततोऽश्नन्मार्जारो खद्योतो वनदाहकः ॥ कृमिः पर्य्युषितादः स्यान्मत्सरी भ्रमरो भवेत् ॥ ७८ ॥ अस्यु
त्सादी तु कुष्ठी स्याददत्ताऽऽदानतो वृषः ॥ सर्पो गोहारकोऽन्नस्य हारकः स्यादजीर्णवान् ॥ ७९ ॥ जलहारी तु मत्स्यः स्यात्क्षीरहारी बलाकिका ॥
अन्नं पर्य्युषितं विप्रे प्रददत्कुब्जतां व्रजेत् ॥ ८० ॥ फलानि हरते यस्तु सन्ततिर्म्रियते खग ॥ अदत्त्वा भक्ष्यमश्नाति ह्यनपत्यो भवेन्नरः ॥ ८१ ॥
प्रवज्याऽगमनाद्राजन् भवेन्मरुपिशाचकः ॥ चातको जलहर्त्ता स्याज्जन्मान्धः पुंस्तकं हरन् ॥ ८२ ॥ प्रतिश्रुत्य द्विजेभ्योऽर्थमदद्जम्बुको भवेत् ॥
परिवादाद्द्विजातीनां लभते काच्छपीं तनुम् ॥ ८३ ॥ दुर्भगः फलविक्रेता वृकश्च वृषलीपतिः ॥ मार्जारोऽग्निं पदा स्पृष्ट्वा रोगवान्परमांसभुक् ॥ ८४ ॥

जलप्रस्रवणं यस्तु भिन्द्यान्मत्स्यो भवेन्नरः ॥ हरेः कथां न शृण्वन्ति ये न साधुजनस्तवम् ॥ ८५ ॥ तान्नरान्कर्णमूलोऽयं व्याप्नुयान्नेतराञ्जनान् ॥ परस्याननसंस्थं यो ग्रासं हरति मन्दधीः ॥ ८६ ॥ देवोपकरणान्येनं गण्डमालिनमीहते ॥ दम्भेनाचरते धर्म्मं गजचर्म्मा भवेत्तु सः ॥ ८७ ॥ शिरोऽर्तिप्रमुखा रोगा यान्ति विश्वासघातकम् ॥ लिङ्गपीडी शिवस्वं च शिवनिर्म्माल्यमेव च ॥ ८८ ॥ स्त्रियोऽप्यनेन मार्गेण हत्वा दोषमवाप्नुयुः ॥ एतेषामेव जन्तूनां भार्य्यात्वमुपजायते ॥ ८९ ॥ भोगान्ते नरकस्यैतत्सर्व्वमित्यवधारय ॥ खग प्रदर्श्यमेतत्तु मयोक्तं ते समासतः ॥ द्रव्यप्रकारा हि यथा तथैव प्राणिजातयः ॥ ९० ॥ एवं विचित्रैर्निजकर्म्मभिर्नृणां सुखस्य दुःखस्य च जन्मनामपि ॥ वैचित्र्यमुक्तं शुभकर्म्मतः शुभं तथाऽशुभाच्चाशुभमीरयन्ति ॥ ९१ ॥ एतत्ते सर्व्वमाख्यातं यत्पृष्टोऽहमिह त्वया ॥ ९२ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे प्रेतका(ख)ण्डे श्रीकृष्णगरुडसंवादे और्ध्वदेहिकविधिकर्मविपाकयोर्वर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥ सूत उवाच ॥ एवमुक्तस्ततः पक्षी स्वरूपं निरयस्य तु ॥ पप्रच्छ नरकाण्येवं श्रुत्वा चोत्कूलितान्तरः ॥ १ ॥ गरुड उवाच ॥ नरकाणां स्वरूपं मे वद येषु विकर्म्मिणः ॥ पात्यन्ते दुःखभूयिष्ठास्तेषां भेदांश्च कीर्त्तय ॥ २ ॥ श्रीभगवानुवाच ॥ नरकाणां सहस्राणि वर्त्तन्ते ह्यरुणानुज ॥ शक्यं विस्तरतो नैव वक्तुं प्राधान्यतो ब्रुवे ॥ ३ ॥ रौरवं नाम नरकं मुख्यं तद्वै निबोध मे ॥ रौरवे कूटसाक्षी तु याति यश्चानृती नरः ॥४॥ योजनानां सहस्रे द्वे रौरवो हि प्रमाणतः ॥ जानुमात्रप्रमाणं तु तत्र गर्त्तं सुदुस्तरम् ॥५॥ तत्राङ्गारचयौघेन कृतं तद्धरणीसमम् ॥ तत्राग्निना सुतीव्रेण तापिताङ्गारभूमिना ॥ ६ ॥ तन्मध्ये पापकर्म्माणं विमुञ्चन्ति यमानुगाः ॥ स दह्यमानस्तीव्रेण वह्निना परिधावति ॥ ७ ॥ पदेपदे च पादोऽस्य स्फुट्यते शीर्य्यते पुनः ॥ अहोरात्रेणोद्धरणं पादन्यासेन गच्छति ॥ ८ ॥ एवं सहस्रं विस्तीर्णं योजनानां विमुच्यते ॥ ततोऽन्यत्पापशुद्ध्यर्थं तादृङ्निरयमृच्छति ॥ ९ ॥ रौरवस्ते समाख्यातः प्रथमो नरको मया ॥ महारौरवसंज्ञं तु शृणुष्व नरकं खग ॥ १० ॥ योजनानां सहस्राणि सन्ति पञ्च समन्ततः ॥ तत्र ताम्रमयी भूमिरधस्तस्या हुताशनः ॥ ११ ॥ तया तपन्त्या सा सर्वा प्रोद्यद्विद्युत्समप्रभा ॥ विभाव्यते महारौद्रा पापिनां दर्शनादिषु ॥ १२ ॥ तस्यां बद्धकराभ्यां च पद्भ्यां चैव यमानुगैः ॥ मुच्यते पापकृन्मध्ये लुण्ठमानः स गच्छति ॥ १३ ॥ काकैर्बकैर्वृकोलूकैर्मशकैर्वृश्चिकैस्तथा ॥ भक्ष्यमाणैस्तथा रौद्रैर्गतो मार्गे विकृष्यते ॥ १४ ॥ दह्यमानो गतमतिर्भ्रान्तस्तातेति चाकुलः ॥ वदत्यसकृदुद्विग्नो न शान्तिमधिगच्छति ॥ १५ ॥ एवं तस्मान्नरैर्मोक्षस्त्वतिक्रान्तैरवाप्यते ॥ वर्षायुतायुतैः पापं यैः कृतं दुष्टबुद्धिभिः ॥ १६ ॥ तथान्यस्तु ततो नाम सोऽतिशीतः स्वभावतः ॥ महारौरववद्दीर्घस्तथान्धतमसा वृतः ॥१७॥ शीतार्त्तास्तत्र बध्यन्ते नरास्तमसि दारुणे ॥

परस्परं समासाद्य परिरभ्याश्रयन्ति ते ॥ १८ ॥ दन्तास्तेषां च भज्यन्ते शीतार्त्तिपरिकम्पिताः ॥ क्षुत्तृषातिबलाः पक्षिंस्तथ नत्राप्युपद्रवाः ॥ १९ ॥
हिमखण्डवहो वायुर्भिनत्त्यस्थीनि दारुणः ॥ मज्जासृगस्थिगलितमश्नन्त्यत्र क्षुधान्विताः ॥ २० ॥ आलिङ्गयमाना भ्राम्यन्ते परस्परसमागमे ॥
एवं तत्रापि सुमहान्क्लेशस्तमसि मानवैः ॥ २१ ॥ प्राप्यते शकुनिश्रेष्ठ यो बहूकृतसञ्चयः ॥ निकृन्तन इति ख्यातस्ततोऽन्यो नरकोत्तमः
॥ २२ ॥ कुलालचक्राणि तत्र भ्राम्यन्त्यविरतं खग ॥ तेष्वारोप्य निकृष्यन्ते कालसूत्रेण मानवाः ॥ २३ ॥ यमानुगाङ्गुलिस्थेन
आपादतलमस्तकम् ॥ न चैषां जीवितभ्रंशो जायते पक्षिसत्तम ॥ २४ ॥ छिन्नानि तेषां शतशः खण्डान्यैक्यं व्रजन्ति हि ॥
एवं वर्षसहस्राणि भ्राम्यन्ते पापकर्म्मिणः ॥ २५ ॥ तावद्यावदशेषं च तत्पापं संक्षयं गतम् ॥ अप्रतिष्ठं च नरकं शृणुष्व गदतो मम ॥ २६ ॥
तत्रस्थैर्नारकैर्दुःखमसह्यमनुभूयते ॥ तान्येव तत्र चक्राणि घटीयन्त्राणि चान्यतः ॥ २७ ॥ दुःखस्य हेतुभूतानि पापकर्म्मकृतां नृणाम् ॥ चक्रे
ष्वारोपिताः केचिद्भ्राम्यन्ते तत्र मानवाः ॥ २८ ॥ यावद्वर्षसहस्राणि न तेषां स्थितिरन्तरा ॥ घटीयन्त्रेषु बद्धा ये बद्धा तोयघटी यथा ॥ २९ ॥
भ्राम्यन्ते मानवा रक्तमुद्गिरन्तः पुनःपुनः ॥ अन्त्रैर्मुखविनिष्क्रान्तैर्नेत्रैरन्त्रावलम्बिभिः ॥ ३० ॥ दुःखानि प्राप्नुवन्तीह यान्यसह्यानि जन्तुभिः ॥
असिपत्रवनं नाम नरकं शृणु चापरम् ॥ ३१ ॥ योजनानां सहस्रं यो ज्वलत्यग्न्याश्रितावनिः ॥ सततीव्रकराश्चण्डर्यत्र तीव्रे सुदारुणे ॥ ३२ ॥
प्रतपन्ति सदा तत्र प्राणिनो नरकौकसः ॥ तन्मध्ये चरणं शीतस्निग्धपत्रं विभाव्यते ॥ ३३ ॥ पत्राणि यत्र खण्डानि फलानां पक्षिसत्तम ॥ श्वानश्च
तत्र सुबलाश्चरन्त्यामिषभोजनाः ॥ ३४ ॥ महावक्त्रा महादंष्ट्रा व्याघ्रा इव महाबलाः ॥ ततश्च वनमालोक्य शिशिरच्छायमग्रतः ॥ ३५ ॥
प्रयान्ति प्राणिनस्तत्र क्षुत्तापपरिपीडिताः ॥ मातर्भ्रातस्तात इति क्रन्दमानाः सुदुःखिताः ॥ ३६ ॥ दह्यमानाङ्घ्रियुगला धरणिस्थेन वह्निना ॥
तेषां गतानां तत्रापि अति शीतिः समीरणः ॥ ३७ ॥ प्रवाति तेन पात्यन्ते तेषां खड्गास्तथोपरि ॥ छिन्नाः पतन्ति ते भूमौ ज्वलत्पावकसंचये
॥ ३८ ॥ लेलिह्यमाने चान्यत्र तप्ताशेषमहीतले ॥ सारमेयाश्च ते शीघ्रं शातयन्ति शरीरतः ॥ ३९ ॥ तेषां खण्डान्यनेकानि रुदतामतिभीषणे ॥
असिपत्रवनं तात मयैतत्परिकीर्त्तितम् ॥ ४० ॥ अतः परं भीमतरं तप्तकुंभं निबोध मे ॥ समन्ततस्तप्तकुम्भा वह्निज्वालासमन्विताः ॥ ४१ ॥ ॥१६२॥
ज्वलदग्निचयास्तप्ततैलायश्चूर्णपूरिताः ॥ एषु दुष्कृतकर्म्माणो याम्यैः क्षिप्ता ह्यधोमुखाः ॥ ४२ ॥ क्वाथ्यन्ते विस्फुटद्गात्रा गलन्मज्जाजलान्विताः ॥
स्फुटत्कपालनेत्रास्थिच्छिद्यमाना विभीषणैः ॥४३॥ गृध्रैरुत्पाट्य मुच्यन्ते पुनस्तेष्वेव वेगितैः ॥ पुनश्चिमचिमायन्ते तैलैनैक्यं व्रजन्ति च ॥ ४४ ॥

द्रवीभूतैः शिरोगात्रैः स्नायुमांसत्वगस्थिभिः ॥ ततो याम्यैर्नरैराशु दर्व्यावट्टनघट्टिताः ॥ ४५ ॥ कृतावर्त्ते महातैले क्वाथ्यन्ते पापकर्म्मिणः ॥
एष ते विस्तरेणोक्तस्तप्तकुम्भो मया खग ॥ ४६ ॥ आदिमो रौरवः प्रोक्तो महारौरवकोऽपरः ॥ अतिशीतस्तृतीयस्तु चतुर्थो हि निकृन्तनः ॥ ४७ ॥
अप्रतिष्ठः पञ्चमः स्यादसिपत्रवनोऽपरः ॥ सप्तमस्तप्तकुम्भस्तु सप्तैते नरका मताः ॥ ४८ ॥ श्रूयन्तेन्यान्यपि तथा नरकाणि नराधमाः ॥ कर्म
णां तारतम्येन तेषुतेषु पतन्ति हि ॥ ४९ ॥ तथा हि नरको रोधः शूकरस्ताल एव च ॥ तप्तकुम्भो महाज्वालः शबलोऽथ विमोहनः ॥ ५० ॥
क्रिमिश्च क्रिमिभक्षश्च लालाभक्षो विषञ्जनः ॥ अधःशिराः पूयवहो रुधिरान्धश्च विड्भुजः ॥ ५१ ॥ तथा वैतरणी सू ( मू ) मसिपत्रवनं तथा ॥
अग्निज्वालो महाघोरः सन्दंशो वाप्यभोजनः ॥ ५२ ॥ तमश्च कालसूत्रं च लोहश्चाप्यभिदस्तथा ॥ अप्रतिष्ठोऽप्यवीचिश्च नरका एवमादयः ॥ ५३ ॥
तामसा नरकाः सर्व्वे यमस्य विषये स्थिताः ॥ येषु दुष्कृतकर्माणः पतन्ति हि पृथक्पृथक् ॥ ५४ ॥ भूमेरधस्तात्ते सर्व्वे रौरवाद्याः प्रकीर्तिताः ॥
रोधो गोघ्नो भ्रूणहा च अग्निदाता नरः पतेत् ॥ ५५ ॥ सूकरे ब्रह्महा मज्जेत्सुरापः स्वर्णतस्करः ॥ ताले पतेत्क्षत्रहन्ता हत्वा वैश्यं च दुर्गतिः ॥ ५६ ॥
ब्रह्महत्यां च यः कुर्याद्यश्च स्याद्गुरुतल्पगः ॥ स्वसृगामी तप्तकुम्भी तथा राजभटोऽनृती ॥ ५७ ॥ तप्तलोहेश्च विक्रेता तथा बन्धनरक्षिता ॥ साध्वी
विक्रयकर्त्ता च यस्तु भक्तं परित्यजेत् ॥ ५८ ॥ महाज्वाली दुहितरं स्नुषां गच्छति यस्तु वै ॥ वेदो विक्रीयते यैश्च वेदं दूषयते तु यः ॥ ५९ ॥
गुरुं चैवावमन्यन्ते वाक्शरैस्ताडयन्ति च ॥ अगम्यागामी च नरो नरकं शबलं व्रजेत् ॥ ६० ॥ विमोहे पतते शूरं मर्य्यादां यो भिनत्ति वै ॥ दुरिष्टं
कुरुते यस्तु कृमिभक्षं प्रपद्यते ॥ ६१ ॥ देवब्राह्मणविद्वेष्टा लालाभक्षे पतत्यपि ॥ कुण्डकर्त्ता कुलालश्च न्यासहर्त्ता चिकित्सकः ॥ ६२ ॥ आरामेष्व
ग्निदाता च एते यान्ति विषञ्जने ॥ असत्प्रतिग्रही यस्तु तथैवायाज्ययाजकः ॥ ६३ ॥ न क्षत्रैर्जीवते यस्तु नरो गच्छेदधोमुखम् ॥ क्षीरं सुरां च मांसं
लाक्षां गन्धं रसं तिलान् ॥ ६४ ॥ एवमादीनि विक्रीणन् घोरे पूयवहे पतेत् ॥ यः कुक्कुटान्निबध्नाति मार्जारान् सूकरांश्च तान् ॥ पक्षिणश्च मृगांश्छा
गान्सोऽप्येवं नरकं व्रजेत् ॥ ६५ ॥ आजाविको माहिषिकस्तथा चक्री ध्वजी च यः ॥ रङ्गोपजीविको विप्रः शाकुनिर्ग्रामयाजकः ॥ ६६ ॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी ॥ सुरापो मांसभक्षी च तथा च पशुघातकः ॥ ६७ ॥ रुधिरान्धे पतन्त्येते एवमाहुर्मनीषिणः ॥ उपविष्टं
त्वेकपङ्क्त्यां विषं सम्भोजयन्ति ये ॥ ६८ ॥ पतन्ति निरये घोरे विड्भुजे नात्र संशयः ॥ मधुग्राही वैतरणीमाक्रोशी मूत्रसंज्ञके ॥ ६९ ॥ असिपत्र
वनेऽशौची क्रोधनश्च पतेदपि ॥ अग्निज्वालां मृगव्याधो भोज्यते यत्र वायसैः ॥ ७० ॥ इज्यायां व्रतलोपाच्च सन्दंशे नरके पतेत् ॥ स्कन्दते यदि

वा स्वप्ने यतिनो ब्रह्मचारिणः ॥७१॥ पुत्रैरध्यापिता ये च पुत्रैराज्ञापिताश्च ये॥ते सर्व्वे नरकं यान्ति निरयं चाप्यभोजनम् ॥७२॥ वर्णाश्रमविरुद्धानि
क्रोधहर्षसमन्विताः॥ कर्म्माणि ये तु कुर्व्वन्ति सर्व्वे निरयवासिनः॥७३॥उपरिष्टात्स्थितो घोर उष्णात्मा रौरवो महान् ॥ सुदारुणः सुशीतात्मा तस्या
धस्तामसः स्मृतः ॥७४॥ एवमादिक्रमेणैव सर्व्वेऽधोऽधः परिस्थिताः ॥ दुःखोत्कर्षश्च सर्व्वेषु कर्मस्वपि निमित्ततः॥७५॥सुखोत्कर्षश्च सर्वत्र धर्मस्येह
निमित्ततः॥ पश्यन्तिनरकान्देवा ह्यधोवक्त्रान्सुदारुणान् ॥७६॥ नारकाश्चापि ते देवान्सर्व्वान्पश्यन्ति ऊर्ध्वगान् ॥ एतान्यन्यानि शतशो नरकाणि विय
द्यते ॥७७॥ दिनेदिने तु नरके पच्यते दह्यतेऽन्यतः॥ शीर्य्यते भिद्यतेऽन्यत्र चूर्य्यते क्लिद्यतेऽन्यतः॥७८॥क्वथ्यते दीप्यतेऽन्यत्र तथा वातहतोऽन्यतः ॥ एकं
दिनं वर्षशतप्रमाणं नरके भवेत्॥७९॥ ततः सर्व्वेषु निस्तीर्णः पापी तिर्य्यक्त्वमश्नुते ॥ कृमिकीटपतंगेषु स्थावरैकशफेषु च ॥८०॥ गत्वा वनगजाद्येषु
गोष्वश्वेषु तथैव च ॥ खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा ॥८१॥ एते चैकशफाः षट् च शृणु पञ्चनखानतः॥ अन्यासु बहुपापासु दुःखदासु च यो
निषु ॥८२॥ मानुष्यं प्राप्यते कुब्जो कुत्सितो वामनोऽपि वा ॥ चण्डालपुक्कसाद्यासु नरयोनिषु जायते ॥८३॥ मुहुर्गर्भे वसन्त्येव म्रियन्ते च मुहुर्मुहुः॥
अवशिष्टेन पापेन पुण्येन च समन्वितः ॥ ८४ ॥ ततश्चारोहिणीं योनिं शूद्रवैश्यनृपादिकम् ॥ विप्रदेवेन्द्रतां चापि कदाचिदधिरोहति ॥ ८५ ॥ एवं
तु पापकर्म्मिणो निरयेषु पतन्त्यधः ॥ यथा पुण्यकृतो यान्ति तन्मे निगदतः शृणु ॥ ८६ ॥ ते यमेन विनिर्दिष्टां योनिं पुण्यगतिं नराः ॥
प्रगीतगन्धर्व्वगणा नृत्योत्सवसमाकुलाः ॥ ८७ ॥ हारनूपुरमाधुर्य्यैः शोभितान्यमलानि तु ॥ प्रयान्त्याशु विमानानि दिव्यगन्धस्रगुज्ज्वलाः ॥ ८८ ॥
तस्माच्च प्रच्युता राज्ञामन्येषां च महात्मनाम् ॥ जायन्ते नीरुजां गेहे सद्वृत्तपरिपालकाः ॥ ८९ ॥ भोगान्सम्प्राप्नुवन्त्युग्रांस्ततो यान्त्यूर्द्ध्वमन्यथा ॥
अवरोहिणीं सम्प्राप्य पूर्व्ववद्यान्ति मानवाः ॥ ९० ॥ जातस्य मृत्युलोके वै प्राणिनो मरणं ध्रुवम् ॥ पापिष्ठानामधोमार्गाज्जीवो निष्क्रमते ध्रुवम् ॥
॥ ९१ ॥ पृथिव्यां लीयते पृथ्वी आपश्चैव तथाप्सु च ॥ तेजस्तेजसि लीयेत समीरे च समीरणः॥९२॥ आकाशे च तथाकाशं सर्व्वव्यापि निशाकरे ॥
तत्र कामस्तथा क्रोधः काये पञ्चेन्द्रियाणि च ॥ ९३ ॥ एते तार्क्ष्य समाख्याता देहे तिष्ठन्ति तस्कराः ॥ कामः क्रोधो ह्यहंकारो मनस्तत्रैव नायकः
॥ ९४ ॥ संहारश्चैव कालोऽसौ पुण्यपापेन संयुतः ॥ पञ्चेन्द्रियसमायुक्तः सकलैर्विबुधैः सह ॥ ९५ ॥ प्रविशेत्स नवे देहे गृहे दग्धे गृही यथा ॥

१ तुच्छभोजनमिति च पाठः।

शरीरे ये समासीनाः सर्वे वै सप्त धातवः ॥ ९६ ॥ षाट्कौशिको ह्ययं कायः सर्व्वे वाताश्च देहिनाम् ॥ मूत्रं पुरीषं तद्योगाद्ये चान्ये व्याधयस्तथा ॥ ९७ ॥ पित्तं श्लेष्मा तथा मज्जा मांसं वै मेद एव च ॥ अस्थि शुक्रं तथा स्नायुर्देहेन सह दह्यति ॥ ९८ ॥ एष ते कथितस्तार्क्ष्य विनाशः सर्व्वदेहिनाम् ॥ कथयामि पुनस्तेषां शरीरं च यथा भवेत् ॥ ९९ ॥ एकस्तम्भंस्नायुबद्धं स्थूणात्रयविभूषणम् ॥ इन्द्रियैश्च समायुक्तं नवद्वारं शरीरकम् ॥ ॥ १०० ॥ विषयैश्च समाक्रान्तं कामक्रोधसमाकुलम् ॥ रागद्वेषसमाकीर्णं तृष्णादुर्गमतस्करम् ॥ १०१ ॥ लोभजालपरिच्छिन्नं मोहवस्त्रेण वेष्टितम् ॥ सुबद्धं मायया चैतल्लोभेनाधिष्ठितं पुरम् ॥ १०२ ॥ एतद्गुणसमाकीर्णं शरीरं सर्व्वदेहिनाम् ॥ आत्मानं ये न जानन्ति ते नराः पशवः स्मृताः॥१०३॥ एवमेव समाख्यातं शरीरं ते चतुर्विधम् ॥ चतुरशीतिलक्षाणि निर्म्मिता योनयः पुरा ॥ १०४ ॥ उद्भिज्जाः स्वेदजाश्चैव अण्डजाश्च जरायुजाः ॥ एतत्ते सर्व्वमाख्यातं निरयस्य प्रपञ्चतः ॥ १०५ ॥ कथयामि क्रमप्राप्तं प्रष्टुं वा वर्त्तते स्पृहा ॥ १०६ ॥ इति श्रीगारुडे महापुराणे धर्मकाण्डे द्वितीयांशे प्रेतकल्पे श्रीकृष्णगरुडसंवादे नरकतत्प्रवेशनिर्गमनादिवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥ श्रीकृष्ण उवाच ॥ ज्ञानतोऽज्ञानतो वापि यन्नरैः कलुषं कृतम् ॥ तस्य पापस्य शुद्ध्यर्थं विधेया निष्कृतिर्नरैः ॥ १ ॥ भस्मादिस्नानदशकमादौ कुर्याद्विचक्षणः ॥ यथाशक्ति षडब्दादिप्रत्याम्नायाचरेदपि ॥ २ ॥ तदर्द्धं वा तदर्द्धं वा तदर्द्धार्द्धमथापि वा ॥ यथाशक्त्या ततः कुर्य्याद्दश दानानि वै शृणु ॥ ३ ॥ गोभूतिलहिरण्याज्यवासो धान्यगुडास्तथा ॥ रजतं लवणं चैव दानानि दश वै विदुः ॥ ४ ॥ प्रायश्चित्ते त्वागता ये तेभ्यो दद्यान्नरो दश ॥ ततो यमद्वारपथे पूयशोणितसंकुले ॥ ५ ॥ नदीं वैतरणीं तर्त्तुं दद्याद्वैतरणीं च गाम् ॥ कृष्णस्तनी सकृष्णाङ्गी सा वै वैतरणी स्मृता ॥ ६ ॥ तिला लोहं हिरण्यं च कर्पासं लवणं तथा ॥ सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ ७ ॥ एतान्यष्टौ महादानान्युत्तमाय द्विजातये ॥ आतुरेण तु देयानि पदरूपाणि मे शृणु ॥ ८ ॥ छत्रोपानहवस्त्राणि मुद्रिका च कमण्डलुः ॥ आसनं भाजनं भोज्यं पदं चाष्टविधं स्मृतम् ॥ ९ ॥ तिलपात्रं सर्पिःपात्रं शय्या सोपस्करा तथा ॥ एतत्सर्वं प्रदातव्यं यदिष्टं चात्मनोऽपि तत् ॥ १० ॥ अश्वो रथश्च महिषी व्यञ्जनं वस्त्रमेव च ॥ ब्राह्मणेभ्यः प्रदातव्यं ब्रह्मपूर्वमपि स्वयम् ॥ ११ ॥ दानान्यन्यान्यपि खग तर्पयेत्स्वीयशक्तितः ॥ प्रायश्चित्तं कृतं येन दश दानान्यपि क्षितौ ॥ १२ ॥ दानं गोवैतरण्याश्च दानान्यष्टौ तथापि वा ॥ तिलपात्रं सर्पिःपात्रं शय्यादानं तथैव च ॥ १३ ॥ पददानं च विधिवन्नासौ निरयगर्भगः ॥ स्वातन्त्र्येणापि लवणदानमिच्छन्ति सूरयः ॥ १४ ॥ विष्णुदेहसमुत्पन्नो यतोऽयं लवणो रसः ॥ आतुरस्य यदा प्राणा न यान्ति वसुधातले ॥ १५ ॥ लवणं च तदा देयं द्वारस्योद्घाटनं दिवः ॥ यानि

कानि च दानानि स्वयं दत्तानि मानवैः ॥ १६ ॥ तानितानि च सर्व्वाणि उपतिष्ठन्ति चाग्रतः ॥ प्रायश्चित्तं कृतं येन साङ्गं खग स वै पुमान् ॥१७॥
पापानि भस्मसात्कृत्वा स्वर्गलोके महीयते ॥ अमृतं तु गवां क्षीरं यतः पतगसत्तम ॥ १८ ॥ तस्माद्ददाति यो धेनुममृतत्वं स गच्छति ॥ दाना
न्यष्टौ तु दत्त्वा वै गन्धर्वानिलयं वसेत् ॥ १९ ॥ आलयस्तत्र रौद्रे हि दह्यते येन मानवः ॥ छत्रदानेन सुच्छाया जायते पथि सुखदा ॥ २० ॥
असिपत्रवनं घोरमतिक्रामति वै सुखम् ॥ अश्वारूढश्च व्रजति ददते यद्युपानहौ ॥ २१ ॥ भोजनासनदानेन सुखं मार्गे भुनक्ति वै ॥ प्रदेशे निर्जले
दाता सुखी स्याद्ध कमण्डलोः ॥ २२ ॥ यमदूता महारौद्राः करालाः कृष्णपिङ्गलाः ॥ न पीडयन्ति दाक्षिण्याद्वस्त्राभरणदानतः ॥ २३ ॥ तिलपात्रं
तु विप्राय दत्तं पत्रस्थ ध्रुवम ॥ नाशयेत्त्रिविधं पापं वाङ्मनः कायसम्भवम् ॥ २४ ॥ घृतपात्रप्रदानेन रुद्रलोके वसेन्नरः ॥ सर्व्वोपस्करसंयुक्तां शय्यां
दत्त्वा द्विजातये ॥ २५ ॥ नानाप्सरोभिराकीर्णं विमानमधिरोहति ॥ षष्टिवर्षसहस्राणि क्रीडित्वा शक्रमन्दिरे ॥ २६ ॥ इन्द्रलोकात्परिभ्रष्ट इह लोके
नृपो भवेत ॥ सर्व्वोपस्करणोपेतं युवानं दोषवर्ज्जितम ॥ २७ ॥ योऽश्वं ददाति विप्राय स्वर्गलोके च तिष्ठति ॥ यावन्ति रोमाणि हये भवन्ति हि खगे
श्वर ॥ २८ ॥ तावता राजितांल्लोकानाप्नुवन्ति हि पुष्कलान् ॥ चतुर्भिस्तुरगैर्युक्तं सर्व्वोपकरणैर्युतम् ॥ २९ ॥ रथं द्विजातये दत्त्वा राजसूयफलं
लभेत ॥ ३० ॥ दुग्धाधिकां च महिषीं नवमेघवर्णां सन्तुष्टतर्णकवतीं जघनाभिरामाम् ॥ दत्त्वा सुवर्णतिलकां द्विजपुङ्गवाय लोकोदयं स जयतीति
किमत्र चित्रम ॥ ३१ ॥ तालवृन्तस्य दानेन वायुना वीज्यते पथि ॥ कांतियुक् सुभगः श्रीमान् भवत्यम्बरदानतः ॥ ३२ ॥ रसान्नोपस्करयुतं गृहं
विप्राय योऽर्पयेत ॥ न हीयते तस्य वंशः स्वर्गं प्राप्नोत्यनुत्तमम ॥ ३३ ॥ भवत्यत्र खगश्रेष्ठ फलगौरवलाघवम् ॥ श्रद्धाश्रद्धाविभेदेन दानगौरवलाघ
वात् ॥ ३४ ॥ ततो यनाम्बुदानानि कृतान्यत्र रसास्तथा ॥ तदा खग तथाह्लादमापदि प्रतिपद्यते ॥ ३५ ॥ अन्नानि येन दत्तानि श्रद्धापूतेन चेतसा ॥
सोऽपि तृप्तिमवाप्नोति विनाप्यन्नेन वै तदा ॥ ३६ ॥ आसन्ने मरणे कुर्य्यात्संन्यासं चेद्विधानतः ॥ आवर्त्तेत पुनर्नासौ ब्रह्मभूयाय कल्पते ॥ ३७ ॥
आसन्नमरणो मर्त्यश्चेत्तीर्थे प्रतिनीयते ॥ तीर्थप्राप्तौ भवेन्मुक्तिर्म्रियते यदि मार्गगः ॥ पदेपदे क्रतुसमं भवेत्तस्य न संशयः ॥ ३८ ॥ गृह्णीयाच्चेदन
शनं व्रतं विधिवदागते ॥ मृत्यौ न सोऽपि संसारे भूयः पर्य्यटति द्विज ॥ ३९ ॥ किं दानमिति तुर्य्यस्य प्रश्नस्योत्तरमीरितम् ॥ दाहमृत्यो
रन्तरे किमितिप्रश्नोत्तरं शृणु ॥ ४० ॥ गतप्राणं ततो ज्ञात्वा स्नात्वा पुत्रादिराशु तम् ॥ शवं जलेन शुद्धेन क्षालयेदविचारयन् ॥ ४१ ॥
परिधाप्याहते वस्त्रे चन्दनैः प्रोक्षयेत्तनुम् ॥ ततो मृतस्य स्थाने वै एकोद्दिष्टं समाचरेत् ॥ ४२ ॥ प्रयोगपूर्व्वं दाहस्य योग्यतादिर्यथा भवेत् ॥

आसनं प्रोक्षणं च स्यान्न स्यादेतच्चतुष्टयम् ॥ ४३ ॥ आवाहनार्चनं चैव पात्रालम्भावगाहने ॥ भवेद्दानान्नसङ्कल्पः पिण्डदानं सदा भवेत् ॥ ४४ ॥ पदार्थपञ्चकं न स्याद्रेखा प्रत्यवनेजनम् ॥ दद्यादक्षय्यमुदकं न स्यादेतत्त्रयं पुनः ॥ ४५ ॥ स्वधावाचनमाशीश्च तिलकं च खगोत्तम ॥ घटं दद्यात्समाषान्नं दद्याल्लोहस्य दक्षिणाम ॥ ४६ ॥ पिण्डस्य चालनं प्रोक्तं नैव प्रोक्तमिदं त्रिकम् ॥ प्रच्छादनविसर्गौ च स्वस्तिवाचनकं तथा ॥ ४७ ॥ एषु षट्सु विधिः प्रोक्तः श्राद्धेषु मलिनेषु ते ॥ षडेव मरणस्थाने द्वारि चात्वार्के तथा ॥ ४८ ॥ विश्रामे काष्ठचयने तथा सञ्चयने खग ॥ मृतिस्थाने शवो नाम भूमिस्तुष्यति देवता ॥ ४९ ॥ पान्थो द्वारि भवेत्तेन प्रीता स्याद्वास्तुदेवता ॥ चत्वरे खेचरस्तेन तुष्येद्भूतादिदेवता ॥ ५० ॥ विश्रामे भूतसंज्ञोऽयं तुष्टास्तेन दिशो दश ॥ चितायां साधक इति सञ्चितौ प्रेत उच्यते ॥ ५१ ॥ तिलदर्भघृतेधांसि गृहीत्वा तु सुतादयः ॥ गाथां यमस्य सूक्तं वाप्यधीयाना व्रजन्ति हि ॥ ५२ ॥ अहरहर्नीयमाना गामश्वं पुरुषं वृषम् ॥ वैवस्वतो न तृप्येत सुरया त्विव दुर्म्मतिः ॥ ५३ ॥ इमां गाथामपेतेति सूक्तं वा पथि संपठत ॥ दक्षिणस्यां दिश्यग्रण्यं व्रजेयुः सर्व्वबान्धवाः ॥ ५४ ॥ पथि श्राद्धद्वयं कुर्य्यात्पूर्व्वोक्तविधिना खग ॥ ततः शनैर्भूतले वै दक्षिणाशिरसं शवम् ॥ ५५ ॥ स्थापयित्वा चिताभूमौ पूर्व्वोक्तं श्राद्धमाचरेत ॥ तृणकाष्ठतिलाज्यादि स्वयं निन्युः सुतादयः ॥ ५६ ॥ शूद्रानीतैः कृतं कर्म्म सर्व्वं भवति निष्फलम ॥ प्राचीनावीतिना भाव्यं दक्षिणाभिमुखेन च ॥ ५७ ॥ वेदी तत्र प्रकर्त्तव्या यथाशास्त्रमथाण्डज ॥ प्रेतवस्त्रं द्विधा कृत्वार्द्धेन तं छादयेत्ततः ॥ ५८ ॥ अर्द्धं श्मशानवासार्थं भूमावेव विनिःक्षिपेत् ॥ ततः पूर्व्वोक्तविधिना पिण्डं प्रेतकरे न्यसेत् ॥ ५९ ॥ आज्येनाभ्यञ्जनं कार्य्यं सर्व्वाङ्गेषु शवस्य च ॥ दाहमृत्योरन्तराले विधिः पिण्डस्य तं शृणु ॥ ६० ॥ पूर्व्वोक्तैः पञ्चभिः पिण्डैः शवस्याहुतियोग्यता ॥ अन्यथा चोपघाताच्च राक्षसाद्या भवन्ति हि ॥ ६१ ॥ संमृज्य चोपलिप्याथ उल्लिख्योद्धृत्य वेदिकाम् ॥ अभ्युक्ष्योपसमाधाय वह्निं तत्र विधानतः ॥ ६२ ॥ पुष्पाक्षतैश्च संपूज्य देवं क्रव्यादसंज्ञकम् ॥ श्रौतेन तु विधानेन ह्याहिताग्निं दहेद्बुधः ॥ ६३ ॥ चण्डालाग्निं चिताग्निं च पतिताग्निं परित्यजेत् ॥ त्वं भूतकृज्जगद्योनिस्त्वं लोकपरिपालकः ॥ ६४ ॥ उपसंहर तस्मात्त्वमेनं स्वर्गं नयामृतम् ॥ इति क्रव्यादमभ्यर्च्य शरीराहुतिमाचरेत् ॥ ६५ ॥ अर्द्धदग्धे तथा देहे दद्यादाज्याहुतिं ततः ॥ अस्मात्त्वमधिजातोऽसि त्वदयं जायतां पुनः ॥ ६६ ॥ असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा तु नामतः ॥ एवमाज्याहुतिं दत्त्वा तिलमिश्रां समन्त्रकम् ॥ ६७ ॥ रोदितव्यं ततो गाढमेवं तस्य सुखं भवेत् ॥ दाहस्यानन्तरं तत्र कृत्वा सञ्चयनक्रियाम् ॥ ६८ ॥ प्रेतपिण्डं प्रदद्याच्च दाहार्त्तिशमनं खग ॥ ततः प्रदक्षिणं कृत्वा चिताप्रस्थानवीक्षकाः ॥ ६९ ॥ कनिष्ठपूर्व्वाः स्नानार्थं गच्छेयुः सूत्कजा

पकाः ॥ ततो जलसमीपे तु गत्वा प्रक्षाल्य चांशुकम् ॥ ७० ॥ परिधाय पुनस्तच्च ब्रूयुस्तं पुरुषं प्रति ॥ उदकं तु करिष्यामः सचैलं पुरुषास्ततः ॥
॥ ७१ ॥ कुरुध्वमित्येव वदेच्छतवर्षावरे मृते ॥ पुत्राद्या वृद्धपूर्व्वास्ते एकवस्त्राः शिखां विना ॥ ७२ ॥ प्राचीनावीतिनः सर्व्वे विशेयुर्मौनिनो जलम् ॥
अपनःशोशुचदघमनेन पितृदिङ्मुखाः ॥ ७३ ॥ जलावघट्टनं चैव न कुर्य्युः स्नानकारकाः ॥ ततस्तटे समागत्य शिखां बद्ध्वा ऋजून् कुशान् ॥ ७४ ॥
दक्षिणाग्रहस्तयोस्तु कृत्वाथ सतिलं जलम् ॥ आदायाञ्जलिना याम्यां दुःखी पैतृकतीर्थतः ॥ ७५ ॥ एकवारं त्रिवारं वा दशवारमथापि वा ॥ भूमा
वश्मनि वा सर्व्वे क्षिपेयुर्वाग्यताः खग ॥ ७६ ॥ तृप्यन्तु तृप्यतां वापि तर्पयाम्युपतिष्ठताम् ॥ प्रेतैतदमुकगोत्रेत्युक्तेष्वेवं समुच्चरेत् ॥७७॥ जलाञ्जलौ
कृते पश्चाद्विधेयं दन्तधावनम् ॥ त्यजन्ति गोत्रिणः सर्व्वे दिनानि नव काश्यप ॥ ७८ ॥ तत उत्तीर्य्योदकार्द्रे वस्त्राणि परिधाय च ॥ स्नानवस्त्रं सकृ
त्पीडय विशेयुः शुचिभूतले ॥ ७९ ॥ अश्रुपातं न कुर्वीत दत्त्वा दाहजलाञ्जलिम् ॥ श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुंक्ते यतोऽवशः ॥ ८० ॥
अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः ॥ ततस्तेषूपविष्टेषु पुराणज्ञः सुकृत्स्वकः ॥ ८१ ॥ शोकापनोदं कुर्व्वीत संसारानित्यतां ब्रुवन् ॥
मानुष्ये कदलीस्तम्भे असारे सारमार्गणम् ॥ ८२ ॥ करोति यः स संमूढो जलबुद्बुदसन्निभे ॥ पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ॥ ८३ ॥
कर्म्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना ॥ गन्त्री वसुमती नाशमुदधिर्दैवतानि च ॥ ८४ ॥ फेनप्रख्यः कथं नाशं मर्त्त्यलोको न यास्यति ॥
एवं संश्रावयेत्तत्र मृदुशाद्वलसंस्थितान् ॥ ८५ ॥ तेऽपि संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ॥ विदश्य निंबपत्राणि नियता द्वारि वेश्मनः ॥ ८६ ॥
आचम्य वह्निसलिलं गोमयं गौरसर्षपान् ॥ दूर्व्वाप्रवालं वृषभमन्यदप्यथ मङ्गलम् ॥ ८७ ॥ प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः ॥ श्रौतेन
तु विधानेन आहिताग्निं दहेद्बुधः ॥ ८८ ॥ ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकं ततः ॥ योषित्पतिव्रता या स्याद्भर्त्तारं यानुगच्छति ॥ ८९ ॥ प्रयोग
पूर्व्वं भर्त्तारं नमस्कृत्यारुहेच्चितिम् ॥ चितिभ्रष्टा तु या मोहात्सा प्राजापत्यमाचरेत् ॥ ९० ॥ तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानुषे ॥
तावत्कालं वसेत्स्वर्गे भर्त्तारं यानुगच्छति ॥ ९१ ॥ व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् ॥ तद्वदुद्धृत्य सा नारी तेनैव सह मोदते ॥ ९२ ॥
तत्र सा भर्त्तृपरमा स्तूयमानाप्सरोगणैः ॥ क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्दश ॥ ९३ ॥ ब्रह्मघ्नो वा कृतघ्नो वा मित्रघ्नो वा भवेत्पतिः ॥
पुनात्यविधवा नारी तमादाय मृता तु या ॥ ९४ ॥ मृते भर्त्तरि या नारी समारोहेद्धुताशनम् ॥ सारुन्धतीसमाचारा स्वर्गलोके महीयते ॥ ९५ ॥
यावच्चाग्नौ मृते पत्यौ स्त्री नात्मानं प्रदाहयेत ॥ तावन्न मुच्यते सा हि स्त्रीशरीरात्कथञ्चन ॥ ९६ ॥ मातृकं पैतृकं चैव यत्र चैव प्रदीयते ॥

कुलत्रयं पुनात्येषा भर्तारं यानुगच्छति ॥ ९७ ॥ आर्त्तार्त्ते मुदिते हृष्टा प्रोषिते मलिना कृशा ॥ मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रता॥९८॥
पृथक् चितां समारुह्य न प्रिया गन्तुमर्हति ॥ क्षत्रियाद्याः सवर्णाश्च आरोहेयुरपीह ताः ॥ ९९ ॥ चाण्डालीमवधिं कृत्वा ब्राह्मणीतः समो विधिः ॥
अगर्भिणीनां सर्व्वासामबालताकमं (का) नामपि ॥१००॥ दहनस्य विधिः प्रोक्तः सामान्येन मया खग ॥ विशेषमपि तस्यास्य कश्चित्किं श्रोतुमिच्छ
ति ॥ १०१ ॥ गरुड उवाच ॥ प्रोषिते तु मृते स्वामिन्यस्थिनाशमुपेयुषि ॥ कथं दाहः प्रकर्त्तव्यस्तन्मे वद जगत्पते ॥१०२॥ श्रीकृष्ण उवाच ॥
अस्थीनि चेन्न लभ्यन्ते प्रोषितस्य नरस्य च ॥ तेषाञ्च हि गतिस्थानं विधानं कथयाम्यहम् ॥१०३॥ शृणु तार्क्ष्य परं गोप्यं पत्युर्दुर्म्मरणेषु यत् ॥
लंघनैर्ये मृता जीवा दंष्ट्रिभिश्चाभिघातिताः ॥ १०४ ॥ कण्ठग्रहे विलग्नानां क्षीणानां तुण्डघातिनाम् ॥ विषाग्निवृषविप्रेभ्यो विषूच्या चात्मघात
काः ॥ १०५ ॥ पतनोद्बन्धनजलैर्मृतानां शृणु संस्थितिम् ॥ सर्पव्याघ्रैः शृङ्गिभिश्च उपसर्गोपलोदकैः ॥ १०६ ॥ ब्राह्मणैः श्वापदैश्चैव पतनैर्वृक्षवै
द्युतैः ॥ नखैर्लोहैर्गिरेः पातैर्भित्तिपातैर्भृगोस्तथा ॥ १०७ ॥ खट्वायामन्तरिक्षे च चौरचाण्डालतस्तथा ॥ उदक्याशुनकीशूद्ररजकादिविभूषिताः
॥ १०८ ॥ ऊर्ध्वोच्छिष्टाधरोच्छिष्टोभयोच्छिष्टास्तु ये मृताः ॥ शस्त्रघातैर्मृता ये चास्यश्वस्पृष्टास्तथैव च ॥ १०९ ॥ तत्तु दुर्म्मरणं ज्ञेयं यच्च जातं
विधिं विना ॥ तेन पापेन नरकान् भुक्त्वा प्रेतत्वभागिनः ॥ ११० ॥ न तेषां कारयेद्दाहं सूतकं नोदकक्रियाम् ॥ न विधानं मृताद्यञ्च न कुर्य्यो
र्दौर्ध्वदैहिकम् ॥ १११ ॥ न पिण्डदानं कर्त्तव्यं प्रमादाच्चेत्करोति हि ॥ नोपतिष्ठति तत्सर्व्वमन्तरिक्षे विनश्यति ॥ ११२ ॥ अतस्तस्य
सुतैः पौत्रैः सपिण्डैः शुभमिच्छुभिः ॥ नारायणबलिः कार्य्यो लोकगर्हाभिया खग ॥ ११३ ॥ तथा तेषां भवेच्छौचं नान्यथेत्यब्रवीद्यमः ॥
कृते नारायणबलावौर्ध्वदेहिकयोग्यता ॥ ११४ ॥ तस्य शुद्धिकरं कर्म्म तद्भवेन्न तदन्यथा ॥ नारायणबलिं सम्यक् तीर्थे सर्व्वं प्रकल्पयेत् ॥११५॥
कृष्णाग्रे कारयेद्विप्रैर्येन पूतो भवेन्नरः ॥ पूर्व्वन्तु तर्पणं कार्य्यं विप्रैः पाराणवेदिकैः ॥ ११६ ॥ सर्व्वौषध्यक्षतैर्मिश्रैर्विष्णुमुद्दिश्य तर्पयेत् ॥ कार्य्यं
पुरुषसूक्तेन मंत्रैर्वा वैष्णवैरपि ॥ ११७ ॥ दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुमिति स्मरन् ॥ अनादिनिधनो देवः शङ्खचक्रगदाधरः ॥ ११८ ॥ अक्षयः
पुण्डरीकाक्षः प्रेतमोक्षप्रदो भव ॥ तर्पणस्यावसाने स्याद्वीतरागो विमत्सरः ॥ ११९ ॥ जितेन्द्रियमना भूत्वा शुचिष्मान्धर्म्मतत्परः ॥ भक्त्या तत्र
प्रकुर्व्वीत श्राद्धान्येकादशैव तु ॥ १२० ॥ सर्व्वकर्म्मविधानेन एकैकाग्रे समाहितः ॥ तोयव्रीहियवान्दद्याद्द्रोधूमांश्च प्रियङ्गवः ॥ १२१ ॥ हवि
ष्यान्नं शुभं मुद्रां छत्रोष्णीषे च दापयेत् ॥ दापयेत्सर्व्वसंस्यानि क्षीरं क्षौद्रसमान्वितम् ॥ १२२ ॥ वस्त्रोपानहसंयुक्तं दद्याद्दशविधं पदम् ॥

दापयेत्सर्व्वपापेभ्यो न कुर्य्यात्पङ्क्तिवञ्चनम् ॥१२३॥ भूमौ स्थितेषु पिंडेषु गन्धपुष्पाक्षतान्वितम् ॥ दातव्यं सर्वेविप्रेभ्यो वेदशास्त्रविधानतः ॥१२४॥
शङ्खे खड्गेऽथ वा ताम्रे तर्पणञ्च पृथक्पृथक् ॥ ध्यानधारणसंयुक्तो जानुभ्यामवनीं गतः ॥ १२५ ॥ ऋचा वै दापयेदर्घमघोंदिष्टं पृथक्पृथक् ॥ ब्रह्मा
विष्णुश्च रुद्रश्च यमः प्रेतश्च पञ्चमः ॥ १२६ ॥ पृथक्कुम्भे ततः स्थाप्याः पञ्चरत्नसमन्विताः ॥ वस्त्रयज्ञोपवीतानि पृथङ्मुद्राः पदानि च ॥ १२७ ॥
पञ्च श्राद्धानि कुर्व्वीत देवतानां यथाविधि ॥ जलधारां ततः कुर्यात्पिण्डेपिण्डे पृथक्पृथक् ॥ १२८ ॥ शंखे वा ताम्रपात्रे वा अलाभे मृन्मये
पि वा ॥ तिलोदकं समादाय सर्व्वौषधिमसन्वितम् ॥ १२९ ॥ ताम्रपात्रं तिलैः पूर्णं सहिरण्यं सदक्षिणम् ॥ दद्याद्ब्राह्मणमुख्याय पददानं तथैव ॥
॥१३० ॥ यमोद्देशे तिलाँल्लौहं ततो दद्याच्च दक्षिणाम् ॥ एवं विष्णुबलिं दत्त्वा यथाशक्त्या विधानतः ॥ १३१ ॥ समुद्धरति तत्क्षिप्रं नात्र कार्य्या विचारण
नागदंशान्मृतो यस्तु विशेषस्तन्तु मे शृणु ॥१३२॥ सुवर्णभारनिष्पन्नं नागं कृत्वा तथैव गाम् ॥ विप्राय दत्त्वा विधिवत्पितुरानृण्यमाप्नुयात् ॥१३३॥
एवं सर्पबलिं दत्त्वा सर्पदोषाद्विमुच्यते ॥ पश्चात्पुत्तलकं कार्य्यं सर्व्वौषधिसमन्वितम् ॥ १३४ ॥ पलाशस्य च वृंतानां विभागं शृणु काश्यप ॥
कृष्णाजिनं समास्तीर्य कुशैश्च पुरुषाकृतिम् ॥ १३५ ॥ शतत्रयेण षष्ट्या च वृन्तैः प्रोक्तोऽस्थिसञ्चयः ॥ विन्यस्य तानि वृन्तानि अङ्गेष्वेषु पृथक्
पृथक् ॥ १३६ ॥ चत्वारिंशच्छिरोभागे ग्रीवायां दश विन्यसेत ॥ विंशत्युरःस्थले दद्याद्विंशतिंजठरे तथा ॥ १३७ ॥ बाहुद्वये शतं दद्यात्कटिदेशे च
विंशतिम् ॥ ऊरुद्वये शतञ्चापि त्रिंशज्जंघाद्वये न्यसेत् ॥ १३८ ॥ दद्याच्चतुष्टयं शिश्ने षड् दद्याद्वृषणद्वये ॥ दश पादांगुलीभागे एवमस्थीनि
विन्यसेत् ॥१३९॥ नारिकेलं शिरःस्थाने तुम्बं दद्याच्च तालुके ॥ पञ्चरत्नं मुखे दद्याज्जिह्वायां कदलीफलम् ॥ १४० ॥ अन्त्रेषु नालिकं तद्याद्वालुकां
घ्राणेएव च ॥ वसायां मृत्तिकां दद्याद्धरितालमनःशिलाः ॥ १४१ ॥ पारदं रेतसः स्थाने पुरीषे पित्तलं तथा ॥ मनःशिला तथा गात्रे तिलपक्वन्तु
सन्धिषु ॥ १४२ ॥ यवपिष्टं तथा मांसे मधु शोणितमेव च ॥ केशेषु च जटाजूटं त्वचायाञ्च मृगत्वचम् ॥ २४३ ॥ कर्णयोस्तालपत्रञ्च स्तनयो
श्चैव गुञ्जिकाः ॥ नासायां शतपत्रञ्च कमलं नाभिमण्डले ॥ १४४ ॥ वृन्ताकं वृषणद्वंद्वे लिंगे स्याद्गृञ्जनं शुभम् ॥ घृतं नाभ्यां प्रदेयं स्यात्कौ
पीने च त्रपुस्मृतम् ॥ १४५ ॥ मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनम् ॥ कर्पूरागुरुधूपैश्च शुभैर्माल्यैः सुगन्धिभिः ॥ १४६ ॥ परिधानं पट्टसूत्रं
हृदये चैव विन्यसेत् ॥ ऋद्धिवृद्धी भुजौ द्वौ च चक्षुभ्यांञ्च कपर्दकम् ॥ १४७ ॥ दन्तेषु दाडिमीबीजान्यंगुलीषु च चम्पकम् ॥ सिन्दूरं नेत्रकोणे

१ पश्चादित्यादयः श्लोकाश्चत्वारिंशत्तमाध्यायेपि पठ्यन्ते। २ चोत्तममिति पा०।

च ताम्बूलाद्युपहारकम् ॥ १४८ ॥ सर्वौषधियुतं प्रेतं कृत्वा पूजां यथोदिताम् ॥ साग्निके चापि विधिना यज्ञपात्रं न्यस्येत्क्रमात् ॥ १४९ ॥
स्त्रियः पुनन्तु मे शिर इमं मे वरुणेन च ॥ प्रेतस्य पावनं कृत्वा शालग्रामशिलोदकैः ॥ १५० ॥ विष्णुमुद्दिश्य दातव्या सुशीला गौः पयस्विनी ॥
तिला लौहं हिरण्यञ्च कर्पासं लवणं तथा ॥ १५१ ॥ सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ तिलपात्रं ततो दद्यात्पददानं तथैव च ॥ १५२ ॥
कर्त्तव्यं वैष्णवं श्राद्धं प्रेतमुक्त्यर्थमात्मनः ॥ प्रेतमोक्षं ततः कुर्य्याद्धृदि विष्णुं प्रकल्प्य च ॥ १५३ ॥ एवं पुत्तलकं कृत्वा दाहयेद्विधिपूर्व्वकम् ॥ तच्छु
द्धये तु संस्कर्त्ता पुत्रादिर्निष्कृतिं चरेत् ॥ १५४ ॥ त्रीन्कृच्छ्रान्षड्द्वादश च तथा पञ्चदशापि च ॥ प्रायश्चित्तनिमित्तानुसारेण विप्रवत्स्मृतः ॥१५५॥
अशक्तौ गोहिरण्यादि प्रत्याम्नायं चरेदपि ॥ आत्मनोऽनधिकारित्वे शुद्धिमेवं चरेद्बुधः ॥ १५६ ॥ अशुद्धेन तु यद्दत्तमुद्दिश्याशुद्धिमेव च ॥ नोप
तिष्ठति तत्सर्व्वमन्तरिक्षे विनश्यति ॥ १५७ ॥ शुद्धिं सम्पाद्य कर्त्तव्यं दहनाद्यौर्ध्वदैहिकम् ॥ अकृत्वा निष्कृतिं यस्तु कुरुते दहनादिकम् ॥ १५८ ॥
मतिपूर्व्वममत्या च क्रमात्तन्निष्कृतिं शृणु ॥ कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं कथाम् ॥ १५९ ॥ रज्जुच्छेदाश्रुपातंच तप्तकृच्छ्रेण शुध्यति ॥
एषामन्यतमं प्रेतं यो वहेत्तु दहेत वा ॥ १६० ॥ कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ॥ निमित्ते लघुनि स्वल्पं महन्महति कल्पयेत् ॥
॥ १६१ ॥ गरुड उवाच ॥ कृच्छ्रस्य तप्तकृच्छ्रस्य तथा सान्तपनस्य च ॥ लक्षणं ब्रूहि मे स्वामिंस्त्रयाणामपि सुव्रत ॥ १६२ ॥ श्रीकृष्ण उवाच ॥
त्र्यहं प्रातस्त्र्यहं सायं त्र्यहमद्यादयाचितम् ॥ उपवासस्त्र्यहश्चैव एष कृच्छ्र उदाहृतः ॥ १६३ ॥ तप्तक्षीरघृताम्बूनामेकैकं प्रत्यहं पिबेत् ॥
एकरात्रोपवासश्च तप्तकृच्छ्र उदाहृतः ॥ १६४ ॥ गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥ जग्ध्वा परेऽह्न्युपवसेत्कृच्छ्रं सान्तपनं
चरन् ॥ १६५ ॥ मया तेऽयं समाख्यातो दुर्म्मृतस्य विधिः खग ॥ तदा मृतं विजानीयाद्दीपनिर्व्वाणमागतः ॥ १६६ ॥
अग्निदाहं ततः कुर्य्यात्सूतकञ्च दिनत्रयम् ॥ दशाहं गर्त्तपिण्डञ्च कर्त्तव्यं प्रेतपूर्व्वकम् ॥१६७॥ एवं विधिं ततः कुर्य्यात्ततः प्रेतश्च मुक्तिभाक् ॥ मृत
भ्रान्त्या प्रतिकृतेः कृते दाहे स वै यदि ॥ १६८ ॥ आयाति तेन कर्त्तव्यं मज्जनं घृतकुण्डके ॥ जातकर्म्मादिसंस्काराः कर्त्तव्याः पुनरेव तु ॥ १६९ ॥
ऊढामेव स्वकां भार्य्यामुद्वहेद्विधिवत्पुमान् ॥ वर्षे पञ्चदशे पक्षिन् द्वादशे वा गते सति ॥ १७० ॥ अज्ञातस्य प्रोषितस्य कृत्वा प्रतिकृतिं दहेत् ॥
रजस्वलासूतिकयोर्विशेषं मरणे शृणु ॥ १७१ ॥ सूतिकायां मृतायान्तु एवं कुर्व्वन्ति याज्ञिकाः ॥ कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥१७२॥
पुण्याभिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः ॥ शतशूर्पोदकेनादौ स्नापयित्वा यथाविधि ॥ १७३ ॥ तेनैव स्नापयित्वा तु दाहं कुर्य्यात्खगेश्वर ॥

पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम्॥ १७४॥वस्त्रान्तराकृतिं कृत्वा दाहयेद्विधिपूर्व्वकम्॥मृतस्य पञ्चके दाहविधिं वच्मि शृणुष्व मे ॥१७५॥
आदौ कृत्वा धनिष्ठार्द्धमेतन्नक्षत्रपञ्चकम् ॥ रेवत्यन्तं सदा दूष्यमशुभं सर्वदा भवेत् ॥ १७६ ॥ दाहस्तत्र न कर्त्तव्यो विषादः सर्व्वजन्तुषु ॥ न जलं
दीयते तेषु अशुभं सर्व्वदा भवेत ॥ १७७ ॥ पञ्चकानन्तरं सर्व्वं कार्य्यं कर्त्तव्यमन्यथा ॥ पुत्राणां गोत्रिणां तस्य सन्तापोऽप्युपजायते ॥ १७८ ॥
गृहे हानिर्भवत्येव ऋक्षेष्वेषु मृतस्य च ॥ अथ वा ऋक्षमध्ये च दाहस्तु विधिपूर्व्वकः ॥ १७९ ॥ क्रियते मानुषाणान्तु स वा आहुतिपूर्वकः॥ विप्रैर्वि
धिरतः कार्य्यो मन्त्रैस्तु विधिपूर्व्वकम् ॥ १८० ॥ शवस्थानसमीपे तु क्षेप्तव्याः पुत्तलास्ततः ॥ दर्भकृतास्तु चत्वार ऋक्षमन्त्राभिमन्त्रिताः ॥ १८१ ॥
ततो दाहः प्रकर्त्तव्यस्तैश्च पुत्तलकैः सह ॥ सूतकान्ते तदा पुत्रैः कार्य्यं शान्तिकपौष्टिकम् ॥ १८२ ॥ पञ्चकेषु मृतो योऽसौ न गतिं लभते नरः ॥
तिलान् गाञ्च सुवर्णञ्च तमुद्दिश्य घृतं ददेत्॥ १८३॥विप्राणां दापयेद्दानं सर्व्वविघ्नविनाशनम् ॥ भोजनोपानहौ च्छत्रं हेममुद्रा च वाससी ॥ १८४ ॥
दक्षिणा दीयते विप्रे पातकस्य प्रमोचनः ॥ प्रयातेऽयं समाख्यातो विधिः पञ्चहरः स्थितः ॥ संयमिन्यां यथायानं यथावर्षं मृतक्रिया ॥ १८५ ॥
इति श्रीगारुडे महापुराणे उत्तरखण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे दहनविधिकृच्छ्रलक्षणदग्धागमनरजस्वलामरणविधिपञ्चकमरणप्रायश्चित्तनिरूपणं
नाम चतुर्थोऽध्यायः ॥ ४ ॥ श्रीकृष्ण उवाच ॥ एवं दग्ध्वा नरं प्रेतं स्नात्वा कृत्वा तिलोदकम् ॥ अग्रतः स्त्रीजनो गच्छेद्व्रजेयुः पृष्ठतो नराः ॥ १ ॥
प्राशयेन्निम्बपत्राणि रुदन्तो नामपूर्व्वकम् ॥ विधातव्यं चाचमनं पाषाणोपरि संस्थिते ॥ २ ॥ ते प्रविश्य गृहं सर्वे सुताद्याश्च सपिण्डकाः ॥ भवेयुर्दश
रात्रं वै यत आशौचकं खग ॥ ३ ॥ क्रीतलब्धाशनाः सर्व्वे स्वपेयुस्ते पृथक्पृथक् ॥ अक्षारलवणान्नाः स्युर्निमज्जेयुश्च ते त्र्यहम् ॥ ४ ॥ अमांसभो
जनाश्चाधः शयीरन्ब्रह्मचारिणः ॥ परस्परं न संस्पृष्टा दानाध्ययनवर्जिताः ॥ ५ ॥ मलिनाश्चाधोमुखाश्च दीना भोगविवर्जिताः ॥ अङ्गसंवाहनं केश
मार्ज्जनं वर्ज्जयन्ति ते ॥६॥ मृन्मये पत्रजे वापि भुञ्जीरंस्ते च भाजने ॥ उपवासन्तु ते कुर्य्युरेकाहमथ वा त्र्यहम् ॥७॥ गरुड उवाच ॥ आशौचिन इति
प्रोक्तमाशौचस्य च वै प्रभो॥लक्षणं किं कियत्कालं भाव्यं वा तद्युतैर्नरैः ॥८॥श्रीकृष्ण उवाच॥अपनोद्यन्त्विदं कालादिभिराशु निषेधकृत् ॥ पिण्डाध्य
यनदानादेः पुंगतोऽतिशयो हि तत्॥९॥दशाहं शावमाशौचं सपिण्डेषु विधीयते॥ जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम्॥ १०॥जन्मन्येकोदकानान्तु
त्रिरात्राच्छुद्धिरिष्यते॥ शावस्य शेषाच्छुध्यन्ति त्र्यहादुदकदायिनः ॥११॥ आ दन्तजननात्सद्य आ चौलान्नैशिकी स्मृता ॥ त्रिरात्रमा व्रतादेशाद्दशरात्र

१ धनिष्ठोत्तरार्धमारभ्येत्यर्थः ।

मतः परम् ॥१२॥ आशौचं ते समाख्यातं संक्षेपात्प्रकृतं श्रृणु॥जलं त्रिदिवमाकाशे स्थाप्यं क्षीरञ्च मृन्मये ॥ १३ ॥ अत्र स्नाहि पिबात्रेति मन्त्रेणानेन काश्यप॥काष्ठत्रये गुणैर्बद्धे प्रीत्यै रात्रौ चतुष्पथे ॥१४॥ प्रथमेऽह्नि तृतीये वा सप्तमे नवमे तथा ॥ अस्थिसंचयनं कार्य्यं दिने तद्गोत्रजैः सह ॥१५॥ तदूर्ध्वमङ्गसंस्पर्शः सपिण्डानां विधीयते ॥ योग्याः सर्व्वक्रियाणां च समानसलिलास्तथा ॥ १६ ॥ प्रेतपिण्डं बहिर्दद्याद्दर्भमात्रविवर्जितम् ॥ प्रागुदीच्यां चरुं कृत्वा स्नात्वा प्रयतमानसः ॥ १७ ॥ भूमावसंस्कृतानां च संस्कृतानां कुशेषु च ॥ नवभिर्दिवसैः पिण्डान्नव दद्यात्समाहितः॥ १८ ॥ दशमं पिण्डमुत्सृज्य रात्रिशेषे शुचिर्भवेत् ॥ असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ॥ १९ ॥ प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥ शालिना सक्तुभिर्वापि शाकैर्वाप्यथ निर्व्वपेत् ॥ २० ॥ प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम् ॥ यावदाशौचमेकैकस्याञ्जलेर्दानमुच्यते ॥ २१ ॥ यद्वा यस्मिन्दिने दानं तस्मिंस्तद्दिनसंख्यया ॥ दशाहेऽञ्जलयः पक्षिन्पञ्चपञ्चाशदन्तिमे ॥ २२ ॥ द्विवृद्ध्या वा भवेत्पक्षिन्नञ्जलीनां शतं पुनः ॥ यदा हि त्र्यहमाशौचं तदा वाञ्जलयो दश ॥ २३ ॥ त्रयोऽञ्जलय एवं तु प्रथमेऽहनि वै तदा ॥ चत्वारस्तु द्वितीयेऽह्नि तृतीये स्युस्त्रयस्तथा ॥ २४ ॥ शताञ्जलि यदा पक्षिन्नाद्ये त्रिंशत्तदाहनि ॥ चत्वारिंशद्द्वितीयेऽह्नि त्रिंशदह्नि तृतीयके ॥ २५ ॥ एवं जलस्याञ्जलयो विभाज्याः पक्षयोर्द्वयोः ॥ सर्व्वेषु पितृकार्य्येषु पुत्रो मुख्योऽधिकारवान् ॥ २६ ॥ पिण्डप्रसेकस्तूष्णीञ्च पुष्पधूपादिकं तथा ॥ दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिश्चरेत् ॥ २७ ॥ तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च ॥ विप्रः शुध्यत्यपः स्पृष्ट्वा क्षत्रियो वाहनं तथा ॥ २८ ॥ वैश्यः प्रतोदं रश्मीन्वा शूद्रो यष्टिं कृत क्रियः ॥ मृतादल्पवयोभिश्च सपिण्डैः परिवापनम् ॥ २९ ॥ कार्य्यन्तु षोडशी षड्भिः पिण्डैर्दशभिरेव च ॥ प्रथमा मलिना ह्येतैरादशाहं मृतेर्भवेत् ॥ ३० ॥ दिनानि दश यान्पिण्डान्कुर्व्वन्त्यत्र सुतादयः ॥ प्रत्यहं ते विभज्यन्ते चतुर्भागैः खगोत्तम ॥ ३१ ॥ भागद्वयेन देहः स्यात्तृतीयेन यमानुगाः ॥ तृप्यन्ति हि चतुर्थेन स्वयमप्युपजीवति ॥ ३२ ॥ अहोरात्रैस्तु नवभिर्देहो निष्पत्तिमाप्नुयात् ॥ शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते तथा ॥ ३३ ॥ द्वितीयेन तु कर्णाक्षिनासिकं तु समासतः ॥ गलांसभुजवक्षश्च तृतीयेन तथा क्रमात् ॥ ३४ ॥ चतुर्थेन च पिण्डेन नाभिलिंगगुदं तथा ॥ जानुजंघं तथा पादौ पञ्चमेन तु सर्व्वदा ॥ ३५ ॥ सर्व्वमर्म्माणि षष्ठेन सप्तमेन तु नाडयः ॥ दन्तलोमान्यष्टमेन वीर्य्यन्तु नवमेन च ॥३६॥ दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्य्ययः ॥ मध्यमां षोडशीं वच्मि वैनतेय शृणुष्व मे ॥३७॥ विष्ण्वादिविष्णुपर्य्यन्तान्येकादश तथा खग ॥ श्राद्धानि पञ्च देवानामित्येषां मध्यषोडशी ॥ ३८ ॥ निमित्तं दुर्म्मतिं कृत्वा यदि नारायणो बलिः ॥ एकादशाहे कर्त्तव्यो वृषोत्सर्गोऽपि तत्र वै ॥ ३९ ॥

एकादशाहे प्रेतस्य यस्योत्सृज्येत नो वृषः ॥ प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ ४० ॥ अकृत्वा यद्वृषोत्सर्गं कृतं वै पिण्डपातनम् ॥ निष्फलं सकलं विद्यात्प्रमीताय न तद्भवेत् ॥ ४१ ॥ वृषोत्सर्गादृते नान्यत्किञ्चिदस्ति महीतले ॥ पुत्रः पत्न्यथ दौहित्रः पिता वा दुहिताथ वा ॥ ४२ ॥ मृतादनन्तरं तस्य ध्रुवं कार्य्यो वृषोत्सवः ॥ चतुर्वत्सतरीयुक्तो यस्योत्सृज्येत वा वृषः ॥ ४३ ॥ अलंकृतो विधानेन प्रेतत्वं तस्य नो भवेत् ॥ एकादशेऽह्नि सम्प्राप्ते वृषालाभो भवेद्यदि ॥ ४४ ॥ दर्भैः पिष्टैस्तु सम्पाद्य तं वृषं मोचयेद्बुधः ॥ वृषोत्सर्जनवेलायां वृषाभाव ( लाभ ): कथंचन ॥ ४५ ॥ मृत्तिकाभिस्तु दर्भैर्वा वृषं कृत्वा विमोचयेत ॥ यदिष्टं जीवतस्तस्य दद्यादेकादशेऽहनि ॥४६॥ मृतमुद्दिश्य दातव्यं शय्याधेन्वादिकं तथा ॥ विप्रान्बहून्भोजयीत प्रेतस्य क्षुद्विशान्तये ॥ ४७ ॥ तृतीयां षोडशीं वच्मि वैनतेय शृणुष्व ताम् ॥ द्वादश प्रतिमास्यानि आद्यं षाण्मासिकं तथा ॥ ४८ ॥ सपिण्डीकरणं चैव तृतीया षोडशी मता ॥ द्वादशाहे त्रिपक्षे च षण्मासे मासिकेऽब्दिके[1] ॥ ४९ ॥ तृतीयां षोडशीमेनां वदन्ति मतभेदतः ॥ यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश ॥ ५० ॥ पिशाचत्वं स्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ एकादशे द्वादशे वा दिने आद्यं प्रकीर्त्तितम् ॥ ५१ ॥ मासादौ प्रतिमासञ्च शुद्धं मृततिथौ खग ॥ एकेनाह्ना त्रिभिर्वापि हीनेषु विनतासुत ॥ ५२ ॥ मासषण्मासवर्षेषु त्रिपक्षेषु भवन्ति हि ॥ श्राद्धान्यथ स्यात्सापिण्ड्यं पूर्णे वर्षे तदर्द्धके ॥ ५३ ॥ त्रिपक्षेऽभ्युदये वापि द्वादशाहेऽथ वा नृणाम् ॥ आनन्त्यात्कुलधर्म्माणां पुंसाञ्चैवायुषः क्षयात् ॥ ५४ ॥ अस्थिरत्वाच्छरीरस्य द्वादशाहे प्रशस्यते ॥ सपिण्डीकरणेष्वेवं विधिं पक्षीन्द्र मे शृणु ॥ ५५ ॥ एकोद्दिष्टविधानेन कार्य्यं तदपि काश्यप ॥ तिलगन्धोदकैर्युक्तं कुर्य्यात्पात्रचतुष्टयम् ॥ ५६ ॥ पात्रं प्रेतस्य तत्रैकं पित्र्यं पात्रत्रयं तथा ॥ सेचयेत्पितृपात्रेषु प्रेतपात्रं खग त्रिषु ॥ ५७ ॥ चतुरो निर्व्वपेत्पिण्डान्पूर्व्वंतेषु समापयेत् ॥ ततःप्रभृति वै प्रेतः पितृसामान्यमश्नुते ॥ ५८ ॥ ततः पितृत्वमापन्ने तस्मिन्प्रेते खगेश्वर ॥ श्राद्धधर्म्मैरशेषैस्तु तत्पूर्व्वानर्च्चयेत्पितॄन् ॥ ५९ ॥ एकचित्यारोहणे च एकाह्नि मरणे तथा ॥ सापिण्ड्यन्तु स्त्रिया नास्ति मृते भर्त्तुः स्त्रियो भवेत् ॥ ६० ॥ पाकैक्यमथ कालैक्यं कर्त्रैक्यञ्च भवेत्खग ॥ श्राद्धादौ सह दाहे च पतिपत्न्योर्न संशयः ॥ ६१ ॥ भर्त्तुर्मृततिथेरन्यतिथौ चितिमथारुहेत् ॥ तां मृताहनि तु सम्प्राप्ते पृथक् पिण्डेन योजयेत् ॥ ६२ ॥ प्रत्यब्दञ्च नवश्राद्धं युगपत्तु समापयेत् ॥ ६३ ॥ यस्य संवत्सरादर्व्वाक् सपिण्डीकरणं भवेत् ॥ मासिकञ्चोदकुम्भञ्च देयं तस्यापि वत्सरम् ॥ ६४ ॥ नवश्राद्धं सपिण्डत्वं श्राद्धान्यापि च षोडश ॥ एकेनैव तु कार्य्याणि संविभक्तधनेष्वपि ॥ ६५ ॥

[1] आब्दिकेइत्यर्थः ।

पितामहीभिः सापिण्ड्यं तथा मातामहैः सह ॥ उक्तं भर्त्रापि सापिण्ड्यं स्त्रिया विषयभेदतः ॥ ६६ ॥ नवश्राद्धस्य ते कालं वक्ष्यामि शृणु काश्यप ॥
मरणाह्नि मृतिस्थाने श्राद्धं पक्षिन्प्रकल्पयेत् ॥ ६७ ॥ द्वितीयश्च ततो मार्गे विश्रामो यत्र कारितः ॥ ततः सञ्चयनस्थाने तृतीयं श्राद्धमुच्यते
॥६८॥पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा ॥ दशमैकादशे चैव नव श्राद्धानि वै खग ॥ ६९ ॥ श्राद्धानि नव चैतानि तृतीया षोडशी स्मृता ॥
एकोद्दिष्टविधानेन कार्य्याणि मनुजैस्तथा ॥ ७० ॥ प्रथमेऽह्नि तृतीये वा पञ्चमे सप्तमे तथा ॥ नवमैकादशे चैव नवश्राद्धं प्रकीर्त्तितम् ॥ ७१ ॥
उच्यन्ते षडिमानीह नव स्युरपि योगतः ॥ उक्तानि ते मया तानि ऋषीणां मतभेदतः ॥ ७२ ॥ रूढिपक्षो ममाभीष्टो योगः कैश्चिदिहेष्यते ॥
आद्ये द्वितीये दातव्यस्तथैवैकं पवित्रकम् ॥ ७३ ॥ प्रेताय पिण्डो दातव्यो भुक्तवत्सु द्विजातिषु ॥ प्रश्नस्तत्राभिरम्येति यजमानद्विजन्मना ॥ ७४ ॥
अक्षय्यममुकस्येति वक्तव्यं विरतौ तथा ॥ एकोद्दिष्टं मे निबोध चेत्थमावत्सरं स्मृतम् ॥ ७५ ॥ सपिण्डीकरणादूर्द्ध्वं यानि श्राद्धानि षोडश ॥
एकोद्दिष्टविधानेन चरेद्वा पार्व्वणाहृते ॥७६॥ प्रत्यब्दं यो यथा कुर्य्यात्तथा कुर्य्यात्स तान्यपि ॥ एकादशे द्वादशेऽह्नि प्रेतो भुङ्क्ते दिनद्वयम् ॥ ७७ ॥ योषि
तः पुरुषस्यापि पिण्डं प्रेतेति निर्व्वपेत् ॥ सापिण्ड्ये तु कृते तस्य प्रेतशब्दो निवर्त्तते ॥ ७८ ॥ दीपदानं प्रकर्त्तव्यमावर्षन्तु गृहाद्बहिः ॥ अन्नं दीपो जलं वस्त्र
मन्यद्वा दीयते च यत् ॥ ७९ ॥ तृप्तिदं प्रेतशब्देन सपिण्डीकरणावधि ॥ अब्दकृत्यं मयोक्तं ते समासाद्विनतासुत ॥ ८० ॥ वैवस्वतगृहे यानं यथा तच्च निबो
धमे ॥ त्रयोदशेऽह्नि श्रवणाकर्म्मणोनन्तरन्तु सः ॥ ८१ ॥ त्वग्गृहीताहिवत्तार्क्ष्य गृहीतो यमकिङ्करैः ॥ तस्मिन्मार्गे व्रजत्येको गृहीत इव मर्कटः ॥ ८२ ॥
वाय्वग्रसारिवद्रूपं देहमन्यत्प्रपद्यते ॥ तत्पिण्डजं पातनार्थमन्यत्तु पितृसम्भवम् ॥ ८३ ॥ तत्प्रमाणवयोऽवस्थासंस्थानां प्राग्भवो यथा ॥ षडशीति
सहस्राणि योजनानां प्रमाणतः ॥ ८४ ॥ अध्वान्तरालिको ज्ञेयो यममानुपलोकयोः ॥ साधिकार्द्धक्रोशयुतं योजनानां शतद्वयम् ॥ ८५ ॥ चत्वारिं
शत्तथा सप्त प्रत्यहं याति तत्र सः ॥ अष्टाचत्वारिंशता च त्रिंशता दिवसैरिति ॥८६॥ वैवस्वतपुरं याति कृष्यमाणो यमानुगैः ॥ एवं क्रमेण यातव्ये
मार्गे पापरतैस्तु यत् ॥ ८७ ॥ जायते सप्रपञ्चं तच्छृणु त्वमरुणानुज ॥ त्रयोदशदिने दत्तः पाशैर्बद्धातिदारुणैः ॥८८॥ यमस्यांकुशहस्तो वै भृकुटीकु
टिलाननः ॥ दण्डप्रहारसम्भ्रान्तः कृष्यते दक्षिणां दिशम् ॥ ८९ ॥ कुशकण्टकवल्मीकशंकुपाषाणकर्कशे ॥ तथा प्रदीप्तज्वलने क्वचिच्छ्वभ्रशतोत्कटे
॥ ९० ॥ प्रदीप्तादित्यतप्ते च दह्यमानः सदंशके ॥ कृष्यते यमदूतैश्च शिवावन्नादभीषणैः ॥ ९१ ॥ प्रयाति दारुणे मार्गे पापकर्म्मा यमालये ॥ कलेवरे
दह्यमाने महान्तं क्षयमृच्छति ॥ ९२ ॥ भक्ष्यमाणे तथैवाङ्गे भिद्यमाने च दारुणम् ॥ छिद्यमाने चिरतरं जन्तुर्दुःखमवाप्नुते ॥ ९३ ॥ स्वेन कर्म्मवि

पाकेन देहान्तरगतोऽपि सन् ॥ पुराणि षोडशामुष्मिन्मार्गे तानि च मे शृणु ॥ ९४ ॥ याम्यं सौरिपुरं नगेंद्रभवनं गन्धर्व्वशैलागमौ क्रौञ्चं क्रूरपुरं विचित्रभवनं बह्वापदं दुःखदम् ॥ नानाक्रन्दपुरं सुतप्तभवनं रौद्रं पयोवर्षणं शीताढ्यं बहुभीतिषोडशपुराण्येतान्यदृष्टानि ते ॥ ९५ ॥ तत्र याम्य पुरं गच्छन्पुत्रपुत्रेति च ब्रुवन् ॥ हाहेति क्रन्दते नित्यं स्वकृतं दुष्कृतं स्मरन् ॥ ९६ ॥ अष्टादशेऽदिने तार्क्ष्य तत्पुरं प्राप्नुयादसौ ॥ पुष्पभद्रा नदी यत्र न्यग्रोधः प्रियदर्शनः ॥ ९७ ॥ विश्रामेच्छां करोत्यत्र कारयन्ति न ते भटाः ॥ क्षितौ दत्तं सुतैस्तस्य स्नेहाद्वा कृपया तथा ॥ ९८ ॥ मासिकं पिण्डमश्नाति ततः सौरिपुरं व्रजेत् ॥ व्रजन्नेवं प्रलपते मुद्गराहतिपीडितः ॥ ९९ ॥ जलाशयो नैव कृतो मया तदा मनुष्यतृप्त्यै पशुपक्षितृप्तये ॥ गोतृप्तिहेतोर्न च गोचरः कृतः शरीर हे निस्तर यत्त्वया कृतम् ॥ १०० ॥ तत्र नाम्ना तु राजासौ जंगमः कामरूपधृक् ॥ भयात् तद्दर्शनाज्जाता भुंक्ते पिण्डं स शंकितः ॥ १०१ ॥ त्रिपक्षे जलसंयुक्तं क्षितौ दत्तं ततो व्रजेत् ॥ व्रजन्नेवं प्रलपते खड्गाघातप्रपीडितः ॥ १०२ ॥ न नित्यदानं न गवाह्निकं कृतं पुस्तं च दत्तं न हि वेदशास्त्रयोः ॥ पुराणदृष्टो न हि सेवितोऽध्वा शरीर हे निस्तर यत्त्वया कृतम् ॥ १०३ ॥ नगेन्द्रनगरं गत्वा भुक्त्वा चान्नं तथाविधम् ॥ मासि द्वितीये यद्दत्तं बान्धवैस्तु ततो व्रजेत् ॥ १०४ ॥ व्रजन्नेवं प्रलपते कृपाणत्सरुताडितः ॥ पराधीनमभूत्सर्वं मम मूर्खशिरोमणेः ॥ १०५ ॥ महता पुण्ययोगेन मानुष्यं लब्धवानहम् ॥ तृतीये मासि सम्प्राप्ते गन्धर्वनगरे शुभम् ॥ १०६ ॥ तृतीयमासिकं पिण्डं तत्र भुक्त्वा व्रजत्यसौ ॥ व्रजन्नेवं विलपते तदग्रेणाहतः पथि ॥ १०७ ॥ मया न दत्तं न हुतं हुताशने तपो न तप्तं हिमशैलगह्वरे ॥ न सेवितं गांगमहो महाजलं शरीर हे निस्तर यत्त्वया कृतम् ॥ १०८ ॥ तुर्य्ये शैलागमं मासि प्राप्नुयात्तत्र वर्षणम् ॥ तस्योपरि भवेत्पक्षिन्पाषाणानां निरन्तरम् ॥ १०९ ॥ चतुर्थमासिकं श्राद्धं भुक्त्वा तत्र प्रसर्पति ॥ स पतन्नेव विलपन्पाषाणाघातपीडितः ॥ ११० ॥ न ज्ञानमार्गो न च योगमार्गो न कर्म्ममार्गो न च भक्तिमार्गः ॥ न साधुसङ्गात्किमपि श्रुतं मया शरीर हे निस्तर यत्त्वया कृतम् ॥ १११ ॥ ततः क्रूरपुरं मासि पञ्चमे याति काश्यप ॥ भुवि दत्तं पिण्डजलं भुक्त्वा क्रूरपुरं व्रजेत् ॥ ११२ ॥ व्रजन्नेवं विलपते पट्टिशैः पातितः पथि ॥ हा मातर्हा पितर्भ्रातः सुता हा हा मम स्त्रियः ॥ ११३ ॥ युष्माभिर्नोपदिष्टोऽहमवस्थां प्राप्त ईदृशीम् ॥ एवं लालप्यमानं तं समवृता वदन्ति

१ स्वेन्द्रभवनं० पा० । २ वरेन्द्रभवनं०पा०। दक्षिणात्यास्तु सौम्यं सौरिपुरमित्युपक्रम्य शीताढ्यंबहुभीतिधर्म्मभवनं याम्यं पुरश्चाग्रतः० पा० आहुः । ३ एते श्लोकाः पञ्चमे ध्यायेपि पठ्यन्ते ।

हि ॥ ११४ ॥ क माता क पिता मूढ क जाया क सुतः सुहृत् ॥ स्वकर्म्मोपार्जितं भुंक्ष्व मूर्ख यातश्चिरं पथि ॥११५॥ जानासि शम्बलमलं बल मध्वगानां नोऽशम्बलः प्रयतते परलोकगत्यै ॥ गन्तव्यमस्ति तव निश्चितमेव तेन मार्गेण येन न भवेत् क्रयविक्रयोऽपि ॥ ११६ ॥ ऊनषाण्मासिके क्रौञ्चे भुक्त्वा पिण्डन्तु सोदकम् ॥ घटीमात्रन्तु विश्रम्य विचित्रनगरं व्रजेत ॥ ११७ ॥ व्रजन्नेवं विलपते शूलाग्रेण विदारितः ॥ ११८ ॥ कुत्र यामि न हि गामि जीवितं हा मृतस्य मरणं पुनर्न वै ॥ इत्थमेव विलपन् प्रयात्यसौ यातनार्हधृतविग्रहः पथि ॥ ११९ ॥ विचित्रनगरे तत्र विचित्रो नाम पार्थिवः ॥ तत्र षण्मासपिण्डेन तृप्तः सन् व्रजते पुरः ॥१२०॥ व्रजन्नेवं विलपते प्रासाग्रेण प्रपीडितः ॥१२१॥ माता भ्राता पिता पुत्रः कोऽपि मे वर्त्तते न वा ॥ यो मामुद्धरते पापं पतन्तं दुःखसागरे ॥१२२॥ व्रजतस्तत्र मार्गे तु तत्र वैतरणी शुभा ॥ शतयोजनविस्तीर्णा पूयशोणितसंकुला ॥ १२३ ॥ आयाति तत्र दृश्यन्ते नाविका धीवरादयः ॥ ते वदन्ति प्रदत्ता गौर्यदि वैतरणी त्वया ॥ नावमेनां समारोह सुखेनोत्तर वै नदीम् ॥ १२४ ॥ तत्र येन प्रदत्ता गौः स सुखेनैव तां तरेत् ॥ अदायी तत्र घृष्येत करग्राहन्तु नाविकैः ॥ १२५ ॥ उरवैः काकैर्बकोलूकैस्तीक्ष्णतुण्डैर्वितुद्यते ॥ मनुजानां हितं दानमन्ते वैतरणी खग ॥ १२६ ॥ दत्ता पापं दहेत् सर्व्वं मम लोकन्तु सा नयेत् ॥ सप्तमे मासि सम्प्राप्ते पुरं बह्वापदं मृतः ॥१२७॥ व्रजेत्तु सोदकं भुक्त्वा पिण्डं वै सप्तमासिकम् ॥ व्रजन्नेवं विलपते परिघाहतिपीडितः ॥ १२८ ॥ न दत्तं न हुतं तप्तं न स्नातं न कृतं हितम् ॥ यादृशं चरितं कर्म्म मूढात्मन् भुंक्ष्व तादृशम् ॥ १२९ ॥ मास्यष्टमे दुःखदे तु परे भुक्त्वाथ सोदकम् ॥ पिण्डं प्रयात्यसौ तार्क्ष्य नानाक्रन्दपुरं ततः ॥ १३० ॥ प्रयाणे च प्रवदते मुसलाघातपीडितः ॥ क जायाचटुलैश्चाटुपटुभिर्वचनैर्मम ॥ १३१ ॥ भोजनं भल्लभल्लीभिर्मुसलैश्च क मारणम् ॥ नवमे मासि दत्तं वै नानाक्रन्दपुरे ततः ॥ १३२ ॥ पिण्डमश्नाति करुणं नानाक्रन्दान् करोत्यपि ॥ दशमे मासि दत्तं वै सुतप्तभवनं ततः ॥ १३३ ॥ सरन्नेवं विलपते हलाहतिहतः पथि ॥ क सूनुपेशलकरैः पादसंवाहनं मम ॥ १३४ ॥ क दूतवज्रप्रतिमकरैर्मत्पदकर्षणम् ॥ दशमे मासि पिण्डादि तत्र भुक्त्वा प्रसर्पति ॥ १३५ ॥ मासे चैकादशे पूर्णे पुरं रौद्रं स गच्छति ॥ गच्छन्नेवं विलपते यथा पृष्ठे प्रपीडितः ॥ १३६ ॥ क्वाहं सतूलीशयने परिवर्त्तन् क्षणे क्षणे ॥ भटहस्तभ्रष्टयष्टिकृष्टपृष्ठः क वा पुनः ॥१३७॥ क्षितौ दत्तञ्च पिण्डादि भुक्त्वा तत्र ततो व्रजेत् ॥ पयोवर्षणमित्येतन्नामकं पुरमण्डज ॥१३८॥ व्रजन्नेवं विलपते कुठारैर्मूर्ध्नि ताडितः ॥ क भृत्यकोमलकरैर्गन्धतैलावसेचनम् ॥ १३९ ॥ क कीनाशानुगैः क्रोधात्कुठारैः शिरसि व्यथा ॥ ऊनाब्दिकञ्च यच्छ्राद्धं तत्र भुंक्ते सुदुःखितः ॥ १४० ॥ संपूर्णे तु ततो वर्षे शीताढ्यं नगरं व्रजेत् ॥ गच्छन्नेवं छुरिकया छिन्नजिह्वस्तु रोदिति ॥ १४१ ॥

प्रियालापैः क्व च रसमधुरत्वस्य वर्णनम् ॥ उक्तमात्रेऽसिपत्रादिजिह्वाच्छेदः क्व चैव हि ॥ १४२ ॥ वार्षिकं पिण्डदानादि भुक्त्वा तत्र प्रसर्पति ॥
बहुभीतिकरं तत्तत् पिण्डजं देहमास्थितः ॥ १४३ ॥ प्रकाशयति पाप्पानमात्मानञ्च विनिन्दति ॥ योषिदप्येवमेतस्मिन् मार्गे वै परिदेवति ॥१४४॥
ततो याम्यं नातिदूरे नगरं स हि गच्छति ॥ चत्वारिंशद्योजनानि चतुर्युक्तानिविस्तृतम् ॥ १४५ ॥ त्रयोदश प्रतीहाराः श्रवणा नाम तत्र वै ॥
श्रवणाकर्म्मतस्तुष्यन्त्यन्यथा क्रोधमाप्नुयुः ॥ १४६ ॥ ततस्तत्राशु रक्ताक्षं भिन्नाञ्जनचयोपमम् ॥ मृत्युकालान्तकादीनां मध्ये पश्यति वै यमम् ॥
॥ १४७ ॥ दंष्ट्राकरालवदनं भृकुटीदारुणाकृतिम् ॥ विरूपैर्भीषणैर्वक्त्रैर्वृतं व्याधिशतैः प्रभुम् ॥ १४८ ॥ दण्डासक्तमहाबाहुं पाशहस्तं सुभैरवम् ॥
तन्निर्दिष्टां ततो जन्तुर्गतिं याति शुभाशुभाम् ॥ १४९ ॥ पापी पापां गतिं याति यथा ते कथितं पुरा ॥ छत्रोपानहदातारो ये च वेश्मप्रदायकाः
॥ १५० ॥ ये तु पुण्यकृतस्तत्र ते पश्यन्ति यमं तदा ॥ सौम्याकृतिं कुण्डलिनं मौलिमन्तं धृतश्रियम् ॥ १५१ ॥ एकादशे द्वादशे हि षण्मासे
आब्दिके तथा ॥ विप्रान् बहून् भोजयेत तत्र यन्महती क्षुधा ॥ १५२ ॥ जीवन् पुत्रकलत्रादिप्रदिष्टमितरैः खग ॥ यो न साधयति स्वार्थमेवं पश्चाद्वि
खिद्यते ॥ १५३ ॥ एतत् ते सर्व्वमाख्यातं संयमिन्यां यथागति ॥ प्रोक्तमावर्षकृत्यं ते किमन्यच्छ्रोतुमिच्छसि ॥१५४॥ इति श्रीगारुडे महापुराणे
उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे वर्षकृत्ययमलोकमार्गयातनादिनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥ गरुड
उवाच ॥ अपि साधनयुक्तस्य तीर्थदानरतस्य च ॥ अकृते तु वृषोत्सर्गे परलोकगतिर्न हि ॥ १ ॥ तस्मात् कृष्ण वृषोत्सर्गः कर्त्तव्य इति मे श्रुतम् ॥
किं फलं वृषयज्ञस्य पुरा केन कृतो हरे ॥२॥ अनड्वान् कीदृशः प्रोक्तः कस्मिन् काले विशेषतः ॥ को विधिस्तस्य निर्द्दिष्टः सर्व्वं मे कृपया वद ॥३॥
श्रीकृष्ण उवाच ॥ इतिहासं महापुण्यं प्रवक्ष्यामि खगेश्वर ॥ ब्रह्मपुत्रेण यत् प्रोक्तं राजानं वीरवाहनम् ॥ ४ ॥ विराधनगरे राजा वीरवाहननामकः ॥
धर्म्मात्मा सत्यसन्धश्च वदान्यो विप्रतुष्टिकृत् ॥ ५ ॥ स कदाचिद्वनं वीरो महात्माखेटकं गतः ॥ किञ्चित् प्रष्टुमनास्तार्क्ष्य वसिष्ठस्याश्रमं ययौ ॥६॥
नमस्कृत्य मुनिं तत्र कृतासनपरिग्रहः ॥ प्रश्रयावनतो राजा पप्रच्छ ऋषिसंसदि ॥ ७ ॥ राजोवाच ॥ मुने मया कृतो धर्म्मो यथाशक्ति प्रयत्नतः ॥
यमस्य शासनं श्रुत्वा बिभेमि नितरां हृदि ॥ ८ ॥ यमञ्च यमदूतांश्च निरयान् घोरदर्शनान् ॥ न पश्यामि महाभाग तथा वद दयानिधे ॥ ९ ॥
वसिष्ठ उवाच ॥ धर्म्मा बहुविधा राजन् वर्ण्यन्ते शास्त्रकोविदैः ॥ सूक्ष्मत्वान्न विजानन्ति कर्ममार्गविमोहिताः ॥ १० ॥ दानं तीर्थं तपो यज्ञाः

१ एतदध्यायोक्ता विषयाः पञ्चदशेऽध्यायेपि वक्ष्यन्ते ।

संन्यासः पैतृको महः ॥ धर्म्मेषु गृह्यमाणेषु वृषोत्सर्गो विशेषितः ॥ ११ ॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत् ॥ १२ ॥ ब्रह्महत्यादिपापानि ज्ञानाज्ञानकृतानि च ॥ नीलोद्वाहेन शुध्येत्तु समुद्रप्लवनेन वा ॥ १३ ॥ एकादशाहे राजेन्द्र यस्य नो त्सृज्यते वृषः ॥ प्रेतत्वं निश्चलं तस्य कृतैः श्राद्धैस्तु किं भवेत् ॥ १४ ॥ यथाकथञ्चित् कर्त्तव्यस्तीर्थे वा पत्तनेऽथ वा ॥ वृषयज्ञैः प्रमुच्येत नान्यथा साधनैः खग ॥ १५ ॥ वृषभं पञ्चकल्याणं युवानं कृष्णकंबलम् ॥ गोयूथमध्ये नितरां विचरन्तं विधानतः ॥ १६ ॥ चतसृभिर्वत्सकाभिर्द्वाभ्या श्चैकया खग ॥ विवाह्य मङ्गलद्रव्यैर्मन्त्रवत्तं समुत्सृजेत् ॥ १७ ॥ इह रतीति षड्ऋग्भिर्होमं कुर्य्याद्विभावसोः ॥ कार्तिक्यां माघवैशाख्यां संक्रमे पातपर्व्वसु ॥ १८ ॥ तीर्थे पित्र्येक्षयाहे च विशेषेण प्रशस्यते ॥ लोहितो यस्तु वर्णेन मुखे पुच्छे च पाण्डुरः ॥ १९ ॥ पीतः खुरविषाणेषु स नीलो वृष उच्यते ॥ श्वेतवर्णो भवेद्विप्रो लोहितः क्षत्त्र उच्यते ॥ २० ॥ पीतवर्णो भवेद्वैश्यः शूद्रः कृष्णः स्मृतो बुधैः ॥ यथावर्णं समुद्दिष्टो वर्णेषु ब्राह्मणादिषु ॥ २१ ॥ अथ वा रक्तवर्णस्तु सर्व्वेषामेव शस्यते ॥ पिता पितामहश्चैव तथैव प्रपितामहः ॥ २२ ॥ आशासते सुतं जातं वृषोत्सर्गं करिष्यति ॥ धर्म्मस्त्वं वृषरूपेण जगदानन्ददायकः ॥ २३ ॥ अष्टमूर्त्तेरधिष्ठानमतः शान्तिं प्रयच्छ मे ॥ गङ्गायमुनयोः पेयमन्तर्व्वेदि तृणं चर ॥ २४ ॥ धर्म्मराजस्य पुरतो वाच्यं मे सुकृतं वृष ॥ दक्षिणांसे त्रिशूलाङ्कं वामोरौ चक्रचिह्नितम् ॥ २५ ॥ इति संप्रार्थ्य वृषभं गन्धपुष्पाक्षतादिभिः॥ वृषं वत्सतरीयुक्तं पूजयित्वा समुत्सृजेत् ॥ २६ ॥ तस्माद्राजन् विधानेन वृषोत्सर्गं समाचर ॥ बहुसाधनयुक्तस्य नान्यथा सद्गतिस्तव ॥ २७ ॥ आसीत्त्रेतायुगे पूर्व्वं विदेहनगरे नृप ॥ ब्राह्मणो धर्म्मवत्सेति स्वकर्म्मनिरतः सुधीः ॥ २८ ॥ विष्णुभक्तोऽतितेजस्वी यथालाभेन तुष्टिकृत् ॥ पितृपर्व्वणि संप्राप्ते कुशार्थी काननं ययौ ॥ २९ ॥ अटन्नितस्ततस्तत्र चिन्वन् कुशपलाशकम् ॥ सहसोपेत्य पुरुषाश्चत्वारश्चारुदर्शनाः ॥ ३० ॥ विभ्रान्तमनसं गृह्य प्रयग्जग्मुर्विहायसा ॥ बहुवृक्षसमाकीर्णं गिरिदुर्गभयानकम् ॥ ३१ ॥ वनाद्वनान्तरं निन्युर्नदीनदसमाकुलम् ॥ स तत्र नगरं राजन् ददर्श बहुविस्तरम् ॥ ३२ ॥ गोपुरद्वाररचितं सौधप्रासादमण्डितम् ॥ चत्वरापणपण्यादिनरनारीसमाकुलम् ॥ ३३ ॥ तूर्य्यद्वन्द्वाभिनिर्घोषवीणापटहनादितम् ॥ कांश्चित्क्षुधार्द्दितान्दीनान्मलिनान्विगतौजसः ॥ ३४ ॥ ततोऽतितुष्टान्मलिनान्वस्त्रखण्डसमावृतान् ॥ अग्रतो हृष्टपुष्टांश्च स्वर्णवस्त्रोपशोभितान् ॥ ३५ ॥ ततोऽपि सुरसंकाशान्स दृष्ट्वा विस्मितोऽभवत् ॥ किं स्वप्न उत माया वै मदीयो मानसो भ्रमः ॥ ३६ ॥ सन्दिहानं द्विजं निन्युः पुरुषा राजसन्निधिम् ॥ सतदर्श विप्रस्तु स्वर्णप्रासादमन्दिरे ॥ ३७ ॥ सिंहासनंमहादिव्यं छत्रचामरवीजितम् ॥ तत्रोप

विष्टं राजानं किरीटकनकोज्ज्वलम् ॥ ३८ ॥ महत्या च श्रिया युक्तं स्तूयमानं सुवन्दिभिः ॥ राजापि दृष्ट्वा तं विप्रं प्रत्युत्थाय कृताञ्जलिः ॥ ३९ ॥ पूजयामास विधिवन्मधुपर्कासनादिभिः ॥ सन्तुष्टमनसं देवमस्तौषीत्परया मुदा ॥ ४० ॥ अद्य मे सफलं जन्म पावितञ्च कुलं प्रभो ॥ विष्णुभक्तस्य धर्म्मस्य यत्ते दृग्गोचरं गतः ॥ ४१ ॥ नत्वा स्तुत्वा बहुविधमुवाचानुवसन्नृपः ॥ यतः समागतो देवः पुनस्तत्रैव नीयताम् ॥ ४२ ॥ इति श्रुत्वा वचो राज्ञः पप्रच्छ द्विजपुङ्गवः ॥ ब्राह्मण उवाच ॥ कोऽयं देशः कुतो लोका उत्तमा मध्यमाधमाः ॥ ४३ ॥ केन पुण्येन तु भवान्पारमेष्ठ्यविभूषितः ॥ किमर्थमहमानीतः पुनस्तत्रैव नीयते ॥ ४४ ॥ अपूर्व्वमिव पश्यामि सर्व्वं स्वप्नगतो यथा ॥ राजोवाच ॥ स्वधर्म्मनिरतो यस्तु हरिभक्तिरतः सदा ॥ ४५ ॥ विरक्त इन्द्रियार्थेभ्यः स मे पूज्यो न संशयः ॥ तीर्थयात्रापरो नित्यं वृषोत्सर्गविशेषवित् ॥ ४६ ॥ सत्यदानपरो यस्तु स नमस्यो दिवौकसाम् ॥ दर्शनार्थमिहानीतः पूजार्हश्च परन्तप ॥ ४७ ॥ अनुगृहाण मां देव क्षमस्व मम साहसम् ॥ इत्युक्त्वा दर्शयामास मन्त्रिणां संज्ञया भ्रुवः ॥ ४८ ॥ वदिष्यति समग्रं ते स्वयं वक्तुं न साम्प्रतम् ॥ सामन्तः सर्व्ववेदज्ञो ज्ञात्वा हार्दं नृपस्य च ॥ ४९ ॥ विपश्चिदुवाच ॥ पूर्व्वजन्मनि वैश्योऽयं विश्वम्भर इति श्रुतः ॥ विराधनगरे विप्र द्विजदेवविभूषिते ॥ ५० ॥ वैश्यवृत्त्या सदा जीवन्कुटुम्बपरिपालकः ॥ गवां शुश्रूषको नित्यं ब्राह्मणानाञ्च पूजकः ॥ ५१ ॥ पात्रदानपरो नित्यमातिथेयोऽग्निसेवकः ॥ गार्हस्थ्यं विधिवच्चक्रे भार्य्यया सत्यमेधया ॥ ५२ ॥ स्मार्त्तेन लोकानजयच्छ्रौतेन न हविर्भुजः ॥ कदाचिद्बन्धुभिः सार्कं कृत्वा तीर्थानि भूरिशः ॥ ५३ ॥ यावदायाति सदनं दृष्टवाँल्लोमशं पथि ॥ दण्डवत्प्राणिपत्याशु कृताञ्जलिपुटं स्थितम् ॥ ५४ ॥ पप्रच्छ विनयोपेतं करुणावारिवारिधिः ॥ ऋषिरुवाच ॥ कुत आगम्यते साधो ब्राह्मणैर्बन्धुभिर्युतः ॥ ५५ ॥ दृष्ट्वा त्वां धर्मनिलयं प्राक्लिन्नं मानसं मम ॥ विश्वम्भर उवाच ॥ शीर्य्यमाणं शरीरं हि ज्ञात्वा मृत्युं पुरःस्थितम् ॥ ५६ ॥ भार्य्यया धर्म्मचारिण्या तीर्थयात्रां विनिर्गतः ॥ कृत्वा तीर्थानि विधिवद्विश्राण्य विपुलं वसु ॥ ५७ ॥ यावद्व्रजाम्यहं वेश्म भवान् दृष्टिपथं गतः ॥ लोमश उवाच ॥ तीर्थानि सन्ति भूरीणि वर्षेऽस्मिन् भारते शुभे ॥ ५८ ॥ यत्त्वया ह्युपचीर्णानि तानि सर्व्वाणि मे वद ॥ वैश्य उवाच ॥ गङ्गा च सूर्य्यतनया महापुण्या सरस्वती ॥ ५९ ॥ दशाश्वमेधैरयजद्यत्र ब्रह्मा सुरेश्वरः ॥ तीर्थराजस्ततः काशी महादेवो दयानिधिः ॥ ६० ॥ मृतानां यत्र जन्तूनां कर्णे जपति तारकम् ॥ पुलहस्याश्रमं पुण्यं फल्गुतीर्थञ्च गण्डकी ॥ ६१ ॥ चक्रतीर्थं नैमिषञ्च शिवतीर्थमनन्तकम् ॥ गोप्रतारकनागेशमयोध्याबिन्दुसंज्ञितम् ॥ ६२ ॥ यत्रास्ते मुक्तिदः साक्षाद्रामो राजीवलोचनः ॥ आग्नेयं वायुकौबेरं कौमारं भूरुहां पुनः ॥ ६३ ॥ सौकरं मथुरा यत्र

नित्यं सन्निहितो हरिः ॥ पुष्करं सत्यतीर्थञ्च ज्वालातीर्थं दिनेश्वरम् ॥ ६४ ॥ इन्द्रतीर्थं कुरुक्षेत्रं यत्र प्राची सरस्वती ॥ तापी पयोष्णी निर्विन्ध्या मलयः कृष्णवेणिका ॥ ६५ ॥ गोदावरी दण्डकञ्च ताम्रचूडं सदोदकम् ॥ द्यावाभूमीश्वरं दृष्ट्वा श्रीशैलः पर्व्वतेश्वरः ॥ ६६ ॥ असंख्यलिङ्गतीर्थानि यत्र सन्ति सदा मुने ॥ वेङ्कटाद्रौ महातेजाः श्रीरङ्गाख्यः स्वयं हरिः ॥ ६७ ॥ वेङ्कटी नाम तत्रैव देवी महिषमर्द्दिनी ॥ चन्द्रतीर्थं भद्रवटः कावेरी कुटिलाचलौ ॥ ६८ ॥ अवटोदा ताम्रपर्णी त्रिकूटः कोल्लको गिरिः ॥ वासिष्ठं ब्रह्मतीर्थञ्च ज्ञानतीर्थं महोदधिः ॥ ६९ ॥ हृषीकेशं विराजञ्च विशालं नीलपर्व्वतः ॥ भीमकूटः श्वेतगिरी रुद्रतीर्थमुमावनम् ॥ ७० ॥ अवाप गिरिजा देवी तपसा यत्र शङ्करम् ॥ वारुणं सूर्य्यतीर्थञ्च हंसतीर्थं महोदयम् ॥ ७१ ॥ निमज्य यत्र काकोला राजहंसत्वमाययुः ॥ असुरो यत्र देवत्वमवाप स्नानमात्रतः ॥ ७२ ॥ विश्वरूपं नन्दितीर्थं रत्नेशः कुहकाचलः ॥ नरनारायणं दृष्ट्वा मुच्यते पापकोटिभिः ॥ ७३ ॥ सरस्वतीदृषद्वत्यौ नर्म्मदा शर्म्मदा नृणाम् ॥ नीलकण्ठं महाकालं पुण्यं चामरकण्टकम् ॥ ७४ ॥ चन्द्रभागा वेत्रवती वीरभद्रं गणेश्वरम् ॥ गोकर्णं बिल्वतीर्थञ्च कर्म्मकुण्डं सतारकम् ॥ ७५ ॥ स्नानमात्रेण यत्राशु मुच्यते कर्म्मबन्धनात् ॥ अन्यान्यपि च तीर्थानि कृतानि कृपया तव ॥ ७६ ॥ उत्पद्यते शुभा बुद्धिः साधूनां यदनुग्रहः ॥ एकतः सर्व्वतीर्थानि करुणाः साधवोऽन्यतः ॥ ७७ ॥ अनुग्रहाय भूतानां चरन्ति चरितव्रताः ॥ त्वं गुरुः सर्व्ववर्णानां विद्यया वयसाधिकः ॥ ७८ ॥ अतः पृच्छाम्यहं किञ्चिदाधिभूतं चिरन्तनम् ॥ किं कुर्य्यां कं नु पृच्छेऽहं मनो मेऽतिचलं मुने ॥ ७९ ॥ निःस्पृहं ब्रह्मविषये विषयेष्वतिलालसम् ॥ मनागपि न सहते विरहं तिमिरं ब्रुवत् ॥ ८० ॥ मोहितं विविधैर्भावैः कर्म्मणां क्षेत्रमुत्तमम् ॥ शान्तिं यथा समायाति सम्पन्नमिव भूसुर ॥ ८१ ॥ विवेकप्रवणं शुद्धं यथा स्यात्कृपया वद ॥ ऋषिरुवाच ॥ मनस्तु प्रबलं नित्यं सविकारं स्वभावतः ॥ ८२ ॥ वशं नयन्ति करिणं प्रमत्तमपि हस्तिपाः ॥ तथापि साधुसङ्गत्या साधनैरप्यतन्द्रितः ॥ ८३ ॥ तीव्रेण भक्तियोगेन विचारेण वशं नयेत् ॥ इतिहासं प्रवक्ष्यामि तव प्रत्ययकारकम् ॥ ८४ ॥ नारदोऽकथयन्मह्यं स्ववृत्तगतजन्मनः ॥ नारद उवाच ॥ कस्यचिद्द्विजमुख्यस्य दासीपुत्त्रः पुरा मुने ॥ ८५ ॥ शिक्षितो बालभावेऽपि पाठितो नितरामहम् ॥ तत्रापि सङ्गतिर्जाता महतां पुण्यकर्म्मणाम् ॥ ८६ ॥ प्रावृट्काले मम गृहे स्थितानां भाग्ययोगतः ॥ शुश्रूषणानुवृत्त्या च प्रश्रयेण दमेन च ॥ ८७ ॥ सन्तोषं परमं प्राप्य कृपया त्विदमब्रुवन् ॥ मनीषा निर्म्मला येन जाता मम शुभार्थिनी ॥ ८८ ॥ यया विष्णुमयं सर्व्वमात्मन्येव ददृशिवान् ॥ मुनय ऊचुः ॥ शृणु वत्स प्रवक्ष्यामो हिताय तव बालक ॥ ८९ ॥ येन वै ध्रियमाणेन इहामुत्र सुखं भवेत् ॥ देवतिर्य्यङ्मनुष्याश्च संसारे विविधा जनाः ॥ ९० ॥ निबद्धाः कर्म्मप

शैस्ते भुञ्जन् भोगान् पृथग्विधान् ॥ देवत्वं याति सत्त्वेन रजसा च मनुष्यताम् ॥ ९१ ॥ तिर्य्यक्त्वं तमसा जन्तुर्वासनानुगतोऽबुधः ॥ मातुर्लब्ध्वा पुनर्जन्म म्रियते च पुनःपुनः ॥ ९२ ॥ एवं गत्वा ह्यसंख्याता योनीस्ताः कर्म्मभूरपि ॥ मानुष्यं दुर्लभं लब्ध्वा कदाचिद्दैवयोगतः ॥ ९३ ॥ अनुग्रहेण महतां हरिं ज्ञात्वा विमुच्यते ॥ रोगग्राहं मोहजालमपारं भवसागरम् ॥ ९४ ॥ न पश्यामि तितीर्षोरन्यद् रामस्मरणं विना ॥ नवनीतं यथा दध्नो ज्योतिः काष्ठादपि क्वचित् ॥ ९५ ॥ मन्थनैः साधनैरेवं परं ज्ञात्वा सुखी भवेत् ॥ आत्मा नित्योऽव्ययः सत्यः सर्व्वगः सर्व्वभृन्महान् ॥ ९६ ॥ अप्रमेयः स्वयंज्योतिरग्राह्यो मनसापि यः ॥ सच्चिदानन्दरूपोऽसौ सर्व्वप्राणिहृदि स्थितः ॥ ९७ ॥ विनश्यत्स्वपि भावेषु न विनश्यति कर्हिचित् ॥ आकाशः सर्व्वभूतेषु स्थितस्तेजोजले तथा ॥ ९८ ॥ आत्मा सर्व्वत्र निर्लेपः पार्थिवेषु यथानिलः ॥ भक्तानुकम्पी भगवान् साधूनां रक्षणाय च ॥ ९९ ॥ आविर्भवति लोकेषुगुणीवाङ्गैः प्रतीयते ॥ एवंविवेकत्वया यो बुद्ध्या संशीलयेद्धृदि ॥ १०० ॥ भक्तियोगेन सन्तुष्ट आत्मानं दर्शयेदजः ॥ ततः कृतार्थो भवति सदा सर्व्वत्र निःस्पृहः ॥ १०१ ॥ अतोऽहङ्कारमुत्सृज्य सानुबन्धे कलेवरे ॥ चरेदसंगो लोकेषु स्वप्नप्रायेषु निर्म्ममः ॥ १०२ ॥ क्व स्वप्ने नियतं धैर्य्यमिन्द्रजाले क्व सत्यता ॥ क्व नित्यता शरन्मेघे क्व वा सत्यं कलेवरे ॥१०३॥ अविद्याकर्म्मजनितं दृश्यमानं चराचरम् ॥ ज्ञात्वाचारवशी योगी ततः सिद्धिमवाप्स्यसि ॥ १०४ ॥ इत्युक्त्वा ते गताः सर्व्वे साधवो दीनवत्सलाः ॥ सोऽहं तदुक्तमार्गेण तथैवाचरमन्वहम् ॥ १०५ ॥ ततोऽचिरेणात्मनीदं दृष्टवानहमद्भुतम् ॥ ज्योतिर्म्मयं सदानन्दं शरच्छीतांशुनिर्म्मलम् ॥ १०६ ॥ निषिच्य सुखसन्दोहैर्मां कृत्वाधिकसस्पृहम् ॥ अन्तर्हितं महत्तेजो यथा सौदामिनी दिवि ॥ १०७ ॥ भक्त्या तदेव मनसि भावयन्नहमद्भुतम् ॥ काले कलेवरं त्यक्त्वा गतवान् हरिमव्ययम् ॥ १०८ ॥ तस्येच्छया पुनर्ब्रह्मन् ब्रह्मणो मेऽभवज्जनिः ॥ अनुग्रहाद्भगवतास्त्रिषु लोकेषु निःस्पृहः ॥ १०९ ॥ आपीडयन् मुहुर्वीणां गायमानश्चराम्यहम् ॥ इत्युक्त्वा मे स्वानुभवं ययौ यादृच्छिको मुनिः ॥ ११० ॥ ममापि परमाश्चर्य्यं सन्तोषश्च महानभूत् ॥ अतस्ते साधुसङ्गत्या भक्त्या च परमात्मनः ॥ १११ ॥ विशुद्धं निर्म्मलं शान्तं मनो निर्वृतिमेष्यति ॥ अनेकजन्मजनितं पातकं साधुसंगमे ॥ ११२ ॥ क्षिप्रं नश्यति धर्म्मज्ञ जलानां शरदो यथा ॥ वैश्य उवाच ॥ पीत्वा ते वाक्यपीयूषं स्वान्तं मे शान्तिमागमत् ॥ ११३ ॥ सर्व्वतीर्थफलं मेऽद्य सञ्जातं तव दर्शनात् ॥ इति श्रुत्वा वचस्तस्य प्रोवाच ऋषिसत्तमः ॥ ११४ ॥ लोमश उवाच ॥ हिताय तव राजेन्द्र त्रिवर्गफलमिच्छतः ॥ यत्त्वया सुकृतं भूरि वृषोत्सर्गं विना कृतम् ॥११५॥ मन्येऽकिञ्चत्करं सर्व्वं नीहारसलिलं यथा ॥ वृषोत्सर्गसमं किंचित् साधनं न महीतले ॥११६॥ अनायासेन गच्छ

न्ति गतिं ते पुण्यकर्मणाम् ॥ वृषोत्सर्गः कृतो येन अश्वमेधस्य याजकः॥११७॥उभौ समौ मया दृष्टौ दिव्यौ तौ शक्रसन्निधौ ॥ अतस्त्वं पुष्करं गत्वा
वृषोत्सर्गं विधाय च ॥ ११८ ॥ ततो याहि गृहं साधो येन सर्व्वं कृतं भवेत् ॥ विपश्चिदुवाच ॥ ततः स पुनरागत्य कार्त्तिक्यां पुष्करे वरे ॥ ११९ ॥
वराहरूपी भगवान् यत्रास्ते यज्ञपूरकः ॥ चकार विधिवत् सर्व्वं यदुक्तमृषिसत्तमैः ॥ १२० ॥ गतानि बहुतीर्थानि ततो लोमशसंगतिः ॥ ततोऽ
धिकतरं जातं पुण्यं नीलविवाहजम् ॥ १२१ ॥ स भुक्त्वा विषयान् दिव्यान् विमानवरमाश्रितः ॥ तेन राजकुले जन्म वीरसेनस्य धर्म्मतः ॥ १२२ ॥
वीरपंचाननाख्यातश्चतुर्वर्गैकसाधकम् ॥ प्रकुर्व्वतो वृषोत्सर्गं तत्र ये परिचारकाः ॥ १२३ ॥ दिव्यरूपाऽभवन् स्पृष्टा गोपुच्छोदकशीकरैः ॥ सुरूपाः
पुष्टवपुषः पश्यन्तो दूरसंस्थिताः ॥ १२४ ॥ ततो दूरतरा ये च दृश्यन्ते मलिना जनाः ॥ दुर्भगा मलिना रूक्षाः कृशा विगतवाससः ॥ १२५ ॥
वृषयज्ञमपश्यन्तो ये चासूयां प्रकुर्व्वते ॥ सर्व्वं निवेदितं राज्ञश्चरितं पूर्वजन्मनः ॥ १२६ ॥ धर्म्यं विचित्रमाख्यानं श्रुतं मे यत् पराशरात् ॥ अत
स्त्वं स्वगृहं गच्छ कृपां कृत्वा ममोपरि ॥ १२७ ॥ श्रुत्वा विपश्चिद्वाक्यं स विस्मयं परमं गतः ॥ गृहं जगाम विप्रोऽसौ प्रापितो राजसेवकैः ॥१२८॥
वसिष्ठ उवाच ॥ तस्माद्राजन् वृषोत्सर्गं वरिष्ठं सर्व्वकर्मणाम् ॥ समाचर विधानेन यदि भीतो यमादपि ॥ १२९ ॥ वृषोत्सर्गसमं किंचित् साधनं न
दिवः परम् ॥ मया धर्म्मरहस्यं ते कथितं राजसत्तम ॥ १३० ॥ पतिपुत्रवती नारी भर्त्तुरग्रे मृता यदि ॥ वृषोत्सर्गं न कुर्व्वीत गां दद्याच्च पयस्विः
नीम् ॥ १३१ ॥ श्रीकृष्ण उवाच ॥ श्रुत्वा वाक्यं वसिष्ठस्य राजा मधुपुरीं गतः ॥ चकार विधिवत् सर्व्वं वृषोत्सर्गमहं खग ॥ १३२ ॥ गृहं गत्वा स
आत्मानं कृतकृत्यममन्यत ॥ कालेन निधनं प्राप्तो नीतो वैवस्वतानुगैः ॥ १३३ ॥ स कालनगरं हित्वा गतो दूरतरं पथि ॥ श्राद्धदेवपुरं कुत्रेत्येवं
दूतानपृच्छत ॥ १३४ ॥ पापिनो यत्र पात्यन्ते याम्यै पापविशुद्धये ॥ यत्र देवः स धर्म्मात्मा धर्म्माधर्म्मविचेतनः ॥ १३५ ॥ गतं पापपुरं
तत्तु न द्रष्टव्यं भवादृशैः ॥ अग्रे दृष्ट्वा धर्म्मराजमूचुस्ते परमादरात् ॥ १३६ ॥ दिव्यरूपस्तदा देवो देवगन्धर्वसंयुतः ॥ आत्मानं दर्शया
मास तस्य राज्ञो महात्मनः ॥ १३७ ॥ प्रणम्य दण्डवद्राजा कृतांजलिः पुरः स्थितः॥ तुष्टाव बहुधा देवं हर्षपूरितमानसः ॥ १३८ ॥
धर्म्मराजोऽपि राजानं प्रशस्येदमुवाच ह ॥ नीयतां देवलोकाय यत्र भोगाः सुपुष्कलाः ॥ १३९ ॥ तद्वीरवाहनः श्रुत्वा पप्रच्छ
समवर्त्तिनम् ॥ न जाने केन पुण्येन स्वर्गं नयसि मां विभो ॥ १४० ॥ धर्मराज उवाच ॥ त्वया कृतानि पुण्यानि दानं यज्ञाः सविस्तराः ॥
मथुरायां वृषोत्सर्गो वसिष्ठवचनात् किल ॥ १४१ ॥ धर्म्मः स्वल्पोऽपि नृपते यदि सम्यगुपासितः ॥ द्विजदेवप्रसादेन स याति बहुविस्तरम् ॥१४२॥

इत्युक्त्वा यमुनाभ्राता क्षणादन्तर्द्धिमाययौ ॥ वीरबाहुर्दिवं गत्वा देवैः सह मुमोद ह ॥१४३॥ श्रीकृष्ण उवाच ॥ मया ते कथितं पक्षिन् वृषयज्ञः सुविस्तरः ॥ प्राणिनां कर्म्मनिर्हारं श्रुत्वा पापैः प्रमुच्यते ॥१४४॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वि० ध० प्रेतकल्पे श्रीकृष्णगरुडसंवादे वृषोत्सर्गमाहात्म्यनिरूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥ गरुड उवाच ॥ श्रुतं मे महादाख्यानं वृषोत्सर्गफलं हरे ॥ पुनरन्यां कथां ब्रूहि यत्र ते महिमाद्भुतः ॥ १ ॥ श्रीकृष्ण उवाच ॥ अहं ते कथयाम्यद्य संवादं परमाद्भुतम् ॥ सन्ततकस्य च प्रेतैस्तद्रूपज्ञापनाय वै ॥ २ ॥ विप्रः सन्तप्तकः कश्चित् तपसा दग्धकिल्बिषः ॥ संसारासारतां ज्ञात्वारण्येष्वेव चचार ह ॥ ३ ॥ वैखानसमुनिव्रातैः प्रणिपातकृतेक्षणः ॥ स कदाचित् तीर्थयात्रामुद्दिश्य स्माटति द्विजः ॥ ४ ॥ प्रत्याकृष्टेन्द्रियत्वाच्च बहिर्वृत्तिनिरोधकः ॥ संस्कारमात्रगमनो मार्गभ्रष्टो बभूव ह ॥ ५ ॥ चलन्नेवं स्नानकाले मध्याह्नेऽथाभिलाषुकः ॥ जलस्योन्मील्य नयने दिशः सर्व्वा न्यभीलयत् ॥ ६ ॥ स ददर्श तदा गुल्मैर्वीरुद्वृक्षशतैश्चितम् ॥ त्वक्सारैः शाखिशाखाभिः संकुलं गहनं वनम् ॥ ७ ॥ तत्र तालास्तमालाश्च प्रियालाः पनसास्तथा ॥ श्रीपर्णी शालशाखोटस्यन्दनास्तिन्दुकास्तथा ॥ ८ ॥ सर्ज्जार्ज्जुनाम्रातकाश्च श्लेष्मातकाभिभीतकौ ॥ पिचुमर्दाश्चिञ्चिणी च कर्कन्धूकर्णिकारकाः ॥ ९ ॥ एते चान्ये च बहवो वृक्षास्तेषु न दृश्यते ॥ पक्षिणामपि वै पन्था मनुष्यस्य कुतः पुनः ॥ १० ॥ तस्मिन् वने महाघोरे सिंहव्याघ्रसमाकुले ॥ तरक्षुगवयैर्ऋक्षैर्महिषैश्च निषेविते ॥ ११ ॥ कुञ्जरैरुरुभिर्नागैर्मर्कटैश्च तथा मृगैः ॥ श्वापदैश्च तथा चान्यैः पिशाचै राक्षसैर्वृते ॥ १२ ॥ सन्तप्तको द्विजः किञ्चिद्भयसन्त्रस्तमानसः ॥ कान्दिशीकः समभवद् यद्भविष्यो ययौ पुनः ॥१३॥ झंकारेषु च झिल्लीनां घूकानां घूत्कृतेष्वपि ॥ दत्तकर्णः कुनीलांगश्चचाल पदपञ्चकम् ॥ १४ ॥ स तत्र वटवृक्षाग्रे स्नायुबद्धं शवं तथा ॥ ददर्श तद्भुजश्चैव पंच प्रेतान् सुदारुणाम् ॥ १५ ॥ शिरास्थिचर्म्मशेषांगान् पृष्ठलग्नोदरान् खग ॥ त्यक्तान्नासिकया नेत्रकूपपातभयादिव ॥ १६ ॥ सूर्च्चीककचकव्रातघातपातितकीकसान् ॥ वसाक्तनवमास्तिष्कस्वादनित्यमहोत्सवान् ॥ १७ ॥ रणत्कोटिमहादंष्ट्रानस्थिग्रन्थ्यवघट्टितान् ॥ तान् दृष्ट्वा त्रस्तहृदयो गतिमाकुंच्य संस्थितः ॥ १८ ॥ ते विलोक्यागतं विप्रमटवीं जनवर्जिताम् ॥ अहं पूर्व्वमहं पूर्व्वं यामीत्युक्त्वा प्रदुद्रुवुः ॥ १९ ॥ तेषु द्वौ द्वावगृह्णीतामस्य हस्तावथापरे ॥ द्वौ द्वौ पादावगृह्णीतां मूर्द्धानं पञ्चमोऽग्रहीत् ॥ २० ॥ स्वजात्युचितवाक्येन स्फुटवर्णवता ब्रुवन् ॥ अहं जक्षाम्यहं भक्षामीति कर्षणतत्पराः ॥ २१ ॥ सहसैव सहैवामुं गृहीत्वा व्यगमन्वियत् ॥ कियत्स्थितं वटौ मांसं क्रियन्नेति

१ इदमाख्यानमन्येऽपि प्रकारान्तरेण० ।

न्यभालयन् ॥ २२ ॥ तेऽपश्यन्निजदंष्ट्रायःपाटितान्त्रमिमं शवम् ॥ अवतीर्य्य ततो व्योम्नो गृहीत्वा चरणैः शवम् ॥ २३ ॥ स्वखण्डितशरी
रन्तु पुनर्व्योमैव चक्रमुः ॥ स नीयमानमात्मानं विलोक्य वियति द्विजः ॥ २४ ॥ जगाम मनसा मां स शरणं भयविह्वलः ॥ नमश्चक्रे
चक्रधरं चेतसा चिन्मयं समम् ॥ २५ ॥ वक्रं नक्रं चक्रपातेन दूरे कृत्वा हत्वा तस्य दुःखं मुकुन्दः ॥ मातङ्गं योऽमूमुचन्नक्रवक्त्रात्पाशं
सोऽसौ कर्म्मणां मे लुनातु ॥ २६ ॥ रुद्धाञ्शुद्धान् भूपतीन्मागधेन भीमेनैनं घातयित्वा मुरारिः ॥ निर्बद्धान्यो भर्गयज्ञाय मुक्त
श्चक्रो मेऽसौ कर्म्मपाशं लुनातु ॥ २७ ॥ मनसैवेह मामस्तौत्स्तूयमानोऽहमुत्थितः ॥ अगच्छं सहसा तत्र यत्र प्रेतैः स नीयते ॥ २८ ॥ दृष्ट्वा तैर्नी
यमानन्तु कौतुकं मेऽभवत्खग ॥ पप्रच्छ न कियन्तं वै कालं तान्पृष्ठतोऽन्वगाम् ॥ २९ ॥ मम सन्निधिमात्रेण द्विजार्तिं तञ्च सर्पहन् ॥ तत्कालं
शिबिकासुप्तभूपालसुखमाविशत् ॥ ३० ॥ मणिभद्रस्ततो मेरुं गच्छन्दृष्टो मया पथि ॥ निकोच्याक्षि स्वपार्श्वे स नीतो वै यक्षराण्मया ॥ ३१ ॥
तमवोचं महायक्षं त्वं हि प्रतिभटो भव ॥ प्रेतान्नाशय तद्भूयः शवञ्च हर तद्गतम् ॥ ३२ ॥ इत्युक्तः स महाघोरं कृत्वा रोषं सुदुःसहम् ॥ जग्राह
प्रेतरूपं तत्प्रेतानामपि दुःखदम् ॥ ३३ ॥ स विवृत्य स्वकौ बाहू सृक्किणी परिलेलिहन् ॥ भेदयन्नुरुवातेन प्रेतांस्तान्सम्मुखो ययौ ॥३४॥ बाहुभ्यां
द्वौ द्वौ च पद्भ्यां मूर्ध्नैकं च समाहरत् ॥ प्रेतानथापि सहसा जघान दृढमुष्टिना ॥ ३५ ॥ ते विवर्णमुखाः सर्व्वे तं द्विजञ्च शवं तथा ॥ एकैकं
हस्तपादैश्च गृहीत्वा युद्धमारभन् ॥ ३६ ॥ ते नखैस्तलघातैश्च पादघातैस्तथैव च ॥ दंष्ट्राघातैश्च सर्वे तमेकं प्रेतं व्यदारयन् ॥ ३७ ॥ तेषां प्रहारा
न्निष्फलान्कृत्वा संप्रति तानथ ॥ जीवं न तु शवं तेषां जह्रे प्राणमिवान्तकः ॥ ३८ ॥ हृतमात्रे शवे ते तु पारियात्रे गिरौ द्विजम् ॥ मुक्त्वाऽधावन्
प्रहर्त्तुं एकं प्रेतं सुदारुणाः ॥ ३९ ॥ स वायुगमनः प्रेतः प्राप्तस्तैः क्षणमात्रतः ॥ अदृश्यतां ययौ तेऽथ हताशा विप्रमागमन् ॥ ४० ॥ प्रारब्धमात्रे
विप्रस्य पाटने तत्र पर्व्वते ॥ मम स्थानस्य विप्रस्य महिम्नैव च तत्क्षणे ॥४१॥ सद्यः स्मृतिः समुत्पन्ना तेषां पूर्व्वस्य जन्मनः ॥ विप्रं प्रदक्षिणीकृत्य
द्विजर्षभमथाब्रुवन् ॥४२॥ अद्य नः क्षन्तुमर्होऽसीत्युक्त्वा ते सुरदाम्भिकाः ॥ गिरेरिव परावर्तं समुद्रस्येव शोषणम् ॥४३॥तेषां तद्वचनं श्रुत्वाऽपृच्छत्के
यूयमित्यथ ॥ किं माया किमु वा स्वप्न उताहो चित्तविभ्रमः ॥ ४४ ॥ प्रेता ऊचुः ॥ अवेहि तत्त्वमेवैतत्प्रेता वै कर्म्मजा वयम् ॥ ब्राह्मण उवाच ॥
किंनामानः किमाचाराः कथञ्चेमां दशां गताः ॥ ४५ ॥ अविनीताः कथं पूर्वं विनीताः साम्प्रतं कथम् ॥ प्रेता ऊचुः ॥ शृणु विप्रेन्द्र वक्ष्यामः
प्रश्नानामनुपूर्व्वशः ॥ ४६ ॥ उत्तराणि महायोगिंस्त्वद्दर्शनगतांहसः ॥ अहं पर्युषितो नाम्ना एष सूचीमुखः स्मृतः ॥ ४७ ॥ तृतीयः शीघ्रगस्तुर्य्यो

रोधको लेखकः परः ॥ ब्राह्मण उवाच ॥ प्रेतानां कर्म्मजातानां कुतो नाम निरर्थकम् ॥ ४८ ॥ निरुक्तिमेषां नाम्नां वै प्रेता वदत मा चिरम् ॥ श्री
कृष्ण उवाच ॥ एवमुक्तास्तु विप्रेण पृथगुत्तरमब्रुवन् ॥ ४९ ॥ पर्य्युषित उवाच ॥ कदाचिच्छ्राद्धकाले वै मया विप्रो निमन्त्रितः ॥ ५० ॥ स च कृत्वा
विलम्बेन वृद्धो मद्गृहमागतः ॥ अकृतश्राद्धकर्म्माहं तं पाकं भुक्तवान् क्षुधा ॥ ५१ ॥ अददामन्नमाकृष्य विप्रे पर्य्युषितं कियत् ॥ तस्मात् पापा
न्मृतः पापो योनिं वै कुत्सितां गतः ॥ ५२ ॥ यतः पर्य्युषितं दत्तं ततः पर्य्युषितः स्मृतः ॥ सूचीमुख उवाच ॥ कदाचिद्ब्राह्मणी काचित्तीर्थं
भद्रवटं ययौ ॥ ५३ ॥ पञ्चवर्षसुता वृद्धा पुत्रमात्रैकजीविता ॥ अहं क्षत्रियदायादस्तस्या रोधमकारिषम् ॥ ५४ ॥ वने तु विजने तत्र पापाध्वगगतिं
गतः ॥ तस्याः सवस्त्रं पाथेयं तत्सूनोर्वसनानि च ॥ ५५ ॥ गृहीतानि मया विप्र शिरस्यापीड्य मुष्टिना ॥ तृषार्त्तस्तत्क्षणं बालः पात्रसंस्थं जलं
पिबन् ॥ ५६ ॥ तावन्मात्रोदके देशे मया हुंकृत्य वारितः ॥ मयाथ सकलं पीतं जलं पात्रात्तृषावता ॥ ५७ ॥ बालोऽपि भयसन्त्रस्तः पिपासुर्व्यसु
रापतत् ॥ पुत्रशोकान्मृता माता कूपे प्रास्य निजं वपुः ॥ ५८ ॥ एतस्मात्पातकाद्विप्र प्रेतत्वं प्राप्तवानहम् ॥ सूच्यग्रप्रायविवरमुखः पर्व्वतदेहवान्
॥ ५९ ॥ यद्यपि प्राप्नुयां भक्ष्यं भक्षितुन्तु न शक्यते ॥ मया क्षुधानलेनापि ज्वलतास्यं निकोचितम् ॥ ६० ॥ अत आस्ये तु विवरं सूच्यग्रेण समं
मम ॥ एतस्मात्कारणाद्विप्र नाम्ना सूचीमुखोऽस्म्यहम् ॥६१॥ शीघ्रग उवाच ॥ पुराहं वैश्यजातीयः साकं सख्या च केनचित् ॥ वाणिज्यं कर्त्तुमगमं
देशमन्यं महाधनः ॥ ६२ ॥ मित्रं च मे बहुधनं तस्य लोभो महांस्ततः ॥ जातोऽप्यदृष्टवैमुख्यान्मे नष्टं मूलमप्युत ॥ ६३ ॥ ततस्तस्मात्तु निष्क्रा
न्तावावां नावाथ निम्नगाम् ॥ मार्गगां तर्त्तुमारब्धौ लोहितायति भास्करे ॥ ६४ ॥ सखा स च मदुत्सङ्गे सुप्त्वापाध्वक्लमाकुलः ॥ अभूत्तदाति
पापस्य क्रूरा मतिरतीव मे ॥ ६५ ॥ तमुत्सङ्गगतं सूरे नष्टे पूरेऽक्षिपं तदा ॥ तत्कृत्यं कुर्वतो नावि लोकैस्तु ज्ञातमेव न ॥ ६६ ॥ तस्य यद्वस्तु
तत्सर्व्वं मणिमुक्तादिकाञ्चनम् ॥ आदाय शीघ्रगस्तस्माद्देशात्स्वगृहमागतः ॥ ६७॥ तत्सर्व्वं स्वगृहे मुक्त्वा तस्य पत्न्यै न्यवेदयम् ॥ दस्युभिर्मे हतो
भ्राता धनमाच्छिद्य वै पथि ॥ ६८ ॥ प्रजावति प्रद्रुतोऽहं मा रोदीत्येवमब्रवम् ॥ शोकार्त्ता सापि तत्कालं ममत्वं गृहबन्धुषु ॥ ६९ ॥ त्यक्त्वा चाति
प्रियान्प्राणाञ्जुहावाग्नौ यथाविधि ॥ ततो निष्कण्टकं तद्धि वीक्ष्य हृष्टो गतो गृहम् ॥ ७० ॥ अभुञ्जं सर्वमागत्य यावज्जीवं तु तद्धनम् ॥ मित्रं
पूरे हि निःक्षिप्य यदहं शीघ्रमागतः ॥ ७१ ॥ एतस्मात्कारणात्प्रेतः शीघ्रगोऽहं तु नामतः ॥ रोधक उवाच ॥ अहन्तु शूद्रजातीयः पुराभूवं मुनीश्वर
॥ ७२ ॥ राजप्रसादात्तमहाशतग्रामाधिकारवान् ॥ वृद्धौ मे पितरावास्तां लघुरेकः सहोदरः ॥ ७३ ॥ शीघ्रं स च मया भ्राता लुब्धेनैकः पृथक्कृतः ॥

आत्तवान्परमं दुःखं सोन्नवस्त्रविवर्जितः ॥ ७४ ॥ अदत्तां पितरौ च्छन्नं किञ्चित्किञ्चित्तु तस्य च ॥ तस्मै पितृभ्यां यद्दत्तमातेभ्यस्तन्मया श्रुतम् ॥
॥ ७५ ॥ तत्सर्वं तत्त्वतो ज्ञात्वा पित्रो रोधमकारयम् ॥ शून्यमन्दिर एकस्मिन्बद्धा तु निगडैर्दृढैः ॥ ७६ ॥ ततस्तौ जहतुः प्राणान्दुःखितौ विष
पानतः ॥ सोसौ बालोऽपि बभ्राम पितृभ्यां रहितो द्विज ॥ ७७ ॥ पुरःपत्तनखर्व्वाटान् खेटानापि मृतः क्षुधा ॥ एतस्मात्पातकाद्विप्र मृतः प्रेतत्व
मागतः ॥ ७८ ॥ रुद्धौ तु पितरौ यस्मान्नाम्नाहं रोधकस्ततः ॥ लेखक उवाच ॥ अहं विप्र पुराभूवमवन्त्यां द्विजसत्तमः ॥ ७९ ॥ भद्रस्य राज्ञो
देवानां पूजनेऽधिकृतो ह्यहम् ॥ बह्वयस्तु प्रतिमास्तत्र बभूवुर्बहुनामिकाः ॥ ८० ॥ हेमस्तदंगेषु बहु रत्नजातं बभूव ह ॥ तासां मे कुर्वतः पूजां
पापा मतिरजायत ॥ ८१ ॥ अखिलं तीक्ष्णलोहेन तासामङ्गं विशीर्य च ॥ उल्लेखनञ्च रत्नानां नेत्रादिभ्यः कृतं मया ॥ ८२ ॥ तथाकृतान्यथांगानि
प्रतिमानां निरीक्ष्य च ॥ नेत्राणि च विरत्नानि नृपश्चुक्रोध वह्निवत् ॥ ८३ ॥ प्रतिजज्ञे नृपः पश्चादेष ब्राह्मणपुंगवः ॥ आभ्यो रत्नं सुवर्णञ्च हृतं येन
भविष्यति ॥ ८४ ॥ ज्ञातश्च स हि मे वध्यो भविष्यति न संशयः ॥ अहं तत्सकलं ज्ञात्वा रात्रावसिधरो गृहम् ॥ ८५ ॥ राज्ञः प्रविश्य राजानं
पशुमारममारयम् ॥ गृहीत्वाथ मणीन् स्वर्णं निशीथेऽहं गतोऽन्यतः ॥ ८६ ॥ व्याघ्रेण महतारण्ये नखटंकैर्विटंकितः ॥ लेखनात्प्रतिमाया यन्मया
लोहेन कर्त्तितम् ॥ ८७ ॥ एतस्मात्पातकात्प्रेतो लेखको नामतोऽस्म्यहम् ॥ आसीन्नरकभोगान्ते नः प्रेतत्वमिदं द्विज ॥ ८८ ॥ ब्राह्मण उवाच ॥
संज्ञास्तादृश्य आख्याता यथैता भवता दशाः ॥ वदन्त्वाचारमात्रं मे प्रेता आहारमप्युत ॥ ८९ ॥ प्रेता ऊचुः ॥ वेदमार्गानुसरणं लज्जा धर्मो दमः
क्षमा ॥ धृतिर्ज्ञानं नैव यत्र वयं तत्र वसामहे ॥९०॥ तस्य पीडां वयं कुर्मो नैव श्राद्धं न तर्पणम्॥ यस्य गेहे तदंगात्तु मांसञ्च रुधिरं क्रमात् ॥९१॥
जक्षामश्च पिबामश्च उक्त आचार एष नः ॥ शृणु चाहारमस्माकं सर्व्वलोकविगर्हितम् ॥ ९२ ॥ दृष्टस्त्वया च किञ्चिद्धि ब्रूमोऽज्ञातं त्वयानघ ॥
वमनं विड् दूषिका च श्लेष्मा मूत्राश्रुणी तथा ॥ ९३ ॥ एतद्भक्ष्यञ्च पानञ्च मा पृच्छातः परं द्विज ॥ लज्जा नो जायते स्वामिन्नाहारं वदतां स्वकम्
॥ ९४ ॥ अज्ञानास्तामसा मन्दा कान्दिशीका वयं विभो ॥ अकस्माज्जन्मनां विप्र स्मृतिः प्राप्ता तु पौर्व्विकी ॥ ९५ ॥ विनीतत्वाविनीतत्वे जा
नीमो नैव नः प्रभो ॥ श्रीकृष्ण उवाच ॥ एवं वदत्सु प्रेतेषु तथा श्रुतवति द्विजे ॥९६॥ अदर्शयमहं रूपं तदा तार्क्ष्यैदमेव वै ॥ स तु दृष्ट्वा द्विजश्रेष्ठो
हृद्गतं पुरुषं पुरः ॥ ९७ ॥ स्तोत्रैस्तुष्टाव पक्षीश दण्डवत्प्रणनाम माम् ॥ तेऽपि तेपुस्ततः प्रेता आश्चर्य्योत्फुल्लचक्षुषः ॥ ९८ ॥ प्रणयेन स्खलद्वा
चः खग व्योचुः किमप्युत ॥ रजसा घोरचित्तानां तमसा मूढचेतसाम् ॥ कृपया यः समुद्धारं कुरुषे वै नमोऽस्तु ते ॥ ९९ ॥ एवं द्विजातौ ब्रुवति प्रभु

तप्रभैश्च मुख्यांबरचारियुक्तैः ॥ तदा मदिच्छाप्रभवैर्विमानैः पद्माभिः समन्ताद्रुहचे गिरिः सः ॥ १०० ॥ इत्थं विमानेन मदीयलोकं गतो द्विजरसोऽप्यथ पञ्चभिस्तैः ॥ प्रेता ययुः स्वर्गमगण्यपुण्यं सत्सङ्गसंसर्गवशात्सुपर्ण ॥ १०१ ॥ प्रेताः संगवशेन नाकमवन्सन्ततको ब्राह्मणो विष्वक्सन इति प्रसिद्धविभवो नाम्ना गणे मेऽभवत् ॥ एतत्ते सकलं मया निगदितं यश्चैतदुत्कीर्त्तयेद्यश्चेदं शृणुयान्न सोऽपि पुरुषः प्रेतत्वमाप्नोति हि ॥ १०२ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे श्रीकृष्णगरुडसंवादे प्रेतकल्पे पञ्चप्रेतोपाख्यानं नाम सप्तमोऽध्यायः[1] ॥ ७ ॥

गरुड उवाच ॥ स्वामिन्कस्याधिकारोऽत्र सर्व्वं एवौर्ध्वदेहिके ॥ क्रियाः कतिविधाः प्रोक्ता वदैतत्सर्व्वमेव मे ॥ १ ॥ श्रीकृष्ण उवाच ॥ पुत्रः पौत्रः प्रपौत्रो वा तद्भ्राता भ्रातृसन्ततिः ॥ सपिण्डसन्ततिर्वापि क्रियार्हाः खग ज्ञातयः ॥ २ ॥ तेषामभावे सर्व्वेषां समानोदकसन्ततिः ॥ कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्य्याः क्रियाः खग ॥ ३ ॥ इच्छयोच्छिन्नबन्धश्च कारयेदवनीपतिः ॥ पूर्व्वाः क्रिया मध्यमाश्च तथा चैवोत्तराः क्रियाः ॥ ४ ॥ प्रतिसंवत्सरं पक्षिन्नेकोद्दिष्टविधानतः ॥ श्राद्धं तत्र प्रकर्त्तव्यं फलं तस्य शृणुष्व मे ॥ ५ ॥ ब्रह्मेन्द्ररुद्रनासत्यसूर्य्याग्निवसुमारुतान् ॥ विश्वेदेवान्पितृगणान्वयांसि मनुजान्पशून् ॥ ६ ॥ सरीसृपान्मातृगणान्यच्चान्यद्भूतसंज्ञितम् ॥ श्राद्धं श्रद्धान्वितः कुर्व्वन्प्रीणयत्यखिलं जगत् ॥ ७ ॥ ते तृप्तास्तर्पयन्त्येनं पुत्रदारधनैस्तथा ॥ अधिकारः क्रियाभेदः समासात्ते निरूपितः ॥८॥ गरुड उवाच ॥ उक्तेष्वेकोऽपि चेन्न स्यादधिकारी सुरोत्तम ॥ कर्त्तव्यं किं तदा विष्णो पुरुषेण विजानता ॥ ९ ॥ श्रीकृष्ण उवाच ॥ अधिकारो यदा नास्ति यदि नास्ति च निश्चयः ॥ जीविते सति जीवाय दद्याच्छ्राद्धं स्वयं नरः ॥१०॥ कृतोपवासः सुस्नातः कृष्णारुङ्गः समाहितः॥कर्त्तारमथ भोक्तारं विष्णुं सर्व्वेश्वरं यजेत् ॥११॥ सदक्षिणाश्च सतिलास्तिस्रश्च जलधेनवः ॥ निवेदयेत्पितृभ्यश्च स्वधेति सुसमाहितः ॥१२॥ अग्नये कव्यवाहनाय स्वधा नम इति स्मरन् ॥ सोमायत्वा पितृमते स्वधा नम इति स्मरन् ॥१३॥ दक्षिणेन तु दद्याच्च तृतीयां दक्षिणायुताम् ॥ यमायाङ्गिरसे चाथ स्वधा नम इति स्मरन् ॥१४॥ तयोर्मध्ये तु निःक्षिप्य विप्रान्संमन्त्र्य भोजयेत् ॥ प्रथमामुत्तरे न्यस्य द्वितीयां दक्षिणे न्यसेत ॥ १५ ॥ मध्ये तृतीयां विन्यस्य पश्चादावाहनादिकम् ॥ आवाहनादिना पूर्व्वं विश्वेदेवान्प्रपूज्य च ॥ १६ ॥ वसुभ्यस्त्वामहं विप्र रुद्रेभ्यस्त्वामहं ततः ॥ सूर्य्येभ्यस्त्वामहं विप्र भोजयामीति तान्वदेत् ॥ १७ ॥ आवाहनादिकं शेषं कुर्य्याच्च पितृशेषवत् ॥ साम्यां धेनुं ततो दद्याद्वसूद्देशं द्विजाय तु ॥ १८ ॥ आग्नेय्यां चाथ रौद्राय याम्यां सूर्य्यद्विजाय तु ॥ विश्वेभ्यश्चाथ देवेभ्यस्तिलपात्रं निवेद

[1] पञ्चप्रेताख्याननामकोध्यायो द्वाविंशतितमोऽपि । ततो भिद्यते किञ्चिदयम् ।

येत् ॥१९॥ स्वस्तीत्येव तथाक्षय्यं जलं दत्त्वाथ तान्द्विजान् ॥ विसर्जयेत्स्मरन्विष्णुं देवमष्टाक्षरं विभुम् ॥२०॥ तत कामं कुलेशानीं शिवं नारायणं स्मरेत् ॥ चतुर्दश्यां ततो गच्छेद्यथाप्राप्तां सरिद्वराम् ॥ २१ ॥ वस्त्राणि लोहखण्डानि जितं त इति संजपन् । दक्षिणाभिमुखो वह्निं ज्वालयेत्तत्र च स्वयम् ॥ २२ ॥ पञ्चाशता कुशैर्ब्राह्मीं कृत्वा प्रतिकृतिं दहेत् ॥ हुत्वा श्माशानिकं होमं पूर्णाहुत्यन्तमेव हि ॥ २३ ॥ निरग्निमथ वा भूमिं यमं रुद्रञ्च संस्मरेत् ॥ हुत्वा प्राधानिके स्थाने पश्चादावाहयेच्च तम् ॥ २४ ॥ श्रपयेच्चापरं वह्नौ मुद्गमिश्रं चरुं ततः ॥ तिलतण्डुलमिश्रञ्च द्वितीयं सपवित्रकम् ॥ २५ ॥ ॐ पृथिव्यै नमस्तुभ्यमिति चैकं निवेदयेत् ॥ ॐ यमाय नमश्चेति द्वितीयं तदनन्तरम् ॥२६॥ ॐ नमश्चाथ रुद्राय श्मशानपतये नमः॥ ततो दीप्ते समिद्धेऽग्नौ भूमौ प्रकृतिदारुणे ॥ २७ ॥ सप्तभ्यो यमसंज्ञेभ्यो दद्यात्सप्त जलाञ्जलीन् ॥ यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ॥२८॥ वैवस्वताय कालाय सर्वप्राणहराय च ॥ स्वधाकारनमस्कारप्रणवैः सह सप्तधा ॥ २९ ॥ अमुकामुकगोत्रैतत्तुभ्यमस्तु तिलोदकम् ॥ प्रदद्याद्दश पिण्डांस्तु अर्घपुष्पसमन्वितान् ॥ ३० ॥ धूपो दीपो बलिर्गन्धः सर्व्वेषामस्तु चाक्षयः ॥ दश पिण्डांस्तु तान्दत्त्वा विष्णोः सौम्यं मुखं स्मरेत् ॥ ३१ ॥ कुर्य्याच्च मासिकं मासि सपिण्डीकरणं ततः ॥ आशौचान्ते ततः कुर्य्यादात्मनो वा परस्य तु ॥ ३२ ॥ कुर्य्यादस्थिरतां ज्ञात्वा शक्त्यारोग्यधनायुषम् ॥ एतत्ते सर्व्वमाख्यातं जीवच्छ्राद्धं मया खग ॥ ३३ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्ण गरुडसंवादे श्राद्धकर्त्रात्मश्राद्धयोर्निरूपणं नामाष्टमोऽध्यायः ॥८॥ गरुड उवाच ॥ उक्तमाद्यां क्रियां यावन्नृपोऽपीति त्वयानघ ॥ कस्यचित्केनचिद्राज्ञा किमाद्या सा कृता पुरा ॥ १ ॥ श्रीकृष्ण उवाच ॥ सुपर्ण शृणु वक्ष्यामि यथा राज्ञा क्रिया कृता ॥ आसीत् कृत युगे राजा वाङ्गो वै बभ्रुवाहनः ॥ २ ॥ पृथिव्याश्चतुरन्ताया गोप्ता पक्षीन्द्र धर्म्मतः ॥ चतुर्भागां भुवं कृत्स्नां स भुङ्क्ते वसुधाधिपः ॥ ३ ॥ न पापकृत्कश्चिदासीत्तस्मिन्राज्यं प्रशासति ॥ नासीच्चौरभयं तार्क्ष्य न क्षुद्रभयमेव हि ॥ ४ ॥ नासीद्व्याधिभयञ्चापि तस्मिञ्जनपदेश्वरे ॥ स्वधर्म्मे रेमिरे चासी तेजसा भास्करोपमः ॥ ५ ॥ अक्षुब्धत्वेऽचलसमः सहिष्णुत्वे धरासमः ॥ स कदाचिन्महाबाहुः प्रभूतबलवाहनः ॥ ६ ॥ वनं जगाम गहनं हयानाञ्च शतैर्वृतः ॥ सिंहनादैश्च योधानां शङ्खदुन्दुभिनिःस्वनैः॥७॥आसीत्किलकिलाशब्दस्तस्मिन् गच्छति पार्थिवे ॥ तत्रतत्र च विप्रेन्द्रैः स्तूयमानःसमन्ततः ॥ ८ ॥ निर्ययौ परया प्रीत्या वनं मृगजिघांसया ॥ स गच्छन्ददृशे धीमान्नन्दनप्रतिमं वनम् ॥९॥ बिल्वार्कखादिराकीर्णं कपित्थध्वजसंयुतम् ॥ विषमैः पर्व्वतैश्चैव सर्वतश्च समन्वितम् ॥ १० ॥ निर्ज्जलं निर्म्मनुष्यञ्च बहुयोजनमायतम् ॥ मृगसिंहैर्महाघोरैरन्यैश्चापि वनेचरैः ॥ ११ ॥ तद्वनं मनुज

व्याघ्रः सभृत्यबलवाहनः ॥ लीलया लोडयामास सूदयन्विविधान्मृगान् ॥ १२ ॥ मृगस्य कस्यचित्कुक्षिं ततो विव्याध भूमिपः ॥
राजा मृगप्रसङ्गेन तमनु प्राविशद्वनम् ॥ १३ ॥ एकाकी वै हृतबलः क्षुत्पिपासासमन्वितः ॥ स वनस्यान्तमासाद्य महच्चारण्यमासदत् ॥ १४ ॥
तृषया परयाविष्टोऽन्विष्यज्जलमितस्ततः ॥ स दूरात्पूरचक्राह्वं हंससारसनादितैः ॥ १५ ॥ सूचितं सर आगत्य साश्व एव व्यगाहत ॥ पद्मानाञ्च
परागेण उत्पलानां रजेन च ॥ १६ ॥ सुगन्धममलं शीतं पीत्वाम्भो निर्ज्जगाम ह ॥ मार्गश्रमपरिश्रान्तस्तडागतटमण्डपम् ॥ १७ ॥ न्यग्रोधं
वीक्ष्य तस्याशु जटास्वश्वं बबन्ध ह ॥ स तत्रास्तरमास्तीर्य्य खेटकानुपधाय च ॥ १८ ॥ सुष्वाप वायुना तत्र सेव्यमानस्तदा क्षणम् ॥
क्षणं सुप्ते नृपे तत्र प्रेतो वै प्रेतवाहनः ॥ १९ ॥ कश्चिदत्राजगामाथ युक्तः प्रेतशतेन च ॥ अस्थिचर्म्मशिराशेषशरीरः परिविभ्रमन् ॥ २० ॥ भक्ष्यं
पेयं मार्गमाणो न बध्नाति धृतिं क्वचित् ॥ तमपूर्व्वं नृपो दृष्ट्वाऽकरोदस्त्रं शरासने ॥ २१ ॥ दृष्ट्वा सोऽपि चिरं भूपं तस्थौ स्थाणुरिवाग्रतः ॥ तमव
स्थितमालोक्य राजा प्राप्तकुतूहलः ॥ २२ ॥ पप्रच्छ तञ्च कोऽसीति कुतो वा विकृतिं गतः ॥ प्रेत उवाच ॥ प्रेतभावो मया त्यक्तो गतिं प्राप्तोऽ
स्म्यहं पराम् ॥ २३ ॥ त्वत्संयोगान्महाबाहो नास्ति धन्यतरो मया ॥ बभ्रुवाहन उवाच ॥ किमेतद्विपिने घोरे सर्वत्रातिभयानके ॥ २४ ॥
दोधूयमाने वातेन वात्यारूपेण कोणप ॥ पतंगा मशकाः क्षुद्राः कवन्धाश्च शिरांसि च ॥ २५ ॥ मत्स्याः कूर्म्माः कृकलासा वृश्चिका भ्रमरादयः ॥
अधोमुखोर्ध्वपादास्ते क्रन्दमानाः सुदारुणम् ॥ २६ ॥ प्रवान्ति वायवो रूक्षा ज्वलन्तो विद्युदग्नयः ॥ इतस्ततो भ्रमन्तीव वायुना तृणसन्ततिः
॥ २७ ॥ दृश्यन्ते विविधा जीवा नागाश्च शलभव्रजाः ॥ श्रूयन्ते बहुधा रावा न दृश्यन्ते क्वचित्क्वचित् ॥ २८ ॥ दृष्ट्वेदं विकृतं सर्व्वं वेपते हृदयं
मम ॥ प्रेत उवाच ॥ येषां नैवाग्निसंस्कारो न श्राद्धं नोदकक्रियाः ॥ २९ ॥ षट् पिण्डा दश गात्राणि सपिण्डीकरणं न हि ॥ विश्वासघातिनो ये
च सुरापाः स्वर्णहारिणः ॥ ३० ॥ मृता दुर्म्मरणाद्ये च ये चासूयापरा जनाः ॥ प्रायश्चित्तविहीना ये अगम्यागमने रताः ॥ ३१ ॥ कर्म्मभिर्भ्राम्यमा
णास्ते प्राणिनः स्वकृतैरिह ॥ दुर्लभाहारपानीया दृश्यन्ते पीडिता भृशम् ॥ ३२ ॥ एतेषां कृपया राजंस्त्वं कुरुष्वौर्द्ध्वदेहिकम् ॥ येषां न माता न
पिता न पुत्रो न च बान्धवाः ॥ ३३ ॥ तेषां राजा स्वयं कुर्यात्कर्म्माणि तु यतो नृपः ॥ आत्मनश्च शुभं कर्म्म कर्त्तव्यं पारलौकिकम् ॥ ३४ ॥
विमुक्तः सर्व्वदुःखेभ्यो येनाशो दुर्गतिं तरेत् ॥ भ्रातरः कस्य के पुत्रास्त्रियोऽपि स्वार्थकोविदाः ॥ ३५ ॥ न कार्य्यस्तेषु विश्रम्भ स्वकृतं भुज्यते

१ मत्त इत्यर्थः ।

यतः ॥ गृहेष्वर्था निवर्त्तन्ते श्मशाने चैव बान्धवाः ॥ ३६ ॥ शरीरं काष्ठमादत्ते पापं पुण्यं सह व्रजेत् ॥ तस्मादाशु त्वया सम्यगात्मनः श्रेय इच्छता ॥ ३७ ॥ अस्थिरेण शरीरेण कर्त्तव्यश्चौर्ध्वदेहिकम् ॥ राजोवाच ॥ कृशरूपः करालाक्षस्त्वं प्रेत इव लक्ष्यसे ॥ ३८ ॥ कथयस्व मम प्रीत्या प्रेतराज यथातथम् ॥ तथा पृष्टः स वै राज्ञा उवाच सकलं स्वकम् ॥ ३९ ॥ प्रेत उवाच ॥ कथयामि नृपश्रेष्ठ सर्व्वमेवादितस्तव ॥ प्रेतत्वे कारणं श्रुत्वा दयां कर्त्तुमिहार्हसि ॥ ४० ॥ वैदिशं नाम नगरं सर्व्वसम्पत्सुखावहम् ॥ नानाजनपदाकीर्णं नानारत्नसमाकुलम् ॥ ४१ ॥ नानापुष्पवनाकीर्णं नानापुण्यजनावृतम् ॥ तत्राहं न्यवसं भूप देवार्च्चनरतः सदा ॥ ४२ ॥ वैश्यजातिः सुदेवोऽहं नाम्ना विदितमस्तु ते ॥ हव्येन तर्पिता देवाः कव्येन पितरो मया ॥ ४३ ॥ विविधैर्दानयोगैश्च विप्राः सन्तर्पिता मया ॥ आहारश्च विहारश्च मया वै सुनिवेशितः ॥ ४४ ॥ दीनानाथविशिष्टेभ्यो मया दत्तमनेकधा ॥ तत्सर्वं निष्फलं जातं मम दैवादुपागतम् ॥ ४५ ॥ न मेऽस्ति सन्ततिस्तात न सुहृन्न च बान्धवाः ॥ न च मित्रं हितस्तादृग्यः कुर्य्यादौर्ध्वदैहिकम् ॥ ४६ ॥ प्रेतत्वं सुस्थिरं तेन मम जातं नृपोत्तम ॥ एकादशं त्रिपक्षश्च षाण्मासिकमथाब्दिकम् ॥ ४७ ॥ प्रतिमास्यानि चान्यानि ह्येवं श्राद्धानि षोडश ॥ यस्यैतानि न दीयन्ते प्रेतश्राद्धानि भूपते ॥ ४८ ॥ प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ एवं ज्ञात्वा महाराज प्रेतत्वादुद्धरस्व माम् ॥ ४९ ॥ वर्णानाञ्चैव सर्वेषां राजा बन्धुरिहोच्यते ॥ तन्मां तारय राजेन्द्र मणिरत्नं ददामि ते ॥ ५० ॥ यथा मम शुभावाप्तिर्भवेन्नृपवरोत्तम ॥ तथा कार्य्यं महीपाल दयां कृत्वा मयि प्रभो ॥ ५१ ॥ सपिण्डैर्वा सगोत्रैर्वा निष्ठुरैर्न कृतो हि मे ॥ वृषोत्सर्गस्ततो दुष्टं प्रेतत्वं प्राप्तवानहम् ॥ ५२ ॥ क्षुत्तृषाविष्टदेहश्च भक्ष्यं पानं न चाप्नुयाम् ॥ अतो विकृतिरेषा वै कृशत्वादिरमांसका ॥ ५३ ॥ क्षुत्तृड्जन्यं महादुःखमनुभवामि पुनःपुनः ॥ अकल्याणं हि प्रेतत्वं वृषोत्सर्गं विना कृतम् ॥ ५४ ॥ तस्माद्राजन्दयासिन्धो प्रार्थयामि तवाग्रतः ॥ राजोवाच ॥ वर्त्तते मत्कुले प्रेत इति ज्ञेयं कथं नरैः ॥ ५५ ॥ तन्ममाचक्ष्व हि प्रेत प्रेतत्वान्मुच्यते कथम् ॥ प्रेत उवाच ॥ लिङ्गेन पीडया प्रेतोऽनुमातव्यो नरैः सदा ॥ ५६ ॥ वक्ष्यामि पीडास्ता राजन्या वै प्रेतकृता भुवि ॥ ऋतुः स्यादफलः स्त्रीणां यदा वंशो न वर्द्धते ॥ ५७ ॥ म्रियन्ते बालवयसः सा पीडा प्रेतसम्भवा ॥ अकस्माद्वृत्तिहरणमप्रतिष्ठा जनेषु वै ॥ ५८ ॥ अकस्माद्गृहदाहः स्यात्सा पीडा प्रेतसम्भवा ॥ स्वगेहे कलहो नित्यं स्याच्च मिथ्याभिशंसनम् ॥ ५९ ॥ गजयक्ष्मादिसम्भूतिः सा पीडा प्रेतसम्भवा ॥ अपि स्वयं धनं मुक्तं प्रयत्नादनवे पथि ॥ ६० ॥ नैव लभ्येत नश्येत सा पीडा प्रेतसम्भवा ॥ सुवृष्टौ कृषिनाशः स्याद्वाणिज्याद्वृत्तिनाशनम् ॥ ६१ ॥ कलत्रं प्रतिकूलं स्यात्सा पीडा प्रेतसम्भवा ॥ एवन्तु पीडया राजन्प्रेतज्ञानं भवेन्नृ

णाम् ॥ ६२ ॥ वृषोत्सर्गो यदि भवेत्प्रेतत्वान्मुच्यते तदा ॥ तस्मान्नप त्वमप्येवं वृषोत्सर्गं कुरु प्रभो ॥ ६३ ॥ मामुद्दिश्य नृपेऽप्यत्राधिकारोऽस्त्यनु
कम्पया ॥ राजपुत्रो हतः कश्चिन्मयैवाप्तस्ततो मया ॥ ६४ ॥ कुरुष्व त्वं गृहीत्वा मे तद्धनेन वृषोत्सवम् ॥ कार्त्तिक्यां पौर्णमास्यां वाऽऽश्वयुङ्मध्येऽ
थवा नृप ॥ ६५ ॥ रेवतीयुक्तदिवसे कृपीष्ठा मे वृषोत्सवम् ॥ पुण्यान्विप्रान्समाहूय वह्निं स्थाप्य विधानतः ॥ ६६ ॥ मन्त्रैर्होमस्तथा कार्य्यः
षड्भिर्नृप विधानतः ॥ बहून्विप्रान् भोजयेथास्तद्रत्नाप्तधनेन वै ॥ एवं कृते महीपाल मम मुक्तिर्भविष्यति ॥६७॥ श्रीकृष्ण उवाच ॥ तथेति प्रति
जग्राह मणिं राजा ततः खग ॥ ६८॥ क्रियाधिकारस्तस्यैव यो धनग्राहको भवेत् ॥ कुर्व्वतोस्तु तयोर्वार्त्तामेवं प्रेतमहीक्षितोः ॥ ६९ ॥ झणत्कारस्तु
घण्टानां भेरीणां भांकृतिस्तथा ॥ जातस्तदा राजसेना चतुरंगा समापतत् ॥ ७० ॥ तस्यामागतमात्रायां प्रेतश्चादृश्यतां गतः ॥ तस्माद्वनाद्विनिः
सृत्य राजापि पुरमागमत् ॥ ७१ ॥ स कार्त्तिक्यां पूर्णिमायां प्रेतमुद्दिश्य संव्यधात् ॥ वृषोत्सर्गं विधानेन तन्मण्याप्तधनेन च ॥ ७२ ॥ प्रेतोऽप्ययं
सपदिलब्धसुवर्णदेहः कर्म्मान्त आगत इति प्रणनाम भूपम् ॥ देव त्वदीयमहिमायमिति स्तुवन् स यातो दिवं गरुड भूपतिना कृतज्ञः ॥ ७३ ॥
एतत्ते सर्व्वमाख्यातं यथा भूपतिनापि सः ॥ उद्धृतः प्रेतभावाद्वै किमन्यच्छ्रोतुमिच्छसि ॥ ७४ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे
धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे राजकृतवृषोत्सर्गक्रियादिनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥ गरुड उवाच ॥ सपिण्डीकरण जाते आब्दिके
च स्वकर्म्मभिः ॥ देवत्वं वा मनुष्यत्वं पक्षित्वं वाप्नुयुर्नराः ॥१॥ तेषां विभिन्नाहाराणां श्राद्धं वै तृप्तिदं कथम् ॥यदप्यन्यैर्द्विजैर्भुक्तं हूयते यदि वानले ॥
॥ २ ॥ शुभाशुभात्मकैः प्रेतस्तदत्तं भुज्यते कथम् ॥ श्राद्धस्यावश्यकत्वन्तु अमावास्यादिषु श्रुतम् ॥३॥ ॥ श्रीभगवानुवाच ॥ प्रेतानां शृणु पक्षीन्द्र
यथा श्राद्धन्तु तृप्तिदम् ॥ देवो यदपि जातोऽयं मनुष्यः कर्म्मयोगतः ॥ ४ ॥ तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुयाति च ॥ गान्धर्व्ये भोगरूपेण पशुत्वे
च तृणं भवेत ॥ ५ ॥ श्राद्धं हि वायुरूपेण नागत्वेऽप्यनुगच्छति ॥ फलं भवति पक्षित्वे राक्षसेषु तथामिषम् ॥ ६ ॥ दानवत्वे तथा मांसं प्रेतत्वे
रुधिरं तथा ॥ मनुष्यत्वेऽन्नपानादि बाल्ये भोगरसो भवेत् ॥ ७ ॥ ॥ गरुड उवाच ॥ कथं कव्यानि दत्तानि हव्यानि च जनैरिह ॥ गच्छन्ति
पितृलोकं वा प्रापकः कोऽत्र गद्यते ॥ ८ ॥ मृतानामपि जन्तूनां श्राद्धमाप्यायनं यदि ॥ निर्व्वाणस्य प्रदीपस्य तैलं संवर्द्धयेच्छिखाम् ॥ ९ ॥ मृताश्च
पुरुषाः स्वामिन् स्वकर्मजनितां गतिम् ॥ गाहन्तः के कथं स्वस्य सुतस्य श्रेय आप्नुयुः ॥ १० ॥ श्रीभगवानुवाच ॥ श्रुतेः प्रत्यक्षतस्तार्क्ष्य प्रामा
ण्यं बलवत्तरम् ॥ श्रुत्या तु बोधितार्थस्य पीयूषत्वादिरूपता ॥ ११ ॥ नामगोत्रं पितृणां वै प्रापकं हव्यकव्ययोः ॥ श्राद्धस्य मन्त्रास्तद्वत्तु प्राप

काश्चैव भक्तितः ॥ १२ ॥ अचेतनानि चैतानि प्रापयन्ति कथन्त्विति ॥ सुपर्ण नावगन्तव्यं प्रापकं वच्मि तेऽपरम् ॥ १३ ॥ अग्निष्वात्तादयस्तेषा
माधिपत्ये व्यवस्थिताः ॥ काले न्यायागतं पात्रे विधिना प्रतिपादितम् ॥ १४ ॥ अन्नं नयन्ति तत्रैते जन्तुर्यत्रावतिष्ठते ॥ नाम गोत्रञ्च मन्त्राश्च
दत्तमन्नं नयन्ति ते ॥ १५ ॥ अपि योनिशतं प्राप्तांस्तांस्तृप्तिरुपतिष्ठति ॥ तेषां लोकान्तरस्थानां विविधैर्नामगोत्रकैः ॥ १६ ॥ अपसव्यं क्षितौ
दर्भे दत्ताः पिण्डास्त्रयस्तु वै ॥ यान्ति तांस्तर्पयन्त्येवं प्रेतस्थानस्थितान्पितॄन् ॥ १७ ॥ अप्राप्तयातनास्थानाः श्रेष्ठा ये भुवि पंचधा ॥ नानारूपा
स्तु जाता ये तिर्य्यग्योन्यादिजातिषु ॥ १८ ॥ यदाहारा भवन्त्येते पितरो यत्र योनिषु ॥ तासुतासु तदाहारः श्राद्धा तेष्ठति ॥ १९ ॥ यथा
गोषु प्रनष्टासु वत्सो विन्दति मातरम् ॥ तथान्नं नयते विप्र जन्तुर्यत्रावतिष्ठते ॥ २० ॥ पितरः श्राद्ध रो विश्वैर्देवैः सदा सह ॥ एते श्राद्धं सदा
भुक्त्वा पितॄन्सन्तर्पयन्त्यतः ॥ २१ ॥ वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ॥ प्रीणयां नुष्याणां पितॄञ्श्राद्धेषु तर्पिताः ॥ २२ ॥
आत्मानं गुर्व्विणी गर्भमपि प्रीणाति वै यथा ॥ दोहदेन तथा देवाः श्राद्धैः स्वांश्च पितॄन्नृणाम् ॥ २३ ॥ हृष्यन्ति पितरः श्रुत्वा श्राद्धकालमुप
स्थितम् ॥ अन्योन्यं मनसा ध्यात्वा सम्पतन्ति मनोजवम् ॥२४॥ ब्राह्मणैः सह चाश्नन्ति पितरो ह्यन्तरिक्षगाः ॥ वायुभूताश्च तिष्ठन्ति भुक्त्वा यान्ति
परां गतिम् ॥ २५ ॥ निमन्त्रितास्तु ये विप्राः श्राद्धपूर्व्वदिने खग ॥ प्रविश्य पितरस्तेषु भुक्त्वा यान्ति स्वमालयम् ॥ २६ ॥ श्राद्धकर्त्ता तु यद्येकः
श्राद्धे विप्रो निमन्त्रितः ॥ उदरस्थः पिता तस्य वामपार्श्वे पितामहः ॥ २७ ॥ प्रपितामहो दक्षिणतः पृष्ठतः पिण्डभक्षकः ॥ श्राद्धकाले यमः प्रेता
न्पितॄंश्चापि यमालयात् ॥ २८ ॥ विसर्ज्जयति मानुष्ये निरयस्थांश्च काश्यप ॥ क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतञ्च स्वयंकृतम् ॥२९॥ कांक्षंति पुत्रपौत्रे
भ्यः पायसं मधुसंयुतम् ॥ तस्मात्तांस्तत्र विधिना तर्पयेत्पायसेन तु ॥ ३० ॥ गरुड उवाच ॥ स्वामिन्केनापि ते दृष्टा आगताः पितरो द्विज ॥
लोकादमुष्मादागत्य भुञ्जन्तो भुवि मानद ॥३१॥ श्रीभगवानुवाच ॥ गरुत्मञ्छृणु वक्ष्यामि यथा दृष्टास्तु सीतया ॥ पितरो विप्रदेहे वै श्वशुराद्यास्त्रयः
क्वचित् ॥ ३२ ॥ गृहीत्वा पितुराज्ञां वै रामो वनमुपागमत् ॥ ततः पुष्करयात्रार्थं रामोऽयात्सीतया सह ॥३३॥ तीर्थं चापि समागत्य श्राद्धं प्रारब्ध
वांस्तु सः ॥ फलं पक्वन्तु जानक्या सिद्धं रामे निवेदितम् ॥ ३४ ॥ स्नातप्रियोक्तवाक्यात्तु सुस्नाता तमपालयत् ॥ नभोमध्यगते सूर्य्ये काले
कुतुप आगते ॥ ३५ ॥ अयाता ऋषयः सर्व्वे ये रामेण निमन्त्रिताः ॥ तान्मुनीनागतान्दृष्ट्वा वैदेही जनकात्मका ॥ ३६ ॥ रामाज्ञयान्नमादाय परि
वेष्टुमुपागता ॥ अपासर्पत्ततो दूरे विप्रमध्ये तु संस्थिता ॥ ३७ ॥ गुल्मैराच्छाद्य चात्मानं निगूढं सा स्थिता तदा ॥ एकान्ते तु तदा सीतां ज्ञात्वा

राघवनन्दनः ॥३८॥ विमृश्य सुचिरं कालमिदं किमिति सत्वरम् ॥ किञ्चित्कचिद्गता साध्वी त्रपायाः कारणेन हि॥३९॥ किं वा न भोजयन्विप्रान्सी
तामन्वेषयाम्यहम् ॥ विमृशन्नेवमेवं स स्वयं विप्रानभोजयत् ॥ ४० ॥ गतेषु द्विजमुख्येषु प्रियां रामोऽब्रवीदिदम् ॥ कथं लतासु लीना त्वं मुनीन्दृष्ट्वा
समागतान् ॥ ४१ ॥ तत्सर्व्वं मम तन्वाङ्गि कारणं वद मा चिरम् ॥ एवमुक्ता तदा भर्त्रा सीता साधोमुखी स्थिता ॥ मुञ्चन्ती चाश्रुसंघातं राघवं
वाक्यमब्रवीत् ॥४२॥ सीतोवाच ॥ शृणु त्वं नाथ यद्दृष्टमाश्चर्य्यमिह यादृशम् ॥४३॥ पिता तव मया दृष्टो ब्राह्मणाग्रे तु राघवः ॥ सर्व्वाभरणसंयुक्तो
द्वौ चान्यौ च तथाविधौ ॥ ४४ ॥ दृष्ट्वा त्वत्पितरश्चाहमपक्रान्ता तवान्तिकात् ॥ वल्कलाजिनसंवीता कथं राज्ञः पुरः प्रभो ॥४५॥ भवामि रिपुवीरघ्न
सत्यमेतदुदाहृतम् ॥ स्वहस्तेन कथं देयं राज्ञे वा भोजनं मया ॥४६॥ दासानामपि ये दासा नोपभुञ्जन्ति कर्हिचित् ॥ तृणपात्रे कथं तस्मै अन्नं दातुं
हि शक्नुयाम् ॥ ४७ ॥ याहं राज्ञा पुरा दृष्टा सर्व्वाभरणभूषिता ॥ सा स्वेदमलदिग्धाङ्गी कथं यास्यामि भूपतिम् ॥ अपकृष्टास्मि तेनाहं त्रपया रघु
नन्दन ॥ श्रीभगवानुवाच ॥४८॥ इति श्रुत्वा प्रियावाक्यं रामो विस्मितमानसः ॥४९॥ आश्चर्य्यमिति तज्ज्ञात्वा तदा स्वस्थानमागमत् ॥ सीतया
पितरो दृष्टा यथा तत्ते निवेदितम् ॥ ५० ॥ अपरं श्राद्धमाहात्म्यं किञ्चिच्छृणु समासतः ॥ अमावस्यादिने प्राप्ते गृहद्वारे समास्थिताः ॥ ५१ ॥
वायुभूताः प्रवाञ्छन्ति श्राद्धं पितृगणा नृणाम् ॥ यावदस्तमयं भानोः क्षुत्पिपासासमाकुलाः ॥ ५२ ॥ ततश्चास्तं गते सूर्य्ये निराशा दुःखसंयुताः ॥
निःश्वसन्तश्चिरं यान्ति गर्हयन्तस्तु वंशजम् ॥ ५३ ॥ तस्माच्छ्राद्धं प्रयत्नेन अमायां कर्तुमर्हति ॥ यदि श्राद्धं प्रकुर्वन्ति पुत्राद्यास्तस्य बान्धवाः
॥ ५४ ॥ उद्धृता ये गयाश्राद्धे ब्रह्मलोकंच तैः सह ॥ भजन्ते क्षुत्पिपासा वा न तेषां जायते क्वचित् ॥ ५५ ॥ तस्माच्छ्राद्धं प्रयत्नेन सम्यक्कुर्याद्विच
क्षणः ॥ तस्माच्छ्राद्धं चरेद्भक्त्या शाकैरपि यथाविधि ॥५६॥ कुर्व्वीत समये श्राद्धं कुले कश्चिन्न सीदति ॥ आयुः पुत्रान्यशः स्वर्गं कीर्तिं पुष्टिं बलं
श्रियम् ॥ ५७ ॥ पशून्सौख्यं धनं धान्यं प्राप्नुयात्पितृपूजनात् ॥ देवकार्य्यादपि सदा पितृकार्य्यं विशिष्यते ॥ ५८ ॥ देवताभ्यः पितॄणां हि पूर्व्व
माप्यायनं शुभम् ॥ ये यजन्ति पितॄन्देवान्ब्राह्मणांश्च हुताशनम् ॥ ५९ ॥ सर्व्वभूतान्तरात्मानं मामेव हि यजन्ति ते ॥ स्मार्त्तेन विधिना श्राद्धं
कृत्वा स्वविभवोचितम् ॥ ६० ॥ आब्रह्मस्तम्बपर्य्यंतं जगत्प्रीणाति[1] मानवः ॥ अन्नप्रकिरणं यत्तु मनुष्यैः क्रियते भुवि ॥ ६१ ॥ तेन तृप्तिमुपायान्ति
ये पिशाचत्वमागताः ॥ यच्चाम्बु स्नानवस्त्रेभ्यो भूमौ पतति खेचर ॥ ६२ ॥ तेन ये तरुतां प्राप्तास्तेषां तृप्तिः प्रजायते ॥ यानि गन्धाम्बूनि चैव

१ प्रीणयतीत्यर्थः।

पतन्ति धरणीतले ॥ ६३ ॥ तेन चाप्यायनं तेषां ये देवत्वमुपागताः ॥ ये चापि स्वकुलाद्बाह्याः क्रियायोग्या ह्यसंस्कृताः ॥ ६४ ॥ विपन्नास्ते तु विकिरसम्मार्ज्जनजलाशिनः ॥ भुक्त्वा चाचमनं यच्च जलं यच्चाङ्घ्रि सेवितम् ॥ ६५ ॥ ब्राह्मणानां तथैवान्यत्तेन तृप्तिं प्रयान्ति वै ॥ पिशाचत्वमनुप्राप्ताः कृमिकीटत्वमेव ये ॥ ६६ ॥ उद्धृतेष्वन्नपिण्डेषु भुवि ये चान्नकांक्षिणः ॥ तैरेवाप्यायनं तेषां ये मनुष्यत्वमागताः ॥ ६७ ॥ एवं वै क्रियमाणानां तेषां चैव द्विजन्मनाम् ॥ कश्चिज्जलान्नविक्षेपः शुचिरुच्छिष्ट एव वा ॥ ६८ ॥ तेनान्नेन कुले तेषां ये वै जात्यन्तरं गताः ॥ भवत्याप्यायनं तेषां सम्यक् श्राद्धे कृते सति ॥ ६९ ॥ अन्यायोपार्ज्जितैर्द्रव्यैर्यच्छ्राद्धं क्रियते नरैः ॥ तृप्यन्ति तेन चण्डालाः पुक्कसाद्युपयोनिषु ॥ ७० ॥ एवं संप्राप्यते पक्षिन् यद्दत्तमिह बान्धवैः ॥ श्राद्धं कुर्व्वद्भिरन्नाम्बुशाकैस्तृप्तिर्हि जायते ॥ ७१ ॥ एतत्ते सर्व्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ सद्यो देहान्तरप्राप्तिर्विलंबेनावनीतले ॥ ७२ ॥ पृष्टवानसि तत्तेऽहं प्रवक्ष्यामि समासतः ॥ सद्यो विलम्बितश्चैवोभयथापि कलेवरम् ॥ ७३ ॥ यतो हि मर्त्यः प्राप्नोति तद्विशेषञ्च मे शृणु ॥ अधूमकज्योतिरिवांगुष्ठमात्रः पुमांस्ततः ॥ ७४ ॥ देहमेकं सद्य एव वायवीयं प्रपद्यते ॥ यथा तृणजलौका हि पश्चात्पादं नयेदग्रेत् ॥ ७५ ॥ स्थितिरग्र्यस्य पादस्य यदा जाता दृढा भवेत् ॥ एवं देही पूर्व्वदेहं समुत्सृजति तं यदा ॥ ७६ ॥ भोगार्थमग्रे स्याद्देहो वायवीय उपस्थितः ॥ विषयग्राहकं यद्वन्म्रियमाणस्य चेन्द्रियम् ॥ ७७ ॥ निर्व्यापारं तच्च देहे वायुनैव स गच्छति ॥ शरीरं यदवाप्नोति तच्चाप्युत्क्रम्यति स्वयम् ॥ ७८ ॥ गृहीत्वा स्वं विनिर्याति जीवो गर्भ इवाशयात् ॥ उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम् ॥ ७९ ॥ विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ आतिवाहिकमित्येवं वायवीयं वदन्ति हि ॥ ८० ॥ एवं तु यातुधानानां तमेव च वदन्ति हि ॥ सुपर्ण ईदृशो देहो नृणां भवति पिण्डजः ॥ ८१ ॥ पुत्रादिभिः कृताश्चेत्स्युः पिण्डा दश दशाहिकाः ॥ पिण्डजेन तु देहेन वायुजश्चैकतां व्रजेत् ॥ ८२ ॥ पिण्डजो यदि नैव स्याद्वायुजोऽर्हति यातनाम् ॥ देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ॥ तथा देहान्तरप्राप्तिः पक्षीन्द्रेत्यवधारय ॥ ८३ ॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ॥ तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ ८४ ॥ नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ॥ न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ ८५ ॥ वायवीयां तनुं याति सद्य इत्युक्तमेव ते ॥ प्राप्तिर्विलंबतो यस्य तं देहं खलु मे शृणु ॥ ८६ ॥ क्वचिद्विलंबतो देहं पिण्डजं स समाप्नुयात् ॥ अथो गतो याम्यलोकं स्वीयकर्म्मानुसारतः ॥ ८७ ॥ चित्रगुप्तस्य

१ पुरुषः कर्म्मणो वशात्० पा० । २ अयं श्लोकोग्रिमेध्यायेपि पठ्यते । ३ अयं श्लोकोष्टादशाध्यायेपि पठ्यते ।

वाक्येन निरयाणि भुनक्ति सः ॥ यातनास्समवाप्याथ पशुपक्ष्यादिकीं तनुम् ॥ ८८ ॥ या गृह्णाति नरः सा स्यान्मोहेन ममतास्पदम् ॥ शुभाशुभं कर्म्मफलं भुक्त्वा मुच्येत मानवः ॥ ८९ ॥ गरुड उवाच ॥ तीर्त्वा दुःखभवाम्भोधिं भवन्तं कथमाप्नुयात् ॥ बहुपातकयुक्तोऽपि तद्वदस्व दयानिधे ॥ ९० ॥ भूयो दुःखस्य संसर्गो नरस्य न भवेद्यथा ॥ ब्रूहि शुश्रूषमाणस्य पृच्छतो मे रमापते ॥ ९१ ॥ श्रीकृष्ण उवाच ॥ स्वेस्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः ॥ स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ९२ ॥ कर्म्मविभ्रष्टकालुष्यो वासुदेवानुचिन्तया ॥ बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ॥ ९३ ॥ शब्दादीन्विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ विरक्तसेवी लब्ध्वाशी यतवाक्कायमानसः ॥ ९४ ॥ ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः॥ अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥९५॥ विमुच्य निर्म्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ अतः परं नृणां कृत्यं नास्ति कश्यपनन्दन ॥९६॥ इति श्रीगारुडे महापु० उत्तरखण्डे द्विती० धर्म० प्रेतकल्पे श्रीकृष्णगरुडसंवादे श्राद्धस्य तृप्तिदत्वादिनिरूपणं नाम दशमोऽध्यायः॥१०॥ गरुड उवाच ॥ मानुषत्वं लभेत्कस्मान्मृत्युमाप्नोति तत्कथम् ॥ म्रियते कः सुरश्रेष्ठ देहमाश्रित्य कुत्रचित् ॥१॥इन्द्रियाणि कुतो यान्ति ह्यस्पृश्यः स कथं भवेत् ॥ क्व कर्म्माणि कृतानीह कथं भुंक्ते प्रसर्पति ॥ २ ॥ प्रसादं कुरु मे मोहं छेत्तुमर्हस्यशेषतः ॥ काश्यपोऽहं सुरश्रेष्ठ विनतागर्भसंभवः॥ यमलोकं कथं यांति विष्णुलोकं च मानवाः ॥३॥ श्रीकृष्ण उवाच ॥ परस्य योषितं हृत्वा ब्रह्मस्वमपहृत्य च ॥४॥ अरण्ये निर्ज्जने देशे जायते ब्रह्मराक्षसः ॥ हीनजातौ प्रजायेत रत्नानामपहारकः॥५॥ यंयं काममभिध्यायेत्स तल्लिङ्गोऽभिजायते ॥ नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ॥ ६ ॥ न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ वाक् चक्षुर्नासिका कर्णौ गुदं मूत्रस्य सञ्चरः॥७॥ अण्डजादिकजन्तूनां छिद्राण्येतानि सर्व्वशः॥ आनाभेर्मूर्धपर्य्यन्तमूर्ध्वंच्छिद्राणि चाष्ट वै ॥ ८ ॥ सन्तः सुकृतिनो मर्त्त्या ऊर्ध्वच्छिद्रेण यान्ति वै ॥ मृताहे वार्षिकं यावद्यथोक्तविधिना खग ॥ ९ ॥ कुर्य्यात्सर्व्वाणि कर्म्माणि निर्द्धनोऽपि हि मानवः ॥ देहे यत्र वसेज्जन्तुस्तत्र भुंक्ते शुभाशुभम् ॥ १० ॥ मनोवाक्कायजान्दोषांस्तथा भुंक्ते खगेश्वर ॥ मृतः स सुखमाप्नोति मायापाशैर्न बध्यते ॥ पाशबद्धो नरो यस्तु विकर्म्मनिरतो भवेत् ॥११॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे ऊर्ध्वाधोगतिज्ञापकोत्क्रमणद्वारनिरूपणं नामैकादशोऽध्यायः ॥११॥ श्रीकृष्ण उवाच ॥ एवं ते कथितस्तार्क्ष्य जीवितस्य विनिर्णयः ॥ मानुषाणां हितार्थाय प्रेतत्वविनिवृत्तये ॥ १ ॥ चतुरशीतिलक्षाणि चतुर्भेदाश्च जन्तवः ॥ अण्डजाः स्वेदजाश्चैव उद्भिज्जाश्च जरायुजाः ॥ २ ॥ एकविंशतिलक्षाणि अण्डजाः परिकीर्त्तिताः ॥ स्वेदजाश्च तथा प्रोक्ता उद्भिज्जाश्च क्रमेण तु ॥ ३ ॥ जरायुजास्तथा प्रोक्ता मनुष्या

१ अयं श्लोको एतत्पूर्वाध्यायेपि पठितः ।

द्यास्तथा परे ॥ सर्व्वेषामेव जन्तूनां मानुषत्वं हि दुर्लभम् ॥ ४ ॥ पञ्चेन्द्रियनिधानत्वं महापुण्यैरवाप्यते ॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्रास्तत्परजातयः ॥ ५ ॥ रजकश्चर्म्मकारश्च नटो बुरुड एव च ॥ कैवर्त्तमेदभिल्लाश्च सप्तैते ह्यन्त्यजाः स्मृताः ॥ ६ ॥ म्लेच्छतुम्बविभेदेन जातिभेदास्त्वनेकशः ॥ जन्तूनामेव सर्व्वेषां जातिभेदाः सहस्रशः ॥ ७ ॥ जन्तूनामेव सर्वेषां भेदाश्चैव सहस्रशः ॥ आहारो मैथुनं निद्रा भयं क्रोधस्तथैव च ॥ ८ ॥ सर्वेषामेव जन्तूनां विवेको दुर्लभः परः ॥ एकपादादिरूपेण देहभेदास्त्वनेकशः ॥ ९ ॥ कृष्णसारो मृगो यत्र धर्म्मदेशः स उच्यते ॥ ब्रह्माद्या देवताः सर्व्वास्तत्र तिष्ठन्ति सर्व्वशः ॥ १० ॥ भूतानां प्राणिनः श्रेष्ठाः प्राणिनां मतिजीविनः ॥ मतिमत्सु नराः श्रेष्ठा नरेषु ब्राह्मणाः स्मृताः ॥ ११ ॥ मानुष्यं यः समासाद्य स्वर्गमोक्षैकसाधकम् ॥ तयोर्न साधयेदेकं तेनात्मा वञ्चितो ध्रुवम् ॥ १२ ॥ इच्छति शती सहस्रं सहस्री लक्षमीहते कर्तुम् ॥ लक्षाधिपती राज्यं राजापि सकलां धरां लब्धुम् ॥ १३ ॥ चक्रधरोऽपि सुरत्वं सुरभावे सकलसुरपतिर्भवितुम् ॥ सुरपतिरूर्ध्वगतित्वं तथापि न निवर्त्तते तृष्णा ॥ १४ ॥ तृष्णया चाभिभूतस्तु नरकं प्रतिपद्यते ॥ तृष्णामुक्तास्तु ये केचित्स्वर्गवासं लभन्ति ते ॥ १५ ॥ आत्माधीनः पुमाँल्लोके सुखी भवति निश्चितम् ॥ शब्दः स्पर्शश्च रूपं च रसो गन्धश्च तद्गुणाः ॥ १६ ॥ तथा च विषयाधीनो दुःखी भवति निश्चितम् ॥ १७ ॥ कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्च ॥ एकः प्रमादी स कथं न हन्यते यः सेवते पञ्चभिरेव पंच ॥ १८ ॥ पितृमातृमयो बाल्ये यौवने दयितामयः ॥ पुत्रपौत्रमयश्चान्ते मूढो नात्ममयः क्वचित् ॥ १९ ॥ लोहदारुमयैः पाशैः पुमान्बद्धो विमुच्यते ॥ पुत्रदारमयैः पाशैर्नैव बद्धो विमुच्यते ॥ २० ॥ एकः करोति पापानि फलं भुंक्ते महाजनः ॥ भोक्तारो विप्रमुच्यन्ते कर्त्ता दोषेण लिप्यते ॥ २१ ॥ कोऽपि मृत्युं न जयति बालो वृद्धो युवापि वा ॥ सुखदुःखाधिको वापि पुनरायाति याति च ॥२२॥ सर्व्वेषां पश्यतामेव मृतः सर्व्वं परित्यजेत् ॥ एकः प्रजायते जन्तुरेक एव प्रलीयते॥२३॥एकोऽपि भुंक्ते सुकृतमेक एव च दुष्कृतम् ॥ मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ॥२४॥बान्धवा विमुखा यान्ति धर्म्मस्तमनुगच्छति ॥ गृहेष्वर्था निवर्त्तन्ते श्मशानान्मित्रबान्धवाः ॥ २५ ॥ शरीरं वह्निरादत्ते सुकृतं दुष्कृतं व्रजेत् ॥ शरीरं वह्निना दग्धं पुण्यं पापं सह स्थितम् ॥ २६ ॥ शुभं वा यदि वा पापं भुङ्क्ते सर्वत्र मानवः ॥ यदनस्तमिते सूर्य्ये न दत्तं धनमर्थिनाम् ॥ २७ ॥ न जाने तस्य तद्वित्तं प्रातः कस्य भविष्यति ॥ रारटीति धनं तस्य को मे भर्त्ता भविष्यति ॥ २८ ॥ न दत्तं द्विजमुख्येभ्यः परोपकृतये तथा ॥ पूर्वजन्मकृतात्पुण्याद्यल्लब्धं बहु चाल्पकम् ॥ २९ ॥ तदीदृशं परिज्ञाय धर्म्मार्थं दीयते धनम् ॥ धनेन धार्यते धर्म्मः श्रद्धापूतेन चेतसा ॥ ३० ॥ श्रद्धाविरहितो धर्म्मो नेहामुत्र च तत्फलम् ॥ धर्म्माच्च

जायते ह्यर्थो धर्म्मात्कामोऽपि जायते ॥ ३१ ॥ धर्म्म एवापवर्गाय तस्माद्धर्म्मं समाचरेत् ॥ श्रद्धया साध्यते धर्म्मो बहुभिर्नार्थराशिभिः ॥ ३२ ॥ अकिञ्चना हि मुनयः श्रद्धावन्तो दिवं गताः ॥ अश्रद्धया हुतं दत्तं तपस्ततं कृतं च यत् ॥ असदित्युच्यते पक्षिन्प्रेत्य चेह न तत्फलम् ॥३३॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मका० प्रेतकल्पे श्रीकृष्णगरुडसंवादे मृतस्य धर्ममात्रानुयायित्वनिरूपणं नाम द्वादशोऽध्यायः ॥१२॥ गरुड उवाच ॥ कर्म्मणा केन देवेश प्रेतत्वं नैव जायते ॥ पृथिव्यां सर्व्वजन्तूनां तद् ब्रूहि परमेश्वर ॥ १ ॥ श्रीकृष्ण उवाच ॥ अथ वक्ष्यामि संक्षेपात्क्षयाहादौर्ध्वदैहिकम् ॥ स्वहस्तेनैव कर्त्तव्यं मोक्षकामैस्तु मानवैः ॥ २ ॥ स्त्रीणामपि विशेषेण पञ्चवर्षाधिके शिशौ ॥ वृषोत्सर्गादिकं कर्म्म प्रेतत्वविनिवृत्तये ॥ वृषोत्सर्गादृते नान्यत्किञ्चिदस्ति महीतले ॥ ३ ॥ जीवन्वापि मृतो वापि वृषोत्सर्गं करोति यः ॥ प्रेतत्वं न भवेत्तस्य विना दानमखव्रतैः ॥ ४ ॥ गरुड उवाच ॥ कस्मिन्काले वृषोत्सर्गं जीवन्वापि मृतोऽपि वा ॥ कुर्य्यात्सुरवरश्रेष्ठ ब्रूहि मे मधुसूदन ॥ ५ ॥ किं फलं तु भवेदन्ते कृतैः श्राद्धैस्तु षोडशैः ॥ ६ ॥ श्रीकृष्ण उवाच ॥ अकृत्वा तु वृषोत्सर्गं कुरुते पिण्डपातनम् ॥ नोपतिष्ठति तच्छ्रेयो दातुः प्रेतस्य निष्फलम् ॥ ७ ॥ एकादशाहे प्रेतस्य यस्य नोत्सृज्यते वृषः ॥ प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥८॥ गरुड उवाच ॥ सर्पाद्धि प्राप्तमृत्यूनामग्निदाहादि न क्रिया ॥ जलेन शृङ्गिणा वापि शस्त्राद्यैर्म्रियते यदि ॥ ९ ॥ असन्मृत्युमृतानां च कथं शुद्धिर्भवेत्प्रभो ॥ एतन्मे संशयं देव च्छेत्तुमर्हस्यशेषतः ॥ १० ॥ श्रीकृष्ण उवाच ॥ षण्मासैर्ब्राह्मणः शुध्येद्युग्मे सार्द्धे तु बाहुजः ॥ सार्द्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति ॥ ११ ॥ दत्त्वा दानान्यशेषाणि सुतीर्थे म्रियते यदि ॥ ब्रह्मचारी शुचिर्भूत्वा न स यातीह दुर्गतिम् ॥ १२ ॥ वृषोत्सर्गादिकं कृत्वा यतिधर्म्मं समाचरेत् ॥ यतित्वे मृत्युमाप्नोति स गच्छेद्ब्रह्म शाश्वतम् ॥ १३ ॥ विकर्म्म कुरुते यस्तु शिष्टाचारविवर्जितः ॥ वृषोत्सर्गादिकं कृत्वा न गच्छेद्यमशासनम् ॥ १४ ॥ पुत्त्रो वा सोदरो वापि पौत्रो बन्धुजनस्तथा ॥ गोत्रिणश्चार्थभागी च मृते कुर्य्याद् वृषोत्सवम् ॥ १५ ॥ पुत्राभावे तु पत्नी स्याद्दौहित्त्रो दुहितापि वा ॥ पुत्त्रेषु विद्यमानेषु वृषं नान्येन कारयेत् ॥ १६ ॥ गरुड उवाच ॥ पुत्त्रा यस्य न विद्यन्ते नरा नार्य्यः सुरेश्वर ॥ एतन्मे संशयं देव च्छेत्तुमर्हस्यशेषतः ॥ १७ ॥ श्रीकृष्ण उवाच ॥ अपुत्त्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ॥ तस्मात्केनाप्युपायेन पुत्त्रस्य जननं चरेत् ॥ १८ ॥ यानि कानि च दानानि स्वयं दत्तानि मानवैः ॥ तानितानि च सर्व्वाणि तूपतिष्ठन्ति चाग्रतः ॥ १९ ॥ व्यञ्जनानि विचित्राणि भक्ष्यभोज्यानि यानि च ॥ स्वहस्तेन प्रदत्तानि देहान्ते चाक्षयं फलम् ॥ २० ॥ गोभूहिरण्यवासांसि भोजनानि पदानि च ॥ यत्रयत्र वसेज्जन्तुस्तत्रतत्रोपतिष्ठति ॥२१॥ यावत्स्वस्थं शरीरं हि तावद्धर्म्मं

समाचरेत् ॥ अस्वस्थः प्रेरितश्चान्यैर्नकिञ्चित्कर्तुमर्हति ॥ २२ ॥ जीवतोऽपि मृतस्येह न भूतं चौर्द्ध्वदैहिकम् ॥ वायुभूतः क्षुधाविष्टो भ्रमते च दिवानिशम् ॥ २३ ॥ कृमिःकीटःपतङ्गो वा जायते म्रियते पुनः ॥ असद्गर्भे भवेत्सोऽपि जातः सद्यो विनश्यति ॥ २४ ॥ यावत्स्वस्थमिदं शरीरमरुजं यावज्जरा दूरतो यावच्चेन्द्रियशक्तिरप्रतिहता यावत्क्षयो नायुषः ॥ आत्मश्रेयसि तावदेव विदुषा कार्य्यः प्रयत्नो महान्सन्दीप्ते भवने तु कूपखननं प्रत्युद्यमः कीदृशः ॥ २५ ॥ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे वृषोत्सर्गदानधर्मपुत्रादिप्रशंसनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ गरुड उवाच ॥ ॥ आर्त्तेन म्रियमाणेन यद्दत्तं तत्फलं वद ॥ स्वस्थावस्थेन दत्तेन विधिहीनेन वा विभो ॥ १ ॥ श्रीकृष्ण उवाच ॥ एका गौः स्वस्थचित्तस्य ह्यातुरस्य च गोशतम् ॥ सहस्रं म्रियमाणस्य दत्तं वित्तविवर्ज्जितम् ॥ २ ॥ मृतस्यैव पुनर्लक्षं विधिपूतं च तत्समम् ॥ तीर्थपात्रसमायोगादेका गौर्लक्षपुण्यदा ॥ ३ ॥ पात्रे दत्ते खगश्रेष्ठ अहन्यहनि वर्द्धते ॥ दातुर्दानमपापाय ज्ञानिनां च प्रतिग्रहः॥४॥ विषशीतापहो मन्त्रवह्निः किं दोषभाजनम् ॥ दातव्यं प्रत्यहं पात्रे निमित्तेषु विशेषतः ॥ ५ ॥ नापात्रे विदुषा किंचिदात्मनः श्रेय इच्छता ॥ अपात्रे जातु गौर्दत्ता दातारं नरकं नयेत् ॥ ६ ॥ कुलैकविंशतियुतं ग्रहीतारं च पातयेत् ॥ देहान्तरं परिप्राप्य स्वहस्तेन कृतं च यत् ॥ ७ ॥ धनं भूमिगतं यद्वत्स्वहस्तेन निवेशितम् ॥ तद्वत्फलमवाप्नोति ह्यहं वच्मि खगेश्वर ॥ ८ ॥ अपुत्रोऽपि विशेषेण क्रियां चैवौर्ध्वदैहिकीम् ॥ प्रकुर्यान्मोक्षकामश्च निर्धनश्च विशेषतः ॥ ९ ॥ स्वल्पेनापि हि वित्तेन स्वयं हस्तेन यत्कृतम् ॥ अक्षयं याति तत्सर्वं यथाज्यं च हुताशने ॥ १० ॥ एका चैकस्य दातव्या शय्या कन्या पयस्विनी ॥ सा विक्रीता विभक्ता वा दहत्यासप्तमं कुलम् ॥ ११ ॥ तस्मात्सर्वं प्रकुर्वीत चंचले जीविते सति ॥ गृहीतदानपाथेयः सुखं याति महाध्वनि ॥ १२ ॥ अन्यथा क्लिश्यते जन्तुः पाथेयरहितः पथि ॥ एवं ज्ञात्वा खगश्रेष्ठ वृषयज्ञं समाचरेत् ॥१३॥ अकृत्वा म्रियते यस्तु अपुत्रो नैव मुक्तिभाक् ॥ अपुत्रोऽपि हि यः कुर्य्यात्सुखं याति महापथे ॥ १४ ॥ अग्निहोत्रादिभिर्यज्ञैर्दानैश्च विविधैरपि ॥ न तां गतिमवाप्नोति वृषोत्सर्गेण या गतिः ॥ १५ ॥ यज्ञानां चैव सर्व्वेषां वृषयज्ञस्तथोत्तमः ॥ तस्मात्सर्व्वप्रयत्नेन वृषयज्ञं समाचरेत् ॥ १६ ॥ गरुड उवाच ॥ कथयस्व प्रसादेन क्षयाहं चौर्ध्वदैहिकम् ॥ कस्मिन्काले तिथौ कस्यां विधिना केन तद्भवेत् ॥ १७ ॥ कृत्वा किं फलमाप्नोति एतन्मे वद साम्प्रतम् ॥ त्वत्प्रसादेन गोविन्द मुक्तो भवति मानवः ॥ १८ ॥ श्रीकृष्ण उवाच ॥ कार्त्तिकादिषु मासेषु याम्यायनगते रवौ ॥ शुक्लपक्षे तथा पक्षिन्द्वादश्यादितिथौ

---

१ स्वहस्तैः किं फलं देव परहस्तैश्च तद्वद ॥ स्वस्थावस्थैरसंज्ञैर्वा० पा० ।

शुभे ॥ १९ ॥ शुभे लग्ने मुहूर्त्ते वा शुचौ देशे समाहितः ॥ ब्राह्मणं तु समाहूय विधिज्ञं शुभलक्षणम् ॥२०॥ जपहोमैस्तथा दानैः कुर्य्याद्देहस्य शोधनम् ॥ पुण्येऽभिजित्सुनक्षत्रे ग्रहान्देवान्समर्च्चयेत् ॥ २१ ॥ होमं कुर्य्याद्यथाशक्ति मन्त्रैश्च विविधैरपि ॥ ग्रहाणां स्थापनं कुर्य्यात्पूर्वं चैव खगेश्वर ॥ २२ ॥ मातॄणां पूजनं कार्य्यं वसोर्धारां च पातयेत् ॥ वह्निं संस्थाप्य तत्रैव पूर्णं होमं तु कारयेत् ॥ २३ ॥ शालग्रामं च संस्थाप्य वैष्णवं श्राद्धमाचरेत् ॥ वृषं सम्पूज्य तत्रैव वस्त्रालंकारभूषणैः ॥ २४ ॥ चतस्रो वत्सतर्य्यश्च पूर्वं समधिवासयेत् ॥ प्रदक्षिणं ततः कुर्य्याद्धोमान्ते च विसर्ज्जनम् ॥ २५ ॥ इमं मन्त्रं समुच्चार्य उत्तराभिमुखः स्थितः ॥ धर्म्म त्वं वृषरूपेण ब्रह्मणा निर्म्मितः पुरा ॥ २६ ॥ तवोत्सर्गप्रभावान्मामुद्धरस्व भवार्णवात् ॥ अभिषिच्य शुभैर्मन्त्रैः पावनैर्विधिपूर्वकम् ॥ २७ ॥ तेनक्रीडन्तिमन्त्रेण वृषोत्सर्गं तु कारयेत् ॥ अभिषिंचेत्ततो नीलं रुद्रकुम्भोदकेन तु ॥ २८ ॥ नाभिमूले समास्थाय तदम्बु मूर्धनि न्यसेत् ॥ अत्र ( आत्म ) श्राद्धं ततः कुर्य्याद्दद्याद्दानं द्विजोत्तमे ॥ २९ ॥ उदके चैव गन्तव्यं जलं तत्र प्रदापयेत् ॥ यदिष्टं जीवतस्त्वासीत्तच्च दद्यात्स्वशक्तितः ॥ ३० ॥ न्यूनं संपूर्णतां याति वृषोत्सर्गे कृते सति ॥ सुतृप्तो दुस्तरे मार्गे मृतो याति न संशयः ॥३१॥ यमलोकं न पश्यन्ति सदा दानरता नराः ॥ यावन्न दीयते जन्तोः श्राद्धं चैकादशाहिकम् ॥३२॥ स्वदत्तं परदत्तं वा नेहामुत्रोपतिष्ठति ॥ त्रयोदश तथा सप्त पञ्च त्रीणि क्रमेण तु ॥ ३३ ॥ पददानानि कुर्व्वीत श्रद्धाभक्तिसमन्वितः ॥ तिलपात्राणि कुर्व्वीत सप्त पञ्च यथाक्रमम् ॥३४॥ ब्राह्मणान् भोजयेत्पश्चादेकां गां च प्रदापयेत् ॥ वृषं हि शन्नोदेवीति वेदोक्तविधिना ततः ॥ ३५ ॥ चतसृभिर्वत्सतरीभिः परिणयनमाचरेत् ॥ वामे चक्रं प्रदातव्यं त्रिशूलं दक्षिणे तथा ॥३६॥ मूल्यं दद्याद् वृषस्यापि तं वृषं च विसर्ज्जयेत् ॥ एकोद्दिष्टविधानेन स्वाहाकारेण बुद्धिमान् ॥ ३७ ॥ कुर्य्यादेकादशाहं च द्वादशाहं च यत्नतः ॥ सपिण्डीकरणादर्व्वाक्कुर्य्याच्छ्राद्धानि षोडश ॥ ३८ ॥ ब्राह्मणान् भोजयित्वा तु पददानानि दापयेत् ॥ कार्पासोपरि संस्थाप्य ताम्रपात्रे तथाच्युतम् ॥ ३९ ॥ वस्त्रेणाच्छाद्य तत्रस्थमर्घं दद्याच्छुभैः फलैः ॥ नावमिक्षुमयीं कृत्वा पट्टसूत्रेण वेष्टयेत् ॥ ४० ॥ कांस्यपात्रे घृतं स्थाप्य वैतरण्या निमित्ततः ॥ नावआरोहणं कुर्य्यात्पूजयेद्गरुडध्वजम् ॥ ४१ ॥ आत्मवित्तानुसारेण तच्च दानमनन्तकम् ॥ भवसागरमग्नानां शोकतापार्तिदुःखिनाम् ॥ ४२ ॥ धर्मप्लवविहीनानां तारको हि जनार्दनः ॥ तिला लोहं हिरण्यं च कार्पासं लवणं तथा ॥ ४३ ॥ सप्तधान्यं क्षितिर्गावो ह्येकैकं पावनं स्मृतम् ॥ तिलपात्राणि कुर्व्वीत शय्यादानं च दापयेत् ॥ ४४ ॥



१ दर्भमूले० । २ अत्र श्रा० ।

दीनानाथविशिष्टेभ्यो दद्याच्छक्त्या च दक्षिणाम् ॥ एवं यः कुरुते तार्क्ष्य पुत्रवानप्यपुत्रवान् ॥ ४५ ॥ स सिद्धिं समवाप्नोति यथा ते ब्रह्मचारिणः ॥
नित्यं नैमित्तिकं कुर्य्याद्यावज्जीवति मानवः ॥ ४६ ॥ यः कश्चित्क्रियते धर्म्मस्तत्फलं चाक्षयं भवेत् ॥ तीर्थयात्राव्रतादीनां श्राद्धं संवत्सरस्य हि
॥ ४७ ॥ देवतानां गुरूणां च मातापित्रोस्तथैव च ॥ पुण्यं देयं प्रयत्नेन प्रत्यहं वर्द्धते खग ॥ ४८ ॥ अस्मिन्यज्ञे हि यः कश्चिद्भूरिदानं प्रयच्छति ॥
तत्तस्य चाक्षयं सर्वं वेदिकायां यथा किल ॥ ४९ ॥ यथा पूज्यतमा लोके यतयो ब्रह्मचारिणः ॥ तथैव प्रतिपूज्यन्ते लोके सर्वे च नित्यशः ॥ ५० ॥
वरदोऽहं सदा तस्य चतुर्व्वक्त्रस्तथा हरः ॥ ते यान्ति परमाँल्लोकानिति सत्यं वचो मम ॥ ५१ ॥ उत्सृष्टो वृषभो यत्र पिबत्यपो जलाशये ॥ शृङ्गे
णालिखते वापि भूमिं नित्यं प्रहर्षितः ॥ ५२ ॥ पितॄणामन्नपानं च प्रभूतमुपतिष्ठति ॥ पौर्णमास्याममायां वा तिलपात्राणि दापयेत् ॥ ५३ ॥ संक्रा
न्तीनां सहस्राणि सूर्य्यपर्व्वशतानि च ॥ दत्त्वा यत्फलमाप्नोति तद्वै नीलविसर्ज्जने ॥ ५४ ॥ वत्सतर्य्यः प्रदातव्या ब्राह्मणेभ्यः पदानि च ॥ तिलपा
त्राणि देयानि शिवभक्तद्विजेषु च ॥ ५५ ॥ उमामहेश्वरं चैकं परिधाप्य प्रदापयेत् ॥ अतसीपुष्पसङ्काशं पीतवाससमच्युतम् ॥ ५६ ॥ ये नमस्यन्ति
गोविन्दं न तेषां विद्यते भयम् ॥ प्रेतत्वान्मोक्षमिच्छन्तो ये करिष्यन्ति सत्क्रियाम् ॥ ५७ ॥ यास्यन्ति ते पराँल्लोकानिति सत्यं वचो मम ॥ एतत्ते
सर्व्वमाख्यातं मया चैवौर्द्ध्वदैहिकम् ॥ ५८ ॥ यच्छ्रुत्वा सर्व्वपापेभ्यो मुच्यते नात्र संशयः ॥ श्रुत्वा माहात्म्यमतुलं गरुडो हर्षमागतः ॥ मानुषाणां
हितार्थाय पुनः प्रपच्छ केशवम् ॥ ५९ ॥ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे गोदानवृषो
त्सर्गदशदानभूरिदानादिनिरूपणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ गरुड उवाच ॥ भगवन्ब्रूहि मे सर्व्वं यमलोकस्य निर्णयम् ॥ जन्तोःप्रयाणमारभ्य
माहात्म्यं वर्त्मविस्तरम् ॥ १ ॥ श्रीभगवानुवाच ॥ शृणु तार्क्ष्य प्रवक्ष्यामि यममार्गस्य निर्णयम् ॥ प्रयाणकानि सर्व्वाणि नगराणि च षोडश ॥ २ ॥
षडशीतिसहस्राणि योजनानां प्रमाणतः ॥ यमलोकस्य चोर्द्ध्वं वै अन्तरा मानुषस्य च ॥ ३ ॥ सुकृतं दुष्कृतं वापि भुक्त्वा लोके यथार्जितम् ॥
कर्म्मयोगाद्यदा कश्चिद्व्याधिरुत्पद्यते खग ॥ ४ ॥ निमित्तमात्रं सर्व्वेषां कृतकर्म्मानुसारतः ॥ यस्य यो विहितो मृत्युः स तं ध्रुवमवाप्नुयात् ॥ ५ ॥
कर्म्मयोगाद्यदा देही मुञ्चत्यत्र निजं वपुः ॥ तदा भूमिगतं कुर्य्याद्गोमयेनोपलिप्य च ॥ ६ ॥ तिलान्दर्भान्विकीर्य्याथ मुखे स्वर्णं विनिःक्षिपेत् ॥
तुलसीसन्निधौ कृत्वा शालग्रामशिलां तथा ॥ ७ ॥ सेतु ( एवं ) सामादिसूक्तैस्तु मरणं मुक्तिदायकम् ॥ शलाकास्वर्णविक्षेपैः प्रेतप्राणिगृहेषु

१ पौर्णमास्यां च रेवत्यां० । २ भूयः पप्रच्छ देवेशं कृत्वा चानतकन्धरः० पा० । ३ प्रमाणं विस्तरं तस्य माहात्म्यं च सुविस्तरम्० पा० ।

च ॥ ८ ॥ एका वक्के तु दातव्या घ्राणयुग्मे तथा पुनः ॥ अक्ष्णोश्च कर्णयोश्चैव द्वे द्वे देये यथाक्रमम् ॥ ९ ॥ अथ लिङ्गे तथा चैका त्वेकां ब्रह्माण्डके
क्षिपेत् ॥ करयुग्मे च कण्ठे च तुलसीं च प्रदापयेत् ॥ १० ॥ वस्त्रयुग्मं च दातव्यं कङ्कुमैश्चाक्षतैर्यजेत् ॥ पुष्पमालायुतं कुर्यादन्यद्वारेण सन्नयेत
॥ ११ ॥ पुत्रस्तु बान्धवैः सार्द्धं विप्रस्तु पुरवासिभिः ॥ पितुः प्रेतं स्वयं पुत्रः स्कन्धमारोप्य बान्धवैः ॥ १२ ॥ गत्वा श्मशानदेशे तु प्राङ्मुख
श्चोत्तरामुखम् ॥ अदग्धपूर्वा या भूमिश्चितां तत्रैव कारयेत् ॥ १३ ॥ श्रीखण्डतुलसीकाष्ठसमित्पालाशसंभृताम् ॥ विकलेन्द्रियसङ्घाते चैतन्ये
जडतां गते ॥ १४ ॥ प्रचलन्ति ततः प्राणा याम्यैर्निकटवर्तिभिः ॥ एकीभूतं जगत्पश्येद्दैवी दृष्टिः प्रजायते ॥ १५ ॥ बीभत्सं दारुणं रूपं
प्रणैः कण्ठं समाश्रितैः ॥ फेनमुद्गिरते कोपि मुखं लालाकुलं भवेत् ॥ १६ ॥ दुरात्मानश्च ताड्यन्ते किंकरैः पाशबन्धनैः ॥ सुखेन कृतिनस्तत्र
नीयन्ते नाकनायकैः ॥ १७ ॥ दुःखेन पापिनो यान्ति यममार्गे च दुर्गमे ॥ यमश्चतुर्भुजो भूत्वा शंखचक्रगदादिभृत् ॥ १८ ॥ पुण्यकर्म्म
रतान्सम्यक् शुभान्मित्रवदाचरेत् ॥ आहूय पापिनः सर्व्वान्यमो दण्डेन तर्जयेत् ॥ १९ ॥ प्रलयाम्बुदनिर्घोषस्त्वञ्जनाद्रिसमप्रभः ॥ महि
षस्थो दुराराध्यो विद्युत्तेजःसमद्युतिः ॥ २० ॥ योजनत्रयविस्तारदेहो रौद्रोऽतिभीषणः ॥ लोहदण्डधरो भीमः पाशपाणिर्दुराकृतिः ॥ २१ ॥
वक्रनेत्रोऽतिभयदो दर्शनं याति पापिनाम् ॥ अंगुष्ठमात्रः पुरुषो हाहा कुर्व्वन् कलेवरात् ॥ २२ ॥ तदैव नीयते दूतैर्याम्यैर्वीक्षन्स्वकं गृहम् ॥
निर्व्विचेष्टं शरीरं तु प्राणैर्मुक्तं जुगुप्सितम् ॥ २३ ॥ अस्पृश्यं जायते तूर्णं दुर्गंधं सर्वनिन्दितम् ॥ त्रिधावस्था हि देहस्य कृमिविड्भस्मसं
ज्ञिता ॥ २४ ॥ को गर्वः क्रियते तार्क्ष्य क्षणविध्वंसिभिर्नरैः ॥ दानं वित्तादृता वाचः कीर्त्तिधर्म्मौ तथायुषः ॥ २५ ॥ परोपकरणं कायादसतः
सारमुद्धृतम् ॥ तस्यैवं नीयमानस्य दूताः सन्तर्जयन्ति हि ॥ २६ ॥ दर्शयन्तो भयं तीव्रं नरकाय पुनःपुनः ॥ शीघ्रं प्रचल दुष्टात्मन् गतोऽसि
त्वं यमालये ॥ २७ ॥ कुंभीपाकादिनरकांस्त्वां नेष्यामश्च मा चिरम् ॥ एवं वाचस्तदा शृण्वन्बन्धूनां रुदितं तथा ॥ २८ ॥ उच्चैर्हाहेति विलपन्नीयते
यमकिंकरैः ॥ स्थाने श्राद्धं प्रकुर्व्वीत तथा चेकादशेऽहनि ॥ २९ ॥ मृतस्योत्क्रान्तिसमयात्षट् पिण्डान्क्रमशो ददेत् ॥ मृतस्थाने तथा द्वारे चत्वरे
तार्क्ष्य कारणात् ॥ ३० ॥ विश्रामे काष्ठचयने तथा सञ्चयने च षट् ॥ शृणु तत्कारणं तार्क्ष्य षट् पिण्डपरिकल्पने ॥ ३१ ॥ मृतस्थाने शवो
नाम तेन नाम्ना प्रदीयते ॥ तेन दत्तेन तृप्यन्ति गृहवास्त्वधिदेवताः ॥ ३२ ॥ तेन भूमिर्भवेत्तुष्टातदधिष्ठातृदेवता ॥ द्वारे तु पिण्डं देयं च पान्थ
मित्यभिधाय तु ॥ ३३ ॥ दत्तेन तेन प्रीणन्ति द्वारस्था गृहदेवताः ॥ चत्वरे खेचरो नाम तमुद्दिश्य प्रदापयेत् ॥ ३४ ॥ न चोपघातं कुर्व्वन्ति

भूताद्या देवयोनयः ॥ विश्रामे भूतसंज्ञोऽयं तेन तत्र प्रदापयेत् ॥ ३५ ॥ पिशाचा राक्षसा यक्षा ये चान्ये दिशि वासिनः ॥ तस्य होतव्यदेहस्य नैवायोग्यत्वकारकाः ॥ ३६ ॥ चितां[1]पिण्डप्रभृतितः प्रेतत्वमुपजायते ॥ चितायां साधकं नाम वदन्त्येके खगेश्वर ॥ ३७ ॥ केचित्तं प्रेतमेवाहुर्यथा कल्पविदो बुधाः ॥ तदादि तत्रतत्रापि प्रेतनाम्ना प्रदीयते ॥ ३८ ॥ इत्येवं पञ्चभिः पिण्डैः शवस्याहुतियोग्यता ॥ अन्यथा चोपघाताय पूर्वोक्तास्ते भवन्ति हि ॥ ३९ ॥ उत्क्रामे प्रथमं पिण्डं तथा चार्धपथेऽपि च ॥ चितायां तु तृतीयं स्यात्त्रयः पिण्डाश्च कल्पिताः ॥ ४० ॥ विधाता प्रथमे पिण्डे द्वितीये गरुडध्वजः ॥ तृतीये यमदूताश्च प्रयोगः परिकीर्तितः ॥ ४१ ॥ दत्ते तृतीये पिण्डेऽस्मिन्देहदोषैः प्रमुच्यते ॥ आधारभूतजीवश्च ज्वलनैर्ज्वालयेच्चिताम् ॥ ४२ ॥ संमृज्य चोपलिप्याथ उल्लिख्योद्धृत्य वेदिकाम् ॥ अभ्युक्ष्योपसमाधाय वह्निं तत्र विधानतः ॥ ४३ ॥ पुष्पाक्षतैश्च सम्पूज्य देवं क्रव्यादसंज्ञकम् ॥ त्वं भूतकृज्जगद्योने त्वं लोकपरिपालकः ॥ ४४ ॥ उपसंहारकस्तस्मादेनं स्वर्गं मृतं नय ॥ इति क्रव्यादमभ्यर्च्य शरीराहुतिमाचरेत् ॥ ४५ ॥ अर्द्धदग्धे[2] तथा देहे दद्यादाज्याहुतिं ततः ॥ लोमभ्यः स्वेतिवाक्येन कुर्याद्धोमं यथाविधि ॥ ४६ ॥ चितामारोप्य तं प्रेतं हुनेदाज्याहुतिं ततः ॥ यमाय चान्तकायेति मृत्यवे ब्रह्मणे तथा ॥ ४७ ॥ जातवेदोमुखे देया एका प्रेतमुखे तथा ॥ ऊर्ध्वं तु ज्वालयेद्वह्निं पूर्वभागे चितां पुनः ॥ ४८ ॥ अस्मात्त्वमधिजातोसि त्वदयं जायतां पुनः ॥ असौ स्वर्गाय लोकाय स्वाहा ज्वलति पावकः ॥ ४९ ॥ एवमाज्याहुतिं दत्त्वा तिलमिश्रां समन्त्रकाम् ॥ ततो दाहः प्रकर्तव्यः पुत्रेण किल निश्चितम् ॥ ५० ॥ रोदितव्यं ततो गाढमेवं तस्य सुखं भवेत् ॥ दाहस्यानन्तरं तत्र कृत्वा सञ्चयनक्रियाम् ॥ ५१ ॥ प्रेतपिण्डं प्रदद्याच्च दाहार्तिशमनं खग ॥ तावद्भूताः प्रतीक्षन्ते तं प्रेतं बान्धवार्थिनम् ॥ ५२ ॥ दाहस्यानन्तरं कार्य्यं पुत्रैः स्नानं सचैलकम् ॥ तिलोदकं ततो दद्यान्नामगोत्रेण तिष्ठतु ॥ ५३ ॥ ततो जनपदैः सर्वैर्दातव्या करतालिका ॥ विष्णुर्विष्णुरिति ब्रूयाद्गुणैः प्रेतमुदीरयेत् ॥ ५४ ॥ जनाः सर्वे समास्तस्य गृहमागत्य सर्वशः॥ द्वारस्य दक्षिणे भागे गोमयं गौरसर्षपान् ॥५५॥ निधाय वरुणं देवमन्तर्धाय स्ववेश्मनि ॥ भक्षयेन्निम्बपत्राणि घृतं प्राश्य गृहं व्रजेत् ॥ ५६ ॥ केचिद्दुग्धेन सिञ्चन्ति चितास्थानं खगेश्वर ॥ अश्रुपातं न कुर्व्वीत दद्यादस्मै जलाञ्जलीन् ॥ ५७ ॥ श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः ॥ अतो न रोदितव्यं हि क्रियाः कार्य्याः स्वशक्तितः ॥ ५८ ॥ दुग्धं च मृन्मये पात्रे तोयं दद्याद्दिनत्रयम् ॥ सूर्य्ये चास्तं गते तार्क्ष्य वलभ्यां चत्वरेऽपि वा ॥ ५९ ॥ बद्धः संमूढहृदयो देहमिच्छन्कृतानुगः ॥

१ स्चितामोक्षप्रभृति० पा० । २ अर्धदेहे तथा दग्धे० पा० ।

श्मशानं चत्वरं गेहं वीक्षन्याम्यैः स नीयते ॥ ६० ॥ गर्ते पिण्डा दशाहं च दातव्याश्च दिनेदिने ॥ जलाञ्जलीः प्रदातव्याः प्रेतमुद्दिश्य नित्यशः ॥ ६१ ॥ तावद्वृद्धिश्च कर्त्तव्या यावत्पिण्डं दशाहिकम् ॥ पुत्रेण हि क्रिया कार्या भार्यया तदभावतः ॥ ६२ ॥ तदभावे च शिष्येण तदभावे सहोदरः ॥ श्मशाने चान्यतीर्थे वा जलं पिण्डं च दापयेत् ॥ ६३ ॥ ओदनांनि[1] च सक्तूंश्च शाकमूलफलादिना ॥ प्रथमेऽहनि यद्द्यात्तद्द्यादुत्तरेऽहनि ॥ ६४ ॥ दिनानि दश पिण्डांश्च कुर्व्वन्त्यत्र सुतादयः ॥ प्रत्यहं ते विभज्यन्ते चतुर्भागाः खगेश्वर ॥ ६५ ॥ भागद्वयं तु देहार्थं प्रीतिदं भूतपञ्चके ॥ तृतीयं यमदूतानां चतुर्थं चोपजीव्यति ॥ ६६ ॥ अहोरात्रैस्तु नवभिः प्रेतो निष्पत्तिमाप्नुयात् ॥ जन्तोर्निष्पन्नदेहस्य दशमे बलवत्क्षुधा ॥ ॥ ६७ ॥ न विधिर्नैव मन्त्रश्च न स्वधावाहनाशिषः ॥ नाम गोत्रं समुच्चार्य्य यद्दत्तं तद्दशाहिकम् ॥६८॥ दग्धे देहे पुनर्देहमेवमुत्पद्यते खग ॥ प्रथमेऽहनि यः पिण्डस्तेन मूर्द्धा प्रजायते ॥ ६९ ॥ ग्रीवा स्कन्धौ द्वितीये च तृतीये हृदयं भवेत् ॥ चतुर्थेन भवेत्पृष्ठं पञ्चमे नाभिरेव च ॥ ७० ॥ षष्ठे[2] सप्तमे कटी गुह्यमूरू चाप्यष्टमे तथा ॥ तालू पादौ च नवमे दशमेऽह्नि क्षुधा भवेत् ॥ ७१ ॥ देहं प्राप्तः क्षुधाविष्टो गृहे द्वारे च तिष्ठति ॥ दशमेऽहनि यः पिण्डस्तं दद्यादामिषेण तु ॥ ७२ ॥ यतो देहे समुत्पन्ने प्रेतोऽतीव क्षुधान्वितः ॥ अतस्त्वामिषबाह्येन क्षुधा तस्य न नश्यति ॥ ॥ ७३ ॥ एकादशे द्वादशाहे प्रेतो भुंक्ते दिनद्वयम् ॥ योषितः पुरुषस्यापि प्रेतशब्दं समुच्चरेत्[3] ॥ ७४ ॥ दीपमन्नं जलं वस्त्रं यत्किंचिद्वस्तु दीयते ॥ प्रेतशब्देन तद्देयं मृतस्यानन्ददायकम् ॥ ७५ ॥ त्रयोदशेऽह्नि स प्रेतो नीयते च महापथे ॥ पिण्डजं देहमाश्रित्य दिवा नक्तं बुभुक्षितः ॥ ७६ ॥ शीतोष्णशंकुक्रव्यादवह्निमार्गस्तु पापिनाम् ॥ क्षुधा तृष्णात्मिका चैव सर्व्व सौम्यं कृतात्मनाम् ॥ ७७ ॥ मार्गे चैतानि दुःखानि असिपत्रवनान्विते ॥ क्षुत्पिपासार्द्दितो नित्यं यमदूतैः प्रपीडितः ॥ ७८ ॥ अहन्यहनि वै प्रेतो योजनानां शतद्वयम ॥ चत्वारिंशत्तथा सप्त अहोरात्रेण गच्छति ॥ ७९ ॥ गृहीतो यमपाशैश्च हाहेति रुदित तु सः ॥ स्वगृहं तु परित्यज्य याम्यं पुरमनुव्रजेत् ॥ ८० ॥ क्रमेण याति स प्रेतः पुरं याम्यं शुभाशुभम् ॥ अतीत्य तानितान्येव मार्गे पुरवराणि च ॥८१॥ याम्यं सौरिपुरं नगेन्द्रभवनं गन्धर्व्वशैलागमौ[4] ॥ क्रौञ्चं क्रूरपुरं विचित्रभवनं बह्वापदं दुःखदम् ॥ ८२ ॥ नानाक्रन्दपुरं सुतप्तभवनं रौद्रं पयोवर्षणं शीताढ्यं बहुधर्म्मभीतिभवनं याम्यं पुरं चाग्रतः ॥ ८३ ॥ त्रयोदशेऽह्नि स प्रेतो गृहीतो यमकिंकरैः ॥

१ ओदनामिषसक्तूंश्च० पा० । २ षष्ठे च सप्तमे चैव कटिर्गुह्यं प्रजायते ॥ ऊरू चाष्टमके चैव जान्वंघ्री नवमे तथा ॥ नवभिर्देहमासाद्य दशमे० पा० । ३ आत्मनेपदमार्षम् । ४ गन्धर्वशिलागमं० ।

तस्मिन्मार्गे व्रजत्येको गृहीत इव मर्कटः ॥ ८४ ॥ तथैव स व्रजन्मार्गे पुत्रपुत्रेति च ब्रुवन् ॥ हाहेति क्रन्दते नित्यं कीदृशं तु मया कृतम् ॥ ८५ ॥ मानुष्यं लभ्यते कस्मादिति ब्रूते प्रसर्पति ॥ महता पुण्ययोगेन मानुष्यं जन्म लभ्यते ॥ ८६ ॥ न तत्प्राप्य प्रदत्तं हि याचकेभ्यः स्वकं धनम् ॥ पराधीनं तदभवदिति ब्रूते (रौति) सगद्गदः ॥ ८७ ॥ किंकरैः पीड्यतेऽत्यर्थं स्मरते पूर्व्वदैहिकम् ॥ ८८ ॥ सुखस्य दुःखस्य न कोपि दाता परो ददातीति कुबुद्धिरेषा ॥ पुरा कृतं कर्म सदैव भुज्यते देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥८९॥ मया न दत्तं न हुतं हुताशने तपो न तप्तं हिमशैलगह्वरे ॥ न सेवितं गांगमहो महाजलं देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ ९० ॥ न नित्यदानं न गवाह्निकं कृतं न वेददानं न च शास्त्रपुस्तकम् ॥ पुरा न दृष्टं न च सेवितोऽध्वा देहिन्क्वचिन्निस्तर यत्त्वया कृतम ॥ ९१ ॥ जलाशयो नैव कृतो हि निर्जले मनुष्यहेतोः पशुपक्षिहेतवे ॥ गोतृप्तिहेतोर्न कृतं हि गोचरं देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ ९२ ॥ मया न भुक्तं पतिसङ्गसौख्यं वह्निप्रवेशो न कृतो मृते सति ॥ तस्मिन्मृते तद्व्रतपालनं वा देहिन्क्वचिन्निस्तर यत्त्वया कृतम् ॥ ९३ ॥ मासोपवासैर्न विशोषितं वपुश्चान्द्रायणैर्वा नियमैश्च संहतैः ॥ नारीशरीरं बहुदुःखभाजनं लब्धं मया पूर्व्वकृतैर्विकर्म्मभिः ॥ ९४ ॥ उक्तानि वाच्यानि मया नराणामतः शृणुष्वावहितोऽपि पक्षिन् ॥ स्त्रीणां शरीरं प्रतिलभ्य देही ब्रवीति कर्म्माणि कृतानि पूर्व्वम् ॥९५॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्म० प्रेतकल्पे श्रीकृष्णगरुडसंवादे यमलोकविस्तारतन्माहात्म्यतद्यानानिरूपणं नाम पञ्चदशोऽध्यायः ॥ १५ ॥ श्रीभगवानुवाच ॥ एवं विलपतस्तस्य प्रेतस्यैवं खगेश्वर ॥ क्रन्दमानस्य नितरां पीडितस्य च किङ्करैः ॥ १ ॥ सप्तदश दिनान्येको वायुमार्गे विकृष्यते ॥ अष्टादशे त्वहोरात्रे पूर्व्वं याम्यपुरं व्रजेत् ॥ २ ॥ तस्मिन्पुरवरे रम्ये प्रेतानां च गणो महान् ॥ पुष्पभद्रा नदी तत्र न्यग्रोधः प्रियदर्शनः ॥ ३ ॥ पुरे स तत्र विश्रामं प्राप्यते यमकिङ्करैः ॥ जायापुत्रादिकं सौख्यं स्मरेत्तत्र सुदुःखितः ॥ ४ ॥ रुदते करुणैर्वाक्यै स्तृषार्त्तः श्रमपीडितः ॥ स्वधनं स्वकलत्राणि गृहं पुत्राः सुखानि च ॥ ५ ॥ भृत्यमित्राणि चान्यच्च सर्व्वं शोचति वै तदा ॥ क्षुधार्त्तस्य पुरे तस्मिन्किङ्करैस्तस्य चोच्यते ॥ ६ ॥ किङ्करा ऊचुः ॥ क्व धनं क्व सुता जाया क्व गृहं क्व त्वमीदृशः ॥ स्वकर्म्मोपार्जितं भुंक्ष्व चिरं गच्छ महापथे ॥ ७ ॥ जानासि शंबलवशं बलमध्वगानां नो शंबलः प्रयतते परलोकपान्थ ॥ गन्तव्यमस्ति तव निश्चितमेव तेन मार्गेण यत्र भवतः क्रयविक्रयौ न ॥ ८ ॥ यमदूतोदितं वाक्यं पक्षिन्नैवं त्वया श्रुतम ॥ एवमुक्तस्ततः सर्व्वैर्हन्यमानः स मुद्गरैः ॥९॥ अत्र दत्तं सुतैः पात्रे (त्रैः) स्नेहाद्वा कृपयाथ वा ॥ मासिकं

१ शरीर हे निस्तर यत्त्वया कृतम्० पा० । २ एते श्लोकाः पञ्चमाध्यायेपि पठिताः । ३ एतदध्यायोक्ता विषयाः पञ्चमाध्यायेपि निरूपिताः ।

पिण्डमश्नाति ततः सौरिपुरं व्रजेत् ॥ १० ॥ तत्र नाम्ना तु राजा वै जङ्गमः कालरूपधृक् ॥ तं दृष्ट्वा भयभीतस्तु विश्रामे कुरुते मतिम् ॥ ११ ॥
उदकं चान्नसंयुक्तं भुङ्क्ते तस्मिन्पुरे गतः ॥ त्रैपक्षिके तु यद्दत्तं तत्पुरं स व्यतिक्रमेत् ॥ १२ ॥ नगेन्द्रनगरे रम्ये प्रेतो याति दिवानिशम् ॥ गच्छन्व
नानि रौद्राणि दृष्ट्वा क्रन्दति तत्र सः ॥ १३ ॥ भीषणैः क्लिश्यमानस्तु रुदते च पुनःपुनः ॥ मासद्वयावसाने तु तत्पुरं सोऽतिगच्छति ॥ १४ ॥
भुक्त्वा चान्नं जलं पीत्वा यद्दत्तं बान्धवैरिह ॥ क्लिश्यमानस्ततः पाशैर्नीयते यमकिङ्करैः ॥ १५ ॥ तृतीये मासि सम्प्राप्ते गन्धर्व्वनगरं शुभम् ॥ तृतीयं
मासिकं भुक्त्वा तत्र गच्छत्यसौ पुरः ॥ १६ ॥ शैलागमं चतुर्थे स मासे प्राप्नोति वै पुरम् ॥ पाषाणास्तत्र वर्षन्ति प्रेतस्योपरि संस्थिताः ॥ १७ ॥
चतुर्थमासिके श्राद्धं भुंक्ते तत्र सुखी भवेत् ॥ १८ ॥ ततो याति पुरं प्रेतः क्रूरं मासे तु पञ्चमे ॥ इह दत्तं सुतैर्भुङ्क्ते प्रेतो वै तत्पुरे स्थितः ॥
षष्ठे मासि ततः प्रेतो याति क्रौञ्चाभिधं पुरम् ॥ १९ ॥ तत्र दत्तेन पिण्डेन श्राद्धेनाप्यायितः पुरे ॥ मुहूर्त्तार्द्धं तु विश्रम्य कम्पमानः सुदुःखितः
॥ २० ॥ तत्पुरं स व्यतिक्रम्य तर्ज्जितो यमकिङ्करैः ॥ प्रयाति चित्रनगरं विचित्रो यत्र पार्थिवः ॥ २१ ॥ यमस्यैवानुजः सौरिर्यत्र
राज्यं प्रशास्ति हि ॥ मासैस्तु पञ्चभिः सार्द्धैरूनषाण्मासिकं भवेत् ॥ २२ ॥ ऊनषाण्मासिकं तत्र भुंक्ते याम्यसमाहतः ॥ मार्गे पुनःपुन
स्तस्य बुभुक्षा पीडयत्यलम् ॥ २३ ॥ सन्तिष्ठते मृते कोऽपि मदीयः सुतबान्धवः ॥ सौख्यं यो मे जनयति पततः शोकसागरे ॥ २४ ॥
एवं मार्गे विलपति वार्य्यमाणश्च किंकरैः ॥ आयान्ति सम्मुखास्तत्र कैवर्त्तास्तु सहस्रशः ॥ २५ ॥ वयं ते तर्त्तुकामाय महावैतरणीं नदीम् ॥ शत
योजनविस्तीर्णां पूयशोणितसंकुलाम् ॥ २६ ॥ नानाझषसमाकीर्णां नानापक्षिगणैर्वृताम् ॥ वयं त्वां तारयिष्यामः सुखेनेति वदन्ति ते ॥ २७ ॥
अन्तरं देहि भो पान्थ बहुला चेद्रुचिस्तव ॥ तेन तत्र प्रदत्ता गौस्तया नावा प्रसर्पति ॥ मनुजानां हितं दानमन्ते वैतरणी स्मृता ॥ २८ ॥ परा
पापं दहेत्सर्व्वं विष्णुलोकं च सा नयेत् ॥ न दत्ता चेत्खगश्रेष्ठ तां समेत्य समज्जति ॥ २९ ॥ स्वस्थावस्थे शरीरेऽत्र वैतरण्या व्रतं चरेत् ॥
देया च विदुषे धेनुस्तां नदीं तर्तुमिच्छता ॥ ३० ॥ अवदन्मज्जमानस्तु निन्दत्यात्मानमात्मना ॥ पाथेयार्थं मया किञ्चिन्न प्रदत्तं द्विजायच ॥३१॥
न दत्तं न हुतं जप्तं न स्नातं न कृतं स्तुतम् ॥ यादृशं कर्म्म चरितं मूढ भुङ्क्ष्वेति तादृशम् ॥ ३२ ॥ तदैव हृदि संमूढस्ताडितो भाषते भटैः ॥ वैतर
ण्याः परतटे भुङ्क्ते दत्तं घटादिकम् ॥ ३३ ॥ ऊनषाण्मासिकश्राद्धं भुक्त्वा गच्छति चाग्रतः ॥ तार्क्ष्य तत्र विशेषेण भोजयीत द्विजाञ्छुभान् ॥ ३४ ॥
चत्वारिंशत्तथा सप्त योजनानि शतद्वयम् ॥ प्रयाति प्रत्यहं तार्क्ष्य अहोरात्रेण कर्शितः ॥ ३५ ॥ सप्तमे मासि सम्प्राप्ते पुरं बह्वापदं व्रजेत् ॥ तत्र भुक्त

प्रदत्तं यच्छ्राद्धं सप्तममासिकम् ॥३६॥ अष्टमे मासि सम्प्राप्ते नानाक्रन्दपुरं व्रजेत् ॥ नानाक्रन्दगणान्दृष्ट्वा क्रन्दमानान्सुदारुणम् ॥ ३७ ॥ स्वयं च
शून्यहृदयः समाक्रन्दति दुःखितः ॥ तन्मासिकं च यच्छ्राद्धं भुक्त्वा तत्र सुखी भवेत् ॥ ३८ ॥ विहाय तत्पुरं प्रेतो याति तप्तपुरं प्रति ॥ सुतप्तनगरं
प्राप्य नवमे मासि सोऽश्नुते ॥ द्विजभोज्यं पिण्डदानं कृतं श्राद्धं सुतेन यत् ॥ ३९ ॥ मासि वै दशमे प्राप्ते रौद्रं स्थानं स गच्छति ॥ दशमे मासि
यद्दत्तं तद्भुक्त्वा च प्रयाति सः ॥ ४० ॥ दशैकमासिकं भुक्त्वा पयोवर्षणमृच्छति ॥ मेघास्तत्र प्रवर्षन्ति प्रेतानां दुःखदायकाः ॥४१॥ ( ततः प्रचलितो
पेतो बहुघर्मतृषार्दितः ) ॥ द्वादशे मासि यच्छ्राद्धं तत्र भुङ्क्ते सुदुःखितः ॥ ४२ ॥ किञ्चिन्न्यूने ततो वर्षे सार्द्धे चैकादशेऽथ वा ॥ याति शीतपुरं
तत्र शीतं यत्रातिदुःखदम् ॥ ४३ ॥ शीतार्त्तः क्षुधितः सोऽथ वीक्षते हि दिशो दश ॥ तिष्ठेत्तु बान्धवः कोऽपि यो मे दुःखं व्यपोहति ॥ ४४ ॥
किङ्करास्तं वदन्त्येवं क्व ते पुण्यं हि तादृशम् ॥ श्रुत्वा तेषां तु तद्वाक्यं हा दैव इति भाषते ॥ ४५ ॥ दैवं हि पूर्व्वसुकृतं तन्मया नैव सञ्चितम् ॥
एवं सञ्चिन्त्य बहुशो धैर्य्यमालम्बते पुनः ॥ ४६ ॥ चत्वारिंशद्योजनानि चतुर्युक्तानि वै ततः ॥ धर्म्मराजपुरं रम्यं गन्धर्व्वाप्सरआकुलम् ॥ ४७ ॥
चतुरशीतिलक्षैश्च मूर्त्तामूर्त्तैरधिष्ठितम् ॥ त्रयोदश प्रतीहारा धर्म्मराजपुरे स्थिताः ॥४८॥ शुभाशुभं तु यत्कर्म्म ते विचार्य्य पुनःपुनः ॥ श्रवणा ब्रह्म
णः पुत्रा मनुष्याणां च चेष्टितम् ॥ कथयन्ति तदा लोके पूजिताःपूजिताः स्वयम् ॥४९॥ नरैस्तुष्टैश्च पुष्टैश्च यत्प्रोक्तं च कृतं च यत् ॥ सर्व्वमावेदय
न्ति स्म चित्रगुप्ते यमे च तत् ॥ ५० ॥ दूराच्छ्रवणविज्ञाना दूराद्दर्शनगोचराः ॥ एवंचेष्टास्तु ते ह्यष्टौ स्वर्भूपातालचारिणः ॥ ५१ ॥ तेषां पत्न्यस्तथै
वोग्रा श्रवण्यः पृथगाह्वयाः ॥ एवं तेषां शक्तिरस्ति यत्त्वे मर्त्याधिकारिणः ॥ ५२ ॥ व्रतैर्दानैस्तवैर्येश्च पूजयेदिह मानवः ॥ जायन्ते तस्य ते
सौम्याः सुखमृत्युप्रदायिनः ॥ ५३ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे प्रेतयात्रादिनिरूपणं
नाम षोडशोऽध्यायः ॥ १६ ॥ ॥ गरुड उवाच ॥ एको मे संशयो देव हृदये सम्प्रबाधते ॥ श्रमणाः कस्य पुत्राश्च कथं यमपुरे स्थिताः ॥ १ ॥
मानुषैश्च कृतं कर्म कस्माज्जानन्ति ते प्रभो ॥ कथं शृण्वन्ति ते सर्वे कस्माज्ज्ञानं समागतम् ॥ २ ॥ कुत्र भुञ्जन्ति देवेश कथयस्व प्रसादतः ॥
पक्षिराजवचः श्रुत्वा भगवान्वाक्यमब्रवीत् ॥ ३ ॥ श्रीकृष्ण उवाच ॥ शृणुष्व वचनं सत्यं सर्वेषां सौख्यदायकम् ॥ तदहं कथयिष्यामि श्रवणानां
विचेष्टितम् ॥ ४ ॥ एकीभूतं यदा सर्वं जगत्स्थावरजङ्गमम् ॥ क्षीरोदसागरे पूर्वं मयि सुप्ते जगत्पतौ ॥ ५ ॥ नाभिस्थोजस्तपस्तेपे वर्षाणि सुबहू
न्यपि ॥ एकीभूतं जगत्सृष्टं भूतग्रामचतुर्विधम् ॥ ६ ॥ ब्रह्मणा निर्मितं पूर्वं विष्णुना पालितं तदा ॥ रुद्रः संहारमूर्त्तिश्च निर्मितो ब्रह्मणा ततः ॥ ७ ॥

वायुः सर्वगतः सृष्टः सूर्यस्तेजोभिवृद्धिमान् ॥ धर्मराजस्ततः सृष्टश्चित्रगुप्तेन संयुतः ॥ ८ ॥ सृष्ट्वैतदादिकं सर्वं तपस्तेपे तु पद्मजः ॥ गतानि बहुव
र्षाणि ब्रह्मणो नाभिपंकजे ॥ ९ ॥ योयो हि निर्मितः पूर्वं तत्तत्कर्म समाचरेत् ॥ कस्मिंश्चित्समये तत्र ब्रह्मा लोकसमन्वितः ॥ १० ॥ रुद्रो विष्णु
स्तथा धर्मः शासयन्ति वसुन्धराम् ॥ न जानीमो वयं किंचिल्लोककृत्यमिहोच्यताम् ॥ ११ ॥ इति चिन्तापराः सर्वे देवा विममृशुस्तदा ॥ संचिन्त्य
ब्रह्मणो मन्त्रं विबुधैः प्रेरितस्तदा ॥ १२ ॥ गृहीत्वा पुष्पपत्राणि सोऽसृजद्द्वादशात्मजान् ॥ तेजोराशीन्विशालाक्षान्ब्रह्मणो वचनाच्च ते ॥ १३ ॥ योऽयं
वदंति लोकेऽस्मिञ्छुभं वा यदि वाऽशुभम् ॥ श्रापयन्ति ततः शीघ्रं ब्रह्मणः कर्णगोचरम् ॥ १४ ॥ दूराच्छ्रवणविज्ञानं दूराद्दर्शनगोचरम् ॥ सर्वे शृण्व
न्ति यत्पक्षिंस्तेनैव श्रवणा मताः ॥ १५ ॥ स्थित्वा चैव तथाकाशे जन्तूनां चेष्टितं च यत् ॥ तज्ज्ञात्वा धर्मराजाग्रे मृत्युकाले वदन्ति च ॥ १६ ॥
धर्मं चार्थं च कामं च मोक्षं च कथयन्ति ते ॥ एको हि धर्ममार्गश्च द्वितीयश्चार्थमार्गकः ॥ १७ ॥ अपरः काममार्गश्च मोक्षमार्गश्चतुर्थकः ॥ उत्तमा
धममार्गेण वैनतेय प्रयान्ति हि ॥ १८ ॥ अर्थदाता विमानैस्तु अश्वैः कामप्रदायकः ॥ हंसयुक्तविमानैश्च मोक्षाकांक्षी विसर्पति ॥ १९ ॥ इतरः
पादचारेण त्वसिपत्रवनानि च ॥ पाषाणैः कण्टकैः क्लिष्टः पाशबद्धोऽथ याति वै ॥ २० ॥ यः कश्चिन्मानुषे लोके श्रवणान्पूजयेदिह ॥ वर्द्धन्या जल
पात्रेण पक्वान्नपरिपूर्णया ॥ २१ ॥ श्रवणान्पूजयेत्तत्र मया सह खगेश्वर ॥ तस्याहं तत्प्रदास्यामि यत्सुरैरपि दुर्लभम् ॥ २२ ॥ संभोज्य ब्राह्मणान्
भक्त्या त्वेकादश शुभाञ्छुचीन् ॥ द्वादशं सकलत्रं च मम प्रीत्यै प्रपूजयेत् ॥ २३ ॥ देवैः सर्वैश्च संपूज्य स्वर्गं यान्ति सुखेप्सया ॥ तैः पूजितैरिह तुष्ट
श्चित्रगुप्तेन धर्मराट्[१] ॥ २४ ॥ तैस्तुष्टैर्मर्त्यपुरं यान्ति लोका धर्मपरायणाः ॥ श्रवणानां च माहात्म्यमुत्पत्तिं चेष्टितं शुभम् ॥ २५ ॥ शृणोति पक्षिशा
र्दूल स च पापैर्न लिप्यते ॥ इह लोके सुखं भुक्त्वा स्वर्गलोके महीयते ॥ २६ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे
श्रवणमाहात्म्यनिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥ श्रीकृष्ण उवाच ॥ श्रवणानां वचः श्रुत्वा क्षणं ध्यात्वा पुनस्ततः ॥ यत्कृतं तु मनुष्यैश्च
पुण्यं पापमहर्निशम् ॥ १ ॥ तत्सर्वं च परिज्ञाय चित्रगुप्तो निवेदयेत ॥ चित्रगुप्तस्ततः सर्वं कर्म तस्मै वदत्यथ ॥ २ ॥ वाचैव यत्कृतं
कर्म कृतं चैव तु कायिकम् ॥ मानसं च तथा कर्म कृतं भुंक्ते शुभाशुभम् ॥ ३ ॥ एवं ते कथितस्तार्क्ष्य प्रेतमार्गस्य निर्णयः ॥ विश्रान्ति
दानि सर्वाणि स्थानानि कथितानि ते ॥ ४ ॥ तमुद्दिश्य ददात्यन्नं सुखं याति महाध्वनि ॥ दिवा रात्रौ तमुद्दिश्य स्थाने दीपप्रदो भवेत् ॥ ५ ॥

१ धर्मराडपि तुष्टो भवतीत्यन्वयः ।

अन्धकारे महाघोरे श्वपूर्णे लक्ष्यवर्जिते ॥ दीप्तेऽध्वनि च ते यान्ति दीपो दत्तश्च यैर्नरैः ॥ ६ ॥ कार्तिके च चतुर्दश्यां दीपदानं सुखाय वै ॥
अथ वक्ष्यामि संक्षेपाद्यममार्गस्य निष्कृतिम् ॥ ७ ॥ वृषोत्सर्गस्य पुण्येन पितृलोकं स गच्छति ॥ एकादशाहपिण्डेन शुद्धदेहो भवेत्ततः ॥ ८ ॥
उदकुम्भप्रदानेन किङ्करास्तृप्तिमाप्नुयुः ॥ ९ ॥ शय्यादानाद्विमानस्थो याति स्वर्गेषु मानवः ॥ तदह्नि दीयते सर्व्वं द्वादशाहे विशेषतः ॥ १० ॥ पदा
नि सर्व्ववस्तूनि वरिष्ठानि त्रयोदशे ॥ यो ददाति मृतस्येह जीवन्नप्यात्महेतवे ॥ ११ ॥ तदाश्रितो महामार्गे वैनतेय स गच्छति ॥ एक एवास्ति सर्व्व
त्रं व्यवहारः खगाधिप ॥ १२ ॥ उत्तमाधममध्यानां तत्तदावर्ज्जनं भवेत् ॥ यावद्भाग्यं भवेद्यस्य तावन्मार्गेऽतिरिच्यते ॥ १३ ॥ स्वयं स्वस्येन यद्दत्तं
तत्तत्राधिकरोति तम् ॥ मृते यद्बान्धवैर्दत्तं तदाश्रित्य सुखी भवेत् ॥१४॥ गरुड उवाच ॥ कस्मात्पदानि देयानि किंविधानि त्रयोदश ॥ दीयते कस्य
देवेश तद्वदस्व यथातथम् ॥ १५ ॥ श्रीभगवानुवाच ॥ छत्रोपानहवस्त्राणि मुद्रिका च कमण्डलुः ॥ आसनं भाजनं चैव पदं सप्तविधं स्मृतम् ॥१६॥
आतपस्तत्र यो रौद्रो दह्यते येन मानवः ॥ छत्रदानेन सुच्छाया जायते प्रेततुष्टिदा ॥ १७ ॥ असिपत्रवनं घोरं सोऽतिक्रामति वै ध्रुवम् ॥ अश्वारू
ढाश्च गच्छन्ति ददते य उपानहौ ॥ १८ ॥ आसने स्वागते ( भोजने ) चैव दत्तं तस्मै द्विजायते ॥ सुखेन भुङ्क्ते स प्रेतः पथि गच्छञ्छनैःशनैः
॥ १९ ॥ बहुधर्म्मसमाकीर्णे निर्व्वाते तोयवर्ज्जिते ॥ कमण्डलुप्रदानेन सुखी भवति निश्चितम् ॥ २० ॥ मृतोद्देशेन यो दद्यादुदपात्रं तु ताम्रजम् ॥
प्रपादानसहस्रस्य तत्फलं सोऽश्नुते ध्रुवम् ॥ २१ ॥ यमदूता महारौद्राः करालाः कृष्णपिङ्गलाः ॥ न पीडयन्ति दाक्षिण्याद्वस्त्राभरणदानतः ॥ २२ ॥
सायुधा धावमानाश्च न मार्गे दृष्टिगोचराः ॥ प्रयान्ति यमदूतास्ते मुद्रिकायाः प्रदानतः ॥ २३ ॥ भाजनासनदानेन आमान्नभोजनेन च ॥ आज्य
यज्ञोपवीताभ्यां पदं सम्पूर्णतां व्रजेत् ॥ २४ ॥ एवं मार्गे गच्छमानस्तृषार्त्तः श्रमपीडितः ॥ महिषीरथ ( दुग्ध ) दानाच्च सुखी भवति निश्चितम्
॥ २५ ॥ गरुड उवाच ॥ मृतोद्देशेन यत्किञ्चिद्दीयते स्वगृहे विभो ॥ स गच्छति महामार्गे तद्दत्तं केन गृह्यते ॥ २६ ॥ श्रीभगवानुवाच ॥ गृह्णाति
वरुणो दानं मम हस्ते प्रयच्छति ॥ अहं च भास्करे देवे भास्करात्सोऽश्नुते सुखम् ॥ २७ ॥ विकर्म्मणः प्रभावेण वंशच्छेदे क्षिताविह ॥ सर्व्वे ते
नरकं यान्ति यावत्पापस्य संक्षयः ॥ २८ ॥ कस्मिंश्चित्समये पूर्णे महिषासनसंस्थितः ॥ नरकान्वीक्ष्य धर्म्मात्मा नानाक्रन्दसमाकुलान् ॥ २९ ॥
चतुरशीतिलक्षाणां नरकाणां स ईश्वरः ॥ तेषां मध्ये श्रेष्ठतमा घोरा या एकविंशतिः ॥ ३० ॥ तामिस्रं लोहशङ्कुश्च महारौरवशाल्मली ॥ रौरवं

१ भुङ्क्ते सुखेन तत्प्रेतः० पा० ।

कुड्वलं कालसूत्रकं पूतिमृत्तिका ॥ ३१ ॥ सङ्घातं लोहतोदं च सविषं सम्प्रतापनम् ॥ महानरककाकोलः सजीवनमहापथः ॥ ३२ ॥ अवीचिरन्धता मिस्रः कुम्भीपाकस्तथैव च ॥ असिपत्रवनं चैव पतनश्चैकविंशतिः ॥३३॥ येषां तु नरके घोरे बह्वब्दानि गतानि वै ॥ सन्तानैर्नैव विद्येत दूतस्त्रं ते तु (प्रेत्य) यान्ति हि ॥३४ ॥ यमेन प्रेषितास्ते वै मानुषस्य मृतस्य तु ॥ दिनेदिने प्रगृह्णन्ति दत्तमन्नाद्यपानकम् ॥३५॥ प्रेतस्यैव विलुण्ठन्ति मध्ये मार्गे बुभुक्षिताः ॥ मासान्ते भोजनं पिण्डमेके यच्छन्ति तत्र वै॥३६॥तृप्तिं प्रयान्ति ते सर्व्वे प्रत्यहं चैव वत्सरम् ॥ एवमादिकृतैः पुण्यैः क्रमात्सौरिपुरं व्रजेत् ॥ ३७ ॥ ततः संवत्सरस्यान्ते प्रत्यासन्ने यमालये ॥ बहुभीतिकरे प्रेतो हस्तमात्रं समुत्सृजेत् ॥ ३८ ॥ दिवसैर्दशभिर्जातं तं देहं दशपिण्डजम् ॥ जामदग्न्यस्येव रामं दृष्ट्वा तेजः प्रसर्पति ॥३९॥ कर्म्मजं देहमाश्रित्य पूर्व्वदेहं समुत्सजेत ॥ अङ्गुष्ठमात्रो वायुश्च शमीपत्रंसमारुहेत्॥४०॥ व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति ॥ यथा तृणजलौकेव देही कर्म्मानुगोऽवशः ॥४१॥ वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ॥ तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही॥४२॥इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्म०प्रेत० श्रीकृष्णगरुडसंवादे वृषोत्सर्गनानादानफलयमलोकगमनकर्मजदेहप्राप्तिनिरूपणं नामाष्टादशोऽध्यायः ॥१८॥ श्रीभगवानुवाच ॥ वायुभूतः क्षुधाविष्टः कर्म्मजं देहमाश्रितः॥ तं देहं स समासाद्य यमेन सह गच्छति॥१॥चित्रगुप्तपुरं तत्र योजनानां तु विंशतिः॥ कायस्थास्तत्र पश्यन्ति पापपुण्यानि सर्व्वशः ॥२॥ महादानेषुदत्तेषु गतस्तत्र सुखी भवेत् ॥ योजनानां चतुर्व्विंशत्पुरं[2] वैवस्वतं शुभम् ॥३॥ लोहं लवणकार्पासं तिलपात्रं च यैर्नरैः॥ दत्तं तेनैव तृप्यन्ति यमस्य पुरचारिणः ॥ ४ ॥ गत्वा च तत्र ते सर्व्वे प्रतीहारं वदन्ति हि ॥ धर्म्मध्वजप्रतीहारस्तत्र तिष्ठति सर्व्वदा ॥ ५ ॥ सप्तधान्यस्य दानेन प्रीतो धर्म्मध्वजो भवेत् ॥ तत्र गत्वा प्रतीहारो ब्रूते तस्य शुभाशुभम् ॥ ६ ॥ धर्म्मराजस्य यद्रूपं सन्तः सुकृतिनो जनाः ॥ पश्यन्ति च दुरात्मानो यमरूपं सुभीषणम् ॥ ७ ॥ तं दृष्ट्वा भयभीतस्तु हाहेति वदते जनः ॥ कृतं दानं च यैर्मर्त्यैस्तेषां नास्ति भयं क्वचित् ॥ ८ ॥ प्राप्तं सुकृतिनं दृष्ट्वा स्थानाच्चलति सूर्य्यजः ॥ एष मे मण्डलं भित्त्वा ब्रह्मलोकं प्रयास्यति ॥ ९ ॥ दानेन सुलभो धर्म्मो यममार्गः सुखावहः ॥ एष मार्गो विशालोऽत्र न केनाप्यनुगम्यते ॥ दानपुण्यं विना वत्स न गच्छेद्धर्म्ममन्दिरम् ॥१०॥ तस्मिन्मार्गे तु रौद्रे वै भीषणा यमकिङ्कराः ॥ एकैकस्य पुरस्याग्रे तिष्ठत्येकसहस्रकम्॥ ॥११॥ पचन्ति पापिनं प्राप्य उदके यातनाकराः ॥ गृह्णन्ति मासमासान्ते पादशेषं तु तद्भवेत् ॥ १२ ॥ और्द्ध्वदैहिकदानानि यैर्न दत्तानि काश्यप ॥

१ मन्नघटादिकम्० । २ चतुर्विंशतियोजनपरिमाणकमित्यर्थः ।

महाकष्टेन ते यान्ति तस्माद्देयानि शक्तितः ॥ अदत्त्वा पशुवद्यान्ति गृहीतो बन्धबन्धनैः ॥ १३ ॥ एवं कृतेन सम्पश्येत्स नरः भूतकर्म्मणा ॥
दैविकीं पैतृकीं योनिं मानुषीं वाथ नारकीम् ॥ १४ ॥ धर्म्मराजस्य वचनान्मुक्तिर्भवति वा ततः ॥ मानुष्यं तत्त्वतः प्राप्य स पुत्रः पुत्रतां व्रजेत्
॥ १५ ॥ यथायथा कृतं कर्म्म तांतां योनिं व्रजेन्नरः ॥ तत्तथैव च भुञ्जानो विचरेत्सर्व्वलोकगः ॥ १६ ॥ अशाश्वतं परिज्ञाय सर्व्वलोकोत्तरं सुखम् ॥
यदा भवति मानुष्यं तदा धर्म्मं समाचरेत् ॥ १७ ॥ कृमयो भस्म विष्ठा वा देहानां प्रकृतिः सदा ॥ अन्धकूपे महारौद्रे दीपहस्तः पतेत्तु वै ॥ १८ ॥
महापुण्यप्रभावेण मानुष्यं जन्म लभ्यते ॥ यस्तत्प्राप्य चरेद्धर्म्मं स गच्छेत्परमां गतिम् ॥१९॥ अपि जानन्वृथा धर्म्मं दुःखमायाति याति च ॥२०॥
जातिशतेन[1] लभते किल मानुषत्वं तत्रापि दुर्लभतरं खग भो द्विजत्वम् ॥ यस्तत्र पालयति लालयति व्रतानि तस्यामृतं भवति हस्तगतं प्रसादा
त् ॥ २१ ॥ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे यममन्दिरप्रवेशतदाज्ञालब्धमनुष्यादि
देहान्तरप्राप्तिनिरूपणं नामैकोनविंशोऽध्यायः ॥ १९ ॥ गरुड उवाच ॥ ये केचित्प्रेतरूपेण कुत्र वासं लभन्ति ते ॥ प्रेतलोकाद्विनिर्म्मुक्ताः कथं
कुत्र[2] व्रजन्ति ते ॥ १ ॥ चतुर्युक्ताशीति लक्षैर्नरकैः पर्य्युपासिताः ॥ यमेन रक्षितास्तत्र भूतैश्चैव सहस्रशः ॥ २ ॥ विचरन्ति कथं लोके नरकाच्च
विनिर्गताः ॥ गरुडोदीरितं श्रुत्वा लक्ष्मीनाथोऽब्रवीदिदम् ॥ ३ ॥ श्रीकृष्ण उवाच ॥ पक्षिराज शृणुष्व त्वं यत्र प्रेताश्चरन्ति वै ॥ परार्थदारग्रहणा
च्छ ( ब ) लाद्द्रोहान्निशाचराः ॥ ४ ॥ तथैव सर्व्वपापिष्ठाः स्वात्मजान्वेषणे रताः ॥ विचरन्त्यशरीरास्ते क्षुत्पिपासार्द्दिता भृशम् ॥ ५ ॥ बन्दीगृहवि
निर्म्मुक्ता येभ्यो नश्यन्ति जन्तवः ॥ ते व्यवस्यन्ति च प्रेता वधोपायं च बन्धुषु ॥ ६ ॥ पितृद्वाराणि रुन्धन्ति तन्मार्गोच्छेदकास्तथा ॥ पितृभा
गान्विगृह्णन्ति पान्थेभ्यस्तस्करा इव ॥ ७ ॥ स्वं वेश्म पुनरागत्य मित्रस्थाने विशन्ति ते ॥ तत्र स्थिता निरीक्षन्ते रोगशोकादिबन्धनाः ॥ ८ ॥
पीडयन्ति ज्वरीभूय एकान्तरमिषेण तु ॥ तृतीयकज्वरा भूत्वा शीतवातादिपीडया ॥ ९ ॥ अन्यांश्च विविधान्रोगाञ्छिरोऽर्त्तिं च विषूचिकाम् ॥ चिन्त
यन्ति सदा तेषामुच्छिष्टादिस्थलस्थिताः ॥ १० ॥ आत्मजानां छलाल्लोका भूतसङ्घैश्च रक्षिताः ॥ पिबन्ति ते च पानीयं भोजनोच्छिष्टयोजितम्
॥ ११ ॥ एवं प्रेताः प्रवर्त्तन्ते नानादोषैर्विकर्म्मिणः ॥ १२ ॥ गरुड उवाच ॥ कथं कुर्व्वन्ति ते प्रेताः केन रूपेण कस्य किम् ॥ ज्ञायते केन विधि
ना जल्पन्ति न वदन्ति वा ॥ १३ ॥ एनं छिन्धि मनोमोहं मम चेदिच्छसि प्रियम् ॥ कलिकाले हृषीकेश प्रेतत्वं जायते बहु ॥ १४ ॥ श्रीविष्णुरु

१ जातिशतेन जन्मशतेनेत्यर्थः । २ कुत्राप्यदन्ति ते० पा० ।

वाच ॥ स्वकुलं पीडयेत्प्रेतः परच्छिद्रेण पीडयेत् ॥ जीवन्स दृश्यते स्नेही मृतो दुष्टत्वमाप्नुयात् ॥ १५ ॥ रुद्रजापी धर्म्मरतो देवतातिथिपूजकः ॥
सत्यवाक् प्रियवादी च न प्रेतैः स हि पीड्यते ॥ १६ ॥ सर्व्वक्रियापरिभ्रष्टो नास्तिको धर्म्मनिन्दकः ॥ असत्यवादनिरतो नरः प्रेतैः स पीड्यते ॥
कलौ प्रेतत्वमाप्नोति तार्क्ष्याशुद्धक्रियापरः ॥ १७ ॥ कृतादौ द्वापरान्ते च न प्रेतो नैव पीडनम् ॥ बहूनामेकजातानामेकः सौख्यं समश्नुते ॥ १८ ॥
एको दुष्कृतकर्म्मा च एकः सन्ततिभाञ्जनः ॥ एकः सम्पीड्यते प्रेतैरेकः सुतधनान्वितः ॥ १९ ॥ एकस्य पुत्रनाशः स्यादेको दुहितृमान् भवेत् ॥
विरोधो बन्धुभिः सार्द्धं प्रेतदोषेण काश्यप ॥ २० ॥ सन्ततिर्दृश्यते नैव समुत्पन्ना विनश्यति ॥ पशुद्रव्यविनाशश्च सा पीडा प्रेतसम्भवा ॥ २१ ॥
प्रकृतेः परिवर्त्तः स्याद्विद्वेषः सह बन्धुभिः ॥ अकस्माद्व्यसनप्राप्तिः सा पीडा प्रेतसम्भवा ॥ २२ ॥ नास्तिक्यं वृत्तिलोपश्च महालोभस्तथैव च ॥
स्यादत्यन्तकलहो नित्यं सा पीडा प्रेतसम्भवा ॥ २३ ॥ पितृमातृनिहन्ता च देवब्राह्मणनिन्दकः ॥ हत्यादोषमवाप्नोति सा पीडा प्रेतसम्भवा ॥ २४ ॥
नित्यकर्म्मविनिर्म्मुक्तो जपहोमविवर्ज्जितः ॥ परद्रव्याणां च हर्त्ता सा पीडा प्रेतसम्भवा ॥ २५ ॥ सुवृष्टौ कृषिनाशश्च व्यवहारो विनश्यति ॥ लोके
कलहकारी च सा पीडा प्रेतसम्भवा ॥ २६ ॥ मार्गे जंगम्यमानं तं पीडयेद्वातमण्डली ॥ प्रेतपीडा तु सा ज्ञेया सत्यंसत्यं खगेश्वर ॥ २७ ॥
हीनजात्या च सम्बन्धो हीनकर्म्म करोति यः ॥ अधर्म्मे रमते नित्यं सा पीडा प्रेतसम्भवा ॥ २८ ॥ व्यसनैर्द्रव्यनाशः स्यादुपक्रान्तं विनश्यति ॥
चौराग्निराजभिर्हानिः सा पीडा प्रेतसम्भवा ॥२९॥ महारोगोपलब्धिश्च बालकानां च पीडनम् ॥ जाया संपीड्यते यच्च सा पीडा प्रेतसम्भवा ॥३०॥
श्रुतिस्मृतिपुराणेषु धर्म्मशास्त्रसमुद्भवे ॥ अभावो जायते धर्म्मे सा पीडा प्रेतसम्भवा ॥ ३१ ॥ देवतीर्थद्विजानां तु निन्दां यः कुरुते नरः ॥ प्रत्यक्षं वा
परोक्षं वा सा पीडा प्रेतसम्भवा ॥३२॥ स्ववृत्तिहरणं यच्च स्वप्रतिष्ठाहतिस्तथा ॥ वंशच्छेदः नदृश्येत प्रेतदोषाद्विनान्यथा ॥३३॥ स्त्रीणां गर्भविनाशः
स्यान्न पुष्पं दृश्यते तथा ॥ बालानां मरणं यत्र सा पीडा प्रेतसम्भवा ॥ ३४ ॥ भावशुद्ध्या न कुरुते श्राद्धं सांवत्सरादिकम् ॥ स्वयमेव न कुर्व्वीत
सा पीडा प्रेतसम्भवा ॥ ३५ ॥ तीर्थे गत्वा परासक्तः स्वकृत्यं च परित्यजेत ॥ धर्म्मकार्य्ये न सम्पत्तिः सा पीडा प्रेतसम्भवा ॥ ३६ ॥ दम्पत्योः
कलहश्चैव भोजने कोपसंयुतः ॥ परद्रोहे मतिश्चैव सा पीडा प्रेतसंभवा ॥ ३७ ॥ पुष्पं यत्र न दृश्येत न दृश्येत फलं तथा ॥ विरहो भार्य्यया यत्र
सा पीडा प्रेतसम्भवा ॥ ३८ ॥ येषां वै जायते चिह्नं सदोच्चाटपरं नृणाम् ॥ स्वक्षेत्रे निष्फलं तेजः सा पीडा प्रेतसम्भवा ॥ ३९ ॥ स्वगोत्रघातक
श्चैव हन्ति शत्रुमिवात्मजम् ॥ न प्रीतिर्नापि सौख्यं च सा पीडा प्रेतसम्भवा ॥ ४० ॥ पितृवाक्यं न कुरुते स्वपत्नीं च न सेवते ॥ सदा क्रूरमति

व्यग्रः सा पीडा प्रेतसम्भवा ॥४१॥ विकर्म्मा जायते प्रेतो ह्यविधिक्रियया तथा ॥ तत्कालदुष्टसंसर्गाद्वृषोत्सर्गाद्दृते तथा ॥ ४२ ॥ दृष्टमृत्युवशाद्वापि
अदग्धवपुषस्तथा॥प्रेतत्वं जायते तार्क्ष्य पीडयन्ते येन जन्तवः॥४३॥एवं ज्ञात्वा खगश्रेष्ठ प्रेतमुक्तिं समाचरेत्॥ यो वै न मन्यते प्रेतान्मृतः प्रेतत्वमाप्नुयात्
॥४४॥प्रेतदोषः कुले यस्य सुखं तस्य न विद्यते ॥ मतिः प्रीती रतिर्बुद्धिर्लक्ष्मीः पञ्चविनाशनम् ॥४५॥ तृतीये पञ्चमे पुंसि वंशच्छेदो हि जायते॥दरिद्रो नि
र्द्धनश्चैव पापकर्म्मा भवेभवे ॥ ४६ ॥ ये केचित्प्रेतरूपा विकृतमुखदृशो रौद्ररूपाः कराला मन्यन्ते नैव गोत्रं सुतदुहितृपितॄन् भ्रातृजायां वधूं वा ॥
कृत्वा काम्यं च रूपं सुखगतिरहिता भाषमाणा यथेष्टं हा कष्टं भोक्तुकामा विधिवशपतिताः संस्मरन्ति स्वपाकम् ॥ ४७ ॥ ॥ इति श्रीगारुडे महा
पुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे प्रेतावासतद्बाधाप्रकारनिरूपणं नाम विंशोऽध्यायः ॥ २० ॥ गरुड उवाच ॥
मुक्तिं यान्ति कथं प्रेतास्तदहं प्रष्टुमुत्सुकः ॥ यन्मुक्तौ च मनुष्याणां न पीडा जायते पुनः ॥ १ ॥ एतैश्च लक्षणैर्देव पीडोक्ता प्रेतजा त्वया ॥
तेषां कदा भवेन्मुक्तिः प्रेतत्वं न कथं भवेत् ॥ २ ॥ प्रेतत्वे हि प्रमाणं च कति वर्षाणि संख्यया ॥ चिरं प्रेतत्वमापन्नः कथं मुक्तिमवाप्नुयात् ॥ ३ ॥
श्रीकृष्ण उवाच ॥ मुक्तिं प्रयान्ति ते प्रेतास्तदहं कथयामि ते ॥ यदैव मनुजोऽवैति मम पीडा कृता त्वियम् ॥ ४ ॥ पृच्छार्थं हितमन्विच्छन्दै
वज्ञे विनिवेदयेत ॥ स्वप्ने दृष्टः शुभो वृक्षः फलितश्चूतचम्पकः ॥ ५ ॥ विप्रो वा वृषभो देवो भ्रमते तीर्थगो यदि ॥ एवं दृष्टो यदा स्वप्ने मृतः कोऽपि
स्वगोत्रजः ॥ ६ ॥ स्वप्ने सत्यं परिज्ञाय दृष्टं प्रेतप्रभावतः ॥ अद्भुतानि प्रदृश्यन्ते प्रेतदोषाद्विनिश्चितम् ॥ ७ ॥ तीर्थस्नाने मतिर्यावच्चित्तं धर्म्मपरा
यणम् ॥ धर्म्मोपायं प्रकुरुते प्रेतपीडा तदा व्रजेत् ॥ ८ ॥ तदा तत्र विनाशाय चित्तभंगं करोति सा ॥ श्रेयांसि बहुविघ्नानि सम्भवन्ति पदेपदे ॥ ९ ॥
अश्रेयसि प्रवृत्तिं च प्रेरयन्ति पुनःपुनः ॥ उच्चाटनं च क्रूरत्वं सर्व्वं प्रेतकृतं खग ॥ १० ॥ सर्व्वविघ्नानि सन्त्यज्य मुक्त्युपायं करोति यः ॥ तस्य
कर्म्मफलं साधु प्रेतवृत्तिश्च शाश्वती ॥ ११ ॥ स भवेत्तेन मुक्तस्तु दत्तं श्रेयस्करं परम् ॥ स्वयं तृप्यति भोः पक्षिन्यस्योद्देशेन दीयते ॥ १२ ॥ शृणु
सत्यमिदं तार्क्ष्यं यद्ददाति भुनक्ति सः ॥ [1]आत्मानं श्रेयसा युञ्ज्यात्प्रेतस्तृप्तिं चिरं व्रजेत् ॥ १३ ॥ ते तृप्ताः शुभमिच्छन्ति निजबन्धुषु सर्व्वदा ॥
अज्ञातयस्तु ये दुष्टाः पीडयन्ति स्ववंशजान् ॥ १४ ॥ निवारयन्ति तृप्तास्ते जायमानानुकम्पकाः ॥ पश्चात्ते मुक्तिमायान्ति काले प्राप्ते स्वपुत्रतः ॥
सदा बन्धुषु यच्छन्ति वृद्धिमृद्धिं खगाधिप ॥ १५ ॥ दर्शनाद्भाषणाद्यस्तु चेष्टातः पीडनाद्धृतिम् ॥ न प्रापयति मूढात्मा प्रेतशापैः स लिप्यते ॥१६॥

१ आत्मैव श्रेयसा० पा० ।

अपुत्रकोऽपशुश्चैव दरिद्रो व्याधितस्तथा ॥ वृत्तिहीनश्च हीनश्च भवेज्जन्मनिजन्मनि ॥ १७ ॥ एवं ब्रुवन्ति ते प्रेताः पुनर्याम्यं समाश्रिताः ॥ तत्रस्था
नां भवेन्मुक्तिः स्वकाले कर्म्मसंक्षये ॥ १८ ॥ गरुड उवाच ॥ नाम गोत्रं न दृश्येत प्रतीतिर्नैव जायते ॥ केचिद्वदन्ति दैवज्ञाः पीडां प्रेतसमुद्भवाम्
॥ १९ ॥ न स्वप्नश्चेष्टितं नैव दर्शनं न कदाचन ॥ किं कर्त्तव्यं सुरश्रेष्ठ तत्र मे ब्रूहि निश्चितम् ॥ २० ॥ श्रीभगवानुवाच ॥ सत्यं वाप्यनृतं वापि
वदन्ति क्षितिदेवताः ॥ तदा सञ्चिन्त्य हृदये सत्यमेतद्द्विजेरितम् ॥ २१ ॥ भावभक्तिं पुरस्कृत्य पितृभक्तिपरायणः ॥ कृत्वा कृष्णबलिं चैव पुरश्चरण
पूर्व्वकम् ॥ २२ ॥ जपहोमैस्तथा दानैः प्रकुर्य्याद्देहशोधनम् ॥ कृतेन तेन विघ्नानि विनश्यन्ति खगेश्वर ॥ २३ ॥ भूतप्रेतपिशाचैर्वा स चेदन्यैः
प्रपीड्यते ॥ पित्रुद्देशेन वै कुर्य्यान्नारायणबलिं तदा ॥ विमुक्तः सर्व्वपीडाभ्य इति सत्यं वचो मम ॥ २४ ॥ पितृपीडा भवेद्यत्र कृत्यैरन्यैर्न मुच्यते ॥
तस्मात्सर्व्वप्रयत्नेन पितृभक्तिपरो भवेत् ॥ २५ ॥ नवमे दशमे वर्षे पित्रुद्देशेन वै पुमान् ॥ गायत्त्रीमयुतं जप्त्वा दशांशेन च होमयेत् ॥ २६ ॥ कृत्वा
कृष्णबलिं पूर्व्वं वृषोत्सर्गादिकाः क्रियाः ॥ सर्व्वोपद्रवहीनस्तु सर्व्वसौख्यमवाप्नुयात् ॥ उत्तमं लोकमाप्नोति ज्ञातिप्राधान्यमेव च ॥ २७ ॥ पितृमा
तृसमं लोके नास्त्यन्यद्दैवतं परम् ॥ तस्मात्सर्व्वप्रयत्नेन पूजयेत्पितरौ सदा ॥ २८ ॥ हितानामुपदेष्टा हि प्रत्यक्षं दैवतं पिता ॥ अन्या या देवता
लोके न देहप्रभवो हि ताः॥ २९ ॥ शरीरमेव जन्तूनां स्वर्गमोक्षैकसाधनम् ॥ देहो दत्तो हि येनैवं कोऽन्यः पूज्यतमस्ततः ॥ ३० ॥ इति सञ्चिन्त्य
हृदये पक्षिन्यद्यत्प्रयच्छति ॥ तत्सर्व्वमात्मना भुंक्ते दानं वेदविदो विदुः ॥ ३१ ॥ पुन्नामनरकाद्यस्मात्पितरं त्रायते सुतः ॥ तस्मात्पुत्त्र इति प्रोक्त इह
चापि परत्र च ॥ ३२ ॥ अपमृत्युमृतौ स्यातां पितरौ कस्यचित्खग ॥ व्रततीर्थविवाहादिश्राद्धं संवत्सरं त्यजेत् ॥ ३३ ॥ स्वप्नाध्यायमिमं यस्तु प्रेत
लिङ्गानदर्शकम् ॥ यः पठेच्छृणुयाद्वापि प्रेतचिह्नं न पश्यति ॥३४॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मका० प्रेतकल्पे श्रीकृष्णगरुड
संवादे स्वप्नाध्यायो नामैकविंशोऽध्यायः ॥ २१ ॥ गरुड उवाच ॥ सम्भवन्ति कथं प्रेताः केन तेषां गतिर्भवेत् ॥ कीदृक्तेषां भवेद्रूपं भोजनं किं
भवेत्प्रभो ॥ १ ॥ सुप्रीतास्ते कथं प्रेताः क्व तिष्ठन्ति सुरेश्वर ॥ प्रसन्नः कृपया देव प्रश्नमेनं वदस्व मे ॥ २ ॥ श्रीभगवानुवाच ॥ पापकर्म्मरता ये
वै पूर्व्वकर्म्मवशानुगाः ॥ जायन्ते ते मृताः प्रेतास्ताञ्छृणुष्व वदाम्यहम् ॥३॥ वापीकूपतडागांश्च आरामं सुरमन्दिरम् ॥ प्रपां सद्म सुवृक्षांश्च तथा
भोजनशालिकाः ॥ ४ ॥ पितृपैतामहं धर्म्मं विक्रीणाति स पापभाक् ॥ मृतः प्रेतत्वमाप्नोति यावदाभूतसंप्लवम् ॥ ५ ॥ गोचरं ग्रामसीमां च तडाग

१ येद्वै पितृन्० गुरून् पा० । २ पितृणां यत्प्रच्छति० पा० । ३ इदमुपाख्यानं प्रागपिप्रकारान्तरेण । ४ कीदृक्तेषां गतिः पा० ।

रामगह्वरम् ॥ कर्षयन्ति च ये लोभात्प्रेतास्ते वै भवन्ति हि ॥ ६ ॥ चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युताग्नितः ॥ दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्म्मिणाम् ॥ ७ ॥ उद्बन्धनमृता ये च विषशस्त्रहताश्च ये ॥ आत्मोपघातिनो ये च विषूच्यादिहतास्तथा ॥ ८ ॥ महारोगैर्मृता ये च पापरोगैश्च दस्युभिः ॥ असंस्कृतप्रमीता ये विहिताचारवर्जिताः ॥ ९ ॥ वृषोत्सर्गादिलुप्ताश्चलुप्तमासिकपिण्डकाः ॥ यस्यानयति शूद्रोऽग्निं तृणकाष्ठहवींषि सः ॥ १० ॥ पतनात्पर्वतानां च भित्तिपातेन ये मृताः ॥ रजस्वलादिदोषैश्च न च भूमौ मताश्च ये ॥ ११ ॥ अन्तरिक्षे मृता ये च विष्णुस्मरणवर्जिताः ॥ मृतकैः श्वादिसंपर्कैः प्रेतभावा इह क्षितौ ॥ १२ ॥ एवमादिभिरन्यैश्च कुमृत्युवशगाश्च ये ॥ ते सर्व्वे प्रेतयोनिस्था विचरन्ति मरुस्थले ॥ १३ ॥ मातरं भगिनीं भार्य्यां स्नुषां दुहितरं तथा ॥ अदृष्टदोषां त्यजति स प्रेतो जायते ध्रुवम् ॥ १४ ॥ भ्रातृध्रुग्ब्रह्महा गोघ्नः सुरापो गुरुतल्पगः ॥ हेमक्षौमहरस्तार्क्ष्य स वै प्रेतत्वमाप्नुयात् ॥ १५ ॥ न्यासापहर्त्ता मित्रध्रुक् परदाररतस्तथा ॥ विश्वासघाती क्रूरस्तु स प्रेतो जायते ध्रुवम् ॥ १६ ॥ कुलमार्गांश्च सन्त्यज्य परधर्म्मरतस्तथा ॥ विद्यावृत्तविहीनश्च स प्रेतो जायते ध्रुवम् ॥ १७ ॥ अत्रैवोदाहरन्तीममितिहासं पुरातनम् ॥ युधिष्ठिरस्य संवादं भीष्मेण सह सुव्रत ॥ तदहं कथयिष्यामि यच्छ्रुत्वा सौख्यमाप्नुयात् ॥ ॥ १८ ॥ युधिष्ठिर उवाच ॥ केन कर्म्मविपाकेन प्रेतत्वमुपजायते ॥ केन वा मुच्यते कस्मात्तन्मे ब्रूहि पितामह ॥ यच्छ्रुत्वा न पुनर्मोहमेवं यास्यामि सुव्रत ॥ १९ ॥ भीष्म उवाच ॥ येनैव जायते प्रेतो येनैव स विमुच्यते ॥ प्राप्नोति नरकं घोरं दुस्तरं दैवतैरपि ॥ २० ॥ सततं श्रवणाद्यस्य पुण्यश्रवणकीर्त्तनात् ॥ मानवा विप्रमुच्यन्ते आपन्नाः प्रेतयोनिषु ॥ २१ ॥ श्रूयते हि पुरा वत्स ब्राह्मणः शंसितव्रतः ॥ नाम्ना सन्तप्तकः ख्यातस्तपोऽर्थे वनमाश्रितः ॥ २२ ॥ स्वाध्याययुक्तो होमेन यो (या) गयुक्तो दयान्वितः ॥ यजन्स सकलान्यज्ञान्युक्त्या कालं च विक्षिपन्[1] ॥ २३ ॥ ब्रह्मचर्य्यसमायुक्तो युक्तस्तपसि मार्द्दवे ॥ परलोकभयोपेतः सत्यशौचैश्च निर्म्मलः ॥ २४ ॥ युक्तोऽहि गुरुवाक्येन युक्तश्चातिथिपूजने ॥ आत्मयोगे सदोद्युक्तः सर्व्वद्वन्द्वविवर्ज्जितः ॥ २५ ॥ योगाभ्यासे सदा युक्तः संसारविजिगीषया ॥ एवंवृत्तः सदाचारो मोक्षकांक्षी जितेन्द्रियः ॥ २६ ॥ बहून्यब्दानि विजने वने तस्य गतानि वै ॥ तस्य बुद्धिस्ततो जाता तीर्थानुगमनं प्रति ॥ २७ ॥ पुण्यैस्तीर्थजलैरेव शोषयिष्ये कलेवरम् ॥ स तीर्थे त्वरितं स्नात्वा तपस्वी भास्करोदये ॥ कृतजाप्यनमस्कारो ह्यध्वानं प्रत्यपद्यत ॥ २८ ॥ एकस्मिन्दिवसे विप्रो मार्गभ्रष्टो महातपाः ॥ ददर्श

१ कालंजरं क्षिपन्० पा०।

ध्वनि गच्छन्स पञ्च प्रेतान् सुदारुणान् ॥ २९ ॥ अरण्ये निर्ज्जने देशे संकटे वृक्षवर्ज्जिते ॥ पञ्चैतान्विकृताकारान्दृष्ट्वा वै घोरदर्शनान् ॥
ईषत्सन्त्रस्तहृदयोऽतिष्ठदुन्मील्य लोचने ॥ ३० ॥ अवलम्ब्य ततो धैर्य्यं भयमुत्सृज्य दूरतः ॥ पप्रच्छ मधुराभाषी के यूयं विकृताननाः ॥ ३१ ॥
किञ्चाशुभं कृतं कर्म्म येन प्राप्ताः स्थ वैकृतम् ॥ कथं वा चैकतः कर्म्म प्रस्थिताः कुत्र निश्चितम् ॥ ३२ ॥ प्रेतराज उवाच ॥ स्वैःस्वैस्तु कर्मभिः
प्राप्तं प्रेतत्वं हि द्विजोत्तम ॥ परद्रोहरताः सर्व्वे पापमृत्युवशं गताः ॥ ३३ ॥ क्षुत्पिपासार्दिता नित्यं प्रेतत्वं समुपागताः ॥ हतवाक्या हतश्रीका हत
संज्ञा विचेतसः ॥ ३४ ॥ न जानीमो दिशं तात विदिशं चातिदुःखिताः ॥ क्व नु गच्छामहे मूढाः पिशाचाः कर्म्मजा वयम् ॥ ३५ ॥ न माता न
पितास्माकं प्रेतत्वे कर्म्मभिः स्वकैः ॥ प्राप्ताः स्म सहसा जातदुःखोद्वेगसमाकुलम् ॥ ३६ ॥ दर्शनेन च ते ब्रह्मन्मुदिताप्यायिता वयम् ॥ मुहूर्त्तं
तिष्ठ वक्ष्यामि वृत्तान्तं सर्व्वमादितः ॥ ३७ ॥ अहं पर्य्युषितो नाम एष सूचीमुखस्तथा ॥ शीघ्रगो रोध (ह) कश्चैव पञ्चमो लेखकः स्मृतः ॥३८॥
एवं नाम्ना च सर्वे वै संप्राप्ताः प्रेततां वयम् ॥ ब्राह्मण उवाच ॥ प्रेतानां कर्म्मजातानां कथं वै नामसम्भवः ॥ किञ्चित्कारणमुद्दिश्य येन ब्रूयाः स्वना
मकान् ॥ ३९ ॥ प्रेतराज उवाच ॥ मया स्वादु सदा भुक्तं दत्तं पर्य्युषितं द्विज ॥ ४० ॥ शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै ॥ एतत्कारणमु
द्दिश्य नाम पर्य्युषितं मम ॥ ४१ ॥ शीघ्रं गच्छति विप्रेण याचितः क्षुधितेन वै ॥ एतत्कारणमुद्दिश्य शीघ्रगोऽयं द्विजोत्तम ॥ ४२ ॥ सूचिता
बहवोऽनेन सदा अन्नादिकांक्षया ॥ एतत्कारणमुद्दिश्य एष सूचीमुखः स्मृतः ॥ ४३ ॥ एकाकी मिष्टमश्नाति पोष्यवर्गमृते सदा ॥ ब्राह्मणानामभावेन
रोध (ह) कस्तेन चोच्यते ॥ ४४ ॥ पुरायं मौनमास्थाय याचितो विलिखेद्भुवम् ॥ तेन कर्मविपाकेन लेखको नाम चोच्यते ॥ ४५ ॥ प्रेतत्वं
कर्म्मभावेन प्राप्तं नामानि च द्विज ॥ मेषाननो लेखकोऽयं रोध (ह) कः पर्व्वताननः ॥ ४६ ॥ शीघ्रगः पशुवक्त्रश्च सूचकः सूचिवक्त्रवान् ॥ दुः
खिता निरतं स्वामिन्पश्य रूपविपर्य्ययम् ॥ ४७ ॥ कृत्वा मायामयं रूपं विचरामो महीतले ॥ सर्व्वे च विकृताकारा लम्बोष्ठा विकृताननाः
॥ ४८ ॥ बृहच्छरीरिणो रौद्रा जाताः स्वेनैव कर्म्मणा ॥ एतत्ते सर्व्वमाख्यातं प्रेतत्वे कारणं मया ॥ ४९ ॥ ज्ञानिनोऽपि वयं सर्व्वे जाताः स्म तव
दर्शनात् ॥ यत्र ते श्रवणे श्रद्धा तत्पृच्छ कथयामि ते ॥ ५० ॥ ब्राह्मण उवाच ॥ ये जीवा भुवि जीवन्ति सर्व्वेऽप्याहारमूलकाः ॥ युष्माकमपि
चाहारं श्रोतुमिच्छामि तत्त्वतः ॥५१॥ प्रेता ऊचुः ॥ यदि ते श्रवणे श्रद्धा आहाराणां द्विजोत्तम ॥ अस्माकं तु महीभाग शृणुत्वं सुसमाहितः ॥५२॥

१ वयं सर्वे नष्टसंज्ञा० पा०।

ब्राह्मण उवाच ॥ कथयन्तु महाप्रेता आहारं च पृथक्पृथक् ॥ इत्युक्तां ब्राह्मणेनेममूचुः प्रेताः पृथक्पृथक् ॥५३॥ प्रेता ऊचुः ॥ शृणु चाहारमस्माकं सर्व्वसत्त्वविगर्हितम् ॥ यच्छ्रुत्वा गर्हसे ब्रह्मन् भूयोभूयश्च गर्हितम ॥ ५४ ॥ श्लेष्ममूत्रपुरीषोत्थं शरीराणां मलैः सह ॥ उच्छिष्टैश्चैव चान्यैश्च प्रेतानां भोजनं भवेत ॥ ५५ ॥ गृहाणि चाप्यशौचानि प्रकीर्णोपस्कराणि च ॥ मलिनानि प्रसूतानि प्रेता भुञ्जन्ति तत्र वै ॥ ५६ ॥ नास्ति सत्यं गृहे यत्र न शौचं न च संयमः ॥ पतितैर्दस्युभिः सङ्गः प्रेता भुञ्जन्ति तत्र वै ॥ ५७ ॥ बलिमन्त्रविहीनानि होमहीनानि यानि च ॥ स्वाध्याय व्रतहीनानि प्रेता भुञ्जन्ति तत्र वै ॥ ५८ ॥ न लज्जा न च मर्य्यादा यदात्र स्त्रीजितो गृही ॥ गुरवो यत्र पूज्या न प्रेता भुञ्जन्ति तत्र वै ॥ ५९ ॥ यत्र लोभस्तथा क्रोधो निद्रा शोको भयं मदः ॥ आलस्यं कलहो नित्यं प्रेता भुञ्जन्ति तत्र वै ॥ ६० ॥ भर्त्तृहीना च या नारी परवीर्य्यं निषेवते ॥ बीजं मूत्रसमायुक्तं प्रेता भुञ्जन्ति तत्तु वै ॥ ६१ ॥ लज्जा मे जायते तात वदतो भोजनं स्वकम् ॥ यत्स्त्रीरजो योनिगतं प्रेता भुञ्जन्ति तत्तु वै ॥ ॥ ६२ ॥ निर्विण्णाः प्रेतभावेन पृच्छामि त्वां दृढव्रत ॥ यथा न भविता प्रेतस्तन्मे वद तपोधन ॥ नित्यं मृत्युर्वरं जन्तोः प्रेतत्वं मा भवेत्कचित ॥ ६३ ॥ ब्राह्मण उवाच ॥ उपवासपरो नित्यं कृच्छ्रचान्द्रायणे रतः ॥ व्रतैश्च विविधैः पूतो न प्रेतो जायते नरः ॥ ६४ ॥ एकादश्यां व्रतं कुर्वञ्जाग रेण समन्वितम् ॥ अपरैः सुकृतैः पूतो न प्रेतो जायते नरः ॥ ६५ ॥ इष्ट्वा वै वाश्वमेधादीन्दद्यादानानि यो नरः ॥ [1]आरामोद्यानवाप्यादेः प्रपाया श्चैव कारकः ॥ ६६ ॥ कुमारीं ब्राह्मणानां तु विवाहयति शक्तितः ॥ विद्यादोऽभयदश्चैव न प्रेतो जायते नरः ॥ ६७ ॥ [2]शूद्रान्नेन तु भुक्तेन जठर स्थेन यो मृतः ॥ दुर्म्मृत्युना मृतो यश्च स प्रेतो जायते नरः ॥ ६८ ॥ अयाज्ययाजकश्चैव याज्यानां च विवर्जकः ॥ [3]कारुभिश्च रतो नित्यं स प्रेतो जायते नरः ॥ ६९ ॥ कृत्वा मद्यपसम्पर्कं मद्यपस्त्रीनिषेवणम् ॥ अज्ञानाद्भक्षयन्मांसं स प्रेतो जायते नरः ॥ ७० ॥ देवद्रव्यं च ब्रह्मस्वं गुरुद्रव्यं तथैव च ॥ कन्यां ददाति शुल्केन स प्रेतो जायते नरः ॥७१॥ मातरं भगिनीं भार्यां स्नुषां दुहितरं तथाः ॥ अदृष्टदोषास्त्यजति स प्रेतो जा० ॥७२॥ न्यासापहर्ता मित्रध्रुक्परदाररतः सदा ॥ विश्वासघाती कूटश्च स प्रे० ॥७३॥ भ्रातृध्रुग्ब्रह्महा गोघ्नः सुरापो गुरुतल्पगः ॥ कुलमार्गं परित्यज्य ह्यनृतो क्तौ सदा रतः ॥ हर्ता हेम्नश्च भूमेश्च स प्रे० ॥७४॥ भीष्म उवाच ॥ एवं ब्रुवति वै विप्रे आकाशे दुन्दुभिस्वनः ॥ अपतत्पुष्पवर्षं च देवैर्मुक्तं द्विजोपरि ॥ ७५ ॥ पञ्च देवविमानानि प्रेतानामागतानि वै ॥ स्वर्गं गता विमानैस्ते दिव्यैः संपृच्छय तं मुनिम् ॥ ७६ ॥ ज्ञानं विप्रस्य सम्भाषात्पुण्यसंकीर्त्त

१ मठारामप्रपादेश्च गोष्ठ्यादेश्चैव० पा० । २ पतितान्नेन शु० पा० । ३ कुत्सितैश्च० पा० ।

नेन च ॥ प्रेताः पापविनिर्मुक्ताः परं पदमवाप्नुयुः ॥७७॥ सूत उवाच ॥ इदमाख्यानकं श्रुत्वा कम्पितोऽश्वत्थपत्रवत् ॥ मानुषाणां हितार्थाय गरुडः पृष्टवान्पुनः ॥ ७८ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे भीष्म युधिष्ठिरसंवादे प्रेतत्वोत्पत्तितन्मुक्तिपेञ्चप्रेतोपाख्यान निरूपणं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ गरुड उवाच ॥ किंकिं कुर्व्वन्ति वै प्रेताः पिशाचत्वेव्यवस्थिताः ॥ वदन्ति वा कदाचित्किं तद्वदस्व सुरेश्वर ॥ १ ॥ श्रीभगवानुवाच ॥ तेषां स्वरूपं वक्ष्यामि चिह्नं स्वप्नं यथातथम् ॥ क्षुत्पिपासार्दितास्ते वै प्रविशेयुः स्ववेश्मनि ॥ २ ॥ प्रतिष्ठा वायुदेहेषु शयानांस्तु स्ववंशजान् ॥ तत्र यच्छन्ति लिङ्गानि दर्शयन्ति खगेश्वर ॥ ३ ॥ स्वपुत्रस्वकलत्राणि स्वबन्धुंतत्र गच्छति ॥ हयो गजो वृषो मर्त्यो दृश्यते विकृताननः ॥ ४ ॥ शयानं विपरीतं तु आत्मानं च विपर्य्ययम् ॥ उत्थितः पश्यति यस्तु तद्विन्द्यात्प्रेतनिर्म्मितम् ॥ ५ ॥ स्वप्ने नरो हि निगडैर्बध्यते बहुधा यदि ॥ अन्नं च याचते स्वप्ने कुवेषः पूर्व्वजो मृतः ॥ ६ ॥ स्वप्ने यो भुज्यमानस्य गृहीत्वान्नं पलायते ॥ आत्मनस्तु परो वापि तृषार्त्तस्तु जलं पिबेत् ॥ ७ ॥ वृषभारोहणं स्वप्ने वृषभैः सह गच्छति ॥ उत्पत्य गगनं याति तीर्थे याति क्षुधातुरः ॥ ८ ॥ स्ववाचा वदते यस्तु गोवृषद्विजवाजिषु ॥ लिंगे गजे तथा देवे भूते प्रेते निशाचरे ॥ ९ ॥ स्वप्नमध्ये तु पक्षीन्द्र प्रेतलिंगान्यनेकधा ॥ स्वकलत्रं स्वबन्धुं वा स्वसुतं स्वपतिं विभुम् ॥ विद्यमानं मृतं पश्येत्प्रेतदोषेण निश्चितम् ॥ १० ॥ याचते यः परं स्वप्ने क्षुत्तृड्भ्यां च परिप्लुतः ॥ तीर्थे गत्वा ददेत्पिण्डान्प्रेतदोषैर्न संशयः ॥ ११ ॥ निर्गच्छेद्वा गृहाद्वापि स्वप्ने पुत्रस्तथा पशुः ॥ पिता भ्राता कलत्रं च प्रेतदोषस्तु पश्यति ॥ १२ ॥ चिह्नान्येतानि पक्षीन्द्र प्रायश्चित्तं निवेदयेत् ॥ कृत्वा स्नानं गृहे तीर्थे श्रीवृक्षे तर्पणं जलैः ॥१३॥ कृष्णधान्यानि पूजां च प्रदद्याद्वेदपारगे ॥ होमं कुर्याद्यथाशक्ति सम्पूर्णं वाचयेत्सुधीः॥ ॥ १४ ॥ एतद्धि श्रद्धया यस्तु प्रेतलिंगनिदर्शनम् ॥ पठते शृणुते वापि प्रेतचिह्नं विनश्यति ॥ १५ ॥ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे प्रेतकृतितदुक्तितचिह्नतद्विमुक्त्युपायनिरूपणं नाम त्रयोविंशोऽध्यायः ॥ २३ ॥ ॥ ॥ गरुड उवाच ॥ ॥ नाकाले म्रियते कश्चिदिति वेदानुशासनम् ॥ कस्मान्मृत्युमवाप्नोति राजा वा श्रोत्रियोपि वा ॥ १ ॥ यदुक्तं ब्राह्मणा पूर्व्वमनृतं तद्धि दृश्यते ॥ वेदैरुक्तं तु यद्वाक्यं शतं जीवति मानुषे ॥ २ ॥ जीवन्ति मानुषे लोके सर्व्वे वर्णा द्विजातयः ॥

१ एतन्नामा सप्तमाध्यायोपि । तथाप्ययं ततो विषयभेदाद्भिद्यते किंचित । २ निगडैर्बध्यते यस्तु बध्यते० पा० । ३ चिह्नं न पश्यति० पा० ।

अन्त्यजा म्लेच्छजाश्चैव खण्डे भारतसंज्ञके ॥ ३ ॥ न दृश्यते कलौ तच्च कस्मादेव समादिश ॥ ( आधानान्मृत्युमाप्नोति बालो वा स्थविरो युवा ॥ ४ ॥ सधनो निर्धनो वापि सुकुमारः सुरूपवान् ॥ अविद्वांश्चैव विद्वांश्च ब्राह्मणस्त्वितरो जनः ॥ ५ ॥ तपोरतो योगशीलो महाज्ञानी च यो नरः ॥ सर्व्वज्ञानरतः श्रीमान्धर्मात्मातुलविक्रमः ॥ ६ ॥ ) सर्व्वमेतदशेषेण जायते वसुधातले ॥ कस्मान्मृत्युमवाप्नोति राजा वा श्रोत्रियोऽपि वा ॥ ७ ॥ श्रीभगवानुवाच ॥ साधुसाधु महाप्राज्ञ यस्त्वं भक्तोऽसि मे प्रियः॥ श्रूयतां वचनं गुह्यं नानादेशविनाशनम् ॥ ८ ॥ विधातृविहितो मृत्युः शीघ्रमादाय गच्छति ॥ ततो वक्ष्यामि पक्षीन्द्र काश्यपेय महाव्रते ॥ ९ ॥ मानुषः शतजीवीति पुरा वेदेन भाषितम् ॥ विकर्म्मणः प्रभावेण शीघ्रं चापि विनश्यति ॥ १० ॥ वेदानभ्यसनेनैव कुलाचारं न सेवते ॥ आलस्यात्कर्म्मणां त्यागो निषिद्धेऽप्यादरः सदा ॥ ११ ॥ यत्र तत्र गृहेऽश्नाति परक्षेत्ररतस्तथा ॥ एतैरन्यैर्महादोषैर्जायते चायुषः क्षयः ॥ १२ ॥ अश्रद्दधानमशुचिं नास्तिकं त्यक्तमङ्गलम् ॥ परद्रोहानृतकरं ब्राह्मणं यत ( म ) मन्दिरम् ॥ ॥ १३ ॥ अरक्षितारं राजानं नित्यं धर्मविवर्जितम् ॥ क्रूरं व्यसनिनं मूर्खं वेदवादबहिष्कृतम् ॥ प्रजापीडनकर्त्तारं राजानं यमशासनम् ॥ १४ ॥ प्रापयन्ति वशं मृत्योस्ततो याति च यातनाम् ॥ स्वकर्म्माणि परित्यज्य मुख्यवृत्तानि यानि च ॥१५॥ परकर्म्मरतो नित्यं यमलोकं स गच्छति ॥ शूद्रः करोति यत्किञ्चिद्द्विजशुश्रूषणं विना ॥ १६ ॥ उत्तमाधममध्ये वा यमलोके स पच्यते ॥ स्नानं दानं जपो होमो स्वाध्यायो देवतार्च्चनम् ॥ ॥ १७ ॥ यस्मिन्दिने न सेव्यन्ते स वृथा दिवसो नृणाम् ॥ अनित्यमध्रुवं देहमनाधारं रसोद्भवम् ॥ १८ ॥ अन्नोदकमये देहे गुणानेतान्वदाम्यहम् ॥ यत्प्रातःसंस्कृतं सायं नूनमन्नं विनश्यति ॥ १९ ॥ तदीयरससम्पुष्टकाये का बत नित्यता ॥ गतं ज्ञात्वा तु पक्षीन्द्र वपुरद्धं स्वकर्म्मभिः ॥ २० ॥ नरः पापविनाशाय कुर्व्वीत परमौषधम् ॥ देहः किमन्नदातुः स्विन्निषेक्तुर्मातुरेव वा ॥ २१ ॥ उभयोर्वा प्रभोर्वापि बलिनोऽग्नेः शुनोऽपि वा ॥ कस्तत्र परमो यत्नः कृमिविड्भस्मसंज्ञके ॥ २२ ॥ कर्त्तव्यः परमो यत्नः पातकस्य विनाशने ॥ अनेकभवसम्भूतं पातकं तु त्रिधा कृतम् ॥ २३ ॥ यदा प्राप्नोति मानुष्यं तदा सर्व्वं तपत्यपि ॥ सर्व्वजन्मानि संस्मृत्य विषादी कृतचेतनः ॥ २४ ॥ अवेक्ष्य गर्भवासांश्च कर्म्मजा गतयस्तथा ॥ मानुषोदरवासी चेत्तदा भवति पातकी ॥ २५ ॥ अण्डजादिषु भूतेषु यत्रयत्र प्रसर्पति ॥ आधयो व्याधयः क्लेशा जरारूपविपर्य्ययः ॥ २६ ॥ गर्भवासाद्विनिर्म्मुक्तस्त्वज्ञानतिमिरावृतः ॥ न जानाति खगश्रेष्ठ बालभावं समाश्रितः ॥ २७ ॥ यौवने तिमिरान्धश्च यः पश्यति स मुक्तिभाक् ॥ आधानान्मृत्युमाप्नोति बालो वा स्थविरो युवा ॥२८॥ सधनो निर्द्धनश्चैव सुकुमारः कुरूपवान् ॥ अविद्वांश्चैव विद्वांश्च ब्राह्मणस्त्वितरो जनः ॥२९॥

तपोरतो योगशीलो महाज्ञानी च यो नरः॥ महादानरतः श्रीमान्धर्मात्मातुलविक्रमः ॥ विना मानुषदेहं तु सुखं दुःखं न विन्दति ॥ ३० ॥ प्राकृतैः
कर्म्मपाशैस्तु मृत्युमाप्नोति मानवः ॥ आधानात्पञ्च वर्षाणि स्वल्पपापैर्विपच्यते ॥ ३१ ॥ पञ्चवर्षाधिको भूत्वा महापापैर्विपच्यते ॥ योनिं पूरयते
यस्मान्मृतोऽप्यायाति याति च ॥ ३२ ॥ मृतो दानप्रभावेण जीवन्मर्त्त्यश्चिरं भुवि ॥ सूत उवाच ॥ इति कृष्णवचः श्रुत्वा गरुडो वाक्यमब्रवीत् ॥
॥ ३३ ॥ गरुड उवाच ॥ मृते बाले कथं कुर्य्यात्पिण्डदानादिकाः क्रियाः ॥ गर्भेषु च विपन्नानामाचूडाकरणाच्छिशोः ॥ ३४ ॥ कथं किं केन दातव्यं
मृतान्ते को विधिः स्मृतः ॥ गरुडोक्तमिति श्रुत्वा विष्णुर्वाक्यमथाब्रवीत् ॥ ३५ ॥ श्रीविष्णुरुवाच ॥ यदि गर्भो विपद्येत स्रवते वापि योषितः ॥ याव
न्मासं स्थितो गर्भस्तावद्दिनमशौचकम् ॥ ३६ ॥ तस्य किञ्चिन्न कर्त्तव्यमात्मनः श्रेय इच्छता ॥ ततो जाते विपन्ने तु आ चूडाकरणाच्छिशोः॥ ३७ ॥
दुग्धं भोज्यं यथाशक्ति बालानां च प्रदीयते ॥ आ चूडात्पञ्चवर्षे तु देहदाहो विधीयते ॥ ३८ ॥ दुग्धं तस्य प्रदेयं स्याद्बालानां भोजनं शुभम् ॥
पञ्चवर्षाधिके प्रेते स्वजातिविहितानि च ॥ ३९ ॥ कुर्य्यात्कर्म्माणि सर्व्वाणि चोदकुम्भादि पायसम् ॥ दातव्यं तु खगश्रेष्ठ ऋणसम्बन्धकस्तु सः
॥ ४० ॥ जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥ कर्त्तव्यं पक्षिशार्दूल पनर्देहक्षयाय वै ॥ ४१ ॥ तस्मै यद्रोचते देयमदत्त्वा निर्द्धने कुले ॥
स्वल्पायुर्निर्द्धनो भूत्वा गतिभक्तिविवर्ज्जितः ॥ ४२ ॥ पुनर्जन्माप्नुयान्मर्त्यस्तस्माद्देयमृते शिशोः ॥ पुराणे गीयते गाथा सर्व्वथा प्रतिभाति मे ॥४३॥
मिष्टान्नं भोजनं देयं दाने शक्तिस्तु दुर्लभा ॥ भोज्ये भोजनशक्तिश्च गतिशक्तिर्वरस्त्रियः ॥ ४४ ॥ विभवे दानशक्तिश्च नाल्पस्य तपसः फलम् ॥
दानाद्भोगानवाप्नोति सौख्यं तीर्थस्य सेवनात् ॥ सुभाषणान्मृतो यस्तु स विद्वान्धर्मवित्तमः ॥ ४५ ॥ अदत्तदानाच्च भवेद्दरिद्रो दरिद्रभावाच्च करोति
पापम् ॥ पापप्रभावान्नरकं प्रयाति पुनर्दरिद्रः पुनरेव पापी ॥ ४६ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशाख्ये धर्मकाण्डे प्रेतकल्पे
श्रीकृष्णगरुडसंवादेऽल्पायुर्मरणहेतुबालान्त्येष्टयोर्निरूपणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ श्रीविष्णुरुवाच ॥ अतः परं प्रवक्ष्यामि पुरुषस्त्री
विनिर्णयम् ॥ जीवन्वापि मृतो वापि पञ्चवर्षाधिकोऽपि वा ॥१॥ पूर्णे तु पञ्चमे वर्षे पुमांश्चैव प्रतिष्ठितः॥ सर्व्वेन्द्रियाणि जानाति रूपारूपविपर्य्ययौ
॥२॥ पूर्व्वकर्मविपाकेन प्राणिनां वधबन्धनम् ॥ विप्रादीनन्त्यजान्सर्वान्पापं मारयति ध्रुवम् ॥३॥ गर्भे नष्टे क्रिया नास्ति दुग्धं देयं मृते शिशौ ॥ ॥१९१॥
परं च पायसं क्षीरं दद्याद्बालविपत्तितः ॥ ४ ॥ एकादशाहं द्वादशाहं वृषं वृषविधिं विना ॥ महादानविहीनं च कुमारे कृत्यमादिशेत् ॥ ५ ॥
कुमाराणां चैव बालानां भोजनं वस्त्रवेष्टनम् ॥ बाले वा तरुणे वृद्धे घटो भवति वै मृते ॥ ६ ॥ भूमौ विनिःक्षिपेद्बालं द्विमासोनं द्विवार्षिकम् ॥

ततः परं खगश्रेष्ठ देहदाहो विधीयते ॥ ७ ॥ शिशुरा दन्तजन्माद्बालः स्याद्यावदाशिखम् ॥ कथ्यते सर्व्वशास्त्रेषु कुमारो मौञ्जिबन्धनात् ॥ ८ ॥ शूद्रादीनां कथं कुर्य्यात्संशयो मौञ्जिवर्जनात् ॥ गर्भाच्च नवमं हित्वा शिशुरामासषोडशम् ॥ ९ ॥ बालश्चाथ परं ज्ञेय आमाससप्तविंशति ॥ आ पञ्च वर्षात्कौमारः पौगण्डो नवहायनः ॥ १० ॥ किशोरः षोडशाब्दः स्यात्ततो यौवनमादिशेत् ॥ मृतोऽपि पञ्चमे वर्षे अवृतः सवृतोऽपि वा ॥ ११ ॥ पूर्व्वोक्तमेव कर्त्तव्यमीहते दशपिण्डकम् ॥ स्वल्पकर्म्मप्रसङ्गाच्च स्वल्पाद्विषयबन्धनात् ॥ १२ ॥ स्वल्पाद्वपुषि वस्त्राच्च क्रियां स्वल्पामपीच्छति ॥ यावदुपचयो जन्तुर्यावद्विषयवेष्टितः ॥ १३ ॥ यद्यद्यस्योपजीव्यं स्यात्तत्तदेयमिहेच्छति ॥ ब्रह्मबीजोद्भवाः पुत्रा देवर्षीणां च वल्लभाः ॥ १४ ॥ यमेन यमदूतैश्च शास्यन्ते निश्चितं खग ॥ बालो वृद्धो युवा वापि घटमिच्छन्ति देहिनः ॥ १५ ॥ सुखं दुःखं सदा वेत्ति देही वै सर्व्वगस्त्विह ॥ परित्यज्य तदात्मानं जीर्णां त्वचमिवोरगः ॥ १६ ॥ अंगुष्ठमात्रः पुरुषो वायुभूतः क्षुधान्वितः ॥ तस्माद्देयानि दानानि मृते बाले सुनिश्चितम् ॥ १७ ॥ जन्मतः पञ्च वर्षाणि भुंक्ते दत्तमसंस्कृतम् ॥ पञ्चवर्षाधिके बाले विपत्तिर्यदि जायते ॥ १८ ॥ वृषोत्सर्गादिकं कर्म्म सपिण्डीकरणं विना ॥ द्वादशेहनि सम्प्राप्ते कुर्य्याच्छ्राद्धानि षोडश ॥ १९ ॥ पायसेन गुडेनापि पिण्डान्दद्याद्यथाक्रमम् ॥ उदकुम्भप्रदानं च पद (उप) दानानि यानि च ॥ २० ॥ भोजनानि द्विजे दद्यान्महादानादि शक्तितः ॥ दीपदानादि यत्किञ्चित्पञ्चवर्षाधिके सदा ॥ २१ ॥ कर्त्तव्यं च खगश्रेष्ठ व्रतात्प्राक् प्रेततृप्तये ॥ यदा न क्रियते सर्व्वं मुद्गलत्वं स गच्छति ॥ २२ ॥ व्रतात्प्रागेव देयं तु ततः पितृगणस्य च ॥ स्वाहाकारेण वै कुर्यादेकोद्दिष्टानि षोडश ॥ २३ ॥ ऋजुदर्भैस्तिलैः शुक्लैः प्राचीनावीति निश्चितम् ॥ अपसव्यं च कर्त्तव्यं कृते यांति परां गतिम् ॥ २४ ॥ पुनश्चिरायुषो भूत्वा जायंते स्वकुले ध्रुवम् ॥ सर्व्वसौख्यप्रदः पुत्रः पित्रोः प्रीतिविवर्द्धनः ॥ २५ ॥ आकाशमेकं हि यथा चन्द्रादित्यौ यथैकतः ॥ घटादिषु पृथक् सर्व्वं पश्य रूपं च तत्समम् ॥ २६ ॥ आत्मा तथैव सर्व्वेषु पुत्रेषु विचरेत्सदा ॥ या यस्य प्रकृतिः पूर्व्वं शुक्रशोणितसङ्गमे ॥ २७ ॥ सा (स) तेन भावयोगेन पुत्रास्तत्कर्म्मकारिणः ॥ पितृरूपं समादाय कस्यचिज्जायते सुतः ॥ २८ ॥ पितृतः कोऽपि रूपाढ्यो गुणज्ञो दानतत्परः ॥ सदृशः कोऽपि लोकेऽस्मिन्न भूतो न भविष्यति ॥ २९ ॥ अन्धादन्धो न भवति मूकान्मूको न जायते ॥ बधिराद्बधिरो नैव विद्यावान्विदुषो न हि ॥ अनुरूपा न दृश्यंते मदीयं वचनं शृणु ॥ ३० ॥ गरुड उवाच ॥ औरसक्षेत्रजाद्याश्च पुत्रा दशविधाः स्मृताः ॥ संगृहीतः सुतो यस्तु दासीपुत्रश्च तेन किम् ॥ ३१ ॥ कांकां गति

१ पिशाचत्वं स० पा०।

भवाप्नोति जातो मृत्युवशं गतः ॥ भवेन्न दुहिता यस्य न दौहित्रो न वा सुतः ॥ ३२ ॥ श्राद्धं तस्य कथं कार्य्यं विधिना केन तद्भवेत् ॥ श्रीभगवानुवाच ॥ मुखं दृष्ट्वा तु पुत्रस्य मुच्यते पैतृकादृणात् ॥ ३३ ॥ पौत्रस्य दर्शनाज्जन्तुर्मुच्यते च[1] ऋणत्रयात् ॥ लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः ॥ ३४ ॥ अन्यक्षेत्रोद्भवाद्या ये भुक्तिमात्रप्रदाः सुताः ॥ कुर्व्वीत पार्व्वणं श्राद्धमौरसो विधिवत्सुतः ॥ ३५ ॥ कुर्व्वन्त्यन्ये सुताः श्राद्धमेकोदिष्टं न पार्व्वणम् ॥ ब्राह्मोढाजस्तून्नयति संगृहीतस्त्वधो नयेत् ॥ श्राद्धं सांवत्सरं कुर्व्वञ्जायते नरकाय वै ॥ ३६ ॥ सर्व्वदानानि देयानि ह्यन्नदानादृते खग ॥ संगृहीतः सुतः कुर्य्यादेकोदिष्टं न पार्व्वणम् ॥ ३७ ॥ प्रत्यब्दं पितृमातृभ्यां श्राद्धं दत्त्वा न लिप्यते ॥ एकोदिष्टं परित्यज्य पार्व्वणं कुरुते यदि ॥ ३८ ॥ आत्मानं च पितॄंश्चैव स नयेद्यममन्दिरम् ॥ संगृहीतस्तु यः केचिद्दासीपुत्रादयश्च ये ॥ ३९ ॥ तीर्थे कुर्य्युः पितृश्राद्धं दानं (मासं) दद्युर्द्विजन्मने ॥ संगृहीतसुतो भूत्वा पाकं वा यः प्रयच्छति ॥ ४० ॥ वृथा श्राद्धं विजानीयाच्छूद्रान्नेन यथा द्विजः ॥ न प्रीणयति तच्छ्राद्धं पितामहमुखान्पितॄन् ॥ एवं ज्ञात्वा खगश्रेष्ठ हीनजातीन्सुतांस्त्यजेत् ॥ ४१ ॥ (ब्राह्मण्यां ब्राह्मणाज्जातश्चाण्डालादधमः स्मृतः) ॥ यस्तु प्रव्रजिताज्जातो ब्राह्मण्यां शूद्रतश्च यः ॥ ४२ ॥ द्वावेतौ विद्धि चाण्डालौ सगोत्राद्यस्तु जायते ॥ स्वयातिविहितान्पुत्रः समुत्पाद्य खगेश्वर ॥ ४३ ॥ तैः सुवृत्तैः सुखं प्राप्यं कुवृत्तैर्नरकं व्रजेत् ॥ हीनजातिसमुद्भूतैः सुवृत्तैः सुखमेधते ॥ ४४ ॥ कलिकलुषविमुक्तः पूजितः सिद्धसङ्घैरमरचमरमालावीज्यमानोऽप्सरोभिः ॥ पितृशतमपि बन्धून्पुत्रपौत्रप्रपौत्रानपि नरकनिमग्नानुद्धरेदेक एव ॥ ४५ ॥ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे मृतबालान्त्येष्टिभिन्नाभिन्नसुतकृतान्त्येष्ट्योर्वर्णनं नाम पञ्चविंशोऽध्यायः ॥ २५ ॥ ॥ गरुड उवाच ॥ सत्यं ब्रूहि सुरश्रेष्ठ कृपां कृत्वा मयि प्रभो ॥ मृतानां चैव जन्तूनां कदा कुर्य्यात्सपिण्डनम् ॥ १ ॥ सपिण्डत्वे कुतो यांति असपिण्डे कुतो गतिः ॥ केनैव सहपिण्डत्वं स्त्रीपुंसोर्वक्तुमर्हसि ॥ २ ॥[2] स्त्रीपुमांसौ सहैकत्वं प्राप्नुतः कथमुत्तमम् ॥ जीवेद्भर्त्तरि नारीणां सपिण्डीकरणं कुतः ॥ ३ ॥ भर्तृलोकं कथं यान्ति स्वर्गलोकं सुरेश्वर ॥ अन्वारोहे कथं श्राद्धं वृषोत्सर्गः कथं भवेत् ॥ ४ ॥ घटदानं कथं कार्य्यं सपिण्डीकरणे कृते ॥ कथयस्व प्रसादेन हिताय जगतां प्रभो ॥ ५ ॥ श्रीभगवानुवाच ॥ यथावत्कथयिष्यामि सपिण्डीकरणं खग ॥ वर्षं यावत्खगश्रेष्ठ यदाचरति मानवः ॥ ६ ॥ सपिण्डने[3] ततो वृत्ते पितृलोकं स गच्छति ॥ तस्मात्पुत्रेण कर्त्तव्यं सपिण्डीकरणं पितुः ॥ ७ ॥ संवत्सरे तु सम्पूर्णे कुर्य्यात्पिण्डप्रवेशनम् ॥ पिण्डप्रवेशावि

१ सर्वकिल्बिषात्० । २ आर्षत्वान्न समासान्तः । ३ ततः पितृगणैः सार्धं० पा० ।

धिना तस्य नित्यं मृताह्निकम् ॥ ८ ॥ निश्चितं पक्षिशार्दूल वर्षान्ते पिण्डमेलनम् ॥ सहपिण्डे कृते प्रेतस्ततो याति परां गतिम् ॥ तन्नाम सम्परित्यज्य ततः पितृगणो भवेत् ॥ ९ ॥ त्रिपक्षे वापि षण्मासे मेलयेत्प्रपितामहैः ॥ ज्ञात्वा वृद्धिविवाहादि स्वगोत्रविहितानि च ॥ १० ॥ विवाहं नैव कुर्व्वीत मृते च गृहमेधिनि ॥ भिक्षुर्भिक्षां न गृह्णाति यावत्कुर्य्यात्सपिण्डनम् ॥ ११ ॥ स्वगोत्रेऽप्यशुचिस्तावद्यावत्पिण्डं न मेलयेत् ॥ मेलना त्प्रेतशब्दस्तु निवर्त्तेत खगेश्वर ॥ १२ ॥ आनन्त्यात्कुलधर्म्माणां पुंसाञ्चैवायुषः क्षयात् ॥ अस्थिरत्वाच्छरीरस्य द्वादशाहः प्रशस्यते ॥ १३ ॥ निर ग्निकः साग्निको वा द्वादशाहे सपिण्डयेत् ॥ १४ ॥ द्वादशाहे त्रिपक्षे वा षण्मासे वत्सरेऽपि वा ॥ सपिण्डीकरणं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥ १५ ॥ सपुत्रस्य न कर्त्तव्यमेकोद्दिष्टं कदाचन ॥ सपिण्डीकरणादूर्द्ध्वं यत्रयत्र प्रदीयते ॥ १६ ॥ तत्रतत्र त्रयं कार्य्यमन्यथा पितृघातकः ॥ त्रिभिः कुर्य्याद्दश कश्च पार्व्वणं मुनिनोदितम् ॥१७॥ तद्दिने तद्दिने कुर्य्यात्पितामहसुखान्यतः ॥ अज्ञानाद्दिनमासानां तस्मात्पार्व्वणमिष्यते ॥१८॥ अनुत्पन्नशरीरस्य न दानं पितृभिः सह ॥ एतैः षोडशभिः श्राद्धैः प्रेतो मुक्तस्तु जायते ॥१९॥ अपुत्रस्य सपिण्डत्वं नैव कुर्य्यात्स्त्रियोऽपि वा ॥ यावज्जीव च सद्भत्र्या न कुर्य्यात्सहपिण्डताम् ॥ २० ॥ ब्राह्मादिषु विवाहेषु या वधूरिह संस्कृता ॥ भर्त्तृगोत्रेण कर्त्तव्यास्तस्याः पिण्डोदकक्रियाः ॥ २१ ॥ आसुरादिविवा हेषु या व्यूढा कन्यका भवेत् ॥ तस्यास्तु पितृगोत्रेण कुर्य्यात्पिण्डोदकक्रियाः ॥ २२ ॥ पितुः पुत्रेण कर्त्तव्यं सपिण्डीकरणं सदा ॥ पुत्राभावे तु पत्नी स्यात्पत्न्यभावे सहोदरः ॥ २३ ॥ भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ॥ सपिण्डनक्रियां कृत्वा कुर्य्यान्नान्दीमुखं ततः ॥ २४ ॥ ज्येष्ठस्यैव कनिष्ठेन भ्रातृपुत्रेण भार्य्यया ॥ सपिण्डीकरणं कार्य्यं पुत्रहीने नरे खग ॥ २५ ॥ भ्रातृणामेकजातानामेकश्चेत्पुत्रवान् भवेत् ॥ सर्व्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ २६ ॥ सर्व्वेषां पुत्रहीनानां पत्नी कुर्य्यात्सपिण्डनम् ॥ ऋत्विजा कारयेद्वापि पुरोहितमथापि वा ॥ २७ ॥ कृतचूडोपनीतश्च पितुः श्राद्धं समाचरेत् ॥ उच्चारयेत्स्वधाकारं न तु वेदाक्षराण्यसौ ॥ २८ ॥ भर्त्रादिभिस्त्रिभिः कार्य्यं सपिण्डीकरणं स्त्रियाः ॥ पितृ व्यभ्रातृपुत्रेण सोदरेण कनीयसा ॥ २९ ॥ अर्व्वाक् संवत्सरात्सन्धौ पूर्णे संवत्सरेऽपि वा ॥ ये सपिण्डीकृताः प्रेतास्तेषां न स्यात्पृथक् क्रिया ॥३०॥ सपिण्डने कृते वत्स पृथक्त्वं तु विगर्हितम् ॥ यस्तु कुर्य्यात्पृथक् पिण्डं पितृहा सोऽभिजायते ॥ ३१ ॥ सपिण्डीकरणे वृत्ते पृथक्त्वं नोपपद्यते ॥ पृथक् पिण्डे कृते पश्चात्पुनः कुर्य्यात्सपिण्डनम् ॥ ३२ ॥ सपिण्डीकरणं कृत्वा एकोद्दिष्टं करोति यः ॥ आत्मानं च तथा प्रेतं स नयेद्यमशासनम्

१ पुरोहितेनेत्यर्थः ।

॥ ३३ ॥ वर्षं यावत्क्रिया कार्य्या नामगोत्रेण धीमता ॥ घटादि भोजनं नित्यं पद[1]दानानि यानि च ॥ सपिण्डीकरणे वृत्ते एकस्यैव तु दापयेत् ॥
॥ ३४ ॥ अन्नं पानीयसहितं संख्यां कृत्वाब्दिकस्य च ॥ दातव्यं ब्राह्मणे पक्षिञ्जलपूर्णघटादिकम् ॥ ३५ ॥ पिण्डान्ते तस्य सकला वर्षवृत्तिः स्वशक्तितः ॥ दिव्यदेहो विमानस्थः सुखं याति यमालयम् ॥ ३६ ॥ जीवमाने च पितरि न हि पुत्रे सपिण्डता ॥ स्त्रीणां सपिण्डनं नास्ति तथा भर्त्तरि जीवति ॥ ३७ ॥ हुताशं या समारूढा चतुर्थेऽह्नि पतिव्रता ॥ तस्या भर्तृदिने कार्य्यं वृषोत्सर्गादिकं च यत् ॥ ३८ ॥ पुत्रिका पतिगोत्रा स्यादधस्तात्पुत्रजन्मनः ॥ पुत्रोत्पत्तेः परस्तात्सा पितृगोत्रं व्रजेत्पुनः ॥३९॥ पतिपत्न्योः सदैकत्वं हुताशं याधिरोहति ॥ पुत्रेणैव पृथक् श्राद्धं क्षयाख्ये तस्य वासरे॥४०॥अपुत्रौ चेन्मृतौ स्यातामेकचित्यां समेऽहनि॥पृथक् श्राद्धानि कुर्व्वीत सापिण्ड्यं पतिना सह ॥४१॥ पृथक्पृथक् च पिण्डेन दम्पती पतिना सह ॥ न लिप्यते महादोषैरेतत्सत्यं वचो मम ॥ ४२ ॥ एकचित्यां समारूढौ दम्पती निधनं गतौ ॥ एकपाकं प्रकुर्व्वीत पिण्डान्दद्यात्पृथक्पृथक् ॥ ४३ ॥ एकादशे वृषोत्सर्गं प्रेतश्राद्धानि षोडश ॥ घटादिपददानानि महादानानि यानि च ॥ वर्षं यावत्पृथक्कुर्य्यात्प्रेतस्तृप्तिं व्रजेच्चिरम् ॥ ४४ ॥ एकगोत्रे मृतानां तु स्त्रिया वा पुरुषस्य वा ॥ स्थण्डिलं चैकतः कुर्य्याद्धोमं कुर्य्यात्पृथक्पृथक् ॥ ४५ ॥ एकादशेऽह्नि यच्छ्राद्धं पृथक् पिण्डाश्च भोजनम् ॥ पाकैकेन पतिस्त्रीणामन्येषां च विगर्हितम् ॥ ४६ ॥ एकेनैव तु पाकेन श्राद्धानि कुरुते सुतः ॥ एकं तु विकिरं कुर्य्यात्पिण्डान्दद्याद्बहूनपि ॥ तीर्थे चापरपक्षे वा चन्द्रसूर्य्यग्रहेऽपि वा ॥ ४७ ॥ नारी भर्त्तारमासाद्य कुणपं दहते यदा ॥ अग्निर्दहति गात्राणि आत्मानं नैव पीडयेत् ॥ ॥ ४८ ॥ दह्यते ध्मायमानानां धातूनां हि यथा मलम् ॥ तथा नारी दहेद्देहं हुताशे ह्यमृतोपमे ॥ ४९ ॥ दिव्यादौ दिव्यदेहस्तु शुद्धो भवति पूरुषः ॥ तप्ततैलेन लोहेन वह्निना नैव दह्यते ॥ ५० ॥ तथा सा पतिसंयुक्ता दह्यते न कदाचन ॥ अन्तरात्मा मृते तस्मिन्मृतोऽप्येकत्वमागतः ॥ ५१ ॥ भर्तृसंगं परित्यज्य अन्यत्र म्रियते यदि ॥ भर्त्तृलोकं न सा याति यावदाभूतसंप्लवम् ॥ ५२ ॥ लक्ष्मीयुतान्परित्यज्य मातरं पितरं तथा ॥ मृतं पतिमनुव्रज्य सा चिरं सुखमेधते ॥५३॥ दिव्यवर्षप्रमाणेन तिस्रः कोटयोऽर्द्धकोटयः ॥ तावत्कालं वसेत्स्वर्गे नक्षत्रैः सह सर्व्वदा ॥ ५४ ॥ तदन्ते चरते लोके कुले भवति भोगिनाम् ॥ सा[2] हि लब्धमहाप्रीतिर्भर्त्रा सह पतिव्रता ॥५५॥ एवं न कुरुते नारी धर्म्मोढा पतिसंगमम् ॥ जन्मजन्मनि दुःखार्त्ता दुःशीलाऽप्रियवादिनी ॥ ५६ ॥ वल्गुली गृहगोधा वा गोधा वा द्विमुखी भवेत् ॥ स्वभर्त्तारं परित्यज्य परपुंसोनुवर्त्तिनी ॥ ५७ ॥ तस्मात्सर्व्वप्रय

१ दीपदानानि° पा० । २ महाप्रीतिमवाप्नोति° पा० ।

तेन स्वपतिं स्त्री निषेवते ॥ मनसा कर्म्मणा वाचा मृतं जीवन्तमेव वा ॥ ५८ ॥ जीवमाने मृते वापि किल्बिषं कुरुते तु या ॥ सा च वैधव्यमाप्नो
ति जन्मजन्मनि दुर्भगा ॥ ५९ ॥ यद्देवेभ्यो यत्पितृभ्यः श्रद्धयैव प्रदीयते ॥ तत्फलं भर्त्तृपूजातः कुर्य्याद्भर्त्त्रर्चनं ततः ॥ ६० ॥ एवं कृते खगश्रेष्ठ
पितृलोके चिरं वसेत ॥ यावदादित्यचन्द्रौ च तावद्देवसमा दिवि ॥ ६१ ॥ पुनश्चिरायुषो भूत्वा जायन्ते विपुले कुले ॥ पतिव्रता यथा नारी भर्त्तृदुः
खं न विन्दति ॥ ६२ ॥ सर्व्वमेतद्धि कथितं मया तव खगेश्वर ॥ विशेषं कथयिष्यामि मृतस्यैव सुखप्रदम् ॥ ६३ ॥ द्वादशाहे कृते सर्व्वे वर्षे याव
त्सपिण्डनम् ॥ पुनः कुर्य्यात्सदा नित्यं घटान्नं प्रतिमासिकम् ॥ ६४ ॥ कृतस्य करणं नास्ति प्रेतकार्य्याद्दृते खग ॥ यः करोति नरः कश्चित्कृत
पूर्व्वं विनश्यति ॥ ६५ ॥ मृतस्यैव पुनः कुर्य्यात्प्रेतोऽक्षय्यमवाप्नुयात् ॥ प्रतिमासं घटा देया सोदना जलपूरिताः ॥ ६६ ॥ अर्व्वाक्च वृद्धेः करणाच्च
तार्क्ष्य सपिण्डनं यः कुरुते हि पुत्रः ॥ तथापि मासं प्रतिपिण्डमेकमन्नं च कुम्भं सजलं च दद्यात् ॥ ६७ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे
द्वितीयांशे धर्मकाण्डे श्रीकृष्णगरुडसंवादे प्रेतकल्पे सपिण्डननिरूपणं नाम षड्विंशोऽध्यायः ॥ २६ ॥ तार्क्ष्य उवाच ॥ कथं प्रेता वसन्त्यत्र की
दृग्रूपा भवन्ति ते ॥ महाप्रेताः पिशाचाश्च कैः कैः कर्म्मफलैर्विभो ॥ सर्व्वेषामनुकम्पार्थं ब्रूहि मे मधुसूदन ॥ १ ॥ प्रेतत्वान्मुच्यते येन दानेन च शुभे
न च ॥ तन्मे कथय देवेश मम चेदिच्छसि प्रियम् ॥ २ ॥ श्रीकृष्ण उवाच ॥ साधु पृष्टं त्वया तार्क्ष्य मानुषाणां हिताय वै ॥ शृणुष्वावहितो भूत्वा
यद्ब्रवीमि प्रेतलक्षणम् ॥ ३ ॥ गुह्याद्गुह्यतरं ह्येतन्नाख्येयं यस्य कस्यचित् ॥ भक्तस्त्वं हि महाबाहो तेन ते कथयाम्यहम् ॥ ४ ॥ पुरा त्रेतायुगे तात
राजासीद्बभ्रुवाहनः ॥ महोदयपुरे रम्ये धर्म्मनिष्ठो महाबलः ॥ ५ ॥ यज्वा दानपतिः श्रीमान्ब्रह्मण्यः साधुसम्मतः ॥ शीलाचारगुणोपेतो दयादाक्षि
ण्यसंयुतः ॥ ६ ॥ प्रजाः पालयते नित्यं पुत्रानिव महाबलः ॥ क्षत्रधर्म्मरतो नित्यं स दण्ड्यान्दण्डयन्नृपः ॥ ७ ॥ स कदाचिन्महाबाहुः ससैन्यो
मृगयां गतः ॥ वनं विवेश गहनं नानावृक्षसमन्वितम् ॥ ८ ॥ शार्दूलशतसंजुष्टं नानापक्षिनिनादितम् ॥ वनमध्ये तदा राजा मृगं दूरादपश्यत ॥९॥
तेन विद्धो मृगोऽतीव बाणेन सुदृढेन च ॥ बाणमादाय तं तस्य स वनेऽदर्शनं ययौ ॥ १० ॥ कक्षे तच्छोणितस्रावात्स राजानुजगाम तम् ॥ ततो
मृगप्रसङ्गेन वनमन्यद्विवेश सः ॥ ११ ॥ क्षुत्क्षामकण्ठो नृपतिः श्रमसन्तापमूर्च्छितः ॥ जलस्थानं समासाद्य साश्व एवावगाहत ॥ १२ ॥ पीत्वा तदु
दकं शीतं पद्मगन्धाधिवासितम् ॥ तत उत्तीर्य्य सलिलाद्विमलाद्बभ्रुवाहनः ॥ १३ ॥ न्यग्रोधवृक्षमासाद्य शीतच्छायं मनोहरम् ॥ महाविटपिनं हृद्यं

१ सा न भर्तारमाप्नोति० पा० । २ यद्देवेभ्यो यत्पितृभ्योतिथिभ्यः कुर्याद्भर्त्त्राभ्यर्चनं च क्रियाभिः ॥ तस्याप्यर्धं केवलानन्यचित्ता नारी भुङ्क्ते भर्तृशुश्रूषयैव० पा०।

पक्षिसङ्घातनादितम् ॥ १४ ॥ वनस्य तस्य सर्व्वस्य केतुभूतमिवोच्छ्रितम् ॥ तं महातरुमासाद्य निषसाद महीपतिः ॥ १५ ॥ अथ प्रेतं ददर्शासौ क्षुत्तृष्णाव्याकुलेन्द्रियम् ॥ उत्कचं मलिनं कुब्जं (रूक्षं) निर्म्मांसं भीमदर्शनम् ॥१६॥ स्नायुबद्धास्थिचरणं धावमानमितस्ततः ॥ अन्यैश्च बहुभिः प्रेतैः समन्तात्परिवारितम् ॥१७॥ तं दृष्ट्वा विकृतं घोरं विस्मितो बभ्रुवाहनः॥ प्रेतोऽपि दृष्ट्वा तां घोरामटवीमागतं नृपम् ॥१८॥ तदा हृष्टमना भूत्वा तस्यान्तिकमुपागतः ॥ अब्रवीत्स तदा तार्क्ष्य प्रेतराजो नृपं वचः ॥ १९ ॥ प्रेतभावो मया त्यक्तः प्राप्तोऽस्मि परमां गतिम् ॥ त्वत्संयोगान्महाबाहो नास्ति धन्यतरो मम ॥ २० ॥ नृपतिरुवाच ॥ कृष्णवर्णःकरालास्यस्त्वं प्रेत इव लक्ष्यसे ॥ कथयस्व मम प्रीत्या यथैवं चासि तत्त्वतः ॥ २१ ॥ तथा पृष्टः स वै राज्ञा प्रोवाच सकलं स्वकम् ॥ २२ ॥ प्रेत उवाच ॥ कथयामि नृपश्रेष्ठ सर्व्वमेवादितस्तव ॥ प्रेतत्वे कारणं श्रुत्वा दयां कर्तुं ममार्हसि ॥ २३ ॥ वैदिशं नाम नगरं सर्व्वसम्पत्समन्वितम् ॥ नानाजनपदाकीर्णं नानारत्नसमाकुलम् ॥ नानापुण्यसमायुक्तं नानावृक्षसमाकुलम् ॥ २४ ॥ तत्राहं न्यवसं भूयो देवार्च्चनरतः सदा ॥ वैश्यो जात्या सुदेवोऽहं नाम्ना विदितमस्तु ते ॥ २५ ॥ हव्येन तर्पिता देवाः कव्येन पितरस्तथा ॥ विविधैर्दानयोगैश्च विप्राः सन्तर्पिता मया ॥ २६ ॥ आवाहाश्च विवाहाश्च मया वै सुनिवेशिताः ॥ दीनानाथविशिष्टेभ्यो मया दत्तमनेकधा ॥ २७ ॥ तत्सर्व्वं विफलं तात मम दैवादुपागतम् ॥ यथा मे निष्फलं जातं सुकृतं तद्वदामि ते ॥ २८ ॥ न मेऽस्ति सन्ततिस्तात न सुहृन्न च बान्धवः ॥ न च मित्रं हि मे तादृग्यः कुर्य्यादौर्द्ध्वदैहिकम् ॥ २९ ॥ प्रेतत्वं सुस्थिरं तेन मम जातं नृपोत्तम ॥ एकादशं त्रिपक्षं च षाण्मासिकमथाब्दिकम् ॥ प्रतिमास्यानि चान्यानि एवं श्राद्धानि षोडश ॥ ३० ॥ यस्यैतानि न दीयन्ते प्रेतश्राद्धानि भूपते ॥ प्रेतत्वं सुस्थिरं तस्य दत्तैः श्राद्धशतैरपि ॥ ॥ ३१ ॥ एवं ज्ञात्वा महाराज प्रेतत्वादुद्धरस्व माम् ॥ वर्णानां चापि सर्व्वेषां राजा बन्धुरिहोच्यते ॥ ३२ ॥ तन्मां तारय राजेन्द्र मणिरत्नं ददामि ते ॥ यथा मम शुभावाप्तिर्भवेन्नृपवरोत्तम ॥ ३३ ॥ तथा कार्य्यं महाबाहो कृपा यदि मयीष्यते ॥ आत्मनश्च कुरु क्षिप्रं सर्व्वमेवौर्द्ध्वदैहिकम् ॥३४॥ नृपतिरुवाच ॥ कथं प्रेता भवन्तीह कृतैरप्यौर्द्ध्वदैहिकैः ॥ पिशाचाश्च भवन्तीह कर्म्मभिः कैश्च तद्वद ॥ ३५ ॥ प्रेत उवाच ॥ देवद्रव्यं च ब्रह्मस्वं स्त्रीबालधनसञ्चयम् ॥ ये हरन्ति नृपश्रेष्ठ प्रेतयोनिं व्रजन्ति ते ॥ ३६ ॥ तापसीं च सगोत्रां च अगम्यां ये भजन्ति हि ॥ भवन्ति ते महाप्रेता अम्बुजानि हरन्ति ये ॥ ३७ ॥ प्रवालवज्रहर्तारो ये च वस्त्रापहारकाः ॥ तथा हिरण्यहर्त्तारः संयुगेऽसन्मुखागताः ॥ ३८ ॥ कृतघ्ना

१ मृगया गन्तुमुद्यतः० पा० । २ दीनान्धकृपणेभ्यश्च दत्तमन्नमनेकधा० पा० ।

नास्तिका रौद्रास्तथा साहसिका नराः ॥ पञ्चयज्ञविनिर्म्मुक्ता महादानरताश्च ये ॥ ३९ ॥ स्वामिद्रोहकरा मित्रब्रह्मद्रोहकराश्च ये ॥ तीर्थपापकरा
राजञ्जायन्ते प्रेतयोनयः ॥ एवमाद्या महाराज जायन्ते प्रेतयोनयः ॥ ४० ॥ राजोवाच ॥ कथं मुक्ता भवन्तीह प्रेतत्वात्त्वं च तेऽपि च ॥
कथं चापि मया कार्य्यमौर्ध्वदैहिकमात्मनः ॥ विधिना केन तत्कार्य्यं सर्व्वमेतद्वदस्व मे ॥ ४१ ॥ प्रेत उवाच ॥ शृणु राजेन्द्र संक्षेपाद्विधिं नारा
यणात्मकम् ॥ सच्छास्त्रश्रवणं विष्णोः पूजा सज्जनसंगतिः ॥ ४२ ॥ प्रेतयोनिविनाशाय भवन्तीति मया श्रुतम् ॥ अतो वक्ष्यामि ते विष्णुपूजां प्रेत
त्वनाशिनीम् ॥ ४३ ॥ सुवर्णद्वयमाहृत्य मूर्त्तिं भूप प्रकल्पयेत् ॥ नारायणस्य देवस्य सर्व्वाभरणभूषिताम् ॥४४॥ पीतवस्त्रयुगाच्छन्नां चन्दनागुरुच
र्चिताम् ॥ स्नापयेद्विविधैस्तोयैरधिवास्य यजेत्ततः ॥ ४५ ॥ पूर्व्वे तु श्रीधरं देवं दक्षिणे मधुसूदनम् ॥ पश्चिमे वामनं देवमुत्तरे च गदाधरम् ॥ ४६ ॥
मध्ये पितामहं पूज्य तथा देवं महेश्वरम् ॥ पूजयेच्च विधानेन गन्धपुष्पादिभिः पृथक् ॥ ४७ ॥ ततः प्रदक्षिणीकृत्य अग्नौ सन्तर्प्य देवताः ॥ घृतेन
दध्ना क्षीरेण विश्वान्देवांस्तथा नृप ॥ ४८ ॥ ततः स्नातो विनीतात्मा यजमानः समाहितः ॥ नारायणाग्रे विधिवत्स्वक्रियामौर्ध्वदैहिकीम् ॥ ४९ ॥
आरभेत विनीतात्मा क्रोधलोभविवर्जितः ॥ श्राद्धानि कुर्य्यात्सर्व्वाणि वृषस्योत्सर्जनं तथा ॥ ५० ॥ त्रयोदशानां विप्राणां वस्त्रच्छत्राण्युपानहौ ॥
अंगुलीयकमुक्तानि भाजनासनभोजनैः ॥ ५१ ॥ सान्नाश्च सोदका देया घटाः प्रेतहिताय वै ॥ शय्यादानमथो दत्त्वा घटं प्रेतस्य निर्व्वपेत् ॥ ५२ ॥
नारायणेति सन्नाम संपुटस्थं समर्च्चयेत् ॥ एवं कृत्वाथ विधिवच्छुभाशुभफलं लभेत् ॥ ५३ ॥ राजोवाच ॥ कथं प्रेतघटं कुर्य्याद्दद्यात्केन विधानतः ॥
ब्रूहि सर्व्वानुकम्पार्थं घटं प्रेतविमुक्तिदम् ॥ ५४ ॥ प्रेत उवाच ॥ साधु पृष्टं महाराज कथयामि निबोध ते ॥ प्रेतत्वं न भवेद्येन दानेन सुदृढेन च
॥ ५५ ॥ दानं प्रेतघटं नाम सर्व्वाशुभविनाशनम् ॥ दुर्लभं सर्व्वलोकानां दुर्गतिक्षयकारकम् ॥ ५६ ॥ सन्तप्तहाटकमयं तु घटं विधाय ब्रह्मेशकेशव
युतं सह लोकपालैः ॥ क्षीराज्यपूर्णविवरं प्रणिपत्य भक्त्या विप्राय देहि तव दानशतैः किमन्यैः ॥ ५७ ॥ ब्रह्मा मध्ये तथा विष्णुः शंकरः शंकरोऽ
व्ययः ॥ प्राच्यादिषु च तत्कण्ठे लोकपालान्क्रमेण तु ॥ ५८ ॥ सम्पूज्य विधिवद्राजन्धूपैः कुसुमचन्दनैः ॥ ततो दुग्धाज्यसहितं घटं देयं हिरण्म
यम् ॥ ५९ ॥ सर्व्वदानाधिकश्चैतन्महापातकनाशनम् ॥ कर्त्तव्यं श्रद्धया राजन्प्रेतत्वविनिवृत्तये ॥ ६० ॥ श्रीभगवानुवाच ॥ एवं संजल्पतस्तस्य
प्रेतेन नियतात्मनः ॥ सेनाजगामानुपदं हस्त्यश्वरथसंकुला ॥ ६१ ॥ ततो बले समायाते दत्त्वा राज्ञे महामणिम् ॥ नमस्कृत्य पुनः प्रार्थ्य प्रेतोऽ
दर्शनमीयिवान् ॥ ६२ ॥ तस्माद्वनाद्विनिष्क्रम्य राजापि स्वपुरं ययौ ॥ स्वपुरं स समासाद्य सर्व्वं तत्प्रेतभाषितम् ॥ ६३ ॥ चकार विधिवत्पक्षि

न्नौर्ध्वदेहादिकं विधिम् ॥ तस्य पुण्यप्रदानेन प्रेतो मुक्तो दिवं ययौ ॥ ६४ ॥ श्राद्धेन परदत्तेन गतः प्रेतोऽपि सद्गतिम् ॥ किं पुनः पुत्रदत्तेन पिता
यातीति चाद्भुतम् ॥ ६५ ॥ इतिहासमिमं पुण्यं शृणोति श्रावयेच्च यः ॥ न तौ प्रेतत्वमायातः पापाचारयुतावपि ॥ ६६ ॥ इति श्रीगारुडे महापुराणे
उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे बभ्रुवाहनप्रेतसंवादे प्रेतत्वहेतुतन्निवृत्त्युपायनिरूपणं नाम सप्तविंशोऽध्यायः ॥ २७ ॥
गरुड उवाच ॥ सर्वेषामनुकम्पार्थं ब्रूहि मे मधुसूदन ॥ प्रेतत्वान्मुच्यते येन दानेन सुकृतेन वा ॥१॥ श्रीकृष्ण उवाच ॥ शृणु दानं प्रवक्ष्यामि सर्वाशु
भविनाशनम् ॥ सन्तप्तहाटकमयं घटकं विधाय ब्रह्मेशकेशवयुतं सह लोकपालैः ॥ क्षीराज्यपूर्णविवरं प्रणिपत्य भक्त्या विप्राय देहि तव दानशतैः
किमन्यैः ॥ २ ॥ गरुड उवाच ॥ किमेतत्कथितं देव विस्तरेण वदस्व मे ॥ आमुष्मिकीं क्रियां देव उत्क्रान्तिसमयादनु ॥३॥ संसारे साधु मे नाथ ब्रूहि
कृत्यं जनार्दन ॥ यथा कार्य्या नरैः सम्यक् क्रिया चैवौर्ध्वदैहिकी ॥ ४ ॥ कथं प्रेता महाकाया रौद्ररूपा भयानकाः ॥ सम्भवन्ति सुरश्रेष्ठ कर्म्मभिः
कैः शुभाशुभैः ॥ ५ ॥ पिशाचाः सम्भवन्तीह कस्येदं कर्म्मणः फलम् ॥ तन्मे कथय देवेश अहमिच्छामि वेदितुम् ॥ ६ ॥ भूम्यां प्रक्षिप्यते कस्मा
त्पञ्चरत्नं कुतो मुखे ॥ कस्मात्तत्र तिला दर्भाः पादौ याम्यां व्यवस्थिताः ॥ ७ ॥ किमर्थं मण्डलं भूमौ गोमयेनोपलिप्यते ॥ किमर्थं स्मर्यते विष्णुः
विष्णुसूक्तञ्च पठ्यते ॥ ८ ॥ किमर्थं पुत्रपौत्राश्च तस्य तिष्ठन्ति चाग्रतः ॥ किमर्थं दीपदानञ्च किमर्थं विष्णुपूजनम् ॥ ९ ॥ किमर्थमातुरो दानं ददाति
द्विजपुङ्गवे ॥ [illegible]मित्राण्यमित्रांश्च क्षमापयति तत्कथम् ॥१०॥ तिला लोहं हिरण्यं च कार्पासं लवणं तथा ॥ सप्तधान्यं क्षितिर्गावो दीयते केन हे
तुना ॥११॥ कथं च म्रियते जन्तुर्मृतस्य च कुतो गतिः ॥ आतिवाहशरीरं च कथं विश्रमते तदा ॥१२॥ शवं स्कन्धे वहेत्पुत्रो वह्निदाता च पौत्रकः॥
किमर्थं देव तैलेन चाज्येनाभ्यंजनं कुतः॥१३॥यमसूक्तं किमर्थं च उदीचीं दिशमाहरेत्॥पानीयमेकवस्त्रेण सूर्य्यबिम्बनिरीक्षणम्॥१४॥यवसर्षपदूर्वाश्च
पापाणे [illegible] नारी च विदध्यादधरोत्तरम् ॥१५॥ अन्नाद्यं गृहमागत्य भोक्तव्यं गोत्रिभिः सह ॥ नवकानि च पिण्डानि किमर्थं
वितरेत्सुतः ॥ १६ ॥ किमर्थं चत्वरे दुग्धं पात्रे पक्के च मृन्मये ॥ काष्ठत्रयं गुणे बद्ध्वा कृत्वा रात्रौ चतुष्पथे ॥ १७ ॥ निशायां दीयते दीपो यावदब्दं
दिनेदिने ॥ दाहोदकं किमर्थं च संवादः स्वजनैः सह ॥१८॥ भगवन्नतिवाहस्य नवपिण्डैस्तु किं भवेत् ॥ कथं देवपितृभ्यश्च वाहस्यावाहनं कथम् ॥
इदं च क्रियते देव कस्मात्पिण्डं प्रदापयेत् ॥ १९ ॥ किं तत्प्रदीयते तस्य पिण्डदानादनन्तरम् ॥ अस्थिसञ्चयनं चैव शय्यादानं किमर्थकम् ॥२०॥
द्वितीयेऽह्नि कुतः स्नानं चतुर्थे साग्निके द्विजे ॥ दशमे किं मलस्नानं कार्य्यं सर्व्वजनैः सह ॥ २१ ॥ कस्मात्तैलोद्वर्त्तनं च स्कन्धवाहान् गृहं नयेत् ॥

तैः समुद्वर्त्तनं चापि दद्युः स्थलजलाश्रये ॥ २२ ॥ दशमेऽहनि यः पिण्डस्तं दद्यादामिषेण तु ॥ पिण्डं चैकादशे कस्माद् वृषोत्सर्गः कथं भवेत्
॥ २३ ॥ श्राद्धानि षोडशैतानि अब्दं यावत्कुतो वद ॥ अन्नादिचोदकैनैव षष्ट्यधिकशतत्रयम् ॥ २४ ॥ दिनेदिने च दातव्यं घटान्नं प्रेततृप्तये ॥
प्राप्ते काले च म्रियते अनित्यो मानवः प्रभो ॥ २५ ॥ छिद्रं तु नैव पश्यामि कुतो जीवः स निर्गतः ॥ कुतो गच्छन्ति भूतानि पृथिव्यापो मनस्तथा
॥ २६ ॥ तेजो वदस्व मे नाथ वायुराकाशमेव च ॥ वायवश्चैव पञ्चैते कथं गच्छन्ति चातये ॥ २७ ॥ लोभमोहादयः पञ्च शरीरे चैव तस्कराः ॥
तृष्णा कामोऽप्यहंकारः कुतो यान्ति जनार्दन ॥ २८ ॥ पुण्यं वाप्यथ वापुण्यं यत्किञ्चित्सुकृतं तथा ॥ नष्टे देहे कुतो यान्ति दानानि विविधानि च
॥ २९ ॥ सपिण्डनं किमर्थं च पूर्णे संवत्सरेऽपि वा ॥ प्रेतस्य मेलनं सार्द्धं कैः समं तत्र को विधिः ॥ ३० ॥ ये दग्धा ये त्वदग्धाश्च पतिता ये नरा
भुवि ॥ यानि चान्यानि भूतानि तेषामन्ते भवेच्च किम् ॥ ३१ ॥ पापिनो ये दुराचारा मुद्गलत्वं च ये गताः ॥ आत्मघाती ब्रह्महा च स्तेयी विश्वास
घातकः ॥ ३२ ॥ कपिलां यः पिबेच्छूद्रो यः पठेद्वैदिकाक्षरम् ॥ धारयेद्वा ब्रह्मसूत्रं का गतिस्तस्य माधव ॥ ३३ ॥ विप्रस्य ब्राह्मणी भार्य्या संगृही
ता यदा भवेत् ॥ तस्मात्पापाच्च भीतोऽहं तन्मे वद जगत्पते ॥ सर्व्वमेतन्मया पृष्टो वद लोकहिताय वै ॥ ३४ ॥ इति श्रीगारुडे महापुराणे
उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे और्ध्वदैहिककर्मकालक्रियमाणनानादानादिफलप्रश्ननिरूपणं नामाष्टाविंशोऽध्यायः
॥ २८ ॥ श्रीकृष्ण उवाच ॥ साधु पृष्टं त्वया भद्र मानुषाणां हिताय वै ॥ शृणुष्वावहितो भूत्वा सर्व्वमेवौर्ध्वदैहिकम् ॥ १ ॥
सम्यग्विभेदरहितं श्रुतिस्मृतिसमुद्धृतम् ॥ यत्र दृष्टं सुरैः सेन्द्रैर्योगिभिर्योगचिन्तकैः ॥ २ ॥ गुह्याद्गुह्यतरं वत्स नाख्यातं कस्यचित्क्वचित् ॥
भक्तस्त्वं हि महाभाग सर्व्वं ते कथयाम्यहम् ॥ ३ ॥ अपुत्रस्य गतिर्नास्ति स्वर्गो नैव च नैव च ॥ येन केनाप्युपायेन कार्य्यं जन्म सुतस्य च ॥४॥
तारयेन्नरकात्पुत्रो यदि मोक्षो न विद्यते ॥ दाहः पुत्रेण कर्त्तव्यो देयः पौत्रेण पावकः ॥ ५ ॥ तिलैर्दर्भैश्च भूम्यां वै कुटी धातुमती भवेत ॥ पंचरत्नानि
वक्त्रे तु येन जीवः प्ररोहति ॥ ६ ॥ लिम्पात्तु गोमयैर्भूमिं तिलान्दर्भांश्च निःक्षिपेत् ॥ तस्यामेवातुरो मुक्तः सर्व्वं दहति पातकम् ॥ ७ ॥ दर्भमूली
नयेत्स्वर्गं संस्थितं नात्र संशयः ॥ दर्भास्तत्र हि ये भूम्यां तिलयुक्तान संशयः ॥ ८ ॥ सर्व्वत्र वसुधा पूता यत्र लेपो न विद्यते ॥
यत्र लेपः स्थितस्तत्र पुनर्लेपेन शुध्यति ॥ ९ ॥ यातुधानाः पिशाचाश्च राक्षसाः क्रूरकर्मिणः ॥ अलिप्ते आतुरं मुक्तं विशन्त्येते न संशयः ॥ १० ॥

नित्यहोमं तथा श्राद्धं विप्राणां पादशोधनम् ॥ मण्डलेन विना भूम्यां कुर्व्वन्त्येतच्च निष्फलम् ॥ ११ ॥ आतुरो मुच्यते नैव मण्डलेन विना भुवि ॥ ब्रह्मा रुद्रश्च विष्णुश्च श्रीर्हुताशन एव च ॥ मण्डले चोपतिष्ठन्तस्तस्मात्कुर्व्वीत मण्डलम् ॥ १२ ॥ अन्यथा म्रियते यस्तु बालो वृद्धो युवापि वा ॥ योन्यन्तरं स वै गच्छेत्क्रीडते वायुना सह ॥ १३ ॥ मिश्रितं लोहताम्रं तु तथैव जन्म जायते ॥ तस्यैवं वायुभूतस्य न श्राद्धं नोदक क्रिया ॥ १४ ॥ मम स्वेदसमुद्भूतास्तिलास्तार्क्ष्य पवित्रकाः ॥ असुरा दानवा दैत्यास्तृप्यन्ति तिलदानतः ॥ १५ ॥ तिलाः श्वेतास्तिलाः कृष्णास्तिला गोमूत्रसन्निभाः ॥ ते मे दहन्तु पापानि शरीरेण कृतानि च ॥ १६ ॥ एक एव तिलद्रोणो हेमद्रोणतिलैः समः ॥ तर्पणे दानहोमे च दत्तो भवति चाक्षयः ॥ १७ ॥ दर्भा मल्लोमसम्भूतास्तिलाः स्वेदसमुद्भवाः ॥ तृप्ताः स्युर्देवता दानैः श्राद्धेन पितरस्तथा ॥ [illegible] विना ब्रह्मा विश्वस्थाप्युपजीवनात् ॥ १८ ॥ सव्ययज्ञोपवीतेन ब्रह्माद्यास्तृप्तिमाप्नुयुः ॥ अपसव्येन तृप्यन्ति पितरो दिविदेवताः ॥१९॥ अपसव्यादतो ब्रह्मा दर्भमध्ये तु केशवः ॥ दर्भाग्रे शंकरं विद्यात्त्रयो देवाः कुशे स्थिताः ॥ २० ॥ विप्रा मन्त्राः कुशा वह्निस्तुलसी च खगेश्वर ॥ नैते निर्म्माल्यतां यान्ति क्रियमाणाः पुनःपुनः ॥ २१ ॥ कुशाः पिण्डेषु निर्माल्याः ब्राह्मणाः प्रेतभोजने ॥ मन्त्राः शूद्रेषु पतिताश्चितायाञ्च हुताशनः ॥२२॥ तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग ॥ पञ्च प्रवहणान्येव भवाब्धौ मज्जतां सताम् ॥ २३ ॥ विष्णुरेकादशी गीता तुलसीविप्रधेनवः ॥ अपारे दुर्गसंसारे षट्पदी मुक्तिदायिनी ॥ २४ ॥ तिलाः पवित्रास्त्रिविधा दर्भाश्च तुलसीदलम् ॥ निवारयन्ति चैतानि दुर्गतिं यान्तमातुरम् ॥ २५ ॥ हस्ताभ्यामुद्धृतैर्दर्भैस्तोयेन प्रोक्षयेद्भुवम् ॥ मृत्युकाले क्षिपेद्दर्भानातुरस्य करद्वये ॥ २६ ॥ दर्भेषु क्षिप्यते योऽसौ दर्भैस्तु परिवेष्टितः ॥ विष्णुलोकं स वै याति मन्त्रहीनोऽपि मानवः ॥२७॥ दर्भमूलीगतो भूमौ दर्भपाणिस्तु यो मृतः ॥ प्रायश्चित्तविशुद्धोऽसौ संसारेपारसागरे ॥२८॥ गोमयेनोपलिप्ते तु दर्भस्यास्तरणे स्थितः ॥ तत्र दत्तेन दानेन सर्व्वं पापं व्यपोहति ॥ २९ ॥ लवणं तद्रसं दिव्यं सर्व्वकामप्रदं नृणाम् ॥ यस्माद्रन्नरसाः सर्वे नोत्कटा लवणं विना ॥ ३० ॥ पितॄणां च प्रियं भव्यं तस्मात्स्वर्गप्रदं भवेत् ॥ विष्णुदेहसमुद्भूतो यतोऽयं लवणो रसः ॥ ३१ ॥ विशेषाल्लवणं दानं तेन शंसन्ति योगिनः ॥ ब्राह्मणक्षत्रियविशां स्त्रीणां शूद्रजनस्य च ॥ ३२ ॥ आतुराणां यदा प्राणाः प्रयांति वसुधातले ॥ लवणं तु तदा देयं द्वारस्योद्घाटनं दिवः ॥ ३३ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे प्रेतकल्पे धर्मकाण्डे श्रीकृष्णगरुडसंवादे और्ध्वदेहिककर्मणि पुत्रदर्भतिलतुलसीगोभूलेपताम्रपात्रदाना

१ कृतमप्यकृतं भवेत्० पा० । २ दर्भमूलीगतः प्राणी संस्थितो भूमिपृष्ठतः० पा०

दीनामावश्यकत्वनिरूपणं नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥ श्रीकृष्ण उवाच ॥ शृणु तार्क्ष्य परं गुह्यं दानानां दानमुत्तमम् ॥ परमं सर्व्वदानानां
परं गोप्यं दिवौकसाम् ॥ १ ॥ देयमेकं महादानं कार्पासं चोत्तमोत्तमम् ॥ येन दत्तेन प्रीयन्ते भूर्भुवः स्वरिति क्रमात् ॥ २ ॥ ब्रह्माद्या देवताः
सर्व्वाः काय्यांश्च प्रीतिमाप्नुयुः ॥ देयमेतन्महादानं प्रेतोद्धरणहेतवे ॥ ३ ॥ चिरं वसेद्रुद्रलोके ततो राजा भवेदिह ॥ [illegible] श्रीमानतुल
विक्रमः ॥ यमलोकं विनिर्जित्य स्वर्गं तार्क्ष्य स गच्छति ॥ ४ ॥ गां तिलांश्च क्षितिं हेम यो ददाति द्विजन्मने ॥ तस्य जन्मार्जितं पापं तत्क्षणादेव
नश्यति ॥ ५ ॥ तिला गावो महादानं महापातकनाशनम् ॥ तद्द्वयं दीयते विप्रे नान्यवर्णे कदाचन ॥ ६ ॥ कल्पितं दीयते दानं तिला गावश्च
मेदिनी ॥ अन्येषु नैव वर्णेषु पोष्यवर्गे कदाचन ॥ ७ ॥ [illegible] तथा क्षीरं दानं देयमकल्पितम् ॥ आतुरे चोपरागे च द्वयं दानं विशिष्यते ॥
आतुरे दीयते दानं तत्काले चोपतिष्ठति ॥ ८ ॥ जीवतस्तु पुनर्दानमुपतिष्ठत्यसंशयम् ॥ [illegible] पुनः सत्यं यद्दत्तं विकलेन्द्रिये ॥ ९ ॥ यच्चानु
मोदते पुत्रस्तत्र दानमनन्तकम् ॥ अतो दद्यात् स पुत्रो वा यावज्जीवत्यसौ चिरम् ॥ [illegible] भोगांश्च लभते नरः ॥ [illegible] ॥ अस्वस्था
तुरकाले तु देहपाते क्षितिस्थिते॥ देहे तथातिवाहस्य परतः प्रीणनं भवेत् ॥११॥ प्रज्ञावन्ये च काले च अर्द्धोन्मीलितलोचने ॥तिलांस्तु दर्भान्संस्तीर्य
दानमुक्तं तदक्षयम् ॥ १२ ॥ तिला लौहं हिरण्यञ्च कार्पासं लवणं तथा ॥ सप्तधान्यं क्षितिर्गावः एकैकं पावनं स्मृतम् ॥१३॥ लोहदानाद्यमस्तुष्येद्धर्म
राजस्तिलार्पणात् ॥ लवणे दीयमाने तु न भयं विद्यते यमात् ॥ १४ ॥ कर्पासस्य तु दानेन न भूतेभ्यो भयं भवेत् ॥ तारयन्ति नरं गावस्त्रिविधाच्चै
व पातकात्॥१५॥ हेमदानात्सुखं स्वर्गे भूमिदानान्नृपो भवेत् ॥ हेमभूमिप्रदानाच्च न पीडा नरके भवेत् ॥१६॥ सर्व्वेऽपि यमदूताश्च यमरूपा विभी
षणाः ॥ सर्व्वे ते वरदा यान्ति सप्तधान्येन प्रीणिताः ॥ १७ ॥ विष्णोः स्मरणमात्रेण प्राप्यते परमा गतिः ॥ एतत्ते सर्व्वमाख्यातं मर्त्यैर्या गति
राप्यते ॥ १८ ॥ तस्मात् पुत्रं प्रशंसन्ति ददाति पितुराज्ञया ॥ भूमिष्ठं पितरं दृष्ट्वा ह्यर्द्धोन्मीलितलोचनम् ॥ १९ ॥ तस्मिन् काले सुतो यस्तु सर्व्व
दानानि दापयेत् ॥ गयाश्राद्धाद्विशिष्येत स पुत्रः कुलनन्दनः ॥ २० ॥ स्वस्थानाच्चलितश्वासो विकलस्य पितुस्तदा ॥ पुत्रेणैतेन कर्त्तव्या पितरं
तारयन्ति ते ॥ २१ ॥ किं दत्तैर्बहुभिर्दानैः पितुरन्त्येष्टिमाचरेत् ॥ अश्वमेधो महायज्ञः कलां नार्हति षोडशीम् ॥ २२ ॥ धर्म्मात्मा स तु पुत्रो वै
देवैरपि सुपूज्यते ॥ दापयन्नन्तु दानानि ह्यातुरं पितरं भुवि ॥ २३ ॥ लोहदानञ्च दातव्यं भूमियुक्तेन पाणिना ॥ यमं भीमञ्च नाप्नोति न गच्छेत्
तस्य वेश्मनि ॥ २४ ॥ कुठारो मुसलो दण्डः खड्गश्च च्छुरिका तथा ॥ एतानि यमहस्तेषु दृश्यानि पापकर्म्मिणाम् ॥ २५ ॥ तस्माल्लोहस्य दानन्तु

ब्राह्मणायातुरो ददेत् ॥ यमायुधानां सन्तुष्ट्यै दानमेतदुदाहृतम् ॥ २६ ॥ गर्भस्थाः शिशवो ये च युवानः स्थविरास्तथा ॥ एभिर्दानविशेषैस्तु निर्द
हेयुः स्वपातकम् ॥ २७ ॥ छुरिणः श्यामशबलौ षण्डामर्का उदुम्बराः ॥ शबला श्यामदूता ये लोहदानेन प्रीणिताः ॥ २८ ॥ पुत्राः पौत्रास्तथा
बन्धुः सगोत्राः सुहृदस्तथा ॥ ददते नातुरे दानं ब्रह्मभैस्तु समा हि ते ॥ २९ ॥ पञ्चत्वे भूमियुक्तस्य शृणु तस्य च या गतिः ॥ अतिवाहः पुनः प्रेतो
वर्षोर्ध्वं सुकृतं लभेत् ॥३०॥ अग्नित्रयं त्रयो लोकास्त्रयो वेदास्त्रयोऽमराः ॥ कालत्रयं त्रिसन्ध्यं च त्रयो वर्णास्त्रिशक्तयः ॥३१॥ पादादूर्ध्वं कटिं यावत्
तावद्ब्रह्माधितिष्ठति ॥ ग्रीवां यावद्धरिर्नाभेः शरीरे मनुजस्य च ॥ ३२ ॥ मस्तके तिष्ठतीशानो व्यक्ताव्यक्तो महेश्वरः ॥ एकमूर्तेस्त्रयो भागा ब्रह्मा
विष्णुमहेश्वराः ॥ ३३ ॥ अहं प्राणः शरीरस्थो भूतग्रामचतुष्टये ॥ धर्म्माधर्म्मे मतिं दद्यात् सुखदुःखे कृताकृते ॥ ३४ ॥ जन्तोर्बुद्धिं समास्थाय
पूर्व्वकर्माधिवासिताम् ॥ अहमेव तथा जीवान्प्रेरयामि च कर्मसु ॥ स्वर्गं च नरकं मोक्षं प्रयान्ति प्राणिनो ध्रुवम् ॥ ३५ ॥ स्वर्गस्थं नरकस्थं वा
श्राद्धे वाप्यायनं भवेत् ॥ तस्माच्छ्राद्धानि कुर्व्वीत त्रिविधानि विचक्षणः ॥ ३६ ॥ मत्स्यं कर्म्मं च वाराहं नारसिंहञ्च वामनम् ॥ रामं रामं च कृष्णं च
बुद्धं चैव सकल्किनम् ॥ एतानि दश नामानि स्मर्त्तव्यानि सदा बुधैः ॥ ३७ ॥ स्वर्गे जीवाः सुखं यान्ति च्युताः स्वर्गाच्च मानवाः॥ लब्ध्वा सुखं च
वित्तं च दयादाक्षिण्यसंयुताः ॥ पुत्रपौत्रैर्धनैराढ्या जीवेयुः शरदां शतम् ॥ ३८ ॥ आतुरे च ददेद्दानं विष्णुपूजाञ्च कारयेत् ॥ अष्टाक्षरं तथा
मन्त्रं जपेद्वा द्वादशाक्षरम् ॥ ३९ ॥ पूजयेच्छुक्लपुष्पैश्च नैवेद्यैर्घृतपाचितैः ॥ तथा गन्धैश्च धूपैश्च श्रुतिस्मृतिमनूदितैः ॥ ४० ॥
विष्णुर्माता पिता विष्णुर्विष्णुः स्वजनबान्धवाः ॥ यत्र विष्णुं न पश्यामि तेन वासेन किं मम ॥ ४१ ॥ जले विष्णुः स्थले विष्णुर्विष्णुः
पर्व्वतमस्तके ॥ ज्वालामालाकुले विष्णुः सर्व्वं विष्णुमयं जगत् ॥ ४२ ॥ वयमापो वयं पृथ्वी वयं दर्भा वयं तिलाः ॥ वयं गावो वयं राजा वयं
वायुर्वयं प्रजाः ॥ ४३ ॥ वयं हेम वयं धान्यं वयं मधु वयं घृतम् ॥ वयं विप्रा वयं देवा वयं शम्भुश्च भूर्भुवः ॥ ४४ ॥ अहं दाता अहं
ग्राही अहं यज्वा अहं क्रतुः ॥ अहं हर्त्ता अहं धर्म्मो अहं पृथ्वी ह्यहं जलम् ॥ ४५ ॥ धर्म्माधर्म्मे मतिं दद्यां कर्म्मभिस्तु शुभाशुभैः ॥ यत्
कर्म्म क्रियते क्वापि पूर्व्वजन्मार्ज्जितं नरैः ॥ ४६ ॥ धर्म्मे मतिमहं दद्यामधर्म्मेऽप्यहमेव च ॥ यातनां कुरुते सोऽपि धर्म्मे मुक्तिं ददाम्यहम् ॥
॥ ४७ ॥ मनुजानां हिता तार्क्ष्य अन्ते वैतरणी स्मृता ॥ तयावमत्य पापौघं विष्णुलोकं स गच्छति ॥ ४८ ॥ बालत्वे यच्च कौमारे यच्च परिणतौ च
यत् ॥ सर्व्वावस्थाकृतं पापं यच्च जन्मान्तरेष्वपि ॥ ४९ ॥ यन्निशायां तथा प्रातर्यन्मध्याह्नापराह्णयोः ॥ सन्ध्ययोर्यत् कृतं कर्म्म कर्म्मणा मनसा

गिरा ॥ ५० ॥ दत्त्वा वरां सकृदपि कपिलां सर्व्वकामिकाम् ॥ उद्धरेदन्तकाले स आत्मानं पापसञ्चयात् ॥ ५१ ॥ गावो ममाग्रतः सन्तु पृष्ठतः
पार्श्वतस्तथा ॥ गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ ५२ ॥ या लक्ष्मीः सर्व्वभूतानां या च देवे व्यवस्थिता ॥ धेनुरूपेण सा देवी मम पापं
व्यपोहतु ॥ ५३ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे नानादाननिरूपणं नाम त्रिंशोऽध्यायः
॥ ३० ॥ श्रीविष्णुरुवाच ॥ ये नराः पापसंयुक्तास्ते गच्छन्ति यमालयम् ॥ नृणां मत्साक्षिकं दत्तमनन्तफलदं भवेत् ॥ १ ॥ यावद्रजः प्रमाणाब्दं
स्वर्गे तिष्ठति भूमिदः ॥ अश्वारूढाश्च ते यान्ति ददते ये ह्युपानहौ ॥ २ ॥ आतपे श्रमयोगेन न दह्यन्ते च कुत्रचित् ॥ छत्रदानेन वै प्रेता विचरन्ति
सुखं पथि ॥ ३ ॥ यमुद्दिश्य ददात्यन्नं तेन चाप्यायितो भवेत् ॥ ४ ॥ अन्धकारे महाघोरे अमूर्त्ते लक्ष्यवर्ज्जिते ॥ उद्द्योतेनैव ते यान्ति दीपदानेन
मानवाः ॥ ५ ॥ आश्विने कार्त्तिके वापि माघे मृततिथावपि ॥ चतुर्द्दश्याञ्च दीयेत दीपदानं सुखाय वै ॥ ६ ॥ प्रत्यहञ्च प्रदातव्यं मार्गे सुविषमे नरैः॥
यावत् संवत्सरं चापि प्रेतस्य सुखलिप्सया ॥ ७ ॥ कुले द्योतति शुद्धात्मा प्रकाशत्वं स गच्छति ॥ ज्योतिर्म्मयोऽसौ पूज्योऽसौ दीपदानप्रदो नरः॥
॥ ८॥ प्राङ्मुखोदङ्मुखं दीपं देवागारे द्विजालये ॥ कुर्य्याद्याम्यमुखं पित्रे अद्भिः सङ्कल्प्य सुस्थिरम् ॥ ९ ॥ सर्व्वोपहारयुक्तानि पदान्यत्र त्रयोद
श ॥ यो ददाति मृतस्येह जीवन्नप्यात्महेतवे ॥ स गच्छति महामार्गे महाकष्टविवर्ज्जितः ॥ १० ॥ आसनं भाजनं भोज्यं दीयते यद्द्विजातये ॥ सुखे
न भुञ्जमानस्तु तेन गच्छत्यलं पथि ॥ ११ ॥ कमण्डलुप्रदानेन तृषितः पिबते जलम् ॥ १२ ॥ भाजनं वस्त्रदानञ्च कुसुमञ्चाङ्गुलीयकम् ॥ एकादशा
हे दातव्यं प्रेतोद्धरणहेतवे ॥ १३ ॥ त्रयोदश पदानीत्थं प्रेतस्य शुभमिच्छता ॥ दातव्यानि यथाशक्त्या प्रेतोऽसौ प्रीणितो भवेत् ॥ १४ ॥ भोजना
नि तिलांश्चैव उदकुम्भांस्त्रयोदश ॥ मुद्रिकां वस्त्रयुग्मञ्च तथा याति परां गतिम् ॥ १५ ॥ योऽश्वं नावं गजं वापि ब्राह्मणे प्रतिपादयेत् ॥ स महिम्नोऽ
नुसारेण तत्तत्सुखमुपाश्नुते ॥ १६ ॥ नानालोकान् विचरति महिषीञ्च ददाति यः ॥ यमपुत्रस्य या माता महिषी सुगतिप्रदा ॥ १७ ॥ ताम्बूलं
कुसुमं देयं याम्यानां हर्षवर्द्धनम् ॥ तेन सम्प्रीणिताः सर्व्वे तस्मिन् क्लेशं न कुर्व्वते ॥१८ ॥ गो-भू-तिल-हिरण्यानि दानान्याहुः स्वशक्तितः ॥ १९ ॥
मृतोद्देशेन यो दद्याज्जलपात्रञ्च मृन्मयम् ॥ उदपात्रसहस्रस्य फलमाप्नोति मानवः ॥ २० ॥ यमदूता महारौद्राः करालाः कृष्णपिङ्गलाः ॥ न भीष
यन्ति तं याम्या वस्त्रदाने कृते सति ॥ २१ ॥ मार्गे हि गच्छमानस्तु तृष्णार्त्तः श्रमपीडितः ॥ घटान्नदानयोगेन सुखी भवति निश्चितम् ॥ २२ ॥
शय्या दक्षिणया युक्ता आयुधाम्बरसंयुता ॥ हैमश्रीपतिना युक्ता देया विप्राय शर्म्मणे ॥ तथा प्रेतत्वमुक्तोऽसौ मोदते सह दैवतैः ॥ २३ ॥ एतत् ते

कथितं तार्क्ष्य दानमन्त्येष्टिकर्म्मजम् ॥ अधुना कथयिष्येऽहमन्यदेहप्रवेशनम् ॥ २४ ॥ जातस्य मृत्युलोके वै प्राणिनो मरणं ध्रुवम् ॥ मृतिः कुर्य्यात्
स्वधर्मेण यास्यतश्च परन्तप ॥ २५ ॥ पूर्व्वकाले मृतानाञ्च प्राणिनाञ्च खगेश्वर ॥ सूक्ष्मोभूत्वा त्वसौ वायुर्निर्गच्छत्यास्यमण्डलात् ॥ २६ ॥
नवद्वारे रोमभिश्च जनानां तालुरन्ध्रके ॥ पापिष्ठानामपानेन जीवो निष्क्रामति ध्रुवम् ॥ २७ ॥ शरीरञ्च पतेत् पश्चान्निर्गते मरुतीश्वरे ॥ वाताहतः
पतत्येव निराधारो यथा द्रुमः ॥ २८ ॥ पृथिव्यां लीयते पृथ्वी आपश्चैव तथाप्सु च ॥ तेजस्तेजसि लीयेत समीरणः समीरणे ॥ आकाशे च तथा
काशः सर्व्वव्यापी च शङ्करे ॥ २९ ॥ तत्र कामस्तथा क्रोधः काये पञ्चेन्द्रियाणि च ॥ एते तार्क्ष्य समाख्याता देहे तिष्ठन्ति तस्कराः ॥ ३० ॥ का
मः क्रोधो ह्यहङ्कारो मनस्तत्रैव नायकः ॥ संहारकश्च कालोऽयं पुण्यपापसमन्वितः ॥३१॥ जगतश्च स्वरूपन्तु निर्म्मितं स्वेन कर्म्मणा ॥ पुनर्देहा
न्तरं याति सुकृतैर्दुष्कृतैर्नरः ॥ ३२ ॥ पञ्चेन्द्रियसमायुक्तः सकलैर्विषयैः सह ॥ प्रविशेत् स नवं देहं गृहे दग्धे यथा गृही ॥ ३३ ॥ शरीरे ये समासी
ना सम्भवेत् सर्व्वधातवः ॥ षाट्कौशिको ह्ययं कायो माता पित्रोश्च धातवः ॥ ३४ ॥ सम्भवेयुस्तथा तार्क्ष्य सर्व्वे वाताश्च देहिनाम् ॥ मूत्रं पुरीषं
तद्योगा ये चान्ये व्याधयस्तथा ॥३५॥ अस्थि शुक्रं तथा स्नायुः देहेन सह दह्यते ॥ एष ते कथितस्तार्क्ष्य विनाशः सर्व्वदेहिनाम् ॥ ३६ ॥ कथयामि
पुनस्तेषां शरीरञ्च यथा भवेत् ॥ एकस्तम्भं स्नायुबद्धं स्थूणाद्वयसमुद्धृतम् ॥ ३७ ॥ इन्द्रियैश्च समायुक्तं नवद्वारं शरीरकम् ॥ विषयैश्च समाक्रान्तं
काम-क्रोधसमाकुलम् ॥ ३८ ॥ राग-द्वेषसमाकीर्णं तृष्णादुर्गसुदुस्तरम् ॥ लोभजालसमायुक्तं पुरं पुरुषसंज्ञितम् ॥ ३९ ॥ एतद्गुणसमायुक्तं शरीरं
सर्व्वदेहिनाम् ॥ तिष्ठन्ति देवताः सर्व्वा भुवनानि चतुर्दश ॥ ४० ॥ आत्मानं ये न जानन्ति ते नराः पशवः स्मृताः ॥ एवमेतन्मया [illegible] ते
चतुर्व्विधम् ॥ ४१ ॥ चतुरशीतिलक्षाणि निर्म्मिता योनयः पुरा ॥ उद्भिज्जाः स्वेदजाश्चैव अण्डजाश्च जरायुजाः ॥ ४२ ॥ एतत [illegible]
यत्पृष्टोहं त्वयाऽनघ ॥४३॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे प्रेतकल्पे श्रीकृष्णगरुडसंवादे दानफलान्यदेहप्रवेशादिनिरूपणं नामै
कत्रिंशोऽध्यायः ॥ ३१ ॥ तार्क्ष्य उवाच ॥ कथमुत्पद्यते जन्तुर्भूतग्रामे चतुर्व्विधे ॥ त्वचा रक्तं तथा मांसं मेदो मज्जास्थि जीवितम् ॥ १ ॥ पादौ
पाणी तथा गुह्यं जिह्वा-केश-नखाः शिरः ॥ सन्धिमार्गाश्च बहुशो रेखा नैकविधास्तथा ॥ २ ॥ कामः क्रोधो भयं लज्जा मनो हर्षः सुखासुखम् ॥
चित्रितं छिद्रितञ्चापि नानाजालेन वेष्टितम् ॥ ३ ॥ इन्द्रजालमिदं मन्ये संसारेऽसारसागरे ॥ कर्त्ता कोऽत्र हृषीकेश संसारे दुःखसंकुले ॥ ४ ॥ श्री
विष्णुरुवाच ॥ कथयामि परं गोप्यं कोशस्यास्य विनिर्णयम् ॥ यस्य विज्ञानमात्रेण सर्व्वज्ञत्वं प्रजायते ॥ ५ ॥ साधु पृष्टं त्वया लोके सदयं जीव

कारणम् ॥ वैनतेय शृणुष्व त्वमेकाग्रकृतमानसः ॥६॥ ऋतुकाले च नारीणां वर्ज्यं दिनचतुष्टयम ॥ यत[illegible] ब्रह्महत्यां पुरा वृत्रसमुत्थिताम् ॥७॥
ब्रह्मा शक्रात् समुत्तार्य्य चतुर्थांशेन दत्तवान् ॥ तावन्नालोकयते वक्त्रं पापं यावद्वपुःस्थितम् ॥ ८ ॥ प्रथमे[illegible]ली द्वितीये ब्रह्मघातिनी ॥
तृतीये रजकी ज्ञेया चतुर्थेऽहनि शुध्यति ॥ ९ ॥ सप्ताहात् पितृदेवानां भवेद्योग्या कृतार्चने ॥ सप्ताहमध्ये यो गर्भस्तत्सम्भूतर्मलिम्लुचा ॥ १० ॥
निषेकसमये पित्रोर्यादृक् चित्तविकल्पना ॥ तादृग्गर्भसमुत्पत्तिर्जायते नात्र संशयः ॥ ११ ॥ युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ॥
पूर्व्वसप्तममुत्सृज्य तस्माद्युग्मासु संविशेत् ॥ १२ ॥ षोडशर्त्तुर्निशाः स्त्रीणां सामान्यात् समुदाहृतः ॥ या चतुर्द्दशमी रात्रिर्गर्भस्तिष्ठति तत्र चेत् ॥
॥ १३ ॥ गुणभाग्यनिधिः पुत्रस्तत्र जायेत धार्म्मिकः ॥ सा निशा तत्र सामान्यैर्न लभ्येत खगाधिप ॥ १४ ॥ प्रायशः सम्भवत्यत्र गर्भस्त्वष्टाहम
ध्यतः ॥ पञ्चमेऽहनि नारीणां कार्य्यं माधुर्य्यभोजनम् ॥ १५ ॥ कटुक्षारञ्च तीक्ष्णञ्च त्याज्यमुष्णञ्च दूरतः ॥ तत्क्षेत्रमोषधीपात्रं बीजञ्चाप्यमृतायि
तम् ॥ १६ ॥ तस्मिन्नुप्त्वा नरः स्वामी सम्यक् फलमवाप्नुयात् ॥ तस्याश्चैवातपो वर्ज्यः शीतलं केवलं चरेत् ॥ १७ ॥ ताम्बूलपुष्पश्रीखण्डैः संयुक्तः
शुचिवस्त्रभृत् ॥ धर्म्ममादाय मनसि सुतल्पं संविशेत् पुमान् ॥ १८ ॥ निषेकसमये यादृङ्नरचित्तविकल्पना ॥ तादृक्स्वभावसम्भूतिर्जन्तुर्विशति
कुक्षिगः ॥ १९ ॥ शुक्रशोणितसंयोगे पिण्डोत्पत्तिः प्रजायते ॥ वर्द्धते जठरं जन्तुस्तारापतिरिवाम्बरे ॥ २० ॥ चैतन्यं बीजरूपं हि शुक्रे नित्यं व्यव
स्थितम् ॥ कामश्चित्तञ्च शुक्रञ्च यदा ह्येकत्वमाप्नुयुः ॥ २१ ॥ तदा द्रावमवाप्नोति योषागर्भाशये नरः ॥ रक्ताधिक्ये भवेन्नारी शुक्राधिक्ये भवेत् पुमान्
॥ २२ ॥ शुक्रशोणितयोः साम्ये गर्भाः पण्डत्वमाप्नुयुः ॥ अहोरात्रेण कलिलं बुद्बुदं पञ्चभिर्दिनैः ॥ २३ ॥ चतुर्द्दशे भवेन्मांसं मिश्रधातुसमन्वितम् ॥
घनं मांसञ्च विंशाहे गर्भस्थो वर्द्धते क्रमात् ॥ २४ ॥ पञ्चविंशतिमे चाह्नि बलं पुष्टिश्च जायते ॥ तथा मासे तु सम्पूर्णे पञ्चतत्त्वं निधारयेत् ॥ २५ ॥
मासद्वये तु सञ्जाते त्वचा मेदश्च जायते ॥ मज्जास्थीनि त्रिभिर्मासैः केशाङ्गुल्यश्चतुर्थके ॥ २६ ॥ कर्णौ च नासिके वक्षो जायेरन् मासि पञ्चमे ॥
कण्ठरन्ध्रोदरं षष्ठे गुह्यादिर्मासि सप्तमे ॥ २७ ॥ अङ्गप्रत्यङ्गसम्पूर्णो गर्भो मासैरथाष्टभिः ॥ अष्टमे चलते जीवो धात्रीगर्भे पुनःपुनः ॥ नवमे
मासि सम्प्राप्ते गर्भस्थौजो दृढं भवेत् ॥ २८ ॥ चिकित्सा जायते तस्य गर्भवासपरिक्षये ॥ नारी वाथ नरो वाथ नपुंसकं वाभिजायते ॥ २९ ॥
शक्तित्रयं विशालाक्षं षाट्कौशिकसमावृतम् ॥ पञ्चेन्द्रियसमोपेतं दशना[illegible]विभूषितम् ॥ ३० ॥ दशप्राणगुणोपेतं सो जानाति स योगवित् ॥ मज्जा

१ स्त्रीक्षेत्रमोषधीपात्रं बीजं वाप्यमृताशनम् । तत्र वप्ता नरः स्वामी० पा० । २ दशमेऽह्नि भ० पा० । ३ इच्छा संजायते० पा० ।

स्थिशुक्रमांसानि रोम रक्तं बलं तथा ॥ ३१ ॥ षाट्कौशिकमिदं पिण्डं स्याज्जन्तोः पाञ्चभौतिकम् ॥ नवमे दशमे मासि जायते पाञ्चभौतिकः ॥३२॥
सूतिवातैः समाकृष्टः पीडया विह्वलीकृतः ॥ पुष्टो नाड्याः सुषुम्णाया योषिद्गर्भस्थितस्त्वरन् ॥ ३३ ॥ क्षितिर्वारि हविर्भोक्ता पवनाकाशमेव च ॥
एभिर्भूतैः पीडितस्तु निबद्धः स्नायुबन्धनैः ॥ ३४ ॥ मूलभूता इमे प्रोक्ताः सप्त नाड्यन्तरे स्थिताः ॥ त्वचास्थिनाड्यो रोमाणि मांसश्चैवात्र पञ्चमम्
॥ ३५ ॥ एते पञ्च गुणाः प्रोक्ता मया भूमेः खगेश्वर ॥ यथा पञ्च गुणाश्चापस्तथा तच्छृणु काश्यप ॥ ३६ ॥ लाला मूत्रं तथा शुक्रं मज्जा रक्तञ्च पंच
मम् ॥ आपः पञ्चगुणाः प्रोक्ता ज्ञातव्यास्ते प्रयत्नतः ॥ ३७ ॥ क्षुधा तृषा तथा निद्रा आलस्यं कान्तिरेव च ॥ तेजः पञ्चगुणं प्रोक्तं तार्क्ष्यं सर्व्वत्र
योगिभिः ॥ ३८ ॥ रागद्वेषौ तथा लज्जा भयं मोहस्तथैव च ॥ इत्येतत् कथितं तार्क्ष्य वायुजं गुणपञ्चकम् ॥ ३९ ॥ आकुञ्चनं धावनञ्च लंघनञ्च
प्रसारणम् ॥ निरोधः पञ्चमः प्रोक्तो वायोः पञ्च गुणाः स्मृताः ॥ ४० ॥ घोषश्चिन्ता च गाम्भीर्य्यं श्रवणं सत्यसंक्रमः ॥ आकाशस्य गुणाः पञ्च ज्ञात
व्यास्तार्क्ष्य यत्नतः ॥ ४१ ॥ श्रोत्रं त्वक् चक्षुषी जिह्वा नासा बुद्धीन्द्रियाणि च ॥ पाणी पादौ गुदं प्राक् च गुह्यं कर्म्मेन्द्रियाणि च ॥ ४२ ॥ इडा
च पिंगला चैव सुषुम्णा च तृतीयका ॥ गान्धारी गजजिह्वा च पूषा चैव यशा तथा ॥ ४३ ॥ अलम्बुशा कुहूश्चैव शंखिनी दशमी स्मृता ॥ पिण्ड
मध्ये स्थिता ह्येताः प्रधाना दश नाड्यः ॥ ४४ ॥ प्राणापानौ समानश्च उदानो व्यान एव च ॥ नागः कूर्म्मश्च कृकरो देवदत्तो धनञ्जयः ॥ ४५ ॥
इत्येते वायवः प्रोक्ता दश देहेषु संस्थिताः ॥ केवलं भुक्तमन्नञ्च पुष्टिदं सर्व्वदेहिनाम् ॥ ४६ ॥ नयते प्राणदो वायुः शरीरे सर्व्वसन्धिषु ॥ आहारो
भुक्तमात्रस्तु वायुना क्रियते द्विधा ॥४७॥ स प्रविश्य गुदे सम्यक् पृथगन्नं पृथग्जलम् ॥ ऊर्ध्वमग्नेर्जलं कृत्वा तदन्नञ्च जलोपरि ॥ ४८ ॥ अग्नेश्चाधः
स्वयं प्राणस्तमग्निञ्च धमेच्छनैः ॥ वायुना धम्यमानोऽग्निः पृथक्किट्टं पृथग्रसम् ॥ ४९ ॥ मलैर्द्वादशभिः किट्टं भिन्नं देहात् पृथग्भवेत् ॥ कर्णाक्षि
नासिका जिह्वा दन्तनाभिवपुर्गुदम् ॥ ५० ॥ नखा मलाश्रया ह्येते विण्मूत्रञ्चेत्यनन्तकम् ॥ शुक्रशोणितसंयोगादेतत् षाट्कौशिकं स्मृतम् ॥ ५१ ॥
रोम्णां कोट्यस्तथा तिस्रोऽप्यर्द्धकोटि समन्विताः ॥ द्वात्रिंशद्दशनाः प्रोक्ताः सामान्याद्विनतासुत ॥ ५२ ॥ सप्त लक्षाणि केशाः स्युर्नखाः प्रोक्तास्तु
विंशतिः ॥ मांसं पलसहस्रैकं सामान्याद्देहसंस्थितम् ॥५३॥ रक्तं पलशतं तार्क्ष्य बुद्धमेव पुरातनैः॥ पलानि दश मेदश्च त्वचा चैव तु तत्समा ॥५४॥
पलद्वादशकं मज्जा महारक्तं पलत्रयम् ॥ शुक्रं द्विकुडवं ज्ञेयं शोणितं कुडवं स्मृतम् ॥ ५५ ॥ श्लेष्माणश्च षडूर्ध्वञ्च विण्मूत्रं तत्प्रमाणतः ॥ अस्थ्नां
हि ह्यधिकं प्रोक्तं षष्ट्युत्तरशतत्रयात् ॥ ५६ ॥ एवं पिण्डः समाख्यातो वैभवं सम्प्रचक्ष्महे ॥ सुखं दुःखं भयं क्षेमं कर्म्मणैव हि प्राप्यते ॥ ५७ ॥

अधोमुखं चोर्ध्वपादं गर्भाद्वायुः प्रकर्षति ॥ तले तु करयोर्न्यस्य वर्द्धते जानुपार्श्वयोः ॥ ५८ ॥ अंगुष्ठौ चोपरि न्यस्तौ जान्वोरध करांगुली ॥ जानु
पृष्ठे तथा नेत्रे जानुमध्ये च नासिका ॥ ५९ ॥ एवं वृद्धिं क्रमाद्याति जन्तुः स्त्रीगर्भसंस्थितः ॥ काठिन्यमस्थीन्यायान्ति भुक्तपीतेन जीवति ॥६०॥
नाडी वाप्यायनी नाम नाभ्यां तत्र निबध्यते ॥ स्त्रीणां तथान्त्रसुषिरे स निबद्धः प्रजायते ॥ ६१ ॥ क्रामन्ति भुक्तपीतानि स्त्रीणां गर्भोदरे तथा ॥
तैराप्यायितदेहोऽसौ जन्तुर्वृद्धिमुपैति च ॥ ६२ ॥ स्मृतयस्तत्र प्रयान्त्यस्य बह्वयः संसारभूतयः ॥ ततो निर्व्वेदमायाति पीडयमान इतस्ततः ॥६३॥
पुनर्नैवं करिष्यामि मुक्तमात्र इहोदरात् ॥ तथातथा यतिष्यामि गर्भं नाप्नोम्यहं यथा ॥ ६४ ॥ इति सञ्चिन्तयञ्जीवो स्मृत्वा जन्मशतानि वै ॥
यानि पूर्व्वानुभूतानि दैवभूतात्मजानि वै ॥ ६५ ॥ ततः कालक्रमाज्जन्तुः परिवर्त्यत्वधोमुखः ॥ नवमे दशमे वापि मासि संजायते ततः ॥ ६६ ॥
निष्क्रम्यमाणो वातेन प्राजापत्येन पीड्यते ॥ निष्क्रमते च विलपंस्तदा दुःखनिपीडितः ॥ ६७ ॥ निष्क्रामंश्चोदरान्मूर्च्छामसह्यां प्रतिपद्यते ॥
प्राप्नोति चेतनां चासौ वायुस्पर्शसुखान्वितः ॥ ६८ ॥ ततस्तं वैष्णवी माया समास्कन्दति मोहिनी ॥ तया विमोहितात्मासौ ज्ञानभ्रंशमवाप्नुते
॥ ६९ ॥ भ्रष्टज्ञानं बालभावे ततो जन्तुः प्रपद्यते ॥ ततः कौमारकावस्थां यौवनं वृद्धतामपि ॥ ७० ॥ पुनश्च तद्वन्मरणं जन्म प्राप्नोति मानवः ॥
ततः संसारचक्रेऽस्मिन् भ्राम्यते घटयन्त्रवत् ॥ ७१ ॥ कदाचित्स्वर्गमाप्नोति कदाचिन्निरयं नरः ॥ स्वर्गं च निरयं चैव स्वकर्मफलमश्नुते ॥ ७२ ॥
कदाचिच्छुभकर्म्मा च भुवं स्वल्पेन गच्छति ॥ स्वर्लोके नरके चैव भुक्तप्राये द्विजोत्तमाः ॥ ७३ ॥ नरकेषु महद्दुःखमेतद्यत्स्वर्गवासिनः ॥ दृश्यते
नात्र मोदन्ते पात्यमानास्तु नारकैः ॥ ७४ ॥ स्वर्गेऽपि दुःखमतुलं यदारोहणकालतः ॥ प्रभृत्यहं पतिष्यामीत्येतन्मनासि वर्त्तते ॥ ७५ ॥ नार
कांश्चैव सम्प्रेक्ष्य महद्दुःखमवाप्यते ॥ एवं गतिमहं गन्तेत्यहर्निशमनिर्वृतः ॥ ७६ ॥ गर्भवासे महद्दुःखं जायमानस्य योनिजम् ॥ जातस्य बाल
भावेऽपि वृद्धत्वे दुःखमेव च ॥ ७७ ॥ कामेर्ष्याक्रोधसम्बन्धाद्यौवनेऽपि च दुःसहम् ॥ दुःस्वप्नं या वृद्धता च मरणे दुःखमुत्कटम् ॥ ७८ ॥ कृष्य
माणश्च याम्यैः स नरकेऽपि च यात्यधः ॥ पुनश्च गर्भाज्जन्म स्यान्मरणं दुष्करं तथा ॥ ७९ ॥ एवं संसारचक्रेऽस्मिञ्जन्तवो घटयन्त्रवत् ॥ भ्राम्यन्ते
प्राक्तनैर्बन्धैर्बद्धा विध्यन्ति चासकृत् ॥ ८० ॥ नास्ति पक्षिन्सुखं किञ्चित्क्षेत्रे दुःखशताकुले ॥ विनतासुत मोक्षाय यतितव्यं ततो नरैः ॥८१॥ एतत्ते
सर्व्वमाख्यातं यथा गर्भस्य संस्थितिः ॥ कथयामि क्रमप्रश्नं पृष्टं वा वर्त्तते स्पृहा ॥ ८२ ॥ गरुड उवाच ॥ मध्ये कृतमहाप्रश्नद्वयस्याप्तं मयोत्तरम् ॥
प्रश्नस्यापि तृतीयस्य उत्तरं च विधीयताम् ॥ ८३ ॥ श्रीकृष्ण उवाच ॥ म्रियमाणस्य किं कृत्यमिति त्वं पृष्टवानसि ॥ शृणु तत्रोत्तरं तूक्तं कथया

मि समासतः ॥ ८४ ॥ आसन्नमरणं ज्ञात्वा पुरुषं स्नापयेत्ततः ॥ गोमूत्रगोमयसुमृत्तीर्थोदककुशोदकैः ॥ ८५ ॥ वाससी परिधाप्याथ धौते तु शुभ्रे
नी शुभे ॥ दर्भाण्यादौ समास्तीर्य्य दक्षिणाग्रान्विकीर्य्य च ॥ ८६ ॥ तिलान् गोमयलिप्तायां भूमौ तत्र निवेशयेत् ॥ ८७ ॥ प्रागुदक्शिरसं वापि
मुखे स्वर्णं विनिःक्षेपेत् ॥ शालग्रामशिला तत्र तुलसी च खगेश्वर ॥ ८८ ॥ विधिया सन्निधौ सर्पिर्दीपं प्रज्वालयेत्पुनः ॥ नमो भगवते वासुदेवायेति
जपस्तथा ॥ ८९ ॥ आदौ तु प्रणवं कृत्वा पूजादाने ततः स्मृते ॥ समभ्यर्च्य हृषीकेशं पुष्पधूपादिभिस्ततः ॥ ९० ॥ प्रणिपातैः स्तवैः पुण्यैर्ध्या
नयोगेन पूजयेत् ॥ दत्त्वा दानं च विप्रेभ्यो दीनानाथेभ्य एव च ॥ ९१ ॥ पुत्रे मित्रे कलत्रे च क्षेत्रधान्यधनादिषु ॥ निवर्त्तयेन्ममत्वं च विष्णोः
पादौ हृदि स्मरन् ॥ ९२ ॥ उच्चैः पुरुषसूक्तं च यदि श्रेष्ठापदस्तदा ॥ पुत्राद्याः प्रपठेयुस्ते म्रियमाणे निजे जने ॥ ९३ ॥ एतत्ते सर्व्वमाख्यातं
कृत्यं मृत्यावुपस्थिते ॥ फलमप्यस्य कृत्स्नस्य समासात्ते वदाम्यहम् ॥ ९४ ॥ स्नानेन शुचिताप्राप्तिरपावित्र्यस्ततिस्ततः ॥ ततो विष्णोः स्मृतिस्त
स्य ज्ञानात्सर्वफलप्रदा ॥ ९५ ॥ दर्भतूली नयेत्स्वर्गमातुरं तु न संशयः॥ तिलैर्दर्भैश्च निःक्षिप्तैः स्नानं क्रतुमयं भवेत् ॥ ९६॥ ब्रह्मा विष्णुश्च रुद्रश्च
श्रीर्हुताशस्तथैव च ॥ मण्डले चोपतिष्ठन्ति तस्मात्कुर्व्वीत मण्डलम् ॥ ९७ ॥ प्रागुदग्वा कृतेनेह शिरसा लोकमुत्तमम् ॥ व्रजते यदि पापस्याल्पत्वं
पुंसो भवेत्खग॥९८॥पञ्चरत्ने मुखे मुक्ते जीवे ज्ञानं प्ररोहति॥तुलसी ब्राह्मणा गावो विष्णुरेकादशी खग॥९९॥पञ्च प्रवहणान्येव भवाब्धौ मज्जतां नृणाम् ॥
विष्णुरेकादशी गीता तुलसी विप्रधेनवः॥१००॥असारे दुर्गसंसारे षट्पदी भक्तिदायिनी ॥ नमो भगवते वासुदेवायेति जपन्नरः ॥ १०१ ॥ ॐकारपूर्व्वं साधु
ज्यं प्राप्नुयान्नात्र संशयः ॥ पूजयापि च मल्लोकप्राप्तिराराद्दिवं व्रजेत् ॥ १०२ ॥ बन्धाभावे ममत्वे तु ज्ञानं पुरुषसूक्ततः ॥ यस्ययस्याधिकत्वं तु साधनेष्वेषु
काश्यप॥१०३॥ तत्तत्फलस्याप्याधिक्यं भवतीत्यवधारय॥दातव्यानि यथाशक्त्या प्रीतोऽसौ सर्वदा भवेत्॥१०४॥ एतत्ते सर्व्वमाख्यातं स्नानादिषु फलं
मया॥ ब्रह्माण्डे ये गुणाः सन्ति शरीरे ते व्यवस्थिताः ॥ १०५ ॥ पातालभूधरा लोकास्तथान्ये द्वीपसागराः ॥ आदित्यादिग्रहाः सर्व्वे पिण्डमध्ये
व्यवस्थिताः ॥१०६॥ पादाधस्तु तलं ज्ञेयं पादोर्द्ध्वं वितलं तथा ॥ जानुभ्यां सुतलं विद्धि सक्थिदेशे महातलम् ॥१०७॥ तथा तलातलश्चोरौ गुह्य
देशे रसातलम् ॥ पातालं कटिसंस्थन्तु पादादौ लक्षयेद्बुधः ॥ १०८ ॥ भूर्लोकं नाभिमध्ये तु भुवर्लोकं तदूर्ध्वतः ॥ स्वर्गलोकं हृदये विद्यात् कण्ठ
देशे महस्तथा ॥ १०९ ॥ जनलोकं वक्त्रदेशे तपोलोकं ललाटके ॥ सत्यलोकं महारन्ध्रे भुवनानि चतुर्दश ॥ ११० ॥ त्रिकोणे संस्थितो मेरुर
धःकोणे च मन्दरः ॥ दक्षिणे चैव कैलासो वामभागे हिमाचलः ॥ १११ ॥ निषधश्चोर्द्ध्वभागे च दक्षिणे गन्धमादनः ॥ मलयो ( रमणो ) वामरेखा

थां सप्तैते कुलपर्व्वताः ॥ ११२ ॥ अस्थिस्थाने स्थितो जम्बूः शाको मज्जासु संस्थितः ॥ कुशद्वीपः स्थितो मांसे क्रौञ्चद्वीपः शिरास्थितः ॥ ११३ ॥
त्वचायां शाल्मलिद्वीपो प्लक्षः रोम्णां च सञ्चये ॥ नखस्थः पुष्करद्वीपः सागरास्तदनन्तरम् ॥ ११४ ॥ क्षारोदश्च तथा मूत्रे क्षारे क्षीरोदसागरः ॥
सुरोदधिश्च श्लेष्मस्थः मज्जायां घृतसागरः ॥ ११५ ॥ रसोदधिं रसे विद्याच्छोणिते दधिसागरम् ॥ स्वादुलं लम्बिकास्थाने गर्भोदं शुक्रसंस्थितम्
॥ ११६ ॥ नादचक्रे स्थितः सूर्य्यो बिन्दुचक्रे च चन्द्रमाः ॥ लोचनस्थः कुजो ज्ञेयो हृदये च बुधः स्मृतः ॥ ११७ ॥ विष्णुस्थाने गुरुं विद्या
च्छुक्रे शुक्रो व्यवस्थितः ॥ नाभिस्थाने स्थितो मन्दो मुखे राहुः स्थितः सदा ॥ ११८ ॥ पायु (द) स्थाने स्थितः केतुः शरीरे ग्रहमण्डलम् ॥
विभक्तश्च समास्यातमापादतलमस्तकम् ॥ ११९ ॥ उत्पन्ना ये हि संसारे म्रियन्ते ते न संशयः ॥ बुभुक्षा च तृषा रौद्रा दाहोद्भूता च मूर्छना
॥ १२० ॥ यत्र पीडास्त्विमा रौद्रास्ता वै वृश्चिकदंशजाः ॥ विनाशः पूर्णकाले च जायते सर्व्वदेहिनाम् ॥१२१॥ अग्रेअग्रे हि धावन्ति यमलोकगत
स्य वै ॥ तप्तवालुकमध्येन प्रज्वलद्वह्निमध्यतः ॥ १२२ ॥ केशग्राहैः समाक्रान्ता नीयन्ते यमकिंकरैः ॥ पापिष्ठास्त्वधमास्तार्क्ष्य दयाधर्म्मविवर्ज्जि
ताः ॥ १२३ ॥ यमलोके वसन्त्येते कुत्र्यां जन्म न विद्यते ॥ एवं सञ्जायते तार्क्ष्य मर्त्ये जन्तुः स्वकर्म्मभिः ॥ १२४ ॥ उत्पन्ना ये हि संसारे म्रिय
न्ते ते न संशयः ॥ आयुः कर्म्म च वित्तञ्च विद्या निधनमेव च ॥ १२५ ॥ पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ कर्म्मणा जायते जन्तुः
कर्म्मणैव प्रलीयते ॥ १२६ ॥ सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यते ॥ अधोमुखं चोर्द्धपादं गर्भाद्वायुः प्रकर्षति ॥ १२७ ॥ जन्मतो वैष्णवी माया
संमोहयति सत्वरम् ॥ स्वकर्मकृतसम्बन्धो जन्तुर्जन्म प्रपद्यते ॥ १२८ ॥ सुकृतादुत्तमो भोगभोग्यवान् सुकुले भवेत् ॥ यथायथा दुष्कृतं तत् कुले
हीने प्रजायते ॥ १२९ ॥ दरिद्रो व्याधितो मूर्खः पापकृद्दुःखभाजनम् ॥ अतः परं किमर्थं ते कथयामि खगेश्वर ॥ १३० ॥ इति श्रीगारुडे महापुराणे
उत्तरखण्डे द्विती० धर्म० प्रेत० श्रीकृष्णगरुडसंवादे जन्तूत्पत्तितद्गतधात्वादिविभागभुवनादिविभागवर्णनं नाम द्वात्रिंशोऽध्यायः ॥३२॥ गरुड उवाच ॥
उत्पत्तिलक्षणं जन्तोः कथितं मयि पुत्रके ॥ यमलोकः कियन्मात्रस्त्रैलोक्ये सचराचरे ॥ विस्तरं तस्य मे ब्रूहि अध्वा चैव कियान् स्मृतः ॥ १ ॥ कैश्च
पापैः कृतैर्देव केन वा शुभकर्म्मणा ॥ गच्छन्ति मानवास्तत्र कथयस्व विशेषतः ॥ २ ॥ श्रीभगवानुवाच ॥ षडशीतिसहस्राणि योजनानां प्रमाणतः ॥
यमलोकस्य चाध्वानमन्तरा मानुषस्य च ॥ ३ ॥ ध्मातताम्रमिवाततो ज्वलद्दुर्गो महापथः ॥ तत्र गच्छन्ति पापिष्ठा मानवा मूढचेतसः ॥ ४ ॥

१ स्वादूदकं च विदस्थाने० पा०। २ यथा दुष्कृतष्कर्मा हि० पा०।

कण्टकाश्च सुतीक्ष्णा वै विविधा घोरदर्शनाः ॥ तैस्तुवालुक्षितिर्व्याप्ता हुताशश्च तथोल्वणः ॥ ५ ॥ वृक्षच्छाया न तत्रास्ति यत्र विश्रमते नरः ॥ गृहीतः कालपाशैश्च कृतैः कर्म्मभिरुल्बणैः ॥ ६ ॥ तास्मिन् मार्गे न चान्नाद्यं येन प्राणान् प्रपोषयेत् ॥ न जलं दृश्यते तत्र तृषा येन विलीयते ॥ ७ ॥ क्षुधया पीडितो याति तृष्णया च महापथे ॥ शीतेन कम्पते क्वापि यममार्गेऽतिदुर्गमे ॥ ८ ॥ यद्यस्य यादृशं पापं स पन्थास्तस्य तादृशः ॥ सुदीनाः कृपणा मूढा दुःखैर्व्याप्तास्तरन्ति तम् ॥९॥ रुदन्ति दारुणं केचित् केचिद्द्रोहं वदन्ति च ॥ आत्मकर्म्मकृतैर्दोषैः पच्यमाना मुहुर्म्मुहुः ॥ १० ॥ ईदृग्विधः स वै पन्था विज्ञेयो दारुणः खग ॥ वितृष्णा ये नरा लोके सुखं तस्मिन् व्रजन्ति ते ॥ ११ ॥ यानियानि च दानानि दत्तानि भुवि मानवैः ॥ तानितान्युपतिष्ठन्ति यमलोके पुरः पथि ॥ १२ ॥ पापिनो नोपतिष्ठन्ति दाहश्राद्धजलाञ्जलि ॥ भ्रमन्ति वायुभूतास्ते ये क्षुद्राः पापकर्म्मिणः ॥ १३ ॥ ईदृशं वर्त्म तद्रौद्रं कथितं तव सुव्रत ॥ पुनश्च कथयिष्यामि यममार्गस्य या स्थितिः ॥ १४ ॥ याम्यनैर्ऋतयोर्मध्ये पुरं वैवस्वतस्य तु ॥ सर्वं वज्रमयं दिव्यमभेद्यं तत् सुरासुरैः ॥ १५ ॥ चतुरश्रं चतुर्द्वारं सप्तप्राकारतोरणम् ॥ स्वयं तिष्ठति वै यस्यां यमो दूतैः समन्वितः ॥ १६ ॥ योजनानां सहस्रं वै प्रमाणेन तदुच्यते ॥ सर्व्वरत्नमयं दिव्यं विद्युज्ज्वालार्कतैजसम् ॥ १७ ॥ तद्गृहं धर्म्मराजस्य विस्तीर्णं काञ्चनप्रभम् ॥ योजनानां पञ्चशतप्रमाणेन समुच्छ्रितम् ॥ १८ ॥ वृतं स्तम्भसहस्रैस्तु वैदूर्य्यमणिमण्डितम् ॥ मुक्ताजालगवाक्षं च पताकाशतभूषितम् ॥ १९ ॥ घण्टाशतनिनादाढ्यं तोरणानां शतैर्वृतम् ॥ एवमादिभिरन्यैश्च भूषणैर्भूषितं सदा ॥ २० ॥ तत्रस्थो भगवान् धर्म्म आसने तु समे शुभे ॥ दशयोजनविस्तीर्णे नीलजीमूतसन्निभे ॥ २१ ॥ धर्म्मज्ञो धर्मशीलश्च धर्म्मयुक्तो हितो यमः ॥ भयदः पापयुक्तानां धार्मिकाणां सुखप्रदः ॥२२॥ मन्दमारुतसंयोगैरुत्सवैर्विविधैस्तथा ॥ व्याख्यानैर्विविधैर्युक्तः शंखवादित्रनिःस्वनैः ॥ २३ ॥ पुरमध्यप्रवेशे तु चित्रगुप्तस्य वै गृहम् ॥ पंचविंशतिसंख्यानां योजनानां सुविस्तरम् ॥ २४ ॥ दशोच्छ्रितं महादिव्यं लोहप्राकारवेष्टितम् ॥ प्रतोलीशतसंचारं पताकाशतशोभितम् ॥ २५ ॥ दीपिकाशतसङ्कीर्णं गीतध्वनिसमाकुलम् ॥ विचित्रचित्रकुशलैश्चित्रगुप्तस्य वै गृहम् ॥ २६ ॥ मणिमुक्तामये दिव्ये आसने परमाद्भुते ॥ तत्रस्थो गणयत्यायुर्मानुषेष्वितरेषु च ॥ २७ ॥ न मुह्यति कदाचित् स सुकृते दुष्कृतेऽपि वा ॥ यद्द्येनोपार्ज्जितं यावत् तावद्वै वेत्ति तस्य तत् ॥ २८ ॥ दशाष्टदोषरहितं कृतकर्म्म लिखत्यसौ ॥ चित्रगुप्तालयात् प्राच्यां ज्वरस्यास्ति महागृहम् ॥ २९ ॥ दक्षिणे चापि शूलस्य लताविस्फोटकस्य च ॥ पश्चिमे काल



१ तैस्तु वर्त्मक्षिति० पा० ।

पाशस्य अजीर्णस्यारुचेस्तथा ॥ ३० ॥ मध्यपीठोत्तरे ज्ञेया तथा चान्या विषूचिका ॥ ऐशन्यां वै शिरोऽर्त्तिश्च आग्नेय्याञ्चैव मूर्च्छता ॥ ३१ ॥
अतिसारश्च नैर्ऋत्यां वायव्यां दाहसंज्ञकः ॥ एभिः परिवृतो नित्यं चित्रगुप्तः स तिष्ठति ॥ ३२ ॥ यत् कर्म्म कुरुते कश्चित्तत् सर्व्वं विलिखत्यसौ ॥
धर्मराजगृहद्वारि दूतास्तार्क्ष्य तथा निशि ॥ तिष्ठन्ति पापकर्म्माणः पच्यमाना नराधमाः ॥ ३३ ॥ यमदूतैर्महापाशैर्हन्यमानाश्च मुद्गरैः ॥ वध्यन्ते
विविधैः पापैः पूर्व्वकर्म्मकृतैर्नराः ॥ ३४ ॥ नानाप्रहरणाग्रैश्च नानायन्त्रैस्तथा परे ॥ छिद्यन्ते पापकर्म्माणः क्रकचैः काष्ठवद्द्विधा ॥ ३५ ॥
अन्ये ज्वलद्भिरङ्गारैर्वेष्टिताः परितो भृशम् ॥ पूर्व्वकर्म्मविपाकेन ध्मायन्ते लोहपिण्डवत् ॥ ३६ ॥ क्षिप्त्वान्ये च धरापृष्ठे कुठारेणावकर्त्तिताः ॥
क्रन्दमानाश्च दृश्यन्ते पूर्व्वकर्म्मविपाकतः ॥ ३७ ॥ केचिद्गुडमयैः पाकैस्तैलपाकैस्तथा परे ॥ पीड्यन्ते यमदूतैश्च पापिष्ठाः सुभृशं नराः ॥ ३८ ॥
क्षणात्ति प्रार्थयन्त्यन्ये देहिदेहीति कोटिशः ॥ यमलोके मया दृष्टा मेमस्वं भक्षितं त्वया ॥ ३९ ॥ इत्येवं बहुशस्तार्क्ष्य नरकाः पापिनां स्मृताः ॥
कर्मभिर्बहुभिः प्रोक्तैः सर्वशास्त्रेषु भाषितैः ॥ दानोपकारं वक्ष्यामि यथा तत्र सुखं भवेत् ॥ ४० ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे
धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे यमलोकविस्तृति० वर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥ ॥ श्रीकृष्ण उवाच ॥ शृणु तार्क्ष्य यथान्यायं
धर्म्माधर्म्मस्य लक्षणम् ॥ सुकृतं दुष्कृतं नृणामग्रे धावति धावताम् ॥ १ ॥ कृते तपः प्रशंसन्ति त्रेतायां ज्ञानसाधनम् ॥ द्वापरे यज्ञदाने च दान
मेकं कलौ युगे ॥२॥ गृहस्थानां स्मृतो धर्म्म उत्तमानां विचक्षणैः ॥ इष्टापूर्ते स्वशक्त्या हि कुर्व्वतां नास्ति पातकम् ॥ ३ ॥ वृक्षस्तु रोपितो येन
खनिकूपजलाशयाः ॥ यममार्गे सुखं तस्य व्रजतो नितरां भवेत् ॥ ४ ॥ अग्नितापप्रदातारो यैः शीतपीडिते द्विजे ॥ तप्यमानाः सुखं यान्ति सर्व्वे
कामैः प्रपूरिताः ॥ ५ ॥ सुवर्णमणिमुक्तादि वस्त्राण्याभरणानि च ॥ तेन सर्व्वमिदं दत्तं येन दत्ता वसुन्धरा ॥ ६ ॥ यानियानि च भूतानि दत्तानि
भुवि मानवैः ॥ यमलोकपथे तानि तिष्ठन्त्येषां समीपतः ॥ ७ ॥ व्यञ्जनानि विचित्राणि भक्ष्यभोज्यानि यानि च ॥ ददाति विधिना पुत्र प्रेते तदु
पतिष्ठति ॥ ८ ॥ आत्मा वै पुत्रनामास्ति पुत्रस्त्राता यमालये ॥ तारयेत् पितरं घोरात् तेन पुत्रः प्रवक्ष्यते ॥ ९ ॥ अतो देयश्च पुत्रेण श्राद्धमाजी
वितावधि ॥ अतिवाहस्तदा प्रेतो भोगान् वै लभते हि सः ॥ १० ॥ दह्यमानस्य प्रेतस्य स्वजनैर्यो जलाञ्जलिः ॥ दीयते प्रेतरूपोऽसौ प्रीतो याति
यमालये ॥ ११ ॥ अपक्वे मृन्मये पात्रे दुग्धं दत्तं दिनत्रयम् ॥ काष्ठत्रयं गुणैर्बद्धा प्रीत्यै रात्रौ चतुष्पथे ॥ १२ ॥ प्रथमेऽह्नि द्वितीये च तृतीये च तथा

१ श्वमांसं भक्षयन्ति हि० पा० । स्वमांसं भक्षयन्ति० पा० ।

खग ॥ आकाशस्थं पिबेद्दुग्धं प्रेतो वायुवपुर्द्धरः॥१३॥चतुर्थे सञ्चयः कार्य्यः चतुर्थे? वापि साग्निके॥ अस्थिसञ्चयनं कार्य्यं दद्यादापाऽञ्जलिं ततः॥१४॥
न पूर्वाह्णे न मध्याह्ने नापराह्णे न सन्धिषु ॥ याते प्रथमयामे तु दद्यादापजलाञ्जलीन् ॥ १५ ॥ पुत्रेण दत्ते ते सर्व्वे गोत्रिणो हितबान्धवाः ॥
स्वजात्यैः परजात्यैश्च देयो नद्यां जलाञ्जलिः ॥ १६ ॥ गन्तव्यं नैव विप्रेण दातुं शीघ्रं जलाञ्जलिम् ॥ निवृत्ताश्च यदा नार्यो लोकाचारः सदा
भवेत् ॥ १७ ॥ पञ्चत्वञ्च गते शूद्रे यः काष्ठं नयते चिताम् ॥ अनुव्रजेद्यदा विप्रस्त्रिरात्रमशुचिर्भवेत् ॥ १८ ॥ त्रिरात्रे च ततः पूर्णे नदीं गच्छेत्
समुद्रगाम् ॥ प्राणायामशतं कृत्वा घृतं प्राश्य विशुध्यति ॥ १९ ॥ शूद्रो गच्छति सर्व्वत्र वैश्यस्त्रिषु द्वयोः परः ॥ गच्छति स्वीयवर्णेषु दातुं प्रेते
जलाञ्जलिम् ॥ २० ॥ दत्ते जलाञ्जलौ पश्चाद्विदध्याद्दन्तधावनम् ॥ त्यजन्ति गोत्रिणः सर्व्वे दिनानि नव काश्यप ॥ २१ ॥ जलाञ्जलिं तथा दातुं
गच्छन्ति द्विजसत्तमाः ॥ यत्र स्थाने मृतो यस्तु अध्वन्यपि गृहेऽपि वा ॥ विश्लेषस्तु ततः स्थानान्न कचिद्विहितो बुधैः ॥ २२ ॥ स्त्रीजनश्चाग्रतो
गच्छेत् पृष्ठतो नवसञ्चयः ॥ आचमनं विधातव्यं पाषाणोपरि संस्थितैः ॥ २३ ॥ यवांश्च सर्षपान् दूर्वाः पूर्णपात्रे विलोकयेत् ॥ प्राशयेन्निम्बपत्रा
णि स्नेहस्नानं समाचरेत् ॥ २४ ॥ गोत्रिभिर्न च कर्त्तव्यं गृहान्नञ्च न भोजयेत् ॥ भुञ्जीत मृन्मये पात्रे उत्तानञ्च विवर्ज्जयेत् ॥ २५ ॥ मृतकस्य गुणा
ग्राह्या यमगाथां समुद्गिरेत् ॥ शुभाशुभे च ध्यातव्ये पूर्व्वकर्म्मोपसञ्चिते ॥ २६ ॥ लब्धेनैव च देहेन भुंक्ते सुकृतदुष्कृते ॥ वायुरूपो भ्रमत्येष वायु
रूर्ध्वं स गच्छति ॥ २७ ॥ दशाहकर्म्मक्रियया कुटी निष्पाद्यते ध्रुवम् ॥ नवकैः षोडशश्राद्धैः प्रयाति हि कुटीं नरः ॥ २८ ॥ तिलैर्दर्भैश्च भूम्यां
वै कुटी धातुमयी भवेत् ॥ पञ्च रत्नानि वक्त्रे तु येन जीवः प्ररोहति॥२९॥यदा पुष्पं प्रनष्टं हि तदा गर्भं न धारयेत्॥आदराच्च ततो भूमौ तिलदर्भान्
विनिःक्षिपेत्॥३०॥पशुत्वे स्थावरत्वे च यत्र क्वापि स जायते ॥ तत्रैव जन्तुरुत्पन्नः श्राद्धं तत्रोपतिष्ठति॥३१॥धन्विना लक्ष्यमुद्दिश्य मुक्तो बाणस्तदा
प्रयात् ॥ यथा श्राद्धं यमुद्दिश्य कृतं तस्योपतिष्ठति ॥ ३२ ॥ यावन्नोत्पादितो देहस्तावच्छ्राद्धैर्न प्रीणनम् ॥ क्षुधाविभ्रममापन्नो दशाहेन च तर्पितः
॥३३॥ पिण्डदानं न यस्याभूदाकाशे भ्रमते तु सः ॥ दिनत्रयं वसंस्तोये अग्नावपि दिनत्रयम् ॥ आकाशे वसते त्रीणि दिनमेकन्तु वासके ॥ ३४ ॥
दग्धे देहे च वह्नौ च जलेनैव तु तर्पितः ॥ स्नेहस्नानं जलेनैव पूपकैः कृशरैर्गृहे ॥ ३५ ॥ प्रथमेऽह्नि तृतीये च पञ्चमे सप्तमेऽपि वा ॥ नवमैकादशे
चैव श्राद्धं नवकमुच्यते ॥ ३६ ॥ गृहद्वारे श्मशाने वा तीर्थे देवालयेऽपि वा ॥ यत्राद्यो दीयते पिण्डस्तत्र सर्व्वान् समापयेत् ॥ ३७ ॥ एकाद
शाहे यच्छ्राद्धं तत् सामान्यमुदाहृतम् ॥ चतुर्णामेकवर्णानां शुद्ध्यर्थं स्नानमुच्यते ॥ ३८ ॥ कृत्वा चैकादशाहञ्च पुनः स्नात्वा शुचिर्भवेत् ॥ दद्याद्वि

प्राप्य यः शय्यां यथोक्तं प्रेतमोक्षदाम् ॥ ३९ ॥ न भवेत् यदा स गोत्रो परोऽपि विधिमाचरेत् ॥ भार्य्या वा पुरुषः कश्चित् सुहृच्च कुरुते क्रियः॥ ॥ ४० ॥ प्रथमेऽहनि यः पिण्डो दीयते विधिपूर्व्वकम् ॥ अन्नाद्येन च तेनैव सर्व्वश्राद्धानि कारयेत् ॥ ४१ ॥ अमन्त्रं कारयेच्छ्राद्धं दशाहं नामगोत्रतः ॥ श्राद्धं कृतन्तु यैर्वस्त्रैस्तानि त्यक्त्वा गृहं विशेत् ॥ ४२ ॥ असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान् ॥ प्रथमेऽहनि यः कुर्य्यात् स दशाहं समापयेत् ॥ ४३ ॥ जीवस्य दशभिः पिण्डैर्देहो निष्पाद्यते ध्रुवम् ॥ वृद्धिश्च दशभिर्मासैर्गर्भस्थस्य यथा भवेत् ॥ ४४ ॥ आशौचं यावदेतस्य तावत् पिण्डोदकक्रिया ॥ चतुर्णामपि वर्णानामेष एव विधिः स्मृतः ॥ ४५ ॥ यत्र त्रिरात्रमाशौचं तत्रादौ त्रीन् प्रदापयेत् ॥ चतुरस्तु द्वितीयेऽह्नि तृतीये त्रींस्तथैव च ॥ ४६ ॥ पृथक् शरावयोर्दद्यादेकाहं क्षीरमम्बु च ॥ एकोद्दिष्टन्तु वै श्राद्धं चतुर्थेऽहनि कारयेत् ॥ ४७ ॥ प्रथमेऽहनि यः पिण्डस्तेन मूर्द्धा प्रजायते ॥ चक्षुः श्रोत्रञ्च नासा च द्वितीयेऽह्नि प्रजायते ॥ ४८ ॥ गण्डौ वक्त्रं तथा ग्रीवा तृतीयेऽहनि जायते ॥ हृदयं कुक्षिरुदरं चतुर्थे तद्वदेव हि ॥ ४९ ॥ कटिपृष्ठं गुदञ्चापि पञ्चमेऽहनि जायते ॥ षष्ठे ऊरू च विज्ञेये सप्तमे गुल्फसम्भवः ॥ ५० ॥ अष्टमे दिवसे प्राप्ते जंघे च भवतोऽण्डज ॥ पादौ च नवमे ज्ञेयौ दशमे बलवत्क्षुधा ॥ ५१ ॥ एकादशाहे यः पिण्डस्तं दद्यादामिषेण तु ॥ सिद्धान्नं तस्य दातव्यं कृशराः पूपकाः पयः ॥ प्रक्षाल्य विप्रचरणावर्घ्यं धूपञ्च दीपकम् ॥ ५२ ॥ द्वादश प्रतिमास्यानि श्राद्धान्यैकादशे तथा ॥ त्रिपक्षञ्चापि षण्मासे द्वे श्राद्धानि च षोडश ॥ ५३ ॥ प्रति मासं प्रदातव्यं मृताहे या तिथिर्भवेत् ॥ स मासः प्रथमो ज्ञेय इति वेदविदो विदुः ॥ ५४ ॥ शवहस्ते च यच्छ्राद्धं मृतिस्थाने द्विजासने ॥ तदेव प्रथमं श्राद्धं तत् स्यादेकादशेऽहनि ॥ ५५ ॥ सा तिथिर्मासिके श्राद्धे मृतो यस्मिन् दिने नरः ॥ रिक्तयोश्च त्रिपक्षे च सा तिथिर्नोद्ध्रियेत वै ॥ ५६ ॥ पौर्णमास्यां मृतो योऽसौ चतुर्थी तस्य चोनका ॥ चतुर्थ्यान्तु मृतो यस्तु नवमी तस्य चोनका ॥ ५७ ॥ नवम्याञ्च मृतो यश्च रिक्ता तस्य चतुर्दशी ॥ एता रिक्ताश्च विज्ञेया अन्त्येष्टौ कुशलेन च ॥ ५८ ॥ एकादशाहे यच्छ्राद्धं नवकं तत् प्रकीर्त्तितम् ॥ चतुष्पथे त्यजेदन्नं पुनः स्नानं समाचरेत् ॥ ५९ ॥ एकादशाहादारभ्य घटस्यान्नं जलान्वितम् ॥ दिनेदिने च दातव्यमब्दं यावद्द्विजोत्तमे ॥ ६० ॥ मानुषस्य शरीरे तु विद्यते ह्यस्थिसञ्चयः ॥ तत्संख्यः सर्व्वदेहेषु षष्ट्यधिकशतत्रयम् ॥ ६१ ॥ उदकुम्भेन पुष्टानि तान्यस्थीनि भवन्ति हि ॥ एतस्माद्दीयते कुम्भः प्रीतिः प्रेतस्य जायते ॥ ६२ ॥ यस्मिन् दिने मृतो जन्तुरटव्यां विषमेऽपि वा ॥ यदा तदा भवेद्दाहः सूतकं मृतवासरात् ॥ ६३ ॥ तिलपात्रं तथान्नाद्यं गन्धधूपादिकञ्च यत् ॥ एकादशाहे दातव्यं तेन शुद्धो द्विजो भवेत् ॥ ६४ ॥ क्षत्रियो द्वादशाहे तु वैश्यः पञ्चदशे तथा ॥ शुद्धिः

शूद्रस्य मासेन मृतके जातसूतके ॥ ६५ ॥ मासत्रये त्रिरात्रं स्यात् षण्मासेन तु पक्षिणी ॥ अहः संवत्सरादर्व्वाक् पूर्णे दत्त्वोदकं शुचिः ॥ अनेनैवा
नुसारेण शुद्धिः स्यात् सार्व्ववर्णिकी ॥ ६६ ॥ एकादशाहप्रभृति पुरतः प्रतिवत्सरम् ॥ विश्वेदेवांस्तु सम्पूज्य पिण्डमेकञ्च निर्व्वपेत् ॥ ६७ ॥ यथा
तारागणाः सर्व्वे च्छाद्यन्ते रविरश्मिभिः ॥ एवं प्रच्छाद्यते सर्व्वं न प्रेतो भवति क्वचित् ॥ ६८ ॥ शय्यादानं प्रशंसन्ति सर्व्वदैव द्विजोत्तमाः ॥
अनित्यं जीवनं यस्मात् पश्चात् को नु प्रदास्यति ॥ ६९ ॥ तावद्बन्धुः पिता तावद्यावज्जीवति मानवः ॥ मृते मृत इति ज्ञात्वा क्षणात् स्नेहो निव
र्त्तते ॥ ७० ॥ आत्मैव ह्यात्मनो बन्धुरेवं ज्ञात्वा मुहुर्म्मुहुः ॥ जीवन्नपीति सञ्चिन्त्य स्वीयं हितमनुस्मरेत ॥ ७१ ॥ मृतानां कः सुतो दद्याद्द्विजे
शय्यां सतूलिकाम् ॥ एवं जानन्निदं सर्व्वं स्वहस्तेनैव दापयेत् ॥७२॥ तस्माच्छय्यां समासाद्य सारदारुमयीं दृढाम् ॥ दन्तादिरुचिरां रम्यां हेमपट्टै
रलंकृताम् ॥ तस्यां संस्थाप्य हैमञ्च हरिं लक्ष्म्या समन्वितम् ॥ ७३ ॥ घृतपूर्णञ्च कलशं तत्रैव परिकल्पयेत् ॥ विज्ञेयो गरुड प्रीत्यै स निद्राकलशो
बुधैः ॥ ७४ ॥ ताम्बूलकुंकुमक्षोदकर्पूरागुरुचन्दनम् ॥ दीपिकोपानहच्छत्रचामरासनभाजनम् ॥ ७५ ॥ पार्श्वेषु स्थापयेच्छक्त्या सप्तधान्यानि चैव
हि ॥ शयनस्थस्य भवति यच्चान्यदुपकारकम् ॥ ७६ ॥ भृङ्गारकरकादर्शं पञ्चवर्णं वितानकम् ॥ शय्यामेवंविधां कृत्वा ब्राह्मणाय निवेदयेत्
॥ ७७ ॥ सपत्नीकाय सम्पूज्य स्वर्लोकसुखदायिनीम् ॥ वस्त्रैः सुशोभनैः पूज्य चैलकं परिधापयेत् ॥ ७८ ॥ कर्णकण्ठांगुलीबाहुभूषणैश्चित्रभूषणैः ॥
गृहोपकरणैर्युक्तं गृहं धेन्वा समन्वितम् ॥ ७९ ॥ ततोऽर्घः सम्प्रदातव्यः पञ्चरत्नफलाक्षतैः ॥८०॥ यथा न कृष्णशयनं शून्यं सागरकन्यया ॥ शय्या
ममाप्यशून्यास्तु तथा जन्मनिजन्मनि ॥ ८१ ॥ दत्त्वैवं तल्पममलं क्षमाप्य च विसर्ज्जयेत ॥ तथा चैकादशाहे तु विधिरेष प्रकीर्त्तितः ॥ ८२ ॥ ददाति
यो हि धर्म्मार्थे बान्धवो बान्धवे मृते ॥ विशेषमत्र पक्षे तु कथ्यमानं मया शृणु॥८३॥ उपयुक्तञ्च तस्यासीत् यत् किञ्चित् स्वगृहे पुरा ॥ तस्य यद्वात्रसं
लग्नं वस्त्रं भाजनवाहनम् ॥ यदभीष्टञ्च तस्यासीत् तत सर्व्वं परिकल्पयेत् ॥ ८४ ॥ स्थापयेत् पुरुषं हैमं शय्योपरि शुभं बुधः ॥ पूजयित्वा प्रदातव्या
मृतशय्या यथोदिता ॥ ८५ ॥ पुरन्दरगृहे सर्व्वं सूर्य्यपुत्रालये तथा ॥ उपतिष्ठेत् सुखं जन्तोः शय्यादानप्रभावतः ॥ ८६ ॥ पीडयन्ति न तं याम्याः
पुरुषा भीषणाननाः ॥ न घर्म्मेण न शीतेन बाध्यते स नरः क्वचित् ॥ ८७ ॥ शय्यादानप्रभावेण प्रेतो मुच्येत बन्धनात् ॥ अपि पापसमायुक्तः
स्वर्गलोकं स गच्छति ॥८८॥ विमानवरमारूढः सेव्यमानोऽप्सरोगणैः ॥ आभूतसंप्लवं यावत् तिष्ठेत् पातकवर्जितः ॥८९॥ नवकं षोडशश्राद्धं शय्या
सांवत्सरं तथा ॥ भर्त्तुर्यां कुरुते नारी तस्याः श्रेयो ह्यनन्तकम् ॥ ९० ॥ उपकाराय सा भर्त्तुर्जीवन्ती न मृता तथा ॥ उद्धरेज्जीवमाना सा सती सत्य

वती प्रियम् ॥ ९१ ॥ त्रिया दध्यन्नशयने हेमकुङ्कुममंजनम् ॥ वस्त्रभूषा तथा शय्या सर्व्वमेतद्धि दापयेत ॥ ९२ ॥ उपकारकरं स्त्रीणां यद्भवोदह
किश्चन ॥ भूषणं गात्रलग्नञ्च वस्तु भोग्यादिकञ्च यत् ॥ ९३ ॥ तत् सर्व्वं मेलयित्वा तु स्वेस्वे स्थाने नियोजयेत् ॥ पूजयेल्लोकपालांश्च ग्रहान् देवीं
विनायकम् ॥ ९४ ॥ ततः शुक्लाम्बरधरो गृहीतकुसुमाञ्जलिः ॥ इममुच्चारयेन्मन्त्रं विप्रस्य पुरतो बुधः ॥ ९५ ॥ प्रेतस्य प्रतिमा ह्येषा सर्व्वोपकरणै
र्युता ॥ सर्व्वरत्नसमायुक्ता तव विप्रनिवेदिता ॥ ९६ ॥ आत्मा शम्भुः शिवा गौरी शक्रः सुरगणैः सह ॥ तस्माच्छय्याप्रदानेन सैष आत्मा प्रसीदतु
॥ ९७ ॥ आचार्य्याय प्रदातव्या ब्राह्मणाय कुटुम्बिने ॥ गृहीते ब्राह्मणस्तत्र कोऽदादिति च कीर्त्तयेत् ॥ ९८ ॥ ततः प्रदक्षिणीकृत्य प्रणिपत्य विस
र्ज्जयेत्॥विधिनानेन वै पक्षिन् दानमेकस्य दापयेत्॥९९॥बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः॥विभक्तदक्षिणा ह्येते दातारं पातयन्ति हि॥ १००॥
एवं यो वितरेत् तार्क्ष्य शृणु तस्य च यत् फलम् ॥ साग्रं वर्षशतं दिव्यं स्वर्गलोके महीयते ॥ १०१ ॥ यत् पुण्यन्तु व्यतीपाते कार्त्तिक्यामयनद्वये ॥
द्वारकायान्तु यत् पुण्यं चन्द्रसूर्य्यग्रहे तथा ॥ १०२ ॥ प्रयागे नैमिषे यच्च कुरुक्षेत्रे तथार्बुदे ॥ गङ्गायां यमुनायाञ्च सिन्धुसागरसंगमे ॥ १०३ ॥
तेषु यद्दीयते दानं तस्मादप्यधिकन्त्विदम् ॥ एतच्छय्याप्रदानस्य नाप्नोति षोडशीं कलाम् ॥ १०४ ॥ यत्रासौ जायते प्राणी भुङ्क्ते तत्रैव तत् फलम् ॥
कर्म्मक्षये क्षितौ याति मानुषः शुभदर्शनः ॥ १०५ ॥ महाधनी च धर्म्मज्ञः सर्व्वशास्त्रविशारदः ॥ पुनः स याति वैकुण्ठं मृतोऽसौ नरपुंगवः ॥ १०६ ॥
दिव्यं विमानमारुह्य अप्सरोभिः समावृतः ॥ अहोऽसौ हव्यकव्येषु पितृभिः सह मोदते ॥ १०७ ॥ अष्टकासु कृतं श्राद्धममावास्यादिने तथा ॥
मघासु पितृपर्व्वाणि यानियानि च तेषु च ॥ १०८ ॥ शृणु तार्क्ष्य यथान्यायं प्रेतत्वे पितरो यदि ॥ नोपतिष्ठन्ति श्राद्धानि सपिण्डीकरणं विना
॥१०९॥सपिण्डीकरणं कार्य्यं पूर्णे वर्षे न संशयः॥ आद्यन्तु शवशुद्ध्यर्थं कृत्वा चैवात्र षोडशीम्॥११०॥पितृपंक्तिविशुद्ध्यर्थं शतार्द्धेन ? तु योजयेत्॥
वृद्धिं प्राप्याग्रतः कुर्य्याच्छूद्रस्य स्वच्छयैव हि॥१११॥ साम्प्रतं साग्निके कार्य्यं द्वादशाहे सपिण्डनम्॥ न चासौ कुरुते यावत् प्रेत एव स वह्निमान् ॥
द्वादशाहे ततः कार्य्यं साग्निकेन सपिण्डनम् ॥ ११२॥अस्थिपेक्षे गयाश्राद्धं श्राद्धञ्चापरपक्षिकम्॥अब्दमध्ये न कुर्व्वीत सपिण्डीकरणं विना॥११३॥
सपत्न्यो यदि बह्व्यः स्युरेका पुत्रवती भवेत् ॥ सर्व्वास्ताः पुत्रवत्यः स्युस्तेनैकेनात्मजेन हि ॥११४॥ नासपिण्डोऽग्निमान् पुत्रः पितृयज्ञं समाचरेत् ॥
समाचाराद्भवेत् पापी पितृहा चापि जायते॥११५॥मृते भर्त्तरि या नारी प्राणांश्चैव परित्यजेत्॥भर्त्रैव हि समं तस्याः प्रकुर्व्वीत सपिण्डनम्॥११६॥
अस्थानिकापि या व्यूढा वैश्या वा क्षत्रियापि वा ॥ याः पत्न्यो वै पितुः काश्चित् कुर्य्यात् पुत्रः सपिण्डनम् ॥ ११७ ॥ विप्रेणैव यदा शूद्रा परिणीता

प्रमादतः ॥ एकोद्दिष्टन्तु तच्छ्राद्धं सा तु तेनैव युज्यते ॥ ११८ ॥ अन्ये तु दश ५ पुत्रा जाता वर्णचतुष्टये ॥ ते तासुतासु योक्तव्याः सपिण्डीकरणे
सदा ॥११९॥ अन्वष्टकासु यच्छ्राद्धं यच्छ्राद्धं वृद्धिहेतुकम् ॥ पितुः पृथक् प्रदातव्यं स्त्रियाः पिण्डं सपिण्डने ॥१२०॥ पितामह्या समं मातुः पितुः
सहपितामहैः॥सपिण्डीकरणं कार्य्यमिति तार्क्ष्य मतं मम॥१२१॥अपुत्रायां मृतायां तु पतिः कुर्य्यात् सपिण्डनम् ॥[1]मात्रादितिसृभिः सार्द्धमेवं धर्म्मेण
योजयेत् ॥ १२२ ॥ पुत्रो नास्ति न भर्त्ता च स्त्रीणां तार्क्ष्य सपिण्डनम् ॥ कारयेद्वृद्धिसमये भ्रातृदायाददेवरैः ॥ १२३ ॥ पतिपुत्रविहीनानां गोत्री
नास्ति न देवरः ॥ एकोद्दिष्टेन दातव्यं परेण सह भ्रातृभिः ॥ १२४ ॥ अज्ञानाद्विस्मृतो वापि न कृतश्चेत् सपिण्डनम् ॥ नवकं षोडशश्राद्धमाब्दिकं
कारयेत् ततः ॥ १२५ ॥ अदाहे न च कर्त्तव्यं सदाहे कारयेद्बुधः ॥ दर्भपुत्तलकं कृत्वा वह्निना दाहयेच्छवम् ॥ १२६ ॥ पितुः पुत्रेण कर्त्तव्यं न
कुर्व्वीत पिता सुते ॥ अतिस्नेहान्न कर्त्तव्यं सपिण्डीकरणं सते ॥ १२७ ॥ बहवोऽपि यदा पुत्रा विधिमेकः समाचरेत् ॥ नवश्राद्धं सपिण्डत्वं श्राद्धान्य
न्यानि षोडश ॥ १२८ ॥ एकेनैव तु कार्य्याणि अविभक्तधनेष्वपि ॥ अन्त्येष्टिं कुरुते ह्येको मुनिभिः समुदाहृतम् ॥ १२९ ॥ विभक्तैश्च पृथक्
कार्य्या क्रिया सांवत्सरादिका ॥ एकैकेन च कर्त्तव्या पुत्रेण च स्वयंस्वयम् ॥ १३० ॥ यस्यैतानि न दत्तानि प्रेतश्राद्धानि षोडश ॥ पिशाचत्वं
स्थिरं तस्य कृतैः श्राद्धशतैरपि ॥ १३१ ॥ भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ॥ सपिण्डीकरणं कुर्य्यात् पुत्रहीने खगेश्वर ॥ १३२ ॥
सर्वेषां पुत्रहीनानां पत्नी कुर्य्यात् सपिण्डनम् ॥ ऋत्विजं कारयेद्वाथ पुरोहितमथापि वा ॥१३३॥ मृते पितर्य्यब्दमध्ये ह्युपरागो यदा भवेत् ॥ [3]पार्व्व
णं न सुतैः कार्य्यं श्राद्धं नान्दीमुखं न च ॥ १३४ ॥ तीर्थश्राद्धं गयाश्राद्धं श्राद्धमन्यच्च पैतृकम् ॥ अब्दमध्ये न कुर्व्वीत महागुरुविपत्तिषु॥१३५॥
यमके च गजच्छायामन्वादिषु युगादिषु ॥ पितृपिण्डो न दातव्यः सपिण्डीकरणं विना ॥ १३६ ॥ यज्ञपुरुषस्य यद्दानं देवादीनाञ्च यत् तथा ॥
अपूर्णेऽप्यब्दमध्येपि कर्त्तव्यमिति के च न ॥ १३७ ॥ पितृभ्योपि हि यद्दत्तमर्घपिण्डविवर्जितम् ॥ कर्त्तव्यं तच्च वै सर्व्वमेष एव विधिः स्मृतः ॥
॥ १३८ ॥ देवानां पितरो देवा पितृणामृषयस्तथा ॥ ऋषीणां पितरो देवाः पिता जयति तेन वै ॥ १३९ ॥ पितृदेवमनुष्याणां यज्ञनाथो
विभुर्भवेत् ॥ यज्ञनाथस्य यद्दत्तं तद्दत्तं सर्व्वदेहिनाम् ॥ १४० ॥ मृते पितर्य्यब्दमध्ये यः श्राद्धं कारयेत् सुतः ॥ सप्तजन्मकृता धर्म्मात् हीयते नात्र
संशयः ॥ १४१ ॥ प्रेतीभूतास्तु पितरो लुप्तपिण्डोदकक्रियाः ॥ भ्रमन्ति वायुना सर्व्वे क्षुत्तृड्भ्यां परिपीडिताः ॥ १४२ ॥ पितरि प्रेततापन्ने

१ पिता कुर्य्या० वा० । २ श्वश्वादिति० पा० । ३ पार्वणं तु सुतैः का० पा० ।

लुप्यते पैतृकी क्रिया ॥ अथ मातुर्विपत्तिः स्यात् पितृकार्य्ये न लुप्यते ॥ १४३ ॥ मृता माता पिता तिष्ठेज्जीवन्ती च पितामही ॥ सपिण्डनन्तु कर्त्तव्यं पितामह्या सहैव तु ॥ १४४ ॥ सत्यंसत्यं पुनः सत्यं श्रूयतां वचनं मम ॥ न पिण्डो मिलितो येषां मृतानान्तु नृणां भुवि ॥ १४५ ॥ उपतिष्ठेन्न वै तेषां पुत्रैर्दत्तमनेकधा ॥ हन्तकारस्तदुद्देशे श्राद्धं नैव जलाञ्जलिः ॥ १४६ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे और्ध्वदेहिकादिनिरूपणं नाम चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥ ॥ तार्क्ष्य उवाच ॥ अपरं मम सन्देहं कथयस्व जनार्दन ॥ पुरुषस्य च कस्यापि माता पञ्चत्वमागता ॥ १ ॥ पितामही जीवति च तथा च प्रपितामही ॥ वृद्धप्रपितामही तद्वन्मातृसक्तः पिता तथा ॥ २ ॥ प्रमातामहश्च तथा वृद्धप्रमातामहस्तथा ॥ केन सा मेलयते माता एतत् कथय मे प्रभो ॥ ३ ॥ श्रीकृष्ण उवाच ॥ पुनरुक्तं प्रवक्ष्यामि सपिण्डीकरणं खग ॥ उमा लक्ष्मीश्च सावित्रीत्येताभिर्मेलयेद्ध्रुवम् ॥ ४ ॥ त्रयः पिण्डभुजो ज्ञेयास्त्यजाकाश्च त्रयः स्मृताः ॥ त्रयः पिण्डानुलेपाश्च दशमः पंक्तिसंन्निधः ॥ ५ ॥ इत्येते पुरुषाः ख्याताः पितृमातृकुलेषु च ॥ तारयेद्यजमानस्तु दश पूर्व्वान् दशावरान् ॥ ॥ ६ ॥ सपिण्डः स भवेदादौ सपिण्डीकरणे कृते ॥ अन्त्यस्तु त्याजको ज्ञेयो यो वृद्धप्रपितामहः ॥ ७ ॥ अन्तिमस्त्याजको ज्ञेयो लेपकः प्रथमो भवेत् ॥ लेपकस्त्वंतिमो यस्तु स भवेत् पंक्तिसन्निधः ॥ ८ ॥ यजमानो भवेदेको दश पूर्व्वे दशावरे ॥ इत्येते पितरो ज्ञेया एकविंशति संख्यकाः ॥ ९ ॥ विधिना कुरुते यस्तु संसारे श्राद्धमुत्तमम् ॥ जायतेऽत्र न सन्देहः शृणु तस्यापि यत् फलम् ॥ १० ॥ पिता ददाति पुत्रान् वै विच्छिन्नसन्ततिः खग ॥ होमदाता भवेत्सोपि यस्तस्य प्रपितामहः ॥ ११ ॥ कृते श्राद्धे गुणा ह्येते पितॄणां तर्पणे स्मृताः॥ दद्याद्विपुलमन्नाद्यं वृद्धस्तु प्रपितामहः ॥ १२ ॥ यस्य पुंसश्च मर्त्ये वै विच्छिन्ना सन्ततिः खग ॥ स वसेन्नरके घोरे पङ्के मग्नः करी यथा ॥ १३ ॥ योन्यन्तरेषु जायेत यत्र वृक्षसरीसृपाः ॥ न सन्ततिं विना सोऽत्र मुच्यते नरकाद्ध्रुवम् ॥ १४ ॥ आचार्य्यस्तस्य शिष्यो वा यो दूरेऽपि हि गोत्रजः ॥ नारायणबलिं कुर्य्यात् तस्योद्देशेन भक्तितः॥ १५ ॥ विशुद्धः सर्व्वपापेभ्यो मुक्तः स नरकाद्ध्रुवम् ॥ निवसेन्नाकलोके च नात्र कार्य्या विचारणा ॥ १६ ॥ आदौ कृत्वा धनिष्ठाश्च एतन्नक्षत्रपञ्चकम् ॥ रेवत्यन्तं सदा दूष्यमशुभं सर्व्वदा भवेत् ॥ १७ ॥ दाह ( बलि ) स्तत्र न कर्त्तव्यो विप्रादिसर्व्वजातिषु ॥ दीयते न जलं तत्र अशुभं जायते ध्रुवम् ॥ लोकयात्रा न कर्त्तव्या दुःखार्त्तः स्वजनो यदि ॥ १८ ॥ पञ्चकानन्तरं तस्य कर्त्तव्यं सर्व्वमन्यथा ॥ पुत्राणां गोत्रिणां

१ पितामहप्रपितामहौ वृद्धश्च प्रपितामहः० पा० ।

तस्य सन्तापोऽप्युपजायते ॥१९॥ गृहे हानिर्भवेत्तस्य ऋक्षेष्वेषु मृतश्च यः ॥ अथवा ऋक्षमध्येऽपि दाहस्तस्य विधीयते ॥२०॥ क्रियते मानुषाणान्तु सद्य आहुतिकारणात् ॥ सद्याहुतिकरं पुण्यं तीर्थे तद्दाह उत्तमः ॥ २१ ॥ विप्रैर्नियमतः कार्य्यः समन्त्रो विधिपूर्व्वकः ॥ शवस्य च समीपे तु क्षिप्यंते पुत्तलास्ततः ॥२२॥ दर्भमयाश्च चत्वारो विप्रा मन्त्राभिमन्त्रिताः ॥ततो दाहः प्रकर्त्तव्यः तैश्च पुत्तलकैः सह ॥२३॥ सूतकान्ते ततः पुत्रः कुर्य्याच्छान्तिकमुत्तमम् ॥२४॥ पञ्चकेषु मृतो योऽसौ न गतिं लभते नरः॥ तिलान् गाश्च सुवर्णं च तमुद्दिश्य घृतं ददेत् ॥२५॥ विप्राणां दीयते दानं सर्वोपद्रवनाशनम् ॥ सूतकान्ते च सत्पुत्रैः स प्रेतो लभते गतिम् ॥२६॥ भाजनोपानहौ च्छत्रं हेममुद्राच वाससी ॥ दक्षिणा दीयते विप्र सर्व्वपातकमोचनी॥२७॥ बालवृद्धातुराणाञ्च मृतानां पञ्चकेषु हि ॥ विधानं यो न कुर्व्वीत विघ्नस्तस्य प्रजायते ॥ २८ ॥ अष्टादशैव वस्तूनि प्रेतश्राद्धे विवर्जयेत् ॥ आशिषो द्विगुणान् दर्भान् प्रणवान् नैकपिण्डताम् ॥२९॥ अग्नौकरणमुच्छिष्टं श्राद्धं वै वैश्वदैविकम् ॥ विकिरं च स्वधाकारं पितृशब्दं न चोच्चरेत् ॥३०॥ अनुशब्दं न कुर्व्वीत नावाहनमथोल्मुकम् ॥ आसीमान्तं न कुर्व्वीत प्रदक्षिणाविसर्जनम् ॥३१॥ न कुर्य्यात् तिलहोमञ्च द्विजः पूर्णाहुतिं तथा ॥ न कुर्य्याद्वैश्वदेवं चेत्कर्त्ता गच्छत्यधोगतिम् ॥ ३२ ॥ मलिनश्राद्धसंज्ञानं पूर्व्वषोडशकं तथा ॥ स्थाने द्वारे चार्द्धमार्गे चितायां शवहस्तके ॥ ३३ ॥ श्मशानवासिभूतेभ्यः पञ्चमं प्रातिवेश्यकम् ॥ षष्ठं सञ्चयने प्रोक्तं दश पिण्डा दशाहिकाः ॥ श्राद्धषोडषकञ्चैतत् प्रथमं परिकीर्त्तितम ॥ ३४॥ अन्यच्च षोडशं मध्ये द्वितीयं तार्क्ष्य मे शृणु ॥ कर्त्तव्यानीह विधिना श्राद्धान्येकादशैव तु ॥ ३५ ॥ ब्रह्मविष्णुशिवादीञ्च तथान्यच्छ्राद्धपञ्चकम ॥ एवं षोडशकं प्राहुरेतत् तत्त्वविदो जनाः ॥ ३६ ॥ द्वादश प्रतिमास्यानि श्राद्धमेकादशे तथा ॥ त्रिपक्षसम्भवञ्चैव द्वे रिक्ते खग षोडश ॥ ३७ ॥ आद्यं शवविशुद्ध्यर्थं कृत्वान्यच्च त्रिषोडशम् ॥ पितृपंक्तिविशुद्ध्यर्थं शतार्द्धेन तु योजयेत ॥ ३८ ॥ शतार्द्धेन विहीनो यो मिलितः पंक्तिभाङ्न हि ॥ चत्वारिंशत् तथैवाष्टश्राद्धं प्रेतत्वनाशनम्॥३९॥सकृदूनशतार्द्धेन सम्भवेत् पंक्तिसन्निधः॥मेलनीयः शतार्द्धेन सन्धिः श्राद्धेन तत्त्वतः ॥ ४० ॥ ( अथ शवविधिः ) ॥ शवस्य शिबिकायां करचरणबन्धनं तत्र कर्त्तव्यम् ॥ एवं चेन्न विधानं विधीयते तत्पिशाचपरिभवनम् ॥ ४१ ॥ संजायते रजन्याञ्च शवनिर्गमने राष्ट्रं भयशून्यम्॥शवं न मुञ्चेत मुच्येत चेत् दुःस्पर्शाद्दुर्गतिर्भवेत् ॥४२॥ग्राममध्ये स्थिते प्रेते श्रुते भुंक्ते यदृच्छया ॥ तदन्नं मांसवज्ज्ञेयं

१ सद्य आहुतिदा पुण्यं० पा० । २ यूनो वृद्धस्य बालस्य० पा० ३ नकार्यो वैश्वदेवश्च० पा० । ४ न कुर्याद्वैश्वदेवान्ते कर्ता० पा० । ५ एकादशाहतः पूर्वं श्राद्धं मलिनसंज्ञकम् ॥ स्थाने चार्धपथेतीते चितायां० पा० । मध्य षो० पा० । ६ शिविकायाः करच्छेदेनाहिहितकर० पा० । शिबिकयाकर० पा० ।

तत्तोयं रुधिरोपमम्॥४१॥ताम्बूलं दन्तकाष्ठञ्च भोजनं ऋतुसेवनम् ॥ ग्राममध्ये स्थिते प्रेते वर्ज्जयेत् पिण्डपातनम् ॥४२॥ स्नानं दानं जपो होमस्त
र्पणं सुरपूजनम् ॥ ग्राममध्ये स्थिते प्रेते शुद्धयर्थं ज्ञातिधर्म्मतः ॥ ४३ ॥ ज्ञातिसम्बन्धिनामेवं व्यवहारः खगेश्वर ॥ विलुप्य ज्ञातिधर्म्मञ्च प्रेतपापेन
लिप्यते ॥४४॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्विती० ध० प्रेतकल्पे श्रीकृष्णगरुडसंवादे सपिंडनशवविध्योर्निरूपणं नाम पञ्चत्रिंशोऽध्यायः
॥३५॥ तार्क्ष्यउवाच ॥ कस्मादनशनं पुण्यमक्षय्यगतिदायकम् ॥ स्वगृहन्तु परित्यज्य तीर्थे वै म्रियते यदि ॥१॥ अप्राप्य तीर्थं म्रियते गृहे वा मृत्यु
मागतः॥ भूत्वा कुटीचरो यस्तु स कां गतिमवाप्नुयात् ॥२॥ संन्यासं कुरुते यस्तु तीर्थे वापि गृहेऽपि वा ॥ कथं तस्य भ्रकस्व्यमप्राप्तनिधनेऽपि वा
॥३॥ नियमे चेत् कृते देव चित्तभङ्गो हि जायते ॥ केन तस्य भवेत् सिद्धिः कृतेनाप्यकृतेन वा॥४॥ श्रीकृष्ण उवाच ॥ कृत्वा निरशनं यो वै मृत्यु
माप्नोति कोऽपि चेत् ॥ मानुषीं तनुमुत्सृज्य मम तुल्यो विराजते ॥ ५ ॥ यावन्त्यहानि जीवेत व्रते निरशने कृते ॥ ऋतुभिस्तानि तुल्यानि सम
ग्रवरदक्षिणैः ॥ ६ ॥ तीर्थे गृहे वा संन्यासं नीत्वा चेन्म्रियते यदि ॥ प्रत्यहं लभते सोऽपि पूर्व्वोक्तं द्विगुणं फलम् ॥ ७ ॥ महारोगोपपत्तौ
च गृहीतेऽनशने कृते ॥ पुनर्न जायते रोगी देववद्धि विराजते ॥ ८ ॥ य आतुरः सन् सन्न्यासं गृह्णाति यदि मानवः ॥ पुनर्न
जायते भूमौ संसारे दुःखसागरे ॥ ९ ॥ अहन्यहनि दातव्यं ब्राह्मणानाञ्च भोजनम् ॥ तिलपात्रं यथाशक्ति दीपदानं सुरार्चनम् ॥ १० ॥
एवंवृत्तस्य दह्यन्ते पापान्युच्चावचानि च ॥ मृतो मुक्तिमवाप्नोति यथा सर्व्वे महर्षयः ॥ ११ ॥ तस्मादनशनं नृणां वैकुण्ठपददायकम् ॥
तस्मात् स्वस्थे चोत्तरे वा साधयेन्मोक्षलक्षणम् ॥ १२ ॥ पुत्त्रद्रव्यादि सन्त्यज्य तीर्थं व्रजति यो नरः ॥ ब्रह्माद्या देवतास्तस्य भवेयुस्तुष्टिप्रदाः
॥ १३ ॥ यस्तीर्थसम्मुखो भूत्वा व्रते ह्यनशने कृते ॥ चेन्म्रियेतान्तरालेऽपि ऋषीणां मण्डले वसेत् ॥ १४ ॥ व्रतं निरशनं कृत्वा स्वगृहेऽपि मृतो
यदि ॥ स्वकुलानि परित्यज्य एकाकी विचरेद्दिवि ॥ १५ ॥ अन्नञ्चैव तथा तोयं परित्यज्य नरो यदि ॥ पीतमत्पादतोयश्च न पुनर्जायते क्षितौ ॥१६॥
कृत्यासीनंतत्तीर्थगतं रक्षन्ति वनदेवताः ॥ यमदूता विशेषेण न याम्यास्तस्य पार्श्वगाः ॥ १७ ॥ तीर्थसेवी नरो यस्तु सर्व्वकिल्बिषवर्ज्जितः ॥ तत्र
म्रियेत दह्येत तत्तीर्थफलभाग्भवेत् ॥१८॥ सेवितेऽपि सदा तीर्थे ह्यन्यत्र म्रियते यदि ॥ शुभे देशे कुले धीमान् स भवेद्वेदविद्द्विजः ॥ १९ ॥ कृत्वा
निरशनं तार्क्ष्य पुनर्ज्जीवति मानवः ॥ ब्राह्मणान् स समाहूय सर्व्वस्वं यत् परित्यजेत् ॥ २० ॥ चान्द्रायणं चरेत् कृत्स्नमनुज्ञातश्च तैर्द्विजैः ॥
अनृतं न वदेत पश्चाद्धर्म्ममेव समाचरेत् ॥ २१ ॥ तीर्थे गत्वा च यः कोऽपि पुनरायाति वै गृहम् ॥ अनुज्ञातः स वै विप्रैः प्रायश्चित्तमथाचरेत् ॥२२॥

दत्त्वा वा स्वर्णदानानि गो-मही-गज-वाजिनः ॥ तीर्थं यदि लभेद् यस्तु मृत्युकाले स भाग्यवान् ॥ २३ ॥ गृहात् प्रचलितस्तीर्थं मरणे समुपस्थिते ॥
पदेपदे तु गोदानं यदि हिंसा न जायते ॥ २४ ॥ गृहे तु यत् कृतं पापं तीर्थस्नानेन शुध्यति ॥ कुरुते तत्र पापञ्चेद्वज्रलेपसमं हि वद ॥ २५ ॥
क्लिश्यते स नात्र सन्देहो यावच्चन्द्रार्कतारकम् ॥ तत्र दत्तानि दानानि जायन्ते चाक्षयाणि वै ॥ २६ ॥ आतुरे सति दातव्यं निर्द्धनैरपि मानवैः ॥
गावस्तिला हिरण्यञ्च सप्तधान्यं विशेषतः ॥ २७ ॥ दानवन्तं नरं दृष्ट्वा हृष्टाः सर्व्वे दिवौकसः ॥ ऋषिभिः सह धर्म्मेण चित्रगुप्तेन सर्व्वदा ॥ २८ ॥
आत्मायत्तं धनं यावत् तावद्विप्रे समर्पयेत् ॥ पराधीनं मृते सर्व्वं कृपया कः प्रदास्यति ॥ २९ ॥ पित्रुद्देशेन यः पुत्रैर्धनं विप्रकरेऽर्पितम् ॥
आत्मानं सधनं तेन चक्रे पुत्रप्रपौत्रकैः ॥ ३० ॥ पितुः शतगुणं दत्तं सहस्रं मातुरुच्यते ॥ भगिन्या शतसाहस्रं सोदर्य्ये दत्तमक्षयम् ॥ ३१ ॥
यदि लोभान्न यच्छन्ति प्रमादान्मोहतोऽपि वा ॥ मृताः शोचन्ति ते सर्व्वे कदर्य्याः पापिनस्त्विति ॥ ३२ ॥ अतिक्लेशेन लब्धस्य प्रकृत्या चञ्चल
स्य च ॥ गतिरेकैव वित्तस्य दानमन्या विपत्तयः ॥ ३३ ॥ मृत्युः शरीरगोप्तारं वसुरक्षं वसुन्धरा ॥ दुश्चारिणीव हसति स्वपतिं पुत्रवत्सलम् ॥ ३४॥
उदारो धार्म्मिकः सौम्यः प्राप्यापि विपुलं धनम् ॥ तृणवन्मन्यते तार्क्ष्य आत्मानं वित्तमप्यथ ॥ ३५ ॥ न चैवोपद्रवास्तस्य मोहजालो न चैव
हि ॥ मृत्युकाले न च भयं यमदूतसमुद्भवम् ॥ ३६ ॥ समाः सहस्राणि च सप्त वै जले दशैकमग्नौ पतने च षोडश ॥ महाहवे षष्टिरशीतिगोग्रहे
अनाशके काश्यप चाक्षया गतिः ॥ ३७ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादेऽनशनमृत
गतिनिरूपणं नाम षट्त्रिंशोऽध्यायः ॥ ३६ ॥ तार्क्ष्य उवाच ॥ उदकुम्भप्रदानं मे कथयस्व यथातथम् ॥ विधिना केन कर्त्तव्या कृतिरेषा
जनार्दन ॥ १ ॥ किंलक्षणाः केन पूर्णाः कस्य देया जनार्दन ॥ कस्मिन् काले प्रदातव्या प्रेततृप्तिप्रसाधकाः ॥ २ ॥ श्रीकृष्ण उवाच ॥
सत्यं पुनः प्रवक्ष्यामि उदकुम्भप्रदानकम् ॥ प्रेतोद्देशेन दातव्या अन्नपानीयसंयुताः ॥ विशेषेण महापक्षिन् प्रेतमुक्तिप्रदायकाः ॥ ३ ॥
द्वादशाहे च षण्मासे त्रिपक्षे वापि वत्सरे ॥ उदकुम्भाः प्रदातव्या मार्गे तस्य सुखाय वै ॥ ४ ॥ अहन्यहनि दातव्या उदकु
म्भास्तिलैर्युताः ॥ सुलिप्ते भूमिभागे तु पक्वान्नजलपूरिताः ॥ ५ ॥ प्रेतस्य तत्र दातव्यं भाजनञ्च यदृच्छया ॥ सुप्रीतस्तेन दत्तेन
प्रेतो याम्यैः स गच्छति ॥ ६ ॥ द्वादशाहे विशेषेण उदकुम्भान् प्रदापयेत् ॥ विधिना तत्र सङ्कल्प्य घटान् द्वादशसंख्यकान् ॥ ७ ॥
एकापि वर्द्धनी तत्र पक्वान्नफलपूरिता ॥ विष्णुमुद्दिश्य दातव्या संकल्प्य ब्राह्मणे शुभे ॥ ८ ॥ एको वै धर्म्मराजाय तेन तुष्टेन मुक्तिभाक् ॥

चित्तयुताय चैकं तु गतस्तत्र सुखी भवेत् ॥ ९ ॥ षोडशाद्याः प्रदातव्या माषान्नजलपूरिताः ॥ १० ॥ उत्क्रान्तिश्राद्धमारभ्य श्राद्धषोडशकस्य तु ॥ षोडशब्राह्मणानान्तु एकैकं विनिवेदयेत् ॥ ११ ॥ एकादशाहात्प्रभृति देयो नित्यं दृढाह्वयः ॥ पक्वान्नजलपूर्णो हि यावत् संवत्सरं दिनम् ॥ १२ ॥ जलपात्राणि वृद्धानि दत्तानिघटकानि च ॥ एका वै वर्द्धनी तत्र तस्यां पात्रन्तु वंशजम् ॥ १३ ॥ वस्त्रेणाच्छादयेत् तान्तु पूजयित्वा सुगन्धिभिः ॥ ब्राह्मणेभ्यो विशेषेण जलपूर्णानि दापयेत् ॥ १४ ॥ अहन्यहनि सङ्कल्प्य विधिपूर्व्वं खगेश्वर ॥ ब्राह्मणाय कुलीनाय वेदवृत्तयुताय च ॥ १५ ॥ विद्यावृत्तवते देयं मूर्खे तन्न कदाचन ॥ समर्थो वेदवृत्ताढ्यस्तारणे तरणेऽपि च ॥ १६ ॥ इति श्रीगारुडे महापुराणे द्वितीयांशे प्रेतकल्पे धर्मकाण्डे सोदकुम्भश्राद्धनिरूपणं नाम सप्तत्रिंशोऽध्यायः ॥३७॥ तार्क्ष्य उवाच ॥ दानतीर्थार्थितं मोक्षं स्वर्गञ्च वद मे प्रभो ॥ केन मोक्षमवाप्नोति केन स्वर्गे वसेच्चिरम्॥१॥केन[1] गच्छति तेजस्तु स्वर्लोकात सत्यलोकतः॥ मानुष्यं केन लभते नरकेषु निमज्जति॥२॥एतन्मे वद निश्चित्य भक्तानां मोक्षदायक ॥ ब्रूहि कस्मिन् मृते स्वर्गे पुनर्जन्म न विद्यते ॥३॥ श्रीविष्णुरुवाच ॥ मानुष्यं भारते वर्षे त्रयोदशसु जातिषु ॥४॥ तत् प्राप्य म्रियते क्षेत्रे पुनर्जन्म न विद्यते ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ॥५॥ पुरी द्वारवती ज्ञेया सप्तैता मोक्षदायिकाः ॥ सन्न्यस्तामिति यो ब्रुयात् प्राणैः कण्ठगतैरपि॥६॥ मृतो विष्णुपुरं याति न पुनर्जायते क्षितौ ॥ सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् ॥ ७ ॥ बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ कृष्णकृष्णेति कृष्णेति यो मां स्मरति नित्यशः ॥ ८ ॥ जलं भित्त्वा यथा पद्मं नरकादुद्धराम्यहम् ॥ शालग्रामशिला यत्र यत्र द्वारवती शिला ॥९॥ उभयोः सङ्गमो यत्र मुक्तिस्तत्र न संशयः ॥ शालग्रामशिला यत्र पापदोषक्षयावहा ॥ १० ॥ तत्सान्निध्यानमरणान्मुक्तिर्जन्तोः सुनिश्चिता ॥ रोपणात् पालनात् सेकाद्ध्यानस्पर्शनकीर्त्तनात् ॥ तुलसी दहते पापं नृणां जन्मार्जितं खग ॥ ११ ॥ ज्ञानह्रदे सत्यजले रागद्वेषमलापहे ॥ यः स्नातो मानसे तीर्थे न स लिप्येत पातकैः ॥ १२ ॥ न काष्ठे विद्यते देवो न शिलायां कदाचन ॥ भावे हि विद्यते देवस्तस्माद्भावं समाचरेत् ॥ १३ ॥ प्रातःप्रातः प्रपश्यन्ति नर्म्मदां मत्स्यघातिनः ॥ न ते शिवपुरीं यांति चित्तवृत्तिर्गरीयसी ॥ १४ ॥ यादृक् चित्तप्रतीतिः स्यात् तादृक कर्म्मफलं नृणाम् ॥ परलोकगतिस्तादृक सूचीसूत्रविचारवत ॥ १५ ॥ ब्राह्मणार्थे गवार्थे च स्त्रीणां बालवधेषु च ॥ प्राणत्यागपरो यस्तु स वै मोक्षमवाप्नुयात ॥ १६ ॥ अनाशके मृतौ यस्तु स वै मोक्षमवाप्नुयात ॥ अनाशके मृतो यस्तु स मुक्तः सर्व्वबन्धनैः ॥ १७॥ दत्त्वा दानानि विप्रेभ्यस्ततो मोक्षमवा

[1] केनासौच्यवते जन्तुः० पा० ।

मुयात् ॥ एते वै मोक्षमार्गाश्च स्वर्गमार्गास्तथैव च ॥ १८ ॥ गोग्रहे देशविध्वंसे मरणं रणतीर्थयोः ॥ उत्तमाधममध्यस्य बाध्यमानस्य देहिनः ॥
आत्मानं तत्र सन्त्यज्य स्वर्गवासं लभेच्चिरम् ॥ १९ ॥ जीवितं मरणञ्चैव द्वयं शिक्षेत पण्डितः ॥ जीवितं दानभोगाभ्यां मरणं रणतीर्थयोः ॥ २० ॥
हरिक्षेत्रे कुरुक्षेत्रे भृगुक्षेत्रे तथैव च ॥ प्रभासे श्रीस्थले चैव अर्ब्बुदे च त्रिपुष्करे ॥ २१ ॥ भूतेश्वरे मृतो यस्तु स्वर्गे वसति मानवः ॥ ब्रह्मणो
दिवसं यावत् ततः पतति भूतले ॥ २२ ॥ वर्षवृत्तिन्तु यो दद्याद्ब्राह्मणे दोषवर्ज्जिते ॥ सर्व्वं कुलं स समुद्धृत्य स्वर्गलोके महीयते ॥२३॥ कन्यां विवा
हयेद्यस्तु ब्राह्मणं वेदपारगम् ॥ इन्द्रलोके वसेत् सोऽपि स्वकुलैः परिवेष्टितः ॥ २४ ॥ महादानानि दत्त्वा च नरस्तत्फलमाप्नुयात् ॥ २५ ॥ वापी
कूपतडागानामारामसुरसद्मनाम् ॥ जीर्णोद्धारं प्रकुर्व्वाणः पूर्व्वकर्त्तुः फलं लभेत् ॥ जीर्णोद्धारेण वा तेषां तत् पुण्यं द्विगुणं भवेत् ॥ २६ ॥ शीतवा
तातपहरमपि पर्णकुटीरकम् ॥ कृत्वा विप्राय विदुषे प्रददाति कुटुम्बिने ॥ २७ ॥ तिस्रः कोट्योऽर्द्धकोटी च नरः स्वर्गे महीयते ॥ २८ ॥ या स्त्री
सवर्णा संशुद्धा मृतं पतिमनुव्रजेत ॥ सा मृता स्वर्गमाप्नोति वर्षाणां रोमसंख्यया ॥ २९ ॥ पुत्रपौत्रादिकं त्यक्त्वा स्वपतिं यानुगच्छति ॥ स्वर्गं
लभेतां तौ चोभौ दिव्यस्त्रीभिरलंकृतौ ॥ ३० ॥ कृत्वा पापान्यनेकानि भर्तृद्रोहमतिः सदा ॥ प्रक्षालयति सर्व्वाणि या स्वं पतिमनुव्रजेत् ॥ ३१ ॥
महापापसमाचारो भर्त्ता चेद्दुष्कृती भवेत् ॥ तस्याप्यनुव्रता नारी नाशयेत् सर्व्वकिल्बिषम् ॥ ३२ ॥ ग्रासमात्रं नियमतो नित्यदानं करोति यः ॥
चतुश्चामरसंयुक्तविमानेनाधिगच्छति ॥ ३३ ॥ यत् कृतं हि मनुष्येण पापमामरणान्तिकम् ॥ तत् सर्व्वं नाशमायाति वर्षवृत्तिप्रदानतः ॥ ३४ ॥
भूतं भव्यं भविष्यञ्च पापं जन्मत्रयार्ज्जितम् ॥ प्रक्षालयति तत् सर्व्वं विप्रकन्योपनायनात् ॥ ३५ ॥ दशकूपसमा वापी दशवापीसमं सरः ॥ सरो
भिर्दशभिस्तुल्या या प्रपा निर्ज्जले वने ॥ ३६ ॥ या वापी निर्ज्जले देशे यद्दानं निर्द्धने द्विजे ॥ प्राणिनां यो दयां धत्ते स भवत्राकनायकः ॥ ३७ ॥
एवमादिभिरन्यैश्च सुकृतैः स्वर्गभाग्भवेत् ॥ स तत् सर्व्वं फलं प्राप्य प्रतिष्ठां परमां लभेत् ॥ ३८ ॥ फल्गु कार्य्यं परित्यज्य सततं धर्म्मवान्
भवेत् ॥ दानं दमो दया चेति सारमेतत् त्रयं भुवि ॥ ३९ ॥ दानं साधोर्दरिद्रस्य शून्यलिंगस्य पूजनम् ॥ अनाथप्रेतसंस्कारः कोटियज्ञफलप्रदः
॥ ४० ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे उत्तमलोकगत्यागतिमोक्षमानुष्यहेतुनिरूपणं
नामाष्टात्रिंशत्तमोऽध्यायः ॥ ३८ ॥ ॥ तार्क्ष्य उवाच ॥ सूतकानां विधिं ब्रूहि दयां कृत्वा मयि प्रभो ॥ विवेकाय हि चित्तस्य मानवानां
हिताय च ॥ १ ॥ ॥ श्रीकृष्ण उवाच ॥ मृते जन्मनि पक्षीन्द्र सूतकं स्याच्चतुर्विधम् ॥ चतुर्णामपि वर्णानां सामान्येन विधीयते ॥ २ ॥

उभयत्र दशाहानि कुलस्यान्नं विवर्जयेत् ॥ दानं प्रतिग्रहो होमः स्वाध्यायश्च निवर्त्तते ॥ ३ ॥ देशं कालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम् ॥ उपप
त्तिमवस्थाञ्च ज्ञात्वा कर्म्म समाचरेत् ॥ ४ ॥ गृहावह्निप्रवेशे च देशान्तरमृतेषु च ॥ स्नानं सचेलं कर्त्तव्यं सद्यः शौचं विधीयते ॥ ५ ॥ आमगर्भा
श्च ये जीवा ये च गर्भाद्विनिःसृताः ॥ न तेषामग्निसंस्कारो नाशौचं नोदकक्रिया ॥ ६ ॥ शिल्पिनः कारवो वैद्या दासीदासास्तथैव च ॥ राजानः
श्रोत्रियाश्चैव सद्यःशौचाः प्रकीर्तिताः ॥ ७ ॥ सत्री च (व्रती) मन्त्रपूतश्च आहिताग्निर्नृपस्तथा ॥ एतेषां सूतकं नास्ति यस्य चेच्छन्ति पार्थिवाः
॥ ८ ॥ प्रसवे च सपिण्डानां न कुर्य्यात् सङ्करं द्विजः ॥ दशाहाच्छुध्यते माता अवगाह्य पिता शुचिः ॥ ९ ॥ विवाहोत्सवयज्ञेषु अन्तरा मृतसू
तके ॥ पूर्व्वसङ्कल्पितं वित्तं भोज्यं तन्मनुरब्रवीत ॥ १० ॥ सर्वेषामेवमाशौचं मातापित्रोस्तु सूतकम् ॥ सूतकं मातुरेव स्यादुपस्पृश्य पिता शुचिः ॥ ११ ॥
अन्तर्दशाह स्याताश्चेत् पुनर्मरणजन्मनी ॥ तावत् स्यादशुचिर्विप्रो यावत् तत् स्यादनिर्दशम् ॥ १२ ॥ ऊर्ध्वं तु नियमे दाने आर्त्ते विप्रे निवेदयेत् ॥
तथैव ऋषिभिः प्रोक्तं यथाकालं न दुष्यति ॥ १३ ॥ मृन्मयेन तु पात्रेण तिलैर्मिश्रजलैः सह ॥ मृत्तिकया तथान्ते च नरः स्नात्वा शुचिर्भवेत् ॥ १४ ॥
दानं पारिषदे दद्यात् सुवर्णं गोवृषं द्विजे ॥ क्षत्रियो द्विगुणं चैव वैश्यस्तु त्रिगुणं तथा ॥ १५ ॥ चतुर्गुणन्तु शूद्रेण दातव्यं ब्राह्मणे धनम् ॥ एवं ह्यनुक्र
मेणैव चातुर्वर्ण्यं विशुध्यति ॥ १६ ॥ सप्ताष्टमान्तरे शीर्णे गृह्यसंस्कारवर्जिते ॥ अहस्तु सूतकं तस्य त्वब्दानां संख्यया स्मृतम् ॥ १७ ॥ ब्राह्मणार्थे विपन्ना
ये नारीणां गोग्रहेषु च ॥ आहवेषु विपन्नानामेकरात्रमशौचकम् ॥ १८ ॥ न तेषामशुभं किञ्चिद्विप्राणां शुभकर्म्मणि ॥ अनाथप्रेतसंस्कारं ये कुर्वन्ति
नरोत्तमाः ॥ १९ ॥ न तेषामशुभं किञ्चिद्विप्रेण सहकारिणा ॥ जलावगाहनात्तेषां सद्यः शुद्धिरुदाहृता ॥ २० ॥ विनिवृत्ता यदा शूद्रा उदकान्तमुपस्थिताः ॥
तदा विप्रेण द्रष्टव्या इति वेदविदो विदुः ॥ २१ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्विती० ध० प्रेतकल्पे श्रीकृष्णगरुडसंवादे सूतककालादिनिरूपणं नामै
कोनचत्वारिंशोऽध्यायः ॥ ३९ ॥ तार्क्ष्य उवाच ॥ भगवन्ब्राह्मणाः केचिदपमृत्युवशं गताः ॥ कथं तेषां भवेन्मार्गः किं स्थानं का गतिर्भवेत् ॥ १ ॥ किञ्च
मुक्तं भवेत्तेषां विधानं वापि कीदृशम् ॥ तदहं श्रोतुमिच्छामि ब्रूहि मे मधुसूदन ॥ २ ॥ श्रीकृष्ण उवाच ॥ प्रेतीभूतद्विजातीनां सम्भूते मृत्युवैकृते ॥ तेषां
मार्गगतिस्थानं विधानं कथयाम्यहम् ॥ ३ ॥ शृणु तार्क्ष्य परं गोप्यं जाते दुर्म्मरणे सति ॥ लंघनैर्ये मृता विप्रा दंष्ट्रिभिश्चाभिघातिताः ॥ ४ ॥ कण्ठग्राह
विमग्नानां क्षीणानां तुण्डघातिनाम् ॥ विषाग्निवृषविप्रेभ्यो विषूच्या चात्मघातकाः ॥ ५ ॥ पतनोद्बन्धनजलैर्मृतानां शृणु संस्थितिम् ॥ यान्ति ते नरके
घोरे ये च म्लेच्छादिभिर्हताः ॥ ६ ॥ श्वशृगालादिसंस्पृष्टा अदग्धाः कृमिसंकुलाः ॥ उल्लंघिता मृता ये च महारोगैश्च पीडिताः ॥ ७ ॥ अभिशस्तास्तथा

१ मृते पतौ (त्यौ) वनस्थे च० पा० । २ स्रावगर्भा० पा० । ३ क्षुधितं नियमादानमार्ते० पा० ।

व्यङ्गा ये च पापान्नपोषिताः ॥ चण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युताग्निनः॥८॥दंष्ट्रिभ्यश्च पशुभ्यश्च वृक्षादिपतनान्मृताः ॥ उदक्यासूतकीशूद्रारजकीसङ्ग
दूषिताः ॥९॥ तेन पापेन नरकान्मुक्ताः प्रेतत्वभागिनः ॥ न तेषां कारयेद्दाहं सूतकं नोदकक्रियाम् ॥१०॥ न विधानं मृताद्यं च न कुर्य्यादौर्ध्वदैहिकम्॥
तेषां तार्क्ष्य प्रकुर्वीत नारायणबलिक्रियाम्॥११॥ सर्व्वलोकहितार्थाय शृणु पापभयापहाम् ॥ षण्मासं ब्राह्मणे दाहस्त्रिमासं क्षत्रिये मतः ॥ १२ ॥ सार्द्ध
मासं तु वैश्यस्य सद्यः शूद्रे विधीयते ॥ गङ्गायां यमुनायाञ्च नैमिषे पुष्करेऽथ च ॥ १३ ॥ तडागे जलपूर्णे वा ह्रदे वा विमलोदके ॥ वाप्यां कूपे गवां
गोष्ठे गृहे वा प्रतिमालये ॥ १४ ॥ कृष्णाग्रे कारयेद्विप्र बलिं नारायणाह्वयम् ॥ प्रेताय तर्पणं कार्य्यं मन्त्रैः पौराणवैदिकैः ॥ १५ ॥ सर्व्वौषध्यक्षतैर्मिश्रै
र्विष्णुमुद्दिश्य तर्पयेत् ॥ कार्य्यं पुरुषसूक्तेन मन्त्रैर्वा वैष्णवैरपि ॥ १६ ॥ दक्षिणाभिमुखो भूत्वा प्रेतं विष्णुरिति स्मरेत् ॥ अनादिनिधनो देवः शंखचक्र
गदाधरः ॥१७॥ अव्ययः पुण्डरीकाक्षः प्रेतमोक्षप्रदो भवेत् ॥ तर्पणस्यावसाने च वीतरागो विमत्सरः ॥ १८ ॥ जितेन्द्रियमना भूत्वा बुद्धिमान्कर्म्म
तत्परः ॥ दानधर्म्मरतः शान्तः प्रणम्य वाग्यतः शुचिः ॥ १९ ॥ यजमानो भवेत्तत्र शुचिर्बन्धुसमन्वितः ॥ भक्त्या तत्र प्रकुर्व्वीत श्राद्धान्येकादशैव
तु ॥ २० ॥ सर्व्वकर्म्मविपाकेन एकैकाग्रे समाहितः ॥ तोयव्रीहियवान् षष्टचा गोधूमांश्च प्रियंगुकान् ॥ २१ ॥ हविष्यान्नं शुभं मुद्रां छत्रोष्णीषे च
चेलकम् ॥ दापयेत्सर्व्वसस्यानि क्षीरक्षौद्रयुतानि च ॥ २२ ॥ वस्त्रोपानहसंयुक्तं दद्यादष्टविधं पदम् ॥ दापयेत्सर्व्वविप्रेभ्यो न कुर्य्यात्पंक्तिभेदकम् ॥
॥ २३ ॥ भूमौ स्थितेषु पिण्डेषु गन्धपुष्पाक्षतान्वितम् ॥ शंखपात्रे तथा ताम्रे तर्पणञ्च पृथक्पृथक् ॥ २४ ॥ ध्यानधारणसंयुक्तो जानुभ्यामवनिं
गतः ॥ दातव्यं सर्वविप्रेभ्यो वेदशास्त्रविधानतः ॥ २५ ॥ ऋचा वै दापयेदर्घ्यमेकोद्दिष्टे पृथक्पृथक् ॥ आपोदेवीर्मधुमतीरादिपिण्डे प्रकल्पितम् ॥ २६ ॥
उपयामगृहीतोऽसि द्वितीयेऽर्घं निवेदयेत् ॥ येनापावकचक्षुषा तृतीये च सकल्पितम् ॥ २७ ॥ ये देवासश्चतुर्थे तु समुद्रं गच्छ पञ्चमे ॥ अग्निर्ज्योति
र्न्यधा षष्ठे हिरण्यगर्भः सप्तमे ॥ २८ ॥ यमाय त्वाष्टमे ज्ञेयं यज्जाग्रन्नवमे तथा ॥ दशमे याः फलिनीति पिण्डे चैकादशे ततः ॥ २९ ॥ भद्रं कर्णेभि
रिति च कुर्य्यात्पिण्डविसर्जनम् ॥ कृत्वैकादशदैवत्यं श्राद्धं कुर्य्यात्परेऽहनि ॥ ३० ॥ विप्रानावाहयेत्पञ्च चतुर्वेदविशारदान् ॥ विद्याशीलगुणोपेतान्स्व
कीयाञ्छीलसत्तमान् ॥ अव्यङ्गान्सुप्रशस्तांश्च न तु वर्ज्यान्कदाचन ॥ ३१ ॥ विष्णुः स्वर्णमयः कार्य्यो रुद्रस्ताम्रमयस्तथा ॥ ब्रह्मा रूप्यमयस्तद्व
द्यमो लोहमयो भवेत्॥३२॥सीसकं तु भवेत्प्रेतं त्वथ वा दर्भकं तथा॥शंन्नोदेवीति मन्त्रेण गोविन्दं पश्चिमे न्यसेत्॥३३॥अग्न आयाहीति रुद्रमुत्तरत्रैव



१ पूर्णे तु तर्प० पा० । २ यज्जाग्रतेति नवमे दशमे याः फलीति च ॥ दद्याच्च विश्वतश्चक्षुः० पा० । ३ अग्न आयाहि मन्त्रेण—न्यसेत् । अग्निमीलेति मन्त्रेण० पा० ।

विन्यसेत् ॥ अग्निमीळेति मन्त्रेण पूर्वेणैव प्रजापतिम् ॥ ३४ ॥ इषेत्वोर्ज्जेति मन्त्रेण दक्षिणे स्थापयेद्यमम् ॥ मध्ये मण्डलकं कृत्वा स्थाप्यो दर्भमयो नरः ॥ ३५ ॥ ब्रह्मा विष्णुस्तथा रुद्रो यमः प्रेतश्च पञ्चमः ॥ पृथक्कुम्भे ततः स्थाप्याः पञ्चरत्नसमन्विताः ॥ ३६ ॥ वस्त्रयज्ञोपवीतानि पृथङ्मुद्रापराणि च ॥ जपं कुर्य्यात्पृथक्तत्र ब्रह्मादौ देवतासु च ॥ ३७ ॥ पञ्च श्राद्धानि कुर्वीत देवतानां यथाविधि ॥ जलधारां ततो दद्यात्पीठेपीठे पृथक्पृथक् ॥ ॥ ३८ ॥ शङ्खे वा ताम्रपात्रे वा अलाभे मृन्मयेऽपि वा ॥ तिलोदकं समादाय सर्व्वौषधिसमन्वितम् ॥ ३९ ॥ आसनोपानहौ च्छत्रं मुद्रिका च कमण्डलुः ॥ भाजनं भाजनाधारं वस्त्राण्यष्टविधं पदम् ॥ ४० ॥ ताम्रपात्रं तिलैः पूर्णं सहिरण्यं सदक्षिणम् ॥ दद्याद्ब्राह्मणमुख्याय विधियुक्तं खगेश्वर ॥ ॥ ४१ ॥ ऋग्वेदपारगे दद्याज्जातसस्यां वसुन्धराम् ॥ यजुर्वेदमये विप्रे गाञ्च दद्यात्पयस्विनीम् ॥ ४२ ॥ सामगाय शिवोद्देशात्प्रदद्यात्कलधौतकम् ॥ यमोद्देशात्तिलाँल्लोहं गतो दद्याच्च दक्षिणाम् ॥ ४३ ॥ पश्चात्पुत्तलकं कार्य्यं सर्व्वौषधिसमन्वितम् ॥ पलाशस्य च वृन्तानां विभागं शृणु काश्यप ॥ ॥ ४४ ॥ कृष्णाजिनं समास्तीर्य्य कुशैश्च पुरुषाकृतिम् ॥ शतत्रयेण षष्ट्या[1] च वृन्तैः प्रोक्तोऽस्थिसञ्चयः ॥ ४५ ॥ विन्यस्य तानि वृन्तानि अङ्गेष्वेषु पृथक्पृथक् ॥ चत्वारिंशच्छिरोदेशे ग्रीवायां दश विन्यसेत् ॥ ४६ ॥ विंशत्युरःस्थले दद्याद्विंशतिं जठरेऽपि च ॥ बाहुयुग्मे शतं दद्यात्कटिदेशे च विंशतिम् ॥४७॥ ऊरुद्वये शतञ्चापि त्रिंशज्जंघाद्वये न्यसेत् ॥ दद्याच्चतुष्टयं शिश्ने षड् दद्याद् वृषणद्वये ॥ दश पादांगुलीभागे एवमस्थीनि विन्यसेत् ॥ ४८ ॥ नारिकेलं शिरःस्थाने तुम्बं दद्याच्च तालुके ॥ पञ्चरत्नं मुखे दद्याज्जिह्वायां कदलीफलम् ॥ ४९ ॥ अन्त्रेषु नालकं दद्याद्बालकं घ्राणएव च ॥ वसायां मेदकं दद्याद्गोमूत्रेण तु मूत्रकम् ॥ ५० ॥ गन्धकं धातवो देया हरितालं मनःशिला ॥ रेतःस्थाने पारदञ्च पुरीषे पित्तलं तथा ॥ ५१ ॥ मनःशिलां तथा गात्रे तिलकल्कञ्च सन्धिषु ॥ यवपिष्टं तथा मांसे मधु वै क्षौद्रमेव च ॥ ५२ ॥ केशेषु वै वटजटात्वचि दद्यान्मृगत्वचम् ॥ कर्णयोस्तालपत्रञ्च स्तनयोश्चैव गुञ्जिकाः ॥ ५३ ॥ नासायां शतपत्रं च कमलं नाभिमण्डले ॥ वृन्ताकं वृषणद्वन्द्वे लिङ्गे स्याद्गृञ्जनं शुभम् ॥ ५४ ॥ घृतं नाभ्यां प्रदेयं स्यात्कौपीने च त्रपु स्मृतम् ॥ मौक्तिकं स्तनयोर्मूर्ध्नि कुंकुमेन विलेपनम् ॥ ५५ ॥ कर्पूरागुरुधूपैश्च शुभैर्माल्यैः सुगन्धिभिः ॥ परिधानं पट्टसूत्रं हृदये रुक्मकं न्यसेत् ॥ ५६ ॥ ऋद्धिवृद्धी भुजौ द्वौ च चक्षुषोश्च कपर्दकौ ॥ सिन्दूरं नेत्रकोणे च ताम्बूलाद्युपहारकैः ॥ ५७ ॥ सर्व्वौषधियुतं प्रेतं कृत्वा पूजा यथोदिता ॥ साग्निके ( कैश्चा ) चापि विधिना यज्ञपात्रं न्यसेत्क

१ पश्चादित्यादयः श्लोकाश्चतुर्थाध्यायेपि गताः ।

मात् ॥ ५८ ॥ शिरोमे श्रीरिति ऋचा पुनन्तु वरुणेति च ॥ प्रेतस्य पावनं कृत्वा शालिशालाशिलोदकैः ॥ ५९ ॥ विष्णुमुद्दिश्य दातव्या सुशीला
गौः पयस्विनी ॥ ६० ॥ ( तिला लोहं हिरण्यं च कार्पासं लवणं तथा ॥ सप्तधान्यं क्षितिर्गाव एकैकं पावनं स्मृतम् ॥ ६१ ॥ तिलपात्रं ततो दत्त्वा
पददानं तथैव च ॥ ) महादानानि देयानि तिलपात्रं तथेति च ॥ ततो वैतरणी देया सर्व्वाभरणभूषिता ॥ ६२ ॥ कर्त्तव्यं वैष्णवं श्राद्धं प्रेतमुक्त्यर्थ
मात्मवान् ॥ प्रेतंमोक्षं ततः कुर्य्याद्धृदि विष्णुं प्रकल्प्य च ॥ ६३ ॥ ॐ विष्णुरिति संस्मृत्य प्रेतं तन्मृत्युमेव च ॥ अग्निदाहं ततः कुर्य्यात्सूतकन्तु
दिनत्रयम् ॥ ६४ ॥ दशाँहकर्त्ता पिण्डाश्च कर्त्तव्याः प्रेतमुक्तये ॥ सर्व्वं वर्षविधिं कुर्य्यादेवं प्रेतश्च मुक्तिभाक् ॥ ६५ ॥ इति श्रीगारुडे महापुराणे
उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादेऽपमृत्यौ सुखदुःखलाभालाभनिरूपणं नाम चत्वारिंशत्तमोऽध्यायः ॥ ४० ॥
श्रीविष्णुरुवाच ॥ वृषोत्सर्गं प्रकुर्व्वीत विधिपूर्व्वं खगेश्वर ॥ कार्त्तिकादिषु मासेषु पौर्णमास्यां शुभे दिने ॥ १ ॥ विवाहोत्सर्ज्जनं श्राद्धं नान्दीमुखमुप
क्रमेत् ॥ कुर्य्याद्ध्रुवश्च संस्कारानग्निस्थापनमेव च ॥ २ ॥ वाप्यां कूपे गवां गोष्ठे स्थाप्याग्निं विधिवत्ततः ॥ विवाहविधिना सर्व्वं कुर्य्याद्ब्राह्मणवान्
नम् ॥ ३ ॥ पात्रासादनं श्रपणमुपयमनकुशादिकम् ॥ पर्य्युक्षणान्ते होमं च कुर्य्याद्वै ब्राह्मणेन तु ॥ ४ ॥ आघारावाज्यभागौ च चक्षुषी च प्रदा
पयेत् ॥ प्रथमेऽहरिति मन्त्रेण होतव्याश्च षडाहुतीः (तयः) ॥ ५ ॥ आघारावाज्यभागौ तु पायसेनाङ्गदेवताः ॥ अग्नये रुद्राय शर्वाय पशुपतये
उग्राय शिवाय ॥ भवाय महादेवायेशानाय यमाय च ॥ ६ ॥ पिष्टकेन सकृद्धोमं पूषागा इति मन्त्रतः ॥ उभयोः स्विष्टिकृद्धोमश्चरुणा पायसेन च
॥ ७ ॥ प्रथमं व्याहृतिहोमः प्रायश्चित्तं प्रजापतिः ॥ संस्रवप्राशनं कुर्य्यात्प्रणीतापरिमोक्षणम् ॥ ८ ॥ पवित्रप्रतिपत्तिश्च ब्राह्मणे दक्षिणा ततः ॥
षडंगरुद्रजाप्येन प्रेतो मोक्षमवाप्नुयात् ॥ ९ ॥ एकवर्णं वृषञ्चैव सकृद्वत्सतरीं खग ॥ स्नापयित्वा ततः कुर्य्यात्सर्व्वालङ्कारभूषितम् ॥ १० ॥ प्रतिष्ठाप्य
च तद्युग्मं प्रेतो मोक्षमवाप्नुयात् ॥ पुच्छे च तर्पणं कार्य्यमुच्छिन्ते मन्त्रपूर्व्वकम् ॥ ब्राह्मणान् भोजयेत्पश्चाद्दक्षिणाभिश्च तोषयेत् ॥ ११ ॥ ततः श्राद्धं
समुद्दिष्टमेकोद्दिष्टं यथाविधि ॥ जलमन्नं तथा देयं प्रेतोद्धरणहेतवे ॥ १२ ॥ द्वादशाहं ततः कुर्य्यान्मासेमासे पृथक्पृथक् ॥ एवं विधिः समायुक्तः
प्रेतमोक्षं करोति हि ॥ १३ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे वृषोत्सर्गनिरूपणं नाम
एकचत्वारिंशत्तमोऽध्यायः ॥ ४१ ॥ श्रीविष्णुरुवाच ॥ यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ॥ तथा पूर्व्वकृतं कर्म्म कर्त्तारमनुगच्छति ॥ १ ॥

१ शं नो देवी—पुनन्तु० पा० । २ दशाहगतपिण्डाश्च० पा० ।

आदित्यो वरुणो विष्णुर्ब्रह्मा सोमो हुताशनः ॥ शूलपाणिश्च भगवानभिनन्दति भूमिदम् ॥ २ ॥ नास्ति भूमिसमं दानं नास्ति भूमिसमो निधिः ॥
नास्ति सत्यसमो धर्म्मो नानृतात्पातकं परम् ॥ ३ ॥ अग्नेरपत्यं प्रथमं सुवर्णं भूर्वैष्णवी सूर्य्यसुताश्च गावः॥ लोकत्रयं तेन भवेत्प्रदत्तं यः काञ्चनं गां च
महीं च दद्यात्॥४॥ त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती ॥ नरकादुद्धरन्त्येते जपपूजनहोमतः ॥५॥ कृत्वा बहूनि पापानि रौद्राणि विपुलानि
च ॥ अपि गोचर्म्ममात्रेण भूमिदानेन शुध्यति ॥ ६ ॥ हरन्तमपि लोभेन निरुध्यैनं निवारयेत् ॥ स याति नरके घोरे यस्तं न परिरक्षति ॥ ७ ॥
अकर्त्तव्यं न कर्त्तव्यं प्राणैः कण्ठगतैरपि ॥ कर्त्तव्यमेव कर्त्तव्यमिति धर्म्मविदो विदुः ॥ ८ ॥ आकरप्रवर्तने पापं गोसहस्रवधैस्समम् ॥ वृत्तिच्छेदे
तथा वृत्तेः करणं लक्षधेनुकम् ॥ ९ ॥ वरमेकाप्यपहृता न तु दत्तं गवां शतम् ॥ एकां हृत्वा शतं दत्त्वा न तेन समता भवेत् ॥१०॥ स्वयमेव तु यो
दत्त्वा स्वयमेव प्रबाधते ॥ स पापी नरकं याति यावदाभूतसंप्लवम् ॥ ११ ॥ न चाश्वमेधेन तथा विधिवद्दक्षिणावता ॥ अवृत्तिकर्शिते दीने ब्राह्मणे
रक्षिते यथा ॥१२॥ न तद्भवति वेदेषु यज्ञे सुबहुदक्षिणे ॥ यत्पुण्यं दुर्बले त्रस्ते ब्राह्मणे परिरक्षिते ॥१३॥ ब्रह्मस्वैश्वसुपुष्टानि वाहनानि बलानि च ॥
युद्धकाले विशीर्य्यन्ते सैकताः सेतवो यथा ॥ १४ ॥ स्वदत्तां परदत्तां वा यो हरेच्च वसुन्धराम् ॥ षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः ॥ १५ ॥
ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम् ॥ तदेव चौर्य्यरूपेण दहत्याचन्द्रतारकम् ॥ १६ ॥ लोहचूर्णाश्मचूर्णानि कदाचिज्जरयेत्पुमान् ॥ ब्रह्मस्वं
त्रिषु लोकेषु कः पुमाञ्जरयिष्यति ॥ १७ ॥ देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ॥ कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥ १८ ॥ ब्राह्मणाति
क्रमो नास्ति विप्रे विद्याविवर्जिते ॥ ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते ॥ १९ ॥ संक्रान्तौ यानि दानानि हव्यकव्यानि यानि च ॥ सप्तक
ल्पक्षयं यावद्ददात्यर्कः पुनःपुनः ॥ २० ॥ प्रतिग्रहाध्यापनयाजनेषु प्रतिग्रहं श्रेष्ठतमं वदन्ति ॥ प्रतिग्रहाच्छुध्यति जाप्यहोमं न याजनं कर्म्म पुन
न्ति वेदाः ॥ २१ ॥ सदा जापी सदा होमी परपाकविवर्जितः ॥ रत्नपूर्णामपि महीं प्रतिगृह्णन्न लिप्यते ॥२२॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे
द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे भूदानादिनिरूपणं नाम द्विचत्वारिंशत्तमोऽध्यायः ॥४२॥ श्रीविष्णुरुवाच ॥ जलाग्निबन्धनभ्रष्टा
प्रव्रज्यानाशकच्युताः ॥ ऐन्दवाभ्यां विशुध्यन्ति दत्त्वा धेनुं तथा वृषम् ॥ १ ॥ ऊनद्वादशवर्षस्य चतुर्व्वर्षाधिकस्य च ॥ प्रायश्चित्तं चरेन्माता
पिता ह्यन्योऽपि बान्धवः ॥ २ ॥ अतो बालनरस्यापि नापराधो न पातकम् ॥ राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यते ॥ ३ ॥ रक्तस्य दर्शने
द्वे आतुरा स्त्री भवेद् यदि ॥ चतुर्थेऽह्नि पदार्दीश्च त्यक्त्वा स्नात्वा विशुध्यति ॥ ४ ॥ आतुरे स्नान उत्पन्ने दशकृत्वो ह्यनातुरः ॥ स्नात्वास्नात्वा

स्पृशेदेनं ततः शुध्येत् स आतुरः ॥९॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे शुद्धिनिरूपणं नाम त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥ श्रीविष्णुरुवाच ॥ स्वेच्छया तार्क्ष्य मरणं शृङ्गिदंष्ट्रिसरीसृपैः ॥ चाण्डालाद्यात्मघातैश्च विषाद्यैस्ताडनैस्तथा ॥ १ ॥ जलाग्निपातघातैश्च निराहारादिभिस्तथा ॥ येषामेव भवेन्मृत्युः प्रोक्तास्ते पापकर्म्मिणः ॥२॥पाषण्ड्यनाश्रमाश्चैव महापातकिनस्तथा ॥ स्त्रियश्च व्यभिचारिण्य आरूढपतितास्तथा ॥३॥ न तेषां स्यान्नवश्राद्धं न संस्कारः सपिण्डनम् ॥ श्राद्धानि षोडशोक्तानि न भवन्ति च तान्यपि ॥४॥ वेतनं यत् क्षिपेदप्सु गृह्याग्निश्च चतुष्पथे ॥ पात्राणि निर्दहेदग्नौ साग्निके पापकर्म्मणि ॥५॥ पूर्णे संवत्सरे तेषामित्थं कार्य्यं दयालुभिः ॥ एकादशीं समासाद्य शुक्लपक्षे च काश्यप ॥६॥ विष्णुं यमं च सम्पूज्य गन्धपुष्पाक्षतादिभिः ॥ दश पिण्डान् घृताक्तांश्च दर्भेषु मधुसंयुतान् ॥ ७ ॥ यज्ञोपवीती सतिलान् ध्यायन् विष्णुं यमं तथा ॥ दक्षिणाभिमुखस्तूष्णीमेकैकं निर्व्वपेत् तुतान् ॥ ८ ॥ उद्धृत्य मिश्रितान् पश्चात् तीर्थेऽम्भःसु विनिःक्षिपेत् ॥ क्षिपन् संकीर्तयेन्नाम गोत्रं च मृतकस्य च ॥९॥ पुनरप्यर्च्चयेद्विष्णुं यमं कुसुमचन्दनैः ॥ धूपदीपैः सनैवेद्यैर्भक्ष्यभोज्यसमन्वितैः ॥१०॥तस्मिन्नुपवसेदह्नि विप्रांश्चैव निमन्त्रयेत् ॥ कुलविद्यातपोयुक्तान् साधुशीलसमन्वितान् ॥ ११ ॥ नव सप्ताथवा पंच स्वसामर्थ्यानुसारतः ॥ अपरेऽहनि मध्याह्ने यमं विष्णुं तथार्च्चयेत् ॥१२॥ उदङ्मुखांस्तथा विप्रांस्तान् सम्यगुपवेशयेत् ॥ आवाहनार्घदानादौ विष्णुं यमसमन्वितम् ॥ १३ ॥ यज्ञोपवीती कुर्वीत प्रेतनाम प्रकीर्त्तयेत् ॥ प्रेतं यमं च विष्णुं च स्मरन् श्राद्धं समापयेत् ॥१४॥ अन्येभ्यश्चापि सर्वेभ्यः पिण्डदानार्थमुद्धरेत् ॥ पृथग्वा दश पिण्डांश्च पंच दद्यात् क्रमेण तु ॥ १५ ॥ प्रथमं विष्णवे दद्याद्ब्रह्मणे च शिवाय च ॥ सभृत्याय शिवायाथ प्रेतायापि च पंचमम् ॥ १६॥ नाम गोत्रं स्मरेत् तस्य विष्णुशब्दं प्रकीर्त्तयेत ॥ नमस्कारशिरस्कन्तु पंचमं पिण्डमुद्धरेत् ॥१७॥ गोभूमिपिण्डदानाद्यैः शक्त्या प्रेतं स्मरंश्च तम् ॥ तिलैस्तिलांस्तु विप्राणां दर्भयुक्तेषु पाणिषु ॥ १८ ॥ दद्यादन्नं द्विजानां च ताम्बूलं दक्षिणां तथा ॥ एवं शिष्टतमं विप्रं हिरण्येन प्रपूजयेत् ॥ १९ ॥ नाम गोत्रं स्मरन् दद्याद्विष्णुप्रीतोस्त्विति ब्रुवन् ॥ अनुव्रज्य द्विजान् पश्चात् त्यक्ताम्भो दक्षिणामुखः ॥२०॥ कीर्त्तयन्नामगोत्रे तु भुवि प्रीतोस्त्विति क्षिपेत् ॥ मित्रबन्धुजनैः सार्द्धं शेषं भुञ्जीत वाग्यतः ॥ प्रतिसंवत्सरादि स्यादेकोद्दिष्टविधानतः ॥२१॥ एवं कृते गमिष्यंति स्वर्लोकं पापकर्म्मिणः ॥ सपिण्डीकरणादौ तु कृते चैवाप्नुवन्ति ते ॥२२॥ अथ कश्चित् प्रमादेन म्रियते ह्युदकादिभिः ॥ संस्कारप्रमुखस्तस्य सर्व्वं कुर्य्याद्यथाविधि ॥ २३ ॥ प्रमादादिच्छया मर्त्यो न गच्छेत्सर्पसंमुखः ॥ पक्षयोरुभयोर्नागं पञ्चमीषु प्रपूजयेत् ॥ २४ ॥ कुर्य्यात् पिष्टमयीं लेखां नागानामाकृतिं भुवि ॥ अर्च्चयेत् तां सितैः पुष्पैः सुगन्धैश्चन्दनेन

च ॥ २५ ॥ प्रदद्याद्धूपदीपन्तु तण्डुलांश्च सितान् क्षिपेत् ॥ आमपिष्टं तथैवान्नं क्षीरञ्च विनिवेदयेत् ॥२६॥ उपस्थाय वदेद्देवं मुंचन् मुद्रांशुकानि च ॥ मधुरं तद्दिनेऽश्नीयादेवश्राद्धं समापयेत् ॥ २७ ॥ सौवर्णं शक्तितो नागं ततो दद्याद्द्विजोत्तमे ॥ धेनुं दत्त्वा ततो ब्रूयात् प्रीयतां नागराडिति ॥ २८ ॥ यथाविभव्यं कुर्वीत कर्म्माण्यन्यानि पूर्ववत् ॥ स्वशाखोक्तविधानेन इत्थं कुर्याद्यथातथम् ॥ प्रेतत्वान्मोचयेत् तांस्तु स्वर्गमार्गं नयेत च ॥ २९ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशाख्ये धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे दुर्मरणे कार्याकार्यक्रियादिनिरूपणं नाम चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥ ॥ श्रीविष्णुरुवाच ॥ प्रत्यब्दं श्राद्धमेवं ते कथयामि खगेश्वर ॥ प्रत्यब्दं पार्व्वणेनैव कुर्य्यातां क्षेत्रजौरसौ ॥ १ ॥ विधिना चेतरैरेवमेकोद्दिष्टं न पार्व्वणम् ॥ २ ॥ अनग्नेश्च सुतौ स्यातामनग्नी क्षेत्रजौरसौ ॥ एकोद्दिष्टं न कुर्य्यातां प्रत्यब्दं तौ तु पार्व्वणम् ॥ ३ ॥ यदा त्वन्यतरः साग्निः पुत्रो वाप्यथवा पिता ॥ प्रत्यब्दं पार्व्वणं तत्र कुर्य्यातां क्षेत्रजौरसौ ॥ ४ ॥ अनग्नयः साग्नयो वा पुत्रा वा पितरोऽपि वा ॥ एकोद्दिष्टं सुतैः कार्य्यं क्षयाह इति केचन ॥५॥ दर्शकाले क्षयो यस्य प्रेतपक्षेऽथ वा पुनः ॥ प्रत्यब्दं पार्वणं कार्यं तस्य सर्व्वैः सुतैरपि ॥ ६ ॥ एकोद्दिष्टमपुत्राणां पुंसां स्याद्योपितामपि ॥ एकोद्दिष्टे कुशा ग्राह्याः समूला यज्ञकर्म्मणि ॥ बर्हिर्लूनाः सकृल्लूनाः श्राद्धं वृद्धिमृते सदा ॥ ७ ॥ कर्त्तव्ये पार्व्वणे श्राद्धे आशौचं यदि जायते ॥ आशौचावगमे कुर्य्याच्छ्राद्धं हि तदनन्तरम् ॥ ८ ॥ एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते ॥ मासेन्यस्मिन् तिथौ तस्यां कुर्य्याच्छ्राद्धं तदेव हि ॥ ९ ॥ तूष्णीं श्राद्धन्तु शूद्रस्य भार्य्यायास्तत्सुतस्य च ॥ कन्यायाश्च द्विजातीनामनुपेताद्द्विजस्य च ॥ १० ॥ एककाले गतासूनां बहूनामथ वा द्वयोः ॥ तन्त्रेण श्रपणं कुर्य्याच्छ्राद्धं कुर्य्यात् पृथक्पृथक् ॥ ११ ॥ दद्यात् पूर्व्वं मृतस्यादौ द्वितीयस्य ततः पुनः ॥ तृतीयस्य ततः कुर्य्यात् संनिपाते त्वयं विधिः ( क्रमः ) ॥ १२ ॥ प्रत्यब्दमेवं यः कुर्य्याद्यथातथमतन्द्रितः ॥ तारयित्वा पितॄन् सर्व्वान् प्राप्नोति परमां गतिम् ॥ १३ ॥ न ज्ञायते मृताहश्चेत् प्रस्थानदिनमेव च ॥ मासश्चेत् स्यात् परिज्ञातस्तद्दर्शे स्यान्मृताहिकम् ॥ १४ ॥ यदा मासो न विज्ञातो विज्ञातं दिनमेव च॥ तदा मार्गशिरे मासि माघे वा तद्दिनं भवेत् ॥ १५ ॥ दिनमासावविज्ञातौ मरणस्य यदा पुनः ॥ प्रस्थानदिनमासौ तु ग्राह्यौ श्राद्धे मयोदितौ ॥ १६ ॥ प्रस्थानस्यापि न ज्ञातौ दिनमासौ यदा पुनः ॥ मृतवार्त्ताश्रुतौ ग्राह्यौ पूर्व्वप्रोक्तक्रमेण तु ॥ १७ ॥ प्रवासमन्तरेणापि स्यातां तौ विस्मृतौ यदा ॥ तदानीमपि तौ ग्राह्यौ पूर्ववत् तु मृताहिके ॥१८॥ गृहस्थे प्रोषिते यत्र कश्चित्तु म्रियते गृहे ॥ आशौचापगमे यत्र प्रारब्धे श्राद्धकर्म्मणि ॥१९॥

१ यदयं हि मृतः साग्निः० पा० ।

प्रत्यागतश्चेज्जानाति तत्र वृत्तं गृही तथा ॥ आशौचं गृहिणस्तेषां न द्रव्यादेस्तदा भवेत् ॥ २० ॥ पुत्रादिना यदारब्धं श्राद्धं तत्त्वेन वाखि
लम् ॥ समापनीयं तत्रापि श्राद्धं गृहीतु दूरतः ॥ २१ ॥ दात्रा भोक्त्रा च न ज्ञातं सूतकं मृतकं तथा ॥ उभयोरपि तद्दोषं नारोपयति कर्हिचित् ॥
॥ २२ ॥ यदा त्वन्यतरज्ज्ञातं सूतकं मृतकं तथा ॥ भोक्तुरेव तदा दोषो नान्यो दाता प्रदुष्यति ॥ २३ ॥ इत्युक्तेन प्रकारेण यः कुर्यान्मृतवासरम् ॥
अविज्ञातमृताहस्य सततं तारयत्यसौ ॥ २४ ॥ नित्यश्राद्धेऽथ गन्धाद्यैर्द्विजानभ्यर्च्य भक्तितः ॥ सर्व्वान् पितृगणान् सम्यक् सहैवोद्दिश्य योजयेत् ॥
॥ २५ ॥ आवाहनं स्वधाकारो पिण्डाग्नौकरणादिकम् ॥ ब्रह्मचर्य्यादिनियमा विश्वेदेवास्तथैव च ॥ २६ ॥ नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं
प्रकल्पयेत् ॥ दत्त्वा तु दक्षिणां शक्त्या नमस्कारैर्विसर्जयेत् ॥ २७ ॥ देवानुद्दिश्य विश्वादीन् यद्द्याद्द्विजभोजनम् ॥ तन्नित्यश्राद्धवत् कार्य्यं देवश्राद्धं
तदुच्यते ॥ २८ ॥ मातृश्राद्धन्तु पूर्व्वेण कर्म्मादौ पैतृकं तथा ॥ उत्तरेऽहनि वृद्धौ स्यान्मातामहगणस्य तु ॥ २९ ॥ श्राद्धत्रयं प्रकुर्व्वीत वैश्वदेवन्तु
तान्त्रिकम् ॥ ३० ॥ मातृभ्यः कल्पयेत्पूर्व्वं पितृभ्यस्तदनन्तरम् ॥ मातामहेभ्यश्च तथा दद्यादित्थं क्रमेण तु ॥ ३१ ॥ मातृश्राद्धे तु विप्राणामभावे
सुकुलोद्गताः ॥ पतिपुत्रान्विताः साध्व्यो योषितोऽष्टौ च भावयेत् ॥ ३२ ॥ इष्टापूर्त्तादिके श्राद्धं कुर्य्यादाभ्युदयं तथा ॥ उत्पातादिनिमित्तेषु नित्य
श्राद्धवदेव तु ॥ ३३ ॥ नित्यं दैवञ्च वृद्धिश्च काम्यं नैमित्तिकं तथा ॥ श्राद्धान्युक्तप्रकारेण कुर्व्वन् सिद्धिमवाप्नुयात् ॥ इति ते कथितं तार्क्ष्य
किमन्यत्परिपृच्छसि ॥ ३४ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे प्रत्याब्दिकादिश्राद्धनिरूपणं
नाम पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥ तार्क्ष्य उवाच ॥ सुकृतस्य प्रभावेण स्वर्गो नानाविधो नृणाम् ॥ भोगाः सौख्यानि रूपञ्च बलं बुद्धिः परा
क्रमः ॥ १ ॥ सत्यं पुण्यवतां देव जायतेऽत्र परत्र च ॥ सत्यंसत्यं पुनः सत्यं वेदवाक्यं न चान्यथा ॥ २ ॥ धर्म्मो जयति नाधर्म्मः सत्यं जयति
नानृतम् ॥ क्षमा जयति न क्रोधो विष्णुर्जयति नासुरः ॥ ३ ॥ तद्वत्सत्यं मया ज्ञातं सुकृताच्छोभनं भवेत् ॥ यथोत्कृष्टतमं पुण्यं तथोत्कृष्टतरो
नरः ॥ ४ ॥ एवन्तु श्रोतुमिच्छामि जायन्ते पापिनो यथा ॥ येन कर्म्मविपाकेन यथा नियमभाग्भवेत् ॥ ५ ॥ यांयां योनिमवाप्नोति यथारूपश्च
जायते ॥ तन्मे वद सुरश्रेष्ठ समासेनापि कांक्षितम् ॥ ६ ॥ श्रीकृष्ण उवाच ॥ शुभाशुभफलैस्तार्क्ष्य भुक्तभोगा नरास्त्विह ॥ जायन्ते लक्षणैर्यैस्तु
तानि मे शृणु काश्यप ॥ ७ ॥ गुरुरात्मवतां शास्ता राजा शास्ता दुरात्मनाम् ॥ इह प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥ ८ ॥ प्रायश्चित्ते
ष्वचीर्णेषु यमलोका ह्यनेकधा ॥ यातनाभिर्विमुक्ता ये यान्ति ते जीवसन्ततिम् ॥ ९ ॥ गत्वा मानुषभावे तु पापचिह्ना भवन्ति ते ॥

तान्यहं तव चिह्नानि कथयिष्ये खगोत्तम ॥ १० ॥ सोढ्वा वै यातनाः सर्व्वा गत्वा वैवस्वतक्षयम् ॥ निस्तीर्णयातनास्ते तु लोकमायान्ति चिह्निताः ॥ ११ ॥ गद्गदोऽनृतवादी स्यान्मूकश्चैव गवानृते ॥ ब्रह्महा जायते कुष्ठी श्यावदन्तश्च मद्यपः ॥ १२ ॥ कुनखी स्वर्णहरणाद्दुश्चर्म्मा गुरुतल्पगः ॥ संयोगी हीनयोनिः स्याद्दरिद्रोऽदत्तदानतः ॥ १३ ॥ अयाज्ययाजको याति ग्रामसूकरतां द्विजः ॥ खरो वै बहुयाजी स्यात्काको निर्म्मन्त्रभोजनात् ॥ १४ ॥ अपरीक्षितभोक्तारो व्याघ्राः स्युर्निर्ज्जने वने ॥ बहुतर्ज्जको मार्जारः खद्योतः कक्षदाहकः ॥ १५ ॥ पात्रे विद्याऽप्रदाता यो बलीवर्दो भवेत्तु सः ॥ अन्नं पर्य्युषितं विप्रे प्रददत्कुकरो भवेत् ॥ १६ ॥ मात्सर्य्यादपि जात्यन्धो जन्मान्धः पुस्तकं हरन् ॥ फलान्याहरतोऽपत्यं म्रियते नात्र संशयः ॥ १७ ॥ मृतो वानरतां याति तन्मुखो गण्डवान् भवेत् ॥ अदत्त्वा भक्ष्यमश्नाति अनपत्यो भवेत्तु सः ॥ १८ ॥ हरन्वस्त्रं भवेद्गोधा गरदः पवनाशनः ॥ प्रव्रज्याऽगमनाद्राजन् भवेन्मरुपिशाचकः ॥ १९ ॥ चातको जलहर्त्ता स्याद्धान्यहर्त्ता च मूषिकः ॥ अप्राप्तयौवनां सेवन् भवेत्सर्प इति श्रुतिः ॥ २० ॥ गुरुदाराभिलाषी च कृकलासो भवेद्ध्रुवम् ॥ जलप्रस्रवणं यस्तु भिन्द्यान्मत्स्यो भवेन्नरः ॥ २१ ॥ अविक्रेयक्रयाच्चैव बको गृध्रो भवेन्नरः ॥ अयोनिगो वृको हि स्यादुलूकः क्रयवञ्चनात् ॥ २२ ॥ मृतस्यैकादशाहे तु भुञ्जानश्चाभिजायते ॥ प्रतिश्रुत्य द्विजेभ्योऽर्थमददज्जम्बुको भवेत् ॥ २३ ॥ राज्ञीं गत्वा भवेदुंष्ट्री तस्करो विड्वराहकः ॥ शारिवा फलविक्रेता वृषश्च वृषलीपतिः ॥ २४ ॥ मार्ज्जारोऽग्निं पदा स्पृष्ट्वा रोगवान्परमांसभुक् ॥ उदक्यागमनात्षण्डो दुर्गन्धश्च सुगन्धहृत् ॥ २५ ॥ यद्वा तद्वापि पारक्यं स्वल्पं वा हरते बहु ॥ हत्वा वै योनिमाप्नोति तिरश्चां नात्र संशयः ॥ २६ ॥ एवमादीनि चिह्नानि अन्यान्यपि खगेश्वर ॥ स्वकर्म्मवितातान्येव ? दृश्यन्ते यैस्तु मानवैः ॥२७॥ एवं दुष्कृतकर्म्मा हि भुक्त्वा च नरकान्क्रमात ॥ जायते कर्म्मशेषेण उक्तास्वेतासु योनिषु ॥ २८ ॥ ततो जन्मशतं मर्त्यें सर्व्वजन्तुषु काश्यप ॥ जायते नात्र सन्देहः समीभूते शुभाशुभे ॥ २९ ॥ स्त्रीपुंसयोः प्रसङ्गेन निरुद्धे शुक्रशोणिते ॥ समुपेतः पञ्चभूतैर्जायते पांचभौतिकः ॥ ३० ॥ इन्द्रियाणि मनः प्राणा ज्ञानमायुः सुखं धृतिः ॥ धारणा प्रेरणं दुःखं मिथ्याहङ्कार एव च ॥ ३१ ॥ प्रयताकृतिवर्णस्तु रागद्वेषौ भवाभवौ ॥ तस्येदमात्मनः सर्वमनादेरादिमिच्छतः ॥ ३२ ॥ स्वकर्म्मबद्धस्य तदा गर्भवृद्धिर्भवेदिति ॥ पुरा यथा मया प्रोक्तं तव जन्तोर्हि लक्षणम् ॥ ३३ ॥ एवं प्रवर्त्तितं चक्रं भूतग्रामे चतुर्विधे ॥ समुत्पत्तिर्विनाशश्च जायते तार्क्ष्य देहिनाम् ॥ ३४ ॥ स्वधर्म्मेणैवोर्द्ध्वगतिरधर्म्मेणाप्यधोगतिः ॥ जायते सर्ववर्णानां स्वधर्म्मचलनात् खग ॥ ३५ ॥ देवत्वे मानुषत्वे च दानभोगादिकाः क्रियाः ॥ या दृश्यन्ते वैनतेय तत्सर्वं कर्म्मजं फलम् ॥ ३६ ॥ अकर्म्मविहिते घोरे कामक्रोधार्जितेऽशुभे ॥ पतेद्वै नरके

भूयो तस्योत्तारो न विद्यते ॥३७॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकांडे प्रेतकल्पे जीवस्य शुभाशुभगतिनिरूपणं नाम षट्चत्वारिंशोध्यायः ॥ ४६ ॥ गरुड उवाच ॥ भगवन्देवदेवेश कृपया परया वद ॥ दानं दानस्य माहात्म्यं वैतरण्याः प्रमाणकम् ॥ १ ॥ श्रीकृष्ण उवाच ॥ या सा वैतरणी नाम यममार्गे महासरित् ॥ अगाधा दुस्तरा पापैर्दृष्टमात्रा भयावहा ॥२॥ पूयशोणिततोयाढ्या मांसकर्दमसंकुला ॥ पापिनश्चागतान्दृष्ट्वा नानाभयसमावृता ॥ ३ ॥ क्वाथ्यते सत्वरं तोयं पात्रमध्ये घृतं यथा ॥ क्रिमिभिः सङ्कुलं पूयं वज्रतुण्डैः समावृतम् ॥ ४ ॥ शिशुमारैश्च मकरैर्वज्रकर्तरिकायुतैः ॥ अन्यैश्च जलजीवैश्च हिंसकैर्मांसभेदिभिः ॥ ५ ॥ उद्यान्ति द्वादशादित्याः प्रलयान्ते तथा हि ते ॥ तपन्ति तत्र वै मर्त्याः क्रन्दमानास्तु पापिनः ॥ ६ ॥ हा भ्रातः पुत्र तातेति प्रलपन्ति मुहुर्मुहुः ॥ विचरन्ति निमज्जन्ति ग्लानिं गच्छन्ति जन्तवः ॥ ७ ॥ चतुर्विधैः प्राणिगणैर्दृष्टा व्याप्ता महानदी ॥ तरन्ति गोप्रदानेन त्वन्यथा च पतन्ति ते ॥ ८ ॥ मां नरा येऽवमन्यन्ते चाचार्यं गुरुमेव च ॥ वृद्धानन्यांश्चापि मूढास्तेषां वासस्तु तत्र वै ॥ ९ ॥ पतिव्रतां साधुशीलामूढां धर्म्मेषु निश्चलाम् ॥ परित्यजन्ति ये मूढास्तेषां वासस्तु सन्ततम् ॥ १० ॥ विश्वासप्रतिपन्नानां स्वामिमित्रतपस्विनाम् ॥ स्त्रीबालविकलादीनां वधं कृत्वा पतन्ति हि ॥ पच्यन्ते तत्र मध्ये तु क्रन्दमानास्तु पापिनः ॥ ११ ॥ शान्तं बुभुक्षितं विप्रं यो विघ्नायोपसर्पति ॥ क्रिमिभिर्भक्ष्यते तत्र यावदाभूतसंप्लवम् ॥ १२ ॥ ब्राह्मणाय प्रतिश्रुत्य यमार्थं न ददाति तम् ॥ आहूय नास्ति यो ब्रूयात्तस्य वासस्तु तत्र वै ॥ १३ ॥ अग्निदो गरदश्चैव कूटसाक्षी च मद्यपः ॥ यज्ञविध्वंसकश्चैव राज्ञीगामी च पैशुनः ॥ १४ ॥ कथाभङ्गकरश्चैव स्वयंदत्तापहारकः ॥ क्षेत्रसेतुविभेदी च परदारप्रधर्षकः ॥ १५ ॥ ब्राह्मणो रसविक्रेता तथा यो वृषलीपतिः ॥ गोधनस्य तृषार्तस्य वाप्या भेदं करोति यः ॥ १६ ॥ कन्याविदूषकश्चैव दानं दत्त्वानुतापकः ॥ शूद्रस्तु कापिलापायी ब्राह्मणो मांसभोजनः ॥ १७ ॥ एते वसन्ति सततं मा विचारं कृथाः क्वचित् ॥ कृपणो नास्तिकः क्षुद्रः स तस्यां निवसेत्खग ॥ १८ ॥ सदामर्षी सदा क्रोधी निजवाक्यप्रमाणकृत् ॥ परोक्त्युच्छेदको नित्यं वैतरण्यां वसेच्चिरम् ॥ १९ ॥ यस्त्वहंकारवान्पापी स्वविकत्थनकारकः ॥ कृतघ्नो गर्भसन्तापी वैतरण्यां स मज्जति ॥ २० ॥ कदापि भाग्ययोगेन तरणेच्छा भवेद्यदि ॥ सानुकूला भवेद्येन तदाकर्णय काश्यप ॥ २१ ॥ अयने विषुवे पुण्ये व्यतीपाते दिनोदये ॥ चन्द्रसूर्य्योपरागे वा संक्रान्तौ दर्शवासरे ॥ २२ ॥ अन्येषु पुण्यकालेषु दीयते दानमुत्तमम् ॥ यदा तदा भवेद्वापि श्रद्धा दानं प्रति ध्रुवम् ॥ २३ ॥ तदेव दानकालः स्याद्यतः सम्पत्तिरस्थिरा ॥ अनित्यानि शरीराणि विभवो नैव शाश्वतः ॥ २४ ॥ नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्म्मसंग्रहः ॥ कृष्णां वा पाटलां वापि कुर्य्याद्वै

तरणीं शुभाम् ॥ २५ ॥ स्वर्णशृंगीं रौप्यखुरां कांस्यपात्रोपदोहनाम् ॥ कृष्णवस्त्रयुगाच्छन्नां सप्तधान्यसमन्विताम् ॥ २६ ॥ कार्पासद्रोणशिखरे
आसीनं ताम्रभाजने ॥ यमं हैमं प्रकुर्व्वीत लोहदण्डसमन्वितम् ॥ इक्षुदण्डमयं बद्ध्वा प्लवं सुदृढबन्धनैः ॥ २७ ॥ उडुपोपरि तां धेनुं सूर्य्यदेहसमु
द्भवाम् ॥ कृत्वा प्रकल्पयेद्विप्रश्छत्रोपानहसंयुतम् ॥ २८ ॥ अंगुलीयकवासांसि ब्राह्मणाय निवेदयेत ॥ इममुच्चारयेन्मन्त्रं संगृह्य सजलान्कुशान्
॥ २९ ॥ यमद्वारे महाघोरे श्रुत्वा वैतरणीं नदीम् ॥ तर्त्तुकामो ददाम्येनां तुभ्यं वैतरणीं नमः ॥ ३० ॥ गावो मे अग्रतः सन्तु गावो मे सन्तु
पार्श्वतः ॥ गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ॥ ३१ ॥ विष्णुरूप द्विजश्रेष्ठ मामुद्धर महीसुर ॥ सदक्षिणा मया दत्ता तुभ्यं वैतरणी
नमः ॥ ३२ ॥ धर्म्मराजश्च सर्व्वेशं वैतरण्याख्यधेनुकाम् ॥ सर्व्वं प्रदक्षिणीकृत्य ब्राह्मणाय निवेदयेत् ॥ ३३ ॥ पुच्छं संगृह्य धेन्वाश्च अग्रे कृत्वा
तु वै द्विजम् ॥ धेनुके त्वं प्रतीक्षस्व यमद्वारे महाभये ॥ ३४ ॥ उत्तारणाय देवेशि वैतरण्ये नमोऽस्तु ते ॥ अनुव्रजेत्तु गच्छन्तं सर्व्वं तस्य गृहं नयेत्
॥ ३५ ॥ एवं कृते वैनतेय सा सरित्सुतरा भवेत् ॥ सर्व्वान्कामानवाप्नोति यो दद्याद्भुवि मानवः ॥ ३६ ॥ सुकृतस्य प्रभावेण सुखश्चेह परत्र च ॥
स्वस्थे सहस्रगुणितमातुरे शतसम्मितम् ॥ ३७ ॥ मृतस्यैव तु यद्दानं परोक्षे तत्समं स्मृतम् ॥ स्वहस्तेन ततो देयं मृते कः कस्य दास्यति ॥ ३८ ॥
दानधर्म्मविहीनानां कृपणैर्जीवितेक्षितैः ॥ अस्थिरेण शरीरेण स्थिरं कर्म्म समाचरेत् ॥ ३९ ॥ अवश्यमेव यास्यन्ति प्राणाः प्राघूर्ण ( घूर्णि ) का
इव ॥ ४० ॥ इतीदमुक्तं तव पक्षिराज विडम्बनं जन्तुगणस्य सर्व्वम् ॥ प्रेतस्य मोक्षाय तदौर्द्ध्वदैहिकं हिताय लोकस्य चरेच्छुभाय तु ॥ ४१ ॥
सूत उवाच ॥ एवं विप्राः समादिष्टो विष्णुना प्रभविष्णुना ॥ गरुड प्रेतचरितं श्रुत्वा सन्तुष्टिमागतः ॥ ४२ ॥ व्रततीर्थादिकं सर्व्वं पुनः पप्रच्छ केश
वम् ॥ ध्यात्वा मनसि सर्व्वेशं सर्व्वकारणकारणम् ॥ ४३ ॥ ऋषयः सर्व्वमेवैतज्जन्तूनां प्रभवादिकम् ॥ मरणं जन्म च तथा प्रेतत्वञ्चौर्द्ध्वदैहिकम् ॥
॥ ४४ ॥ मया प्रोक्तं वै मुक्त्यै निदानं चैव सर्वशः ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः ॥ येषामिन्दीवरश्यामो हृदयस्थो जनार्द्दनः ॥४५॥
धर्म्मो जयति नाधर्म्मः सत्यं जयति नानृतम् ॥ क्षमा जयति न क्रोधो विष्णुर्जयति नासुराः ॥ ४६ ॥ विष्णुर्माता पिता विष्णुर्विष्णुः स्वजनबान्ध
वाः ॥ येषामेव स्थिरा बुद्धिर्न तेषां दुर्गतिर्भवेत् ॥ ४७ ॥ मङ्गलं भगवान्विष्णुर्मङ्गलं गरुडध्वजः ॥ मंगलं पुण्डरीकाक्षो मंगलायतनं हरिः ॥ ४८ ॥
हरिर्भागीरथी विप्रा विप्रा भागीरथी हरिः ॥ भागीरथी हरिर्विप्राः सारमेतज्जगत्त्रये ॥ ४९ ॥ इति सूतमुखोद्गीर्णां सर्वशास्त्रार्थमण्डिताम् ॥ वैष्णवीं
वाक्सुधां पीत्वा ऋषयस्तुष्टिमाययुः ॥ ५० ॥ प्रशशंसुस्तथान्योन्यं सूतं सर्वार्थदर्शिनम् ॥ प्रहर्षमतुलं प्रापुर्मुनयः शौनकादयः ॥ ५१ ॥ अपवित्रः

पवित्रो वा सर्वावस्थां गतोपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरं शुचिः ॥९२॥ इति श्रीगारुडे महापु० उत्तरखण्डे द्विती० धर्मका० प्रेत० श्रीकृष्णगरुडसंवादे कर्मविपाकादिनिरूपणं नाम सप्तचत्वारिंशोऽध्यायः ॥४७॥ तार्क्ष्य उवाच ॥ ये मर्त्त्यलोके निवसन्ति मानवास्ते सर्व्वजातौ निधनं प्रयान्ति ॥ काले स्वकीये निजपुण्यसंख्यया वदन्ति लाक कथयस्व तन्मे ॥ १ ॥ गच्छन्ति मार्गेण सुदुस्तरेण विधातृनिष्पादितवर्त्मनि स्थिताः॥ केनैव पुण्येन मुदं प्रयान्ति तिष्ठन्ति केनैव कुलं बलं वयः ॥२॥ सूत उवाच ॥ श्रुत्वाथ देवो गरुडं त्ववोचत् स्मृत्वा वपुः कर्म्मभयश्च रूपम् ॥ सृष्टा धरा येन चराचरं जगत्स येनशस्ता विहितो यमो विभुः ॥ ३ ॥ श्रीभगवानुवाच ॥ धर्म्मार्थकामं चिरमोक्षसञ्चयमन्यं द्वितीयं यममार्गगामिनाम् ॥ प्रविश्यचाऽङ्गुष्ठसमे स तत्र वै तं प्राप्य देहं स्वपुरं स्वमन्दिरम्? ॥४॥ गृहीतपाशो रुदते पुनःपुनर्देशे सुपुण्ये द्विज देहसंस्थितः॥ देवेन्द्रपूजा पितृदेवतृप्तिर्दं मोहान्न चेष्टं न च पुत्रसन्ततिः ॥ ५ ॥ न मेऽस्ति बन्धुर्यममार्गगामिनो मया न कृत्यं द्विजदेहलिप्सया ॥ सम्प्राप्य विप्रत्वमतीव दुर्लभं नाधीतवान्वेदपुराणसंहिताः ॥ प्राप्तं सुरत्नं करसंस्थितं गतं देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥ ६ ॥ यः क्षत्रियो बाहुबलेन संयुगे ललाटदेशाद्रुधिरं मुखे पपौ ॥ तत्सोमपानं हि कृतं महामखे जीवन्मृतः सोऽपि हि याति मुक्तिम् ॥ ७ ॥ स्थानान्यनेकानि कृतानि तानि पीतान्यनेकान्यपि गर्हितानि ॥ शस्त्रं गृहीत्वा समरे रिपूणां यः सम्मुखं याति स मुक्तपापः ॥ ८ ॥ क्षत्रान्वयो वापि विशोन्वयो वा शूद्रान्वयो वापि हि नीचवर्णः ॥ संग्रामदेवाद्विजबालघाती स्त्रीवृद्धहा दीनतपस्विहन्ता॥९॥उपद्रुतेष्वेषु पराङ्मुखो यः स्युस्तस्य देवाः सकलाः पराङ्मुखाः॥ तिलोदकं नैव पिबन्ति पूर्व्वे हुतं न गृह्णाति हुताशनोपि तत् ॥ १० ॥ द्वेषाद्भयाद्वा समरे समागते शस्त्रं गृहीत्वा परसैन्यसम्मुखः ॥ न याति पक्षीन्द्र मृतश्च पश्चात्क्षात्रं बलं तस्य गतं तथैव ॥ द्विजाय दत्त्वा कनकं महीमिमां भूयः स पश्चाद्भवतीह लोके ॥ ११ ॥ दानं प्रदत्तं ग्रहणे द्विजेन्द्रे स्नानं कृतं तेन सदा सुतीर्थे ॥ गत्वा गयायां पितृपिण्डदानं कृतं सदा यो म्रियते तु युद्धे ॥ १२ ॥ यः क्षात्रदेहन्तु विहाय शोचते रणाङ्गणे स्वामिवधे च गोग्रहे ॥ स्त्रीबालघाते पथि सार्थहेतवे मया स्वकोशं न हतं न पातितम् ॥ १३ ॥ वैश्यः स्वकर्म्माणि विशोचते तदा गृहीतपाशो न मयापि सञ्चितम् ॥ सत्यं न चोक्तं क्रयविक्रयेण मोहाद्विमूढेन कुटुम्बहेतवे ॥ १४ ॥ शूद्रं वपुः प्राप्य यशस्करं सदा दानं द्विजेभ्यो न कृतं द्विजार्चनम् ॥ जलाशयो नैव कृतो धरातले असंस्कृतो विप्रवरो न संस्कृतः ॥ १५ ॥ त्यक्त्वा स्वकर्माणि मदेन सुस्थितं मया सुतीर्थे स्ववपुर्न चोज्झितम् ॥ धर्म्मोर्ज्जितो नैव न देवपूजनं कृतं मया चैव विमुक्तिहेतवे ॥ १६ ॥ देहं समासाद्य तथैव पिण्डजं वर्णास्तथैवाऽन्त्यजम्लेच्छसंज्ञितान् ॥ मरुन्मयं देहमिमे विशन्ति नैवेहमानाः पथि धर्म्मसं

कुले ॥ १७ ॥ परस्परं धर्म्मकृते स्वकीये सम्पाद्य लक्ष्यं पथि सञ्चरंस्त्वम् ॥ पक्षीन्द्र वाक्यानि शृणुष्व तानि मनोरमाणि प्रवदन्ति यानि ॥ १८ ॥ सारा हि लोकेषु भवेत्त्रिलोकी द्वीपेषु सर्व्वेषु च जम्बुकाख्यम् ॥ देशेषु सर्व्वेष्वपि देवदेशः जीवेषु सर्व्वेषु मनुष्य एव ॥ १९ ॥ वर्णाश्च चत्वार इह प्रशस्ताः वर्णेषु धर्म्मिष्ठनराः प्रशस्ताः ॥ धर्म्मेण सौख्यं समुपैति सर्व्वं ज्ञानं समाप्नोति महापथे स्थितः ॥ २० ॥ देहं परित्यज्य यदा गतायुः पक्षिन् स्थितोऽहं कृमिकीटसंस्थितः ॥ सरीसृपोऽहं मशको विनिर्म्मितश्चतुष्पदोऽहं वनसूकरोऽहम् ॥ २१ ॥ सर्व्वं विजानाति हि गर्भसंस्थितो जातश्च सद्यस्तदिदञ्च विस्मरेत् ॥ यच्चिन्तितं गर्भसमागतेन वै बालो युवा वृद्धवया बभूव ॥ २२ ॥ मोहाद्विनष्टं यदि गर्भचिन्तितं स्मृतं पुनर्मृत्युगते च देहे ॥ तस्मिन्प्रनष्टे हृदि चिन्तितं गतं स्मृतं पुनर्गर्भगते च देहे ॥ २३ ॥ तस्मिन्प्रनष्टे हृदि चिन्तितं पुनर्मया स्वकोशे परवञ्चनं कृतम् ॥ द्यूतैश्छलेनापि च चौर्य्यवृत्त्या धर्म्मं व्यतिक्रम्य शरीररक्षणे ॥ २४ ॥ कृच्छ्रेण लक्ष्मीः समुपार्ज्जिता स्वयं मया न भुक्तं मनसेप्सितं धनम् ॥ ताम्बूलमन्नं मधुरं सगोरसं दत्त्वाग्निदेवातिथिबन्धुवर्गे ॥ २५ ॥ सोमग्रहे सूर्य्यसमागमेपि वा न सेवितं तीर्थवरिष्ठमुत्तमम् ॥ कोशं स्वकीयं मलमूत्रपूरितं देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥ २६ ॥ मया न दृष्टा न नता न पूजिता त्रैविक्रमी मूर्त्तिरिह स्थिता भुवि ॥ प्रभासनाथो न च भक्तिसंस्तुतो देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥२७॥ गत्वा वरिष्ठे भुवि तीर्थसन्निधौ धनं न दत्तं विदुषां करे मया ॥ आप्लुत्य देहं विधिना द्विजे गुरौ देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥२८॥ न मातृपूजा न च विष्णुशङ्करौ गणेशचण्ड्यौ न च भास्करोऽपि वा ॥ यश्चोपचारैर्बलियुक्तचन्दनैर्देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥ २९ ॥ लब्धा मया मानवदेवतोपमा मोहाद्गता सर्व्वमिदञ्च पार्थिव ॥ गतिं न वीक्षेत स वै विमूढधीर्देहिन्कचिन्निस्तर यत्त्वया कृतम् ॥ ३० ॥ एतानि पक्षिन्मनसा विचिन्त्य वाक्यानि धर्म्मार्थयशस्कराणि ॥ मुक्तिं समायान्ति मनुष्यलोके वसन्ति ये धर्म्मरताः सुदेशे ॥ ३१ ॥ इति ब्रुवाणैर्यमदूतवर्गैर्विहन्यते कालमयैश्च मुद्गरैः ॥ हा दैव हा दैव इति स्मरन् वै धनं न दत्तं स्वयमार्ज्जितं यत् ॥ ३२ ॥ न भूमिदानं न च गोप्रदानं न वारिदानं न च वस्त्रदानम् ॥ फलं सताम्बूलविलेपनं वा त्वया न दत्तं भुवि शोचसे कथम् ॥ ३३ ॥ पिता मृतस्ते च पितामहः सा यया धृतो वाप्युदरे स्वकीये ॥ मृतोऽप्यसौ बन्धुजनः समस्तो दृष्टं त्वया सर्व्वमिदं गतायुः ॥ ३४ ॥ कोशं त्वदीयं ज्वलितञ्च वह्निना पुत्त्रैर्गृहीतो धनधान्यसञ्चयः ॥ सुभाषितं धर्म्मचयं कृतञ्च यत्तदेव गच्छेत्तव पृष्ठसंस्थम् ॥ ३५ ॥ न दृश्यते कोऽपि मृतः समागतो राजा यतिर्वा द्विजपुङ्गवोऽपि वा ॥ यो वै मृतः साहसिकः स मर्त्त्यको नाशं गतो योऽपि धरातले स्थितः ॥ ३६ ॥ एवं गणास्ते ब्रुवते सकिन्नरा धैर्य्यं समालम्ब्य विषादपूरितः ॥

श्रुत्वा गणानां वचनं महाद्भुतं ब्रवीति पक्षीन्द्र मनुष्यतां गतः ॥ ३७ ॥ दानप्रभावेण विमानसंस्थितो धर्म्मः पिता मातृदयानुरूपिणी ॥
वाणी कलत्रं मधुरार्थभाषिणी स्नानं सुतीर्थे च सुबन्धवर्गः ॥ ३८ ॥ करार्पितं यत्सुकृतं समस्तं स्वर्गस्तदा स्यात्तव किङ्करोपमः ॥
यो धर्म्मवान् प्राप्स्यति सोऽतिसौख्यं पापी समस्तं विविधञ्च दुःखम् ॥ ३९ ॥ यो धर्म्मशीलो जितमानरोषो विद्याविनीतो न परोपतापी ॥ स्वदा
रतुष्टः परदारदूरस्स वै नरो नो भुवि वन्दनीयः ॥ ४० ॥ मिष्टान्नदाता चरिताग्निहोत्रो वेदान्तविच्चन्द्रसहस्रजीवी ॥ मासोपवासी च पतिव्रता च
षड् जीवलोके मम वन्दनीयाः ॥ ४१ ॥ एवं समाचारयुता नरोऽपि वापीं सकूपां सजलं तडागम् ॥ प्रपाशुभं ह्यद्गृहदेवमन्दिरं कृतं नरेणैव स धर्म्म
उत्तमः ॥ ४२ ॥ वर्षाशनं वेदविदे च दत्तं कन्याविवाहस्त्वृणमोचनं द्विजे ॥ भूमिः सुकृष्टापि तृषार्त्तिहेतोस्तदेवमेतं सुकृतत् समस्तम् ॥ ४३ ॥
अध्यायमेनं सुकृतस्य सारं शृणोति गायत्यपि भावशुद्ध्या ॥ स वै कुलीनः स च धर्म्मयुक्तो विश्वालयं याति परं स नूनम् ॥ ४४ ॥ इति
श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे श्रीकृष्णगरुडसंवादे मनुष्यस्य सुखदुःखप्रापकधर्माधर्मनिरूपणं नामाष्टचत्वारिंश
त्तमोऽध्यायः ॥ ४८ ॥ गरुड उवाच ॥ श्रुता मया दयासिन्धो ह्यज्ञानाज्जीवसंसृतिः ॥ अधुना श्रोतुमिच्छामि मोक्षोपायं सनातनम् ॥ १ ॥ भग
वन्देवदेवेश शरणागतवत्सल ॥ असारे घोरसंसारे सर्व्वदुःखमलीमसे ॥ २ ॥ नानाविधशरीरस्था अनन्ता जीवराशयः ॥ जायन्ते च म्रियन्ते च
तेषामन्तो न विद्यते ॥ ३ ॥ सदा दुःखातुरा एव न सर्वो विद्यते क्वचित् ॥ केनोपायेन मोक्षेश मुच्यन्ते वद मे प्रभो ॥ ४ ॥ श्रीभगवानुवाच ॥
शृणु तार्क्ष्य प्रवक्ष्यामि यन्मां त्वं परिपृच्छसि ॥ यस्य श्रवणमात्रेण संसारान्मुच्यते नरः ॥ ५ ॥ अस्ति देवः परब्रह्मस्वरूपो निष्कलः शिवः ॥
सर्व्वज्ञः सर्व्वकर्त्ता च सर्व्वेशो निर्म्मलोऽद्वयः ॥ ६ ॥ स्वयंज्योतिरनाद्यन्तो निर्व्विकारः परात्परः ॥ निर्गुणः सच्चिदानन्दस्तदंशा जीवसंज्ञकाः
॥ ७ ॥ अनाद्यविद्योपहता यथाग्नौ विस्फुलिङ्गकाः ॥ देहाद्युपाधिसम्भिन्नास्ते कर्म्मभिरनादिभिः ॥ ८ ॥ सुखदुःखप्रदैः पुण्यपापरूपैर्नियन्त्रिताः ॥
तत्तज्जातियुतं देहमायुर्भोगश्च कर्म्मजम् ॥ ९ ॥ प्रतिजन्म प्रपद्यन्ते तेषामपि परं पुनः ॥ ससूक्ष्मलिंगशारीरमामोक्षादक्षरं खग ॥ १० ॥ स्थावराः
कृमयश्चाजाः पक्षिणः पशवो नराः ॥ धार्म्मिकास्त्रिदशास्तद्वन्मोक्षिणश्च यथाक्रमम् ॥ ११ ॥ चतुर्व्विधशरीराणि धृत्वा मुक्त्वा सहस्रशः ॥ सुकृतान्मा
नवो भूत्वा ज्ञानी चेन्मोक्षमाप्नुयात् ॥ १२ ॥ चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ॥ न मानुषं विनान्यत्र तत्त्वज्ञानन्तु लभ्यते ॥ १३ ॥ अत्र
जन्मसहस्राणां सहस्रैरपि कोटिभिः ॥ कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥ १४ ॥ सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम् ॥ यस्तार

यति नात्मानं तस्मात्पापतरोऽत्र कः ॥१५॥ नरः प्राप्येतरज्जन्म लब्ध्वा चेन्द्रियसौष्ठवम् ॥ न वेत्त्यात्महितं यस्तु स भवेद्ब्रह्मघातकः ॥ १६ ॥ विना देहेन कस्यापि पुरुषार्थो न विद्यते ॥ तस्माद्देहं धनं रक्षेत्पुण्यकर्म्माणि साधयेत् ॥१७॥ रक्षेच्चसर्व्वदात्मानमात्मा सर्व्वस्य भाजनम् ॥ रक्षणे यत्नमा तिष्ठेज्जीवन् भद्राणि पश्यति ॥१८॥ पुनर्ग्रामः पुनः क्षेत्रं पुनर्वित्तं पुनर्गृहम् ॥ पुनः शुभाशुभं कर्म्म न शरीरं पुनःपुनः ॥१९॥ शरीररक्षणोपायाः क्रियन्ते सर्व्वदा बुधैः ॥ नेच्छन्ति च पुनस्त्यागमपि कुष्ठादिरोगिणः ॥२०॥ तद्गोपितं स्याद्धर्म्मार्थं धर्म्मो ज्ञानार्थमेव च ॥ ज्ञानं तु ध्यानयोगार्थमचिरात्प्र विमुच्यते ॥२१॥ आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् ॥ कोऽन्यो हितकरस्तस्मादात्मानं सुखयिष्यति ॥ २२ ॥ इहैव नरकव्याधेश्चिकित्सां न करोति यः ॥ गत्वा निरौषधं देशं व्याधिस्थः किं करिष्यति ॥२३॥ व्याघ्रीवास्ते जरा चायुर्याति भिन्नघटाम्बुवत् ॥ निघ्नन्ति रिपुवद्रोगास्तस्माच्छ्रेयः समभ्यसेत् ॥२४॥ यावन्नाश्रयते दुःखं यावन्नायान्ति चापदः ॥ यावन्नेन्द्रियवैकल्यं तावच्छ्रेयः समभ्यसेत् ॥२५॥ यावत्तिष्ठति देहोऽयं तावत्तत्त्वं समभ्यसेत् ॥ सन्दीप्तकोशभवने कूपं खनति दुर्म्मतिः ॥२६॥ कालो न ज्ञायते नानाकार्य्यैः संसारसम्भवैः ॥ सुखं दुःखं जनो हन्त न वेत्ति हितमात्मनः ॥२७॥ जातानार्त्तान्मृतानापद्भ्रष्टान्दृष्ट्वा च दुःखितान् ॥ लोको मोहसुरां पीत्वा न बिभेति कदाचन ॥२८॥ सम्पदः स्वप्नसंकाशा यौवनं कुसुमोपमम् ॥ तडिच्चपलमायुष्यं कस्य स्याज्जानतो धृतिः ॥ २९ ॥ शतं जीवितमत्यल्पं निद्रालस्यैस्तदर्द्धकम् ॥ बाल्यरोगजरादुःखैरल्पं तदपि निष्फलम् ॥३०॥ प्रारब्धव्ये निरुद्योगी जागर्त्तव्ये प्रसुप्तकः ॥ विश्वस्तश्च भयस्थाने हा नरः को न हन्यते ॥ ३१ ॥ तोयफेनसमे देहे जीवेनाक्रम्य संस्थिते ॥ अनित्यप्रियसंवासे कथं तिष्ठति निर्भयः ॥ ३२ ॥ अहिते हितसंज्ञः स्यादध्रुवे ध्रुवसंज्ञकः ॥ अनर्थे चार्थविज्ञानः स्वमर्थं यो न वेत्ति सः ॥ ३३ ॥ पश्यन्नपि प्रस्खलति शृण्वन्नपि न बुध्यति ॥ पठन्नपि न जानाति देवमायाविमोहितः ॥ ३४ ॥ तन्निमज्जज्जगदिदं गम्भीरे कालसागरे ॥ मृत्युरोगजराग्राहैर्न कश्चिदपि बुध्यते ॥ ३५ ॥ प्रतिक्षणमयं कालः क्षीयमाणो न लक्ष्यते ॥ आमकुंभ इवांभःस्थो विशीर्णो न विभाव्यते ॥ ३६ ॥ युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् ॥ ग्रथनञ्च तरंगाणामास्था नायुषि युज्यते ॥ ३७ ॥ पृथिवी दह्यते येन मेरुश्चापि विशीर्य्यते ॥ शुष्यते सागरजलं शरीरस्य च का कथा ॥ ३८ ॥ अपत्यं मे कलत्रं मे धनं मे बान्धवाश्च मे ॥ जल्पन्तमिति मर्त्याजं हन्ति कालवृको बलात् ॥ ३९ ॥ इदं कृतमिदं कार्य्यमिदमन्यत्कृताकृतम् ॥ एवमीहासमायुक्तं कृतान्तः कुरुते वशम् ॥ ४० ॥ श्वःकार्य्यमद्य कुर्व्वीत पूर्वाह्णे चापराह्णिकम् ॥ न हि मृत्युः प्रतीक्षेत कृतं वाप्यथ वाऽकृतम् ॥ ४१ ॥ जरादर्शितपन्थानं प्रचण्डव्याधिसैनिकम् ॥ अधिष्ठितो मृत्युशत्रुं त्रातारं किं न पश्यति ॥ ४२ ॥

तृष्णासूचीविनिर्भिन्नं सिक्तं विषयसर्पिषा ॥ रागद्वेषानले पक्वं मृत्युरश्नाति मानवम् ॥ ४३ ॥ बालांश्च यौवनस्थांश्च वृद्धान् गर्भगतानपि ॥ सर्व्वा
नाविशते मृत्युरेवम्भूतमिदं जगत् ॥४४॥ स्वदेहमपि जीवोऽयं मुक्त्वा याति यमालयम् ॥ स्त्रीमातृपितृपुत्रादिसम्बन्धः केन हेतुना ॥ ४५ ॥ दुःखमू
लं हि संसारः स यस्यास्ति स दुःखितः ॥ तस्य त्यागः कृतो येन स सुखी नापरः क्वचित् ॥ ४६ ॥ प्रभवं सर्व्वदुःखानामालयं सकलापदाम् ॥
आश्रयं सर्व्वपापानां संसारं वर्जयेत्क्षणात् ॥ ४७ ॥ लोहदारुमयैः पाशैः पुमान्बद्धो विमुच्यते ॥ पुत्रदारमयैः पाशैर्मुच्यते न कदाचन ॥ ४८ ॥
यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् ॥ तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ४९ ॥ वञ्चिताशेषवित्तैस्तैर्नित्यं लोको विनाशितः ॥
हा हन्त विषयाहारैर्देहस्थेन्द्रियतस्करैः ॥ ५० ॥ मांसलुब्धो यथा मत्स्यो लोहशंकुं न पश्यति ॥ सुखलुब्धस्तथा देही यमबाधां न पश्यति ॥५१॥
हिताहितं न जानन्तो नित्यमुन्मार्गगामिनः ॥ कुक्षिपूरणनिष्ठा ये ते नरा नारकाः खग ॥ ५२ ॥ निद्राभीमैथुनाहाराः सर्व्वेषां प्राणिनां समाः ॥
ज्ञानवान्मानवः प्रोक्तो ज्ञानहीनः पशुः स्मृतः ॥ ५३ ॥ प्रभाते मलमूत्राभ्यां क्षुत्तृड्भ्यां मध्यगे रवौ ॥ रात्रौ मदननिद्राभ्यां बाध्यन्ते मूढमानवाः
॥ ५४ ॥ स्वदेहधनदारादिनिरताः सर्व्वजन्तवः ॥ जायन्ते च म्रियन्ते च हा हन्ताज्ञानमोहिताः ॥ ५५ ॥ तस्मात्सङ्गः सदा त्याज्यः सचेत्त्यक्तुं न
शक्यते॥महद्भिः सह कर्त्तव्यः सन्तः सङ्गस्य भेषजम् ॥५६॥सत्सङ्गश्च विवेकश्च निर्म्मलं नयनद्वयम्॥यस्य नास्ति नरः सोऽन्धः कथं न स्यादमार्गगः
॥५७॥स्वस्ववर्णाश्रमाचारनिरताः सर्व्वमानवाः ॥ न जानन्ति परं धर्म्मं वृथा नश्यन्ति दाम्भिकाः॥५८॥क्रियायासपराः केचिद्व्रतचर्य्यादिसंयुताः ॥
अज्ञानसंवृतात्मानः सञ्चरन्ति प्रचारकाः ॥ ५९ ॥ नाममात्रेण सन्तुष्टाः कर्म्मकाण्डरता नराः ॥ मन्त्रोच्चारणहोमाद्यैर्भ्रामिताः क्रतुविस्तरैः ॥ ६० ॥
एकभुक्तोपवासाद्यैर्नियमैः कायशोषणैः ॥ मूढाः परोक्षमिच्छन्ति मम मायाविमोहिताः ॥ ६१ ॥ देहदण्डनमात्रेण का मुक्तिरविवेकिनाम् ॥ वल्मी
कताडनादेव मृतः किन्नु महोरगः ॥ ६२ ॥ जटाभाराजिनैर्युक्ता दाम्भिका वेषधारिणः ॥ भ्रमन्ति ज्ञानिवल्लोके भ्रामयन्ति जनानपि ॥ ६३ ॥
संसारजसुखासक्तं ब्रह्मज्ञोऽस्मीतिवादिनम् ॥ कर्म्मब्रह्मोभयभ्रष्टं तं त्यजेदन्त्यजं यथा ॥ ६४ ॥ गृहारण्यसमा लोके गतव्रीडा दिगम्बराः ॥
चरन्ति गर्द्दभाद्याश्च विरक्तास्ते भवन्ति किम् ॥ ६५ ॥ मृद्भस्मोद्धूलनादेव मुक्ताः स्युर्यदि मानवाः ॥ मृद्भस्मवासी नित्यं श्वा स किं मुक्तो भवि
ष्यति ॥ ६६ ॥ तृणपर्णोदकाहाराः सततं वनवासिनः ॥ जम्बूकाखुमृगाद्याश्च तापसास्ते भवन्ति किम् ॥ ६७ ॥ आजन्ममरणान्तञ्च गङ्गादित

१ गर्द्दं दाराः ।

टिनीस्थिताः ॥ मण्डूकमत्स्यप्रमुखा योगिनस्ते भवन्ति किम् ॥ ६८ ॥ पारावताः शिलाहाराः कदाचिदपि चातकाः ॥ न पिबन्ति महीतोयं व्रतिनस्ते भवन्ति किम् ॥ ६९ ॥ तस्मान्नित्यादिकं कर्म्म लोकरञ्जनकारकम् ॥ मोक्षस्य कारणं साक्षात्तत्त्वज्ञान खगेश्वर ॥ ७० ॥ षड्दर्शनमहाकूपे पतिताः पशवः खग ॥ परमार्थं न जानन्ति पशुपाशनियन्त्रिताः ॥ ७१ ॥ वेदशास्त्रार्णवे घोरैरुह्यमाना इतस्ततः ॥ षडूर्म्मिनिग्रहग्रस्तास्तिष्ठन्ति हि कुतार्किकाः ॥ ७२ ॥ वेदागमपुराणज्ञः परमार्थं न वेत्ति यः ॥ विडम्बकस्य तस्यैव तत्सर्व्वं काकभाषितम् ॥ ७३ ॥ इदं ज्ञानमिदं ज्ञेयमिति चिन्तासमाकुलाः ॥ पठन्त्यहर्निशं शास्त्रं परतत्त्वपराङ्मुखाः ॥ ७४ ॥ वाक्यच्छन्दोनिबन्धेन काव्यालङ्कारशोभिताः ॥ चिन्तया दुःखिता मूढास्तिष्ठन्ति व्याकुलेन्द्रियाः ॥ ७५ ॥ अन्यथा परमं तत्त्वं जनाः क्लिश्यन्ति चान्यथा ॥ अन्यथा शास्त्रसद्भावो व्याख्यां कुर्व्वन्ति चान्यथा ॥ ७६ ॥ कथयन्त्युन्मनीभावं स्वयं नानुभवन्ति च ॥ अहङ्कारस्ताः केचिदुपदेशादिवर्ज्जिताः ॥ ७७ ॥ पठन्ति वेदशास्त्राणि बोधयन्ति परस्परम् ॥ न जानन्ति परं तत्त्वं दर्व्वी पाकरसं यथा ॥ ७८ ॥ शिरो वहति पुष्पाणि गन्धं जानाति नासिका ॥ पठन्ति वेदशास्त्राणि दुर्लभो भावबोधकः ॥ ७९ ॥ तत्त्वमात्मस्थमज्ञात्वा मूढः शास्त्रेषु मुह्यति ॥ गोपः कक्षागते च्छागे कूपे पश्यति दुर्म्मतिः ॥ ८० ॥ संसारमोहनाशाय शाब्दबोधो न हि क्षमः ॥ न निवर्त्तेत तिमिरं कदाचिद्दीपवार्त्तया ॥ ८१ ॥ प्रज्ञाहीनस्य पठनं यथान्धस्य च दर्पणम् ॥ अतः प्रज्ञावतां शास्त्रं तत्त्वज्ञानस्य लक्षणम् ॥ ८२ ॥ इदं ज्ञानमिदं ज्ञेयं सर्व्वन्तु श्रोतुमिच्छति ॥ दिव्यवर्षसहस्राच्च शास्त्रान्तं नैव गच्छति ॥ ८३ ॥ अनेकानि च शास्त्राणि स्वल्पायुर्विघ्नकोटयः ॥ तस्मात्सारं विजानीयात्क्षीरं हंस इवाम्भसि ॥ ८४ ॥ अभ्यस्य वेदशास्त्राणि तत्त्वं ज्ञात्वाथ बुद्धिमान् ॥ पलालमिव धान्यार्थी सर्व्वशास्त्राणि सन्त्यजेत् ॥ ८५ ॥ यथामृतेन तृप्तस्य नाहारेण प्रयोजनम् ॥ तत्त्वज्ञस्य तथा तार्क्ष्य न शास्त्रेण प्रयोजनम् ॥ ८६ ॥ न वेदाध्ययनान्मुक्तिर्न शास्त्रपठनादपि ॥ ज्ञानादेव हि कैवल्यं नान्यथा विनतात्मज ॥ ८७ ॥ नाश्रमः कारणं मुक्तेर्दर्शनानि न कारणम् ॥ तथैव सर्व्वकर्म्माणि ज्ञानमेव हि कारणम् ॥ ८८ ॥ मुक्तिदा गुरुवागेका विद्याः सर्व्वा विडम्बिकाः ॥ शास्त्रभारसहस्रेषु ह्येकं सञ्जीवनं परम् ॥ ८९ ॥ अद्वैतं हि शिवं प्रोक्तं क्रियायापरिवर्ज्जितम् ॥ गुरुवक्त्रेण लभ्येत नाधीतागमकोटिभिः ॥ ९० ॥ आगमोक्तं विवेकोत्थं द्विधा ज्ञानं प्रचक्षते ॥ शब्दब्रह्मागममयं परं ब्रह्म विवेकजम् ॥ ९१ ॥ अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे ॥ समं तत्त्वं न जानन्ति द्वैताद्वैतविवर्ज्जितम् ॥ ९२ ॥ द्वे पदे बन्धमोक्षाय नममेति ममेति च ॥ ममेति बध्यते जन्तुर्नममेति प्रमुच्यते ॥ ९३ ॥ तत्कर्म्म यन्न बन्धाय सा विद्या या विमुक्तिदा ॥ आ

यासायापरं कर्म्म विद्यान्या शिल्पनैपुणम् ॥ ९४ ॥ यावत्कर्म्माणि दीप्यन्ते यावत्संसारवासना ॥ यावदिन्द्रियचापल्यं तावत्तत्त्वकथा कुतः ॥ ९५ ॥ यावद्देहाभिमानश्च ममता यावदेव हि ॥ यावत्प्रयत्नवेगोऽस्ति यावत्संकल्पकल्पना ॥ ९६ ॥ यावन्नो मनसः स्थैर्य्यं न यावच्छास्त्रचिन्तनम् ॥ यावन्न गुरुकारुण्यं तावत्तत्त्वकथा कुतः ॥ ९७ ॥ तावत्तपो व्रतं तीर्थं जपहोमार्च्चनादिकम् ॥ वेदशास्त्रागमकथा यावत्तत्त्वं न विन्दति ॥९८॥ तस्मात्सर्व्वप्रयत्नेन सर्व्वावस्थासु सर्व्वदा ॥ तत्त्वनिष्ठो भवेत्तार्क्ष्य यदीच्छेन्मोक्षमात्मनः ॥ ९९ ॥ धर्म्मज्ञानप्रसूनस्य स्वर्गमोक्षफलस्य च ॥ तापत्रयादिसन्तप्तश्छायां मोक्षतरोः श्रयेत् ॥ १०० ॥ तस्माज्ज्ञानेनात्मतत्त्वं विज्ञेयं श्रीगुरोर्मुखात् ॥ सुखेन मुच्यते जन्तुर्घोरसंसारबन्धनात् ॥१०१॥ तत्त्वज्ञस्यान्तिमं कृत्यं शृणु वक्ष्यामि तेऽधुना ॥ येन मोक्षमवाप्नोति ब्रह्म निर्वाणसंज्ञकम् ॥ १०२ ॥ अन्तकाले तु पुरुष आगते गतसाध्वसः ॥ छिन्द्यादसंगशस्त्रेण स्पृहां देहेऽनु या च तम् ॥ १०३ ॥ गृहात्प्रव्राजितो धीरः पुण्यतीर्थजलाप्लुतः ॥ शुचौ विविक्त आसीनो विधिवत्कल्पितासने ॥ १०४ ॥ अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम् ॥ मनो यच्छेज्जितश्वासो ब्रह्म बीजमविस्मरन् ॥ १०५ ॥ नियच्छेद्विषयेभ्योऽक्षान्मनसा बुद्धिसारथिः ॥ मनः कर्म्मभिराक्षिप्तं शुभार्थे धारयेद्धिया ॥ १०६ ॥ अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम् ॥ एवं समीक्ष्य चात्मानमात्मन्याधाय निष्कले ॥ १०७ ॥ ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन् ॥ यः प्रयाति त्यजन्देहं स याति परमां गतिम् ॥ १०८ ॥ न यत्र दाम्भिका यान्ति ज्ञानवैराग्यवर्ज्जिताः ॥ सुधियस्तां गतिं यान्ति तानहं कथयामि ते ॥ १०९ ॥ निर्मानमोहा जितसंगदोषा अध्यात्मनित्या विनिवृत्तकामाः ॥ द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ११० ॥ ज्ञानह्रदे सत्यजले रागद्वेषमलापहे ॥ यः स्नाति मानसे तीर्थे स वै मोक्षमवाप्नुयात् ॥ १११ ॥ प्रौढवैराग्यमास्थाय भजते मामनन्यभाक् ॥ पूर्णदृष्टिः प्रसन्नात्मा स वै मोक्षमवाप्नुयात् ॥ ११२ ॥ त्यक्त्वा गृहं च यस्तीर्थे निवसेन्मरणोत्सुकः ॥ मुक्तिक्षेत्रेषु म्रियते स वै मोक्षमवाप्नुयात् ॥ ११३ ॥ अयोध्या मथुरा माया काशी काञ्ची अवन्तिका ॥ पुरी द्वारवती ज्ञेयाः सप्तैता मोक्षदायिकाः ॥ ११४ ॥ इति ते कथितं तार्क्ष्य मोक्षधर्म्मं सनातनम् ॥ ज्ञानवैराग्यसहितं श्रुत्वा मोक्षमवाप्नुयात् ॥ ११५ ॥ मोक्षं गच्छन्ति तत्त्वज्ञा धार्म्मिकाः स्वर्गतिं नराः ॥ पापिनो दुर्गतिं यान्ति संसरन्ति खगादयः ॥ ११६ ॥ सूत उवाच ॥ स्वप्रश्नोत्तरराद्धान्तमेवं भगवतो मुखात् ॥ श्रुत्वा हृष्टतनुस्तार्क्ष्यो ननाम जगदीश्वरम् ॥ ११७ ॥ सन्देहो मे महान्नष्टो भवद्वाक्यविरोचनात् ॥ इत्युक्त्वा विष्णुमामन्त्र्य स गतः कश्यपाश्रमम् ॥ ११८ ॥ सद्यो देहान्तरं याति यथा याति विल

म्बतः ॥ अनयोरुभयोश्चैव न विरोधस्तथैव वः ॥ ११९ ॥ सर्व्वमाख्यातवांस्तात श्रुतो भगवतो यथा ॥ मारीचोऽपि मुदं लेभे श्रुत्वा वाक्यं रमापतेः ॥ १२० ॥ अपाकृतस्तु सन्देहो ब्राह्मणा भवतां मया ॥ उक्तं सुपर्णसंज्ञन्तु पुराणं परमाद्भुतम् ॥ १२१ ॥ इदमाप हरेस्तार्क्ष्यस्तार्क्ष्यादाप ततो भृगुः ॥ भृगोर्वसिष्ठः संप्राप वामदेवस्ततः पुनः ॥ १२२ ॥ पराशरमुनिः प्राप तस्माद्व्यासस्ततो ह्यहम् ॥ मया तु भवतां प्रोक्तं परं गुह्यं हरेरिदम् ॥ १२३ ॥ य इदं शृणुयान्मर्त्यो यो वाप्यभिदधाति च ॥ इहामुत्र च लोके स सर्व्वत्र सुखमाप्नुयात् ॥ १२४ ॥ व्रजतः संयमन्यां यद्दुःखमत्र निरूपितम् ॥ अस्य श्रवणतः पुण्यं तन्मुक्तो जायते ततः ॥ १२५ ॥ अत्रोक्तकर्म्मपाकादिश्रवणाच्च नृणामिह ॥ वैराग्यमावहेद्यस्मात्तस्माच्छ्रोतव्यमेव च ॥ १२६ ॥ भजत जितहृषीकाः कृष्णमेनं मुनीशं समजनि बत यस्माद्गीः सुधासारधारा ॥ पृषतमपि यदीयं वर्णरूपं निपीय श्रुतिपुटचुलुकेन प्राप्नुयादात्मनैक्यम् ॥ १२७ ॥ ॥ व्यास उवाच ॥ इति सूतमुखोद्गीर्णांसर्व्वशास्त्रार्थमण्डिताम् ॥ वैष्णवीं वाक्सुधां पीत्वा ऋषयस्तुष्टिमाययुः ॥ १२८ ॥ प्रशशंसुस्तथान्योन्यं सूतं सर्व्वार्थदर्शिनम् ॥ प्रहर्षमतुलं प्रापुर्मुनयः शौनकादयः ॥१२९॥ इति हरिवचनानि सूतवाचा खगपतिसंशयभेदकानि यानि ॥ स मुनिरपि निशम्य शौनकेन्द्रो बहुतरमानयति स्म चात्मनि स्वम् ॥१३०॥ अपूजयंस्ते मुनयस्तदानीमुदारवाग्भिर्मुहुरेव सूतम् ॥ धन्योऽसि सूत त्वमिहेत्युदैरयन्व्यसर्ज्जयंस्तं च निर्वर्त्तितेऽध्वरे ॥ १३१ ॥ पुराणं गारुडं पुण्यं पवित्रं पापनाशनम् ॥ शृण्वतां कामनापूरं श्रोतव्यं सर्व्वदैव हि ॥ १३२ ॥ श्रुत्वा दानानि देयानि वाचकायाखिलानि च ॥ पूर्व्वोक्तशयनादीनि नान्यथा सफलं भवेत् ॥ १३३ ॥ पुराणं पूजयेत्पूर्व्वं वाचकं तदनन्तरम् ॥ वस्त्रालङ्कारगोदानैर्दक्षिणाभिश्च सादरम् ॥ १३४ ॥ अन्नदानैर्हेमदानैर्भूमिदानैश्च भूरिभिः ॥ पूजयेद्वाचकं भक्त्या बहुपुण्यफलाप्तये ॥ १३५ ॥ यश्चेदं शृणुयान्मर्त्यो यथापि परिकीर्त्तयेत् ॥ विहाय यातनां घोरां धूतपापो दिवं व्रजेत् ॥ १३६ ॥ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे श्रीकृष्णगरुडसंवादे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे मोक्षोपायनिरूपणं नामैकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

॥ समाप्तोयमुत्तरखण्डे द्वितीयांशो धर्मकाण्डः प्रेतकल्पः ॥ २ ॥



श्रीगणेशाय नमः ॥ श्रीलक्ष्मीनृसिंहाय नमः ॥ श्रीदत्तात्रेयाय नमः ॥ श्रीवेदव्यासाय नमः॥ श्रीहयग्रीवाय नमः ॥ अथ गारुडे ब्रह्मकाण्डस्तृतीय आर भ्यते ॥ॐ मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्त्तिमान् गोपानां स्वजनोऽसतां क्षितिभृतां शास्ता स्वपित्रोः शिशुः ॥ मृत्युर्भोजपतेर्विधातृ विहित स्तत्त्वं परं योगिनां वृष्णीनां च पतिः सदैव शुशुभे रंगेऽच्युतः साग्रजः ॥ १ ॥ नमो नारायणायेति तस्मै वै मूलरूपिणे ॥ नमस्कृत्य प्रव क्ष्यामि नारायणकथामिमाम् ॥२॥ शौनकाद्या महात्मानो ह्यृषयो ब्रह्मवादिनः ॥ नैमिषाख्ये महापुण्ये तपस्तेपुर्महत्तरम् ॥ ३ ॥ जितेंद्रिया जिताहाराः संतः सत्यपरायणाः ॥ यजंतः परया भक्त्या विष्णुमाद्यं जगद्गुरुम् ॥ ४ ॥ गृणंतः परमं ब्रह्म जगच्चक्षुर्महौजसः ॥ सर्वशास्त्रार्थतत्त्वज्ञास्तेपुर्नैमिष कानने ॥५॥ यज्ञैर्यज्ञपतिं केचिज्ज्ञानैर्ज्ञानात्मकं परम् ॥ केचित्परमया भक्त्या नारायणमपूजयन् ॥६॥ एकदा तु महात्मानः समाजं चक्रुरुत्तमाः ॥ धर्मार्थकाममोक्षाणामुपायं ज्ञातुमिच्छवः ॥ ७ ॥ षड्विंशतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ॥ तेषां शिष्यप्रशिष्याणां संख्या वक्तुं न शक्यते ॥ ८ ॥ मुनयो भावितात्मानो मिलितास्ते महौजसः ॥ लोकानुग्रहकर्त्तारो वीतरागा विमत्सराः ॥ ९ ॥ कथं हरौ मनुष्याणां भक्तिरव्यभिचारिणी ॥ केन सिध्येत्तु सकलं कर्म त्रिविधमात्मनः ॥ १० ॥ इत्येवं प्रष्टुमात्मानमुद्यतान्प्रेक्ष्य शौनकः ॥ सांज लिर्वाक्यमाह स्म विनयावनतः सुधीः ॥ ११ ॥ शौनक उवाच ॥ आस्ते सिद्धाश्रमे पुण्ये सूतः पौराणिकोत्तमः ॥ स एतदखिलं वेत्ति व्यासशिष्यो यतीश्वरः ॥ १२ ॥ तस्मात्तमेव पृच्छाम इत्येवं शौनको मुनिः ॥ अथ ते ऋषयो जग्मुः पुण्यं सिद्धाश्रमं ततः ॥ १३ ॥ पप्रच्छुस्ते सुखासीनं नैमिषारण्यवासिनः ॥ ऋषय ऊचुः ॥ वयं त्वतिथयः प्राप्तास्त्वातिथेयोसि सुव्रत ॥ १४ ॥ स्नानदानोपचारेण पूज यित्वा यथाविधि ॥ केन विष्णुः प्रसन्नः स्यात्स कथं पूज्यते नरैः ॥ १५ ॥ मुक्तिसाधनभूतं च ब्रूहि तत्त्वविनिर्णयम् ॥ सूत उवाच ॥ शृणुध्वमृषयः सर्वे हरिं तत्त्वविनिर्णयम् ॥ १६ ॥ नत्वा विष्णुं श्रियं वायुं भारतीं शेषसंज्ञकम् ॥ द्वैपायनं गुरुं कृष्णं प्रवक्ष्यामि यथामति ॥ १७ ॥ नास्ति नारा यणसमं न भूतं न भविष्यति ॥ एतेन सत्यवाक्येन सर्वार्थान्साधयाम्यहम् ॥ १८ ॥ शौनक उवाच ॥ किमर्थं नमनं विष्णोर्ग्रंथादौ मुनिसत्तम ॥ कर्त्तव्यं ब्रूहि मे ब्रह्मन्कृपया मम सुव्रत ॥ १९ ॥ ततः श्रियं ततो वायुं भारतीं च ततः परम् ॥ अंते व्यासं किमर्थं च त्वं नमस्कृतवानसि ॥ सूतसूत महाभाग ब्रूहि कारणमत्र च ॥ २० ॥ सूत उवाच ॥ आदौ वंद्यः सर्ववेदैकवेद्यो वेदे शास्त्रे सेतिहासे पुराणे ॥ सत्तां प्रायो विष्णुरेवैक एव प्रकाशते

१ आर्षस्तङ् ।

ऽतो नम्य एको हरिर्हि ॥ २१ ॥ सर्वत्र मुख्यस्त्वधिकोन्यतोपि स एव नम्यो न च शंकराद्याः ॥ नमंति येऽविनयाच्छंकरं तु विनायकं चंडिकां रेणुकां च ॥ २२॥ तथा सूर्यं भैरवं मातारिश्व तथा वाणीं गिरिजां वै श्रियं च ॥ सर्वेपि ते वैष्णवा नैव लोके न तद्भक्ता वेति चार्या वदन्ति ॥२३॥ न पार्थिक्यान्नमनं कार्यमेव प्रीणंति नैता देवताः पूजनेन ॥ पूजां गृहीत्वा देवताश्चैव सर्वाः किंचिद्दत्वा फलदानेन तांश्च ॥ २४ ॥ संतर्प्य तुष्टैः स्वमनोनुसारात्तैः कारितां काम्यपूजां तथैव ॥ निवेदयित्वा परदेवतायां विष्णौ हरौ श्रीपुरुषादिवंद्ये ॥ २५ ॥ इहापरत्रापि सुखेतराणि दास्यन्ति पश्चादघरं वै तमश्च ॥ अतो ह्येते नैव पूज्या न नम्या मोक्षेच्छुभिर्ब्राह्मणाद्यैर्द्विजेंद्र ॥ २६ ॥ तथैव सर्वाश्रमिभिश्च नित्यं महाविपत्तावपि विप्रवर्याः ॥ श्रीकाम्यया ये तु भजंति नित्यं श्रीब्रह्मरुद्रेंद्रयमादिदेवान् ॥ २७ ॥ इहैव भुंजंति महच्च दुःखं महापदः कुष्ठभगंदरादीन् ॥ नमंति येऽवैष्णवान्ब्रह्मरुद्रवायुप्रतीकान्नैव ते विष्णुभक्ताः॥ २८ ॥ अभिप्रायं त्वत्र वक्ष्ये मुनींद्राः परं गोप्यं हृदि धार्यं हि तद्धि ॥ वायोः प्रतीकं पूज्यमेवेह विप्रा न ब्रह्मरुद्रादिप्रतीकमेव ॥ २९ ॥ पूजाकाले देवदेवस्य विष्णोर्वायोः प्रतीकं योग्यभागे निधाय ॥ अंतर्गतं तस्य वायोर्हरिं च लक्ष्मीपतिं पूजयित्वा हि सम्यक् ॥ ३० ॥ पश्चाद्वायोः सुप्रतीकं च सम्यङ् निर्माल्यशेषेण हरेः समर्चयेत् ॥ पृथक्च स्रग्धूपविलेपनादिपूजां प्रकुर्वंति च ये विमूढाः ॥ ३१ ॥ तेषां दुःखमिह लोके परत्र भविष्यते नात्र विचार्यमस्ति ॥ प्रायश्चित्तं स्वस्ति विप्राः कथंचित्तत्कुर्वंतु स्मरणं नाम विष्णोः ॥ ३२ ॥ पाषण्डरुद्रादिकसंप्रतिष्ठितान्हरेर्वायोः शंकरस्य प्रतीकान् ॥ नमंति ये फलबुद्ध्या विमूढास्तेषां फलं शाश्वतं दुःखमेव ॥ ३३ ॥ वायोः प्रतीकं यदि विप्रवर्यैः प्रतिष्ठितं चेन्नमनं हि कार्यम् ॥ नैवेद्यशेषेण हरेश्च विष्णोः पूजा कृता चेन्न हि दोषलेशः॥३४॥ गुरुर्हि मुख्यो हनुमज्जानिर्महान्नामांघ्रिभक्तो हनुमान्सदैव ॥ एवं विदित्वा परमं हरिं च पुत्रं पुनर्मुख्यदेवस्य वायोः ॥ ३५ ॥ नमस्कारो नान्यथा विप्रवर्या आधीयतां हृदि सर्वं रहस्यम् ॥ ये वैष्णवा वैष्णवदासभृत्याः सर्वेपि ते सर्वदा विष्णुमेव ॥ ३६ ॥ नमंति ये वै प्रतिपादयंति तथैव पुण्यानि च सात्त्विकानि ॥ नमंति ये वासुदेवं हरिं च सम्यक्स्वशक्त्या प्रतिपादयंति ॥ ३७ ॥ प्रवृत्तिमार्गेण न पूजयंति ह्यापत्काले परदैवं तदन्यम् ॥ ते वैष्णवा वैष्णवदासभृत्या अन्ये च सर्वेऽवैष्णवत्रमात्रकाः स्मृताः ॥ ३८ ॥ उपक्रमैरुपसंहारस्य लिंगैर्हरिं गुरुं ह्यंतरेणैव यांति ॥ तानेवाहुः सत्पुराणानि विप्राः कलौ युगे नाभ्यसूयंति सर्वे ॥ ३९ ॥ यतो हितान्ये प्रतिपादयंति प्रवृत्तिधर्मान्स्वस्ववर्णानुरूपान् ॥ अतो ह्यसूयंति सदा विमूढाः कलौ हि विप्राः प्रचुरा हि तेपि ॥ ४० ॥ न चास्ति

१ मातरिश्वानमित्यर्थः । २ रुद्रापेक्षया शङ्करो भिन्नः । ३ तदिदं वातूलकारणागमादिग्रन्थेभ्योवसेयम् ।

विष्णोः सदृशं च दैवतं न चास्ति वायोः सदृशो गुरुश्च ॥ न चास्ति तीर्थं सदृशं विष्णुपद्याः न विष्णुभक्तेन समोऽस्ति भक्तः ॥ ४१ ॥ अन्यानि विष्णोः प्रतिपादकानि सर्वाणि ते सात्त्विकानीति चाहुः ॥ श्राव्याणि तान्येव मनुष्यलोके श्राव्याणि नान्यानि च दुःखदानि ॥ ४२ ॥ कलौ युगे सर्वं पुराणमध्ये त्रीण्येव मुख्यानि हरिप्रियाणि ॥ मुख्यं पुराणं हि कलौ नृणां च श्रेयस्करं भागवतं पुराणम् ॥ ४३ ॥ पूर्वं हि सृष्टिः प्रतिपाद्यते त्र यतो ह्यतो भागवतं परं स्मृतम् ॥ यस्मिन्पुराणे कथयंति सृष्टिं ह्यादौ विष्णोर्ब्रह्मरुद्रादिकानाम् ॥ ४४ ॥ नानार्थमेवं कथयन्ति विप्र नीचोच्चरूपं ज्ञानमाहुर्महांतः॥ तेनैव सिद्धं प्रवदंति सर्वे ह्यतः परं भागवतं पुराणम् ॥४५॥ ततः परं विष्णुपुराणमाहुस्ततः परं गारुडसंज्ञकं च ॥ त्रीण्येव मुख्यानि कलौ नृणां तु तथा विशेषा गारुडे किंचिदस्ति ॥४६॥ शृणुध्वं वै तं विशेषं च विप्राद्यैश्चैर्युक्तं गारुडाख्यं पुराणम्॥ आद्यांशं वै कर्मकांडं वदंति द्वितीयांशं धर्मकाण्डं तमाहुः ॥ ४७ ॥ तृतीयांशं ब्रह्मकांडं वदंति तेषां मध्ये त्वन्तिमोयं वरिष्ठः ॥ तृतीयांशश्रवणात्पुण्यमाहुस्तुल्यं पुण्यं भागवतस्य विप्राः ॥ ४८ ॥ तृतीयांशे पठिते वेदतुल्यं फलं भवेन्नात्र विचार्यमस्ति ॥ तृतीयांशश्रवणादेव विप्राः फलं प्रोक्तं पठतोप्यर्थमेवम् ॥ ४९ ॥ तृतीयांशश्रवणादर्थतश्च पुण्यं चाहुः पठतो वै दशांशम् ॥ ततो वरं मत्स्यपुराणमाहुस्ततो वरं कूर्मपुराणमाहुः ॥ ५० ॥ तथैव वै वायुपुराणमाहुस्त्रीण्येव चाहुः सात्त्विकानीति लोके ॥ तत्रापि किंचिद्वेदितव्यं भवेच्च पुराणषट्के सत्त्वरूपे मुनींद्राः ॥ ५१ ॥ सत्त्वाधमे मात्स्यकौर्मे तथाहुर्वायुं चाहुः सात्त्विकं मध्यमं च ॥ विष्णोः पुराणं भागवतं पुराणं सत्त्वोत्तमं गारुडं चाहुरार्याः ॥५२॥ स्कांदं पाद्मं वामनं वै वराहं तथाग्नेयं भविष्यं पर्वसृष्टौ॥ एतान्याहू राजसानीति विप्रास्तत्रैकदेशः सात्त्विकस्तामसश्च ॥ ५३ ॥ रजःप्राचुर्याद्राजसानीति चाहुः श्राव्याणि नैतानि मुमुक्षुभिः सदा ॥ तेषां मध्ये सात्त्विकांशाश्च संति तेषां श्रुतेर्गारुडीयं फलं च ॥ ५४ ॥ ब्रह्मांडलैंग्ये ब्रह्मवैवर्त्तकं वै मार्कंण्डेयं ब्राह्ममादित्यकं च ॥ एतान्याहुस्तामसानीति विप्रास्तत्रैकदेशः सात्त्विको राजसश्च ॥ ५५ ॥ श्राव्याणि नैतानि मनुष्यलोके तत्त्वेच्छुभिस्तामसानीत्यतो हि॥ तेषु स्थिताः सात्त्विकांशा मुनींद्रास्तेषां श्रुतिर्गारुडैकांघ्रितुल्या ॥ ५६ ॥ अल्पान्युपपुराणानि वदंत्यष्टादशानि च ॥ विष्णुधर्मोत्तरं चैव तंत्रं भागवतं तथा ॥५७॥ तत्त्वसारं नारसिंहं वायुप्रोक्तं तथैव च ॥ तथा हंसपुराणं च षडेतानि मुनीश्वराः ॥ ५८ ॥ सात्त्विकान्येव जानीध्वं प्रायशो नात्र संशयः ॥ एतेषां श्रवणादेव गारुडार्धफलं श्रुतम् ॥ ५९ ॥ भविष्योत्तरनामानं बृहन्नारदमेव च ॥ यमनारदसंवादं लघुनारदमेव च ॥ ६० ॥ विनायकपुराणं च बृहद्ब्रह्मांडमेव च ॥ एतानि राजसान्याहुः श्रवणाद्भक्तिरुत्तमा ॥ ६१ ॥ गारुडात्पादतुल्यं च फलं चाहुर्मनीषिणः ॥ पुराणं भागवतं शैवं नंदिप्रोक्तं

तथैव च ॥ ६२ ॥ पाशुपत्यं रैणुकं च भैरवं च तथैव च ॥ एतानि तामसान्याहुर्हरितत्त्वार्थवेदिनः ॥६३॥ एतेषां श्रवणाद्विप्रा गारुडाद्धर्ममेव च ॥
सर्वेष्वपि पुराणेषु श्रेष्ठं भागवतं स्मृतम् ॥ ६४ ॥ वेदैस्तुल्य समं पाठे श्रवणे च तदर्धकम् ॥ अर्थतः श्रवणे चास्य पुण्यं दशगुणं स्मृतम् ॥ ६५ ॥
वक्तुः स्याद्द्विगुणं पुण्यं व्याख्यातुश्च तथाधिकम ॥ अनंतवेदैस्साम्यमाहुर्महांतः भारान्महत्त्वाद्भारतस्यापि विप्राः ॥ ६६ ॥ वेदोभ्योस्य त्वर्थत
श्चाधिकत्वं वदंति वै विष्णुरहस्यवेदिनः ॥ ६७ ॥ तत्र श्रेष्ठां गीतिकामाहुरार्यास्तथैव विष्णोर्नामसाहस्रकं च ॥ तयोस्तत्र श्रवणाद्भारतस्य दशाधिकं
फलमाहुर्महांतः ॥ ६८ ॥ दैत्याः सर्वे विप्रकुलेषु भूत्वा कृते युगे भारते षट्सहस्र्याम् ॥ निष्कास्य कांश्चिन्नवनिर्मितानां निवेशनं तत्र कुर्वंति नित्यम्
॥ ६९ ॥ मत्वा हरिं भगवान्व्यासरूपी चक्रे तदा भागवतं पुराणम् ॥ तथा समाख्याय च वैष्णवं ततः परं गारुडाख्यं स चक्रे ॥ ७० ॥ अतो हि
गारुडं मुख्यं पुराणं शास्त्रसंमतम् ॥ गारुडेन समं नास्ति विष्णुधर्मप्रदर्शने ॥ ७१ ॥ यथा सुराणां प्रवरो जनार्दनो यथायुधानां प्रवरः सुदर्शनम् ॥
यथाश्वमेधः प्रवरः क्रतूनां छिन्नेषु भक्तेषु तथैव रुद्रः ॥ ७२ ॥ नदीषु गंगा जलजेषु पद्ममच्छिन्नभक्तेषु तथैव वायुः ॥ तथा पुराणेषु च गारुडं च
मुख्यं तदाहुर्हरितत्त्वदर्शने ॥ ७३ ॥ गारुडाख्यपुराणे तु प्रतिपाद्यो हरिः स्मृतः ॥ अतो हरिर्नमस्कार्यो गम्यो योग्यो हरिः स्मृतः ॥ ७४ ॥
भाग्यात्मकत्वाच्छ्रीदेव्या नमनं तदनु स्मृतम् ॥ परो नरोत्तमो वा स साधकेशोपि च स्मृतः ॥ ७५ ॥ अतो नम्यो वायुरपि पुराणादौ द्विजोत्तमाः ॥
भारती वाक्यरूपत्वान्नम्या वायोरनंतरम् ॥ ७६ ॥ उपसाधको नरः प्रोक्तो यतोतस्तदनंतरम् ॥ नम्य इत्यच्यते सद्भिस्तारतम्येन सर्वदा ॥ ७७ ॥
अतो व्यासं नमस्कुर्याद्ग्रंथकर्तृत्वहेतुतः ॥ शौनक उवाच ॥ व्यासस्य नमनं ह्यंते कथं कार्यं महात्मनः ॥ ७८ ॥ अंते च वन्दने तस्य कारणं
ब्रूहि सुव्रत ॥ सूत उवाच ॥ विष्णोरनंतरं व्यासनमनं मुख्यमेव हि ॥ ७९ ॥ हरिरेव यतो व्यासो वाच्यचक्रस्वरूपकः ॥ व्यासो नैव समत्वेन
प्रोक्तो भगवतो हरेः ॥ ८० ॥ तत्रापि कारणं वक्ष्ये सादरेण मुनीश्वराः ॥ व्यासस्तु कश्चन ऋषिः पुराणे तामसे स्मृतः ॥ ८१ ॥ इति ज्ञाना
वलंबेन दैत्या दैत्यानुगैः समाः ॥ प्रविशंति ह्यन्धतम इति त्वंते नमस्कृतः ॥ ८२ ॥ यदिदं परमं गोप्यं हृदि धार्यं न संशयः ॥ पराणां
नम्यमेवोक्तं प्रतिपाद्यं यतोत्र हि ॥ ८३ ॥ समासव्यासभावाद्धि पराणां तत्प्रतीयते ॥ वास्तवं तं न जानीयुरुपजीव्यो यतो हरिः ॥ ८४ ॥
हरिर्व्यासस्त्वेक एव व्यासस्तु हरिवत्स्मृतः ॥ उपजीव्यतदीशत्वे तयोरेव न संशयः ॥ ८५ ॥ ईशकोटिप्रविष्टत्वाच्छ्रियः स्वामित्वमीरितम् ॥
त्रयाणामुपजीव्यत्वात्सेव्यत्वात्स्वामिता स्मृताः ॥ ८६ ॥ वाय्वादीनां त्रयाणां च सेव्यत्वात्सेव्यता स्मृता ॥ भूभारहरणे विष्णोः[1] प्रधा

१ द्वयोरप्युपजीव्यत्वादिति पाठो युक्तः । वक्ष्यमाणवाय्वभिप्रायेण वा त्रयाणामिति पाठोपि साधुः ।

नांगं हि मारुतिः ॥ ८७ ॥ वाक्यरूपा भारती तु द्वितीयांगं हि सा स्मृता ॥ तृतीयांगं हरेः शेषो न नम्याः साम्यतो हरेः ॥ ८८ ॥ प्रतिपाद्या मुख्यतया नम्या एव समीरिताः ॥ अवांतराश्च वाय्वाद्या न नम्यास्तेन ते स्मृताः ॥ ८९ ॥ भीष्मद्रोणादिनामानि भीमादिष्वेव मुख्यतः ॥ वाचकानि यतो नित्यं तन्नम्यास्ते मुनीश्वराः ॥ ९० ॥ पराणामेव नम्यत्वं प्रतिपाद्यत्वमेव हि ॥ एतत्सर्वं मयाख्यातं किमन्यच्छ्रोतुमिच्छथ ॥ ९१ ॥ इति श्रीगारुडे महापुराणे सूतशौनकसंवादे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे सात्त्विकादिपुराणविभागनम्यानम्यदेवविभागादिविषयनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥ श्रीशौनक उवाच ॥ कथं ससर्ज भगवांस्तत्तत्तत्त्वाभिमानिनः ॥ सृष्टिक्रमं न जानामि देवानां ह्यन्तरं मुने ॥ १ ॥ शौनकेनैवमुक्तस्तु सूतो वचनमब्रवीत् ॥ सूत उवाच ॥ सम्यग्व्यवसिता बुद्धिस्तव ब्रह्मर्षिसत्तम ॥ २ ॥ एवमेव कृतः प्रश्नो हरौ तु गरुडेन वै ॥ यदुक्तवान्हरिस्तस्मैतद्वक्ष्यामि तवानघ ॥ गरुड उवाच ॥ सृष्टिं ब्रूहि महाभाग सच्चिदानन्दविग्रह ॥ ३ ॥ सृष्टौ ज्ञाते तवोत्कर्षो ज्ञातप्रायो भविष्यति ॥ ब्रह्मादीनां तारतम्यज्ञानं मम भविष्यति ॥ ४ ॥ मोक्षोपायस्त्वयः स प्रोक्त मिततरस्तस्य साधनम् ॥ गरुडेनैव मुक्तस्तु कृष्णो वचनमब्रवीत् ॥ ५ ॥ श्रीकृष्ण उवाच मूलरूपो ह्यतो ज्ञेयो विष्णुत्वाद्विष्णुरव्ययः ॥ ६ ॥ अवतारमिदं प्रोक्तं पूर्णत्वादेव सुव्रत ॥ अनेको ह्येकतां प्राप्य संशेते प्रलयाय वै ॥ ७ ॥ तत्रापि च विशेषोऽस्ति ज्ञातव्यं तत्वमेव सः ॥ ८ ॥ भेदेन दर्शनाद्वापि भेदाभेदेन दर्शनात् ॥ विष्णोर्गुणानां रूपाणां तदंगानां सुखादिनाम् ॥ तत्रैव दर्शनाद्वापि क्षिप्रमेव नमो व्रजेत् ॥ ९ ॥ पुरुषांतरमारभ्य कल्पिता ये द्विजोत्तम ॥ हरिरूपास्तु ते ज्ञेया एकीभूता हि तेन ते ॥ १० ॥ प्रलये समनुप्राप्ते जीवाः स यांति मामकाः ॥ विग्रहे हरेः संति तदा ते च ह्यनेकधा ॥ ११ ॥ एकीभावं प्राप्नुवंति मूलेन प्रलये द्विज ॥ बिंबेन तु स्वयं विष्णुरेकीभावं व्रजेद्यदि ॥ १२ ॥ प्रतिबिंबः कथं जीवो भवेन्नारायणस्य च ॥ तदधीनस्तत्सदृशो हरेर्जीवो न संशयः ॥ १३ ॥ प्रतिबिंबस्य शब्दार्थो ह्ययमेवमुदाहृतः ॥ तस्माच्च बिंबरूपाणामेकीभावं न चिंतयेत् ॥ १४ ॥ कृष्णरामादिवच्चैव त्वेकीभावो विवक्षितः ॥ बिंबानां मूलरूपस्य भेदो नात्र विवक्षितः ॥ १५ ॥ तत्रापि च विशेषोऽस्ति ज्ञातव्यस्तत्त्वमिच्छुभिः ॥ एकांशेन तु बिंबैस्तु चैकीभावं व्रजंति ते ॥ १६ ॥ एकांशेन तु जीवत्वे संस्थिता नात्र संशयः ॥ बिंबमूलं न जानंति ते जना ह्यसुराः स्मृ

---

१ ज्ञातायामित्यर्थः । २ सुखादीनामित्यर्थः ।

ताः ॥ १७ ॥ एक एव हरिः पूर्वं ह्यविद्यावशतः स्वयम् ॥ अनेको भवति ह्यारादादर्शप्रतिबिंबवत् ॥ १८ ॥ एवं वदंति ये मूढा स्तेपि यांत्यधरं तमः ॥ उपाधिर्द्विविधः प्रोक्तः स्वरूपो बाह्य एव च ॥ १९ ॥ बाह्योपाधिर्लयं याति मुक्तावन्यस्य संस्थितिः ॥ सर्वोपाधिविनाशे हि प्रतिबिंबः कथं भवेत् ॥ २० ॥ चिद्रूपाख्यो ह्युपाधिस्तु मोक्षे येप्यधिकारिणः ॥ दुःखरूपो ह्युपाधिस्तु तमसो येधिकारिणः ॥ २१ ॥ मिश्ररूपो ह्युपाधिस्तु नित्यसंसारिणां मतः ॥ बाह्योपाधिर्लिंगदेहः सर्वेषां नात्र संशयः ॥ २२ ॥ दैत्याः दुःखायते यस्मात्तस्मादुःखी हरिः स्वयम् ॥ तत्तद्दुःखस्वरूपत्वाद्दैत्यानां बिंबरूपकः ॥ २३ ॥ दैत्यस्थितानां बिंबानां मूलरूपस्य वै प्रभोः ॥ परस्परं तथा भेदं ह्यंतरं वा न चिंतयेत् ॥ २४ ॥ श्रीभूदुर्गादिरूपाणां तथा सीतादिरूपिणाम ॥ अन्योन्यं नाणुमात्रं च भेदो बाह्यांतरेपि च ॥ २५ ॥ चिंतनीयः कथमपि ज्ञात्वा यांत्यधरं तमः ॥ प्रतिबिंबस्थितो बिंबः स्त्रीरूपो ह्यस्ति सर्वदा ॥ २६ ॥ प्रलये समनुप्राप्ते लक्ष्म्या सह खगोत्तम ॥ एकीभावं नाप्नुवंति बिंबेन सह संस्थिताः ॥ २७ ॥ बिंबस्थितानां रूपाणां लक्ष्म्याश्च विनतासुत ॥ भेदस्तु नाणुमात्रं च शंकनीयः कथंचन ॥ २८ ॥ यदा हि शेते प्रलयार्णवे विभुर्जीवांश्च सर्वानुदरे निवेश्य ॥ मुक्तांश्च ब्रह्मेंद्रमरुद्गणादीन्प्राप्तप्र्यमुक्तींश्च सुतौ ? च संस्थितान् ॥ २९ ॥ प्राप्तांधकूपादिमम स्तजीवांस्तथैव प्राप्तव्यकलीनथापरान् ॥ तथैव नित्यं सृतिसंस्थिताञ्जनानचेतनानृक्षरूपादिजीवान् ॥ ३० ॥ एवं जनाञ्जठरे संनिधाय सम्यक् शेते ह्यंभसि वै स कल्पे ॥ लक्ष्मीस्तु सा सर्ववेदात्मिका च भक्त्या हरौ नित्यसंवर्धितापि ॥ ३१ ॥ अत्यादरं दर्शयतीव सा तु ईडे विष्णुं भक्तिसंवर्धितापि ॥ चेष्टादिरूपेण तदा न किंचिदासीद्धिना विष्णुमथ श्रियं च ॥ ३२ ॥ पर्यंकरूपेण बभूव देवी वासस्वरूपेण रमा विरेजे ॥ सर्वं रमा सैव तदैव चासीत्सैका देवी बहुरूपा बभाषे ॥ ३३ ॥ त्वमुत्कृष्टः सर्वदेवोत्तमत्वान्न त्वत्समः कश्चिदेवाधिको वा ॥ त्वं ब्रह्म एको न चतुर्मुखश्च नाहं रुद्रो न बृहस्पतिश्च ॥ ३४ ॥ विष्णावेव ब्रह्मशब्दो हि मुख्यो ह्यन्येष्वमुख्यो ब्रह्मरुद्रादिकेषु ॥ अनंतगुणपूर्णत्वाद्ब्रह्मेति हरिरुच्यते ॥ ३५ ॥ गुणादिपूर्णताभावान्नान्ये ब्रह्मेत्युदाहृताः ॥ देशानंत्यं गुणतः कालतो वा नास्त्यानंत्यं क्वापि देशे च काले ॥ ३६ ॥ यदानंत्यं किमु वक्तव्यमत्र गुणानंत्यं नास्ति ब्रह्मादिकेषु ॥ यद्यप्यहं देशतः कालतश्च समस्तदा वासुदेवेन सार्धम् ॥ ३७ ॥ तथापि मे गुणतो नास्त्यनंतं ततो धर्मा गुणतोनंततश्च ॥ संति श्रुतावविरुद्धाश्च देवे चिंत्या ह्यचिंत्या बहुधा ते ह्यनंताः ॥ ३८ ॥ अतो गुणांस्तव देवस्य विष्णो स्तोतुं सदा स्मो न हरेः कदापि ॥ नाहं न केशौ न च गीर्न रुद्रो न दक्षकन्या न च मेनकासुता ॥ ३९ ॥ न वै बिडौजा न च

वा पुलोमजा न चेध्मवाहो न यमो न चान्यः ॥ न नारदो नापि भृगुर्वसिष्ठो न विप्रपो नापि बल्यादयश्च ॥ ४० ॥ न वै विराटो नापि भीमः शनिश्च न पुष्करो न कशेरुस्तथैव ॥ न किन्नराः पितरो नैव देवा गंधर्वमुख्या नापि वा तुष्यसंज्ञाः ॥ ४१ ॥ न वै क्षितीशा न च मानुषाश्च विष्णोर्न जानंति किमत्र चान्ये ॥ मत्तोधमः कोटिगुणेन ब्रह्मा समो हि तस्य ब्रह्मणो मातरिश्वा ॥४२॥ तौ वै विरागे हरिभक्तिभावे धृतिस्थितिप्राणबलेषु योगे ॥ बुद्धौ समानौ संसृतौ मोक्षकाले परस्पराधारसमन्वितौ च ॥ ४३ ॥ अत्राभिमानं ब्रह्म चाहुर्मुरारिं जीवाभिमानं वायुमाहुर्महांतः ॥ न शक्तोसौ ब्रह्मदेवो विरस्तुं वायुं विना संसृतावेव नित्यम् ॥ ४४ ॥ न तं विना मातरिश्वा च वस्तुमन्योन्यमाप्तिः कालतो न्यूनता च ॥ यदा महत्तत्त्वनियामकोभूद्ब्रह्मांडांतस्थूलसृष्टौ महात्मा ॥ ४५ ॥ तदा वायुर्नाशकद्रै महात्मा बाह्ये सृष्टौ कालभेदेन चास्ति ॥ सरस्वती भारती ब्रह्मणस्तु संवत्सरानंतरं संबभूव ॥ ४६ ॥ यदा दशाब्दाः समतीता महात्मा तदा वायुः समभूल्लोकपूज्यः ॥ किंचिन्न्यूनत्वं स्थूलसृष्टौ महात्मन्नेतावता वानयोः सौम्य हानिः ॥४७॥ सरस्वती वत्सरात्संबभूव ह्यनंतरं ब्रह्मणो जन्मकालात् ॥ गिरः सकाशात्कालतो न्यूनतास्ति वायोस्तदा ह्यधमत्त्वे क्षतिः का ॥ ४८ ॥ वायोरनंतरं वाणी ह्यभूत्संवत्सरात्परम् ॥ यावत्पश्चाज्जनिस्तावत्पूर्वदेहक्षयो भवेत् ॥ ४९ ॥ शेषस्त्विंद्रो रुद्र एते त्रयश्च समा ह्येते ज्ञानबलादिकेष्वपि तथापि तेषां कालतो न्यूनतास्ति कालोपि तेषां द्विव्येसहस्रवर्षम् ॥ ५० ॥ अनंतरुद्रो ब्रह्मवायू यथा वा तथा ज्ञेयो नैव हानिः स्वरूपे ॥ स्थूलस्य सृष्टौ बाह्यसृष्टौ महात्मन्कालान्न्यूनत्वं स मया नैव चिंत्यः ॥ ५१ ॥ तेषां सकाशाद्वारुणी पार्वती च सौपर्णीनाम्नी तिस्र एता महात्मन् ॥ दशाब्देभ्योनन्तरं संबभूवुः सरस्वती भारतीवच्च बोध्या ॥ ५२ ॥ इंद्रो वरो रुद्रभार्यादिकेभ्य एवं ज्ञानं सर्वदा देह्यमंदम् ॥ एवं ज्ञानं यस्य भवेच्च लोके स वै ज्ञानी वेदवेद्यः स एव ॥ ५३ ॥ न वै ज्ञानीत्यंतरं यो न वेद स वेदवादी न च वेदपाठकः ॥ ५४ ॥ वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः ॥ तावंति हरिनामानि प्रियाणि च हरेस्सदा ॥५५॥ मम स्वामी हरिर्नित्यं दासोहं सर्वदा हरेः ॥ ब्रह्माद्या देवताः सर्वा गुरवो मे यथाक्रमम् ॥ ५६ ॥ एतेषां च हरिः स्वामी वेदे सर्वत्र गीयते ॥ एवं जानंस्तु यो वेदान्संपठेत्स द्विजोत्तमः ॥ ५७ ॥ स वेदपाठको ज्ञेयस्तदन्ये वेदवादिनः ॥ वेदभारभराक्रांतः स वै ब्राह्मणगर्दभः ॥ ५८ ॥ ज्ञानाभिमानी वेदमानी उभौ तु परस्परं ह्यूचतुः सर्वदैव ॥ जलं वेदो यत्र वासो मुरारेराचार्याणां संगदोषाद्द्विजानाम् ॥ ५९ ॥ महापराधाः संति लोके महात्मन्सहस्रशः शतशः कोटिशश्च ॥ हरिश्च तान्क्षमते सर्वदैव नामत्रयस्मरणाद्वै कृपालुः ॥ ६० ॥ सर्वापराधाद्रहितं दानमानैर्युक्तं सदा तारतम्याच्च हीनम् ॥ दृष्ट्वापराधं तस्य विष्णुर्महात्मा हाहाकारं कुरुते क्रोधबुद्ध्या ॥ ६१ ॥

उत्तिष्ठ गोविंद सुवेदवेद्य सोव्यात्कृतारव्यो मयि सम्यक् प्रसीद ॥ भो केशवोत्तिष्ठ सुखस्वरूप सृष्टौ व्यये वर्तयितु समर्थः ॥ ६२ ॥ सृष्ट्वा ब्रह्माणं
प्रेरयेत्पूज्यसृष्टौ सृष्ट्वा रुद्रं प्रेरयेत्संहतौ च ॥ प्राप्तव्ययोग्यान्ब्रह्मशेषादिदेवान्दृष्ट्वादृष्ट्वा देहि मोक्षं च सम्यक् ॥६३॥ हरे मुरारे स्वापहीनाद्य तिष्ठ कल्पा
दिकानन्तरज्ञान ( रं बुद्धि )( जान ) हीनात् ॥ सम्यग् दृष्ट्वा कर्मदृष्ट्या महातमर्लॅब्धं तमो दांहि दुःखस्वरूपम् ॥ ६४ ॥ दैत्यादिकान्दुःखमतीन्ह
यस्मात्तमस्यंधेसर्वदा चित्स्वरूपी ॥ तस्मादाहुर्दुःस्वरूपी हरिस्त्वं दुःखस्वरूपात्त्वं च दुःखी हरे त्वम् ॥ ६५ ॥ उत्तिष्ठ नारायण वासुदेव ह्युत्तिष्ठ
कृष्णाच्युत माधवेति ॥ उत्तिष्ठ वैकुण्ठ दयार्द्रमूर्ते उत्तिष्ठ लक्ष्मीश नमोनमस्ते ॥ ६६ ॥ उत्तिष्ठ मध्वेश सरस्वतीश उत्तिष्ठ रुद्रेश तथांबिकेश ॥ उ
त्तिष्ठ चंद्रेश तथा शचीश विप्रेश भक्तेश गवेश नित्यम् ॥ ६७॥ शास्त्रप्रियोत्तिष्ठ ऋचि प्रियस्त्वं यजुःप्रियोत्तिष्ठ निदानमूर्ते ॥ सामप्रियस्त्वं च तथा
मुरारे अथर्ववेदप्रिय सर्वदा त्वम ॥ ६८ ॥ गद्यप्रियस्त्वं च पुराणमूर्ते स्तुतिप्रियोत्तिष्ठ विचित्रमूर्ते ॥ सुगायनप्रीतिकरस्त्वमेव ह्युत्तिष्ठ शीघ्रं कमला
पतिस्त्वम् ॥ ६९ ॥ एवं स्तुतो विष्णुरजः पुराणो ह्यातित्वरावानुत्थितो नित्यबद्धः ॥ ७० ॥ इति श्रीगारुडे महापुराणे कृष्णगरुडसंवादे उत्तरखण्डे
तृतीयांशे ब्रह्मकाण्डे ब्रह्माविष्णुमहेश्वरादिदेवतातारम्यनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥ श्रीकृष्ण उवाच ॥ बभूवेच्छा मम देवस्य विष्णोः स्रष्टुं
सृज्यान्मोक्षयोग्यांश्च मोक्तुम ॥ इच्छाशक्तिः सर्वदैवास्ति विष्णोस्तथापि तद्व्याहरणं च लौकिकम् ॥ १ ॥ तदा हरिर्जगृहे लौकिकं च तमःपानं
तेन रूपेण चक्रे ॥ तद्रूपमाहुः प्राकृतं वै तदज्ञा ह्यंधं तमः प्रविशन्त्येव सर्वे ॥ २ ॥ अवतारा महाविष्णोः सर्वे पूर्णाः प्रकीर्तिताः ॥ पूर्णं च तत्परं रूपं
पूर्णात्पूर्णाः समुद्गताः ॥३॥ परावरत्वं तेषां तु व्यक्तिमात्रविशेषतः ॥ न देशकालसामर्थ्यात्पारावर्यं कथंचन ॥४॥ पूर्वरूपं च पूर्णं च पूर्णं पदावितारगम् ॥
रूपं तदात्मन्यादाय पूर्णमेवावशिष्यते ॥ ५ ॥ लौकिकव्यवहारोयं भूभारक्षपणादिकः ॥ तस्य दृष्टिं विना नान्यो लयः कृष्णादिना क्वचित् ॥ ६ ॥
तत्त्वे पीडा न कर्त्तव्या तया दुःखानि विंदति ॥ अत्यंतपीडनात्तस्यं रोगस्तस्यं न संशयः ॥ ७ ॥ ज्ञातव्यांशे तु पीडा तु कर्तव्या गुरुणा सह ॥
तमंतेवासिनं चाहुः स एव च गुरुः स्मृतः ॥ ८ ॥ ये कुर्वंति हरेस्तत्त्वविचारं तु परस्परम् ॥ तावेव गुरुशिष्यौ तु विनतानंदसंयुत ॥ ९ ॥ गुरुणा
पि समं हास्यं कर्तव्यं कुटिलं विना ॥ हर्षामर्षयुतः शिष्यो गुरुः कौटिल्यसंयुतः ॥ १० ॥ उभौ तौ निरयं यातो यावदाचंद्रतारकम् ॥ साक्षाद्ध
रिः पुरुषः पिंगलाक्षः स्वमायायां गुणमय्यां महात्मा ॥ स्वपौरुषेणैव सुमंगलेन अधात्तु वीर्यं भगवान्वीर्यवांश्च ॥ ११ ॥ गरुड उवाच ॥ वर्यस्वरूपं

१ लुनीहीत्यर्थः । २ तत्त्वस्थेत्यर्थः । ३ एतत्कर्तुरित्यर्थः ।

ब्रूहि मे वासुदेव वीर्ये त्वदीये संशयो मे विभाति ॥ किं वीर्यमीशस्य स्वरूपभूतं किं वा विभिन्नं वद साधु वेत्सि ॥ १२ ॥ श्रीकृष्ण उवाच ॥
यद्वीर्यमाधत्त हरिः स्वयं प्रभुर्मायाभिधायां विनतातनूज ॥ तद्वीर्यमाहुर्नृहरेः स्वरूपं विपश्चितो निश्चिततत्त्वदर्शिनः ॥ १३ ॥ भिन्नं तदाहुः
प्राकृतमेव चाहुः स्वनाभिपद्मादिकवच्च बोध्यम् ॥ नैतावता ज्ञानरूपस्य विष्णोर्न वीर्यहानिरिति चिंतनीयम् ॥ १४ ॥ वीर्यस्वरूपी भगवान्वा
सुदेवः सर्वत्र देशेपि च सर्वकाले ॥ सर्वार्थवान्यदि न स्यात्खगेंद्र तर्हीश्वरः पुरुषो नैव स स्यात् ॥ १५ ॥ अचिंत्यवीर्यैश्चित्यवीर्यैर्द्विरूपः स्त्रीरूपमेकं
पुरुषं तथा परम् ॥ उभे रूपे वीर्यवती खगेंद्र तयोरभेदश्चिंतनीयो हि सम्यक् ॥ १६ ॥ स्त्रीरूपवान्यदि न स्यात्खगेंद्र
स्त्रीणां कथं प्रतिबिंबत्वमेव ॥ १७ ॥ स्त्रीरूपमस्माद्ब्रह्मजं ( द्वास्तवं ) चिंतनीयं स्वरूपमेतन्नान्यथा चिंतनीयम् ॥ स्त्रीरूपवन्नैव
विचिंतनीयं नपुंसकं त्वस्य जन्यं हि विद्धि ॥ १८ ॥ नपुंसकं नैव स्वरूपभूतमतो हरौ नास्ति विचिंतनीयम् ॥ स्त्रीबिंबभूते हरिरूपे
खगेंद्र श्रीरूपमस्तीति विचिंतनीयम् ॥ १९ ॥ ॥ गरुड उवाच ॥ स्त्रिया स्त्रियश्च संयोगं व्यर्थमाहुर्मनीषिणः ॥ स्त्रीरूपभूते बिंबे तु स्त्री
रूपाः सन्ति सर्वदा ॥ २० ॥ स्थितौ तत्र निमित्तं च ब्रूहि कृष्ण मम प्रभो ॥ २१ ॥ श्रीकृष्ण उवाच ॥ स्त्रीबिंबभूतस्त्रीरूपे लक्ष्मीर्न स्यात्खगेश्व
र ॥ नित्यावियोगिनी देवी कथं स्यात्परमात्मनः ॥ २२ ॥ हरेरनंतरूपाणां स्त्रीरूपाणां खगेश्वर ॥ अनंतानंतरूपेण नित्यं शुश्रूषणे रता ॥ २३ ॥
अतो लक्ष्म्या वियोगस्तु शंकनीयः कथंचन ॥ नारायणो नाम हरिः स्वतंत्रः श्रिया विना नास्ति कदापि तार्क्ष्य ॥ हरेर्मुकुंदस्य पदारविंदे शुश्रूष
माणा परमादरेण ॥ २४ ॥ हरिं विना श्रीरपि देशकाले नास्तीति मोक्षेच्छुभिरेव वेद्यम् ॥ यस्यामधाद्वीर्यमनुक्षणं च सा मामिका चेंद्रजाला
त्मिकेति ॥ २५ ॥ वदन्ति ये असुरा मूढरूपा अधंमतः प्रविशंत्येव सर्वे ॥ माया नाम प्रकृतिस्त्वेवमाहुः सुसूक्ष्मरूपा न तु चेंद्रजालिका ॥ २६ ॥
तस्याभिमानः श्रीरिति वेदितव्यो वीर्याधानं तत्र तेषां च मेलः ॥ कार्योन्मुखं मेलनं चाहुरार्या इतो रूपं नाहुराय्यार्श्च विष्णोः ॥ २७ ॥ सानादि
नित्या सत्यरूपा च विष्णोर्मिथ्या रूपा सा कथं स्यात्खगेंद्र ॥ सत्या तनुः प्रकृतेस्तन्निगूढा सत्यत्वमाहुर्व्यवहारार्थरूपम् ॥ २८ ॥ व्यवहाररूपा सत्य
ता चेत्प्रकृत्यास्तदा कथं स्याद्यदनादिभूता ॥ अनादिनित्या यदि न स्यात्खगेंद्र सुसूक्ष्मरूपेण न कारणं स्यात् ॥ २९ ॥ सूक्ष्मेण रूपेण च कारणं
स्यात् तर्हि प्रपंचस्य च कारणं वद ॥ अविद्याया वशतो विष्णुरेव नानारूपैर्दृश्यते विष्णुरेव ॥ ३० ॥ शास्त्रज्ञानान्नाशमेति ह्यविद्या न संशयो हरिणा
चैक्यमेति ॥ एवं ब्रूषे यदि वादान्खगेंद्र वक्ष्येहं ते तत्र युक्तिं शृणु त्वम् ॥ ३१ ॥ सर्वज्ञरूपस्य हि मे मुरारेः कथं हरेर्घटते ह्यज्ञता च ॥ सूर्ये यथा

तमो नास्ति तथा नारायणे हरौ ॥ अज्ञानं नास्ति पक्षींद्र कथं तत्त्वं ब्रवीष्यहो ॥ ३२ ॥ अतो नाहं ब्राह्मणस्त्वादिकालादुपाधिसंबन्धवशादज्ञता चेत् ॥ सर्वज्ञोसौ कुत्र पक्षीन्द्र विष्णुरल्पज्ञजीवो ज्ञानशून्यश्च कुत्र ॥ ३३ ॥ विरुद्धयोश्चानयोः सर्वदैव कथं चैक्यं संवादिष्यन्ति वेदाः ॥ देशे काले सर्वदा दुःखहीनो जगत्कर्त्ता पूर्णशक्तिः सदैव ॥ ३४ ॥ जीवः सदा स्वल्पकर्तास्ति पूर्णः संसाररूपे दुःखरूपे च नित्यम् ॥ विरुद्धयोश्चानयोरैक्यमाहुरीशस्य मायावशतो मायिनश्च ॥ ३५ ॥ ये वैष्णवा वैष्णवदासवश्यास्तेषां द्रोहं सर्वदा संचरेद्यः ॥ हरिप्रीतिस्तेन भवेन्न नित्यमानन्दवृद्धिस्तेन भवेन्न मुक्तौ ॥ ३६ ॥ मायी सदा मायिभृत्यस्तथापि भेदज्ञानान्निन्द्यते कार्यते च ॥ तेनापि तेषां दुःखवृद्धिर्भवेच्च ह्यधं तमः पुनरावृत्तिहीनम् ॥३७॥ खगेंद्रातः प्रकृतिः सूक्ष्मरूपा सा नित्या सा सत्यभूता सदैव ॥ एवं स्वयं कालवाय्वादिकानां परा (रमा) णवः सत्यरूपाश्च सन्ति॥३८॥परा(माणू)नां लक्षणं वेदितव्यं ज्ञानेच्छुभिर्नान्यथा वेदितव्यम् ॥ पदार्थानां पार्थिवानां खगेंद्र विशेषाणां चरमाख्यो विशेषः ॥३९॥ स एव स्यात्परमाणुर्द्विजेंद्र यो त्यावि (व) शेषोवयवश्च स स्मृतः ॥४०॥ गरुड उवाच ॥ हे कृष्ण हे माधव सात्त्वतां पते पदार्थानां चरमांशः पराणुः॥४१॥इति प्रोक्तं तत्र मे संशयोस्ति योंत्यो विशेषः स तु नांशयुक्तः ॥ यो ह्यंशयुक्तो न तु सोंत्यो विशेष एवं ममाभाति वचस्तु तथ्यम् ॥ ४२ ॥ श्रीकृष्ण उवाच ॥ य एव लोके संस्थिता मानुषास्तु विशेषाणां दर्शने शक्तियुक्ताः ॥ तथापि ते यस्य चांशित्वमेव विशेषं वै नैव द्रष्टुं समर्थाः ॥ ४३ ॥ तमेवाहुश्चरमांशं विशेषं ये चैवमाहुर्मुनयस्तेन चान्ये ॥ ये काणादा गौतमाद्याः खगेंद्र निरंशकं परमाणुं वदन्ति ॥४४॥ अनंतांशैः संयुतत्वेपि तांश्च निरंशिनो भ्रांतिदृष्ट्या वदंति ॥ तस्मात्परा ( रमा ) णोः परमाणुत्वमस्ति तदंशानां विनतागर्भजात ॥४५॥ परा ( रमा ) णूनामेकदेशे खगेंद्र तन्नो संति प्राणिनां राशयश्च ॥ प्रत्येकशः संति रूपा हरेश्च ह्यतश्च तत्परमाणोरणीयः ॥ ४६ ॥ यो वा त्वणीयान्परमस्य विष्णोः स एव रूपो महतो महीयान् ॥ तेषामन्योन्यं न विशेषोस्ति कश्चिदचिंत्यरूपे च विचिंतनीयः ॥४७॥ कालकोटिविहीनत्वं कालानन्त्यं विदुर्बुधाः ॥ देशकोटिविहीनत्वं देशानंत्यं विदुर्बुधाः ॥४८॥ गुणानामप्रमेयत्वे गुणानंत्यं विदुर्बुधाः ॥ आनंत्यं त्रिविधं नित्यं हरेर्नान्यस्य कस्यचित् ॥ ४९ ॥ तस्य सर्वस्वरूपेषु चानन्त्यं तु त्रिलक्षणम् ॥ तथापि देशतस्तस्य परिच्छेदोपि युज्यते ॥ ५० ॥ परिच्छेदस्तथा व्याप्तेरेकरूपेपि युज्यते ॥ तस्याचिंत्याद्भुतैश्वर्यं व्यवहारार्थमेव च ॥ ५१ ॥ गुणतः कालतश्चैव परिच्छेदो न कुत्रचित् ॥ व्याप्तत्वं देशतो ह्यस्ति सर्वभूतेषु यद्यपि ॥ ५२ ॥ न च भेदः क्वचित्तस्य ह्यणुमात्रेपि युज्यते ॥ तथापि विद्यतेणुत्वं तस्मादैश्वर्ययोगतः ॥ ५३ ॥ तस्माद्धि ह्यवतारार्थं व्याप्तत्वं चापि भण्यते ॥ यत्तस्य व्यापकं रूपं परं नारायणं विदुः ॥ ५४ ॥

अतश्च परमाणूनां पार्थिवाऽऽनन्त्यवादिनाम् ॥ भेदः परस्परं ज्ञेयस्तथेशस्य महात्मनः ॥ ९५ ॥ जडेशयोर्जडानां च जीवानां च परस्परम् ॥
तथैव जडजीवानां नित्यं भेदो जडेशयोः ॥ ९६ ॥ पंच भेदा इमे नित्यं सर्वावस्थासु सर्वशः ॥ एतादृश्यां तु मायायां वीर्यमाधत्त वीर्यवान् ॥९७॥
पुरुषाख्यो हरिस्तस्मात्रिगुणानसृजत्प्रभुः॥९८॥इति श्रीगारुडे महापुराणे कृ०ग०सं०उ०खं० तृतीयांशे ब्रह्मकांडे भगवद्वीर्यस्वरूपतदाधानद्वारकगुण
त्रय सृष्टिजडेशभेदादिनिरूपणं नाम तृतीयोऽध्यायः ॥ ३ ॥ श्रीकृष्ण उवाच ॥ यथा ससर्ज भगवांस्त्रीन् गुणान्प्रकृतेस्तदा ॥ लक्ष्मीस्त्रिरूपा संभूता
श्रीर्भूर्दुर्गेति संज्ञिता ॥ १ ॥ सत्त्वाभिमानिनी श्रीस्तु भूर्देवी रजमानिनी ॥ तमोभिमानिनी दुर्गा ह्येवमाहुर्मनीषिणः॥ २ ॥अंतरं न विजानीयाद्रूपाणां
च परस्परम् ॥ गुणानां चैव संबन्धाद्दुर्गादीनां खगेश्वर ॥ ३ ॥ अंतरं ये विजानंति ते यांत्यंधंतमः परम् ॥ पुरुषस्तु त्रिरूपोभूद्विष्णुर्ब्रह्मा भवेति
सः ॥ ४ ॥ सत्त्वेन लोकान्वर्धयितुं विष्णुः साक्षाद्धरिः स्वयम् ॥ सृष्टिं कर्तुं च रजसा ब्रह्माणि प्राविशद्धरिः ॥ ५ ॥ आद्यो ब्रह्मा स विज्ञेयो न तु
साक्षाद्धरिः स्वयम् ॥ तमसाऽपि समान्हंतुं रुद्रे च प्राविशद्धरिः ॥ ६ ॥ रुद्रे स्थितो रुद्रसंज्ञो न रुद्रस्तु हरिः स्वयम् ॥ विष्णुरेव हरिः साक्षात्तावुभौ
न हरी स्मृतौ ॥ ७ ॥ आविष्टरूपौ विज्ञेयौ ब्रह्मरुद्राभिधायकौ ॥ एवं ज्ञात्वा मोक्षमेति नान्यथा तु कथंचन ॥ ८ ॥ विष्णुब्रह्मादिरूपाणामैक्यं
जानंति ये द्विजाः ॥ ते यांति नरकं घोरं पुनरावृत्तिवर्जितम् ॥९॥ गुणत्रयं प्रविष्टस्तु पुरुषो हरिरव्ययः ॥ कार्योन्मुखं यथा भूयात्क्षोभयामास वै तथा
॥ १० ॥ जातक्षोभाद्भगवतो महानासीद्गुणत्रयात् ॥ गुणत्रये विद्यमानाद्भागादेव न संशयः ॥ ११ ॥ महतो ब्रह्मवायू च जज्ञाते स्वाभिमानिनौ ॥
तस्य संवत्सरात्पश्चाद्यमलौ संबभूवतुः ॥ १२ ॥ रजःप्रधानं यत्तत्वं महत्तत्त्वमितीरितम् ॥ सर्गं त्विमं विजानीयाद्गुणवैषम्यनामकम् ॥ १३ ॥
गरुड उवाच ॥ महत्तत्त्वस्वरूपस्य ज्ञानार्थं देवकीसुत ॥ त्वयोक्ता गुणवैषम्यनामिका सृष्टिरुत्तमा ॥ १४ ॥ गुणवैषम्यशब्दार्थं मम ब्रूहि
महाप्रभो ॥ श्रीकृष्ण उवाच ॥ गुणवैषम्यशब्दार्थज्ञापनाय खगेश्वर ॥ १५ ॥ अपेक्षितं च तत्रादौ गुणसाम्यं न संशयः ॥ सम्यग्ज्ञापयितुं
तत्र खादौ तावत्स्वगेश्वर ॥ १६ ॥ राशिभूतं गुणानां तु दर्शयिष्ये स्थितिं च वै ॥ राशीभूतस्य तमसः सकाशाद्विनतासुत ॥ १७ ॥ राशीभूतं
रजो ज्ञेयं द्विगुणं तच्च नान्यथा ॥ राशीभूतस्य रजसः सकाशाद्विनतासुत ॥ १८ ॥ राशीभूतं तथा सत्त्वं द्विगुणं समुदाहृतम् ॥ मूलप्रकृतिजा ह्येते
न मूला प्रकृतिः स्मृता ॥ १९ ॥ यतः प्रकृतिरूपाणां परिच्छेदो न विद्यते ॥ अतः प्रकृतिजा ज्ञेया न मूलास्ते खगेश्वर ॥ २० ॥ एवं तव गुणानां

१ आर्षं प्रस्त्वम् ।

च परिमाणं खगेश्वर ॥ उक्तं स्वरूपं तेषां तु तव सम्यक् खगेश्वर ॥ २१ ॥ तत्र राशित्रये सत्त्वं केवलं समुदाहृतम् ॥ रजस्तमोभ्यां गरुड ह्यवि मिश्रं ह्यतस्तु तत् ॥ २२ ॥ केवलं सत्त्वमित्युक्तं न तु श्रेष्ठत्वतः प्रभो ॥ सृष्टिकाले केवलं स्यात्प्रलये मिश्रितं भवेत् ॥ २३ ॥ सर्वदाप्यविमिश्रं च सत्त्वराशिं खगेश्वर ॥ सर्वदापि विमिश्रं च सत्त्वराशिं द्विजोत्तम ॥ २४ ॥ ये विजानंति ते सर्वे विशंति ह्यधरं तमः ॥ रजस्तमोगुणौ वींद्र इतरा भ्यां विमिश्रितौ ॥ २५ ॥ सृष्टौ प्रलयकालेपि मिश्रावेव खगेश्वर ॥ राशिभूतेपि रजसि रजोभागाच्छताधिकम् ॥ २६ ॥ सत्त्वं च मिश्रितं ज्ञेयं नान्यथा पक्षिसत्तम ॥ रजसः शतभागानां मध्ये तु विनतासुत ॥ २७ ॥ य एको भाग उद्दिष्टस्तावत्परिमितं तमः ॥ राशिभूतेपि रजसि मिश्रि तं परिकीर्त्तितम् ॥ २८ ॥ रजोराशिस्थितिस्त्वेवं तात व्याप्तं तमोगुणैः ॥ राशिभूतेपि तमसि सत्त्वं च विनतासुत ॥ २९ ॥ तमःसकाशाद्गरुड दशभागाधिकेन च ॥ मिश्रितं भवतीत्येवं ज्ञातव्यं नात्र संशयः ॥ ३० ॥ तमसो दशभागानां मध्ये तु विनतासुत ॥ य एको भाग उद्दिष्टस्तावत्प रिमितं रजः ॥ ३१ ॥ राशिभूतेपि तमसि मिश्रितं भवति ध्रुवम् ॥ तमोराशिस्थितिस्त्वेवं ज्ञातव्या पक्षिसत्तम ॥ ३२ ॥ गरुड उवाच ॥ राशिभूतेपि रजसि राशिभूते तमस्यपि ॥ सत्त्वांशा ह्यधिकाः संतीत्येवमुक्तं मयानघ ॥ ३३ ॥ तत्र मे संशयो ह्यस्ति शृणु त्वं सात्त्वतां पते ॥ यद्राश्यां यद्रा शिभागा ह्यधिकाः संति यावता ॥ ३४ ॥ तावता व्यवहारः स्यात्क्षीरनीरमिव प्रभो ॥ श्रुत्वा स गरुडेनोक्तं भगवान्पुरुषोत्तमः ॥ ३५ ॥ उवाच पर मप्रीत्या संस्तुवन् गरुडं हरिः ॥ श्रीकृष्ण उवाच ॥ रजोराश्या तमोराश्या सत्त्वराश्यधिका सदा ॥ ३६ ॥ मिश्रितं चापि पक्षींद्र न सत्त्वमिति कीर्त्यते ॥ रजोराशिस्तमोराशिरित्येवं विबुधा विदुः ॥ ३७ ॥ विषं तु चरुदुग्धस्थं विषमित्युच्यते यथा ॥ एवं मयोक्ता गरुड गुणानां निजसंस्थितिः ॥ ३८ ॥ साम्यावस्थां गुणानां च शृण्विदानीं खगेश्वर ॥ राशीकृताच्च रजसः जन्यं यच्च खगेश्वर ॥ ३९ ॥ महत्तत्त्वे प्रविष्टं च यद्रजः परिकीर्त्ति तम् ॥ प्रलये समनुप्राप्ते महत्तत्त्वे स्थितं रजः ॥ ४० ॥ द्वादशांशेन तु ह्यद्धा विभक्तं भवति प्रभो ॥ राशीभूते हि सत्त्वे तु दशभागेन मिश्रितम् ॥ ४१ ॥ सम्यक् भवति पक्षींद्र तथैकांशेन चांडज ॥ तमोराश्या मिश्रितं च भवत्येव न संशयः ॥ ४२ ॥ अन्यैनैकेन भागेन रजोराश्या खगेश्वर ॥ मिश्रितं भवतीत्येवं ज्ञातव्यं नान्यथा क्वचित् ॥ ४३ ॥ गुणत्रयेपि भगवान्महत्तत्त्वस्य चांडज ॥ एवं लयस्तु ज्ञातव्यो हृदि तत्त्वार्थवेदिभिः ॥ ४४ ॥ एवं गुणत्रयाणां च मिश्रितत्त्वात्खगेश्वर ॥ गुणसाम्यमिति प्राहुरेवं जानीहि वै खग ॥ ४५ ॥ अन्यथा ये



१ ईकारान्तत्वं स्त्रीत्वं चार्षम् ।

विजानंति ते यांति ह्यधरं तमः ॥ ॥ गरुड उवाच ॥ राशीकृतगुणानां च त्रयाणां परमेश्वर ॥ ४६ ॥ विशालानां परं ब्रह्मन्प्रलये गुणसाम्यता ॥
कथं ब्रूहि महाभाग एतत्तत्त्वं समासतः ॥ ४७ ॥ ॥ श्रीकृष्ण उवाच ॥ राशीभूतगुणानां तु त्रयाणामपि सत्तम ॥ तदा विमिश्रितत्वेन ह्यवस्थानं
विदुर्बुधाः ॥ ४८ ॥ इदानीं गुणवैषम्यं शृणु सम्यङ् मम प्रिय ॥ सृष्टिकाले तु संप्राप्ते यत्पूर्वं प्रलये खग ॥ ४९ ॥ दशभागैश्च सत्त्वे तु मिश्रितं यद्र
जस्तथा ॥ तमस्यप्येकभागेन प्रविष्टं यत्तु तद्रजः ॥ ५० ॥ रजस्यप्येकभागेन प्रविष्टं यच्च तद्रजः ॥ एवं द्वादशभागैश्च प्रविष्टं सर्वशो रजः
॥ ५१ ॥ सत्त्वस्थैर्दशभागैश्च तथैकेन रजोंशिना ॥ एवमेकादशैर्भागैस्तमस्थांशेन वै द्विज ॥ ५२ ॥ मिश्रितं भवति ह्यद्धा महत्तत्त्वं तदा
स्मृतम् ॥ एतदन्यो विशेषश्च मन्तव्यो विनतासुत ॥ ५३ ॥ एकांशस्तामसो ज्ञेयो महत्तत्त्वे न संशयः ॥ एवं त्रयोदशैर्भागैर्मिश्रितं तच्च सत्तम
॥ ५४ ॥ एवमेतद्द्विजानीयान्नान्यथा तु कथंचन ॥ ॥ गरुड उवाच ॥ चतुर्मुखाच्छ्रुतं पूर्वं भगवन्सात्त्वतां पते ॥ ५५ ॥ चतुर्भागात्समुत्पन्नं
महत्तत्त्वमिति प्रभो ॥ तत्रैकांशस्तमः प्रोक्तः त्रिभागो रज एव च ॥ ५६ ॥ तदाहुर्ब्रह्मणो रूपं गुणवैषम्यनामकम् ॥ चतुर्भागात्मकं प्रोक्तं महत्तत्त्वं
श्रुतं मया ॥ ५७ ॥ त्रयोदशांशैः संभूतमिति प्रोक्तं त्वयानघ ॥ तदेतत्संशयं छिंधि कृपालो भक्तवत्सल ॥ ५८ ॥ ॥ श्रीकृष्ण उवाच ॥
ब्रह्मोक्तस्य मयोक्तस्य विवादो नास्ति सर्वथा ॥ मूलसत्त्वे मिश्रितं च दशभागेन यद्रजः ॥ ५९ ॥ तत्सर्वं च मिलित्वैव त्वेको भागस्तु कीर्तितः ॥
मूले रजसि यच्चोक्तो रजोभागः खगेश्वर ॥ ६० ॥ भागे द्वितीये विज्ञेयस्तद्रजो नात्र संशयः ॥ मूले तमसि यच्चोक्तो रजोभागस्तथैव च ॥ ६१ ॥
तृतीयभागो विज्ञेयो नात्र कार्या विचारणा ॥ तथा मूले च तमसि ह्येको भागस्तमः स्मृतः ॥ ६२ ॥ एवं त्रिभागो रजसः एकांशस्तमसः स्मृतः ॥
तदाहुर्ब्रह्मणो देहं गुणवैषम्यनामकम् ॥ ६३ ॥ ॥ गरुड उवाच ॥ महत्तत्त्वस्य चत्वारो भागास्तेषु रजस्त्रयः ॥ तमसस्त्वेक एवेति त्वयोक्तं गरुड
ध्वज ॥ ६४ ॥ रजोभागात्मको देहो ब्रह्मणः परमेष्ठिनः ॥ इति प्रतीयते ब्रह्मन्वचनात्तव माधव ॥ ६५ ॥ शुद्धसत्त्वात्मको देहो ब्रह्मणः परमेष्ठिनः ॥
एवं हि श्रूयते कृष्ण संशयो मेऽत्र बाधते ॥ ६६ ॥ तमेवं संशयं छिंधि यद्धि तच्छ्रोतुमर्हति ॥ श्रीकृष्ण उवाच ॥ त्रिभागभूते रजसि तथा द्वाद
शधापि च ॥ ६७ ॥ रजसोपेक्षया सत्त्वं दशांशाधिकमेव च ॥ प्रविष्टमस्तीति खग ज्ञातव्यं तच्छृणु द्विज ॥ ६८ ॥ तमसोपेक्षया सत्त्वं दशांशा
धिकमेव वै ॥ प्रविष्टमस्तीति खग वक्तव्यं नात्र संशयः ॥ ६९ ॥ तमसोपेक्षया तत्र तम एकादशं स्मृतम् ॥ एकांशस्तु रजो ज्ञेयमेवमाहुर्मनी

१ एकांशिने त्येकवचनेन स्पष्टं प्रतीयते । २ द्वादशभागके इति पाठो युक्त इति भाति । ३ एकादशभागकमित्यर्थः ।

षिणः ॥ एवं च मिलितान्भागान्वक्ष्ये शृणु महामते ॥ ७० ॥ महत्तत्त्वसमुत्पत्ता उपादानं खगेश्वर ॥ त्रयोदशांशा विज्ञेया द्वादशांशं रजः स्मृतम् ॥ ७१ ॥ एकांशस्तमसो ज्ञेयस्तत्र भागाञ्छृणु द्विजा ॥ आदौ तु द्वादशांशेषु भागान्वक्ष्यामि तच्छृणु ॥ ७२ ॥ एकांशस्तमसो ज्ञेयस्तद्दशांशाधिकं रजः ॥ तच्छतांशाधिकं सत्त्वमेवमाहुर्मनीषिणः ॥ ७३ ॥ एकांशतमसि ह्येवं विभागाञ्छृणु सत्तम ॥ एकांशस्तु रजो ज्ञेयस्तमो ह्येकादशाधिकम् ॥ ७४ ॥ तमोभागास्तु विज्ञेयास्तद्दशांशाधिकः स्मृतः ॥ सत्त्वभाग इति ज्ञेयो महत्तत्त्वे खगेश्वर ॥ ७५ ॥ सत्त्वांशो बहुलो यस्माच्छुद्धसत्त्वं चतुर्मुखः ॥ उत्पत्तिर्महतश्चोक्ता एवं च विनतासुत ॥७६॥ तज्ज्ञानान्मोक्षमाप्नोति नान्यथा तु कथंचन ॥७७॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे कृष्ण गरुडसंवादे तृतीयांशे ब्रह्मकांडे गुणवैषम्यभेदब्रह्मदेहस्वरूपगुणसाम्यनिरूपणं नाम चतुर्थोऽध्यायः॥४॥ एतादृशे महत्तत्त्वे लक्ष्म्या सह हरिः स्वयम् ॥ प्रविवेश महाभाग क्षोभयामास वै हरिः ॥१॥ अहंतत्त्वमभूत्तस्माज्ज्ञानद्रव्यक्रियात्मकम् ॥ अहंकारसमुत्पत्तावेकांशस्तमसि स्मृतः ॥ २ ॥ तद्दशांशाधिकरजस्तद्दशांशाधिकं प्रभो ॥ सत्त्वमित्युच्यते सद्भिर्ह्येतदात्मा त्वहं स्मृतम् ॥ ३ ॥ अहंतत्त्वाभिमानी तु आदौ शेषो बभूवह ॥ सहस्राब्दाच्च पश्चात्तौ जातौ खगहरौ द्विज ॥ ४ ॥ अहंतत्त्वे खग ह्येषु प्रविष्टो हरिरव्ययः ॥ क्षोभयामास भगवाँल्लक्ष्म्या सह हरिः स्वयम् ॥५॥ वैकारिकस्तामसश्च तैजसश्चेत्यहं त्रिधा॥त्रिधा बभूव रुद्रोपि यतस्तेषां नियामकः ॥ ६ ॥ वैकारिकस्थितो रुद्रो वैकारिक इति स्मृतः ॥ तामसे तु स्थितो रुद्रस्तामसो ह्यभिधीयते ॥ ७ ॥ तैजसे तु स्थितो रुद्रो लोके वै तैजसः स्मृतः ॥ तैजसे तु ह्यहंतत्त्वे लक्ष्म्या सह हरिः स्वयम् ॥८॥ विशित्वा क्षोभयामास तदासौ दशधा त्वभूत् ॥ श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥ ९ ॥ वाक्पाणिपादं पायुश्च उपस्थेति दश स्मृताः ॥ वैकारिके ह्यहंतत्त्वे प्रविश्य क्षोभयद्धरिः ॥ १० ॥ महत्तत्त्वादिमा अदाविंद्रियाणां च देवताः ॥ एकादशविधा आसन्क्रमेण तु खगेश्वर ॥ ११ ॥ मनोभिमानिनी ह्यादौ वारुणी त्वभवत्तदा ॥ अनंतरं च सौपर्णी गौरोजापि तथैव च ॥ १२ ॥ शेपादनंतरास्तासां दशवर्षादनंतरम् ॥ उत्पत्तिरिति विज्ञेयं क्रमेण तु खगेश्वर ॥ १३ ॥ मनोभिमानिनावन्याविंद्रकामौ प्रजज्ञतुः ॥ ताक्ष्यं ह्यनन्तरौ ज्ञेयौ मुक्तौ संसार एव च ॥ १४ ॥ ततस्त्वगात्मा ह्यभवत्सोहंकारिक ईरितः ॥ ततः पाण्यात्मकाश्चैव जज्ञिरे पक्षिसत्तम ॥ १५ ॥ शची रतिश्चानिरुद्धस्तथा स्वायंभुवो मनुः ॥ बृहस्पतिस्तथा दक्ष एते पाण्यात्मकाः स्मृताः ॥ १६ ॥ दक्षस्यानन्तरं जज्ञे प्रवाहो नाम चांडज ॥ स एवोक्तश्चातिवाहो यापयत्यात्मचोदितः ॥ १७ ॥ हस्तादनंतरं ज्ञेयो न तु शच्यादिवत्स्मृतः ॥ ततोभवन्महाभाग चक्षुरिंद्रियमात्मनः ॥ १८ ॥ स्वायंभुवमनोर्भार्या शतरूपा यमस्तथा ॥ चन्द्रसूर्यौ तु चत्वारश्चक्षुरिंद्रिय

मानिनः ॥ १९ ॥ चन्द्रः श्रोत्राभिमानीति तथा ज्ञेयः खगेश्वर ॥ जिह्वेंद्रियात्मा वरुणः सूर्यस्यानंतरोभवत् ॥ २० ॥ वागिंद्रियाभिमानिन्यो ह्यभव
न्वरुणादनु ॥ दक्षपत्नीः प्रसूतिश्च भृगुरग्निस्तथैव च ॥ २१ ॥ तत्र वैते महात्मानो वागिंद्रियनियामकाः ॥ ये क्रव्यादादयश्चोक्तास्तेनंतत्त्वानि
यामकाः ॥ २२ साम्यत्वाच्च तथैवोक्तिर्न तु तत्त्वाभिमानितः ॥ उपस्थमानिनो वींद्र बभूवुस्तदनंतरम् ॥ २३ ॥ विश्वामित्रो वसिष्ठोत्रिर्मरीचिः
पुलहः क्रतुः ॥ पुलस्त्योंगिरसश्चैव तथा वैवस्वतो मनुः ॥ २४ ॥ मन्वादयोनन्तसंख्या उपस्थात्मान ईरिताः ॥ पायोश्च मानिनो वींद्र जज्ञिरे
तदनन्तरम् ॥ २५ ॥ सूर्येषु द्वादशस्वेको मित्रस्तारा गुरोः प्रिया ॥ कोणाधिपो निर्ऋतिश्च प्रवाही प्रवहप्रिया ॥ २६ ॥ चत्वार एते पक्षींद्र वायुतत्त्वा
भिमानिनः ॥ घ्राणाभिमानिनः सर्वे जज्ञिरे द्विजसत्तम ॥ २७ ॥ विष्वक्सेनो वायुपुत्रौ ह्यश्विनौ गणपस्तथा ॥ वित्तपः सप्त वसव उक्तो ह्यग्नि
स्तथाष्टमः ॥ २८ ॥ सत्यानां शृणु नामानि द्रोणः प्राणो ध्रुवस्तथा ॥ अर्के दोषस्तथा वस्कः सप्तमस्तु विभावसुः ॥ २९ ॥ दश
रुद्रास्तथा ज्ञेया मूलरुद्रो भवः स्मृतः ॥ दश रुद्रस्य नामानि शृणुष्व द्विजसत्तम ॥ ३० ॥ रैवंतेयस्तथा भीमो वामदेवो वृषाकपिः ॥
अजेकपादहिर्बुध्न्या बहुरूपो महानिति ॥ ३१ ॥ दश रुद्रा इति प्रोक्ताः षडादित्याञ्छृणु द्विज ॥ उरुक्रमस्तथा शक्रो विवस्वान्वरुणस्तथा
॥ ३२ ॥ पर्जन्योतिबाहुरेत उक्ताः पूर्वं द्विजोत्तम ॥ पर्जन्यव्यतिरिक्तास्तु पंचैवोक्ता न संशयः ॥ ३३ ॥ गंगासमस्तु पर्जन्य इति चोक्तः खगे
श्वर ॥ सविता ह्यर्यमा धाता पूषा त्वष्टा तथा भगः ॥ ३४ ॥ चत्वारिंशत्तथा सप्त महतः परिकीर्त्तिताः ॥ द्वावुक्ताविति विज्ञेयो प्रवहोतिवहस्तथा ॥
॥ ३५ ॥ तथा दशविधा ज्ञेया विश्वेदेवाः खगेश्वर ॥ शृणु नामानि तेषां तु पुरूरवार्द्रवसंज्ञकौ ॥ ३६ ॥ धूरिलोचनसंज्ञौ द्वौ क्रतुदक्षेतिसंज्ञकौ ॥ द्वौ
सत्यवसुसंज्ञौ च कामकालकसंज्ञकौ ॥ ३७ ॥ एवं दशविधा ज्ञेया विश्वेदेवाः प्रकीर्त्तिताः ॥ तथा ऋभुगणश्चोक्तस्तथा च पितरस्त्रयः ॥ ३८ ॥ द्यावा
पृथिव्यौ विज्ञेयौ एते च षडशीतयः ॥ देवाः प्रजज्ञिरे सर्वे नासिकाद्रियमानिनः ॥ ३९ ॥ आकाशस्याभिमानी तु गणपः समुदाहृतः ॥ उभयत्राभि
मानीति ज्ञेयं तत्त्वार्थवेदिभिः ॥ ४० ॥ विष्वक्सेनं विना सर्वे जयाद्या विष्णुपार्षदाः ॥ अभवन्समहीनाश्च विष्वक्सेनादनंतरम् ॥ ४१ ॥ एतेपि
नासिकायाश्च अवांतरनियामकाः ॥ अतस्ते तत्त्वमानिभ्यो ह्यवरास्ते प्रकीर्त्तिताः ॥ ४२ ॥ स्पर्शतत्त्वाभिमानी तु अपानश्चेत्युदाहृतः ॥ रूपाभिमानी
संजज्ञे व्यानो नाम महान्प्रभो ॥४३॥ रसात्मक उदानश्च समानो गंधनामकः ॥ अपां नाथाश्च चत्वारो मरुतः परिकीर्त्तिताः ॥४४॥जयाद्यनंतरान्व
क्ष्ये समुत्पन्नान्खगेश्वर ॥ प्रधानाग्रे प्रथमजः पावकः समुदाहृतः ॥ ४५ ॥ भृगोर्महर्षेः पुत्रश्च च्यवनः समुदाहृतः ॥ बृहस्पतेश्च पुत्रस्तु उतथ्यः

परिकीर्त्तितः ॥ ४६ ॥ रैवतश्चाक्षुषश्चैव तथा स्वारोचिषः स्मृतः ॥ उत्तमो ब्रह्मसावर्णी रुद्रसावर्णिरेव च ॥ ४७ ॥ देवसावर्णिसावर्णिरिंद्रसावर्णिरेव च ॥ तथैव दक्षसावर्णिर्धर्मसावर्णिरेव च ॥ ४८ ॥ एकादशविधा ह्येवं मनवः परिकीर्त्तिताः ॥ पितॄणां सप्तकं चैवेत्याद्याः संजज्ञिरे खग ॥ ४९ ॥ तदनंतरमुत्पन्नास्तेभ्यो नीचाः शृणु द्विज ॥ वरुणस्य पत्नी गंगा पर्जन्याख्यो विभावसुः ॥५०॥ यमभार्या श्यामला तु ह्यनिरुद्धप्रिया विराट् ॥ ब्रह्माण्डमानिनी सैव ह्युषानाम्ना सुशब्दिता ॥ ५१ ॥ रोहिणी चंद्रभार्योक्ता सूर्यभार्या तु संज्ञका ॥ एता गंगादिषट्संख्या जज्ञिरे विनतासुत ॥ ५२ ॥ गंगाद्यनंतरं जज्ञे स्वाहा वै मंत्रदेवता ॥ स्वाहानामाग्निभार्योक्ता गंगादिभ्योधमा श्रुता ॥ ५३ ॥ स्वाहानंतरजो ज्ञेयो ज्ञानात्मा बुधनामकः ॥ बुधस्तु चंद्रपुत्रो यः स्वाहाया अधमः स्मृतः ॥ ५४ ॥ उषा नाम तथा जज्ञे बुधस्यानंतरं खग ॥ उषानामाभिमानी तु ह्यश्विभार्या प्रकीर्त्तिता ॥ ५५ ॥ बुधाधमा सा विज्ञेया नात्र कार्या विचारणा ॥ ततः शनैश्चरो जज्ञे पृथिव्यात्मेतिविश्रुतः ॥ ५६ ॥ उषाधमस्तु विज्ञेयस्ततो जज्ञेथ पुष्करः ॥ कर्माभिमानी विज्ञेयः शनैश्चर इतीरितः ॥ ५७ ॥ तत्त्वाभिमानिनो देवानेवं सृष्ट्वा हरिः स्वयम् ॥ प्रविवेश स देवेशस्तत्त्वेषु रमया सह ॥५८॥ ॥ इति श्रीगारुडे महापुराणे कृ०ग०सं०उ०खं० तृतीयांशे ब्रह्मकांडे तत्त्वाभिमानिदेवतोत्पत्तितत्तारतम्यनिरूपणं नाम पंचमोऽध्यायः ॥ ५ ॥ ॥ श्रीकृष्ण उवाच ॥ तत्रतत्र स्थितास्तत्त्वे तत्तत्तत्त्वाभिमानिनः ॥ स्वेस्वे ह्यायतने स्वाङ्गे तदर्थं च खगेश्वर ॥ १ ॥ हरिं नारायणं सम्यक् स्तोतुं समुपचक्रिरे ॥ चिंत्याचिंत्यगुणे विष्णौ विरुद्धाः संति सद्गुणाः ॥ २ ॥ एकैकशो ह्यनंतास्ते तद्गुणानां स्तुतौ मम ॥ क्व शक्तिरिति बुद्ध्या सा व्रीडयावनताब्रवीत् ॥ ३ ॥ श्रीरुवाच ॥ नतास्मि ते नाथ पदारविंदं न वेद चान्यच्चरणाहते तव ॥ त्वयीश्वरे संति गुणाः श्रुतास्तु तथाऽश्रुताः संति च देवदेव ॥४॥ सम्यक् सृष्टं स्वायतनं च दत्वा गोविंद दामोदर मां च पाहि ॥ स्तुत्या मदीयश्च सुखैकपूर्णः प्रियो जनो नास्ति तथा त्वदन्यः ॥ ५ ॥ ब्रह्मोवाच ॥ लक्ष्मीपते सर्वजगन्निवास त्वं ज्ञानसिंधुः क्व च विश्वमूर्ते ॥ अहं क्व चाज्ञस्तव वै शक्तिरस्ति ह्यज्ञोहं वै ह्यल्पशक्तिर्ममास्ति ॥ ६ ॥ लक्ष्म्याश्चैव ज्ञानवैराग्यभक्ति ह्यत्यल्पमद्धा मयि सर्वदैव ॥ तव प्रसादादस्ति जगन्निवास तत्र स्वामित्वं नास्ति विष्णो सदैव ॥ ७ ॥ न देहि त्वं सर्वदा मे मुरारे अहंममत्वं प्राप्यमेतावदेव ॥ गम्यज्ञानं योग्यगुणे रमेश प्रमादो वा नास्तिनास्त्यद्य नित्य ॥ ८ ॥ तन्मे हृषीकाणि पतंत्यसत्पथे पदारविंदे तु पतंतु सर्वदा ॥ लक्ष्म्या ह्यहं कोटिगुणेन हीनः स्तोतुं सामर्थ्यं नास्ति मे





१ समाहारे द्वन्द्वः ।

सुप्रसीद ॥९॥ इति स्तवं विष्णुगुणान्विधाता तार्क्ष्यस्थितः प्रांजलिस्तस्य चाग्रे ॥ तदा वायुर्देवदेवो महात्मा दृष्ट्वा विष्णुं भक्तिसंवर्धितात्मा॥ १० ॥ स्नेहोत्थरावः स्खलिताक्षरस्तं मुंचन्कणान्प्रांजलिराबभाषे ॥ वायुरुवाच ॥ एते हि देवास्तव भृत्यभूताः पादारविंदं परमं सुदुर्लभम् ॥११॥ चतुर्विधा न्पुरुषार्थान्रमेश संप्रार्थये तच्च सदापि देव ॥ दृष्ट्वा हरेः सैव मायैव तावत्सुकारणं किंचिदन्यन्न चास्ति ॥ १२ ॥ अतो नाहं प्रदयोपि भूमन् भव त्पदांभोजनिषेवणोत्सुकः ॥ लोकस्य कृष्णाद्विमुखस्य कर्मणा अपुण्यशीलस्य सुदुःखितस्य ॥ १३ ॥ अनुग्रहार्थं च तवावतारो नान्यश्च किंचि त्पुरुषार्थस्तवेश ॥ गोभूसुराणां च महीरुहाणां तथा सुराणां प्रवरावतारैः ॥ १४ ॥ क्षेमोपकाराणि च वासुदेव क्रीडन्विधत्ते न च किंचिदन्यत् ॥ मनो न तृप्यत्यपि शंसतां नः सुकर्ममौलेश्चरितामृतानि ॥ १५ ॥ अच्छिन्नभक्तस्य हि मे मुकुंद सदा भक्तिं देहि पादारविंदे ॥ सदा तदेवास्तु न किंचिदन्यद्यत्र त्वमासीःपुरुषे देवदेव ॥ १६ ॥ अहं च तत्रास्मि तव प्रसादाद्यत्रास्म्यहं तत्र भवान्महाप्रभो ॥ व्यंसिर्ममेयं च शरीरमध्ये चतुर्मुख श्चैव न चैततदन्यैः ॥१७॥ मदीयनिद्रा तव वंदनं प्रभो मदीययामाचरणं प्रदक्षिणम् ॥ मदीयव्याख्याहरणं[1] स्तुतिः स्यादेवं विदित्वा च समर्पयामि ॥१८॥ मद्दृष्टियोग्यं च पदार्थजातं दृष्ट्वा हरेः प्रतिमा एव तच्च ॥ इत्थं मत्वाहं सर्वदा देवदेव तत्रस्थितान्हरिरूपान् भजिष्ये ॥१९॥ यच्चंदनं यत्तु पुष्पं च धूपं वस्त्रं च यद्भक्ष्यभोज्यादिकं च ॥ एतत्सर्वं विष्णुप्रीत्यर्थमेवेत्येतद्व्रतं सर्वदा वै करिष्ये ॥ २० ॥ अवैष्णवान्दूषयिष्ये सदाहं सद्वैष्णवा न्पा ( ह्लाँ ) लयिष्ये मुरारे ॥ विष्णुद्रुहां छेदयिष्ये च जिह्वां तच्छृण्वतां पूरयिष्ये त्रपूल्काः ॥ २१ ॥ एतादृशी शक्तिर्ममास्ति देव तव प्रसादाद्ब लिनोपि विष्णो ॥ अथापि नाहं स्तवने समर्थः लक्ष्म्या ह्यहं कोटिगुणैर्विहीनः॥२२॥एतत्स्तोत्रं ह्यर्थयेच्चैव यो नः तत्र प्रीतिर्ह्यक्षया मे सदा स्यात् ॥ स्तोत्रं ह्येतत्पाठयंतीह लोके ते वैष्णवास्ते च हरिप्रियाश्च ॥२३॥ कुर्वंति ये पठनं नित्यमेव समर्पयिष्यंति सदा हरौ च ॥ तेषां हरिः प्रीयते केशवोलं हरौ प्रसन्ने किमलभ्यमस्ति ॥ २४ ॥ एवं स्तुत्वा बलदेवो महात्मा तूष्णीं स्थितः प्रांजलिरग्रतो हरेः ॥ सरस्वत्युवाच ॥ को वा रसज्ञो भगवन् मुरारे हरे गुणस्तवनात्कीर्तनाद्वा ॥ २५ ॥ अलंबुद्धिं प्राप्नुयाद्देवदेव ब्रह्मादिभिः सर्वदा स्तूयमान[2] ॥ यः कर्णनाडीं पुरुषस्य यातो भवप्रदां देहरतिं छिनत्ति ॥ २६ ॥ न केवलं देहरतिं छिनत्त्यसद्गृहक्षेत्रभार्यासुतेषु नित्यम् ॥ पश्वादिरूपेषु धनादिकेषु अनर्घ्यरत्नेषु प्रियं छिनात्ति ॥ २७ ॥ अनं तवेदप्रतिपादितोपि लक्ष्मीर्न वै वेद तव स्वरूपम् ॥ चतुर्मुखो नैव वेद न वायुरसौ न वेत्तीति किमत्र चित्रम् ॥ २८ ॥ एतादृशस्य स्तवने क्वास्ति

१ मदीयो व्याहार इत्यर्थः । २ स्तूयमाना इत्यर्थः । आर्षत्वाच्छतायगभावश्च ।

शक्तिर्मम प्रभो ब्रह्मवाय्वोः सकाशात् ॥ शतैर्गुणैः सर्वदा न्यूनतास्ति अतो हरे दयया मां च पाहि ॥ २९ ॥ एवं स्तुत्वा हरिं सा तु तूष्णीमास खगेश्वर॥भारती तु तदा स्तोतुं हरिं समुपचक्रमे ॥३० भारत्युवाच ॥ ब्रह्मेश लक्ष्मीश हरे मुरारे गुणांस्तव श्रद्दधानस्य नित्यम् ॥ तथा स्तुवंतोस्य विवर्धमानां मतिं च नित्यं विषयेष्वसत्सु ॥ ३१ ॥ कुर्वंति वैराग्यममुत्र लोके ततः परं भक्तिदृढां तथैव ॥ ततः परं चैव हरेः प्रसन्नतां कुर्वंति नित्यं तव देवदेव ॥ ३२ ॥ तेनापरोक्षं च भवेच्च तस्य अतो गुणानां स्तवने च मे रतिः ॥ सा तु प्रजाता पुरुषस्य नित्यं संसारदुःखं तु तदा च्छिनत्ति ॥ ३३ ॥ विच्छिन्नदुःखस्य तदाधिकारिण आनन्दरूपाख्यफलं ददाति ॥ हरेर्गुणानस्तुवतां च पापं तेषां हि पुण्यं च तथा क्षिणोति ॥ ३४ ॥ एवं विदित्वा परमो गुरुर्मम वायुर्दयालुर्मम वल्लभश्च ॥ हरेर्गुणान्सर्वगुणप्रसारान्ममैव योग्यान्सुखमुख्यभूतान् ॥ ३५ ॥ उद्धृत्य पुण्येभ्य इवार्तबंधुः शिवश्च नो दुह्यति पुण्यकीर्त्तिम् ॥ तव प्रसादाच्च श्रियः प्रसादाद्वायोः प्रसादाच्च ममास्ति नित्यम् ॥३६॥ यद्यत्करोत्येव सदैव वायुस्तत्तत्करोत्येव सदैव नित्यम् ॥ वायोर्विरोधं न करोति देवः स तद्विरोधं च करोति नित्यम् ॥ ३७ ॥ हरेर्विरोधं न करोति वायुर्वायोर्विरोधं न करोति विष्णुः ॥ वायोः प्रसादान्मम नास्ति किंचिदतानभावश्च तव प्रसादात् ॥३८॥ यथैव मूलं च तथावतारे दुःखादिकं नास्ति समीरणस्य॥वायुस्तथान्ये च उभौ मुकुन्द स्तथावतारेषु न दुःखरूपौ ॥ ३९ ॥ अशक्तवद्दृश्यते वायुदेवः युगानुसारॉंल्लोकधर्मांस्तु रक्षन् ॥ नरावतारे तव देवे मुरारे ह्यशकता नेति विचिं तनीयम् ॥ ४० ॥ अवताररूपे यमदुःखादिकं च न चिंतनीयं ज्ञानिभिर्देवदेव ॥ अहं कदाचित्सुखनाशप्रदेशे दैत्यांस्तथा मारयितुं गतोस्मि ॥ ४१ ॥ नैतावता मम वायोश्च नित्यं दुःखातनं नैव संचितनीयम् ॥ एतादृशोहं स्तवनेतु कास्ति शक्तिर्गुणानां मधुसूदन प्रभो ॥ वायोः सकाशाच्च गुणेन हीना संसाररूपे मुक्तरूपे च देव ॥ ४२ ॥ एवं स्तुत्वा भारती तु तूष्णीमास खगेश्वर ॥ तदन न्तरजः शेषः प्रांजलिः प्राह केशवम् ॥ ४३ ॥ शेष उवाच ॥ नाहं च जाने तव पादमूलं रुद्रो न वेत्ति गरुडो न वेद ॥ अहं वाण्याः शतगुणांशहीनो दत्त्वा ह्यायतनं पाहि मां वासुदेव ॥ ४४ ॥ एवं स्तुत्वा सशेषस्तु तूष्णीमास खगेश्वर ॥ तदनन्तरजो वीशः स्तोतुं समुपचक्रमे ॥ ४५ ॥ गरुड उवाच ॥ तव पदोःस्तुतिं किं करोम्यहं[1] मम पदांबुजे ह्यर्पितं मनः ॥ कथमहं मुखे पक्षियोनिजः कथमेवंगुणा नीडितुं क्षमः ॥ ४६ ॥ एवं स्तुत्वा तु गरुडस्तूष्णीमास नयान्वितः ॥ तदनन्तरजो रुद्रस्तोतुं समुपचक्रमे ॥ ४७ ॥ रुद्र उवाच ॥ या वै तवेश

१ दौर्म्धीत्यर्थः ।

भगवन्न विदाम भूमन् भक्तिर्ममास्तु शिवपादसरोजमूले ॥ छन्नापि सा ननु सदा न ममास्ति देव तेनाद्ध्हं तव विरुद्धमतः करोमि ॥ ४८ ॥ सर्वा
न्न बुद्धिसहितस्य हरे मुरारे का शक्तिरस्ति वचने मम मूढबुद्धेः ॥ वाण्या सदा शतगुणेन विहीनमेनं मां पाहि चेश मम चायतनं च दत्त्वा ॥ ४९ ॥
एवं स्तुत्वा स रुद्रस्तु तूष्णीमास द्विजोत्तमः ॥ शेषानन्तरजा देवी वारुणी वाक्यमब्रवीत् ॥ ५० ॥ ॥ वारुण्युवाच ॥ लक्ष्मीपते ब्रह्मपते मनोः पते
गिरः पते रुद्रपते नृणां पते ॥ गुणांस्तव स्तोतुमहं समर्था न पार्वती नापि सुपर्णपत्नी ॥ ५१ ॥ शेषादहं दशगुणैर्विहीना मां पाहि नित्यं जगता
मधीश ॥५२॥ एवं स्तुत्वा वारुणी तु तूष्णीमास खगेश्वर ॥ तदनन्तरजा ब्राह्मी सौपर्णी ह्युपचक्रमे ॥५३॥ सौपर्ण्युवाच ॥ स्तोतुं गुणांस्तव हरे जगदी
शवाचा श्रोतुं हरे तव कथां श्रवणे न शक्तिः॥ यस्तत्त्वतुं स्मरति देव तव स्वरूपं को वै नु वेद भुवि नं भगवत्पदार्थम् ॥५४॥अतो गुणस्तवने नास्ति
शक्तिर्वीन्द्राहदं दशगुणैरवरा च नित्यम्॥५५॥एवं स्तुत्वा तु सौपर्णी तूष्णीमास खगेश्वर॥ रुद्रानंतरजा स्तोतुं गिरिजा तूपचक्रमे ॥ ५६ ॥ पार्वत्युवाच
गोविंद नारायण वासुदेव त्वया हि मे किंचिदपि प्रयोजनम्॥नास्त्येव स्वामिन्न च नाम वाचा सौभाग्यरूपः सर्वदा एक एव ॥५७॥ नारायणेति तव
नाम च एकमेव वैराग्यभक्तिविभवे परमं समर्थाम्॥असंख्यब्रह्मादिकहैत्यनाशाने गुर्वंगनाकोटिविनाशने च ॥५८॥ नामाधिकारिणी चाहं गुणानां च
महाप्रभो ॥ स्तवने नास्ति मे शक्ती रुद्राद्दशगुणैरहम् ॥५९॥अवरा च सदास्म्येव नात्र कार्या विचारणा ॥ एवं स्तुत्वा सा गिरिजा स्तूष्णीमास खगे
श्वर ॥ ६० ॥ इति श्रीगारुडे महापुराणे श्रीकृष्णगरुडसंवादे उत्तर० तृतीयांशे ब्रह्मकाण्डे तत्त्वाभिमानितत्तद्देवताकृतविष्णुस्तुतितत्तद्देवतातारतम्यनि
रूपणं नाम षष्ठोऽध्यायः ॥ ६ ॥ श्रीकृष्ण उवाच ॥ पार्वत्यानन्तरोत्पन्न इंद्रो वचनमब्रवीत् ॥ इन्द्र उवाच ॥ तव स्वरूपं हृदि संविजानन् समुत्सुकः
स्यात्स्तवने यस्तु मूढः ॥ अजानतः स्तवनं देवदेव तदेवाहुर्हेलनं चक्रपाणे ॥ १ ॥ तथापि तद्धे तव नाम पूर्वं भवेत्तदा पुण्यकरं भवेदिति ॥ रुद्रादि
कानां स्तवने नास्ति शक्तिस्तदा वक्तव्यं मम नास्तीति किं वा ॥ २ ॥ गुणांशतो दशभी रुद्रतो वै सदा न्यूनो मत्समः कामदेवः ॥ ज्ञाने
बले समता सर्वदास्ति तथाः कामः किं च दूतः सदैव ॥ ३ ॥ एवं स्तुत्वा देवदेवो हरिं च तूष्णीं स्थितः प्रांजलिर्नम्रमूर्धा ॥ तदनन्तरजो ब्रह्मा
अहंकारिक ऊचिवान ॥ ४ ॥ ॥ अहंकारिक उवाच ॥ नमस्ते गणपूर्णाय नमस्ते ज्ञानमूर्तये ॥ नमोऽज्ञानविदूराय ब्रह्मणेनं
तमूर्तये ॥ ५ ॥ इन्द्रादहं दशगुणैः सर्वदा न्यून उक्तो न जाने त्वां सर्वदा ह्यप्रमेय ॥ तथापि मां पाहि जगद्गुरो त्वं दत्त्वा

१ आर्षत्वाद्ध्रस्वः । २ गुर्वङ्गनागमनजपापकोटिनाशकमित्यर्थः ।

दिव्यं ह्यायतनं च विष्णो ॥ ६ ॥ आहंकारिक एवं तु स्तुत्वा तूष्णीं बभूव ह ॥ तदनंतरजा
शच्युवाच ॥ संचिंतयामि अनिशं तव पादपद्मं वज्रांकुशध्वजसरोरुहलाञ्छनाढ्यम् ॥ वागीश्वरैरपि सदा
मीश तव पादरजः स्मरामि ॥ ८ ॥ आहंकारिकप्राणाच्च गुणैश्च दशभिः सदा ॥ न्यूनभूतां च मां पाहि कृपालो भक्तवत्सल ॥
शची देवी तूष्णीं भगवती ह्यभूत् ॥ तदनंतरजा स्तोतुं गतिः समुपचक्रमे ॥ १० ॥ रतिरुवाच ॥ संचिंतयामि नृहरेर्वदनारविन्दं भृत्या
श्रिया हि गृहीतमूर्तिम् ॥ यच्छ्रीनिकेतमजरुद्ररमादिकैश्च संलालितं कुटिलकुंतलवृंदजुष्टम् ॥ ११ ॥ एतादृशं तव मुखं नुवितुं न शक्तिः शच्या
समापि भगवन्परिपाहि नित्यम् ॥ कृत्वा स्तुतिं गतिरियं परमादरेण तूष्णीं स्थिता भगवतश्च समीप एव ॥ १२ ॥ रत्यनंतरजो दक्षः स्तोतुं समुप
चक्रमे ॥१३॥दक्ष उवाच ॥ संचिंतये भगवतश्चरणोद्भतीर्थं भक्त्या ह्यजेन परिषिक्तमजादिवंद्यम् ॥ यच्छौचानिःसृतमजप्रवरावतारं गंगाख्यतीर्थमभवत्स
रितां वरिष्ठम् ॥ १४ ॥ रुद्रोपि तेन विधृतेन जटाकलापपूतेन पादरजसा ह्यशिवः शिवोभूत् ॥ एतादृशं ते चरणं करुणेश विष्णो स्तोतुं शक्तिर्मम
नास्ति कृपावतार ॥ गत्या समः श्रुतिगतो न गतोस्मि मोक्षमेतादृशं च परिपाहि निदानमूर्ते ॥ १५ ॥ एवं स्तुत्वा स दक्षस्तु तूष्णी
मेव बभूव ह ॥ तदनंतरजः स्तोतुं बृहस्पतिरुपाक्रमीत् ॥ १६ ॥ बृहस्पतिरुवाच ॥ संचिंतयामि सततं तव चाननाब्जं त्वं देहि दुष्टविषयेषु विरक्ति
मीश ॥१७॥ एतेषु शक्तिर्यदि वै स जीवो कर्त्ता च भोक्ता च सदा च दाता ॥ योषां च पुत्रसुहृदौ च पशूंश्च सर्वमेवं विनश्यति यतो हि तदाशु छिंधि
॥ १८ ॥ संसारचक्रभ्रमणेनैव देव संसारदुःखमनुभूयेहागतोस्मि ॥ शक्तिर्न चास्ति नवने मम देवदेव रत्या समं च सततं परिपाहि नित्यम्
॥ १९ ॥ एवं श्रुत्वा च परमं तूष्णीमेव स्थितो मुनिः ॥ तदनंतरजस्तोतुं ह्यनिरुद्धोपचक्रमे ॥ २० ॥ अनिरुद्ध उवाच ॥ एवं हरेस्तव कथां रसिकां
विहाय स्त्रीणां भगे च वदने परिमुह्य नित्यम् ॥ विष्ठांत्रपूरितबिले रसिको हि नित्यं स्थायी च सूकरवदेव विमूढबुद्धिः ॥ २१ ॥ मज्जास्थिपित्तक
फरक्तमलादिपूर्णे चर्मांत्रवेष्टितमुखे पतितं ह पीतम् ॥ आस्वादने मम च पापगतेर्सुरागे मायाबलं तव विभो परमं निमित्तम् ॥ २२ ॥ संसारचक्रे
भ्रमतश्च नित्यं सुदुःखरूपे सुखलेशवर्जिते ॥ मलं वमंतं नवभिश्च द्वारैः शरीरमारुह्य सुमूढबुद्धिः ॥ २३ ॥ नमामि नित्यं तव सत्कथामृतं विहाय
देव श्रुतिमूलनाशनम् ॥ कुटुंबपोषं च सदा च कुर्वन्दानाद्यकुर्वन्निवसन् गृहे च ॥ २४ ॥ दूरे च संसारमलं त्विदं कुरु देहि ह्यदो दिव्यकथामृतं
सदा ॥ एतादृशोहं तव सद्गुणौघं स्तोतुं समर्थो नास्मि शचीसमश्च ॥ २५ ॥ एवं स्तुत्वानिरुद्धस्तु तूष्णीमास खगेश्वर ॥ तदनंतरजः स्तोत्रं मनुः

स्वायंभुवोब्रवीत् ॥ २६ ॥ स्वायंभुव उवाच ॥ स्तोतुं ह्यनुप्रविशतोपि न गर्भदुःखं तस्मादहं परमपूज्यपदं गतस्ते ॥ २७ ॥ मनोर्भार्या मानवी च यमः संयमिनीपतिः ॥ दिशाभिमानी चंद्रस्तु सूर्यश्चक्षुर्नियामकः ॥ परस्परसमा ह्येते मुक्ता संसारमेव च ॥ २८ ॥ प्रवाहाद्विगुणेनश्चेत्येवं जानीहि चांडज ॥ सूर्यानंतरजः स्तोतुं वरुणः संप्रचक्रमे ॥ २९ ॥ वरुण उवाच ॥ त्वदिच्छया रचिते देहगेहे पुत्रे कलत्रेपि धने द्रव्यजातौ ॥ ममाहमित्यल्पधिया च मूढा संसारदुःखे विनिमज्जंति सर्वे ॥ ३० ॥ अतो हरे तादृशीं मे कुबुद्धिं विनाश्य मे देहि ते पाददास्यम् ॥ अहं मनोः पादपादार्धभूतगुणेन हीनः सर्वदा वै मुरारे ॥ ३१ ॥ एवं स्तुत्वा तु वरुणः प्रांजलिः समुपस्थितः ॥ वरुणानंतरोत्पन्नो नारदो ह्यस्तुवद्धरिम् ॥ ३२ ॥ नारद उवाच ॥ यन्नामधेयश्रवणानुकीर्तनात्स्वाद्वन्यतत्त्वं मम नास्ति विष्णो ॥ पुनीह्यतश्चैव परोवरायान्यज्जिह्वाग्रे वर्तते नाम तस्य ॥३३॥ यज्जिह्वाग्रे हरिनामैव नास्ति स ब्राह्मणो नैव स एव गोखरः ॥ अहं न जाने च तव स्वरूपं न्यूनो ह्यहं वरुणात्सर्वदैव ॥ ३४ ॥ एवं स्तुत्वा नारदो वै खगेंद्रस्तूष्णीमभूद्देवदेवस्य चाग्रे ॥ यो नारदानंतरं संबभूव भृगुर्महात्मा स्तोतुमुपप्रचक्रमे ॥ ३५ ॥ भृगुरुवाच ॥ किमासनं ते गरुडासनाय किं भूषणं कौस्तुभभूषणाय ॥ लक्ष्मीकलत्राय किमस्ति देयं वागीश किं ते वचनीयमस्ति ॥ अतो न जाने तव सद्गुणांश्च ह्यहं सदा वरुणा त्पादहीनः ॥ ३६ ॥ एवं स्तुत्वा हरिं देवं भृगुस्तूष्णीं बभूव ह ॥ तदनंतरजो ह्यग्निरस्तावीत्पुरुषोत्तमम् ॥ ३७ ॥ अग्निरुवाच ॥ यत्तेजसाहं सुसमिद्धतेजा हव्यं वहाम्यध्वरे आज्यसिक्तम् ॥ ३८ ॥ यत्तेजसाहं जठरे संप्रविश्य पचन्नन्नं सर्वदा पूर्णशक्तिः ॥ अतो न जाने तव सद्गुणांश्च भृगोरहं सर्वदैवं समोस्मि ॥ ३९ ॥ तदनंतरजा स्तोतुं प्रसूतिरुपचक्रमे ॥ ४० ॥ प्रसूतिरुवाच ॥ यन्नामार्थविचारणेपि मुनयो मुह्यंति वै सर्वदा त्वद्भीता अपि देवता ह्यविरतं स्त्रीभिः सदैव स्थिताः ॥ मांधातृध्रुवनारदाश्च भृगवो वैवस्वताद्याखिलाः प्रेम्णा वै प्रणमाम्यहं हितकृते तस्मै नमो विष्णवे ॥ ४१ ॥ अतो न जाने तव सद्गुणान्सदा एवं विधा का मम शक्तिरस्ति ॥ स्तुत्वा ह्येवं प्रसूतिस्तु तूष्णीमासीत्खगेश्वर ॥ ४२ ॥ अग्निर्वै दक्षा गात्मको ब्रह्मपुत्रो भृगुर्ऋषिस्तथा ॥ तद्भार्या वै प्रसूतिस्तु त्रय एते समाः स्मृताः ॥ ४३ ॥ वरुणात्पादहीनाश्च प्रवहाद्विगुणाधमाः ॥ दक्षाच्छतावरा ह्येया मित्रात्तु द्विगुणाधिकाः ॥ ४४ ॥ प्रसूत्यनन्तरं जातो वसिष्ठो ब्रह्मनंदनः ॥ विनयावनतो भूत्वा स्तोतुं समुपचक्रमे ॥ ४५ ॥ वसिष्ठ उवाच ॥ ॥ नमोस्तु तस्मै पुरुषाय वेधसे नमोनमोऽसद्वृजिनच्छिदे नमः ॥ नमोनमो स्वाङ्गभवाय नित्यं नतोस्मि हे नाथ तवांघ्रिपंक

१ स्त्रीभिः सदैव पद्मभों० पा० ।

जम् ॥४६॥ मां पाहि नित्यं भगवन्वासुदेव ह्यत्रेरहं सर्वदा न्यून एव ॥ मित्रादहं सर्वदा किञ्चिदूनःस्तुत्वा देवं सोभवत्तत्र तूष्णीम् ॥ ४७ ॥ यो वसिष्ठानंतरजो मरीचिर्ब्रह्मनन्दनः ॥ हरिं तुष्टाव परया भक्त्या नारायणं गुरुम् ॥ ४८ ॥ मरीचिरुवाच ॥ देवेन चाहं हतधीर्भवत्प्रसङ्गात्सर्वाशुभोपगमनाद्विमुखेंद्रियश्च ॥ कुर्वे च नित्यं सुखलेशलवादिना त्वदरं मनस्त्वशुभकर्म समाचरिष्ये ॥ ४९ ॥ एतादृशोहं भगवाननन्तः सदा वसिष्ठस्य समान एव ॥५०॥ एवं स्तुत्वा मरीचिस्तु तूष्णीमास तदा खग ॥ तदनन्तरजो ह्यत्रिरस्तावीत्प्रांजलिर्हरिम्॥५१॥आविर्भवज्जगत्प्रभवायावतीर्णं तद्रक्षणार्थमनसश्च तथाव्ययाय ॥ तत्त्वार्थमूलमविकारि तव स्वरूपं ह्यानन्दमागमत एव विकारशून्यम् ॥ ५२ ॥ त्रैगुण्यशून्यमखिलेषु च संविभक्तं तत्र प्रविश्य भगवन्न हि पश्यतीव ॥ अतो मरारेस्तव सद्गुणांश्च स्तोतुं न शक्नोमि मरीचितुल्यः ॥ ५३ ॥ एवं स्तुत्वा ह्यत्रिरपि तूष्णीमास तदा खग ॥ तदनन्तरजः स्तोतुमंगिरा वाक्यमब्रवीत ॥ ५४ ॥ अंगिरा उवाच ॥ द्रष्टुं न शक्नोमि तव स्वरूपं ह्यनन्तबाहूदरमस्तकं च ॥ अनन्तमाहत्त्वकिरीटजुष्टं महार्हनानाभरणैश्च शोभितम् ॥ एतादृशं रूपमनन्तपारं स्तोतुं ह्यशक्तस्तु समोस्मि चात्रेः ॥ ५५ ॥ एवं स्तुत्वा ह्यंगिराश्च तूष्णीमास खगेश्वर ॥ तदनन्तरजः स्तोतुं पुलस्त्यो वाक्यमब्रवीत् ॥५६॥ पुलस्त्य उवाच ॥ यो वा हरिस्तु भगवान्स ( स्व ) उपासकानां संदर्शये द्भुवनमङ्गलमङ्गलं च ॥ ( लक्ष्य ) यस्मै नमो भगवते पुरुषाय तुभ्यं यो वाविता निगमभागगमप्रसङ्गे ॥ ५७ ॥ एतादृशांस्तव गुणान्नवितुं न शक्तं मां पाहि भगवन्मदृशो ह्यङ्गिरसा च ॥ ५८ ॥ एवं स्तुत्वा पुलस्त्योपि स्तूष्णीमिव बभूव ह ॥ तदनन्तरजः स्तोतुं पुलहो वाक्यमब्रवीत् ॥ ५९ ॥ पुलह उवाच ॥ निष्कामरूपरहितस्य समर्पितं च स्नानांबरोत्तमपयःफलपुष्पभोज्यम् ॥ आराधनं भगवतस्तव सत्क्रियाश्च व्यर्थं भवेदिति वदंति महानुभावाः ॥ ६० ॥ तस्मै सदा भगवते प्रणमामि नित्यं निष्कामया तव समर्पणमात्रबुद्ध्या ॥ वैकुण्ठनाथ भगवन्स्तवने न शक्तिः सोहं पुलस्त्यसदृशोस्मि न संशयोत्र ॥ ६१ ॥ एवं स्तुत्वा तु पुलहस्तूष्णीमास तदा खग ॥ तदनन्तरजः स्तोतुं क्रतुः समुपचक्रमे ॥ ६२ ॥ क्रतुरुवाच ॥ प्राणप्रयाणसमये भगवंस्तवैव नामानि संसृतिजदुःखविनाशकानि ॥ यैनैकजन्मशमलं सहसैव हित्वा संयाति मुक्तिममलां तमहं प्रपद्ये ॥ ६३ ॥ ये भक्त्या विवशा विष्णो नाममात्रैकजल्पकाः ॥ तेपि मुक्तिं प्रयांत्याशु किमुत ध्यायिनः सदा ॥ ६४ ॥ एवं स्तुत्वा क्रतुरपि तूष्णीमास खगेश्वर ॥ तदनन्तरजः स्तोतुं मनुर्वैवस्वतोब्रवीत् ॥ ६५ ॥ वैवस्वत उवाच ॥ सोहं हि कर्मकरणे निरतः सदैव स्त्रीणां भोगे च निरतश्च गृहे प्रमत्तः ॥ जिह्वेंद्रिये च निरतस्तव दर्शने च सम्यग्विरागमहितः परमो दरेण ॥ ६६ ॥ मांसास्थिमज्जारुधिरैः महिते च देहे भक्तिं सदैव भगवन्नपि नस्करे च ॥

गुर्वग्निवाडवगवादिषु सत्सु दुःखात्सम्यग्विरक्तिमुपयामि सहस्व नित्यम् ॥ ६७ ॥ लोकानुवादश्रवणे परमा च शक्तिर्नारायणस्य नमने न च मेस्ति शक्तिः ॥ लोकानुयानकरणे परमा च शक्तिः क्षेत्रादिमार्गगमने परमा ह्यशक्तिः ॥ ६८ ॥ वैश्यादिकेषु धनिकेषु परा च शक्तिः सद्ब्राह्मणेष्वपि न शक्तिरहो मुरारे ॥ ६९ ॥ वैवस्वतमनुर्देवं स्तुत्वा तूष्णीं बभूव ह ॥ तदनन्तरजः स्तोतुं विश्वामित्रोपचक्रमे ॥ ७० ॥ विश्वामित्र उवाच ॥ न ध्याते चरणांबुजे भगवतो संध्यापि नानुष्ठिता ज्ञानद्वारकपाटपाटनपटुर्धर्मोपि नोपार्जितः॥ अंतर्व्याप्तमलाभिघातकरणे पट्वी श्रुता ते कथा नो देव श्रवणेन पाहि भगवन्मामामित्रितुल्यं सदा ॥ ७१ ॥ विश्वामित्रऋषिस्त्वेवं स्तुत्वा तूष्णीं बभूव ह ॥ भृगुनारदक्षांश्च विहाय ब्रह्मपुत्रकाः ॥ ७२ ॥ सप्तसंख्या वसिष्ठाद्या विश्वामित्रस्तथैव च ॥ वैवस्वतमनुस्त्वेते परस्परसमाः स्मृताः ॥ ७३ ॥ वह्नेरप्यवरा नित्यं किंचिन्मित्राद्गुणाधिकाः ॥ तदनन्तजस्तोत्रं वक्ष्ये शृणु खगेश्वर ॥७४॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे कृष्णगरुडसंवादे देवादिस्तुतितत्तारतम्यनिरूपणं नाम सप्तमोऽध्यायः ॥७॥ क्रतोरनंतरं जातो मित्रो ( श्रो ) नाम खगेश्वर ॥ नारायणं जगद्योनिं स्तोतुं समुपचक्रमे॥ १॥मित्र उवाच ॥ नतोस्म्यज्ञस्त्वच्चरणारविंदं भवच्छिदं स्वस्त्ययनं भवच्छिदे ॥ वेद स्वयं भगवान्वासुदेवो नाहं नाग्निर्न त्रिदेवा मुनींद्राः ॥ २ ॥ अथापरे भागवतप्रधाना यदा न जानीयुरथापरे कुतः ॥ मां पाहि नित्यं परतोप्यधीश विश्वामित्रान्न्यून एवेति नित्यम् ॥ अहं पर्जन्याद्द्विगुण एव नित्यमतो मम स्तवने नास्ति शक्तिः ॥ ॥ ३ ॥ एवं स्तुत्वा हरिं मित्रस्तूष्णीमास तदा खग ॥ तदनंतरजा तारा स्तोतुं समुपचक्रमे ॥ ॥ तारोवाच ॥ ४ ॥ अनन्येन तु भावेन भक्तिं कुर्वंति ये दृढाम् ॥ त्वत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबांधवाः ॥ ५ ॥ त्वदाश्रयां कथां श्रुत्वा ( दृष्ट्वा ) शृण्वंति कथयंति च ॥ तथैते साधवो विष्णो सर्वसंगविवर्जिताः ॥ ६ ॥ तन्मध्ये पतितां पाहि सदा मित्रसमां प्रभो ॥ तारानंतरजः प्राह निर्ऋतिश्च खगेश्वर ॥ ७ ॥ निर्ऋतिरुवाच ॥ योगेन त्वय्यर्पितया च भक्त्या संयांति लोकाः परमां गतिं च ॥ आसेवया सर्वगुणाधिकानां ज्ञानेन वैराग्ययुतेन देव ॥ ८ ॥ चित्तस्य निग्रहेणैव विष्णोर्यांति परं पदम् ॥ अतो मां पाहि दयया सदा तारासमं प्रभो ॥ तदनन्तरजा स्तोतुं प्रावही तं प्रचक्रमे ॥ ९ ॥ ॥ प्रावह्युवाच ॥ सुताः प्रसंगेन भवन्ति वीर्यात्तव प्रसादात्परमाः सम्पदश्च ॥ या ह्युत्तमश्लोकरसायनाः कथास्तत्सेवनादास्त्वपवर्गवर्त्मनि॥ १०॥भक्तिर्भवेत्सर्वदा देवदेव सदाप्यहं निर्ऋतेः साम्यमेव॥ सहभार्ष्यकोमित्रः त्कथीतारः प्रकीर्तिताः॥ ११॥कोणाधिपो निर्ऋतिश्च प्रावही

प्रवहप्रिया ॥ चत्वार एते पर्जन्यात्त्रिगुणाः परिकीर्तिताः ॥ १२ ॥ तदनन्तरजान्वक्ष्ये तान्छृणु त्वं खगेश्वर ॥ प्रवाहभार्यानन्तरजो विष्वक्सेनोथ
पार्षदः॥ वायुपुत्रो महाभागः हरिं स्तोतुं प्रचक्रमे॥१३॥ विष्वक्सेन उवाच ॥ भगवान्मोक्षदः कृष्णः पूर्णानन्दो सदायदि ॥ यदि स्यात्परमा भक्तिर्ह्य
परोक्षत्वसाधना॥१४॥तथा स्वगुरुमारभ्य ब्रह्मांतेषु च साधुषु॥तद्योग्यतानुसारेण भक्तिर्निष्कपटा यदि॥१५॥तुलस्यादिषु जीवेषु यदि स्यात्प्रीतिरण्डज॥
संस्मृतिश्च तदा नाशी भूयादेव न संशयः॥१६॥एवं स्तुत्त्वा महाभागो विष्वक्से नो महाप्रभो॥तूष्णीं बभूव गरुड प्रांजलिर्नम्रकन्धरः॥मित्रादहं न्यून
एव नात्र कार्या विचारणा ॥१७॥ इति श्रीगा० म०उ०तृ०ध०विष्णुस्तुतिर्देवतारतम्यादि० अष्टमोऽध्यायः॥८॥ श्रीगरुड उवाच ॥ अजानजस्वरूपं
च ब्रूहि कृष्ण महामते ॥ तदन्यांश्च क्रमेणैव वक्तुं कृष्ण त्वमर्हसि॥१॥ श्रीकृष्ण उवाच॥अजानाख्या देवतास्तु तत्तद्देवकुले भवाः॥अजानदेवतास्ता
हि तेभ्योग्याः कर्मदेवताः ॥ २ ॥ विराधश्चारुदेष्णश्च तथा चित्ररथस्तथा ॥ धृतराष्ट्रः किशोरश्च हूहूर्हाहास्तथैव च ॥ ३ ॥ विद्याधरश्चोग्रसेनो
विश्वावसुपरावसू ॥ चित्रसेनश्च गोपालो बलः पञ्चदश स्मृताः ॥ ४ ॥ एवमाद्याश्च गंधर्वाः शतसंख्याः खगेश्वर ॥ अजानजसमा ज्ञेया मुक्तौ
संसार एव च ॥ ॥५ ॥ अज्ञानजास्तु मे देवाः कर्मजेभ्यः शतावराः ॥ घृताची मेनका रंभा उर्वशी च तिलोत्तमा ॥६॥ सुकेतुः शबरी चैव मंजुघोषा
च पिंगला ॥ इत्यादिकं यक्षरत्नं सह संपार्किर्त्तितम् ॥ ७ ॥ अजानजसमा ह्येते कर्मजेभ्यः शतावराः ॥ विश्वामित्रो वसिष्ठश्च नारदश्च्यवन
स्तथा ॥ ८ ॥ उतथ्यश्च मुनिश्चैतान्द्राजपित्वा खगेश्वर ॥ ऋषयश्च महात्मानो ह्यजानजसमाः स्मृताः ॥ ९ ॥ शतार्चिः कश्यपो ज्ञेयो मध्य
मश्च पराशरः ॥ पावमान्यः प्रगाथश्च क्षुद्रसूक्तश्च देवलः ॥ १० ॥ गृत्समदो ह्यासुरिश्च भरद्वाजोथ मुद्गलः ॥ उद्दालको ह्यृष्यशृंगः शंखः सत्यव्रत
स्तथा ॥ ११ ॥ सुयज्ञश्चैव बाभ्रव्यो मांडूकश्चैव बाष्कलः॥ धर्माचार्यस्तथागस्त्यो दाल्भ्यो दाढर्यच्युतस्तथा ॥१२॥ कवषो हरितः कण्वो विरूपो मुस
लस्तथा॥विष्णुवृद्धश्च आत्रेयः श्रीवत्सो वत्सलेत्यपि॥१३॥भार्गवश्चाप्रवानश्च मांडूकेयस्तथैव॥मंडूकश्चैव जाबचलिः वीतिहव्यस्तथैव च॥१४॥ गृत्स
मदः शौनकश्च इत्याद्या ऋषयः स्मृताः॥ एतेषां श्रवणादेव हरिः प्रीणाति सर्वदा ॥ १५ ॥ ब्रुवे द्व्यष्टसहस्रं च शृणु तार्क्ष्य मम स्त्रियः॥ अग्निपुत्रास्तु
यद्व्यष्टसहस्रश्च मम स्त्रियः॥ अजानजसमा ह्येता ( ते ) नात्र कार्या विचारणा ॥१६॥ त्वष्टुः पुत्री कशेरूश्च तासां मध्ये गुणाधिका ॥ तदनन्तरजान्व
क्ष्ये शृणु सम्यक् खगेश्वर ॥ १७ ॥ आजानेभ्यस्तु पितरः सप्तभ्यान्ये शतावराः ॥ तथाधिका हि पितर इति वेदविदां मतम् ॥ १८ ॥ तदनंतराजा
न्वक्ष्ये शृणु त्वं द्विजसत्तम ॥ अष्टाभ्यो देवगंधर्वा अष्टोत्तरशतं विना ॥ १९ ॥ तेभ्यः शतगुणानंदा देवप्रेष्यास्तु मुख्यतः ॥ स्वमुखेनैव दैवैश्च

आज्ञाप्याः सर्वदा गणाः ॥ २० ॥ आख्याता देवगन्धर्वास्तेभ्यस्ते च शतावराः ॥ तेभ्यस्तु क्षितिपा ज्ञेया अवराश्च शतैर्गुणैः ॥२१॥ तेभ्यः शतगुणा ज्ञेया मानुषेषूत्तमा गणाः ॥ एवं प्रासंगिकानुक्त्वा प्रकृतं ह्यनुसराम्यहम् ॥ एवं ब्रह्मादयो देवा लक्ष्म्याद्या अपि सर्वशः ॥२२॥ स्तुत्वा तूष्णीं स्थिताः सर्वे प्रांजलीकृत्य भो द्विज ॥ २३ ॥ इति स्तुतश्च देवेशो भगवान् हरिरव्ययः ॥ तेषामायतनं दातुं मनसा समचिंतयत् ॥ २४ ॥ इदं पवित्रमारोग्यं पुण्यं पापप्रणाशनम् ॥ हरिप्रसादजनकं स्वरूपसुखसाधनम् ॥ २५ ॥ इदं तु स्तवनं विप्रा न पठंतीह मानवाः ॥ न शृण्वंति च ये नित्यं ते सर्वे चैव मायिनः ॥२६॥ नस्मरन्तोन्तरं नित्यं ये भुञ्जन्ति नराधमाः ॥ तैर्भुक्ता सततं विष्ठा सदा क्रिमिशतैर्युता ॥२७॥ इति श्रीगारुडे महापुराणे तृती० उत्त० ब्रह्मकांडे देवकृतविष्णुस्तुतिदेवतातारतम्यनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥ गरुड उवाच ॥ देवैरेवं स्तुतो विष्णुर्भगवान्सात्त्वतां पतिः ॥ कीदृशं ह्याश्रयं दत्त्वैषां विवेश महाप्रभुः ॥ १ ॥ एतद्वेदितुमिच्छामि कृष्णकृष्ण महाप्रभो ॥ सम्यग् ब्रूहि दयालो त्वं यदि मच्छ्रोत्रमर्हति ॥ २ ॥ श्रीकृष्ण उवाच ॥ तेषु तत्त्वेषु भगवान्स विवेश महाप्रभुः ॥ क्षोभयामास भगवान् संबंधविधुरो हरिः ॥ ३ ॥ अदौ ससर्ज भगवान् ब्रह्मांडं कनकात्मकम् ॥ पंचाशत्कोटिविस्तीर्णं योजनानां समंततः ॥ ४ ॥ तदूर्ध्वमण्ववयवस्तावान्कनकरूपकः॥ वर्त्तते तत ऊर्ध्वं तु पंचाशत्कोटिभूतलम्॥५॥ एवं कोटिशतं तस्यावयवः परिकीर्त्तितः ॥ ततश्च सप्तावरणैः समंतात्परिधीकृतम् ॥ ६ ॥ कबंधावरणं ह्याद्यं कोट्या दशसहस्रकम् ॥ द्वितीयावरणं ज्ञेयं पावकस्य महात्मनः ॥ ७ ॥ अपां दशगुणैर्युक्तं समंतात्परिधी ( धी ) कृतम् ॥ तृतीयावरणं ज्ञेयं हरस्यैव महात्मनः ॥ ८ ॥ दशाधिकं पावकाच्च समंतात्परिवारितम् ॥ चतुर्थावरणं ज्ञेयं नभसोपि महाप्रभो ॥ ९ ॥ हराद्दशगुणैरेवं समंतात्परिवारितम् ॥ पञ्चमावरणं ज्ञेयमहङ्काराख्यमेव च ॥१०॥ व्योम्नो दशगुणैरेवं समंतात्परिवारि तम् ॥ षष्ठमावरणं प्रोक्तं महत्तत्त्वं खगेश्वर ॥ ११ ॥ अहंकाराद्दशगुणं समंतात्परिवारितम् ॥ सप्तमावरणं प्रोक्तं त्रिगुणावरणं प्रभो ॥ १२ ॥ महत्तत्त्वाद्दशगुणैरधिकं परिकीर्त्तितम् ॥ महत्तत्त्वानंतरं च तमो ह्यावरणं स्मृतम् ॥ १३ ॥ महत्तत्त्वात्पंचगुणैरधिकं परिकीर्त्तितम् ॥ तस्माच्च द्विगुणं ज्ञेयंरजो ह्यावरणं स्मृतम् ॥ १४ ॥ ततश्च द्विगुणं ज्ञेयं सत्त्वावरणमुत्तमम् ॥ त्रयश्चैवं मिलित्वा तु एकावरणमीरितम् ॥ १५ ॥ अव्याकृताख्यमाकाशं तदनंतरमीरितम् ॥ मर्यादारहितश्चैवं तत्रास्ते हरिरव्ययः ॥ १६ ॥ अष्टमावरणं व्योम्नोंतरा विरजा नदी ॥ पञ्चयोजनविस्तीर्णा समंतात्परिधीकृता ॥ १७ ॥ अस्ति पुण्यतमा ज्ञेया लोकसंसारनाशिनी ॥ एवं चतुर्मुखेनैव तदा ह्यव्यंति चांडज ॥ १८ ॥ ते सर्वे विरजानद्यां सम्यक् स्नात्वा विसर्ज्य च ॥ लिंगदेहं ततः पश्चान्मोक्षं विंदंति ते हरेः ॥ १९ ॥ अपरोक्षदृशामेवं ब्रह्मणा

सह गामिनाम् ॥ विरजातरणं विद्धि नान्येषां विनतासुत ॥ २० ॥ अपरोक्षदृशां ब्रह्मन्व्यासादीनां खगेश्वर ॥ विरजातरणं नास्ति भोक्तव्यत्वाच्च
कर्मणः ॥ २१ ॥ विरिंचेनैव साकं तु कल्पेस्मिन्नधिकारिणाम् ॥ तेषां तु नियमेनैव सर्वप्रारब्धसंक्षयः ॥ २२ ॥ भवत्येवं न संदेहो नान्येषां सर्वसं
क्षयः ॥ अतस्तु विरजातरणं तेषामेव भवेत्पटो ॥ २३ ॥ विरजातरणं नास्ति तेषां त ( तयोस्त ) त्संगिनां तथा ॥ सर्वारब्धक्षयो नास्ति यतस्तेषां
खगाधिप ॥ २४ ॥ अतश्च सर्वथा नास्ति विरजातरणं प्रभो ॥ प्रलये विरजानद्या लयो नास्ति खगेश्वर ॥ २५ ॥ लक्ष्म्यात्मिका तु सा ज्ञेया लिंग
देहविदारिणी ॥ ब्रह्मत्वयोग्या ऋजवो नाम देवाः प्रकीर्त्तिताः ॥ २६ ॥ तेपि प्रत्येकशः संति ह्यनंताश्च पृथग्गणाः ॥ पृथक्पृथक् च तैः साकं मोक्ष
योग्याः खगेश्वर ॥ २७ ॥ जीवाः संति ह्यनेके च प्रतिकल्पे सृजंति ते ॥ द्वात्रिंशल्लक्षणैः सम्यग्युक्ता वायुत्वयोग्यकाः ॥ २९ ॥ अष्टाविंशल्लक्षणैश्च
गिरीशपदयोगिनः ॥ चतुर्विंशतिमारभ्याषोडशाच्च सुराः स्मृताः ॥ २९ ॥ अष्टका ऋषयः प्रोक्तास्तदूनाश्चक्रवर्त्तिनः ॥ शतजन्म समारभ्य ब्रह्मणः
परमेष्ठिनः ॥ ३० ॥ अपरोक्षमिति प्रोक्तं तथा ह्यारब्धसंक्षयः ॥ एकेन शतकल्पेन वायुत्वं याति भो द्विज ॥ ३१ ॥ शतजन्मनि ब्रह्मत्वं याति पश्चा
द्धरेः पदम् ॥ चत्वारिंशद्ब्रह्मकल्पं समारभ्य खगेश्वर ॥ ३२ ॥ रुद्रस्याप्यापरोक्ष्यं स्यात्तथा प्रारब्धसंक्षयः ॥ एकचत्वारिंशकल्पे शेषत्वं याति सुव्रत
॥ ३३ ॥ ब्रह्मणा सह मोक्षं च याति सम्यङ् न चान्यथा ॥ कल्पाविंशतिमारभ्य ब्रह्मणः परमेष्ठिनः ॥ ३४ ॥ इंद्रस्याप्यापरोक्ष्यं स्या
त्तथा प्रारब्धसंक्षयः ॥ ब्रह्मणैव सहायाति हरिं नारायणं परम् ॥ ३५ ॥ ॥ गरुड उवाच ॥ पंचाशीतिब्रह्मकल्पं समारभ्य महाप्रभो ॥
रुद्रस्याप्यापरोक्ष्यं स्यात्तथा प्रारब्धसंक्षयः ॥ ३६ ॥ इति श्रुतं मया ब्रह्मन्ब्रह्मणोक्तं हरेः प्रियात् ॥ इत्थं त्वयोक्तं श्रीकृष्ण संशयो
बाधते मम ॥ ३७ ॥ अतो मे संशयं छिंधि यथा न स्यात्तथा पुनः ॥ इति तद्वचनं श्रुत्वा कृष्णो वचनमब्रवीत् ॥ ३८ ॥ श्रीकृष्ण उवाच ॥ ब्रह्मो
क्तस्य मयोक्तस्य विवादो नास्ति सर्वथा ॥ संदेहस्त्वज्ञदृष्टीनां ज्ञानिनां नास्ति सर्वथा ॥ ३९ ॥ अशीतिर्ह्यष्टका प्रोक्ता अष्टपञ्च खगेश्वर ॥
चत्वारिंशद्ब्रह्मकल्प एवं प्राह चतुर्मुखः ॥ ४० ॥ तत्त्वानां बहुगोप्यत्वात्तथोक्तं ब्रह्मणा पुरा ॥ अभिप्रायस्त्वेवमेव ज्ञातव्यो नात्र संशयः ॥ ४१ ॥ पंचा
शीतिब्रह्मकल्पं ये विजानंति भो द्विज ॥ तेन्धं तमः प्रविशांति सत्यंसत्यं मयोदितम् ॥ ४२ ॥ विरजानंतरं विप्र तथा व्याकृतमंबरम् ॥ अनंतपारं तदपि
लक्ष्मीस्तस्याभिमानिनी ॥ ४३ ॥ संख्यानुगणनं नाम यस्य नास्ति महाप्रभो ॥ न दानं जातिप्रोक्तं सर्वदा नास्ति संशयः ॥ ४४ ॥ अंडाभिमानी
ब्रह्मा तु विराडाख्यो ह्यभूत्तदा ॥ एवं मतं स निर्माय भगवान्हरिरव्ययः ॥ ४५ ॥ विशेषात्तत्र गरुड देवैस्तत्त्वाभिमानिभिः ॥ अधश्चोर्ध्वं तदाक्रम्य

॥२३०॥

हरिस्तिष्ठति सर्वदा ॥ ४६ ॥ एवं प्राकृतसर्गोक्तिर्वैकृतं शृणु पक्षिराट् ॥४७॥ गरुड उवाच ॥ सृष्टिरुक्ता त्वया पूर्वं श्रुता सम्यङ्‌ मया हरे ॥ ४८ ॥ किं नाम प्राकृतं ज्ञेयं तथा किं वैकृतं प्रभो ॥ एतद्विस्तीर्य मे ब्रूहि श्रोतुं कौतूहलं हि मे ॥ ४९ ॥ श्रीकृष्ण उवाच ॥ अव्यक्ताद्याः पृथिव्यंता अंडाच्च बहिरुद्भवाः ॥ ते सर्वे प्राकृताः प्रोक्तास्तेषां ज्ञानाद्विमुच्यते ॥ ५० ॥ ब्रह्माडं विकृतं ज्ञेयं ब्रह्मांडांतः खगेश्वर ॥ या सृष्टिरुच्यते सद्भिः सैवोक्ता विकृतेति च ॥ ५१ ॥ सृष्टिश्च प्रलयश्चैव संसारो भक्तिरेव च ॥ देवता ऋषिमुख्याश्च लोका भूरादयस्तथा ॥ ५२ ॥ अनाद्यनंतकालीनाः सर्वदैकप्रकारकाः ॥ जगत्प्रवाहः सत्योऽयं नैव मिथ्या कथंचन ॥५३॥ यत्त्वेतदन्यथा ब्रूयुः सर्वहंतार एव ते ॥ जगत्प्रवाहः सत्योऽयं हरिसेवेतिसाथा ॥ ५४ ॥ सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते ॥ वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः ॥ ५५ ॥ सर्वोत्कृष्टं केशवं च विहायान्यमुपासते ॥ तेषामंधं तमो ज्ञेयं पितॄणां गरुणामपि ॥ ५६ ॥ इदानीं शृणु पक्षींद्र वैकृतं सर्गमुत्तमम् ॥ सम्यग्जानाति यो लोके स याति परमं पदम् ॥ ५७ ॥ इति श्रीगारुडे महापुराणे श्रीकृष्णगरुडसंवादे द्वितीयांशे धर्मकाण्डे प्रेतकल्पे ब्रह्माण्डादिवैकृतैकदेशप्राकृतसृष्टिनिरूपणं नाम दशमोऽध्यायः ॥ १० ॥ श्रीकृष्ण उवाच ॥ पुरुषाख्यो हरिः साक्षाद्भगवान्पुरुषोत्तमः ॥ शिश्ये खंडोदक विष्णुर्नृणां साहस्रवत्सरम् ॥ लक्ष्मीश्चोदकरूपेण शय्यारूपेण भोंडज ॥१॥ विद्यातरंगरूपेण वायुरूपेण भोंडज ॥ २ ॥ तमोरूपेण सैवासीन्नान्यदासीत्कथंचन ॥ असीद्गर्भोदके चैव नान्यदासीत्कथंचन ॥ ३ ॥ लक्ष्मीस्तुष्टाव च हरिं गर्भोदे पक्षिसत्तम ॥ लक्ष्मीधराभ्यां रूपाभ्यां प्रकृतिर्हरिणा तथा ॥ ४ ॥ शेत श्रुतिस्वरूपेण स्तौति गर्भोदके हरिम् ॥ नारायण नमस्तेऽस्तु शृणु विज्ञापनं मम ॥ ५ ॥ अजां जहि महाभाग योग्यानां मुक्तिमावह ॥ अजा तु प्रकृतिः प्रोक्ता चापरा प्रकृतिः परा ॥६॥ शततोवरा तु ब्रह्माणी ब्रह्मपत्नी वरानना ॥ उमा शच्यवरा तस्या अवराः संप्रकीर्तिताः ॥ ७ ॥ एतासां हननं नैव प्रार्थयामः सदा हरे ॥ अस्ति प्रतिनृषु ब्रह्म प्रकृती द्वे व्यवस्थिते ॥८॥ एका तु नित्यसंसारा त्वजशब्दाभिधायिका ॥ द्वितीया तु तमोऽपोह्या अजशब्दाभिधायिका ॥९॥ अत एव त्वजे ज्येष्ठे इति लोके प्रकीर्तिते ॥ सुखदुःखप्रदा चैव अपरा दुःखदैव तु ॥१०॥ मोक्षाधिकारिणामेव ज्ञानैश्वर्यादयो गणाः ॥ तेषामाच्छादिका ह्येका तमोंगा सा प्रकीर्तिता ॥११॥ जीवं प्रति महाविष्णुं पाह्याच्छादयति प्रभो ॥ सा परा प्रकृतिर्ज्ञेया परमाच्छादिका स्मृता ॥१२॥ एवं सा परमा दुष्टा तमोंगा तु प्रकीर्तिता ॥ जीववर्गेष्वेव खग ब्रह्मादेर्नास्ति सा क्वचित् ॥१३॥ पिशाचवरसमुद्दिष्टा जीवस्येत्यधिकारिणः ॥ प्रेरिका तु तयोर्देव्यो स्त्वहमाद्या सुखात्मिका ॥१४॥ तत्र विष्णो महाभाग सगुणाच्छादको हितः ॥ परमाच्छादिकां दुष्टां व्यामुच्यैव महाप्रभो ॥१५॥ मोक्षं देहि महादेव त्वद्भक्तानां महाप्रभो ॥ परमाच्छादिका ह्यस्मान्नित्य संसारिणो य

तः॥१६॥अत एव च नित्यत्वात्तस्मात्तदपसारणम्॥कुरु देव महाभाग इति विज्ञायतां मम॥१७॥ एवं स्तुतो हरिः कृष्णो सुप्रबुद्धोऽपि सर्वदा॥उद्बुद्धवन्महा
विष्णुरभूदज्ञपरीक्षया ॥ १८ ॥ तस्य नाभेरभूत्पद्मं सौवर्णं भुवनाश्रयम् ॥ तत्प्राकृतं च विज्ञेयं भूदेवी त्वभिमानिनी ॥१९॥ अनंतसूर्यवच्चैव प्रकाशक
रमीरितम् ॥ चिदानन्दमयो विष्णुस्तस्माद्भिन्नो न संशयः ॥ २० ॥ विष्णोः स्वरूपभूतं च ये विजानंति ते नराः ॥ ते यांति ह्यपरं लोकं तथा तत्सं
गिसंगिनः ॥ २१ ॥ किरीटादिकवच्चैव ज्ञातव्यं च खगेश्वर ॥ किरीटाद्या अपि हरेर्द्विधा संति न संशयः ॥ २२ ॥ स्वरूपा ह्यस्वरूपाश्च स्वस्वरूपनि
दर्शने ॥ गृहीता इति विज्ञेया न स्वरूपाः खगेश्वर ॥ २३ ॥ ब्रह्माण्डं ह्यसृजत्तत्र सर्वलोकविधायकम् ॥ प्रलये मुक्तिहीनश्च सुप्त इत्युच्यते बुधः ॥
॥२४॥ तस्य समिवास्त्रिवं च न ज्ञातव्या खगेश्वर ॥ प्रलयोपि महाभाग ब्रह्मवाय्वोर्न चास्ति हि ॥२५॥ वृत्तिरूपं परं ज्ञानं पाद्यार्घ्यं नात्र संशयः ॥
इन्द्रियाणामुपरतिः सुप्तिरित्युच्यते बुधैः ॥ २६ ॥ ब्रह्मवाय्वोश्च पासम्भि वास्तवं स्यात्खगेश्वर ॥ कथं तर्हि तयोर्वेते ह्याविलत्यत्वमुच्यते ॥ २७ ॥ तस्मा
त्तद्वास्तवं नास्ति ब्रह्मवाय्वोः खगेश्वर ॥ स्वप्नावस्थायाः सदृशी ह्यवस्था सुप्तिसंज्ञिका ॥ २८ ॥ ब्रह्मण्यमुख्यया वृत्त्या ह्यस्तीत्येवं निबोध मे ॥
अतो न वास्तवमिदमंगीकार्यं खगेश्वर ॥ २९ ॥ वास्तवं ये विजानंति तेषां नित्यं धनं तपः ॥ ॥ श्रीगरुड उवाच ॥ सुप्तिस्त्वज्ञानकार्यत्वात्सुप्तिर्ना
स्तीत्युदीरिता ॥ ३० ॥ यदा हि कारणं चास्ति तदा कार्यमिति प्रभो ॥ इत्यभिप्रायगर्भेण त्वं समाधास्य ते यदि ॥ ३१ ॥ तर्हि तस्य महाभाग
कथं ब्रूहि भयादिकम् ॥ भयादिकं ह्यस्तु नाम का वास्माकं क्षतिर्भवेत् ॥ ३२ ॥ एवमुक्तस्तु गोविन्दोऽब्रवीत्तत्रापि कारणम् ॥ भयं त्वज्ञानकार्यं
स्यात्कार्याकारणमत्र हि ॥ ३३ ॥ प्रीयते मत्वा ब्रह्म तस्मात्सुप्तिश्च तत्र हि ॥ अज्ञादिकं यदि ब्रह्म तस्य न स्यात्कथंचन ॥ ३४ ॥ कथं सुखी
प्रदृश्येत न कथञ्चित्करिष्यति ॥ कथं वा मुक्तिपर्यंतं ज्ञानव्यक्तिर्वदस्व मे ॥ ३५ ॥ यद्यज्ञानं तस्य सत्यं न स्यात्तर्हि महाप्रभो ॥ अत्यादरात्कथं
ब्रह्मञ्छ्रवणं कुरुते वद ॥ ३६ ॥ इति तस्य वचः श्रुत्वा कृष्णो वचनमब्रवीत् ॥ भयं च वास्तवं तस्य न जानीहि महामते ॥ ३७ ॥ दृश्यते मद्भयं
तस्य हरिप्रीत्यर्थमेव च ॥ भयाकामवतीवानमुवास्तवमीरितम् ॥ ३८ ॥ प्राप्तप्रारब्धलेशस्त तस्य नास्ति खगेश्वर ॥ दुःखाज्ञानादिकं किञ्चित्कथं
तस्मिन् भविष्यति ॥ ३९ ॥ विष्णोराज्ञानुसारेण भयायानुकरोत्यसौ ॥ तेन प्रीणाति च हरिस्तस्य नास्त्यत्र संशयः ॥ ४० ॥ शृणोति सततं ब्रह्मा
न चिन्त्यात्तावताज्ञता ॥ कदाचिद्दृश्यते ब्रह्मा दुःखी न च खगेश्वर ॥ ४१ ॥ यद्ब्रह्म च न जानीयाद्धरिप्रीत्यर्थमेव च ॥ दुःखिवद्दृश्यते ब्रह्मा
आज्ञानां मोहनाय च ॥ ४२ ॥ योग्यतामनतिक्रम्य यावज्ज्ञानं च तिष्ठति ॥ ब्रह्मणस्तावदेवास्ति नात्र कार्या विचारणा ॥ ४३ ॥ ज्ञानस्य व्यक्तता

नाम विद्यमानस्य चादरात् ॥ ज्ञानस्यासादनं चैव ज्ञानव्यक्तिरिति स्मृता ॥ ४४ ॥ अतो ज्ञानादिकं नास्ति ब्रह्मणः परमेष्ठिनः ॥ पद्माद्धिरण्म
याज्जातो ब्रह्मा तु चतुराननः ॥ ४५ ॥ सर्वदाऽऽलोचनायुक्तस्तेन स्वालोचनं कृतम् ॥ अज्ञानां मोहनार्थाय हरिप्रीत्यर्थमेव च ॥ ४६ ॥ संक
ल्पोपि तथैवास्ति न ह्यज्ञानात्कृतस्तथा ॥ को वा मां सृष्टवानत्र इति ह्यालोच्य स प्रभुः ॥ ४७ ॥ तं विचारयितुं ब्रह्मा पद्मनाडीं विवेश ह ॥ ४८ ॥
इति श्रीगारुडे महापुराणे उत्तरखण्डे द्वितीयांशे धर्मकाण्डे श्रीकृष्णगरुडसंवादेऽज्ञानहेतुनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥ ॥
॥ श्रीकृष्ण उवाच ॥ नाडीं समाविश्य महानुभावः श्रीविष्णुभक्तो त्वथ पुष्करस्थः ॥ विचारयामास गुरुं स्वमूलं नारायणं निर्गुणमद्वितीयम् ॥
॥ १ ॥ एतावता हरिभक्तस्य तस्याप्यच्छिन्नभक्तस्य चतुर्मुखस्य ॥ विचारकाले च विचिन्तनीयो ह्यज्ञानलेशस्तु खगेश्वरेश्वर ॥२॥ यथास्ति
विष्णोर्मनः सङ्कल्प एव तथैव सोपि प्रकरोति नित्यम् ॥ आलोचने तस्य सदास्ति भूमन्स्वयोग्यतामनतिक्रम्य चैव ॥ ३ ॥ हरेः स्वरूपे च
तथा प्रपंचः स्वस्मिन्स्वरूपे च खगास्ति ज्ञानम् ॥ यथापि नित्यं परिचारवारि च अज्ञातवद्दृश्यते विष्णुना च ॥ ४ ॥ हरेः प्रीत्यर्थं कु
रुते सौ कदाचित्तत्रापि कश्चिद्विशेषोऽस्ति वींद्र ॥ शृणुष्व सम्यङ्निगृहीतचित्तो यथा प्रोवाच स विजानाति देवः ॥५॥ सदा त्वदोषं प्रविशेषैश्च मुक्त
वेदास्तथा वा पविजानन्ति नित्यम् ॥ तस्य स्वरूपं न तथा हरिं च स्वयोग्यतामनतिक्रम्य वेधाः ॥ ६ ॥ हरेः स्वरूपं न विजानाति सर्वं स्वयो
ग्यरूपं सर्वदा वेत्ति विष्णोः ॥ तत्राज्ञानं नास्ति किंचिद्द्विजेन्द्र यावत्स्वरूपं च तथैव लक्ष्म्याः ॥ ७ ॥ वेधा न जानाति कुतस्तदन्ये तयोः स्वरूपं
न विजानाति सर्वम् ॥ तथापि वेदानेकदेशेन वेद जानाति लक्ष्मीर्हरिरूपं च यावत् ॥ ८ ॥ तावन्न जानाति विधिः खगेंद्र ज्ञाने विधातुश्च स्वयोग्य
भूते ॥ अतो विरिंचस्य न चिन्तनीयो ह्यज्ञानलेशः क्वापि देशे च काले ॥ ९ ॥ नाडीं समाविश्य तदा विरिंचो न वेद नारायणमेकवच्च ॥
तदाशृणोत्तं कमलासनं प्रभुस्तपस्तप द्व्यक्षरं सादरेण ॥१०॥ अभिप्रायं तस्य सम्यग्विदित्वा तपः कुरु त्वं हरितुष्ट्यर्थमेव ॥ तपोऽकरोद्धरिपादैक
निष्ठो हरेः प्रीत्यर्थं दिव्यसहस्रवर्षम् ॥ ११ ॥ ततो हरिः प्रादुरासीत्खगेन्द्र वरं दातुं भक्तवरस्य दिव्यम् ॥ सदा विष्णुं देवदेवो ददर्श चतुर्भुजं तं
जलजायताक्षम् ॥ १२ ॥ श्रीवत्सलक्ष्मं गलशोभिकौस्तुभं संपश्यन्तं सुप्रसन्नार्द्रदृष्ट्या ॥ दृष्ट्वा हरिं ब्रह्म नारायणं च पुरः स्थितं भक्तवश्यं दया
लुम् ॥ १३ ॥ समर्चयामास महाविभूत्या भक्त्या हरेः पादतीर्थं दधार ॥ अस्तौन्महाभागवतप्रधानो हरिं गुरुं भक्तिविवर्धितात्मा ॥ १४ ॥ ब्रह्मो

१ आर्षतः ।

वाच ॥ रमेश लोकेश जगन्निवास तव स्वरूपं न विजानाति देवी ॥ तव प्रसादात्सुविजानाति देवी गुणान्वेदोक्तान्सर्वदा वींद्र सर्वान् ॥ १९ ॥ तथापि सा न विजानाति देवी साकल्येनाशेषितः सद्गुणांश्च ॥ यद्यप्यनुक्तं पञ्चभिर्नास्ति वेदैस्तथापि देवेऽत्र विशेष आस्ते ॥१६॥ तत्त्वेच्छवः प्रविजानन्ति नित्यं वेदे सूक्तान्काप्यनुक्तांश्च सर्वान् ॥ आदौ जानंत्यत्र वेदा मुरारे ऋगादयः सुष्ठु चत्वार एव ॥ १७ ॥ वेदा ह्येते वेदयंतीति देव तथा पुराणं भारतं पञ्चरात्रम् ॥ क्रमादितो विचिन्त्य सा विष्णुगुणान्स्वयोग्यान्सदा विजानाति रमापि देवी ॥ १८ ॥ विशेषतो ह्युक्तगुणानृगादिषु स्वयोग्यभूतान्संविजानाति देवी ॥ सामान्यतः प्रविजानाति देवी हरेर्गुणान्न विशेषाच्च नित्यम् ॥ १९ ॥ अहं विजानामि रमाप्रसादात्तव प्रसादाच्च गुणान्सदैव ॥ स्वयोग्यभूताञ्छ्रुतिसूक्तान् गुणांश्च कांश्चिद्विजानाति हरेर्न कश्चित् ॥ २० ॥ तव प्रसादाच्च मम प्रसादात्कालांतरे तांश्च जानाति शेषः ॥ दुष्कर्मलेशान्न तिरोहितान् गुणान्यानेव पूर्वं विदितान् स्वयोग्यान् ॥ २१ ॥ तानेव ज्ञात्वा पुनरेव शेषस्तिरोहिताँल्लब्धगुणस्ततः स्मृतः ॥ सदा स्वयोग्यांश्च हरेर्गुणांश्च उमापतिश्चापि तव प्रसादात् ॥ २२ ॥ यदा विजानाति हरे मुरारे अप्राप्तलब्धेति तदोच्यते हरः ॥ ममापि लोकं च यदा मुरारे तदा विजानाति तव स्वरूपम् ॥ २३ ॥ गोविन्द नित्याव्यय चित्सुपूर्ण तव प्रसादान्नास्ति शतेषु तन्मम येये हि देवाश्च शरीरधारिणस्ते ज्ञानहीना विषयेषु निष्ठाः ॥ २४ ॥ येये देवा विषयेषु निष्ठास्तेते देवा बहिरर्थभावाः ॥ येये देवा बहिरर्थभावा मोक्षादन्ये प्रलपन्तः सदैव ॥२५॥ तव स्वरूपे च जगत्स्वरूपे तवासमानं नास्ति विष्णो सदैव ॥ यतस्तव प्राकृतो नास्ति देहो यतो ज्ञानं नास्ति नास्त्येव नित्यम् ॥ २६ ॥ पूर्णानन्दज्ञानदेहोऽपि नित्यं सदा शरीरी भाष्यते भक्तिमद्भिः ॥ यतस्तव प्राकृतो नास्ति देहो ह्यतोपि नित्यमशरीरीति च स्मृतः ॥ २७ ॥ नतोऽहं सर्वदास्मिञ्शरीरेऽहंममेत्यभिमानेन शून्यः ॥ अतोऽप्यहं त्वशरीरी सदैव तथैव नित्यं बहिरर्थैश्च शून्यः ॥२८॥ स्वभोगभार्यासत्यलोकादिभोगः स्वयोग्यभोगो वस्त्रमाल्यादिभोगः ॥ एते हि सर्वे बहिरर्थसंज्ञकाः नैसर्गकामाः सर्वदा मे हि विष्णो ॥ २९ ॥ तथाप्यहं कामहीनो हि नित्यं रुद्रादयः कामवन्तो यतोतः ॥ शरीरिणस्ते बहिरर्थभावा अज्ञानवंतोऽपि च संस्मृताः खग ॥ ३० ॥ स्वदारभोगे केवलां प्रीतिमेवं हरेरेवं सर्वदाहं करोति ॥ स्तम्बाद्याद्यादीन्धारयिष्ये सदैव विष्णोः प्रीत्यर्थं नैव गात्रार्थमेव ॥ ३१ ॥ नित्यानन्दादन्यकामो न मेस्ति अतः सदा बहिरर्थैश्च शून्यः ॥ ममापि भार्या बहिरर्थशून्या अमूढभावा मूढवतीव दृश्यते ॥ ३२ ॥ अमूढभूता ज्ञानिनां सर्वदैव तथाज्ञानां ज्ञानहीनेति भाति ॥ यावज्ज्ञानं चास्ति मे वासुदेव तावज्ज्ञानं वासुदेवस्य चास्ति ॥ ३३ ॥ यावज्ज्ञानं वासुदेवस्य चास्ति तावज्ज्ञानं ज्ञानवतामृजूनाम् ॥

क्रमेणैवाज्ञानिनां वानृजूनामस्पष्टरूपो ज्ञानगतो विशेषः ॥ ३४ ॥ सौरिप्रकाशे च यथैव दर्शनं तथा मम ज्ञानगतो विशेषः ॥ दीपप्रकाशे च यथैव दर्शनं तथा ज्ञानं वासुदेवस्य चास्ति ॥ ३५ ॥ अस्पष्टरूपा न्यूनता ह्यस्ति वायौ तथा ज्ञानं नैव संचिन्तनीयम् ॥ एतादृशी ज्ञानशक्तिर्मुरारेर्वा य्वादीनां मोक्षपर्यंतमस्ति॥३६॥ज्ञानं त्वृजूनां मोक्षकाले पिपक्षवाय्वादीनां प्रलयेनाद्वादीनं ॥ वायोर्मम प्रलये सृष्टिकाले तथा गायत्र्या नास्तिनास्त्ये व मोहः ॥ ३७ ॥ गायत्रीवद्भारत्या देवदेव ज्ञातव्यमेवं हरितत्त्ववेदिभिः ॥ ममाज्ञानं दृश्यते यत्र कुत्र दैत्यादीनां मोहनार्थं सदैव ॥ ३८ ॥ तेन प्रीतिर्देवदेवस्य विष्णोर्भविष्यतीत्येव विनिश्चितात्मा ॥ प्रश्नादिकं त्वज्ञवत्सर्वदैवं करिष्येहं मोहनायाधमानाम् ॥ ३९ ॥ सूर्योदये नास्ति यथा तमश्च तथाज्ञानं नास्तिनास्त्येव देव ॥ करोम्यहं श्रवणं सर्वदैव हरिप्रीत्यर्थं निश्चितार्थं सतां हि॥४०॥शतजन्मगतानां त्वनृजूनां पूर्वमेव तु॥अपरोक्षा भाव एव ह्यज्ञानं समुदीरितम् ॥४१ ॥ अपरोक्षानन्तरं तु नास्त्यज्ञानं न संशयः ॥ शतजन्मसु देवेश अपरोक्षेण सर्वदा ॥ ४२ ॥ पूर्णज्ञानं ममा स्त्येव नात्र कार्या विचारणा ॥ शतजन्मसु पूर्वं तु परोक्षेण मम प्रभो ॥ ४३ ॥ पूर्णं ज्ञानं सदाप्यस्तीत्येवमाहुर्महर्षयः ॥ संज्ञाजन्मगतायाश्च सरस्व त्या महाप्रभो ॥ ४४ ॥ नाज्ञानं चिंतनीयं हि ब्रह्मण्यंशेश्च देव हि ॥ अत्र कश्चिद्विशेषोस्ति ज्ञातव्यस्तत्त्वमिच्छुभिः ॥ ४५ ॥ अवतारेषु भारत्याः कदाचिज्ज्ञानपूर्वकम् ॥ सर्वदा ज्ञानरूपा सा सर्वदुःखविवर्जिता ॥ ४६ ॥ दैत्यानां मोहनार्थाय अंशे दुःखीव दृश्यते ॥ तस्या दुःखादिकं किंचिन्नास्तिनास्त्येव सर्वथा ॥ ४७ ॥ अपरोक्षतिरोभाव ईषत्काले प्रदृश्यते ॥ तावन्मात्रेण वाज्ञानं तस्यां नैवाहितं च यत् ॥ ४८ ॥ मूलरूपे तु नास्त्येव भारत्या ज्ञानविस्मृतिः ॥ भारत्यास्तु यथा नास्ति सरस्वत्यास्तु किं पुनः ॥ ४९ ॥ अंशावतरणं नास्ति सरस्वत्याः कदाचन ॥ अंशाव तरणं नास्ति ममापि मधुसूदन ॥ ५० ॥ तथैव ज्ञानमस्त्येव हरेर्नारायणस्य च ॥ वायोरंशावतारोस्ति यथा मूले तथैव च ॥ ५१ ॥ बलज्ञाना दिकं सर्वं चिन्तनीयं न संशयः ॥ तथापि वायौ दृश्यंते बलज्ञानादिव्यक्तयः ॥ ५२ ॥ अवतारेषु वायोस्तु सम्यक् शक्त्यात्मनास्ति हि ॥ अपरोक्ष तिरोभावौ नांशावतरणेष्वपि ॥ ५३ ॥ बलज्ञानादिकं यावन्मूलरूपे प्रदृश्यते ॥ त्रेतायुगस्वरूपे च न दर्शयति तादृशम् ॥ ५४ ॥ त्रेतायुगस्वरूपे च यादृक् चादर्शयत्प्रभो ॥ द्वापरस्थे स्वरूपे तत्तद्दर्शयति तादृशम् ॥ त्रेतायुगस्वरूपे च यादृक् चादर्शयत्प्रभो ॥ ५५ ॥ द्वापरस्थे वायुरूपे यादृग्वा दर्शयत्प्रभुः ॥ वायुः कलियुगे रूपे तद्दर्शयति तादृशम् ॥ ५६ ॥ तथा दर्शयते वायुर्दैत्यानां मोहनाय च ॥ अवतारेषु वायोश्च अन्तरं ये विदुः प्रभो ॥ ५७ ॥ तेऽधं तमः प्रविशंते ते दैत्या न च ते सुराः ॥ वायावप्यन्तरं नास्ति हरितत्त्वविनिर्णये ॥ ५८ ॥ निंदां कुर्वंति ये विष्णोर्जिह्वाछेदं करो

म्यहम् ॥ तदर्थमेव वायोश्च अवतारः सदा भुवि ॥ ५९ ॥ गुणपूर्णस्य विष्णोस्तु निर्गुणत्वविचिन्तनम् ॥ जातानंदादिपूर्णाख्यं सोहमित्यादिचि
न्तनम् ॥ ६० ॥ चिदानंदात्मके देहे उत्पत्त्यादिविचिन्तनम् ॥ अच्छेद्याभेद्यगात्रेषु च्छेदभेदादिचिन्तनम् ॥ ६१ ॥ देव्या नित्याऽवियोगिन्या वियो
गादिविचिन्तनम् ॥ क्लेशशोकादिशून्यस्य हरेः क्लेशादिचिन्तनम् ॥ ६२ ॥ व्यासरामादिरूपेष्वनृषिविप्रत्वचिन्तनम् ॥ कृष्णरामादिरूपेषु अन्तरस्य
विचिन्तनम् ॥ ६३ ॥ रामकृष्णादिरूपेषु अंतरस्य विचिन्तनम् ॥ रामकृष्णादिरूपेषु पराजयविचिन्तनम् ॥ ६४ ॥ सन्तानार्थं तु कृष्णे
न शिवपूजादिचिंतनम् ॥ रामेण दुःखयुक्तेन लिंगस्य स्थापनं कृतम् ॥ ६५ ॥ पंचधातुमये कृष्णे हरिरूपविचिंतनम् ॥ स्वयं व्यक्तस्थले चापि चिदा
नंदत्वकल्पनम् ॥ ६६ ॥ पितृमातृद्विजातीनां हरिरूपत्वचिंतनम् ॥ अस्वतंत्रेण रुद्रेण हरेरैक्यादिचिंतनम् ॥ ६७ ॥ विष्णोः सूर्येण साकं च अभेदा
दिविचिंतनम् ॥ सर्वोत्तमः सूर्य एव विष्ण्वाद्यास्तस्य किंकराः ॥ ६८ ॥ इत्यादिचिंतनं दोषो हरिनिंदेति चोच्यते ॥ अस्वयं व्यक्तिलिङ्गेषु अश्वत्थ
तुलसीषु च ॥ ६९ ॥ शालग्रामं विहायैव नमनं ये प्रकुर्वते ॥ ते सर्वे हरिनिंदायामविकारिण एव हि ॥ ७० ॥ मोक्षाधिकारिणो ये तु अज्ञानात्परमे
श्वरम् ॥ पार्थक्यनयनं येषु कुर्वंति यर्हि वा प्रभो ॥ ७१ ॥ तर्हि तेषां हि कालेषु दुःखं याति न संशयः ॥ अतः प्रार्थक्यनयनं ये कुर्वंत्येषु सर्वदा
॥ ७२ ॥ ते सर्वे त्वबुधा ज्ञेया नात्र कार्या विचारणा ॥ अस्वयंव्यक्तलिंगेषु नमनं ये प्रकुर्वते ॥ ७३ ॥ ते सर्वे ह्यसुरा ज्ञेया नान्यथा तु कथंचन ॥
विहाय शून्यमश्वत्थं नमनं ये प्रकुर्वते ॥ ७४ ॥ द्विमासहीनां तुलसीमप्रसूतां च गां नवाम् ॥ ते सर्वे ह्यसुरा ज्ञेया नात्र कार्या विचारणा ॥ ७५ ॥
गुल्माद्याश्च मनुष्यांतास्ते ज्ञेया ब्रह्मवाहवः ॥ अस्मच्छतायुःपर्यंतमेक एव कलिः स्मृतः ॥ ७६ ॥ कलौ संति कल्पमानं कलेरन्ते च संति च ॥
तस्मिन्दिने ब्रह्मरूपे गच्छंति च तमोन्तिकम् ॥ ७७ ॥ तत्र स्थित्वा लोकमार्गं प्रतीक्षंते न संशयः ॥ साधकैर्विष्णुकार्याणां वायुदासैः प्रपीडिताः
॥ ७८ ॥ शतवर्षानंतरं च सर्वेषां कलिना सह ॥ वायोर्गदाप्रहारेण लिंगभंगो भविष्यति ॥ ७९ ॥ तमोंधं प्रविशंत्येते तारतम्येन सर्वशः ॥ तमस्यंधे
पि संसारे नात्र कार्या विचारणा ॥ ८० ॥ सर्वेषामुत्तमोंते यः कलिरेव न संशयः ॥ दूषको विष्णुभक्तानां तत्समो नास्ति सर्वदा ॥ ८१ ॥ संसारे
वांधतमसि सर्वत्र हरिदूषकः ॥ मिथ्यादाने ज्ञानबुद्धिर्दुःखे च सुखबुद्धिमान् ॥ ८२ ॥ तस्मात्कलिसमो लोके शिवभक्तो न कुत्रचित् ॥ दुर्योधनः
स एवोक्तो दुःखानंत्यस्वरूपवान् ॥ ८३ ॥ तस्माच्छतगुणांशेन कलिभार्या तु सर्वदा ॥ अलक्ष्मीरिति विख्याता सा लोके मन्थरा स्मृता ॥ ८४ ॥
तस्माद्दशगुणांशोनो विप्रचित्तिस्तु सर्वदा ॥ जरासंधः स एवोक्तः कालनेमिस्ततः परम् ॥८५॥ तस्माच्छतगुणांशोनः स तु कंसेति विश्रुतः॥तस्मात्पं

चगुणैर्हीनौ मधुकैटभसंज्ञकौ ॥ ८६ ॥ तावेव हंसहिडिंबकौ ज्ञेयौ तौ च जनार्दन ॥ विप्रचित्तिसमो ज्ञेयो भौमो वै भूतले स्मृतः ॥ ८७ ॥ तस्मादष्ट
गुणैरुच्यो हिरण्यकशिपुः स्मृतः ॥ तस्माच्च त्रिगुणैर्हीनो हिरण्याक्षो महासुरः ॥ ८८ ॥ मणिमांस्तत्समो ज्ञेयः किंचिदूनो बकः स्मृतः ॥ तस्माद्विंशद्गु
णैर्हीनस्तारकाख्यो महासुरः ॥८९॥ तस्मात्षड्गुणतो हीनः शंबरो लोककण्टकः ॥ शंबरस्य समो ज्ञेयः शाल्वो दैत्येषु चाधमः ॥९०॥ शंबरात्तु द्विगु
णतो हिडिंबो न्यून उच्यते ॥ बाणस्ततोऽधमो ज्ञेयः स तु कीचकनामतः ॥ ९१ ॥ द्वापराख्यो महाहासोबाणासुरसमः स्मृतः ॥ तस्माद्दशगुणैर्हीनो
नमुचिर्दैत्यसत्तमः ॥ ९२ ॥ नमुचेस्तुसमौ ज्ञेयौ पाक इल्वल इत्युभौ ॥ तस्माच्चतुर्गुणैर्हीनो वातापिर्दानवाधमः ॥ ९३ ॥ तस्मात्सार्धगुणैर्हीनो धेनु
को नाम दैत्यराट् ॥ धेनुकादर्धगुणतः केशी दैत्यस्तु चावरः ॥ ९४ ॥ केशीदैत्यसमो ज्ञेयस्तृणावर्तो महासुरः ॥ तस्माद्दशगुणैर्हीनो हंसो नामर
मापते ॥ ९५ ॥ त्रिरिकस्तु समो ज्ञेयस्तत्समः पौरुकस्मृतः ॥ वेतः स एव विज्ञेयः पूर्वजन्मनि सत्तम ॥ ९६ ॥ तस्मादेकगुणैर्हीनौ कुंभांडककुपर्ण
कौ ॥ दुःशासनस्तु विज्ञेयो जरासंधसमः प्रभो ॥ ९७ ॥ कंसेन तुल्यो विज्ञेयो विकर्णो दैत्यसत्तमः ॥ कुंभकर्णाच्छतगुणैर्हीनो कध्येति विश्रुतः ॥
॥९८॥ तस्माच्छतगुणैर्हीनः शतधन्वा महासुरः ॥ समानस्तस्य विज्ञेयः कर्मारिर्दैत्यसत्तमः ॥९९॥ कालकेयस्तु विज्ञेयः सदा वेनसमो मतः ॥ अध
मानां तु दैत्यानामुत्तमैः साम्यमुच्यते ॥ १०० ॥ तत्रावेशाच्च विज्ञेयं देवानां नात्र संशयः ॥ तस्माच्छतगुणैर्हीनश्चित्तमानसुरो महान् ॥ १०१ ॥
तच्छरीराभिमानी तु तस्माच्छतगुणैर्वरः ॥ तस्माच्छतगुणैर्हीनो हस्तमानसुरो महान् ॥ १०२ ॥ तस्माच्छतगुणैर्हीनः पादमानसुरो महान् ॥
नेत्रेंद्रियाभिमानी तु तस्माच्छतगुणो वरः ॥ १०३ ॥ चक्षुरिंद्रियमानी तु तस्माच्छतगुणो वरः ॥ तस्माच्छतगुणैर्हीनः स्पर्शमानसुरो महान् ॥
॥ १०४ ॥ तस्माच्छतगुणैर्हीनश्चंडमानसुरो महान् ॥ तस्माच्छतगुणैर्हीनः शिश्नमानसुरो महान् ॥ १०५ ॥ तस्माच्छतगुणैर्हीनः कर्ममानसुरः
स्मृतः ॥ कल्पाद्यैः प्रेरिताः सर्वे रुद्राद्या अधिकारिणः ॥ १०६ ॥ कदाचित्सुविरुद्धं च कुर्वंति तव सत्तम ॥ कदाप्यहं च वायुश्च विरुद्धं नाचरे
व भोः ॥ १०७ ॥ मूलेष्वंशावतारेषु रुद्रादीना महाप्रभो ॥ बुद्धिर्विनश्यते यस्मात्तस्माच्छिन्ना हि तेऽखिलाः ॥ १०८ ॥ महीपते च मद्बुद्धिस्तस्माद
च्छिन्नसंज्ञिकः ॥ एतादृशोप्यहं देव न च शक्तिस्तु नस्तवे ॥ १०९ ॥ मह्यमच्छिन्नभक्ताय दयां कुरु महाप्रभो ॥ इति स्तुत्वा हरिं ब्रह्मा स्थितः प्रांज
लिरग्रतः ॥ ११० ॥ इति श्रीगारुडे महापुराणे द्वितीयांशे धर्मकाण्डे श्रीकृष्णगरुडसंवादे ब्रह्मस्तुतिवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥
श्रीकृष्ण उवाच ॥ इति स्तुतः स भगवान् स्वपुत्रेण दयानिधिः ॥ मेघगंभीरया वाचा प्रोवाच मधुसूदनः ॥ १ ॥ सृज ब्रह्मन्निमान्देवान्मत्प्रसादा

त्क्रमेण च ॥ यथा वै प्राक्क्षणेतद्वत्सृज सर्वं महाप्रभो ॥ २ ॥ नास्ति प्रयोजनं तेन तव मत्प्रीतये सृज ॥ एवमुक्तस्तु हरिणा ब्रह्मा स्तुत्वा हरिं
परम् ॥ ३ ॥ सृष्टिं कर्त्तुं मनो दध्रे प्रीणयन्नेव माधवम् ॥ महत्तत्वात्मको ब्रह्मा वायुं जीवाभिमानिनम् ॥ ४ ॥ आदौ ससर्ज गरुड पुरुषात्मा स
एव च ॥ ततो दक्षिणहस्तात्तु ब्रह्माणीं भारंती तथा ॥ ६ ॥ असृजत्ते महाभागे अव्यक्तस्य नियामिके ॥ वामहस्तात्सत्यपुत्रो महत्तत्वात्मकोऽनलः
॥ ६ ॥ ब्रह्मणो दक्षिणाद्धस्तादहंकारात्मको हरः ॥ आदौ शेषस्ततो जज्ञे गरुडतदनन्तरम् ॥ ७ ॥ तदनन्तरजो रुद्रः स एव सृष्टवान्प्रभुः ॥
स्वोत्पत्त्यनन्तरं ब्रह्मा दशवर्षान्महाप्रभुः ॥ ८ ॥ वायुमुत्पादयामास वत्सरानंतरे प्रभुः ॥ गायत्रीं जनयामास वायोरुत्पत्त्यनंतरम् ॥ ९ ॥ संवत्सरान
न्तरे तु भारतीमसृजत्प्रभुः ॥ भारत्यनंतरं शेषं दिव्यसाहस्रवत्सरात् ॥ १० ॥ अनंतरं संबभूव गरुडस्तु ततः परम् ॥ दिव्यसाहस्रवर्षात्तु तथा रुद्रं
च सृष्टवान् ॥ ११ ॥ शेषस्यानंतरं देवीं वारुणीं च महाप्रभुः ॥ दशवर्षानंतरं तु ह्यसृजत्कमलासनः ॥ १२ ॥ गरुडानंतरं देवीं सौपर्णीमसृजत्प्रभुः ॥
दशवर्षानन्तरं च पार्वतीं च तथैव सः ॥ १३ ॥ पार्वत्यनंतरं चन्द्रं मनस्तत्त्वनियामकम् ॥ दशवर्षानन्तरं तु वासवं ह्यसृजत्ततः ॥ १४ ॥ अभिमा
नी दक्षिणस्य बाहोश्च परमेष्ठिनः ॥ दशवर्षानंतरं तु शची तामसृजत्प्रभुः ॥ १५ ॥ इन्द्रस्यानन्तरं कामं त्रिंशद्वर्षादनन्तरम् ॥ असृजद्वामबाहोश्च
मनस्तत्वाभिमानिनम् ॥ १६ ॥ तदनन्तरजां देवीं दशवर्षादनन्तरम् ॥ रतिं स जनयामास कामभार्यां महाप्रभुः ॥ १७ ॥ कामस्याप्यभिमानी तु
स एव परिकीर्त्तितः ॥ ब्रह्माहंकारिकं प्राणं कार्योत्पत्तेरनन्तरम् ॥ १८ ॥ दशवर्षानन्तरं तु निर्ममे नासिक ततः ॥ तस्य भार्य्यां नासिकस्यः
पञ्चवर्षादनन्तरम् ॥ १९ ॥ निर्ममे नासिकां वामां ब्रह्मा लोकपितामहः ॥ अहंकारादनु ब्रह्मा सज्ञानं च बृहस्पतिम् ॥ २० ॥ निर्ममे च
वर्षयुग्मपञ्चवर्षादनन्तरम् ॥ पञ्चवर्षानन्तरं तु तारां भार्यां विनिर्ममे ॥ २१ ॥ गुरोरनन्तरं ब्रह्मा पंचविंशादनन्तरम् ॥ स्वायंभुवं मनुं
चैव निर्ममे मनसा विभुः ॥ २२ ॥ पञ्चवर्षानन्तरं तु शतरूपां विनिर्ममे ॥ शतरूपानन्तरं तु विंशद्वर्षदिनांतरम् ॥ २३ ॥ दक्षः
शिष्यात्मको जज्ञे दक्षिणांगुष्ठतः प्रभोः ॥ पञ्चवर्षानन्तरं तु वामांगुष्ठाच्चतुर्मुखः ॥ २४ ॥ प्रसूतिमसृजद्ब्रह्मा सृष्ट्यर्थं परमादरात् ॥ दक्ष
स्यानन्तरं ब्रह्मा पञ्चविंशादनन्तरम् ॥ २५ ॥ निर्ममे ह्यनिरुद्धं च मध्यमांगुलिपर्वतः ॥ पञ्चवर्षानन्तरं तु ससर्ज भगवानजः ॥ २६ ॥
विराजसंज्ञकां भार्यां मध्यमांगुलिपर्वतः ॥ अनिरुद्धानंतर तु शतवर्षादनन्तरम् ॥ २७ ॥ निर्ममे प्रवहं वायुं कनिष्ठांगुलिपर्वतः ॥ दशवर्षानन्तरं
तु प्रवाहीं निर्ममे प्रभुः ॥ २८ ॥ कनिष्ठांगुलिपर्वाच्च वामदेवं न संशयः ॥ प्रवहानन्तरं ब्रह्मा शतवर्षादनन्तरम् ॥ २९ ॥ यमं विनिर्ममे पृष्ठादथव

र्षादनंतरम् ॥ तद्भार्यो शामलां देवीं तस्मादेव महाप्रभुः ॥ ३० ॥ यमस्यानंतरं चंद्रं त्रिंशद्वर्षादनंतरम् ॥ असृजद्दक्षिणाच्छोत्राच्छोत्रतत्त्वाभि यामकम् ॥ ३१ ॥ नववर्षानंतरं तु रोहिणीमसृजत्प्रभुः ॥ वामश्रोत्राच्च गरुडं वामश्रोत्राभिमानिनम् ॥ ३२ ॥ चंद्रस्यानंतरं सूर्यं विंशद्वर्षादनंतरम् ॥ सम्यग्विनिर्ममे ब्रह्मा दक्षिणाक्ष्णश्च देवताम् ॥ ३३ ॥ वामाक्ष्णो निर्ममे संज्ञां षड्वर्षानंतरं प्रभुः ॥ सूर्यस्यानंतरं ब्रह्मा शतवर्षादनंतरम् ॥ ३४ ॥ रसनेंद्रियाच्च वरुणं निर्ममे तस्य मानिनम् ॥ विंशद्वर्षानन्तरं तु तस्मादेवेंद्रियात्प्रभुः ॥ ३५ ॥ गंगां विनिर्ममे ब्रह्मा रसनेंद्रियदेवताम् ॥ वरुणस्यानंतरं तु दशवर्षादनंतरम् ॥ ३६ ॥ उत्संगान्निर्ममे ब्रह्मा नारदं भगवत्प्रियम् ॥ नारदस्यानंतरं तु षष्टिवर्षादनंतरम् ॥ ३७ ॥ अग्निं विनिर्ममे ब्रह्मा त्वगिंद्रियतः प्रभुः ॥ अतो वागभिमानी स पंचवर्षादनंतरम् ॥ ३८ ॥ स्वाहां विनिर्ममे ब्रह्मा तामाहुर्मंत्रदेवताम् ॥ अग्नेरनंतरं वीन्द्र भृगुं ब्रह्मर्षिसत्तमम् ॥ ३९ ॥ दशवर्षानंतरं तु भ्रुवोर्मध्याद्विनिर्ममे ॥ संवत्सरानंतरं तु भृगुभार्यां विनिर्ममे ॥ ४० ॥ भृगोरनंतरं ब्रह्मा शतवर्षादनंतरम् ॥ कश्यपं जनयामास मनसा च स्वयं प्रभुः ॥ ४१ ॥ संवत्सरानंतरं तु अदितिं निर्ममे प्रभुः ॥ कश्यपानंतरं चात्रिं दशवर्षादनंतरम् ॥ ४२ ॥ अत्रेरनंतरं ब्रह्मा दशवर्षादनंतरम् ॥ अजीजनद्भरद्वाजं वसिष्ठं तदनतरम् ॥ ४३ ॥ दशवर्षान्तरं तु तेषां भार्याः क्रमेण तु ॥ संवत्सरानंतरेण असृजत्कमलासनः ॥ ४४ ॥ वसिष्ठस्यानंतरं तु गौतमं ह्यसृजत्प्रभुः ॥ दशवर्षानंतरेण जमदग्निं ततोऽसृजत् ॥ ४५ ॥ दशवर्षानंतरेण मनुर्वैवस्वतोऽभवत् ॥ मनोरनंतरं जज्ञे शतवर्षादनंतरम् ॥ ४६ ॥ विष्वक्सेनो महाभागो वायुपुत्रो महाबलः ॥ तस्माच्चतुर्दशे वर्षे गणपो ह्यभवद्विभोः ॥ ४७ ॥ तदनंतरजो वींद्र अष्टवर्षादनंतरम् ॥ धनपो ह्यभवत्तत्र तद्भार्या वत्सरे परे ॥ ४८ ॥ विष्वक्सेनानंतरं तु दशवर्षादनंतरम् ॥ जयादीन्भगवद्भक्तान्सृष्टवान् कमलासनः ॥ ४९ ॥ जयाद्यानंतरं ब्रह्मा वह्न्याद्याः कर्मदेवताः ॥ शतवर्षानंतरं तु सृष्टवाञ्छिववाहनम् ॥ ५० ॥ कर्मदेवानंतरं तु त्रिंशद्वर्षादनंतरम् ॥ पर्जन्यमसृजद्ब्रह्मा मंत्रयन्त्राभिमानिनम् ॥ ५१ ॥ पर्जन्यानंतरं ब्रह्मा दशवर्षादनंतरम् ॥ पुष्करं जनयामास कर्मतत्त्वाभिमानिनम् ॥ ५२ ॥ एवं विनिर्ममे ब्रह्मा मत्प्रसादात्खगेश्वर ॥ एवं ज्ञात्वा मोक्षमेति नान्यथा तु कथंचन ॥ ५३ ॥ इति श्रीगारुडे महापुराणे श्रीकृष्णगरुडसंवादे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे देवोत्पत्तिनिरूपणं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ श्रीगरुड उवाच ॥ अवतारान्हरे ब्रूहि तथा लक्ष्म्या दिवौकसाम् ॥ गुणानामंतरं ब्रूहि शिष्यस्य मम सुव्रत ॥ १ ॥ श्रीकृष्ण उवाच ॥ यो मूलरूपी भगवाननंतो ब्रह्मादिभिः पूर्णगुणः स्वतंत्रः ॥ पुरातनः पूर्णतनुर्मदात्मा न तादृशाः संति कदापि वींद्र ॥ २ ॥ पादश्च पूर्णः पादतलं च पूर्णं नखाश्च पूर्णाः कटिकंठौ च पूर्णौ ॥

ऊरू च पूर्णौ उदरं च पूर्णं लब्ध्वापि पूर्णाङ्गगृहे तथाऽप्युरः ॥ ३ ॥ स्कंधाः सुपूर्णाः सकलाश्च बाहवः पूर्णाः केशाः श्मश्रुदंताश्च पूर्णाः ॥ लोमानि पूर्णानि तथैव रोमकूपाश्च पूर्णास्तु तथैव शिश्नः ॥ ४ ॥ अंडश्च पूर्णो ह्यण्डरोमाणि कक्षाश्चक्षुश्च श्रोत्रे सर्वे एते च पूर्णाः ॥ किं वर्णये मूलरूपं हरेश्च यावद्बलं पूर्णं समग्रदेहे ॥ ५ ॥ तावद्बलं ह्येकरोमादिकेषु संतितिविमे हि यतः स एव पूर्णः ॥ स एव तु सर्वस्य कर्ता स एव हर्ता स तु सारांशभोक्ता ॥ ६ ॥ असारांशं नैव भोक्ता हरिस्तु सारान्वक्ष्ये शृणु पक्षींद्र सम्यक् ॥ द्राक्षेक्षुसारं नारिकेलस्य सारं चूतस्य सारं पनसस्यापि सारम् ॥ ७ ॥ नारंगसारं क्रमुकस्यापि सारं खर्जूरसारं कदलीफलस्य ॥ नारायणो बीजरूपस्य सारं गृह्णाति नित्यं भक्तवर्यो दयालुः ॥ ८ ॥ ताम्बूलसारं खदिरस्य सारं पुष्पस्य सारं चंदनस्यापि सारम् ॥ गोधूमसारं यवानां च सारं माषस्य सारं हरेणोश्च सारम् ॥ ९ ॥ शुद्धं तथा व्रीहिनीवारसारं श्यामाकसारं शुद्धधान्यस्य सारम् ॥ १० ॥ निषिद्धान्सर्वशाकस्य सारांस्तथा निषिद्धाङ्गैर्गस्यापि सारान्॥गृह्णाति विष्णुः परमादरेण अन्नस्य सारं भक्ष्यभोज्यस्य सारम्॥११॥सूपस्य सारं परमान्नस्य सारं दुग्धस्य सारं दधितक्रस्य सारम् ॥ घृतस्य सारं रामठस्यापि सारं गृह्णाति विष्णुः सर्षपस्यापि सारम् ॥ १२ ॥ मरीचसारं जीरकस्यापि सारं तथा हविर्घृतपक्वस्य सारम् ॥ तैलेषु पक्वस्य च भर्जितस्य गुडस्य सारं नवनीतस्य सारम् ॥ १३ ॥ लवंगसारं शर्करायाश्च सारमित्यादिसारान् वासुदेवस्तु भुंक्ते ॥ लक्ष्मीपतिः सर्वजगन्निवासस्तस्याज्ञया वासुदेवोपि नित्यम्॥१४॥तच्छेषसारानपि चावनीशो महात्मनोंशाञ्छृणु शिष्यवर्य॥ एवं विमूढा वासुदेवस्य भक्ताः किं वक्तव्यं विष्णुभक्ता हि लोके॥१५॥कल्याणास्ते सारभोक्तार एव नैषां भवेत्तेन दुःखाभिवृद्धिः॥ भुंजंति ये वैश्वदेवं विहाय दुष्टांस्तान्वै भुक्तिचित्तांश्च विद्धि ॥१६॥ वक्ष्ये विशेषं वैश्वदेवे खगेंद्र श्रुत्वा गोप्यं नो वदान्यत्र विद्वान्॥ सूर्यादीनां ये च दाने च दद्युर्विना वायोरंतरस्थं हरिं च ॥१७॥ ते वै सदा सारभोक्तार एव ज्ञेयास्त्वतो विष्णुरेको महात्मा ॥ सारांशभोक्ता न तु सर्वस्य भोक्ता भुनक्ति सर्वं त्वविरुद्धशक्तिः ॥ १८ ॥ वक्ष्ये ह सारान्पुनरन्यान्खगेंद्र शृणुष्व गुह्यं परमादरेण ॥ द्राक्षादयः सर्व एव त्वसाराः कालादिदुष्टा भावदुष्टाः पदार्थाः ॥ १९ ॥ अतिपक्वानंतरं तु तथा दिनचतुष्टये ॥ असाराः कलुषा ज्ञेयास्तथा जंबूफलं स्मृतम् ॥ २० ॥ मासस्यानंतरं वींद्र त्वसारं पनसं स्मृतम् ॥ षण्मासानंतरं वींद्र खर्जूरं तिक्तवत्स्मृतम् ॥२१॥ आर्द्रं पूतं नारिकेलं स्फोटनानंतरं प्रभो ॥ अहोरात्रानंतरं तु असारं परिकीर्तितम्॥२२॥शुष्कभूतं नारिकेलं खर्जूरं तु यथा तथा ॥ पक्षस्यानंतरं चूतमसारं परिकीर्तितम् ॥ २३ ॥ वर्षस्यानंतरं वींद्र पूगीफलमुदाहृतम्॥घटिकानंतरं वींद्र तांबूलं परिकीर्तितम् ॥ २४ ॥ यामस्यानंतरं चान्नं सूपान्नं पायसं तथा ॥

भक्ष्यं च कथितं वींद्र असारं परिकीर्तितम्॥२५॥त्रिपक्षानंतरं वींद्र तैलपक्कं तथा स्मृतम् ॥ चतुर्यामानन्तरं च त्वसारं घृतपक्ककम्॥२६॥त्रियामानंतरं शाका निःसाराः परिकीर्तिताः॥जंबीरं शृंगबेरं धात्री कर्पूरं च चूतकम्॥२७॥वत्सरानंतरं वीन्द्र निःसारं परिकीर्तितम्॥पर्पटः पक्षमात्रेण निःसारः परिकीर्तितः॥२८॥तुलसी सर्वदा सारा एकादश्यामपि द्विज ॥ आर्द्रा वाप्यथवा शुष्का सार्द्रा सारवती स्मृता ॥२९॥ एकादश्यां तु तुलसी सारा ग्राह्या मनीषिभिः ॥ त्वचा नासेंद्रियेणापि न तु जिह्वेंद्रियेण च ॥३०॥ एकादश्यां हरेरन्नं निःसारं परिकीर्तितम् ॥ एकादश्यां हरेस्तीर्थं मनुष्याणां खगेश्वर ॥३१॥ एकवारे च सारं स्याद्द्विवारे च ततोधिकम् ॥ एकादश्यां महाभाग तीर्थं गंधादिमिश्रितम् ॥३२॥ असारमिति संप्रोक्तं तथा स्वादूदमिश्रितम्॥ एकादश्यां हरेः सारं क्षीरं सर्पिर्मधूदकम् ॥ ३३ ॥ निःसारं मनुजेंद्राणामिति वेदविदां मतम् ॥ आषाढमासे गरुड शाको निःसार उच्यते ॥ ३४ ॥ मासि भाद्रपदे वींद्र ह्यसारं दधि चोच्यते ॥ क्षीरं तु ह्याश्विने मासे निःसारं परिकीर्त्तितम् ॥ ३५ ॥ ऊर्ध्वपुंड्रगदादीनां नार्यसारेति गीयते ॥ हरिभक्तिविहीना ये ह्यसुराः परिकीर्तिताः॥३६॥हरिनामविहीनं तु मुखं निःसारमुच्यते ॥ हरिनैवेद्यहीनस्तु पाको निःसार उच्यते ॥ ३७॥ त्रिदिनैश्चातसीपुष्पं निःसारं परिकीर्तितम् ॥ प्रहरं मल्लिका सारं जाती तु प्रहरार्धकम् ॥ ३८ ॥ त्रियामं शतपत्रं स्यात्करवीरमहर्निशम् ॥ घटिकावधि सारं स्यात्पारिजातं खगेश्वर ॥ ३९ ॥ त्रिवर्षं केसरं फल्गु सारमित्युच्यते बुधैः ॥ कस्तूरी दशवर्षं तु कर्पूरं[1] वर्षमात्रकम् ॥ ४० ॥ ससारमिति संप्रोक्तं चंदनं सर्वदा स्मृतम् ॥ शुद्धन्निःसारभूतांश्च वक्ष्ये शृणु खगेश्वर ॥ ४१ ॥ तुषा मेध्या आरनालं पुण्यकं भिःसटा तथा ॥ उपोद्रजी अलाबूश्च बृहत्कोशातकी तथा ॥४२॥ वृंताकं चुक्रशाकश्च बिल्वमोदुंबरं तथा ॥ पलांडुर्लशुनं धूंतं कलंजं च तथा द्विज ॥ ४३ ॥ एतत्सर्वत्र काले च निःसारमिति कीर्तितम्॥एकादश्यां वैश्वदेवं श्राद्धं तर्पणमेव च॥४४॥मंत्रेण प्रेतवहनमसारं परिकीर्तितम्॥हविर्नारायणो देवो एतांश्च ह्यशुभान्त्सान्॥४५॥ न गृह्णाति न गृह्णाति न गृह्णाति हरिः स्वयम्॥तथापि सर्वं जानाति जीवानां पापकर्मणाम् ॥४६॥ आस्वादनं कारयति स्वयं नास्वादते हरिः॥असारभोजनं चैव जीवानां कर्मजं फलम् ॥४७॥ अमुख्यभो जिनो जीवाः कुंत्याद्या मुख्यभोजिनः॥ शुभानि च पिबेद्विष्णुरशुभं नो पिबेद्विभुः ॥४८॥को वेदेत्तस्य चेष्टां तु पूर्णानंदो हरिः स्वयम् ॥ न तेन सदृशः कोपि देशे काले च विद्यते ॥ तस्यावतारान्वक्ष्येहं शृणु पक्षींद्रसत्तम ॥४९॥

---

१ आरार्तिक्यकर्पूरमित्यर्थः। २ सुगन्धिकर्पूरमित्यर्थः।

इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे वैश्वदेवार्थकसारासारवस्तुविवेको नाम चतुर्दशोध्यायः॥१४॥ श्रीकृष्ण उवाच ॥ अथावता रान्पुरुषाख्यो हरिश्च गतो ध्यानं कर्तुमीशो महात्मा ॥ प्रादुर्बभूवाखिलसद्गुणार्णवः स एव विष्णुः स च बीजभूतः ॥ १ ॥ यो बीजभूतः पुरुषाख्य विष्णुः स एवाभूद्वासुदेवो महात्मा ॥ सृष्टिं कर्तुं पुरुषाख्यस्य वायोर्मायाख्यायां मूलरूपो यथाऽऽस ॥२॥ यो वासुदेवस्तु स एव जातः संकर्षणाख्यो खिलसद्गुणात्मा ॥ सृष्टिं कर्तुं सूत्रभूतस्य वायोर्जयाख्यायां पूर्णसंवित्परात्मा ॥ ३ ॥ स एव संकर्षणनामधेयः प्रद्युम्ननामा च स एव विश्रुतः ॥ सर स्वतीभारतीसर्जनार्थं स एव देव्या मूलरूपो बभूव॥४॥ सृष्ट्वा युक्तं षोडशभिः कलाभिर्महत्तत्त्वं सूक्ष्मरूपं स एव ॥साहंकारं क्रीडयामास देवः शृणु त्वं वै षोडशाख्याः कलाश्च ॥ ५ ॥ भूतानि कर्मेन्द्रियपंचकानि ज्ञानेंद्रियाणीह तथा मनश्च ॥ ततो बभूव ह्यनिरुद्धसंज्ञको जीवांश्च संगृह्य सुपूर्णशक्तिः ॥ ६ ॥ सोयं विरिंच्यादिसमस्तदेवान् स्थूलेन देहेन ससर्ज नाथः ॥ तथा स विष्णुः पुरुषाभिधस्तु सनत्कुमारत्वमवाप वीन्द्र ॥ ७ ॥ अनन्यसा ध्यं ब्रह्मचर्यं च कर्तुं दशेंद्रियाणां शोषणार्थं सदैव ॥ सनंदनादौ पठितः कुमारस्तस्मान्नान्यो नात्र विचार्यमस्ति ॥ ८ ॥ स एव विष्णुः सूकरत्वं ह्य वाप क्षोणीमुद्धर्तुं दैत्यवपुर्निहंतुम् ॥ हिरण्याक्षं सज्जनानां खगेंद्र तथा भूमेः स्थापनार्थं च देवः ॥९॥ ततो हरिर्मद्रिदासत्वमापान्नृषेर्भार्यायां यामिन्यां यो महात्मा ॥ तत्रावतारे पंचरात्रं समग्रमुपादेष्टुं नाप दानं स्वतंत्रः ॥ १० ॥ स एव विष्णुः समभूद्धदर्यां नारायणाख्यः शमलापहश्च ॥ तपस्तप्तुं शिक्षयितुं त्वृषीणां तिरस्कर्तुं ह्यप्सरसां सहस्रम् ॥११॥ ततो हरिः कपिलत्वं ह्यवाप्य तिरोहितान्कालबलेन तत्त्वान्[1] ॥ चतुर्विंशतिं संशयं चोद्धरिष्य न्नुपादिशच्चासुरये महात्मा ॥१२॥ स एव दत्तः समभूद्रमेशोनसूयायामत्रिरूपः परात्मा ॥ आन्वीक्षिकीं नाम सुतर्कविद्यामलर्कनाम्ने प्रददात्तां महा त्मा ॥ १३॥ स एव वंशेप्यभवद्रवेश्च आकूत्यां यः सच्चिदानंदरूपः ॥ स्वायंभुवं यत्तु मन्वंतरं च देवैः साकं पालयामास वीन्द्र ॥१४॥ स एव विष्णुः स उरुक्रमोभूदाग्नीध्रपुत्र्यां मेरुदेव्यां च नाभेः ॥ विद्यारतानां मानिनां सर्वदैवमत्याश्चर्यं दर्शयितुं च वींद्र ॥ १५॥ ततो हरिर्जगृहे कूर्मरूपं सुरासुरा णामुदधिं विमथ्नताम् ॥पृष्ठे धर्तुं मंदरं पर्वतं च ब्रह्मांडं वा धर्तुमीशो महात्मा॥१६॥ततो हरिः प्रादुरभून्महात्मा धन्वंतरिर्नाम हरिन्मणिद्युतिः ॥ अप थ्यदोषान्परिहर्तुमेव हस्ते गृहीत्वा पूर्णकुंभं सुधाभिः॥१७॥ततो हरिर्जगृहे श्रीवपुश्च यन्मोहिनीति प्रवदंति लोके॥उद्वृत्तानां दितिजानां महात्मा सम्यक्ते षां वंचयितुं हरिर्बलम्॥१८॥ततो हरिः प्रादुरभून्महात्मा नृसिंहनामा भगवाननंतः॥दैत्यो हिरण्यकशिपुश्च तथोरुदेशे संस्थापितः करजैर्दारितश्च॥१९॥

१ तत्त्वानीत्यर्थः ।

ततो हरिर्भगवान्वामनोभूददित्यां वै कश्यपाद्देवदेवः ॥ इंद्रायेदं दातुकामः खगेन्द्र तदर्थं वै पावितुं सोवितुं च ॥२०॥ ततो हरिर्जमदग्नेः सुतोभूल्लोके सर्वे पर्शुरामं वदन्ति ॥ ब्रह्मद्विषां क्षत्रियाणां च वींद्र भूमिं निःक्षत्रां कर्तुकामो महेशः ॥२१॥ ततोभवद्व्यासरूपी स विष्णुश्चतुर्वारं राघवस्यापि पूर्णः ॥ पराशरात्सत्यवत्यां बभूव पैलादिभिर्वेदभागांश्च कर्तुम् ॥ २२ ॥ ततो हरी रघुवंशेवतीर्णः कौसल्यायां राघवः सूर्यवंशे ॥ समुद्रादेर्विग्रहं कर्तुमीशो हं तुं भूम्यां रावणादींश्च वींद्र ॥ २३ ॥ ततो हरिर्व्यासरूपी बभूव अष्टाविंशे द्वापरे ज्ञानरूपी ॥ पराशरात्सत्यवत्यां महात्मा स्वयं वेदान् संविभक्तुं च देवः ॥ २४ ॥ ततो हरिः कृष्णरूपी बभूव देवक्यां वै वसुदेवात्स विष्णुः ॥ कंसादीन्वै नितरां हंतुकामः सम्यक्पातुं पांडवांश्चापि वींद्र ॥ २५ ॥ ततः कलौ संप्रवृत्ते हरिस्तु संमोहनार्थं चासुराणां खगेंद्र ॥ नाम्ना बुद्धो कीकटेषु प्रजातो वेदप्रमाणं निराकर्तुमेव॥२६॥ ततो हरिः कल्किसंज्ञश्च वींद्र उत्पत्स्यते युगयोर्मध्यसंधौ ॥ दस्युप्रायान्भूमिपान्वै निहंतुं नाम्ना हरिर्विष्णुगुप्तस्य गेहे ॥ २७ ॥ केशवाद्याश्चतुर्विंशतिर्वै संकर्षणादयः ॥ विश्वादयः सहस्रं च पराद्या अमिताः स्मृताः ॥ २८ ॥ अवतारा ह्यसंख्याता विष्णोर्नारायणस्य च ॥ स्वयं नारायणास्ते ते नाणुमात्रं विभिद्यते ॥२९॥ बलतो रूपतश्चापि गुणतश्च कथंचन ॥ अनंतोनंतगुणतः पूर्णो विष्णुर्न चान्यथा ॥ ३० ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे विष्णोरवतारनिरूपणं नाम पंचदशोऽध्यायः ॥ १५ ॥ श्रीकृष्ण उवाच ॥ महालक्ष्म्याः स्वरूपं च अवतारान्खगेश्वर ॥ शृणु सम्यङ्‌ महाभाग तज्ज्ञानस्य विनिर्णयम्॥१॥ईशादन्यस्य जगतो ह्यात्मो लोचन एव तु ॥ विषयीकुरुते तत्स्याज्ज्ञानं लक्ष्म्याः प्रकीर्तितम्॥२॥नित्यावियोगिनी देवी हरिपादैकसंश्रया ॥ नित्यमुक्ता नित्यबुद्धा महालक्ष्मीः प्रकीर्तिता ॥३॥ मूलस्य च हरेर्भार्या लक्ष्मीः सा संप्रकीर्तिता॥पुंसो द्विभार्या प्रकृतिः प्रकृतेश्चाभिमानिनी ॥ ४ ॥ सृष्टिं कर्तुं गुणान्वींद्र पुरुषेण सह प्रभो ॥ तमःपानं तथा कर्तुं प्रकृत्याख्या तदाभवत् ॥ ५ ॥ वासुदेवस्य भार्या तु माया नाम्नी प्रकीर्तिता ॥ संकर्षणस्य भार्या तु जयेति परिकीर्तिता॥६॥अनिरुद्धस्य भार्या तु शांता नाम्नीति कीर्तिता ॥कृतिः प्रद्युम्नभार्याऽपि सृष्टिं कर्तुं बभूव ह ॥७॥ विष्णुपत्नी कीर्तिता च श्रीदेवी सत्त्वमानिनी ॥ तमोभिमानिनी दुर्गा कन्यकेति प्रकीर्तिता ॥८॥ कृष्णावतारे कन्येव नंदपुत्रानुजा हि सा ॥ रजोभिमानिभूदेवी भार्या सा सूकरस्य च ॥९॥ वेदाभिमानिनी वींद्र अन्नपूर्णा प्रकीर्तिता ॥ नारायणस्य भार्या तु लक्ष्मीरूपा त्वजा स्मृता ॥ १०॥ यज्ञाख्यस्य हरेर्भार्या दक्षिणा संप्रकीर्तिता ॥ ११ ॥ जयन्ती वृषभस्यैव पत्नी संपरिकीर्तिता ॥ विदेहपुत्री सीता तु रामभार्या प्रकीर्तिता ॥ १२ ॥ रुक्मिणी सत्यभामा च भार्ये कृष्णस्य कीर्तिते ॥ इत्यादिका ह्यनंताश्चाप्यावताराः पृथग्विधाः ॥ १३ ॥ रमायाः संति विप्रेंद्र भेदहीनाः परस्परम् ॥

 

अनंतानंतगुणकाद्विष्णोर्न्यूनाः प्रकीर्तिताः ॥ १४ ॥ अथ ब्रह्मा च वायुश्च श्रियः कोटिगुणाऽधमौ ॥ वक्ष्ये च ब्रह्मणो रूपं शृणु पक्षींद्रस
त्तम ॥ १५ ॥ वासुदेवात्समुत्पन्नो मायायां च खगेश्वर ॥ स एव पुरुषो नाम विरिंच इति कीर्तितः॥१६॥ अनिरुद्धात्तु शांतायां महत्तत्त्वतनुस्त्वभूत् ॥
तदा महान्विरिंचेति संज्ञामाप खगेश्वर ॥ १७ ॥ रजसात्र समुत्पन्नो मायायां वासुदेवतः ॥ विधिसंज्ञो विरिंचः स ज्ञातव्यः पक्षिसत्तम ॥ १८ ॥ ब्रह्मा
डांतः पद्मनाभो यो जातः कमलासनः ॥ स चतुर्मुखसंज्ञां चाप्यवाप खगसत्तम ॥ १९ ॥ एवं चत्वारिरूपाणि ब्रह्मणः कीर्तितानि च ॥ वायो
र्नामानि वक्ष्येहं शृणु पक्षींद्रसत्तम ॥ २० ॥ संकर्षणाच्च गरुड जयायां यो बभूव ह ॥ स वायुः प्रथमो ज्ञेयो प्रधान इति कीर्तितः ॥ २१ ॥
लोकचेष्टाप्रदत्वात्स सूत्रनाम्नापि कीर्तितः ॥ बदरीस्थस्य विष्णोश्च धैर्येण स्तवनाय सः॥२२॥धृतिरूपं ययौ वायुस्तस्माद्धृतिरिति स्मृतः ॥ योग्यानां
हरिभक्तानां धृतिरूपेण संस्थितः ॥२३॥ यतो हृदि स्थितो वायुस्ततो वै धृतिसंज्ञकः॥ सर्वेषां च हृदि स्थित्वा स्मरते सर्वदा हरिम्॥२४॥ अतो वायुः
स्थितिर्नाम बभूव खगसत्तम ॥ अथवा वायुरेवैकः श्वेतद्वीपगतं हरिम् ॥ २५ ॥ सदा स्मरति वै वींद्र अतोसौ स्मृतिसंज्ञकः ॥ सर्वेषां च हृदि
स्थित्वा ज्ञातो विष्णोरुदीरणात् ॥ २६ ॥ अतो मे मुक्तिनामाभूद्वायुरेव न संशयः ॥ ज्ञानद्वारेण भक्तानां मुक्तिदो मदनुज्ञया ॥ २७ ॥ यतो
सौ वायुरेवैको मुक्तिनामा बभूव ह ॥ विष्णौ भक्तिं वर्धयति भक्तानां हृदि संस्थितः ॥ २८ ॥ अतोसौ विष्णुभक्तश्च कीर्तितो नात्र संशयः ॥ एषोसौ
सर्वजीवानां चित्तसंज्ञानमेव च ॥ २९॥चित्तरूपो यतो वायुरतश्चित्तमिति स्मृतः ॥ प्रभुः प्रभूणां गरुड सोदराणां च सर्वशः ॥ ३० ॥ अतस्तु वायु
रेवैको महाप्रभुरिति स्मृतः ॥ सर्वेषां च हृदि स्थित्वा बलं पश्यति सत्तम॥३१॥अतो बलमिति ह्याख्यामवाप विनतासुत ॥ सर्वेषां च हृदि स्थित्वा पुत्रपौ
त्रादिकैर्जनैः ॥ ३२ ॥ याजनं कुरुते नित्यमतोसौ यष्टृसंज्ञकः ॥ अनंतकल्पमारभ्य वायुपर्यंतमेव च ॥ ३३ ॥ वक्रत्वं नास्ति योगस्य ऋजु
र्योग्य इति स्मृतः ॥ योगस्य वक्रता नाम काम्यता हरिपूजने ॥ ईशरुद्रादिकानां च काम्येन हरिपूजनम्॥३४॥ कस्यचित्त्वथ पक्षींद्र ह्यतस्त्वनृजवः
स्मृताः॥३५॥ऋष्यादीनां च मध्येपि काम्येन हरिपूजनम् ॥ अतो न ऋजवो ज्ञेया मनुष्याणां च का कथा ॥३६॥यावत्काम्यसपर्या वै न जहाति
नरोत्तमः ॥ तथा ऋष्यादयश्चैव मोक्षस्य परिपंथिनीम् ॥ ३७ ॥ अनादिकालमारभ्य कर्मजन्या च वासना ॥ मोक्षाधिकारिणः सर्वे कुर्वते कस्य 
पूजनम ॥ ३८ ॥ नष्टप्रायं च तत्सर्वं गुरोः संज्ञानबोधकात् ॥ प्राप्ययोगं समाचर्य अंते मोक्षमवाप्नुयात् ॥ ३९ ॥ काम्येन पूजनं विष्णो

१ काम्यकर्मकर्तारः ।

रैश्वर्यं प्रददाति च ॥ ज्ञानं च विपरीतं स्यात्तेन यात्यधरं तमः ॥ ४० ॥ तदेव विपरीतं चेज्ज्ञानाय परिकीर्तितम् ॥ शिलायां विष्णुबुद्धिस्तु विष्णु
बुद्धिर्द्विजे तथा ॥ ४१ ॥ सलिले तीर्थबुद्धिस्तु रेणुकायां तथैव च ॥ शिवे सूर्ये षण्मुखे च विष्णुबुद्धिः खगेश्वर ॥ ४२ ॥ इत्याद्यमखिलं ज्ञानं विप
रीतमिति स्मृतम् ॥ शिलादेषु च सर्वेषु ऐक्येनैव विचिंतनम् ॥४३॥ विष्णुबुद्धिरिति प्रोक्तं न तु तत्रस्थवेदनम् ॥ अनाद्यनंतकालेपि काम्येन हरिपूज
नम् ॥ ४४ ॥ यतो नास्ति ततो वायुर्ऋजुर्योग्यः प्रकीर्तितः ॥ अन्येषां सर्वदा नास्ति अतो न ऋजवः स्मृताः ॥ ४५ ॥ हरिं दर्शयते वापि
अपरोक्षेण सर्वदा ॥ मोक्षाधिकारिणां काले अतः प्रज्ञेति कथ्यते ॥ ४६ ॥ परोक्षेणापि सर्वेषां हरिं दर्शयते सदा ॥ अतो वायुः सदा वींद्र ज्ञान
मित्येव कीर्तितः ॥ ४७ ॥ हिताहितोपदेष्टृत्वाद्भक्तानां हृदये स्थितः ॥ ततश्च गुरुसंज्ञां चाप्यवाप स च मारुतः ॥ ४८ ॥ योगिनां हृदये स्थित्वा
स ध्यायति हरिं परम् ॥ पार्थक्येनापि तं ध्यायन्महाध्यातेति स स्मृतः ॥ ४९ ॥ यद्योग्यतानुसारेण विजानाति परं हरिम् ॥ रुद्रादौ विद्यमानांश्च
गुणाञ्जानाति सर्वदा ॥ ५० ॥ अतो वै विज्ञनामासौ प्रोक्तो हि खगसत्तम ॥ काम्यानां कर्मणां त्यागाद्विराग इति स स्मृतः ॥ ५१ ॥ अथवा
योगिनां नित्यं हृदि स्थित्वा स मारुतः ॥ वैराग्यं संजनयति विराग इति स स्मृतः ॥ ५२ ॥ देवानां पुण्यपापाभ्यां सुखमेवोत्तरोत्तरम् ॥
तत्सुखं तूत्तरेषां च वायुपर्यंतमेव च ॥ ५३ ॥ देवानां च ऋषीणां च उत्तमानां नृणां तथा ॥ सुखांशं जनयेद्वायुर्यतोतः सुखसंज्ञकः ॥ ५४ ॥
भुनक्ति सर्वदा वींद्र तत्र मुख्यस्तु मारुतः ॥ दुःखशोकादिकं किंचिद्देवानां भवति प्रभो ॥ ५५ ॥ तच्चासुरावेशवशादित्यवेहि न संशयः ॥
तज्जीवस्य भवेत्किंचिद्दैत्यानां क्रमशो भवेत् ॥ ५६ ॥ यतः कलिश्चाधिकः स्यादतो दुःखीति स स्मृतः ॥ दैत्यानां पुण्यपापाभ्यां दुःख
मेवोत्तरोत्तरम् ॥ ५७ ॥ तद्दुःखमुत्तरेषां च कलिपर्यंतमेव च ॥ भुनक्ति सर्वदा वींद्र ततः कलिरिति स्मृतः ॥ ५८ ॥ सुखहर्षादिकं किंचिद्दैत्यानां
भवति प्रभो ॥ देवावेशो भवेत्तस्य नात्र कार्या विचारणा ॥ ५९ ॥ देवानां निरयो नास्ति दैत्यानां विनतासुत ॥ सुखस्वरूपं तन्नास्ति
विषयोत्थमपि द्विज ॥ ६० ॥ विषयोत्थं किंचिदपि देवावेशादुदीरितम् ॥ तमो नास्त्येव देवानां दुःखं नास्ति स्वरूपतः ॥ ६१ ॥ विषयोत्थं
महादुःखं देवानां नास्ति सर्वदा ॥ दुःखशोकादिकं किंचिदसुरावेशतो भवेत् ॥ ६२ ॥ अतः कलिः सदा दुःखी सुखी वायुस्तु सर्वदा ॥ मनुष्याणा
मृषीणां च सुखं दुःखं खगेश्वर ॥ ६३ ॥ भवेत्तत्पुण्यपापाभ्यां पुण्यभोगी च मारुतः ॥ कष्टभंगः कलिलयो नात्र कार्या विचारणा ॥ ६४ ॥
प्राणादिसुखपर्यंता अंशा एकोनविंशतिः ॥ प्रविष्टाः संति लोकेषु पृथक्संति खगेश्वर ॥६५॥ मारुतेरवतारांश्च शृणु पक्षींद्रसत्तम ॥ चतुर्दशसु चंद्रेषु द्वितीयो

योविरोचनः॥६६॥स वायुरिति संप्रोक्त इंद्रादीनां खगेश्वर ॥ हरितत्त्वेषु सर्वेषु स विष्वग्याव्यतेक्षणः॥ ६७॥ अतो रोचननामासौ मरुदंशः प्रकीर्तितः
रामावतारे हनुमान्नामकार्यार्थसाधकः ॥ स एव भीमसेनस्तु जातो भूम्यां महाबलः ॥६८॥ कृष्णावतारे विज्ञेयो मरुदंशः प्रकीर्तितः॥ ६९ ॥ मणिमा
न्नाम दैत्यस्तु संकराख्यो भविष्यति ॥ सर्वेषां संकरं यस्तु करिष्यति न संशयः॥७०॥तेन संकरनामासौ भविष्यति खगेश्वर ॥ धर्मान्भागवतान्सर्वान्वि
नाशयति सर्वथा ॥ ७१ ॥ तदा भूमौ वासुदेवो भविष्यति न संशयः ॥ यज्ञार्थैः सदृशो यस्य नास्ति लोके चतुर्दशे ॥ ७२ ॥ अतः स प्रज्ञया पूर्णो
भविष्यति न संशयः ॥ अवताराञ्चयो वायोर्मतं भागवताभिधम् ॥७३॥ स्थापनं दुष्टदमनं द्वयमेव प्रयोजनम् ॥ नान्यत्प्रयोजनं वायोस्तथा वैरोचना
त्मके ॥ ७४ ॥ अवतारत्रये वींद्र दुःखं गर्भादिसंभवम् ॥ नास्ति नास्त्येव वायोस्तु तथा वैरोचनादिके ॥ ७५ ॥ शुक्रशोणितसंबंधो ह्यवतारचतु
ष्टये ॥ नास्ति नास्त्येव पक्षींद्र यतो नास्त्यशुभं ततः ॥ ७६ ॥ पूर्वं गर्भं समाशोष्य समये प्रभवस्य च ॥ प्रादुर्भवति देवेशी ह्यवतारचतु
ष्टये ॥ ७७ ॥ त्रयोविंशतिरूपाणां वायोश्चैव खगेश्वर ॥ रूपैर्ऋजुस्वरूपैश्च ब्रह्मणः परमेष्ठिनः ॥ ७८ ॥ सत्यमेव न संदेहो नित्यानंदसुखादिषु ॥ एव
मेव विजानीयान्नान्यथा तु कथंचन ॥ ७९ ॥ एतस्य श्रवणादेव मोक्षं यांति न संशयः ॥ तदनंतरजान्वक्ष्ये शृणु पक्षींद्रसत्तम ॥ ८० ॥
कृतौ प्रद्युम्नतश्चैव समुत्पन्ने खगेश्वर ॥ स्त्रियौ द्वे यमले चैव तयोर्मध्ये तु यद्विका ॥ ८१ ॥ वाणीतिसंज्ञकां वींद्र ब्रह्माणीसंज्ञकां विदुः ॥
पुरुषाख्यविरिंचस्य भार्या सावित्रिका मता ॥ चतुर्मुखस्य भार्या तु कीर्तिता सा सरस्वती ॥ ८२ ॥ एवं त्रिरूपं विज्ञेयं वाण्याश्च खग
सत्तम ॥ वक्ष्येऽवतारान् भारत्याः समाहितमनाः शृणु ॥ ८३ ॥ सर्ववेदाभिमानित्वात्सर्ववेदात्मिका स्मृता ॥ महाध्यातुश्च वायोस्तु भार्या
सा परिकीर्तिता ॥ ८४ ॥ ज्ञानरूपस्य वायोस्तु भार्या सा परिकीर्तिता ॥ सदा सुखस्वरूपत्वाद्भारती तु सुखात्मिका ॥ ८५ ॥ सुखस्वरूप
वायोस्तु भार्या सा परिकीर्तिता ॥ गुरुस्तु वायुरेवोक्तस्तस्मिन् भक्तियुता सती ॥ ८६ ॥ ततस्तु भारती नित्या गुरुभक्तिरिति स्मृता ॥ महागुरोर्हि
वायोश्च भार्या वै परिकीर्तिता ॥ ८७ ॥ हरौ स्नेहयुतत्वाच्च हरिप्रीतिरिति स्मृता ॥ धृतिरूपस्य वायोश्च भार्या सा परिकीर्तिता ॥ ८८ ॥
सर्वमंत्राभिमानित्वात्सर्वमंत्रात्मिका स्मृता ॥ महाप्रभोश्च वायोश्च भार्या वै सा प्रकीर्तिता ॥ ८९ ॥ भुज्यंते सर्वभोगास्तु विष्णुप्रीत्यर्थमेव
च ॥ अतस्तु भारती ज्ञेया भुजिनाम्ना प्रकीर्तिता ॥ ९० ॥ चित्ररूपस्य वायोस्तु भार्या सा परिकीर्तिता ॥ रोचनेंद्रस्य भार्या च श्रद्धाख्या
परिकीर्तिता ॥ ९१ ॥ हनुमांश्च तदा जज्ञे त्रेतायां पक्षिसत्तम ॥ तदा शिवाख्यविप्राच्च जज्ञे सा भारती स्मृता ॥ ९२ ॥ न केवलं भारती सा

शच्याद्यैश्चैव संयुता ॥ तस्मिन्संजानिताः सर्वाः प्रापुर्योगं स्वभर्तृभिः ॥ ९३ ॥ अन्यगेति च विज्ञेया कन्या तन्मतिसंज्ञिका ॥ त्रेताति सैव पक्षींद्र शच्याद्यैश्चैव संयुता ॥ ९४ ॥ दमयंत्यनलाज्जाता इंद्रसेनेति चोच्यते ॥ नलं नंदयते यस्मात्तस्माच्च नलनंदिनी ॥ ९५ ॥ तत्र स्वभर्तृसंयोगं नैव चाप खगेश्वर ॥ तत्रान्यगात्वं विज्ञेयं पुरुषस्थेन वायुना ॥ ९६ ॥ किंचित्कालं तथा स्थित्वा कन्यैव मृति माप सा ॥ शच्यादिसंयुता सैव द्रुपदस्य महात्मनः ॥ ९७ ॥ वेदिमध्यात्समुद्भूता भीमसेनार्थमेव च ॥ तत्रान्यगात्वं नास्त्येव योगश्च सह भर्तृभिः ॥ ९८ ॥ केवला भारती ज्ञेया काशिराजस्य कन्यका ॥ काली नाम्ना तु सा ज्ञेया भीमसेनप्रिया सदा ॥ ९९॥ शच्यादिभिः संयुतैव द्रौपदी द्रुपदात्मजा ॥ देहं त्यक्त्वाऽविशिष्टैव कारटीग्रामसंज्ञकै॥१००॥संकरस्य गृहे वींद्र भविष्यति कलौ युगे॥वायोस्तृतीयरूपार्थं सा कन्यैव मृतिं गता॥१०१॥ इत्याद्या वायुभार्याश्च ब्रह्मभार्याश्च सत्तम ॥ स्वभर्तृभ्यां च पक्षींद्र गुणैश्चैव शतावमाः॥१०२॥इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे महालक्ष्म्यवतारादिनिरूपणं नाम षोडशोऽध्यायः ॥ १६ ॥ गरुड उवाच ॥ चतुर्जन्मसु वै कृष्ण शच्याद्यैः सह भारती ॥ एकदेह विशिष्टैव भुवि जातेति चोक्तवान्॥१॥कारणं ब्रूहि मे ब्रह्मन् शिष्याय तव सुव्रत॥गरुडेनैवमुक्तस्तमुवाच मधुसूदनः॥२॥श्रीकृष्ण उवाच॥विशिष्टदेहसंप्राप्तौ भारत्याः पक्षिसत्तम ॥ वक्ष्यामि कारणं वींद्र सावधानमनाः शृणु॥३॥पुरा कृतयुगे वींद्र रुद्रभार्या च पार्वती ॥ इंद्रभार्या शची देवी यमभार्या च शामला ॥ ४ ॥ अश्विभार्या उषा देवी भर्तृभिः सहिता खग ॥ ब्रह्मलोकं ययुस्तत्र ब्रह्माणं ददृशुस्तदा॥५॥हावं भावं विलासं च दर्शयामासुरंजसा॥ दृष्ट्वा ता उद्धता ब्रह्मा शशाप खगसत्तम॥६॥ उद्धताश्च यतो यूयं मानुषीं योनिमाप्स्यथ ॥ तत्र स्वभर्तृसंयोगमवाप्स्यथ खगेश्वर॥७॥एवं शप्तास्तु ताः सर्वा आजग्मुर्मेरुपर्वतम् ॥ तत्रोपविष्टं ब्रह्माणं वंचयामासुरंजसा ॥ ८ ॥ तूष्णीमेव स्थिते वींद्र वंचयंत्यः स्थिताः पुनः ॥ ततस्तूष्णीं स्थितं वींद्र वंचयामासुरंजसा ॥ ९ ॥ त्रिवारानंतरं ब्रह्मा शप्तवांस्ता महाप्रभुः ॥ त्रिवारं वंचनं यस्मादेकवारं च दर्शनम् ॥ १० ॥ किं चाश्रुत्वाऽतः पश्चाच्चतुर्जन्मसु भूतले ॥ एकदेहान्मानुषत्वं भविष्यति न संशयः॥११॥ द्वितीये जन्मनि तथा अन्यगात्वमवाप्स्यथ ॥ तृतीये जन्मनि तथा भर्तृसंयोगमाप्स्यथ ॥ १२ ॥ जन्मन्याद्ये चतुर्थे च नान्यगात्वमवाप्स्यथ ॥ तथा स्वभर्तृसंयोगं नावाप्स्यथ च सर्वशः ॥ १३ ॥ एवं शप्तास्तु ताः सर्वा ब्रह्मणा पक्षिसत्तम ॥ तदा विचारयामासुर्मिलित्वा मेरुमूर्धनि ॥ १४ ॥ ब्रह्मशापस्त्वनिर्वार्य उपायैः शतशोपि च ॥ नीचैः समागमो निंद्यस्तथैव च विपत्तिदः ॥ १५ ॥ उत्तमेन च संगेन दैवेनाप्यर्थदो भवेत् ॥ देवानामुत्तमो वायुस्तदर्थं संगमाचरेत् ॥ १६ ॥ विचार्यैवमु

माद्या भारत्याः सेवां तु चक्रिरे ॥ सहस्रवत्सरांते सा भारती तोषिताब्रवीत् ॥ १७ ॥ मत्सेवां च किमर्थं वै ह्याचरिष्यंति सुव्रताः ॥ तस्यां
रक्ताश्च ता देव्यस्त्वब्रुवन्स्वचिकीर्षितम् ॥ १८ ॥ पुरा वयं तु शप्ताः स्म ब्रह्मणा क्रोधरूपिणा ॥ एकदेहान्मानुषत्वमवाप्स्यथ वरांगनाः ॥ १९ ॥
चतुर्थजन्मन्यप्येवं द्वितीये जन्मनि प्रभो ॥ समाप्स्यथान्यगात्वं चेत्येवं शप्ता ह भामिनि ॥२०॥ अस्माकं वायुना देवेनान्यगात्वं न दोषभाक् ॥
अतस्त्वयैकदेहत्वमिच्छामो देवि जन्मसु ॥ २१ ॥ इत्युक्ता ताभिरथ च तथेत्युक्त्वा द्विजोत्तम ॥ सा पार्वत्यादिभिर्युक्ता भारतीत्यभवद्भुवि
॥ २२ ॥ शिवनाम्नो द्विजस्यैव गृहे सा तु कुमारिका ॥ कर्मैक्यार्थं तपश्चक्रेः विष्णोश्च शिवसंज्ञिनः ॥ २३ ॥ तपसा तोषितो विष्णुः शिव
संज्ञो महाप्रभुः ॥ वरं प्रादात्तृतीयेस्मिन्कृष्णजन्मनि भो स्त्रियः ॥ २४ ॥ सम्यक्त्वभर्तृसंयोगो भविष्यति विना भवम् ॥ यतोनया च पार्व
त्या प्रेरिता एव सर्वशः ॥ २५ ॥ विलासं दर्शयामास ब्रह्मणः परमेष्ठिनः ॥ अतः सा पार्वती श्रेष्ठा ब्रह्मदेहे न संशयः ॥ २६ ॥ कृष्णदेहेपि
तस्यास्तु न भविष्यति संगमः ॥ अन्यगात्वं द्वितीयेस्मिन्भविष्यति न संशयः ॥ २७ ॥ रुद्रांतःस्थो हरिश्चैव वरं दत्त्वा स्त्रियां प्रभुः ॥ अंत
र्धानं ययौ श्रीमान्स्वलोकं गतवानभूत् ॥ २८ ॥ विसृज्य ताश्च तं देहं बभूवुर्नलकन्यकाः ॥ इंद्रसेनेति संज्ञां च लब्ध्वा ताश्च तपोवनम्
॥ २९ ॥ ययुस्तत्र चरंत्यस्ता ददृशुर्मुद्गलं त्वृषिम् ॥ तस्य दर्शनमात्रेण बभूवुः काममोहिताः ॥ ३० ॥ मुद्गलस्याभिमानं हि नाशयित्वा च
मारुतः ॥ रमयामास तत्रस्था भारत्यादिवरांगनाः ॥ ३१ ॥ तद्देहेन विसृष्टा सा बभूव द्रौपदीति च ॥ यस्मात्सा द्रुपदाज्जाता तस्मात्सा
द्रौपदी स्मृता ॥ ३२ ॥ वेदिमध्यात्समुद्भूता तस्मात्साऽयोनिजा स्मृता ॥ कृष्णवर्णा यतस्तस्मात्सा कृष्णा भूतले स्मृता ॥ ३३ ॥
कृष्णादेहेपि भारत्या अभिमानः सदा स्मृतः ॥ शच्यादेरभिमानस्तु तस्मिन्देहे कदाचन ॥ ३४ ॥ यस्याः स्वभर्तृसंयोगकाले च
खगसत्तम ॥ अभिमानस्तदैव स्यात्तस्या एव न चान्यथा ॥ ३५ ॥ एतासां रमणे काले उमायाः पक्षिसत्तम ॥ अभिमानश्च नास्त्येव
स्वाप एव रताः सदा ॥ ३६ ॥ पार्थस्य रमणे काले द्रौपद्याश्च कलेवरे ॥ भारत्याश्च तथा शच्या अभिमानद्वयं स्मृतम् ॥ ३७ ॥ उमादेः श्याम
लादेश्च अभिमानक्षतिस्तदा ॥ सर्वासां स्वाप एव स्यान्नात्र कार्या विचारणा ॥ ३८ ॥ अर्जुनं वीररूपेण प्रविष्टो वायुरेव च ॥ भारतीं रमते नित्यं
शामलां च युधिष्ठिरः ॥ ३९ ॥ सुंदरेण च रूपेण प्रविष्टो नकुले मरुत् ॥ रमते भारतीं नित्यं नकुलश्चाप्युषां खग ॥ ४० ॥ नीतिरूपेण चावि
ष्टो सहदेवे च मारुतः ॥ द्रौपदीं रमते नित्यं सहदेवोप्युषां खग ॥ ४१ ॥ शच्याद्या द्रौपदीदेहे नापुः संगं च मारुतः ॥ तासामतोन्यगामित्वं कृष्णा

देहे न चिंतयेत् ॥ ४२ ॥ धर्मादिदेहसंगं च भारत्या नैव चिंतयेत् ॥ मनुजस्य च देहस्य तासां संगं न चिंतयेत् ॥ ४३ ॥ अपरोक्षवतीनां तु तासां लेपो न सर्वथा ॥ अथवा मुद्गलस्येव रतिकाले खगेश्वर ॥ ४४ ॥ रमणं चक्रुरेवं ता अतो दोषो न विद्यते ॥ एकस्मिन्दिवसे वींद्र धर्मो वायुश्च तावुभौ ॥ ४५ ॥ रमणं चक्रतुः सम्यक्कृष्णादेहेऽपि मानद ॥ तथाप्यनन्यगामित्वं चिंतनीयं न संशयः ॥ ४६ ॥ सुराणां सुरभोग्याश्च भोगं जानंति देवताः ॥ न जानंत्येव मर्त्यास्तु तेषु देहेषु ते पुनः ॥ ४७ ॥ नीरक्षीरविवेकं च हंसो वेत्ति न चापरः ॥ अतः स्वभर्तृसंयोगं कृष्णादेहेन चिंतयेत् कृष्णादेहेऽन्यगामित्वं नैव चिंत्यं खगेश्वर ॥ ४८ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे भारत्या विशिष्टदेहसंप्राप्त्यै कारणनिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥ ॥ श्रीकृष्ण उवाच ॥ अथानंतरजान्वक्ष्ये शृणु पक्षींद्रसत्तम ॥ शृणु तान्सावधानेन श्रुत्वा तानवधारय ॥ १ ॥ पुरुषाख्यविरिंचानुजातः शेषो महाबलः ॥ हरे रमायाश्च यस्य स्वस्मिन्निद्रां प्रकुर्वतः ॥ २ ॥ शयनार्थमभूदेष तेन कृत्यं हरेर्न तु ॥ सर्वदा हरिदासोऽहं सर्वदा हरिपूजकः ॥ ३ ॥ हरे सदा नमामि त्वां बहु जन्मानि जन्मनि ॥ एवं बुद्ध्वा तु गरुडो ह्यभूच्च शयनं हरेः ॥ ४ ॥ सूत्रनाम्नस्तथा वायोः सदायं विनतासुत ॥ कालनामा च गरुडो वाहनार्थं हरेरभूत् ॥ ५ ॥ ततो महत्तत्त्वतनोर्विरिंचात्तु खगेश्वर ॥ अहंकारात्मको रुद्रः समभूत्सेवितुं हरिम् ॥ ६ ॥ त्रय एते महाभाग परस्परसमाः स्मृताः ॥ गायत्रीभारतीभ्यां ते त्रयः शतगुणा वराः ॥ ७ ॥ शेषः स एव विज्ञेयो भक्तो नारायणस्य च ॥ विष्णोर्वायोरनंतस्य त्रिभिरंशैर्युतः सदा ॥ ८ ॥ सुमित्रांशो दशरथाज्जातो यो लक्ष्मणः खग ॥ सोपि शेषस्तु विज्ञेयो वाय्वनंतांशसंयुतः ॥ ९ ॥ रामस्य सेवां कर्तुं सा सीता भूम्यां खगाधिप ॥ बलभद्रस्तु रोहिण्यां वसुदेवादभूत्खग ॥ १० ॥ सोयमेष तु विज्ञेयस्त्वंशद्वयसमन्वितः ॥ आविष्टः शुक्लकृष्णेन हरिणा रोहिणीसुतः ॥ ११ ॥ त्रय एते माहाभागाऽवताराः फणिनः स्मृताः ॥ न वींद्रास्यावतारोस्ति भूम्यां चाज्ञा तथा हरेः ॥ १२ ॥ रुद्रावतारान्वक्ष्येहं ताञ्छृणु त्वं समाहितः ॥ योऽहंकारात्मको रुद्रः स एवाभूत्खगेश्वर ॥ १३ ॥ सदाऽशिव इति त्वाख्यामवाप स विनाशकः ॥ तमोभिमानी स ज्ञेयस्त्वशिवत्वात्सदाशिवः ॥ १४ ॥ कपालमालामशिवां सदा धारयते यतः ॥ अतः सदाऽशिवो ज्ञेयो न च भागवतः शिवः ॥ १५ ॥ गजाजिनं चापवित्रं यतो धारयते हरः ॥ लोकानमंगलान्सर्वान्हरते च सदा हरः ॥ १६ ॥ हर्याज्ञया सदा लोकान्विषयासक्तचेतसः ॥ विमुखान्कुरुते यस्माद्विष्णोस्तस्मात्सदाशिवः ॥ १७ ॥ कदाचिदसुरावेशाद्विरुद्धं कुरुते हरः ॥ अतः सदाशिवो ज्ञेयो न च भागवतः शिवः ॥ १८ ॥ सोयं श्मशानवसतिं कर्तुमैच्छद्यतो हरः ॥ अतः सदाशिवो ज्ञेयो न च भागवतः शिवः ॥ १९ ॥

दशवर्षं तपः कर्तुं विवेश लवणांभसि ॥ अतो रुद्रस्तपःसंज्ञामवाप च खगोत्तम ॥ २० ॥ व्यासपुत्रः शुकः प्रोक्तो वायोरावेशसंयुतः ॥ रुद्रावतारो विज्ञेयो ज्ञानार्थमभवद्भुवि ॥ २१ ॥ अत्रिपत्न्यनुसूयायां जज्ञे रुद्रो महातपाः ॥ दुर्वासास्तु स विज्ञेयो मानभंगाय भूभृताम् ॥ ॥ २२ ॥ द्रोणाज्जातो द्रौणिसंज्ञो रुद्र एव प्रकीर्त्तितः ॥ प्रारब्धं भोक्तुकामोसौ परपक्षप्रकाशकः ॥ २३ ॥ ईशानकोणे संस्थितो यस्तु रुद्रो ह्यवाप वै वामदेवेति संज्ञाम् ॥ स्ववामभागे संस्थितं चैव वायुस्तं योग्यभक्तं सेवते सर्वदैव ॥ २४ ॥ अतो रुद्रो वामदेवेति संज्ञामवाप शिष्टत्वमथोत्तमत्वम् ॥ कालात्मकत्वं च बलात्मकत्वमवाप रुद्रो न तु सुंदरत्वतः ॥ २५ ॥ सदा रुद्रो त्रिपुरस्थांश्च दैत्यान्विष्णुद्रुहो हंतुकामो महात्मा ॥ अघोररूपं धृतवान्रुद्र एव ततस्त्वघोरेति स आप संज्ञाम् ॥ २६ ॥ सेवां कर्तुं त्विच्छतो दैत्यसंघान्किंचित्कालं तपसा क्लिश्यमानान् ॥ वरान्दातुं सद्य एवाभिजातः सद्योजातेत्येव संज्ञामवाप ॥ २७ ॥ उरोः पुत्रस्तु और्वश्च रुद्र एव प्रकीर्तितः ॥ उइत्यक्रुष्टवाचित्वाद्रुस्तु रोदनवाचकः ॥ २८ ॥ उरू रुद्रो ह्यतः प्रोक्तस्तत्पुत्रश्चौर्वसंज्ञकः ॥ रुदमुर्वरितं कर्तुमौर्वोभूद्रुद्र एव सः ॥ २९ ॥ गरुड उवाच ॥ रोदनं कुरुते कस्मादुरुसंज्ञो हरे हरः ॥ रुदमुर्वरितं कस्मात्कुरुते औवकारकः ॥ ३० ॥ एतद्विस्तार्य मेब्रूहि पौत्राय तव सुव्रत ॥ इत्युक्तस्तेन स हरिरुवाच करुणानिधिः ॥ ३१ ॥ श्रीकृष्ण उवाच ॥ दृष्ट्वा स्वबिंबं सुगुणैस्तु पूर्णं संकर्षणाख्यं नतपादपद्मम् ॥ श्रीब्रह्मशेषैर्जिष्णुकामैस्तथान्यैर्भारत्या वै स्वस्तिपैश्चापि नित्यम् ॥ ३२ ॥ दृष्ट्वा हरिं पुलकांगस्तु रुद्रः सबाष्पचक्षू रुद्धकण्ठश्च हृष्टः ॥ अनाद्यनंतब्रह्मकल्पेषु नैव कृतं यया स्मरणं सर्वदैव ॥ ३३ ॥ पादारविंदे सुनखैर्विभूषिते दृष्टे मया केन पुण्येन देव ॥ दृष्ट्वादृष्ट्वा पादपद्मं मुरारेः पुनःपुना रुद्धकंठो बभूव ॥ ३४ ॥ रुरोद रुद्रो भयकंपितांगः कथं पुनर्दर्शनं मे प्रभोः स्यात् ॥ मुकुंद नारायण विश्वमूर्ते वागिंद्रियेण स्तवनं मे कथं स्यात् ॥ ३५ ॥ मद्दर्शनं सर्वदा पापयुक्तं तथा मद्वाक् सर्वदा पापयुक्ता ॥ मद्दर्शनं सर्वदा स्त्रीषु सक्तमभूच्च ते दर्शनं मे ह्यसक्तम् ॥ ३६ ॥ आसक्तता पुत्रदारादिकानां सम्यक् शक्तिस्तवने नास्ति विष्णोः ॥ विष्णुस्तुतौ नावकाशोऽस्ति वाचो दृष्टोहं त्वं केन पुण्येन देव ॥ ३७ ॥ अनन्तकर्णेश सुचंद्रसंज्ञ श्रोत्रेण नित्यं न कथा श्रुता ते ॥ श्रुता मया बहुधा लोकवार्ता दृष्टो मया त्वं केन पुण्येन देव ॥ ३८ ॥ दृष्ट्वादृष्ट्वा पादपीठं हरेश्च पुनःपुना रुद्धकंठो बभूव ॥ रुरोद रुद्रो भयकंपितांगः कथं पुनः श्रवणं स्यात्कथायाः ॥ ३९ ॥ त्वमीश वैकुंठ सुवायुसंज्ञस्त्वदर्पितं गंधपुष्पादिकं च ॥ सदा न लिप्तं च भुजैर्विलिप्तं तन्मूत्रविष्ठादिमकर्दमा

१ दृष्टस्त्वं मे केनेति पाठो युक्त इति भाति ।

म्बुभिः ॥ ४० ॥ स्त्रीणां कुचोदेश्च कचोदकैश्चकक्षोदकै र्गोत्रजलैर्मुकुंद ॥ अनर्पितैर्वस्त्रगंधादिकैश्च दृष्टो मया केन पुण्येन देव ॥ ४१ ॥ स्पृष्ट्वास्पृष्ट्वा हरि निर्माल्यगंधं पुनःपुना रुद्धकंठो बभूव ॥ रुरोद रुद्रो भयकंपितांगः कथं पुनः स्पर्शनं स्यात्सदा मे ॥ ४२ ॥ नृसिंह नासास्थित नासिकेश मन्नासया क्वापि सुपन्नसौरभम् ॥ नाघ्रातमित्थं पुनराघ्रातमेव ह्यनर्पितं गंधपुष्पादिकं च ॥ ४३ ॥ सुनासिकं सुष्ठुदंतं मुरारे दृष्टं मुखं केन पुण्येन देव ॥ घ्रात्वा घ्रात्वा विष्णुनिर्माल्यगंधं पुनःपुना रुद्धकंठो बभूव ॥ ४४ ॥ रुरोद रुद्रो भयकंपितांगो जिघ्रामि निर्माल्यमिदं कथं ते ॥ जिह्वास्थितो जिह्व संज्ञो मुरारे जिह्वेंद्रियेणापि तथार्पितं च ॥ ४५ ॥ नैवेद्यशेषं तुलसीविमिश्रितं विशेषतः पादजलेन सिक्तम् ॥ यो स्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्यम् ॥ ४६ ॥ एतादृशं तव नैवेद्यशेषं न भुक्तं वै सर्वदादित्यरूपम् ॥ अनर्पितं तव देवस्य विष्णोर्भुक्तं मया बहुवारं मुकुंद ॥ ४७ ॥ पादारविंदे नार्पितं भक्ष्यभोज्यं दृष्टो मया केन पुण्येन देव ॥ भुक्ताभुक्ता हरिनैवेद्यजातं मुखं त्वदीयं रमया लालितं च ॥ ४८ ॥ धुम्वाश्रयं तव मूर्धानमाहुः किरीटयुक्तं कुटिलैः कुंतलैश्च ॥ अनेकजन्मार्जितपुण्यसंचयैर्दृष्टं मया सज्जनसंगमाच्च ॥ ४९ ॥ अनेकजन्मार्जितपापसंचयैरदर्शनं यास्याति देवदेव ॥ एवं सुभक्त्या च रुरोद रुद्रो दृष्ट्वा हरिं सर्वगुणैः संपूर्णम् ॥ ५० ॥ पादारविंदं तव विश्वमूर्ते योगीश्वरैर्हृदये संगृहीतम् ॥ दृष्टं मया दयया वासुदेव द्रक्ष्ये कथं पुनरित्थं रुरोद ॥ ५१ ॥ दृष्टं मया त्वखिले भविनाशिशंखचक्रादिकैस्त्रिजगतापि च देव पूर्णम् ॥ एतादृशं त्वदुदरं च कथं रमेश द्रक्ष्ये पुनःपुनरहं त्विति संरुरोद ॥ ५२ ॥ आनंदपूर्णं नखपूर्णं सुकेशपूर्णं लोमादिपूर्णं गुणपूर्णं सुघोणपूर्णं ॥ वक्षःस्थलं तव विभोस्तु विशालभूतं सद्भूषणं विमलकौस्तुभशोभि लक्ष्म्या ॥ ५३ ॥ सुकोमलं श्रीतुलस्यास्तथैव सुपुष्पितं चंद नैश्चार्चितं च ॥ एतादृशं तव वक्षःस्थलं च दृष्टं मया तव कारुण्यदृष्ट्या ॥ ५४ ॥ पुनःपुनर्दर्शनं मे कथं स्यादेवं रुद्रः स च भक्त्या रुरोद ॥ अत स्तूरुर्नाम संप्राप्य रुद्रस्तत्पुत्रोभूद्धौर्वसंज्ञः स एव ॥ ५५ ॥ यस्माद्रुदं चोर्वरितं वै चकार तस्मात्स रुद्रस्त्वौर्वसंज्ञो बभूव ॥ और्वस्तु लोकान्मोक्ष योग्यांश्च दृष्ट्वा ह्यत्यंतं वै विषयेष्वेव निष्ठान् ॥ ५६ ॥ स्तूदेव चौर्वो विष्णुपादारविंदं स्मृत्वास्मृत्वा रुद्धकण्ठो बभूव ॥ ते पापिष्ठाः पापरूपान्भजन्तो दिनेदिने दुर्विषयान्कर्मेंद्रियैः ॥५७॥ कदा चैतान्हेयबुद्ध्या विमुंचे न जानेहं चेति सम्यग् रुरोद ॥एते हि मूर्खा विषयानर्थलब्ध्यै कुर्वंति यत्नं पर मादरेण ॥ ५८ ॥ कर्मेंद्रियार्थं हि धनादिकं च त्यजंति च सर्वे विषयेषु निष्ठाः ॥ त्वन्मायया मोहितान्नष्टबुद्धीन्कदा चैतान्मुंचसे विश्वमूर्ते

१ आर्वत्वायुक्तमित्येकदेशेन्वयः।

॥ ५९ ॥ स्मृत्वास्मृत्वा वासुदेवस्य मायां रुरोद चौर्वो भयकंपितांगः ॥ अतीव कष्टेन च लोकवृत्त्या श्रिता दैन्यं स्वीयकार्यं विहाय
॥ ६० ॥ अतीव दैन्येन धनादिकं च संपाद्य सर्वेऽपि सुपापशीलाः ॥ कष्टार्जितं द्रव्यधनादिकं च त्यजंति सर्वे पशवो व्यर्थमेव ॥ ६१ ॥ सत्पा
त्रभूते विष्णुबुद्ध्या कदापि त्यजंति नैते मायया वै मुरारेः ॥ एषामायुर्व्यर्थमाहुर्महांतः कथं नष्टा इति सम्यग्रुरोद ॥ ६२ ॥ एषामायुर्व्यर्थमेवं
गतं च एषां दृष्ट्वा यौवनं तु ध्रुवं च ॥ स्कंधस्थमृत्युर्हसते कृष्ण विष्णो तं वै न जानंति विमूढचेतसः ॥ ६३ ॥ गृहं मदीयं शतवर्षं च जीवेत्पुत्रा
मदीया शवतवर्षं तथैव ॥ अहं च जीवे शतवर्षं सुखेन मदीयभार्यापि सुलक्षणाऽऽस्ते ॥ ६४ ॥ गावश्च मे संति सदुग्धपूर्णा मित्रा
णि मे संति मुदा हि युक्ताः ॥ दास्ये सुतं वरणार्थं तु वध्वै पुत्रीं विवाहार्थमहं ददामि ॥ ६५ ॥ दास्ये चाहं सत्सु पुत्रीं धनं वा दास्ये
चाहं धनिकेष्वेव नित्यम् ॥ अदृष्टशून्यान् भगवान्वासुदेवो दृष्ट्वादृष्ट्वा हसते सर्वदैव ॥ ६६ ॥ नाहं करिष्ये श्रवणं कथाया मद्भाग्यना
शश्च भविष्यतीति ॥ नाहं हरिं पूजयिष्ये सदैव पुत्रादिनाशश्च भविष्यतीति ॥ ६७ ॥ कालेकाले दिष्टनामा हरिस्तु फलप्रदो वासु
देवोऽखिलस्य ॥ एतादृशान्मूर्खजनांश्च दृष्ट्वा रुरोद चौर्वो वासुदेवैकनिष्ठः ॥ ६८ ॥ अतस्त्वौर्वो रुद्ररूपी खगेंद्र जानीहि नित्यं
कृष्णसुशिक्षितार्थः ॥ यदा सती दक्षपुत्री खगेंद्र दक्षाध्वरे स्वशरीरं विसृज्य ॥ ६९ ॥ जज्ञे पुनर्मेनकायां हिमाद्रेस्तदा रुद्रस्त्वौर्वसंज्ञा
मवाप ॥ ऊर्ध्वरेता भवेत्युक्त ऊर्ध्वरेता बभूव ह ॥ ७० ॥ पाणिग्राहं रुद्रदेवो महात्मा यदा हिमाद्रेः कन्यकायाश्चकार ॥
तस्यां परं लंपटः संबभूव अतो रुद्रः परसंज्ञामवाप ॥ ७१ ॥ सदाशिवाद्या दश रुद्रभ्रातरः सौमित्रेयो रौहिणेयस्त्रयश्च ॥ समा
एते मोक्षकाले सृतौ च शतैर्गुणैर्न्यूनभूताश्च ताभ्याम् ॥ ७२ ॥ गरुड उवाच ॥ ॥ आनंदनिर्णयं ब्रूहि कृष्ण पूर्णदयानिधे ॥
निर्णेतुं ज्ञानिनां यद्वज्ज्ञापनार्थं तथा मम ॥ ७३ ॥ ब्रूहि शिष्याय दयया उद्धर्तुं मां च सर्वदा ॥ पूर्णकामस्य ते कृष्ण का स्पृहा विद्यते
प्रभो ॥ ७४ ॥ एवमुक्तो हृषीकेशः पक्षीशेन महात्मना ॥ उवाच कृपया कृष्णः प्रसन्नः कमलेक्षणः ॥ ७५ ॥ ॥ श्रीकृष्ण
उवाच ॥ गायत्र्याश्च शतानंद एकानंदस्तु वेधसः एतादृशः शतानंदो ब्रह्मणः परिकीर्तितः ॥ ७६ ॥ शेषादेश्च शतानंदः सरस्व
त्याः खगोत्तम ॥ एकानंदस्तु विज्ञेयो भारत्या विनतासुत ॥ ७७ ॥ एवं तु निर्णयो ज्ञेय आनंदस्य सदा खग ॥ एवमुक्तं
मया सर्वं किमन्यच्छ्रोतुमिच्छसि ॥७८॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे रुद्ररोदनहेत्वानन्तानन्दतारतम्यनिरूपणं नामा

ष्टादशोऽध्यायः ॥ १८ ॥ गरुड उवाच ॥ त्वयोक्तं कृष्ण गोविंद रुद्राच्छतगुणादपि ॥ ब्रह्माणी भारती चोभे अधिके देवसत्तम ॥ १ ॥
मया श्रुतं विरिंचेन उमापर्यंतमेव च ॥ अनंतांशैर्विहीनत्वं विरिंचोक्तं सुराधिप ॥ २ ॥ सहस्रांशैर्विहीनत्वं त्वयोक्तं कृष्ण माधव ॥ सर्वेषां
चैव पूर्वेषामवेक्ष्यैव हरे विभो ॥ ३ ॥ ज्ञानानंदबलादीनां वायुपर्यन्तमेव च ॥ सहस्रांशैर्विहीनत्वं ज्ञानादीनां महेश्वर ॥ ४ ॥ निर्णयं ब्रू
हि गोविन्द सर्वज्ञोसि न संशयः ॥ गरुडेनैवमुक्तस्तु वासुदेवोऽब्रवीद्ध्रुवम् ॥ ५ ॥ श्रीकृष्ण उवाच ॥ आनंदांशैर्विहीनत्वमपेक्ष्यैव खगाधिप ॥
उत्तरेषामुत्तरेषां योगादेवमिति स्फुटम् ॥ ६ ॥ परिमाणे शतगुणे आनन्दे स्फुटतावशात् ॥ अनन्तगुणवत्त्वं च ब्रह्मणा समुदीरितम् ॥ ७ ॥
सहस्रगुणितत्वं च वायुना समुदीरितम् ॥ यथानंदे तथा ज्ञाने विष्णौ भक्तौ बलाधिके ॥ ८ ॥ सर्वे गुणैः शतगुणाः क्रमेणोक्ता नु तेऽखि
लाः ॥ भारत्याश्च शतं ज्ञानं सुखं भक्तिबलाधिके ॥ ९ ॥ एवं ज्ञानं सुविज्ञेयं मारुतेस्तु बलादिकम् ॥ एवं ज्ञानं शतं ज्ञेयं मारुते नात्र संश
यः ॥ १० ॥ भारत्याश्च शतं ज्ञानं बलं च समुदाहृतम् ॥ एवमेव च वायोश्च ज्ञानं चैवमिति स्फुटम् ॥ ११ ॥ यथा दीपाच्छतगुणा अ
ग्निज्वाला न दीपवत् ॥ स्फुटीभवेद्यथैवाग्निर्बहुलोपि न सूर्यवत् ॥ १२ ॥ यथैव सूर्याद्द्विगुणश्चंद्रो नैव स्फुटीभवेत् ॥ आनंदतारतम्यं च यथोक्तं
तु मया तव ॥ १३ ॥ तथैव जानीहि खग नान्यथा तु कथंचन ॥ अहं विजानामि मयि स्थितान् गुणान्सर्वैर्विशेषैश्च खगेंद्र संयुतान् ॥ १४ ॥
सुसूक्ष्मरूपांश्च सदा खगेंद्र मयाप्यदृष्टो नास्ति नास्त्येव कश्चित् ॥ १५ ॥ सर्वावतारेष्वपि विद्यमानं हरिं विजानाति रमापि देवी ॥ १६ ॥
हरेर्गुणान्सर्वविशेषसंयुतानखण्डरूपान्सा विजानाति देवी ॥ सुसूक्ष्मरूपान्सा विजानाति देवी ब्रह्मादिभ्यो मत्प्रसादाधिकं च ॥ १७ ॥ स्वा
त्मस्वरूपं प्रविजानाति देवी सुसूक्ष्मरूपं सुविशेषैश्च युक्तम् ॥ स्वान्यं प्रपंचं प्रविजानाति लक्ष्मीस्तथाप्यशेषैः सुविशेषैश्च युक्तम् ॥ १८ ॥ ब्र
ह्मापि पश्येत्सर्वगं वासुदेवं वाय्वादिभ्यो ह्यधिकान्सद्गुणांश्च ॥ श्रोत्रं न जानाति हरेर्गुणांश्च सुसूक्ष्मरूपांश्च विशेषसंयुतान् ॥ १९ ॥ स्पष्टस्वरूपे
ण यथा विदुः सुरा मुक्ता ब्रह्माणं न तथा तेप्यमुक्ताः ॥ स्वात्मानमन्यच्च सदा विशेषैर्युक्तं विजानाति विधिश्च मारुतः ॥ २० ॥ वाणी विजा
नाति हरेर्गुणांश्च स्वयंभुवो नैव तावद्विशेषान् ॥ त्रैगुण्यरूपात्परतः सदैव पश्येद्विष्णुं कृष्णरूपं खगेंद्र ॥ २१ ॥ शेषो रुद्रो वींद्र एतैश्च सर्वे .तमो
मात्रे प्रविजानंति संस्थम् ॥ वाणीदृष्टान्सविशेषान् गुणांस्ते जानंति नो सत्यमेवोक्तमंग॥२२॥ उमा सुपर्णी वारुणी चेति तिस्रःसहैव ताः प्रविजानंति
सुस्थम् ॥ हरेर्विशेषान्रुद्र दृष्टान्खगेंद्र जानंति नैताः क्वापि देशे च काले ॥२३॥ इंद्रादयः प्रविजानंति वींद्र अहंकारे व्यासरूपं हरिं च ॥ दक्षाद्या वै

बुद्धितत्त्वे स्थितं तं जानंति ते सोमसूर्यादयश्च ॥ २४ ॥ विष्णुं हरिं भूततत्त्वे स्थितं च ये चान्ये च प्रविजानंति नित्यम् ॥ अन्ये च पश्यंति यथा स्वयोग्यमंडांतरस्थं हरिरूपं खगेंद्र ॥२५॥ केचित्प्रपश्यंति हरेश्च रूपं त्वदीयहृत्स्थं हृदि केचित्सदैव ॥ एवंप्रकारं प्रविजानीहि वींद्र ह्यथो शृणु त्वं मम भार्याः षडेताः ॥२६॥ रुक्मिण्याद्याः षण्महिष्यो ममश्रीर्नीला च या मम भार्या खगेंद्र ॥ सर्गे पूर्वस्मिन्हव्यवाहस्य पुत्री तास्ता भजे सद्य एवा विशेषात् ॥ २७ ॥ कन्यैव सा कृष्णपत्नी च कामांस्तांस्तान् भजेन्मनसा चिंतितांश्च ॥ अतीव यत्नं कव्यवाहं खगेन्द्र पितृष्वेकः सर्वदा वै चकार ॥ २८ ॥ तथैव सा नैव भर्तारमाप यतस्तु सा कृष्णनिष्ठैकचित्ता ॥ २९ ॥ तदाब्रवीत्कव्यवाहश्च पुत्रीं पतिं किमर्थं नेच्छसि मूढबुद्धे ॥ तदाब्रवीत्कव्यवाहं च पुत्री हरिं विना सर्वगुणोपपन्ने ॥ जन्मन्यस्मिन् भर्तृता नास्ति देव यतो भर्ता हरिरेवैक एव ॥३०॥ यतो लोके सुस्त्रियः सर्व एव सदा ज्ञेया विधवास्ते हि नित्यम् ॥ अनादि नित्यं भुवनैकसारं सुसुंदरं मोक्षदं कामदं च ॥ ३१ ॥ एतादृशं न विजानंति यास्तु सर्वास्ता वै विधवाः सर्वदैव ॥ निमित्तभूतं भर्तृरूपं च जीवं दैवोपेतं हरिभक्त्या विहीनम् ॥ ३२ ॥ सुकश्मलं नवरंध्रैः स्रवंतं दुर्गंधयुक्तं सर्वदा कुत्सितं च ॥ एताः दृशे भर्तृजीवे नु तात प्रयोजनं नास्ति कृष्णं विहाय ॥३३॥ देवस्त्रियो निजभर्तॄन्विहाय तत्र स्थितं प्रीणयंत्येव नित्यम् ॥ अतश्च ताःसधवाः सर्वदैव लोकैर्वंद्या नात्र विचार्यमस्ति ॥३४॥ भर्तारस्ते हरिभक्ता यदि स्युरासां स्त्रीणां जन्मसाफल्यमेव ॥ अनेकजन्मार्जितपुण्यसंचयैस्तद्भर्तारो हरिभक्ता भवेयुः ॥ ३५ ॥ यद्भर्तारो हरिभक्ता न संति ताभिस्त्याज्यं स्वीयगात्रं भृशं हि ॥ स्वभर्तृभूतं कृष्णरूपं हरिं च स्मृत्वा सम्यग् यदि गात्रं त्यजेयुः ॥३६॥ तदा नैव ह्यात्महत्यादिदोषाः स्त्रीणामेवं निर्णयोयं हि शास्त्रे ॥ यद्भर्तारो न विजानंति विष्णुं तासां संगो नैव कार्यः कदापि ॥३७॥ अनेकजन्मार्जितपुण्यसंचयात्तद्भर्तारो विष्णुभक्ता भवेयुः ॥ कलौ युगे दुर्लभा विष्णुभक्ता हरेर्भक्तिर्दुर्लभा सर्वदैव ॥ ३८ ॥ हरेः कथा दुर्लभा मर्त्यलोके हरेर्दीक्षा दुर्लभा दुर्लभा च ॥ हरेस्तत्त्वे निर्णयो दुर्लभो हि हरेर्दासैः संगमो दुर्लभश्च ॥ ३९ ॥ प्रदक्षिणं दुर्लभं वै मुरारेर्नमस्कारो दुर्लभो वै कलौ च ॥ तद्भक्तानां पालनं दुर्लभं च सद्वैष्णवानां दुर्लभं ह्यन्नदानम् ॥ ४० ॥ तन्त्रोक्तपूजा दुर्लभा वै मुरारेर्नामग्रहो दुर्लभश्चैव विष्णोः ॥ सुवैष्णवानां पूजनं दुर्लभं हि सद्वैष्णवानां भाषणं दुर्लभं च ॥ ४१ ॥ शालग्रामस्पर्शनं दुर्लभं च सद्वैष्णवानां दर्शनं दुर्लभं हि ॥ गोस्पर्शनं दुर्लभं मर्त्यलोके सद्गायनं दुर्लभं सद्गुरुं च॥४२॥ सद्भार्याः सत्पुत्रका दुर्लभा हि शेषाचलस्थस्य हरेश्च दर्शनम् ॥ सुदुर्लभं रंगनाथस्य तीरे कावेर्या वै दर्शनं विष्णुपद्याः ॥ ४३ ॥ कांचीक्षेत्रे वरदराजस्य सेवा सुदुर्लभा दर्शनं चैव लोके ॥ सुदुर्लभं दर्शनं रामसेतोः सुदुर्लभा मध्वशास्त्रे च शक्तिः ॥ ४४ ॥ भीमातीरे

संस्थितस्यापि विष्णोः सुदुर्लभं दर्शनं चाहुरार्याः ॥ रेवातीरे संस्थितस्यापि विष्णोर्गयाक्षेत्रे विष्णुपादस्य चैव ॥ ४५ ॥ तथा बद्र्यां संस्थित स्यापि विष्णोः सुदुर्लभं मर्त्यलोके स्थितानाम् ॥ शेषाचले श्रीनिवासाश्रमे च तपस्विनो दुर्लभा मर्त्यलोके ॥ ४६ ॥ प्रयागाख्ये माधवस्यापि नित्यं सुदर्शनं दुर्लभं वै नृणां हि ॥ ४७ ॥ अतो नेच्छामि भर्तारं कृष्णादन्यं कदाचन ॥ एवमुक्त्वा सा पितरं ययौ शेषाचलं प्रति ॥ ४८ ॥ कपि लाख्यमहातीर्थे आरुरोह महागिरिम् ॥ तत्रस्थं श्रीनिवासं च दृष्ट्वा नत्वा महासती ॥ ४९ ॥ त्रिदिनं समुपोष्याथ गत्वा पापविनाशनम् ॥ तत्र स्नात्वा विवाहार्थमेकांतं प्रययावथ ॥ ५० ॥ तस्या उत्तरदिग्भागे क्रोशयुग्मे महातले ॥ गर्तभूते च एकांते चचार तप उत्तमम् ॥ ५१ ॥ ध्यात्वा नारायणं देवं तत्रासीच्च कुमारिका ॥ दिव्यवर्षसहस्रांते स्तोतुं समुपचक्रमे ॥ ५२ ॥ कुमार्युवाच ॥ त्वमेव माता च पिता त्वमेव भर्ता च सखा त्वमेव ॥ त्वमेव पुत्रश्च गुरुर्गरीयान्मित्रं स्वसा त्वं मम वल्लभश्च ॥ ५३ ॥ अनाद्यनंतेष्वपि जन्मसु प्रभो विचार्यमाणा न विजानेप्यहं च ॥ एते हि सर्वे च निमित्तमात्रतः पित्रादयस्त्वं ह्यनिमित्तमात्रतः ॥ ५४ ॥ अतो मुरारेश्च तवैव भार्या भूयासमित्येव तदा व्रतं मे ॥ दुःसंगमात्रादिसमागमं न संसिद्धिरित्येव वदान्यमूर्ते ॥ ५५ ॥ त्वद्रूपकाणां तव दासवर्यं विदूषकाणां दर्शनं छिंधि देव ॥ गुरुद्रुहां दर्शनं छिंधि विष्णो भक्तद्रुहां मित्रतां छिंधि कृष्ण ॥ ५६ ॥ तव धुग्भिर्भाषणं छिंधि देव त्वं संगमं देहि पदारविंदे ॥ श्रीशैलवासाय नमोनमस्ते नमोनमः श्रीनिवासाय तुभ्यम् ॥ ५७ ॥ स्वामिन् परावर रमेश निदानमूर्ते कालो महानपि गतश्च निदर्शनं ते ॥ अनंतजन्मार्जितसाधनैश्च त्वद्दर्शनं स्याच्च चतुर्भुजस्य ॥ ५८ ॥ कथं मम स्यात्तव दर्शनं प्रभो सर्वैश्च दोषैश्च सुसंगतायाः ॥ दास्यास्पदायास्तव दासदास्याः प्रसीद देवेश जगन्निवास ॥ ५९ ॥ एवं स्तुतस्तथा विष्णुः श्रीनिवासो दयानिधिः ॥ प्रादुरासीद्गरदराट् भक्त्या तस्या जनार्दनः ॥ ६० ॥ वरं वरय भद्रं ते वरदोहमिहागतः ॥ हरिणोदीरितं वाक्यं श्रुत्वा प्राह स्मिता नना ॥ ६१ ॥ उवाच परया भक्त्या श्रीनिवासं जगत्प्रभुम् ॥ अहं हि भार्या भूयासं तव माधव सुंदर ॥ ६२ ॥ इति तस्या वचः श्रुत्वा श्रीनिवासोऽब्रवी द्वचः ॥ श्रीभगवानुवाच ॥ अहं कुमारि सुभगे कृष्णजन्मनि भूतले ॥ ६३ ॥ भवामि तव भर्ताहं नात्र कार्या विचारणा ॥ एवमुक्ता सुता कन्या पुण्यराशिं हरिं परम् ॥ ६४ ॥ उवाच परमप्रीता हर्षगद्गदया गिरा ॥ ॥ कन्योवाच ॥ कृष्णजन्मन्यहं पत्नी भूयासं प्रथमेहनि ॥ ६५ ॥ संस्कारात्प्रथमं चाहमं गनाभ्यः समावृणे ॥ ओमित्युक्तः पुनर्वाक्यमुवाच मधुसूदनः ॥ ६६ ॥ श्रीभगवानुवाच ॥ कुमार्या विधृतत्वाच्च मत्प्रदानाच्च भामिनि ॥ तेषां मनोभीष्टसिद्धिर्भविष्यति न संशयः ॥ ६७ ॥ इति तस्यै वरं दत्त्वा तत्रैवांतरधीयत ॥ देहं तत्रैव संत्यज्य कुमारी चैव पुत्रिका ॥ ६८ ॥ कुम्भ

कस्य गृहे जाता नीला नाम्ना तु सा स्मृता ॥ कुंभकस्तु महाभाग नंदशोभस्य शालकः ॥ ६९ ॥ कल्पवाहः स विज्ञेयः पितॄणां प्रथमः स्मृतः ॥ तस्य गत्वा गृहमहं वृषभाचलवासिनः ॥ शिवस्य वरतश्चैव त्वजेयः खगसत्तम ॥ ७० ॥ दितिजान्विनिहत्यैव नीला प्राप्ता खगेश्वर ॥ ततो नाग्निजितो राज्ञो गृहे जाता कुमारिका ॥ ७१ ॥ नाग्निजित्कव्यवाहोभूत्कन्या नीलाह्वयाभवत् ॥ तस्याः स्वयंवरे चाहं गोवृषान्सप्तसंख्यकान् ॥ ७२ ॥ शिवस्य वरतश्चैवाप्यवध्यान्देवमानुषैः ॥ बद्धा वृषान्नृपाञ्जित्वा प्राप्ता नीला महाखग ॥ ७३ ॥ कुंभकस्य सुता नीला देहस्थाः प्राविशन् भृशम् ॥ एकावयवतो यस्मात्तस्मात्तत्रैव साविशत् ॥ ७४ ॥ भूमौ द्विधा संप्रजाता कुमार्येव न संशयः ॥ भद्राजन्म प्रवक्ष्यामि शृणु पक्षींद्रसत्तम ॥ ७५ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे नीलाविवाहनिर्णयो नामैकोनविंशोऽध्यायः ॥ १९ ॥ श्रीकृष्ण उवाच ॥ या पूर्वसर्गे नलसंज्ञस्य वींद्र पुत्री भूत्वा विष्णुपत्नी सकामा ॥ प्रदक्षिणं भ्रमणं वै चकार गुणेन भद्रा भद्रसंज्ञा बभूव ॥ १ ॥ कन्याभावे संस्थितां भद्रसंज्ञां पिता नलस्त्वब्रवीत्तां स पश्यन् ॥ भद्रे किमर्थं गात्रपीडां करोषि फलं हि तन्नन्दिनि मे वदस्व ॥ २ ॥ ॥ भद्रोवाच ॥ शृणु त्वं मे तात नमस्क्रियादेः फलं वक्तुं का समर्था भवेन्न ॥ ३ ॥ तथाप्यहं तव वक्ष्यामि तात यथाशक्त्या शृणु सम्यग्वितात ॥ सदा हरिर्मम नाथो दयालुरहं हरेस्तव दासानुदासी ॥ मां पाहि विष्णोस्तव वंदे पदे इत्युक्त्वा प्रणामं चाकरोद्दंडरूपम् ॥ ४ ॥ हरेः प्रणामं त्विति कर्तव्यशून्यं व्यर्थं तमाहुर्ज्ञानिनस्तच्छृणु त्वम् ॥ रमेश मध्वेश सरस्वतीशेत्येवं वदन्प्रणमेद्विष्णुदेवम् ॥ ५ ॥ यथा प्रसन्नो वंदनाद्देवदेवस्तथा न तुष्टः पूजनात्कर्मतश्च ॥ यथा नामस्मरणाद्वन्दनाद्वा पापान्नियच्छेत्तु तथा न चान्यैः ॥ ६ ॥ देहं तु ये पोषयंत्येव तात हरेः प्रणामैः शून्यभूतं च पुष्टम् ॥ तदेवमाहुर्व्यर्थमेवेति तात तत्पोषकाणां नरके दुःखमाहुः ॥ ७ ॥ यमोऽपि तं तत्र उलूखले तु निधाय पिष्टं मुसलैः करोति ॥ यो वा परं न करोत्येव तात प्रदक्षिणं देवदेवस्य विष्णोः ॥ ८ ॥ तस्यैव पादौ तलयंत्रे निधाय यमश्च नित्यं प्रकरोति पिष्टम् ॥ एषां जिह्वा हरिकृष्णेति नाम न वक्ति नित्यं व्यर्थभूतां वदंति ॥ ९ ॥ तेषां जिह्वा यमलोके यमस्तु निष्कास्य पिष्टं प्रकरोति नित्यम् ॥ काशीनिवासेन च किं प्रयोजनं किं वा प्रयागे मरणेन तात ॥ १० ॥ किं वा रणाग्रे मरणेन सौख्यं किं वा मखादेः समनुष्ठितेन ॥ समस्ततीर्थेष्वटनेन किं किमधीतशास्त्रेण सुतीक्ष्णबुद्ध्या ॥ ११ ॥ येषां जिह्वाग्रे हरिनामैव नास्ति येषां गात्रैर्नमनं नापि



१ पुत्रीभूयत्यर्थः ।

विष्णोः ॥ येषां पङ्क्यां नास्ति हरेः प्रदक्षिणं तेषां सर्वं व्यर्थमाहुर्महान्तः ॥ १२ ॥ हर्यर्पणाद्रहितं नाम कस्मात्प्रदक्षिणं नमनं चाहुरघ्र्यम् ॥ अतो विष्णोर्नमनं कार्यमेव हरेर्नामस्मरणं तात कार्यम् ॥ १३ ॥ जन्म ह्येतद्दुर्लभं नश्वरं तु यथा जलस्थं बुद्बुदं तत्तथैव ॥ नो विश्वासं कुरु गात्रे त्वदीये जीवेष्वपि स्वः परश्चेति तात ॥ १४ ॥ सद्यः कृतं नमनं न त्वदीयं सद्यः कृतं स्मरणं न त्वदीयम् ॥ कदा प्राप्स्ये मरणं तन्न जाने न विश्वासं कुरु गात्रे महात्मन् ॥१५॥ एतच्छ्रुत्वा नलो वींद्र पुत्रीवाक्यं सुनिर्मलम् ॥ नमस्कारं च कृतवान्यथाशक्त्या प्रदक्षिणम् ॥ १६ ॥ सापि प्रदक्षिणं चक्रे नमस्कारं सदा हरेः ॥ एवं बहुदिनं कृत्वा ध्यात्वा नारायणं परम् ॥ १७ ॥ कलेवरं च तत्याज मरणे हरिचिंतया ॥ मत्पितुर्वसुदेवस्य भगिन्या उदरे खग ॥ १८ ॥ कैकेयीति च नाम्ना सा त्वभवद्भद्रसंज्ञका ॥ यस्माद्भद्रगुणैर्युक्ता भद्रा सा भद्रनामिका ॥ १९ ॥ तस्यात्मजैश्च कैकेयैः पंचभिः खगसत्तम ॥ प्रत्याहृतामिमां भद्रां प्राप्तवान् खगसत्तम ॥ २० ॥ वक्ष्येहं मित्रविंदायाः पाणिग्रहणकारणम् ॥ सावधानमना भूत्वा शृणु पक्षींद्र सत्तम ॥ २१ ॥ मित्रविंदोवाच ॥ यान्पूर्वसर्गेप्यवृणोन्निकामतो ह्यग्नीषोमान्नामिका मित्रविंदा ॥ मित्रं हरिं प्राप्तुकामा सदैव तत्रोपायं चिंतयामास देवी ॥ २२ ॥ हरिप्राप्तौ साधनाः[1] संति तेषु मुख्यं कंचिच्चिंतयामास देवी ॥ तेषां मध्ये श्रवणं श्रेष्ठमाहुः पुराणानां सात्त्विकानां सदापि ॥ २३ ॥ विष्णोरुत्कर्षौ वर्तेते यत्र वायोस्तथोत्कर्षः सज्जनानां पुराणे ॥ श्राद्धं सदा विष्णुबुद्ध्या सदैव नान्यच्छ्राव्यं साधनं तत्र चैव ॥ २४ ॥ यस्मिन्दिने श्रवणं नास्ति विष्णोस्तेषां जन्म व्यर्थमाहुः कथायाम् ॥ स्नानं जपः पंचयज्ञं व्रतं च इष्टापूर्ते कृच्छ्रचांद्रे च दत्तम् ॥२५॥ सर्वं व्यर्थं वैष्णवानां च दीक्षा कथां विना सम्यगनुष्ठितां वै ॥ यैर्न श्रुतं भागवतं पुराणं ससंप्रदायैर्गुरुभिः संयुतैश्च ॥ २६ ॥ यैर्न श्रुतं भागवतं पुराणं यैर्न श्रुतं ब्रह्मकांडं पुराणम् ॥ तेषां जन्म व्यर्थमाहुर्महांतस्तस्माच्छ्राव्या हरिवार्ता सदैव ॥ २७ ॥ न यत्र गोविंदकथामहानदी न यत्र नारायणपादसंश्रयः ॥ न यत्र विष्णोः सततं वचोस्ति न संवसेत्तत्क्षणमात्रं कथंचित् ॥ २८ ॥ यस्मिन् ग्रामे भागवतं न शास्त्रं न वर्तेते भागवता रसज्ञाः ॥ यस्मिन् गृहे नास्ति गीतार्थसारः यस्मिन् ग्रामे नाम सहस्रकं वा ॥२९॥ तयो रसज्ञा यत्र न सन्ति तत्र न संवसेत्क्षणमात्रं कथंचित् ॥ यस्मिन् दिने दिव्यकथा च विष्णोर्न वास्ति जंतोस्तस्य चायुर्वृथैव॥३०॥ गर्भे गते नात्र विचार्यमस्ति तन्मन्यते दुर्लभं मर्त्यलोके॥कर्णं कल्पै[2]र्भूषितं सुंदरं च न सुंदरं चाहुरार्या रसज्ञाः ॥ ३१ ॥ विष्णोः कथाख्याभरणैश्च युक्तं तदेव कर्णं सुंदरं चाहुरार्याः ॥ तस्मात्सदा भागवतार्थसारं शृण्वंति ये सततं वाचयंति ॥ ३२ ॥ तेषां

१ साधनानीत्यर्थः । २ आकल्पैरित्यर्थः ।

जन्म स्वस्थमाहुर्महांतो महत्फलं चास्ति तथैव तेषाम् ॥ सोष्णीषकंचुकयुताश्च हरेः कथां वै शृण्वंति येपि च पठन्ति सदैव मर्त्याः ॥ ३३ ॥ सर्वेपि
ते पूजनीया हि लोके न वै शिश्ने चोदरे चैव सक्ताः ॥ ये दाक्षिण्यादर्थलोभाद्वदंति सदा पुराणं भगवत्तत्त्वसारम् ॥ ३४ ॥ प्रच्छादयंते तत्त्वगोप्यानि
ये तु तेषां गतिः सूर्यसूनुः सदैव ॥ ये धर्मकांडे कर्मकांडे सदैव उत्पादयंते सुरुचिं तत्र नित्यम् ॥३५॥ मौल्येन ये कथयेयुः पुराणं तेषां गतिः सूर्य
सूनुः सदैव ॥ मौल्येन ये भागवतं पुराणं शृण्वंति वै हरिशास्त्रार्थतत्त्वम् ॥ ३६ ॥ मौल्येन वेदाध्ययनं प्रकुर्वते तेषां गतिः सूर्यसूनुः सदैव ॥ यदृच्छ
या प्राप्तधनेन ये तु संतुष्टास्ते ह्यत्र योग्याः सदैव ॥ ३७ ॥ धनार्जने ये त्वतितृष्णाभियुक्तास्तेषां न वै भागवतेधिकारः ॥ मत्वा लोके
हरिरेवाति नित्यमंतर्यामी नास्ति तदन्य ईशः ॥ ३८ ॥ एवं सदा ये प्रविचिंतयंति योगक्षेमं बिभृयाद्विष्णुरेषाम् ॥ सद्वैष्णवानामशुभं नास्ति
नास्ति प्रदृश्यते संशयज्ञानरूपात् ॥ ३९ ॥ कर्मानुसारेण हरिर्ददाति फलं शुभानामशुभस्य चैव ॥ अतस्तदर्थं नैव यत्नं च कुर्याद्धनार्थं वै
हरितत्त्वे च कुर्यात् ॥ ४० ॥ अतः स्नात्वा दिव्यमंत्रं जपित्वा विसर्जयित्वा विष्णुनिर्माल्यगन्धम् ॥ शुचिर्भूत्वा भागवतं पुराणं संश्राव
येत्सर्ववेत्तापि नित्यम् ॥ ४१ ॥ कर्मानुसारेण धनार्जनं च वेदार्जनं शास्त्रसमार्जनं च ॥ भविष्यति श्रवणं चापि विष्णोरत्यादराच्छ्रवणं दुर्घटं च
॥ ४२ ॥ अत्यादराद्भागवतस्य सारमास्वादयेद्दुर्घटं मर्त्यलोके ॥ आस्वाद्य तद्भागवतं पुराणमानंदबाष्पैर्युक्तता दुर्घटा च ॥ ४३ ॥ श्रुत्वा तत्त्वा
नां निर्णयं धारणं च सुदुर्घटं चाहुरार्याः समस्तम् ॥ श्रुत्वा तत्त्वानां धारणानंतरं च कामक्रुधोर्जारणं दुर्घटं च ॥ ४४ ॥ श्रुत्वा तत्त्वानां धारणानं
तरं च तथा योगे दुर्घटं संगतं च ॥ ४५ ॥ श्रुत्वा तत्त्वानां धारणानंतरं च सद्वैष्णवानां स्पर्शनं दुर्घटं च ॥ एते दोषा ज्ञानपूतानपीह कुर्वन्ति
संदेहयुतान्सदैव ॥ ४६ ॥ अतो ह्यहं श्रवणं सत्कथायाः सदा करिष्ये नात्र विचार्यमस्ति ॥ तेनाप्यहं हरिनामाभिवाञ्छा निश्चित्य चित्तं श्रवणे
वै चकार ॥ आदेहमेवं श्रवणं च कृत्वा त्यक्त्वा देहं भूतले संप्रजाता ॥ ४७ ॥ निवस्तुं वसुदेवस्य भगिन्या उदरे खग ॥ सुमित्रा संज्ञकायां
च जाता वै मित्रविंदिका ॥ ४८ ॥ श्रवणेन हरिं मित्रं प्राप्ता सा मित्रविंदिका ॥ अतः सा मित्रविंदेति संज्ञया संबभूव ह ॥ ४९ ॥ स्व
यंवरे मित्रविंदा राज्ञां मध्ये तु भामिनी ॥ ममांसे व्यसृजन्मालां तां गृहीत्वा खगेश्वर ॥ विधूय नृपतीन्सर्वान्पुरीं प्राप्तः खगेश्वर ॥ ५० ॥ ॥२४४॥
॥ ५१ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे भद्राकृतभगवत्पतित्वप्रापकतपश्चर्यादिनिरूपणं नाम विंशोध्यायः ॥ २० ॥
श्रीकृष्ण उवाच ॥ कालिंद्या अपि चोत्पत्तिं प्रवक्ष्यामि खगेश्वर ॥ विवस्वान्नाम सूर्योऽभूत्तस्य पुत्री व्यजायत ॥ १ ॥ कालिन्दीसंज्ञका वींद्र

यमुना यातुजा स्मृता ॥ कृष्णपत्नीत्वकामेन चचार तप उत्तमम् ॥ २ ॥ तप आलोचनं प्रोक्तं तत्त्वानां च विनिर्णयः ॥ पूर्वार्जितानां पापानामनुतापस्तपः स्मृतम् ॥ ३ ॥ प्रायो नाम तपः प्रोक्तं चित्तनिग्रह उच्यते ॥ प्रायश्चित्तमिति प्रोक्तं न तु क्षौरं खगेश्वर ॥ ४ ॥ अनुतापयुतं भूतं तच्छृणु त्वं खगेश्वर ॥ पूर्वं न जप्तं दिव्यमंत्रं मुकुंद तप्तं सदा क्लेशदावानलेन ॥ ५ ॥ न वै स्मृतं हरिनामामृतं च सदा स्मृतं हरिदोषादिकं च ॥ न तु स्मृतं हरितत्त्वामृतं च सम्यक् श्रुतं लोलवार्त्तादिकं च ॥ ६ ॥ न पूजितं हरिपादारविन्दं सुपूजिताः पुत्रमित्रादिकाश्च ॥ न वन्दितं हरिपादारविन्दं सुवंदितो मित्रपादः सुघोरः ॥ ७ ॥ न दृष्टं वै धूपधूम्रैरुपेतं हरेर्वक्त्रं कुंतलैः संवृतं च ॥ पुत्रादिकं लालितं वै मुकुन्द न लालितं तव वक्त्रं मुरारे ॥ ८ ॥ सुलालितं भूषणैः पुत्रमित्रं न लालितं सर्वपापापहारि ॥ न भुक्तं वै हरिनैवेद्यशेषं मित्रालये षड्रसान्नं च भुक्तम् ॥ ९ ॥ सुपुष्पगंधा नार्पिता ते मुरारे समर्पिताः पुत्रमित्रादिकेभ्यः ॥ सन्तप्तोऽहं पुत्रमित्रादिकेषु कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ॥ १० ॥ अवैष्णवान्नैः शिग्रुशाकादिकैश्च ह्यनर्पितान्नैश्च तथाप्यसंस्कृतैः ॥ तथाप्यभक्ष्यै रसना च दग्धा कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ॥ ११ ॥ अष्टाक्षरीपूजया दिव्यतीर्थैर्विष्णोः पुरा भ्रामितैः शंखतीर्थैः ॥ न पावितं मच्छरीरं मुरारे कदा द्रक्ष्ये तव वक्त्रं मुकुन्द ॥ १२ ॥ अनर्पितैर्गंधपुष्पादिकैश्च अनर्पितैर्भूषणैर्वस्त्रजातैः ॥ अवैष्णवानां दिग्धगंधादिदोषैर्गात्रं दग्धं कदा ह्युद्धरिष्ये मुकुंद ॥ १३ ॥ दग्धौ च पादौ मम वासुदेव न गच्छंतौ क्षेत्रपथं हरेश्च ॥ नेत्रे च दग्धे मम सर्वदापि नालोकितं तव देव प्रतीकम् ॥ १४ ॥ दग्धौ च हस्तौ मम वासुदेव न पूजितं तव विष्णोः प्रतीकम् ॥ मया कृतं पापजातं मुरारे कदा द्रक्ष्ये तव वक्त्रं मुकुंद ॥ १५ ॥ मदीयदोषान्गणयन्न पूर्णां दयां कुरु त्वं शुद्धदास्यान्मुकुंद ॥ यावंति लोमानि मदीयगात्रे संति प्रभो सर्वदोषैर्विदूर ॥ १६ ॥ तावंति पापानि मदीयगात्रे कदा द्रक्ष्ये तव वक्त्रं मुकुंद ॥ अनंतदेहे पतिपुत्रैर्गृहैश्च मित्रैर्धनैः पशुभृत्यादिकैश्च ॥ १७ ॥ सुखं नाप्तं ह्यणुमात्रं मुकुंद सेवा मुक्ता तव देवस्य विष्णोः ॥ इतः परं पुत्रमित्रादिकं च यास्ये नाहं तव दासी भवामि ॥ १८ ॥ येये ब्रूयुः पुत्रमित्रादिकैश्च सम्यक् सुखं जायते मर्त्यलोके ॥ तेषामास्ये मूत्रविष्ठादिकं च सम्यक् सदा पतितं चेति जाने ॥ १९ ॥ मित्रादीनां यत्कृतं द्रव्यजातं वृथा गतं मलरूपं च जातम् ॥ सद्वैष्णवानां यत्कृतं द्रव्यजातं हरिप्राप्तेः कारणं स्यात्सदैव ॥ २० ॥ एतादृशं तत्तु जातं मुकुंद अलं ह्यलं तेन दुःखं च भुक्तम् ॥ संगं दत्तात्सज्जनानां सदा त्वं विना च त्वं दुर्जनानां च संगात् ॥ २१ ॥ संगैः सदा दुर्जनानां मुरारे गात्रं दग्धं न विरागेण युक्तम् ॥ एतादृशाहं कां गतिं वा मुकुंद यास्ये न जाने दयया मां च पाहि ॥ २२ ॥

एतादृशो ह्यनुतापः खगेंद्र प्रायश्चित्तं न च क्षौरादिकं च ॥ भानोः कन्या ह्यनुतापं च कृत्वा विचारयामास हरेः सुतत्त्वम् ॥ २३ ॥ सर्वो
त्तमो हरिरेकः सदैव यतः पूर्णः सर्वगुणैस्ततश्च ॥ सृष्टौ यस्माज्जायते विश्वजातमतो हरिः सर्वगुणैश्च पूर्णः ॥ २४ ॥ यो देवानामाद्य अकार एव
यतो ब्रह्माद्या नैव पूर्णाः समस्ताः ॥ लक्ष्मीप्रसादाच्चिरपुण्येन जातो यथायोग्यं पूर्णगुणो विरिंचः ॥ २५ ॥ न लक्ष्मीवद्गुणपूर्णो
विरिंचो न विष्णुवद्गुणपूर्णा रमापि ॥ न वायुवद्भारती चापि पूर्णा न शेषवद्वारुणी चापि पूर्णा ॥ २६ ॥ न वै रुद्रवत्पार्वती पूर्णरूपा ह्यन्येप्येवं नैव
पूर्णाः सदैव ॥ आलोचनामेवमेषा हि कृत्वा तपश्चक्रे यमुनायाश्च तीरे ॥ २७ ॥ तदाचाहं यमुनायाश्च तीरं पार्थेन साकं मृगयां गतः खग ॥
दृष्ट्वा च तां तत्र तपश्चरंतीं तदाऽब्रुवं मत्सखायं च पार्थम् ॥ २८ ॥ हे पार्थ शीघ्रं व्रज कन्यासमीपं त्वं पृच्छ कस्मादत्र तपः करोषि ॥ एवं प्रोक्त
स्तत्समीपं स गत्वा पृष्ट्वा चैतत्कारणं शीघ्रमेव ॥ २९ ॥ आगत्य मामवदत्फाल्गुनोयं सर्वं वृत्तान्तं त्वसौ मत्समीपे ॥ ततस्त्वहं सुमुहूर्ते च तस्याः
पाणिग्रहं कृतवांस्तत्र सम्यक् ॥ ३० ॥ तस्याश्च तापात्संततं मद्विचारात्प्रसन्नोहं सततं सुप्रसन्नः ॥ पूर्णानन्दे रममाणास्य नित्यं तया च मे किं सुखं
स्यात्खगेन्द्र॥३१॥मया विवाहोनुग्रहार्थं हि तस्या अंगीकृतो न तु सौख्याय वींद्र ॥ तथा वक्ष्ये लक्ष्मणायाश्च रूपं पाणिग्राहे कारणं चापि वींद्र॥३२॥
शृणुष्व तत्तव वक्ष्यामि गोप्यं सच्छिष्यके नास्ति गोप्यं गुरोश्च ॥ ३३ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे भगवतः कालिन्द्या
विवाहे हेतुनिरूपणं नामैकविंशोऽध्यायः ॥२१॥ श्रीकृष्ण उवाच ॥ या लक्ष्मणा पूर्वसर्गे खगेंद्र पुत्री ह्यभूद्ब्रह्मवेदस्य वेत्तुः ॥ सुलक्षणैः संयुतत्वाद्यतः
सा सुलक्ष्मणेति प्रथिता खगेंद्र ॥१॥ यथा लक्ष्मीर्लक्षणैः सा सुपूर्णा यथा हरिर्लक्षणैर्वै सुपूर्णः ॥ यथा वायुर्लक्षणैः पूर्ण एव यथा गायत्री लक्षणैः सा
सुपूर्णा ॥ २ ॥ यथा रुद्राद्या लक्षणैर्वै ह्यपूर्णा रुद्रादिवल्लक्ष्मणा चैव पूर्णा ॥ गुणेनैवं धर्मतः किंचिदेव तथानुसंधानाद्ध्रियते नाम चापि ॥ ३ ॥ तस्मा
दाहुर्लक्ष्मणेत्येव सर्वे तल्लक्षणं शृणु चादौ खगेंद्र ॥ नारायणे पूर्णगुणे रमेशे द्वात्रिंशत्संख्यानि सुलक्षणानि ॥ ४ ॥ संत्येव पक्षींद्र वदाम्यनु
क्रमान्मत्तः श्रुत्वा मोक्षमाप्नोति नित्यम् ॥ यः सप्तपादः षण्णवत्यंगुलोंगश्चतुर्हस्तः पुरुषस्तीक्ष्णदंतः ॥ ५ ॥ य एतत्सर्वं मिलितं
चैकमेव हरेर्विष्णोर्लक्षणं चाहुरार्याः ॥ मुखं स्निग्धं वर्तुलं पुष्टिरूपं द्वितीयं तल्लक्षणं चाहुरार्याः ॥ ६ ॥ हनुर्यस्यानुन्नतं चास्ति
वींद्र तल्लक्षणं प्राहुरार्यास्तृतीयम् ॥ यद्दन्ता वै तीक्ष्णसूक्ष्माश्च संति तल्लक्षणं चाहुरार्याश्चतुर्थम् ॥ ७ ॥ यस्याधरे रक्तिमा त्वस्ति वींद्र तल्ल
क्षणं पंचमं चाहुरार्याः ॥ यस्य हस्ता अतिरक्ताः खगेंद्र तल्लक्षणं प्राहुरार्याश्च षष्ठम् ॥ ८ ॥ यस्मिन्नखाः संति रक्ताः सुशोभास्तल्लक्षणं सप्तमं

चाहुरार्याः ॥ यस्मिन्कपोले रक्तिमा त्वस्ति वींद्र तल्लक्षणं ह्यष्टमं प्राहुरार्याः ॥ ९ ॥ यस्मिन्करे शंखचक्रादिरेखा वर्तते तन्नवमं प्राहुरार्याः ॥ यस्यो दरं तंतुरूपं सुपुष्टं वलित्रयैरंकितं सुंदरं च ॥१०॥ तल्लक्षणं दशमं प्राहुरार्या एकादशं निम्ननाभिं तदाहुः ॥ ऊरुद्वयं यस्य च मांसलं वै तल्लक्षणं द्वादशं प्राहुरार्याः॥११॥कटिर्हि दीर्घा पृथुलास्ति यस्य त्रयोदशं लक्ष्म तदाहुरार्याः ॥ यस्यास्ति मुष्को सुपरिष्ठितो वै चतुर्दशं लक्ष्म तदाहुरार्याः॥१२॥समु न्नतं शिश्नमथो हि लक्ष्म यस्यास्ति तत् पंचदशं वदंति॥ सुताम्रकं पादतलं खगेंद्र तल्लक्षणं षोडशं प्राहुरार्याः॥१३॥निम्नौ च गुल्फौ सप्तदशं तदाहुर्मी वारूपं प्राहुरष्टादशं च ॥ एकोनविंशं त्वक्षिपद्मं सुरक्तं प्राहुर्बाहुं जानु विंशं तथैव ॥ १४ ॥ विस्तीर्णोरश्चैकविंशं तदाहुः सिंहास्कंधं द्व्युत्तरं विंशमाहुः ॥ त्रयोविंशं सूक्ष्ममास्यं तदाहुश्चतुर्विंशं सुप्रसन्ने च दृष्टी ॥ १५ ॥ ह्रस्वं लिंगं मार्दवं चापि वींद्र तल्लक्षणं पंचविंशं वदंति ॥ समौ च पादौ कटिजानु चोरू षड्विंशमाहुश्च समे च जंघे ॥ १६ ॥ समानहस्तौ समकर्णौ मिलित्वा द्वात्रिंशत्कं लक्षणं प्राहुरार्याः ॥ द्वात्रिंशत्कं लक्षणं वै मुकुंदे द्वात्रिंशत्कं लक्षणं वै रमायाम् ॥ १७ ॥ द्वात्रिंशत्कं लक्षणं ब्रह्मणोपि तद्भारत्याः प्रवदंत्येव सत्यम् ॥ तथा च शंका सममेव चक्रिणेत्येवं सदामा कुरु निर्णयं ब्रुवे ॥ १८ ॥ एकस्य वै लक्षणस्यापि विष्णोर्लक्ष्मीरंतं नैव सम्यक् प्रपेदे ॥ अतोनंतैर्लक्षणैः संयुतं च हरिं चाहुर्लक्षणज्ञाः सदैव ॥ १९ ॥ जानाति लक्ष्मीर्लक्षणं वायुरूपे स्वापेक्षया ह्यतिरिक्तं खगेंद्र ॥ स्वलक्षणापेक्षया भारती तु शतैर्गुणैरधिका वेधसोपि ॥ २० ॥ खगेंद्र तस्माल्लक्षणे साम्यचित्तं विश्वादीनां सर्वदा मा कुरुष्व ॥ अष्टाविंशतिं प्राहू रुद्रादिकानां भ्रूनेत्रयोर्लक्षणेनैव हीनाः ॥ २१ ॥ अलक्षणं मन्यते यद्धि तस्य दुर्लक्षणं नैव तच्चिंतनीयम् ॥ अष्टाविंशतिं लक्षणं वै हरस्य न भारतीवच्चिंतनीयं खगेंद्र ॥ २२ ॥ अतो हरः क्रोधरूपी सदैव तयोरभा वात्सल्यमुक्तं तथैतत् ॥ अतो द्वयं नास्ति रुद्रे खगेंद्र शिश्नोदरे किंचिदाधिक्यमस्ति ॥ २३ ॥ सप्ताधिकैर्विंशतिलक्षणैस्तु समायुताः स्वप्रियो लक्ष्मणाद्याः ॥ षड्विंशत्या लक्षणैश्चापि युक्ता वारुण्याद्या पंचविंशैश्च चंद्रः ॥ २४ ॥ अर्थश्चतुर्विंशतिभिश्चैव युक्तो नासावायोर्द्व्यधिका विंशतिश्च लक्षणैश्चैकविंशत्या शची युक्ता न संशयः ॥ २५ ॥ प्रवाहा विंशकैर्युक्ता यम एकोनविंशकैः ॥ पार्श्वष्टादशभिर्युक्तो दशसप्तयुतोऽनलः ॥ २६ ॥ वैवस्वतः षोडशभिर्मित्रः पंचदशैर्युतः ॥ चतुर्विंशैस्तु धनपः पावकस्तु त्रयोदशैः ॥ २७ ॥ गंगा द्वादशभिर्युक्ता बुध एकादशैर्युतः ॥ शनिस्तु दशसंख्याकैः पुष्करो नवभिर्युतः ॥ २८ ॥ अथ षोडशसाहस्रं भार्यास्तु मम वल्लभाः ॥ अष्टभिश्चैव संयुक्ताः सप्तभिः पितरस्तथा ॥ २९ ॥ षड्भिश्च देवगंधर्वाः पंचभिस्तदनंतराः ॥ चतुर्भिः क्षितिपाः प्रोक्तास्त्रिभिरन्ये च संयुताः ॥ ३० ॥ उदरे किंचिदाधिक्ये ह्रस्वे पादे च कर्णयोः ॥

शिखाधिक्यं विना विप्र भार्यायां च शिवस्य च ॥ ३१ ॥ लक्ष्मणायां पंच दोषाः शिरोगुल्फादिकं विना ॥ नाभ्याधिक्ये सहैवाष्टौ दोषाः संत्यतिवाहिके ॥ ३२ ॥ जंघाधिक्ये सहैवाष्टौ दोषाः शच्याः सदा स्मृताः ॥ एवमेव हि दोषाश्चाप्यूहनीयाः खगेश्वर ॥ ३३ ॥ दुर्लक्षणैः सदा वींद्र संश्रुतैस्तत्त्वविद्भवेत् ॥ महोदरो लंबनाभिरीषामात्रोग्रदंष्ट्रकः ॥ ३४ ॥ अंधकूपगभीराक्षो लंबकर्णौष्ठनासिकः ॥ लंबगुल्फो वक्रपादः कुनखी श्यावदंतकः ॥ ३५ ॥ दीर्घजंघो दीर्घशिश्नस्त्वेकांडश्चैकनासिकः ॥ रक्तश्मश्रू रक्तरोमा वक्रास्यः संप्रकीर्तितः ॥ ३६ ॥ दग्धपर्वतसंकाशो रक्तपृष्ठः कलिः स्मृतः ॥ अलोमांसोऽलोमशिरा रक्तगंडकपोलकः ॥ ३७ ॥ ललाटे पांडुता नित्यं वामस्कंधे करे खग ॥ क्रूरदृष्टिर्हृष्टपादस्तथा वै घर्घरस्वरः ॥ ३८ ॥ अत्याशी चातिपानश्च स्तनौ शुष्कफलोपमौ ॥ ऊरौ नवांजिकारोमः तथा पृष्ठे च मस्तके ॥ ३९ ॥ ललाटे त्रीणि दीर्घे तु समे द्वौ संप्रकीर्तितौ ॥ सर्पाकारस्तु यो मत्स्यस्तस्य शिश्ने प्रकीर्तितः ॥ ४० ॥ पादत्राणोपमो मत्स्यो रसनाग्रे प्रकीर्तितः ॥ शिश्नाकारश्च यो मत्स्यो गुदे तस्य प्रशस्यते ॥ ४१ ॥ वृश्चिकाकारमत्स्यस्तु पदोस्तस्य प्रशस्यते ॥ श्वाकारश्चापि मत्स्यो वै मुखे तस्य प्रकीर्तितः ॥ ४२ ॥ हस्ते तु बहुरेखाः स्युर्लोम नासापुटे स्मृतम् ॥ अतिदीर्घं तु चांगुष्ठं कनिष्ठं चातिदीर्घकम् ॥ ४३ ॥ दुर्लक्षणं त्वेवमादि कलावस्ति ह्यनेकशः ॥ सुलक्षणान्यनेकानि मयि संति खगेश्वर ॥ ४४ ॥ द्वात्रिंशल्लक्षणं विष्णोर्ब्रह्माद्यापेक्षयैव तत् ॥ सहाभिप्रायगर्भेण ब्रह्मणोक्तं तव प्रभो ॥४५॥ ब्रह्मोक्तस्य मयोक्तस्य विरोधो नास्ति सत्तम ॥ मयोक्तस्यैव स व्यासः कंबुग्रीवः प्रदर्श्यते ॥४६॥ रक्ताधरं रक्ततालु चैकीकृत्य मयोदितम् ॥ अतो विरोधो नास्त्येव तथा ज्ञानात्प्रतीयते ॥ ४७ ॥ सप्ताधिकैर्विंशतिलक्षणैस्तु समायुता याः स्त्रियो लक्ष्मणाद्याः ॥ ४८ ॥ भगे नेत्रे च हस्ते च स्तने कुक्षौ तथैव च ॥ भारत्यपेक्षया पंचभिर्न्यूना त्वस्ति लक्षणैः ॥४९॥ न रुद्रवन्न चान्यानि लक्षणानि खगेश्वर ॥ षड्विंशतया लक्षणैश्चापि युक्ता वारुण्याः षड्लक्षणैश्चैव हीना ॥ ५० ॥ कर्णे कुक्षौ नासिकाकेशपाशे गुल्फे भगे किंचिदाधिक्यमस्ति ॥ इंद्रो युक्तः पंचविंशत्या खगेंद्र सदा हीनो लक्षणैः सप्तसंख्यैः ॥ ५१ ॥ हस्ते पादे उदरे कर्णयोश्च शिश्ने गुल्फे त्वधरोष्ठेधिकं च ॥ चतुर्विंशत्या लक्षणैश्चापि युक्तो नास्तिक्यवायुस्तद्वदेवाष्टभिश्च ॥ ५२ ॥ नाभ्यां गुल्फे हनुरंड्योश्च स्कंधे द्विजे नेत्रे त्वधरोष्ठेधिकं च ॥ त्रयोविंशत्या लक्षणैश्चापि युक्ता शची तथा नवदोषैश्च युक्ता ॥ ५३ ॥ भगे केशे ह्यधरोष्ठे च कर्णे जंघे गंडे वक्षसि गुल्फयोश्च ॥ तथोत्तरोष्ठे किंचिदाधिक्यमस्ति एवं

१ आर्षत्वात्सप्तम्यर्थे तु प्रथमा ।

विजानीहि खगेंद्रसत्तम ॥ ५४ ॥ द्वाविंशत्या लक्षणैः संयुतस्तु दशभिर्दोषैः प्रवहो नाम वायुः ॥ तथांगुष्ठे किंचिदाधिक्यमस्ति विंशत्येकादश भिर्दोषैतोर्कः ॥ ५५ ॥ तद्विंशत्या लक्षणैः संयुतस्तु तदा दोषैर्द्वादशभिश्च युक्तः ॥ एकोनविंशत्या लक्षणैश्चापि युक्तस्त्रयोदशभिस्तदभावैर्युतोग्निः ॥ ५६ ॥ अष्टादशभिर्लक्षणैः संयुतस्तु वैवस्वतस्तदभावैश्चतुर्दशभिः ॥ मित्रस्तु सप्तदशभिर्लक्षणैः संयुतः खग ॥ ५७ ॥ सदोषैः पंचदशभिः संयुक्तो नात्र संशयः ॥ तैश्च षोडशभिर्युक्तो धनपो नात्र संशयः ॥ ५८ ॥ तदभावैः षोडशभिः संयुक्तः संप्रकीर्तितः ॥ तैः पंचदशभिश्चैव युक्तोग्रे ज्येष्ठपुत्रकः ॥ ५९ ॥ तैः सप्तदशभिर्दोषैः संयुक्तो नात्र संशयः ॥ तैश्चतुर्दशभिश्चैव गंगा संपरिकीर्तिता ॥ ६० ॥ तथाष्टादशभिर्दोषैः संयुता नात्र संशयः ॥ तैस्त्रयोदशभिश्चैव संयुतो बुध एव तु ॥ ६१ ॥ दोषैरेकोनविंशत्या संयुतो नात्र संशयः ॥ शनिर्विंशतिदोषेण युतो द्वादशलक्षणैः ॥ ६२ ॥ लक्षणैश्चैकादशभिः पुष्करः परिकीर्तितः ॥ एकविंशतिसंख्याकैरसद्भावैः प्रकीर्तितः ॥ ६३ ॥ दशभिर्लक्षणैर्युक्ताः पितरो ये चिराः खग ॥ त्रयोविंशतिदोषैश्च संयुता नात्र संशयः ॥ ६४ ॥ अष्टभिर्लक्षणैर्युक्ता देवगंधर्वसत्तमाः ॥ दोषैश्चतुर्विंशतिभिः संयुक्ताः परिकीर्तिताः ॥ ६५ ॥ सप्तलक्षणसंयुक्ता गंधर्वा मानुषात्मकाः ॥ यैस्तु पंचविंशतिभिर्दोषैः संयुक्ताः प्रकीर्तिताः ॥ ६६ ॥ षड्गुणैः क्षितिपा युक्ता षड्विंशत्या च दोषतः ॥ तदन्ये पंचभिर्युक्ताश्चतुर्भिः केचिदेव च ॥ ६७ ॥ त्रिभिः केचित्ततो हीना न संति खगसत्तम ॥ यस्मिन्नरे क्षितिपे वा खगेंद्र आधिक्यं यद्दृश्यते लक्षणस्य ॥ ६८ ॥ न ते नरा नैव ते वै क्षितीशाः सर्वे नैव ह्युत्तमाः सर्वदेव ॥ ये देवा ये च दैत्याश्च सर्वेप्येवं खगाधिप ॥ ६९ ॥ लक्षणालक्षणैश्चैव क्रमेणोक्ता न संशयः ॥ लक्षणैः सप्तविंशत्याऽलक्षणैः संयुताः खग ॥ ७० ॥ अतः सलक्षणा ज्ञेया द्वात्रिंशल्लक्षणैर्न हि ॥ पितुर्गृहे वर्धमाना सदापि स्वकुटुंबं श्रेष्ठयितुं खगेंद्र ॥ ७१ ॥ उवाच सा पितरं दीयमानमन्नादिकं त्वमित्रादिकेषु ॥ सदापि ये त्वनुसंधानेन युक्ता अंतर्गते[1] तत्रतत्र स्थिते च ॥ ७२ ॥ अज्ञातत्वे चान्नपानादिकं च दत्तं संतो व्यर्थमेवं वदंति ॥ हरिं वक्ष्ये तत्रतत्र स्थितं च तं वै शृणु त्वादरेणाद्य नित्यम् ॥ ७३ ॥ बालो हरिर्बालरूपेण कृष्णः क्षीरादिकं नवनीतं घृतं च ॥ गृह्णाति नित्यं भूषणं वस्त्रजातमेवं दद्यात्सर्वदा विष्णुतुष्ट्यै ॥ ७४ ॥ मित्रैर्हरिः केशवाख्यो मुकुंदो भुंक्ते दत्तं त्वन्नपानादिकं च ॥ पूर्वं दद्यात्सर्वदा वै गृहस्थो धन्यो भवेदन्यथा व्यर्थमेव ॥ ७५ ॥ गृह्णाति नित्यं माधवाख्यो हरिश्चेत्येवं ज्ञात्वा देयमन्नादिकं च ॥ एवं ज्ञात्वा दीयमानेन नित्यं प्रीणा

१ अन्तर्यामिणीत्यर्थः ।

ति विष्णुर्नान्यथा व्यर्थमेव ॥ ७६ ॥ गृहे नित्यं वासुदेवो हरिस्तु प्रीणाति नित्यं तत्र तिष्ठन्सुपर्ण ॥ एवं ज्ञात्वा स्वगृहं सर्वदैव अलंकुर्याद्धातुरूपैः सदैव॥७७॥गोविंदाख्यास्तिष्ठति वैष्णवानां पुत्रैर्युतस्तिष्ठति वासुदेवः ॥ मित्रे मुकुंदः शालके चानिरुद्धो नारायणो द्विजवर्ये सदास्ति ॥७८॥ गोष्ठे च नित्यं विष्णुरूपी हरिस्तु अश्वे सदा तिष्ठति वामनाख्यः ॥ संकर्षणः शूद्रवर्णे सदास्ति वैश्ये प्रद्युम्नस्तिष्ठति सर्वदैव॥७९॥जनार्दनः क्षत्रजातौ सदास्ति दासेषु नित्यं महिदासो हरिस्तु ॥ मह्यां नित्यं तिष्ठति सर्वदैव ह्युपेंद्राख्यो हरिरेकः सुपर्ण ॥ ८० ॥ गजे सदा तिष्ठति चक्रपाणिः सदांतरे तिष्ठति विश्वरूपः ॥नित्यं शुनि तिष्ठति भूतभावनः पिपीलिकायामपि सर्वदैव॥८१॥त्रिविक्रमो हरिरूप्यन्तरिक्षे सर्वजातावनंतरूपी हरिश्च ॥ हरेर्न वर्णोऽस्ति न गोत्रमस्ति न जातिरीशे सर्वरूपे विचित्रे॥८२॥एवं ज्ञात्वा सर्वदा लक्ष्मणा तु हरिं सदा प्रीणयामास देवी॥सपर्यया वै क्रियमाणया हरिः पतिर्मम स्य.दिति चिंतयाना ॥८३॥ तत्याज देहं विष्णुपतित्वकामा मद्रेषु वै वींद्र पुत्री प्रजाता॥ स्वयंवरे लक्ष्मणाया अहं च भित्त्वा लक्ष्यं भूपतीन्द्रावयित्वा॥८४॥पाणिग्रहं लक्ष्मणायाश्च कृत्वा गत्वा पुरीं रमयामास देवी ॥ तथैवाहं जांबवत्या विवाहं मत्पत्नीत्वे कारणं त्वां ब्रवीमि॥८५॥इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे लक्ष्मणाविवाहहेतुनिरूपणं नाम द्वाविंशोऽध्यायः ॥ २२ ॥ श्रीकृष्ण उवाच ॥ सोमस्य पुत्री पूर्वसर्गे बभूव भार्या मदीया जाम्बवती मम प्रिया ॥ तासां मध्ये ह्यधिका वींद्र किंचिद्रुद्रादिभ्यः पंचगुणैर्विहीना ॥ १ ॥ यदावेशो बलवान्स्याद्रमायां तदानास प्रियते केशवोलम् ॥ यदावेशाद्ध्रासमुपैति काले तदा तासां साम्यमाहुर्महांतः ॥ २ ॥ लक्ष्म्यावेशः किंचिदस्त्येव नित्यमतस्ताभ्यः किंचिदाधिक्यमस्ति ॥ ३ ॥ गरुड उवाच ॥ तासां मध्ये जाम्बवन्ती तु कृष्ण आराधनं कीदृशं सा चकार ॥ तन्मे ब्रूहि कृपया विश्वमूर्ते आधिक्ये वै कारणं ताभ्य एव ॥ ४ ॥ गरुडेनैवमुक्तस्तु भगवान् देवकीसुतः ॥ मेघगंभीरया वाचा उवाच विनतासुतम् ॥ ५ ॥ श्रीकृष्ण उवाच ॥ या पूर्वसर्गे सोमपुत्री बभूव पितुर्गृहे वर्त्तमानापि साध्वी ॥ जन्म स्वकीयं सार्थकं वै चकार पित्रा साकं विष्णुशुश्रूषणे न च ॥ ६ ॥ शुश्राव नित्यं सत्पुराणानि चैवं चक्रे सदा विष्णुपादप्रणामम् ॥ चक्रे सदा तारकस्यापि विष्णोः प्रदक्षिणं स्मरणं कुर्वती सा ॥ ७ ॥ पित्रा साकं सा तु कन्या खगेंद्र वैराग्ययुक्ता श्रवणात्संबभूव ॥ कोशं च मित्रं द्विरदादिकं च अनर्घ्यरत्नानि गृहादिकं च ॥ ८ ॥ सर्वं ह्येतन्नश्वरं चैव मेने मदाधीनं हरिणा वै कृतं च ॥ येनैव दत्तं पुत्रमित्रादिकं च तेना हृतं वेदनां नैव चक्रे ॥ ९ ॥ अत्रैव विष्णुः परमो दयालुः दयां मयि कृतवांस्तेन सुष्ठु ॥ पित्रा साकं कन्यका सा तु वींद्र सदक्षात्मनि ह्यमले वासुदेवे ॥ १० ॥ एकांतत्वं सुष्ठु भक्त्या गता सा यदृच्छया सोपपन्नेन देवी ॥

अकल्पयंत्यात्मनो वींद्र वृत्तिं चकार यत्सावधिराधं प्रथैव ॥ ११ ॥ सा वै वित्तं विष्णुपादारविंदे दुःखार्णवात्तारके संचकार ॥ वागिंद्रि
द्रियं खग सम्यक् चकार हरेर्गुणानां वर्णने वा सदैव ॥ १२ ॥ हस्तौ च विष्णोर्गृहसंमार्जनादौ चकार देवी गात्रमलापहारम् ॥ श्रोत्रं च
चक्रे हरिसत्कथोदये मोक्षादिमार्गे ह्यमृतोपमे च ॥ १३ ॥ नेत्रं च चक्रे प्रतिमादिदर्शने अनादिकालीनमलापहारिणी ॥ सद्वैष्णवानां स्पर्शने
चैव संगे निर्माल्यगंधानुविलेपने त्वक् ॥ १४ ॥ घ्राणेंद्रियं सा हरिपादसारे चकार संसारविमुक्तिदे च ॥ जिह्वेंद्रियं हरिनैवेद्यशेषे श्रीमत्तुलस्यादिविमि
श्रिते च ॥ १५ ॥ पादौ हरेः क्षेत्रपथानुसर्पणे शिरो हृषीकेशपदाभिवंदने ॥ कामं हृदास्ये तु हरिदास्यकाम्या तथोत्तमश्लोकजनाश्रयंति ॥ १६ ॥
निष्कामरूपे च मतिं चकार वागिंद्रियं स्तवनं स्वीचकार ॥ एवं सदा कार्यसमूहमात्मना समर्पयित्वा परमेशपादयोः ॥ १७ ॥ तीर्थाटनार्थं तु
जगाम पित्रा साकं हरेः प्रीणनाद्यर्थमेव ॥ आराधयित्वा ब्राह्मणान्विष्णुभक्तानादौ गृहे वस्त्रसंभूषणाद्यैः ॥ १८ ॥ पश्चात्संकल्पं कारयामास देवी
विष्णोरग्रे तीर्थयात्रार्थमेव ॥ यावत्कालं तीर्थयात्रा मुकुंद तावत्कालं तूर्ध्वरेता भवामि ॥ १९ ॥ यावत्कालं तीर्थयात्रां करिष्ये तावदत्तावैष्णवानां च
संगम् ॥ हरेः कथाश्रवणं स्यान्मुकुंद नावैष्णवानां संगिनामङ्गसंगम् ॥ २० ॥ सुहृज्जनैः पुत्रमित्रादिकैश्च तीर्थाटनं नैव कुर्यां मुकुंद ॥ कुर्वंति ये
काम्यया तीर्थयात्रां तेषां संगं कुरु दूरे मुकुंद ॥ २१ ॥ शालग्रामं ये विहायैव यात्रां कुर्वंति तेषां किं फलं प्राहुरार्याः ॥ यदा तीर्थानां
दर्शनं स्यात्तदैव शालग्रामं पुरतः स्थापयित्वा ॥ २२ ॥ तीर्थाटनं पादचारैः कृतं चेत्पूर्णं फलं प्राहुरार्याः खगेंद्र ॥ पादत्राणं पादरक्षां च कृत्वा
तीर्थाटनं पादहीनं तदाहुः ॥ २३ ॥ यो वाहने तुरगे चोपविष्टस्तीर्थाटनं कुरुते चार्धहीनम् ॥ वृषादीनां वाहने पादमाहुः परान्नानां भोजने व्यर्थ
माहुः ॥ २४ ॥ महात्मनां वेदविदां यतीनां परान्नानां भोजने नैव दोषः ॥ संकल्पयित्वा परमादरेण जगाम सा तीर्थयात्रार्थमेव ॥ २५ ॥
आदौ स्नात्वा हरिनिर्माल्यगंधं विसर्जयित्वा श्रवणं वै चकार ॥ पित्रा साकं भोजनं चापि कृत्वा अग्रे दिने क्रोशमेकं जगाम ॥ २६ ॥ तत्र द्विजा
न्पूजयित्वान्नपानै रात्रौ तत्त्वं श्रावयामास देवी ॥ एवं यात्रां ये प्रकुर्वंति नित्यं तेषां यात्रां सफलां प्राहुरार्याः ॥ २७ ॥ विना दयां तीर्थयात्रा खगेंद्र
व्यर्थेत्येवं वींद्र चाहुर्महांतः ॥ दिवा रात्रौ ये न शृण्वंति दिव्यां हरेः कथां तीर्थमार्गे खगेंद्र ॥ २८ ॥ व्यर्थंव्यर्थं तस्य चाहुर्गतं वै अश्वा
दीनां वाहनानां च विद्धि ॥ अश्वादीनामपराधं वदस्व गङ्गादीनां दर्शनात्पापनाशः ॥ २९ ॥ क्षेत्रस्थविष्णोर्दर्शनात्पापनाशो मार्जारस्याप्यप

१-सश्मश्रुकारेत्यर्थः । २ संकल्पमित्यर्थः ।

राधं वदस्व ॥ क्षेत्रस्थविष्णोः पूजनात्पापनाशः पूजावतामपराधं वदस्व ॥ ३० ॥ जपादीनां कुर्वतां पापनाशो विष्णोर्ध्यानात्सद्य एवाघनाशः ॥ अनुसंधानाद्रहितं सर्वमेव कृतं कर्म व्यर्थमेवेति चाहुः ॥ ३१ ॥ अतो हरेः पापविनाशिनीं कथां श्रुत्वा विष्णोर्भक्तिमान्स्यात्खगेंद्र ॥ दृष्ट्वादृष्ट्वा हरिं पादांकितं च स्मृत्वास्मृत्वा भक्तिमान्स्यात्खगेंद्र ॥ ३२ ॥ पित्रा सार्कं कन्यका सापि वींद्र शेषाचलस्थं श्रीनिवासं च द्रष्टुम् ॥ जगाम सा मार्गमध्ये हरिं च सा चिंतयामास रमापतिं च ॥ ३३ ॥ कदा द्रक्ष्ये श्रीनिवासस्य वक्षः श्रीवत्सरत्नैर्भूषितं विस्तृतं च ॥ कदा द्रक्ष्ये श्रीनिवासस्य तुंदं वलित्रयेणांकितं सुंदरं च ॥३४॥ कदा द्रक्ष्ये श्रीनिवासस्य कंठं महर्लोकस्याश्रयं कंबुतुल्यम् ॥ कदा द्रक्ष्ये श्रीनिवासस्य नाभिं सदांतरिक्षस्याश्रयं वै सुपूर्णम् ॥३५॥ कदा द्रक्ष्ये वदनं वै मुरारेर्जनलोकस्याश्रयं सर्वदैव ॥३६॥ शिरः कदा श्रीनिवासस्य द्रक्ष्ये सत्यस्य लोकस्याश्रयं सर्वदैव ॥ कटिं कदा श्रीनिवासस्य द्रक्ष्ये भूर्लोकस्याश्रयं सर्वदैव ॥ ३७ ॥ कदा द्रक्ष्ये श्रीनिवासस्य चोरु तलातलस्याश्रयं सर्वदैव ॥ कदा द्रक्ष्ये श्रीनिवासस्य जानु सुकोमलं सुतलस्याश्रयं च ॥ ३८ ॥ कदा द्रक्ष्ये श्रीनिवासस्य जंघे रसातलस्याश्रये:सर्वदैव ॥ कदा द्रक्ष्ये पादतलं हरेश्च पाताललोकस्याश्रयं सर्वदैव ॥ ३९ ॥ इत्थं मार्गे चिंतयंती च देवी शेषाचले शेषदेवं ददर्श ॥ फणैः सहस्रैः सुविराजमानं नानाद्रुमैर्वानरैर्वानरीभिः ॥ ४० ॥ अनंतजन्मार्जितपुण्यसंचयान्मयाद्य दृष्टः परमाचलो हि ॥ तद्दर्शनाद्बाष्पकलाकुलेक्षणा सद्यः समुत्थाय ननाम मूर्ध्ना ॥ ४१ ॥ मुखं च दृष्ट्वा नमनं च कार्यं पृष्ठादिभागे नमनं न कार्यम् ॥ सापि द्विषट्कं नमनं च चक्रे शालग्रामं स्थापयित्वा पुरोऽस्य ॥ ४२ ॥ इत्थं कार्यं वैष्णवैः पर्वतस्य त्वं वैष्णवे विपरीतं च कार्यम् ॥ [1]मध्यांतःस्थः पर्वताग्रेऽस्ति नित्यं रमाब्रह्माद्यैः पूजितः श्रीनिवासः ॥ ४३ ॥ सुसत्तमं परमं श्रीनिवासं द्रक्ष्येऽथाहं ह्यारुरुक्षेऽचलं च ॥ इत्येवमुक्ता कपिलाख्यतीर्थे स्थानं चक्रे सा स्वपित्रा सहैव ॥ ४४ ॥ अत्रैवास्ते श्रीनिवासो हरिस्तु द्रव्येण रूपेण न चान्यथेति ॥ आदौ स्नात्वा मुण्डनं तत्र कृत्वा तीर्थश्राद्धं कारयित्वा सुतीर्थे ॥ ४५ ॥ गोभूहिरण्यादिसमस्तदानं दत्त्वा शैलं चारुरोहाथ साध्वी ॥ शालग्रामं स्थापयित्वा स चाग्रे पुनः प्रणामं सापि चक्रे सुभक्त्या ॥ ४६ ॥ सोपानानां शतपर्यंतमेवमारुह्य सा ह्युपविष्टा तु तत्र ॥ शुश्राव सा भागवतं पुराणं शुश्राव वै वेंकटाद्रेः प्रशंसाम् ॥ ४७ ॥ जैगीषव्याद्गुरुपादात्सुभक्त्या शुश्राव तत्त्वं वेंकटाद्रेश्च सर्वम् ॥ ४८ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकांडे वेंकटेशगिरियात्राक्रमनिरूपणं नाम त्रयोविंशोध्यायः ॥ २३ ॥ जैगीषव्य उवाच ॥ कन्ये शृणु त्वं वेंकटाख्याचलस्य स्मेराननां पुण्यमां

१ अन्तर्यामीत्यर्थः ।

...कुर्वते सर्वलोकाः॥१॥पदेपदे श्रीनिवासश्च देवस्त्वलं ह्यलं प्रीयते भक्तवर्गः ॥ तं प्रीणयन्मोक्षमायां ति सर्वे हरौ तुष्टे किमलभ्यं च कन्ये ॥ २ ॥ सोपानदेशे यः पुराणं शृणोति तदा कृता सर्वतीर्थादियात्रा ॥ तदा दिवा प्रस्तुवंतीह मार्गे सदा हरिं श्रीनिवासं गुरुं च ॥ ३ ॥ सोपानानां महिमानं च श्रुत्वा शालग्रामं स्थापयित्वा च तत्र ॥ नमस्कृत्वा पुनरेवापि सा तु सोपानानि त्वारुरोहाथ साध्वी ॥ ४ ॥ सोपानानां वींद्र चारोहणेन त्ववैष्णवानां हरितोषो न चैव ॥ तेनैव तेषां साधनं भूय एव तमस्यंधे पातयितुं खगेंद्र ॥ ५॥ स्थलेस्थले एवमेवापि कार्यं जैगीषव्यं पुनरेवाह देवी ॥ कन्योवाच ॥ जैगीषव्यः श्रीनिवासो हरिस्तु ब्रह्मादीनां दृश्यते श्रीनिवासः ॥ ६॥ जैगीषव्य कृपया त्वं वदस्व जैगीषव्यो ह्येवमुक्तो हरिं तु ॥ उवाच कन्यां सोमपुत्रीं सतीं च ब्रह्मादीनां दृश्यते श्रीनिवासः ॥ ७ ॥ अनंतरूपोधिककांतकांतिमान्रुद्रादीनां दृश्यते वेंकटेशः ॥ समूर्यलक्षाधिककांतकांतितो रुद्रादीनां दृश्यते श्रीनिवासः ॥ ८ ॥ सहस्रसूर्याधिककांतिकांतः सविद्युत्त्वान्मानुषाणां रमेशः ॥ ऋष्यादीनां दृश्यते चंद्रवच्च सन्मानुषाणामपरोक्षो हरिस्तु ॥ ९ ॥ नक्षत्रवद्दृश्यते श्रीनिवासः सदा ऋषीणामपरोक्षो हरिस्तु ॥ स सूर्यवद्दृश्यते श्रीनिवासः संसारिणां वेंकटेशः खगेंद्र ॥ १० ॥ संदोहवद्दृश्यते वै प्रकाशो मिथ्यावतां दृश्यते श्रीनिवासः ॥ पाषाणवन्नैल्यरूपप्रकाशः शिलामात्रे दृश्यते वै कलौ च ॥ ११ ॥ नृणां सर्वेषां श्रीनिवासो हरिस्तु कलौ स्वरूपं श्रीनिवासस्य देवी ॥ न मानुषाः प्रविजानंति सर्वे यतः कलौ तामसा राजसास्तु ॥ १२ ॥ तत्संगिनः सात्त्विकाः केचिदेव ह्यतो भक्ता दुर्लभा वै कलौ च ॥ ये दृश्यंते भक्तवत्ते न भक्ताः शिश्नोदरयोर्भरणे चैव सक्ताः ॥ १३ ॥कुर्वंति यात्रां च तदर्थमेव भक्तिज्ञानं दुर्लभं वै कलौ च ॥ भक्ता ये वै न विरक्ताः सदैव तेषां हरेर्दर्शनं दुर्लभं च ॥ १४ ॥ भक्तस्वरूपं तव वक्ष्ये खगेंद्र यो ज्ञानपूर्णः परमे स्निग्ध एव ॥न च द्वेषैर्विधुरो भक्तियुक्तस्तव द्वेषाञ्छृणु वक्ष्ये च सम्यक् ॥ १५ ॥ जीवाभिदा हरिणाऽप्राकृतेन स्वतंत्रेण ह्यस्वतंत्रस्य नित्यम् ॥ ज्ञानानंदैः परिपूर्णे हरौ च गुणैरपूर्णो हरिरित्येव चिंता ॥ १६॥ श्रीब्रह्मरुद्रादिदिवौकसां सदा तथा द्विजानां समानायाश्च चिंता ॥ विष्णोः सकाशाद्ब्रह्मरुद्रादिकानां सदाधिक्यालोचनं द्वेष एव ॥ १७ ॥ विष्णोर्भद्रे हस्तपादादिकानां भेदज्ञानं द्वेषमाहुर्महांतः ॥ अवताराणां छेदभेदादिकं च तथोच्यते मरणस्यापि चिन्ता ॥ १८ ॥ तद्भक्तानां द्वेषणं चाहुरार्यास्तद्वाक्यानां दूषणं द्वेष एव ॥ नच द्वेषैः संयुता ये च लोके कन्ये दृश्यंते न तु भक्ताः कदाचित् ॥ १९ ॥ ॥ कन्योवाच ॥ जैगीषव्य ब्रूहि मे के च भक्ता भक्तिं कथं दर्शयामासुरेते ॥ तेषां हरिः श्रीनिवासो महात्मा त्राता सदा भक्तवर्गे दयालुः ॥ २० ॥ जैगीषव्यस्त्वेवमुक्तो महात्मा उवाच कन्यां संस्मरन् भक्तवर्यः ॥ जैगीषव्य उवाच ॥ प्रह्लादाद्या

श्रीनिवासस्य भक्ताः कृत्वा नृसिंहे चोत्तमां भक्तिमेव ॥ २१ ॥ अवाप साम्राज्यमनुत्तमं च ज्ञानं नृसिंहात्समवाप पश्चात् ॥ पराशरः श्रीनिवासस्य
भक्तो भक्तिं कृत्वा व्यासरूपं हरिं च ॥ २२ ॥ स्तुत्वा तेन ज्ञानतत्त्वं ह्यवाप्य जगाम मोक्षं भक्तिसंवर्धितात्मा ॥ यो नारदः श्रीनिवासस्य भक्तो
भक्तिं कृत्वा गर्भवासे हरौ च ॥२३॥तया भक्त्या ब्रह्मपुत्रत्वमाप ज्ञानप्राप्त्या तेन मुक्तिं जगाम ॥ यो ह्यंबरीषः श्रीनिवासस्य भक्तः कृत्वा भक्तिं पर
देवे हरौ च ॥ २४ ॥ जप्त्वा ज्ञानं प्राप्य दुर्वासकश्चाप्यवाप मोक्षं तेन संवर्धितात्मा ॥ मुचुकुंदो वै श्रीनिवासस्य भक्तो वैराग्यतो भक्तिदार्ढ्यं च
कृत्वा ॥ २५ ॥ तत्त्वज्ञानं प्राप्य विष्णोर्महात्मा ह्यवाप मोक्षं तेन संवर्धितात्मा ॥ स पुंडरीकः श्रीनिवासस्य भक्तः पित्रादिष्टो विष्णुभक्तिं च
कृत्वा ॥ २६ ॥ हरिप्रसादाज्ज्ञानमनुत्तमं चाप्यवाप मोक्षं भक्तिसंवर्धितात्मा ॥ ब्रह्मा च वायुश्च सरस्वती च ज्ञातव्याः सर्वे ऋजुयोगिनश्च ॥ २७ ॥
अच्छिन्नभक्ताश्च सदा मुरारेर्न काम्यरक्ताः शुद्धरूपा हि ते च ॥ गिरीशनागेशखगेशसंज्ञा देवाः शुक्रारौ गुरुचंद्रेन्दुसूर्याः ॥ २८ ॥ जलेशो
ग्निर्मनुधर्मौ कुबेरः विघ्नेशनासत्यमरुद्गणाश्च ॥ पर्जन्यमित्रादय एव सर्वे सदा ह्येते श्रीनिवासस्य भक्ताः ॥ २९ ॥ विश्वामित्रो भृगुरौर्वश्च कुत्सो
मरीचिरत्रिः पुलहः क्रतुश्च ॥ शक्तिर्वसिष्ठो गौतमीयो पुलस्त्यो भारद्वाजः श्रीनिवासस्य भक्ताः ॥ ३० ॥ मांधाता नहुषोंबरीषसगरौ राजा पृथु
र्हैहयो इक्ष्वाकुर्भरतो ययातिसुतलौ धर्मो विकुक्षिस्तथा ॥ उत्तानश्च बिभीषणो दशरथो ह्येते महाज्ञानिनः श्रीमद्वेंकटनायकस्य च गुरोर्भक्ताः
सदा संस्मृताः ॥ ३१ ॥ भागीरथी समुद्रश्च यमुना च सरस्वती ॥ गोदावरी नर्मदा च कृष्णा भीमरथी तथा ॥ ३२ ॥ सरयूफल्गुकावेरीगंडकी
कपिला स्तथा ॥ इत्येताश्च हरेर्भक्ताः संति चात्रैव भामिनि ॥ ३३ ॥ अभिप्रायं तत्र वक्ष्ये शृणु कन्ये मया सति ॥ यत्र प्रवर्तते मार्गे कथा विष्णो
र्महात्मनः ॥ ३४ ॥ वर्तंते वैष्णवा यत्र हरितत्त्वार्थबोधकाः ॥ तत्रैव भक्ताः सर्वेपि संति विष्णोस्तथैव च ॥ ३५ ॥ ये देवयात्रां परमात्मचिंतया
कुर्वंति ते हरिभक्ताश्च नान्ये ॥ यतो हरौ परमे वैष्णवानां सर्वं निष्ठामेति कृत्यं खगेन्द्र ॥ ३६ ॥ शेषाचलं समासाद्य ह्यन्नवस्त्रादिभूषणम् ॥
यो न दद्याद्भक्तः स ततः को नु परः पशुः ॥ ३७ ॥ भक्ता हरेः श्रीनिवासाचले च गंगादिरूपेण च तत्रतत्र ॥ तिष्ठंति सेवार्थमुरुक्रमस्य
तेषां पूजा नैव कार्या च देवि ॥ ३८ ॥ अभिप्रायं तत्र वक्ष्ये शृणु त्वं तत्र स्थले वस्त्रगंधादिधूपैः ॥ पुराणोक्ता अपि भेदेन पूज्या दृष्ट्वा च
तान्वंदयेत्प्राज्ञ एव ॥ ३९ ॥ सद्ब्राह्मणान्वंदयेत्पादमूले हस्तौ च द्वौ संपुटीकृत्य देवि ॥ साष्टांगरूपं वंदनं चैव विष्णोः कुर्यात्तथा गुरवे
विष्णुबुद्ध्या ॥ ४० ॥ गंगादीनां वंदनं कार्यमेव साष्टांगं वै तुलसीनां तथैव ॥ अश्वत्थानां नमनं कार्यमेव गवादीनां नमनं मानसेन ॥ ४१ ॥

द्या सदा देवदेवस्य विष्णोः कार्यो भक्त्या वैष्णवैरेव नान्यैः ॥ ये नामका ज्ञानवंतः सुभक्ताः सदैव कार्या विष्णुपूजा च कन्ये ॥ ४२ ॥ ये नामका ज्ञानवंतः सुभक्ताः सदैवं कार्या विष्णुपूजा च कन्ये ॥ येनामका विष्णुभक्ताः सदैव पूजा विष्णोर्नैव कार्यात्र देवि॥४३॥ मोहाद्यो वै पूजयेद्देवदेवं महाऽधर्माद्याति चांधं तमो वै ॥ ब्रह्मादिनामानि हरेर्हि देवी विष्णोः स्वनामानि ददौ दिवौकसाम् ॥ ४४ ॥ नादाद्धीरः केशवादीनि कन्ये स्वकं पुरं प्रविहायैव राजा ॥ एवं मयोक्तं कन्यके सर्वमेतदेतत्परं सम्यगारोहणीयम् ॥४५॥ गोविंद नारायण माधवेति यूयं मया सर्वमाराधितव्यम् ॥ सर्वे मिलित्वा पुनरेवं खगेंद्र समारुहन्वेंकटाद्रिं गृणंतः॥४६॥हरेर्नामान्यत्र पूर्वं गृणंतस्त्वास्वादयंतः श्रीनिवासस्य नाम ॥ द्रष्टुं सर्वे श्रीनिवासं तथैव कुर्वंतस्ते तलशब्दं नदंतः॥४७॥इति कृष्णवचः श्रुत्वा तार्क्ष्यः कृष्णमुवाच ह कथमास्वादनं चक्रुरेतद्विस्तीर्यं मे वद॥ श्रीकृष्ण उवाच॥भो श्रीनिवास तव नामैव चैतन्नाम स्वामी ननु नामैव स्वामी ॥ यां ब्रह्माद्या आश्रयंतीति यस्मात्तस्माद्रमा श्रीरिति नाम चाप ॥ ४८ ॥ रमाश्रयत्वान्नितरां सर्वदा चेत्यतो हरिः श्रीनिवासाभिधानः ॥ भो श्रीनिवासेति तु नर्तयंतो रोमांचमात्रास्तलशब्दकारिणः ॥ ४९ ॥ अद्यैव पश्याम हरेस्तवास्यं कदा वयं कृतकृत्या भवामः ॥ भोः केशवाद्यैव पदारविंदं संदर्शयित्वा सुदयां कुरुष्व ॥ ५० ॥ ब्रह्माणमाहुश्च पुराणमाहुः कशब्दवाच्यं सर्वलोकेशमाहुः ॥ ईशं चाहुं रुद्रमित्येव चाहुस्तत्प्रेरकं सृष्टिसंहारकार्ये ॥ ५१ ॥ अतो हरिः केशवनामधेयो भोः केशवेति च नर्तयंतः ॥ आनंदवापीं संस्रवंतोभिजग्मुर्नारायणेति प्रवदंतो हि जग्मुः ॥ ५२ ॥ अतो दोषास्तद्विरुद्धा गुणाश्च नाराश्च तेषामाश्रयत्वान्मुरारिः ॥ नारायणेति प्रवदंतीह लोके नारानुबंधात्सर्वमुक्ताः खगेंद्र ॥ ५३ ॥ नाराः प्रोक्ता आश्रयत्वाच्च तेषामतोपि नारायण एव वींद्र ॥ मुक्ताश्च ये तु प्रपदं नु जग्मुरण्डोदकं यस्य कटाक्षमात्रात् ॥ ५४ ॥ यदुत्पन्नं तेन नाराः खगेंद्र तेषां सदाप्याश्रयत्वाच्च वींद्र ॥ नारायणेति प्रवदंतीह लोके ह्यनंतब्रह्मांडविसर्जकत्वात् ॥ ५५ ॥ एवं ननृतुः परिशंसयंतो गोविंद नान्यो हि न चैव दर्शनम् ॥ गोशब्दवाच्यास्तु समस्तवाचो गोभिश्च सर्वैः प्रतिपाद्यते यतः ॥ ५६ ॥ अतो हि गोविंद इति स्मृतः सदा भो वेदवेद्येति तथा न ननृतुः ॥ आनंदबाष्पैश्च समन्विता हि हरे मुरारे तव दर्शनं हि ॥ ५७ ॥ देहि प्रभो वै तव दासदासाश्चतुर्दशे भुवने सर्वदापि ॥ यतस्त्वमेवं वसतीति वासुश्चात्रैव नित्यं क्रीडते सर्वदैव ॥ ५८ ॥ यतो देवेत्येवमाहुर्महांतस्त्वतो हरिं वासुदेवेति चाहुः ॥ भो वासुदेवेति ननृतुः सर्वदैव भो माधवेति ननृतुश्चैव सर्वे ॥५९॥ लक्ष्मीपते चेति वदंति सर्वे धनीति शब्दः स्वामिवाची यतो हि ॥ अतोप्यार्या माधवेति ब्रुवंति लक्ष्मीपते पाहि तथैव भक्तान्॥६०॥ते वै ब्रुवंतो ननृतुश्च जग्मुर्विष्णो सदास्मान्परिपाहि नित्यम् ॥ सर्वत्र यस्मा

द्वितोसि तस्मादित्यादिनामानि गृणंत एव ॥ जग्मुश्च सर्वे ददृशुश्च तीर्थं भक्त्योपेताः श्रीनिवासं स्मरन्तः ॥ ६१ ॥ कन्योवाच ॥ किं नामकं तीर्थमिदं मुनीन्द्र किं कार्यमत्र प्रवदास्मान्कृतीश ॥ कस्मै प्रसन्नो भगवाञ्छ्रीनिवासस्त्वस्मिन्सुतीर्थं वद विस्तरेण ॥ ६२ ॥ जैगीषव्य उवाच ॥ कन्ये शृणु त्वं ह्यभवत्सुबुद्धिमान्प्रह्लादसंज्ञो हरिभक्तवर्यः ॥ निष्कामबुद्ध्या तु यदा जगाम शेषाचलस्थं श्रीनिवासं च द्रष्टुम् ॥ ६३ ॥ अस्मिं स्थले दैत्यकुमारकान्प्रति हरेश्च तत्त्वं परिपृष्टवान्प्रभुः ॥ नृसिंहरूपं श्रीनिवासं भजस्व सुदुर्लभं मानुषं जन्म कन्ये ॥ ६४ ॥ तत्रापि विष्णोर्नृहरे सुतत्त्वं सुदुर्लभं सुष्ठु यात्रा तथैव ॥ यस्यां यात्रायां यत्र कुत्रापि देशे हरेः कथा वर्तते दैत्यवर्याः ॥ ६५ ॥ तत्र स्थले हरिरास्ते सदैव यतो व्याप्तः सर्वतो वै नृसिंहः ॥ एतच्छ्रुत्वा दैत्यकुमारकास्ते प्रह्लादमूचुर्भक्तवर्यं हरेश्च ॥ ६६ ॥ व्याप्तो हरिश्चेत्कथमत्र वै सखे न दृश्यते जलरूपी नृसिंहः ॥ स एवमुक्तो दानवानां सुतैश्च तुष्टाव विष्णुं परमादरेण ॥ ६७ ॥ तव स्वरूपं मम दर्शयस्व स्वयोग्यरूपं दानवानां सुतानाम् ॥ इति स्तुतः श्रीनिवासो हरिस्तु तस्मिन्नंतर्जलरूपं समायात् ॥ ६८ ॥ अस्मिन्स्नानं ये प्रकुर्वंति तीर्थे तेषां ज्ञानं परमं दृढं स्यात् ॥ अत्र स्नाने मानुषाणां च तात बुद्धिर्न हि स्यात्कलिकाले विशेषात् ॥ ६९ ॥ दत्त्वा वरं दैत्यवराय विष्णुरंतर्दधे जलपूर्णे सुकुंडे ॥ अद्याप्यास्ते जलमध्ये नृसिंहः प्रह्लादोपि दैत्यकुमारकैः सह ॥ ७० ॥ तस्मिन् सुतीर्थे परितस्तत्रतत्र जयेति शब्दः श्रूयते चापराह्णे ॥ इदं तीर्थं नारसिंहाभिधं च कन्ये स्नानं ह्यत्र कार्यं मनुष्यैः ॥ ७१ ॥ स्नानं कृत्वा तत्र तीर्थे च सम्यग्दीपं दत्त्वा द्विजवर्याय मुख्यम् ॥ द्रष्टुं पुनः श्रीनिवासं प्रजग्मुर्गोविन्दगोविंद इति ब्रुवंतः ॥ ७२ ॥ मुख्यप्राणाधिष्ठितं स्थानमाप्य उपाविशत्तत्र देवी ह्युवाच ॥ जैगीषव्यः श्रीनिवासस्य विष्णोः कथं कार्यं दर्शनं तद्वदस्व ॥ ॥ ७३ ॥ जैगीषव्यः प्राह संहृष्टचित्तो ब्रवीमि तंत्रं शृणु कन्यके त्वम् ॥ श्रुत्वा मत्तः कुरु सर्वं मयोक्तमाद्यं द्वारं श्रीनिवासस्य दृष्ट्वा ॥ ॥ ७४ ॥ अपराधसहस्राणि क्रियंतेऽहर्निशं मया ॥ तानि सर्वाणि मे देव क्षमस्व पुरुषोत्तम ॥ ७५ ॥ मानसान्वाचिकान्दोषान्कायिकानपि सर्वशः ॥ वैष्णवद्वेषहेतून्मे भस्मसात्कुरु माधव ॥ ७६ ॥ आद्यद्वारं श्रीनिवासस्य देवि सम्यक् स्मरेद्विजयं वै जयं च ॥ दक्षाध्वरे श्रीनिवासस्य देवि चंडं प्रचंडं संस्मरेत्सम्यगेव ॥ ७७ ॥ पाश्चात्यभागे श्रीनिवासस्य देवि नन्दं सुनंदं संस्मरेदेव भक्त्या ॥ सव्यद्वारे श्रीनिवासस्य कन्ये स्मरेत्कुमुदाक्षं कुमुदन्तमेव ॥ :७८ ॥ यश्चैव देहं प्रविशेद्भक्तिपूर्वं कदा द्रक्ष्ये सादरेणैव देवि ॥ प्रदक्षिणद्वादशकं च कृत्वा पदे पदे संस्मरेच्छ्रीनिवासम् ॥ ७९ ॥ श्रीस्वामितीर्थे सम्यगाचम्य नत्वा स्नात्वा नत्वा भूवराहं च देवि ॥ अथुद्वारं प्रविशेद्भक्तिपूर्वं गोविंदगोविंद इति

त्रुरूपं ॥ ८० ॥ पश्चादुरेनमनं कार्यमेव साष्टांगरूपं प्रविशेद्देवगेहम् ॥ पुनर्विशेद्द्वारतः संस्थितः स पीठस्थदेवान्मनसा चिंतयीत ॥ ८१ ॥ मध्ये पीठं श्रीनिवासं च देवी नारायणं प्रणमेत्पूर्णमेव ॥ देवस्य सव्ये पीठभागाद्बहिश्च नमस्कार्यं गुरुदेवाय चैव ॥ ८२ ॥ पीठस्याग्राच्चाप्यधस्तात्प्रदेशे आग्नेयकोणे प्रणमेद्वै खगेंद्र ॥ नैर्ऋत्यभागे व्यासदेवाय देवि नमस्कार्यो वैष्णवः सर्वदापि ॥ ८३ ॥ वायव्यकोणे भक्तिपूर्वं सुदुर्गां नमस्कुर्याद्भक्तिसंवर्धितात्मा ॥ पीठस्योर्ध्वं ह्यग्निकोणेषु देवी धर्माधिभूताय नमो यमाय ॥८४॥ पीठस्योर्ध्वं नैर्ऋतस्योर्ध्वकोणे ज्ञानाधिपं प्रणमेद्वायुदेवम् ॥ पीठस्योर्ध्वं वायुकोणे च सुभ्रूर्वैराग्यानामधिपं चैव रुद्रम् ॥ ८५ ॥ पीठस्योर्ध्वं त्वीशकोणे च देवि ऐश्वर्याणामधिपं चेंद्रदेवम् ॥ पीठस्य पूर्वं प्रणमेन्नैर्ऋतिं च अर्याम्णानामधिपं चात्र देवि ॥ ८६ ॥ देवस्य पीठस्य च दक्षिणे च दुर्गां नमेदुग्ररूपाभिधां च ॥ पीठस्य कन्ये प्रणमेत्पश्चिमे वै आरोग्याणामधिपं कामदेवम् ॥ ८७ ॥ देवस्य पीठस्योत्तरे रुद्रदेवमनैश्वर्याणामधिपं संस्मरेच्च ॥ पीठस्य मध्ये प्रणमेद्वै वराहं सदा कन्ये परमं पूरुषाख्यम् ॥ ॥ ८८ ॥ तस्योपरिष्टाच्छक्तिसंज्ञां च लक्ष्मीमाधाररूपां प्रणमेच्चैव नित्यम् ॥ तस्योपरिष्टाद्वायुकूर्मौं नमेच्च तस्योपरिष्टाच्छेषकूर्मौं नमेच्च ॥ ८९ ॥ तस्योपरिष्टादभिमानिनीं भुवो भूदेवतां प्रणमेच्चैव सुभ्रूः ॥ तस्योपरिष्टाद्वरुणं संस्मरेच्च क्षीरोदधेराधिपं चैव देवम् ॥ ९० ॥ तस्योपरिष्टात्प्रणमेच्चैव लक्ष्मीं श्वेतद्वीपाख्यं कन्यके पूजयेच्च ॥ तस्योपरिष्टात्प्रणमेच्चैव लक्ष्मीं महादिव्यां मंडपसंज्ञकां च ॥ ९१ ॥ पीठस्य मध्ये यमसंज्ञां च लक्ष्मीं समर्चयेद्यममध्ये च देवीम् ॥ यमस्य देवस्य च दक्षिणे च सूर्यं नमेद्दीपरूपं च भद्रे ॥ ९२ ॥ यमस्य देवस्य च वामभागे श्रियं नमेद्दीपरूपां च देवीम् ॥ यमस्य देवस्य तु चाग्रभागे हुताशनं दीपरूपं नमेच्च ॥ ९३ ॥ देवस्याग्रे भूमिनाम्नीं नमेच्च तत्त्वाभिमानां संस्मरेच्चैव नित्यम् ॥ पर्यंकरूपं श्रीनिवासस्य विष्णोस्तमोभिमानां सन्नमेच्चैव दुर्गाम् ॥ ९४ ॥ पूर्वादिगं पीठसोपानरूपमात्मानमेकं प्रणमेच्च देवि ॥ दक्षस्थदिक्पीठसोपानरूपं ज्ञानात्मकं प्रणमेच्चैव कन्ये ॥९५॥ पद्मस्य पूर्वस्थदले च देवि स्त्रीरूपाख्यं विमलाख्यामिमां च॥ ब्रह्मादिदेवान्प्रणमेच्च देवि आग्नेयकोणस्थदले शृणु त्वम् ॥९६॥ उत्कर्षनाम्नीं परमां च देवीं नमेद्रमां ब्रह्मवायू च शेषम् ॥ दक्षस्थपद्मस्य दलाष्टके च नारायणाकारशेषादिकानाम् ॥९७॥ स्त्रीरूपेभ्यो नमनं कार्यमेव कन्ये मया पश्चिमस्थे दले च ॥ गोपाख्यनारायणब्रह्मवायुविप्रादिकानां शेषरुद्रादिकानाम् ॥ ९८ ॥ स्त्रीरूपेभ्यो नमनं कार्यमेव ईशानकोणस्थदलेषु चैव ॥ ईशाननारायणमाविरिंचवायुर्वियच्छेषसुरादिकानाम् ॥ ९९ ॥ स्त्रीरूपेभ्यो नमनं कार्यमेव तथैव पद्मस्य च मध्यभागे ॥ अनुग्रहाख्या विष्णुलक्ष्मीश्च देवी वायुर्वियच्छेषरुद्रादिकानाम् ॥ १०० ॥ स्त्रीरूपाणां नमनं कार्यमेव सुयोगपीठस्य स्वरूप्र

भूतम् ॥ सदा नमेच्छ्रीमदनंतसंज्ञमेवं न मेच्छ्रीनिवासं च देवम् ॥ १०१ ॥ श्रीनिवासस्य वाम तु लक्ष्मीं च प्रणमेद्बुधः ॥ श्रीनिवासस्य सव्ये तु
धरायै प्रणमेच्छुभे ॥ १०२ ॥ पीठाद्बहिः पूर्वभागे कृपोल्कं प्रणमेच्छुभम् ॥ महोल्कं दक्षिणे चैव वीरोल्कं पश्चिमे नमेत् ॥ १०३ ॥ उत्तरे
च नमः कुर्याद्युल्काय च महात्मने ॥ चतुर्ष्वपि च कोणेषु सहस्रोल्कं नमेत्सुधीः ॥ १०४ ॥ पूर्वे तु वासुदेवाय नमस्कुर्याच्च दक्षिणे ॥ संकर्षणाय
देवाय प्रद्युम्नाय च पश्चिमे ॥१०५॥ उत्तरे ह्यनिरुद्धाय नमस्कुर्यादतंद्रितः ॥ आग्नेये च नमस्कुर्यात्कन्ये मायां सदा शुभे ॥१०६॥ जयायै च नम
स्कुर्यान्नैर्ऋत्ये चापि वायवे ॥ कृत्ये चैव नमस्कुर्यादीशान्ये शांतिसंज्ञकाम् ॥१०७॥ केशवाय नमः पूर्वे तथा नारायणाय च ॥माधवाय नमस्कुर्यान्नै
र्ऋत्ये चापि वायवे ॥ १०८ ॥ आग्नेये कन्यके नित्यं भक्त्या तु प्रयतः शुभे ॥ गोविंदाय नमस्कुर्याद्दक्षिणे विष्णवे तथा ॥ १०९ ॥ मधुसूद
नाय भोः कन्ये नमस्कुर्यात्तु नैर्ऋतौ ॥ पश्चिमे त्रिविक्रमाय वामनाय तथैव च ॥ ११० ॥ विष्णवे श्रीधरायाथ नमस्कुर्याच्च भामिनि ॥
उत्तरे तु महाकन्ये हृषीकेशाय वै नमः ॥ १११ ॥ तथा वै पद्मनाभाय नमस्कुर्यादतंद्रितः ॥ दामोदराय चैशान्ये नमस्कुर्याच्च भामिनि ॥११२॥
चतुर्थावरणे पूर्वे महाकूर्माय वै नमः ॥ वराहाय नमस्कुर्यादाग्नेये कन्यके शुभे ॥ ११३ ॥ दक्षिणे नारसिंहाय वामनाय नमोनमः ॥ भार्गवाय
नमस्कुर्यान्नैर्ऋत्ये शुद्धचेतसा ॥ ११४ ॥ पश्चिमे माधवायाथ तथा कृष्णाय वै नमः ॥ बुद्धाय च नमस्कुर्याद्वायव्ये कन्यके शुभे ॥ ११५ ॥ उत्तरे
ह्युल्करूपाय अनंताय नमोस्तु ते ॥ ईशान्ये विश्वरूपाय नमस्कुर्यादतंद्रितः ॥ ११६ ॥ आग्नेये वारुणीं चैव गायत्रीं चैव नैर्ऋते ॥ वायव्ये
भारतीं चैव ईशान्ये गिरिजां नमेत् ॥ ११७ ॥ गिरिजां वामभागे तु सौपर्णीं चैव संनमेत् ॥ प्रागिन्द्राय नमस्कुर्यात्सायुधाय तथैव च ॥ ११८ ॥
स परिग्रहाय श्रीविष्णोः पार्षदाय नमोनमः॥ आग्नेयेत्यग्नये तुभ्यं सायुधायेति पूर्ववत् ॥११९॥ दक्षिणे तु यमायैव नैर्ऋत्यां निर्ऋतिं यजेत्॥ पश्चिमे
वरुणायैव वायव्ये वायवे नमः ॥ १२० ॥ उत्तरे च कुबेराय ईशान्ये च शिवाय च ॥ ईशानशक्रयोर्मध्ये ब्रह्मणे सायुधाय च ॥ १२१ ॥ निर्ऋ
त्यप्पतिमध्ये तु शेषाय च नमोनमः ॥ एवं कृत्वा नमस्कारं प्रणमेच्च पुनःपुनः ॥ १२२ ॥ इत्येतत्सर्वमाख्यातं विधिपूर्वं तु दर्शनम् ॥ इतः परं
तु गंतव्यं दर्शनार्थं रमापतेः ॥ १२३ ॥ एवमुक्ता तु सा देवी तैः सार्धं तु ययौ मुदा ॥ यदुक्तः श्रीनिवासस्य दर्शनस्य विधिः खग ॥ कस्यचिन्नैव
वक्तव्यो गोप्यत्वाच्च कदाचन ॥ १२४ ॥ समागमो दुर्घट एव वींद्र सतां च सत्तत्त्वविबोधकानाम् ॥ अनेकजन्मार्जितपुण्यसंचयादभूद्गुरोः संगम एव

तस्य ॥१२५॥ पयो विकारं च निजं जहाति शेषस्य शेषं नलिनस्य पंकजम् ॥ भावं चलं पंकजनाभयोगात्सत्संगयोगादशुभानि न स्युः ॥ १२६ ॥
इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे श्रीवेंकटेशगिर्यारोहणक्रमतद्वर्णनतत्पर्वतनामादिनिरूपणं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥
सा द्वारदेशे श्रीनिवासस्य देवी स्वामिपुष्करिणीं ददर्श कैश्च सार्धम् ॥ स्वामिन्हरे श्रीनिवासेति सा तं ब्रह्मादीनां तारकं सम्प्रदध्यौ ॥ १ ॥
देवैः सार्धं पालनार्थं च विष्णुरस्त्येव नित्यं पुष्करिण्यां जलेषु ॥ अतः स्वामिपुष्करिणीति चाहुस्तत्र स्नानं कन्यकान्याश्च चक्रुः ॥ २ ॥
शुचिर्भूत्वा श्रीनिवासं च देवास्ततुं विविशुः शुद्धभक्त्या खगेंद्र ॥ यथोपदिष्टं गुरुणा तथैव चक्रे कन्याश्च सर्वं खगेंद्र ॥ ३ ॥ तदा हरिं
दर्शयामास तस्यै स्वकं रूपं सुप्रतीके सुपूर्णम् ॥ सा कन्यका श्रीनिवासस्य रूपं ददर्श भक्त्या स्वमनोभिरामम् ॥ ४ ॥ सुवर्णचित्रं
वसनं वसानं सोष्णीषकं कंचुकं संदधानम् ॥ ५ ॥ मृगोत्थमदगंधेन सुरभीकृतदिङ्मुखम् ॥ पुंडरीकविशालाक्षं कंबुग्रीवं
महाभुजम् ॥ ६ ॥ हेमयज्ञोपवीतांगं साक्षात्कंदर्पसन्निभम् ॥ जगन्मोहनसौंदर्यं कोमलांगं मनोहरम् ॥ ७ ॥ दृष्ट्वा च कन्या मुमुदे रोमा
ञ्चितसुगात्रका ॥ ८ ॥ तद्दर्शनाह्लादपरिप्लुताशया प्रेम्णाथ रोमाश्रुकुलाकुलेक्षणा ॥ ननर्त देवी पुरतस्तस्य विष्णोः सा ध्वस्तदोषा परमाद
रेण ॥ आनंद मां पाहि सुखं च दत्त्वा मुकुंद मां पाहि विमुक्तिदानात् ॥ ९ ॥ मां पाहि नित्यं ह्यरविंदनेत्र प्रसन्नदृष्ट्या करुणासुधार्द्रे ॥ गोविंद
गोविंद सुदुःखितां मां ज्ञानादिदानेन हि पाहि नित्यम्॥१०॥जनार्दन त्वं हि सुदुष्टसंगान्कामादिरूपान्सततं वर्जयित्वा॥हरे हरे मां सततं पाहि दैत्या
न्समाहत्य प्रबलान्विघ्नरूपान् ॥ ११ ॥ रमेश मां पाहि चतुर्मुखेश विश्वेश मां पाहि सरस्वतीश ॥ रमेश मां पाहि निदानमूर्ते वृंदारवृंदैर्वंदितपादपद्म
॥ १२ ॥ एवं तु नत्वा परमादरेण तुष्टाव विष्णुं परमं पुराणम् ॥ लक्ष्म्या सदा येऽविदिता गुणाश्च असंख्यातः संति विष्णौ च वीश ॥१३ ॥
तेषां सकाशादतिबाहुल्यसंख्या गुणा हरौ तेऽविदिता वै रमायाः ॥ अतो हरे स्तवने क्वास्ति शक्तिस्तथापि यत्नं स्तवने ते करिष्ये ॥ १४ ॥ तव
प्रसादाच्च रमाप्रसादाद्विधिप्रसादाद्भारतीशप्रसादात् ॥ रुद्रप्रसादात्स्तवनं ते करिष्ये तथापि विष्णो मयि शान्तिं कुरुष्व ॥ १५ ॥ यदि प्रसन्नोसि
मयि त्वमीश त्वत्पादमूले देहि भक्तिं सदैव ॥ त्वद्दर्शनादेव शुभाशुभं च नष्टं मदीयं ह्यशुभं च नित्यम् ॥१६ ॥ त्वन्मायया नष्टमिमं च लोकं मदे
न मत्तं बधिरं चांधभूतम् ॥ ऐश्वर्ययोगेन च यो हि मूको जातः सदा दीनगुर्वादिकेषु ॥ १७ ॥ मा देहि ऐश्वर्यमनुत्तमं त्वत्पादारविन्दस्य विरुद्धभू

१ ददर्शेत्यर्थः ।

तम् ॥ त्वं देव मे देहि सतां च संगं तव स्वरूपप्रतिपादकानाम् ॥ १८ ॥ पुत्रादीनामैहिकं वासुदेव दग्ध्वा च मे देहि पादारविंदे ॥ सद्भक्षणे क्रियमाणं च कोपं दग्ध्वा च मे देहि पादारविंदे ॥ १९ ॥ द्रव्यादिके क्रियमाणं च लोभं दग्ध्वा वै मे देहि पादाब्जमूले ॥ पुत्रादिके क्रियमाणं च मोहं दग्ध्वा च मे देहि पादाब्जमूले ॥ २० ॥ विद्यां पुत्रं द्रव्यजातं मदं च दग्ध्वा च मे देहि पादाब्जमूले ॥ सद्वैष्णवत्रासहमानस्वरूपं दग्ध्वा मात्सर्यं पाहि मां वेंकटेश ॥ २१ ॥ मंत्रं च मे देहि निदानमूर्ते येनैव मे स्यात्तव संगश्च भूयः ॥ नान्यं वृणे तव पादाब्जसंगात्तदेव मे देहि मम प्रसन्नः ॥ २२ ॥ इतीरितः श्रीनिवासः प्रसन्न उवाच देवो ह्यमृतत्त्वं च ॥ अत्रैव कन्ये प्रजपस्व मंत्रं सुगोप्यरूपं परमादरेण ॥ २३ ॥ वक्ष्यामि मंत्रं परमादरेण शृण्वद्य भक्त्या परमादरेण ॥ अंतःस्थमंत्यं ह्याद्यसंयुक्तमेत्र सबिन्दु तद्वत्स्पर्शकाद्येन युक्तम् ॥२४॥ एकारयुक्तं प्रथमांतःस्थं युक्तं समत्रिकोणे चोष्मणा संयुतं च ॥ तकारसक्तं स्पर्शमन्तःस्थयुक्तमाद्यंत ओंकारसमन्वितं च॥२५॥अनेन मंत्रेण तवेप्सितं च भवेद्धि कन्ये नात्र विचार्यमस्ति ॥ एवं स उक्त्वा श्रीनिवासो हरिस्तु प्रतीकवद्दर्शयामास रूपम् ॥ २६ ॥ नत्वा तु सा श्रीनिवासं च देवी उवास ह स्वामिसरःसमीपे ॥ तस्मिन्दिने ब्राह्मणादींश्च सर्वान्संतर्पयामास च षड्रसान्नैः ॥ २७ ॥ सायंकाले श्रीनिवासस्य दृष्ट्वा उत्साहरूपैः श्रीनिवासप्रतीकैः ॥ साकं भक्त्या संप्रणम्याथ देवी प्रदक्षिणं श्रीनिवासस्य सुष्ठु ॥ २८ ॥ ननर्त देवी सुप्रतीकस्य चाग्रे लज्जां त्यक्त्वा जय देवेति चोक्त्वा ॥ आनृत्तकाले च हरेश्च वक्त्रं दृष्ट्वा च दृष्ट्या तु परं ननर्त ॥ २९ ॥ ममाद्य गात्रं पावितं श्रीनिवास ममाद्य नेत्रं सफलं संबभूव ॥ ममाद्य पादौ सार्थकौ चैव जातौ प्रदक्षिणं श्रीनिवासेश कृत्वा ॥ ३० ॥ हस्तौ च मे सार्थकावद्य जातौ अग्रे कृत्वा हस्तशब्दं मुरारेः ॥ एवं वदंती प्रीणयंती च देवं जगाम सा स्तोत्रवचःकदम्बैः ॥३१॥ देवास्तदा दुंदुभयो विनेदिरे तन्मस्तके पुष्पवृष्टिं च चक्रुः ॥ तस्मिन्काले उभयोः पार्श्वयोश्च नृत्यं चक्रुर्देवतावारनार्यः ॥ ३२ ॥ तथैव तास्तलशब्दं च कृत्वा तदा सर्वा नमनं चापि चक्रुः ॥ आनंदशैले सर्वदा त्वित्थमेव सा सर्वदा नर्तयंती च वींद्र ॥ ३३ ॥ आनंदमग्ना सापि देवी जगाम स्वमाश्रमं जैगिषव्येण सार्धम् ॥ यात्रामेवं ये न कुर्वंति वींद्र तेषां च सर्वं निष्फलं चाहुरार्याः ॥ ३४ ॥ गत्वाश्रमं जैगिषव्येण सार्धं गुरुं त्वपृच्छद्वेंकटेशस्य मंत्रम् ॥ मन्त्रस्यार्थं ब्रूहि मे जैगिषव्य मंत्रावृत्तिं कुर्वतां वै फलाय ॥ ३५ ॥ जैगीषव्य उवाच ॥ शृणुष्व भद्रे वेंकटे



१ आर्षो ह्रस्वः ।

शस्य नाम्नस्त्वर्थं श्रुत्वा हृदये संनिधत्स्व ॥ ३६ ॥ विति ह्युत्तमवाची स्याद्येति ज्ञानमुदाहृतम्॥ ककारः सुखवाची स्याट्टेति चित्तमुदाहृतम् ॥
॥ ३७ ॥ ईशत्वमात्मवाचि स्यादेवं ज्ञेयं तु कन्यके ॥ पूर्णज्ञानं सुखं वित्तं व्याप्तत्वाद्व्यंकटाभिधः ॥३८॥ व्य(वे)मिन्द्रियादिकं प्रोक्तं व्यंगभूतं
हरौ यतः ॥ कटश्च समुदायार्थो व्यं(वें)कटश्चेंद्रियौघकः ॥ ३९ ॥ स्वस्मिन्प्रेरयते यस्मात्तस्माद्व्यंकटनामकः ॥ विषये प्रेषयेन्नित्यमतो व्यंकटना
मकः ॥ ४० ॥ विशिष्टज्ञानरूपत्वाद्व्येति मुक्ताः सदा स्मृताः ॥ मुक्तानां च समूहस्तु व्यंकटेति प्रकीर्तितः ॥ ४१ ॥ सदा मुक्तसमूहानामीश
त्वाद्व्यंकटाभिधः ॥ लिंगदेहमतो जीवो व्यंकटेति समाहृतः ॥ ४२ ॥ लिंगानां चैव स्वामित्वाद्व्यंकटेशेति संज्ञितः ॥ दैत्यानां च समूहास्तु
ज्ञानादिविधुरा यतः ॥ अतो दैत्यसमूहस्तु व्यंकटेति प्रकीर्तितः ॥ ४३ ॥ तेषां संहरणे ईशस्त्वतो व्यंकटनामकः ॥ आनंदस्य विरुद्धत्वात्कामक्रो
धादयो गुणाः॥ ४४ ॥ व्यंकटा इति संप्रोक्तास्तेषां नाशयिता प्रभुः ॥ अतस्तु व्यंकटेशाख्य एवं ज्ञात्वा जपं कुरु ॥ ४५ ॥ एवं व्यंकटमाहात्म्यं
श्रुत्वा देवी खगेश्वर ॥ निद्रां चकार तत्रैव रात्रौ पित्रा सहैव च ॥ ब्राह्मे मुहूर्ते चोत्थाय हृदि सस्मार कन्यका ॥ ४६ ॥ (व्यंकटेशस्य प्रातः
स्तुतिः) ॥श्रीव्यंकटेशश्च नृसिंहमूर्तिः श्रीवरदराजश्च वराहमूर्तिः ॥ श्रीरंगशायी च अनन्तशायी कुर्वंतु सर्वे मम सुप्रभातम् ॥ ४७ ॥ श्रीकृष्ण
मूर्तिश्च गदाधरश्च श्रीविष्णुपादस्तु प्रयागवासः ॥ नारायणः श्रीवदरीनिवासः कुर्वंतु सर्वे मम सुप्रभातम् ॥ ४८ ॥ दामोदरो वै त्रिजगन्निवासः श्री
पांडुरंगश्च नृसिंहदेवः ॥ श्रीरामदेवश्च अमोघवासः कु० ॥४९॥ श्रीधर्मपुत्रश्च नृसिंहमूर्तिः श्रीपिप्पलरथश्च मुहल्लवासः ॥ कोलानृसिंहः शूर्पकारस्थ
सिंहः कुर्वन्तु० ॥ ५० ॥ चतुर्मुखश्चारुसरस्वती च स्वभारती शर्वसुपर्णशेषाः ॥ उमामहेंद्रश्च शचीमुखास्ताः कुर्वंतु० ॥ ५१ ॥ द्वारावती काशिका
वंतिका च प्रयागकांच्यौ मथुरापुरी च ॥ मायावती हास्तिमती पुरी च कुर्वंतु स० ॥५२॥ भागीरथी चैव सरस्वती च गोदावरी सिंधुकृष्णे च वेणी ॥
कलिंदकन्या यमुना च नर्मदा कुर्वं० ॥ ५३ ॥ वितस्तिकावेरिसतुंगभद्राः सुवंजरा भीमरथी विपाशा ॥ सुताम्रपर्णी च पिनाकिनी च कु० ॥ ५४ ॥
स्वामिपुष्करिणी चैव सुवर्णमुखरी तथा ॥ श्रीपांडवी तौंबरुश्च कपिला पापनाशनी ॥ ५५ ॥ गुरुर्वसिष्ठः क्रतुरंगिराश्च मनुः पुलस्त्यः पुलहश्च
गौतमः ॥ रैभ्यो मरीचिश्च्यवनश्च दक्षः कुर्वंतु सर्वे मम सुप्रभातम् ॥ ५६ ॥ सप्तार्णवाः सप्त कुलाचलाश्च द्वीपाश्च सप्तोपवनानि सप्त ॥ भूरादिकानि
भुवनानि सप्त कुर्वन्तु स० ॥ ५७ ॥ मांधाता नहुषोंबरीषसगरौ राजा नलो धर्मराट् प्रह्लादः क्रतुराड् विभीषणगयौ व्यासो हनूमानपि ॥ अश्वत्थाम
कृपावुमा द्रुपदजा श्रीजानकी तारका मंदोदर्यखिलाः प्रभातसुमहं कुर्वन्तु नित्यं हरे ॥ ५८ ॥ अश्वत्थस्य वनानि किं च तुलसीधात्रीवनानि प्रभो

पुन्नागस्य वनानि चंपकवनान्यन्यानि पुष्पाणि च ॥ मन्दारस्य वनानि यानि च हरेः सौगंधिकान्यप्यहो नित्यं तानि दिशंतु मत्प्रमुदितं श्री वेंकटेश प्रभो ॥ ५९ ॥ एवं स्मृत्वा श्रीनिवासस्य देवी कृत्वा शौचं जैगिषव्येण साकम् ॥ स्नातुं ययौ पुष्करिणीं हरेश्च स्नानं सम्यक् तत्र चकार देशे ॥ सम्यग् जप्त्वा व्यंकटेशस्य मंत्रमुवाच सा जैगिषव्यं गुरुं च ॥ ६० ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे देवी कृतवेङ्कटेशदर्शनतत्स्तुत्यादिवर्णनं नाम पंचविंशोध्यायः ॥२५॥ कन्योवाच ॥ श्रीनिवासः किमर्थं वै आगतोत्र वदस्व मे ॥ शेषाचलोपि कुत्रा भूत्कदायातश्च पापहा ॥ स्वामिपुष्करिणी चात्र किमर्थं ह्यागता वद ॥ १ ॥ जैगीषव्य उवाच शृणु भद्रे महाभागे व्यंकटेशस्य चागमम् ॥ आव योर्देवि पापानि विषमं यांति भामिनि ॥ २ ॥ [आसीत्पुरा हिरण्याक्षः काश्यपो दितिनन्दनः ॥ सनकादेश्च वाग्दंडाद्वितीयद्वार पालकः ॥ ३ ॥ बभूव दैत्ययोनौ च देवानां कंटको बली ॥ संजीवो विजयः प्रोक्तो हरिभक्तो महाप्रभुः ॥ ४ ॥ हिरण्याक्षः स्वयं दैत्यो हरिभक्तविदूषकः ॥ एतादृशो हिरण्याक्षस्तपस्तप्तुं समुद्यतः ॥ ५ ॥ तदा माता दितिर्देवी हिरण्याक्षमुवाच सा ॥ दितिरुवाच ॥ वत्सलस्त्वं महाभाग मा तपस्वाष्टहायनः ॥ ६ ॥ त्वं मा ददस्व दुःखं मे पालयिष्यति कोविदः ॥ क्षणमात्रं न जीवामि त्वां विना जीवनं न हि ॥ ७ ॥ मा तप त्वं महा भाग मम जीवनहेतवे ॥ एवमुक्तस्तु मात्रा स विजयोविशतोब्रवीत् ॥ ८ ॥ हिरण्याक्षो मातरं प्राह जालं हित्वा विष्णोर्भजनेऽलं कुरुष्व ॥ मयि स्नेहं पुत्रहेतोर्विरूढं सुखदुःखे चेह लोके परत्र ॥ ९ ॥ यावत्स्नेहं मयि मातः करोषि तावत्क्लेशं शाश्वतं यास्यसि त्वम् ॥ मातश्च ते मयि पुत्रत्व बुद्धिस्त्वय्यप्येषा मातृबुद्धिर्ममापि ॥ १० ॥ ताते पूज्ये पितृबुद्धिर्ममास्ति तस्मिंस्तु ते भर्तृबुद्धिर्हि मिथ्या ॥ निर्माति यस्माद्धरिरेव सर्वं सम्यक् पाता नियतोऽसौ मुरारिः ॥ ११ ॥ अतो हि माता हरिरेव सर्वदा त्वन्यासां वै मातृता चोपचारात् ॥ निर्मातृत्वं यदि मुख्यं त्वयि स्याद्द्रोणादीनां जननी का वदस्व ॥ १२ ॥ मातृत्वं वै यदि मुख्यं त्वयि स्याद्धात्रादीनां जननी का वदस्व ॥ यतः सदा याति जगत्ततो हरिः सदा पिता विष्णुरजः पुराणः ॥ ॥ १३ ॥ सदा पिता मुख्यपिता यदि स्याद्गर्भस्थबाले पालकः को वदस्व ॥ मातापित्रोः पालकत्वं यदि स्यात्कूर्मादीनां पालकौ कौ वदस्व ॥ १४ ॥ मातापित्रोः पालकत्वं यदि स्यात्कृपादीनां रक्षकौ कौ वदस्व ॥ पुन्नामकान्नारकादेह भजांतस्मात्त्रातापुत्रविष्णुः पुराणः ॥ १५ ॥ न तारकोहं नरकाच्च सुभ्रूर्न वै भर्ता नापि पित्रादयश्च ॥ न वै माता नानुजादिश्च सर्वः सर्वत्राता विष्णुरतो न चान्यः ॥ १६ ॥ मायां मदीयां ज्ञान शस्त्रेण च्छित्वा भक्त्या हरेः स्मरणं त्वं कुरुष्व ॥ यद्भक्तिपूर्वं स्मरणं नाम विष्णोस्तत्सर्वथा पापहरं च मातः ॥ १७ ॥ यो वा भक्त्या स्मरणं नाम

विष्णोः करोत्यसौ पापहरो भविष्यति ॥ अयं देहो दुर्लभः कर्मभूमौ तत्रापि मध्ये भजनं विष्णुमूर्तेः ॥ १८ ॥ आयुर्गतं व्यर्थमेव त्वदीयं शीघ्रं भजेः श्रीनिवासस्य पादम् ॥ उपदिश्यैवं मातरं पुत्रवर्यो दैत्यावेशात्सोभवद्वै तपस्वी ॥ १९ ॥ चतुर्मुखं प्रीणयित्वैव भक्त्या ह्यवध्यत्वं प्राप तस्मान्महात्मा ॥ ततो भूमिं करवद्वेष्टयित्वा निन्ये तदा दैत्यवर्यो महात्मा ॥ २० ॥ श्रीमुष्टदेशे प्रादुरासीद्धरिस्तु वाराहविष्णुस्त्वजनः पुराणः ॥ भित्त्वा चाब्धिं विविशे तं महात्मा रसातले संस्थितं भूतलं च ॥ २१ ॥ स्वदंष्ट्राग्रे स्थापयित्वाऽऽजगाम तदागमादागतो दैत्यवर्यः ॥ तं कर्णमूले ताडयित्वा जघान प्रसादयामास च पूर्ववद्ध्रुवम् ॥ २२ ॥ सुदिग्गजान्स्थापयित्वा च विष्णुः श्रीमुष्टे वै संस्थितः श्रीवराहः ॥ तदा हरिश्चिंतयामास विष्णुभेक्त्या मदीयं मानुषं देहमद्य ॥ २३ ॥ आराधयिष्यंति च मां क्व एते तेषां दयां कुत्र वाहं करिष्ये ॥ एवं हरिश्चिंतयित्वा सुकन्ये वैकुंठलोकादचलं शेषसंज्ञम् ॥ वींद्रस्कंधे स्थापयित्वा स्वयं च समागतोभूद्भूतलं भूतलेशः ॥ २४ ॥ सुवर्णमुखरीतीरमारभ्य गरुडध्वजः ॥ श्रीकृष्णवेणीपर्यंतं स्थापयामास तं गिरिम् ॥ २५ ॥ गिरेः पुच्छे तु श्रीशैलं मध्यमेऽहोबलं स्मृतम् ॥ मुखं च श्रीनिवासस्य क्षेत्रं च समुदाहृतम् ॥ २६ ॥ अल्पेन तपसाभीष्टं सिध्यत्यस्मिन्नहोबले ॥ गंगादिसर्वतीर्थानि पुण्यानि ह्यत्र संति वै ॥ २७ ॥ य एनं सेवते नित्यं श्रद्धाभक्तिसमन्वितः ॥ ज्ञानार्थी ज्ञानमाप्नोति द्रव्यार्थी द्रव्यमाप्नुयात्॥२८॥पुत्रार्थी पुत्रमाप्नोति नृपो राज्यं च विंदति ॥ यंयं कामयते मर्त्यस्तंतमाप्नोति सर्वथा॥२९॥चिंतितं साध्यते यस्मात्तस्माच्चिंतामणिं विदुः ॥ पुष्करिण्याश्च बाहुल्याद्गिरावस्मिन्सरःसु च ॥ पुष्कराद्रिरिति प्राहुरेवं तत्त्वार्थवेदिनः ॥३०॥ शातकुंभस्वरूपत्वात्कनकाद्रिं च तं विदुः ॥वैकुंठादागतेनैव वैकुंठाद्रिरिति स्मृतः॥३१॥अमृतैश्वर्यसंयुक्तो व्यंकटाद्रिरिति स्मृतः॥व्यंकटेशस्य शैलस्य माहात्म्यं यावदस्ति हि॥३२॥तावद्वक्तुं समग्रेण न समर्थश्चतुर्मुखः॥व्यंकटाद्रौ परां भक्तिं ये कुर्वंति दिनेदिने ॥ पंगर्जंघाल एव स्यादचक्षुः पद्मलोचनः ॥३३॥ मूको वाग्मी भवेदेव बधिरः श्रावको भवेत् ॥ वंध्या स्याद्बहुपुत्रा च निर्धनः सधनो भवेत् ॥ ३४ ॥ एतत्सर्वं गिरौ भक्तिमात्रेणैव भवेद्ध्रुवम् ॥ तत्त्वतो व्यंकटाद्रेस्तु स्वरूपं वेत्ति को भुवि ॥ ३५ ॥ यस्मादस्य गिरेः पुण्यं माहात्म्यं वेत्ति यः पुमान् ॥ मायावी परमानन्दं त्यक्त्वा वैकुंठमुत्तमम् ॥ स्वामिपुष्करिणीतीरे रमया सह मोदते ॥ ३६ ॥ कल्याणाद्भुतगात्राय कामितार्थप्रदायिने ॥ श्रीमद्व्यंकटनाथाय श्रीनिवासाय ते नमः ॥ ३७ ॥ श्रीस्वामिपुष्करिण्याश्च माहात्म्यं शृणु कन्यके ॥ स्वामिपुष्करिणीमध्ये श्रीनिवासोस्ति सर्वदा ॥३८ ॥ स्नानं कुर्वंति ये तत्र तेषां मुक्तिः करे स्थिता॥ तिस्रः कोट्योर्धकोटिश्च तीर्थानि भुवनत्रये ॥ तानि सर्वाणि तत्रैव संति तीर्थे हरेः सदा ॥ ३९ ॥ तत्तीर्थं श्रीनिवासाख्यं सर्वदेवनमस्कृतम् ॥ तदेत श्रीनिवासस्य मंदिरं परिकीर्त्ति

तम् ॥ ४० ॥ तद्दर्शनादेव कन्ये यांति पापानि भस्मसात ॥ एकैकस्नानमात्रेण सत्संगो भवति ध्रुवम् ॥ ४१ ॥ सत्संगाज्ज्ञानमासाद्य ज्ञानान्मोक्षं च विंदति ॥ अधिकारिणां भवेदेवं विपरीतमयोगिनाम् ॥ ४२ ॥ तीर्थानां स्नानमात्रेण मोक्षं यांतीति ये विदुः ॥ ते सर्वे असुरा ज्ञेयास्ते यांति ह्यधमां गतिम् ॥ ४३ ॥ श्रीनिवासस्य तीर्थेस्मिन्वायुकोणे च कन्यके ॥ आस्ते वायुः सदा विष्णोः पूजां कर्तुमनुत्तमाम् ॥ ४४ ॥ वायुतीर्थं च तत्प्रोक्तं हस्तद्वादशकांतरम् ॥ हस्तषङ्कप्रमाणं च पश्चिमे समुदाहृतम् ॥ उत्तरे हस्तषट्कं तु वायुतीर्थमुदाहृतम् ॥ ४५ ॥ ये वैष्णवा वैष्णवदासवर्याः स्नानं कुर्युस्तत्र पूर्वं सुकन्ये ॥ मध्वांतस्थाः श्रीनिवासस्तु नित्यमत्र स्नानात्प्रीयतां मे दयालुः ॥ ४६ ॥ ये मध्वतीर्थे स्नातुमिच्छंति देवि रुद्रादयो वायुभक्ता महांतः ॥ सदा स्नानं तत्र कुर्वंति देवि प्रातःकाले चोदयात्पूर्वमेव ॥ ४७ ॥ ये वायुतीर्थे विसृजंति देहजं मलं मूत्रं वमनं श्लेष्मकं च ॥ येऽपानशुद्धिं लिंगशुद्धिं च कन्ये कुर्वंति ते ह्यसुरा राक्षसाश्च॥ ४८॥शृण्वंति ये भागवतं पुराणं किं वर्णये तस्य पुण्यं तु देवि ॥ ये कृष्णमन्त्रं तु जपंति देवि ह्यष्टाक्षरं मंत्रवरं सुगोप्यम् ॥ ४९ ॥ तेषां हरिः प्रीयते केशवोलं मध्वांतस्थो नात्र विचार्यमस्ति ॥ एवं दानं तत्र कुर्वंति ये वै द्विजाग्र्याणां वैष्णवानां विदां च ॥ ५० ॥ तेषां पुण्यं नैव जानंति देवा जानात्येवं श्रीनिवासो हरिस्तु ॥ शालग्रामं वायुतीर्थे ददंते तेषां पुण्यं वेत्ति स व्यंकटेशः ॥ ५१ ॥ सुदुर्लभो वायुतीर्थेऽभिषेको निष्कामबुद्ध्या वैष्णवानां च देवि ॥ तत्रापि तीर्थे लभ्यते भाग्ययोगाद्भागवतस्य श्रवणं विष्णुदासैः ॥५२॥ तथैव तीर्थे दुर्लभं तत्र देवि शालग्रामस्य द्विजवर्ये च दानम् ॥ जंबूफलाकारसुनीलवर्णं मुखद्वयं चक्रचतुष्टयान्वितम् ॥ ५३ ॥ सुकेसरैः संयुतं स्वर्णचिह्नध्वजांकुशैर्वज्रचिह्नैर्यवैश्च ॥ जानार्दनीं मूर्तिमाहुर्महांतो दानं तस्या दुर्लभं तत्र तीर्थे ॥ ५४ ॥ अत्युत्तमं मूर्तिदानं तु भद्रे सुदुर्लभं परमं नात्र लोभः ॥ सुदुर्लभं बहुदोग्ध्र्याश्च गृष्टेर्दानं तथा वस्त्ररत्नादिकानाम् ॥ ५५ ॥ अत्युत्तमं द्रव्यदानं च देवि स्वापेक्षितं दानमाहुर्महांतः ॥ स्वस्यानपेक्षं फलदानं च वस्त्रदानं तस्य व्यर्थमाहुर्महांतः ॥ ५६ ॥ अत्युत्तमं गृष्टिदानं च पुण्यं नैवाप्यते दुग्धदोहाश्च गावः ॥ अत्युत्तमे वस्त्रदाने सुबुद्धिः सुदुर्घटा परमा वै जनानाम् ॥ ५७ ॥ अत्युत्तमं भागवतस्य पुस्तकं सुदुर्घटं वायुतीर्थे च कन्ये ॥ अत्युत्तमं द्रव्यदानं च देवि सुदुर्घटं वायुतीर्थे नृणां हि ॥ सुदुर्लभो वैष्णवैस्तत्त्वविद्भिर्हरेर्विचारो वायुतीर्थे च कन्ये ॥ ५८ ॥ श्रीनिवासस्य तीर्थस्य उत्तरस्यां दिशि स्थितम् ॥ चंद्रतीर्थमिति प्रोक्तं तत्रास्ते चंद्रमाः सदा ॥ ५९ ॥ श्रीनिवासस्य पूजां च तत्र स्थित्वा करोत्ययम् ॥ तत्र स्नानं प्रकुर्वन्ति पुण्यदेशे च कन्यके ॥ ६० ॥ गुरुतल्पादिपापेभ्यो मुच्यंते नात्र संशयः ॥ तत्र स्नात्वा पूर्वभागे शालग्रामं ददाति यः ॥ ६१ ॥ ज्ञानद्वारा मोक्षमेति नात्र कार्या विचा

रणा ॥ दधिवामनमूर्तेश्च दानं तत्र सुदुर्लभम् ॥ ६२ ॥ बदरीफलमात्रं तु वर्तुलं नीलवर्णकम् ॥ प्रसन्नवदनं सूक्ष्मं सुस्निग्धं कन्यके शुभे ॥ ६३ ॥ चक्रद्वयसमायुक्तं गोपुरैः पंचभिर्युतम् ॥ चापबाणसमायुक्तमनतं कुंडलाकृतिम् ॥ ६४ ॥ वनमालासुखयुतं मूर्ध्नसाहस्रसंयुतम् ॥ रौप्यबिंदुसमायुक्तं सव्ये भद्रार्धमात्रकम् ॥ ६५ ॥ चंद्रेण सहितं देवि दधिवामनमुच्यते ॥ एतादृशं कलौ नृणां दुर्लभं बहुभाग्यदम् ॥ लक्ष्मीनारायणसमां तां मूर्तिं विद्धि भामिनि ॥ ६६ ॥ सुदुर्लभं तस्य मूर्तेश्च दानं तच्चंद्रतीर्थे श्रवणं दुर्घटं च ॥ सम्यक् स्वरूपं दधिवामनस्य सुदुर्घटं श्रवणं वैष्णवाच्च ॥ ६७ ॥ तत्र स्नात्वा वामनस्य स्वरूपश्रवणाद्विदुर्दानफलं समं च ॥ दशहस्तप्रमाणं तु चंद्रतीर्थमुदाहृतम् ॥ ६८ ॥ मध्याह्ने दुर्लभं स्नानं नृणां तत्र सुमंगले ॥ तत्र स्थित्वा धन्यनरः सदा भजति वै हरिम् ॥ ६९ ॥ वराहमूर्तिदानं तु शालग्रामस्य दुर्लभम् ॥ जंबूफलप्रमाणं तु एतद्वै कुक्कुटांडवत् ॥७०॥ वदनं वलयाकारं प्रमाणं चणकादिवत् ॥ देवस्य वामभागे च मध्यदेशं विहाय च ॥ ७१ ॥ चक्रद्वयसमायुक्तंमूर्धदेशे च भामिनि ॥ सुवर्णबिंदुना युक्तं भूवराहाख्यमुच्यते ॥ ७२ ॥ पूजां कृत्वा भूवराहस्य मर्तेर्दानं दत्त्वा श्रवणं चापि कृत्वा ॥ तत्र स्थितं भूवराहं च दृष्ट्वा स वै नरः कृतकृत्यो हि लोके ॥७३॥ तत्र स्नात्वा भूवराहस्य मर्त्तेः शृणोति यो लक्षणं सम्यगेव ॥ स तेन पुण्यं समुपैति देवि स मुक्तिभाङ् नात्र विचार्यमस्ति ॥ ७४ ॥ ईशानकोणे श्रीनिवासस्य देवि रौद्रं तीर्थं परमं पावनं च ॥ तत्र स्थित्वा रुद्रदेवो महात्मा पूजां करोति श्रीनिवासस्य नित्यम् ॥७५॥ हस्ताष्टकं तत्प्रमाणं वदंति तत्र स्नानं वैष्णवैः कार्यमेव ॥ तत्र स्नात्वा प्रयतो वै मुरारेः कथां दिव्यां शृणुयादादरेण ॥ स्नानं पानं तत्र दानं च कुर्याल्लक्ष्मीनृसिंहप्रीतये देवि नित्यम् ॥ ७६ ॥ बदरीफलमात्रं च वर्तुलं बिंदुसंयुतम् ॥ ७७ ॥ देवस्य वामभागे तु चक्रद्वयसमन्वितम् ॥ सुवर्णरेखासंयुक्तं किंचिद्रक्तसमन्वितम् ॥७८॥ वैश्यवर्णं सवदनं पद्मरेखादिचिह्नितम् ॥ लक्ष्मीनृसिंहं तं विद्धि भुक्तिमुक्तिप्रदायकम् ॥ ७९ ॥ एतादृशं गंडिकायाः शिलाया मूर्तेर्दानं दुर्घटं विद्धि वींद्र ॥ तत्र स्नात्वा श्रीनृसिंहस्वरूपं लक्ष्मीपतेः शृणुयाद्भक्तियुक्तः ॥८०॥ मूर्तेर्दानात्फलमाप्नोति देवि सत्यंसत्यं नात्र विचार्यमस्ति ॥ ८१ ॥ ईशानशक्रयोर्मध्ये ब्रह्मतीर्थमुदाहृतम् ॥ दुर्लभं मानुषाणां तु स्नानं सर्वार्थसाधकम् ॥ ८२ ॥ शालग्रामस्य दानं तु दुर्लभं तत्र वै नृणाम् ॥ लक्ष्मीनारायणस्यैव मूर्तेर्दानं सुदुर्लभम् ॥ ८३ ॥ स्थलमौदुंबरसमं तत्प्रमाणमुदाहृतम् ॥ छत्राकारं वर्तुलं च प्रसन्नवदनं शुभम् ॥ ८४ ॥ चणकप्रदेशमात्रं च वदनं समुदाहृतम् ॥ सव्ये दक्षिणपार्श्वे च समयोः पुष्कलान्वितम् ॥ ८५ ॥ गोयूथवत्सवर्णं च चतुश्चक्रसमन्वितम् ॥ गोखुरैश्च समायुक्तं सुवर्णकिणसंयुतम् ॥ ८६ ॥ वनमालाभिसंयुक्तं वज्रपुंखैश्च संयुतम् ॥ एतादृशीं हरेर्मूर्तिं लक्ष्मीनारायणं

विदुः ॥८७॥ कलौ नृणां तस्य लाभो दुर्लभः संस्मृतो भुवि ॥ दानं च सुतरां देवि दुर्लभं किं वदामि ते ॥ ८८ ॥ ब्रह्मतीर्थे च संस्नाय श्रोतव्या वै हरेः कथा ॥ गंडिकायाः शिलायाश्च लक्ष्मीनारायणस्य तु॥८९॥लक्षणं यो विजानाति तदा तत्सदृशं फलम्॥प्राप्नोत्येव न संदेहो नात्र कार्या विचारणा ॥९०॥ श्रीनिवासस्य तीर्थस्य पूर्वे स्यादिंद्रतीर्थकम्॥श्रीनिवासस्य पूजां तु कर्तुमास्ते शचीपतिः ॥९१॥ शालग्रामशिलादानं कर्तव्यं श्रोत्रियाय वै॥शालग्रामशिलादानं हत्याकोटिविनाशनम् ॥९२॥ तस्मिंस्तीर्थे तु यो देवि सीतारामशिलाभिधाम् ॥ ददाति भूतले भद्रे भूपतेः सदृशो भवेत् ॥९३॥ सीतारामशिला देवि द्विविधा संप्रकीर्तिता॥पंचचक्रयुता काचित्षट्चक्रेण च संयुता॥९४॥तत्रापि षट्चक्रयुता ह्युत्तमा संप्रकीर्तिता॥ पंचचक्रयुतायाश्च फलं द्विगुणमीरितम् ॥ ९५॥ कुक्कुटांडप्रमाणं च सुसिग्धं नीलवर्णकम् ॥ वदनत्रयसंयुक्तं सट्चक्रैः केसरैर्युतम् ॥९६॥ स्वर्णरेखासमायुक्तं ध्वजवज्रांकुशैर्युतम् ॥ एतादृशं तु वै भद्रे सीतारामाभिधं स्मृतम्॥९७॥वंदनेवंदने देवि सीतारामस्य कोशकम्॥दुर्लभं तु कलौ नृणां स्वसाम्राज्यप्रदं शुभम् ॥९८॥ इंद्रतीर्थे महादेवि सीतारामाभिधाशिला ॥ या तद्दानं दुर्लभं तन्नाल्पस्य तपसः फलम् ॥९९॥दानस्य शक्त्यभावे तु श्रोतव्यं लक्षणं हरेः॥शालग्रामशिलादानाद्यत्फलं तत्फलं लभेत् ॥१००॥ आग्नेयकोणे श्रीनिवासस्य देवि तीर्थं त्वास्ते वह्निसंज्ञं सुशस्तम्॥स वह्निदेवः श्रीनिवासस्य पूजां कर्तुं ह्यास्ते सर्वदा तीर्थमध्ये ॥ १ ॥ यो वा तीर्थे वह्निसंज्ञे च देवि भक्त्या स्नानं कुरुतेऽजं स्मरन्हि ॥ ज्ञानद्वारा मोक्षमाप्नोति देवि तत्र स्नानं दुर्लभं वै नृणां च ॥ २ ॥ ज्ञात्वा स्नानं दुष्करं तीर्थराजे भक्तिस्तस्मिन्दुर्लभा चैव देवि ॥ शालग्रामे तच्छिलायाश्च दानं सुदुर्लभं वासुदेवाभिधायाः ॥ ३ ॥ ह्रस्वं तथा वर्तुलं नीलवर्णं सूक्ष्मं मुखं मुखचक्रं सुशुद्धम् ॥ सुवेणुयुक्तं वासुदेवाभिधेयं दानं कलौ दुर्लभं तस्य भद्रे ॥ ४ ॥ दाने तस्याः शक्त्यभावे च देवि स्नात्वा तीर्थे वासुदेवाभिधस्य ॥ सम्यक् श्राव्यं लक्षणं वै शिलायास्तयोस्तुल्यं फलमाहुर्महांतः ॥ ५ ॥ दक्षिणे श्रीनिवासस्य यमतीर्थं च संस्मृतम् ॥ तत्रास्ते यमराजस्तु पूजां कर्तुं हरेः सदा ॥ ६ ॥ तत्र स्नानं च दानं चाप्यक्षयं परमं स्मृतम् ॥ शालग्रामशिलादानं कार्यं तत्र महामुने ॥ ७॥ पट्टाभिरामसंज्ञायाः शिलाया दानमिष्यते ॥ तच्चूतफलवत्स्थूलं वदनत्रयसंयुतम् ॥ ८ ॥ शिरश्चक्रेण रहितं सप्तचक्रैः समन्वितम् ॥ नीलवर्णं स्वर्णरेखं गोखुराद्यैः समन्वितम् ॥ ९ ॥ पट्टवर्धनरामं तु दुर्लभं बहुभाग्यदम् ॥ पट्टवर्धनरामं तु यो ददाति च तत्र वै ॥ पट्टाभिषिक्तो भवति नात्र कार्या विचारणा ॥११०॥ श्रीनिवासस्य नैर्ऋत्ये नैर्ऋतं तीर्थमुत्तमम् ॥ आस्ते हि निर्ऋतिस्तत्र पूजां कर्तुं च सर्वदा॥११॥ तत्र स्नानं प्रकर्तव्यं पुनर्जन्म न विद्यते ॥ शालग्रामशिलायाश्च पुरुषोत्तमसंज्ञिकाम् ॥ १२ ॥ मूर्तिं ददाति यो मर्त्यः स याति परमां गतिम् ॥

औदुंबरफलाकारं प्रसन्नवदनं शुभम् ॥११३॥ चक्रद्वयसमायुक्तं शिरश्चक्रसमन्वितम् ॥ सुवर्णबिंदुसंयुक्तं वज्रांकुशसमान्वितम् ॥ ११४ ॥ तन्मूर्तिदानं दुर्लभं तत्र देवः प्रीणाति यस्माच्छ्रीनिवासो महात्मा ॥ यदा दानं दुर्घटं स्याच्च देवि तदा श्रोतव्यं लक्षणं तस्य मूर्तेः ॥ ११५ ॥ पाशिनैर्ऋतयोर्मध्ये शेषतीर्थं परं स्मृतम् ॥ तत्र स्नात्वा शेषमूर्तिं प्रददाति द्विजातये ॥ ११६ ॥ स याति परमं लोकं पुनरावृत्तिवर्जितम् ॥ औदुंबरफलाकारं कुंडलाकृतिमेव च ॥ ११७ ॥ शेषवद्वदनं तस्य तस्मिंश्चक्रद्वयं स्मृतम् ॥ फलं तमेकचक्रेण संयुतं वलिमकान्वितम् ॥ ११८ ॥ किंचिद्व्रणसमायुक्तं शेषमूर्तिमतिस्फुटम् ॥ सुप्ता प्रबुद्धा द्विविधा शेषमूर्तिरुदाहृता ॥ ११९ ॥ फणोन्नता प्रबुद्धा स्यात्सप्तलक्षफणान्विता ॥ तत्रापि दुर्लभा सुप्ता महाभाग्यकरी स्मृता॥१२०॥इह लोके परत्रापि मोक्षदा नात्र संशयः ॥ नवचक्रादुपक्रम्य विंशत्यंतं च यत्र सः ॥१२१॥ अनंत इति विज्ञेयो ह्यनंतफलदायकः ॥ विश्वंभरः स विज्ञेयो विंशत्यूर्ध्वं वरानने ॥१२२॥ तत्रापि केसरैश्चक्रैर्लक्षणैश्च समन्वितम् ॥ कलौ तु दुर्लभं नणां तद्दानं चातिदुर्लभम् ॥ १२३ ॥ स्नानं कृत्वा शेषतीर्थे विशुद्धेनैव चेतसा ॥ एतेषां लक्षणं श्रुत्वा प्रयाति परमां गतिम् ॥ १२४ ॥ ततः परं महाभागे वारुणं तीर्थमुत्तमम् ॥ तत्रास्ते वरुणो देवः पूजां कर्तुं हरेः सदा॥१२५॥तत्र स्नानं प्रकर्तव्यं दातव्यं दानमुत्तमम् ॥ शिशुमारं च मत्स्यं च त्रिविक्रममथापि वा॥दातव्यं भूतिकामेन तीर्थेस्मिन्वरवर्णिनि॥१२६॥जंबूफलसमाकारा पुच्छे सूक्ष्मा सबिंदुका ॥ चक्रत्रया च वदने पुच्छोपरि सचक्रका ॥ १२७ ॥ श्रीवत्सबिंदुमालाढ्या मत्स्यमूर्तिरुदाहृता॥पुच्छादधश्चक्रयुतं शिशुमारमुदाहृतम् ॥१२८॥ वक्रचक्रयुतश्वेतस्यात्त्रिविक्रम उदाहृतः॥एतेषां लक्षणं श्रुत्वा वारुणे तीर्थ उत्तमे॥ ॥१२९॥एतद्दानफलं प्राप्य मोदते विष्णुमंदिरे ॥ पूर्वोक्ता मूर्तयो यस्मिन् गृहे तिष्ठंति भामिनि॥भागीरथी तीर्थवरा संनिधत्ते न संशयः॥१३०॥स्वामिपुष्करिणीस्नानं दुर्घटं तु कलौ नृणाम्॥तत्र स्थितानां तीर्थानां स्नानं चाप्यतिदुर्घटम्॥१३१॥शालग्रामशिलादानं दुर्घटं च तथा स्मृतम्॥स्वामिपुष्करिणीतीरे कन्यादानं सुदुर्घटम्॥१३२॥दुर्घटं कपिलादानं भक्ष्यदानं सुदुर्घटम्॥स्वामिपुष्करिणीतीर्थे तीर्थेष्वन्येषु भामिनि॥१३३॥स्नानं कुरु यथान्यायं शय्यादानं तथा कुरु॥जैगीषव्येन मुनिना त्वेवमुक्ता च कन्यका ॥१३४॥स्वामिपुष्करिणीस्नानं सा चकार धृतव्रता॥तीर्थेष्वेतेषु सुस्नाता दानं चक्रे सुभामिनी॥१३५॥उवास तत्र सा दवी त्रिःसप्तकदिनानि च ॥ स्वामिपुष्करणीतीरमहिमानं शृणोति यः ॥ स याति परमां भक्तिं श्रीनिवासे जगन्मये ॥ १३६ ॥ इति श्रीगारुडे महापुराणे उत्तरखंडे तृतीयांशे ब्रह्मकाण्डे व्यंकटगिरिमाहात्म्ये स्वामिपुष्करिण्यादितीर्थतत्रत्यदेवतदीयशालग्रामलक्षणतद्दानादिवर्णनं नाम षड्विंशोध्यायः॥२६॥श्रीकृष्ण उवाच॥सा गता स्नातुकामाथ नंदां पापनिवारिणीम्॥पप्रच्छ तं गुरुं विप्रं विनयावनता सुधीः॥१॥

किन्नामेयं नदी विप्र किं कार्यं चात्र मे वद ॥ जैगीषव्यस्त्वेवमुक्तो वाक्यमेतदुवाच ह ॥ २ ॥ जैगीषव्य उवाच ॥ शृणु भद्रे प्रवक्ष्यामि माहात्म्यं पापनाशनम् ॥ इयं नदी महाभागे सदा पापविनाशिनी ॥ ३ ॥ ब्रह्महत्यादिपापौघो यत्र स्नानेन नश्यति ॥ प्रत्यक्षं दृश्यते ह्यत्र स्नानं कर्तुं समुद्यतैः ॥ ४ ॥ जलं चाशुभ्ररूपेण पापैश्च परिदृश्यते ॥ यावच्छुभ्रोदकं देवि तावत्सनानं च कारयेत् ॥ ५ ॥ यावच्छुभ्रोदकं नैव तावत्पापं न नश्यति ॥ शुद्धोदके समायाते पापं नष्टमिति ध्रुवम् ॥ ६ ॥ कलावित्थं विशालाक्षि महिमा दृश्यते भुवि ॥ अत्र स्नानं प्रकर्तव्यं दातव्यं दानमुत्तमम् ॥ ततश्च ज्ञानमासाद्य विविष्णुलोकं स गच्छति ॥ ७ ॥ गुरुस्त्रीगमनाच्चंद्र अहल्यायां गतो हरिः ॥ सुरापानाच्च शुक्रस्तु सुवर्णहरणाद्बलिः ॥ ८ ॥ ब्रह्महत्यायाश्च रुद्रो नागो दत्तापहारकः ॥ सूतस्य हननाद्रामो निर्मुक्तो ह्यत्र भामिनि ॥ ९ ॥ नानेन सदृशं तीर्थं न भूतं न भविष्यति ॥ स्नानं कुरु महाभागे तेन सिद्धिं ह्यवाप्स्यसि ॥ १० ॥ जैगीषव्येण मुनिना पित्रा सह च कन्यका ॥ स्नानं चकार विधिवदुदतिष्ठच्च भामिनि ॥ ११ ॥ यावच्च पौरुषं सूक्तं तावत्कालं हि तिष्ठति[1] ॥ पश्चाज्जप्त्वा महामंत्रं वेंकटराभिधं परम् ॥ १२ ॥ द्विजातीन्प्रीणयित्वा सा वस्त्रद्रव्यादिभूषणैः ॥ तस्माच्च प्रययौ देवी कमारीतीर्थमुत्तमम् ॥ १३ ॥ कुमारीमहिमानं च श्रुत्वा स्नानं चकार सा ॥ पुनरावृत्य सा देवी ह्यंतरा विरजानदीम् ॥ १४ ॥ दृष्ट्वा पप्रच्छ सा देवी जैगीषव्यं गुरुं प्रभुम् ॥ किं संज्ञिकेयं विप्रेंद्र किं कार्यं ह्यत्र मे वद ॥ १५ ॥ जैगीषव्यः पृष्ट एवमुवाच करुणानिधिः ॥ इयं भागीरथी कन्ये आयाति ह्यंतरेण तु॥१६॥अतः सा प्रोच्यते ह्यन्तर्गंगेति परमार्षिभिः॥ कन्ये त्वस्यास्तु सलिलं श्रीनिनिवासप्रियं सदा ॥ १७ ॥ अत्र स्नानं यः करोति स याति परमां गतिम् ॥ स्नानं चकार सा कन्या जले परमपावने ॥ १८ ॥ दानादिकं तथा ज्ञात्वा जजाप परमं मनुम् ॥ श्रीनिवाससमीपं तु पुनरागत्य भामिनी ॥ १९ ॥ अंगप्रदक्षिणं चक्रे भक्त्या वेंकटनायकम् ॥ ब्राह्मणादीन्प्रीणयित्वा वस्त्रगंधादिभूषणैः ॥२०॥ पुनः परदिने प्रातः स्वामिपुष्करिणीजले ॥ स्नानं कृत्वा महाभागा ययौ तुंबुरुसंज्ञिकाम् ॥२१॥ पप्रच्छ तं गुरुं देवी नाथ किन्नामिका त्वयम् ॥ जैगीषव्य उवाच ॥ इयं तुंबरुकाभिज्ञा नारी वै वरवर्णिनी ॥ २२ ॥ पुरा तुंबुरुणा साकं नारदस्तपसि स्थितः ॥ अत्र प्रादुरभूद्विष्णुर्नारदस्य हिताय च ॥ २३ ॥ स्नानं यः कुरुते ह्यत्र स याति परमां गतिम् ॥ अत्र स्नानं मनुष्याणां सर्वेषां दुर्लभं कलौ ॥ २४ ॥ अत्र स्नानं मनुष्याणां नाल्पस्य तपसः फलम् ॥ तत्र स्नात्वा च पीत्वा च दत्त्वा दानान्यनेकशः ॥ २५ ॥ पुनरागत्य सा देवी श्रीनिवासं

[1] अतिष्ठदित्यर्थः ।

ननाम ह ॥ तस्मिन्दिने ब्राह्मणांश्च तर्पयामास भामिनी ॥ २६ ॥ स्वामिपुष्करिणीं प्राप्य दीपान्प्राज्वालयत्सती ॥ सोपानेषु महाभागा दीपावलिभि रंजसा ॥ प्रीणयामास देवेशं श्रीनिवासं जगद्गुरुम् ॥२७॥ पुनः परदिने प्राते शक्रतीर्थमनुत्तमम् ॥ कपिलाख्योर्ध्वदेशे तु तत्तीर्थं पावनं स्मृतम् ॥२८॥ तत्र स्नात्वा महाभागा तदूर्ध्वं स्नापयेत्स्वयम् ॥ विष्वसेनसरस्तत्र सर्वपापविनाशनम् ॥ २९ ॥ तत ऊर्ध्वं महाभागा ययौ तत्र ददर्श सा ॥ पंचायुधानां तीर्थानि तेषु स्नानं चकार सा ॥ ३० ॥ तदूर्ध्वं चाग्निकुंडं स्यादुरारोहं ततोग्रतः ॥ तस्योपरि ब्रह्मतीर्थं ब्रह्महत्याविमोचनम् ॥ ३१ ॥ सप्तर्षीणां तदूर्ध्वं तु पुण्यतीर्थं च सत्फलम् ॥ दशाधिकफलं तेषां तीर्थानामुत्तरोत्तरम् ॥ ३२ ॥ एतेषां चैव माहात्म्यं को वा वक्तुमिहार्हति ॥ ऋषितीर्थेषु सा कन्या चचार तप उत्तमम् ॥ ३३ ॥ ममावतारपर्यंतं चरित्वा तप उत्तमम् ॥ योगधारणया देहं त्यक्त्वा जांबवतो गृहे ॥ ३४ ॥ जाता जांबवती नाम ववृधे तस्य वेश्मनि ॥ तस्याःपिता जांबवान्स समादात्कन्यकां तदा ॥ रुक्म्या अनंतरा सैषा मम भार्या खगेश्वर ॥ ३५ ॥ इदं हि परमाख्यानं वेंकटाद्रेर्महागिरेः ॥ को वा वर्णयितुं शक्तो मदन्यः पुरुषो भुवि ॥ ३६ ॥ वेंकटेशस्य नैवेद्यं सदा लक्ष्मीः करोति वै ॥ ब्रह्मा पूजयते नित्यमेवं शास्त्रस्य निर्णयः ॥ ३७ ॥ नैवेद्यभक्षिणां पुंसामुपहासं न कारयेत् ॥ स्वस्य प्राशस्त्यभावे तु नैवेद्यादि गुडादिकम् ॥ग्राह्यमेव न संदेहो अन्यथा नारकी भवेत् ॥३८॥ श्रीनिवासात्परो देवो न भूतो न भविष्यति ॥स्वयं च पाचयित्वा त्वं घृतपक्वादिकं तथा ॥ श्रीनिवासस्य नैवेद्यं दत्त्वा भोजनमाचरेत् ॥३९॥ इदं तु परमं गोप्यं तवोक्तं च खगेश्वर ॥न कस्यापि च वक्तव्यं गोप्यत्वात्त्वगसत्तम ॥इतः परं प्रवक्ष्यामि तारतम्यं शृणु प्रभो ॥४०॥ इति श्रीगारुडे महापुराणे उत्त० तृ० ब्रह्म० कन्याकृतनानातीर्थयात्रादिनिरूपणं नाम सप्तविंशोऽध्यायः ॥२७॥ या पूर्वसर्गे दक्षपुत्री सती तु रुद्रस्य पत्नी दक्षयज्ञे स्वदेहम् ॥ विसृज्य सा मेनकायां च जज्ञे धराधराद्धैमवतो वै सकाशात् ॥ १ ॥ सा पार्वती रुद्रपत्नी खगेंद्र या शेषपत्नी वारुणी नाम पूर्वा ॥ सैवागता बलभद्रेण रंतुं द्विरूपमास्थाय महापतिव्रता ॥ २ ॥ श्रीरित्याख्या इंदिरावेशयुक्ता तस्या द्वितीया प्रतिमा मेघरूपा ॥ शेषेण रूपेण यदा हि वींद्र तपश्चचार विष्णुना सार्धमेव ॥ ३ ॥ तदैव देवी वारुणी शेषपत्नी तपश्चक्रे इंदिराप्रीतये च ॥ तदा प्रीता इंदिरा सुप्रसन्ना उवाच तां वारुणीं शेषपत्नीम् ॥४॥यदा रामो वैष्णवांशेन युक्तः संपत्स्यते भूतले रौहिणेयः ॥मध्यावेशात्संयुता त्वं तु भद्रे श्रीरित्याख्या बलभद्रस्य रंतुम् ॥ ५ ॥ संपत्स्यसे नात्र विचार्यमस्तीत्युक्त्वा सा वै प्रययौ विष्णुलोके ॥ श्रीलक्ष्म्यंशाच्छ्रीरितीड्यां समाख्यां लब्ध्वा लोके शेषपत्नी बभूव ॥६॥ यदाहीशो विपुलामुद्धरेच्च तदा रामः श्रीभिदासंगमे च ॥करोति तोषात्सर्वदा वै रमायास्तस्याप्यावे

श्रो व्यंस्रितमोनसंनमम् ॥७॥ या रेवती रैवतस्यैव पुत्री सा वारुणी बलभद्रस्य पत्नी ॥ सौपर्णनाम्नी बलपत्नी खगेंद्र यास्तास्तिस्रः षड्विष्णोश्च स्त्रीभ्यः ॥ द्विगुणाधमा रुद्रशेषादिकेभ्यो दशाधमा त्वं विजानीहि पौत्र ॥ ८ ॥ ॥ गरुड उवाच ॥ रामेण रंतुं सर्वदा वारुणी तु पुत्रीत्वमापे रैवतस्यैव सुभ्रूः ॥ एवं त्रिरूपा वारुणी शेषपत्नी द्विरूपभूता पार्वती रुद्रपत्नी ॥ ९ ॥ नीचाया जांबवत्याश्च शेषसाम्यं च कुत्रचित् ॥ श्रूयते च मया कृष्ण निमित्तं ब्रूहि मे प्रभो ॥ १० ॥ उमायाश्च तथा रुद्रः सदा बहुगुणाधिकः ॥ एवं त्वयोक्तं भगवन्निश्चयार्थं मम प्रभो ॥ ११ ॥ रेवती श्रीयुता श्रीश्च शेषरूपा च वारुणी ॥ सौपर्णी पार्वती चैव तिस्रः शेषाशतो वराः ॥ १२ ॥ इत्यपि श्रूयते कृष्ण कुत्रचिन्मधुसूदन ॥ निमित्तं ब्रूहि मे कृष्ण तव शिष्याय सुव्रत ॥१३॥ श्रीकृष्ण उवाच ॥ विज्ञाय जांबवत्याश्च तदन्येषां खगाधिप ॥ उत्तमानां च साम्यं तु उत्तमावेशतो भवेत् ॥१४॥ अवराणां गुणस्यापि ह्युत्तमानामधीनता ॥ अस्तीति द्योतनायैव शतांशाधिकमुच्यते ॥ १५ ॥ यथा मयोच्यते वींद्र तथा जानीहि नान्यथा ॥ तदनंतरजान्वक्ष्ये शृणु काश्यपजोत्तम ॥ १६ ॥ चतुर्दशसु चेंद्रेषु सप्तमो यः पुरंदरः ॥ वृत्रादीनां शरीरं तु पुरमित्युच्यते बुधैः ॥ १७ ॥ तं दारयति वज्रेण यस्मात्तस्मात्पुरंदरः ॥ चतुर्दशसु चेन्द्रेषु मन्त्रद्युम्नस्तु षष्ठकः ॥ १८ ॥ मंत्रानष्ट महावींद्र देवो द्योतयते यतः ॥ मंत्रद्युम्नस्ततो लोके उभावप्येक एव तु ॥ १९ ॥ मंत्रद्युम्नावतारोऽभूत्कुंतीपुत्रोऽर्जुनो भुवि ॥ विष्णोर्वायोरनंतस्य चेंद्रस्य खगसत्तम ॥ २० ॥ पार्थश्चतुर्भिः संयुक्त इंद्र एव प्रकीर्तितः ॥ चतुर्थेऽपि च वायोश्च विशेषोऽस्ति सदार्जुन ॥ २१ ॥ वालिर्नामा वानरस्तु पुरंदर इति स्मृतः ॥ चंद्रवंशे समुत्पन्नो गाधिराजो विचक्षणः ॥ २२ ॥ मन्त्रद्युम्नावतारः स विश्वामित्रपिता स्मृतः ॥ वेदोक्तमंत्रा गाः प्रोक्ता धिया संधारयेद्यतः ॥ २३ ॥ अतो गाधिरिति प्रोक्तस्तदर्थं भूतले ह्यभूत् ॥ इक्ष्वाकुपुत्रो यो वींद्र विकुक्षिरिति विश्रुतः ॥ २४ ॥ स एवेंद्रावतारोऽभूद्धरिसेवार्थमेव च ॥ विशेषेण हरिं कुक्षौ विज्ञानाच्च हरिः सदा ॥ २५ ॥ अतो विकुक्षिनामासौ भूलोके विश्रुतः सदा ॥ रामपुत्रः कुशः प्रोक्त इंद्र एव प्रकीर्तितः ॥ २६ ॥ वाल्मीकिऋषिणा यस्मात्कुशेनैव विनिर्मितः ॥ अतः कुश इति प्रोक्तो जानकीनंदनः प्रभुः ॥ २७ ॥ इंद्रद्युम्नः पुरंद्रस्तु गाधी वाली तथार्जुनः ॥ विकुक्षिः कुश एवैते सप्त चेंद्राः प्रकीर्तिताः ॥ २८ ॥ यः कृष्णपुत्रः प्रद्युम्नः काम एव प्रकीर्तितः ॥ प्रकृष्टप्रकाशरूपत्वात्प्रद्युम्न इति नामवान् ॥ २९ ॥ यो रामभ्राता भरतः काम एवाभवद्भुवि ॥ रामाज्ञां भरते यस्मात्तस्माद्भरतनामकः ॥ ३० ॥ चक्राभिमानी कामस्तु सुदर्शन इति स्मृतः ॥ त्रत्रैव कृष्णपुत्रस्तु सांबो जाम्बवतीसुतः ॥ ३१ ॥ कामावतारो विज्ञेयः संदेहो नात्र विद्यते ॥ यो रुद्रपुत्रः स्कंदस्तु काम एव प्रकीर्तितः ॥३२॥ रिपूनास्कंदते नित्यमतः स्कंद इति स्मृतः ॥ यो वा सनत्कु

मारस्तु ब्रह्मपुत्रः खगाधिप ॥ कामावतारो विज्ञेयो नात्र कार्या विचारणा ॥ ३३ ॥ सुदर्शनश्च परमः प्रद्युम्नः सांब एव च ॥ सनत्कुमारः सांबश्च षडेते कामरूपकाः ॥ ३४ ॥ ततश्च इंद्रकामावप्युमादिभ्यो दशावरौ ॥ तयोर्मध्ये तु गरुड काम इंद्राधमः स्मृतः ॥ ३५ ॥ प्राणस्त्वहंकार एव अहंकारकसंज्ञकः ॥ गरुत्मदंशो विज्ञेयः कामेंद्राभ्यां दशाधमः ॥ ३६ ॥ तदनंतरजान्वक्ष्ये शृणु वींद्र समाहितः ॥ श्रवणान्मोक्षमाप्नोति महापापाद्विमुच्यते ॥ ३७ ॥ कामपुत्रोनिरुद्धोऽपि हरेरन्यः प्रकीर्तितः ॥ स एवाभूद्धरेः सेवां कर्तुं रामानुजो भुवि ॥ ३८ ॥ शत्रुघ्न इति विख्यातः शत्रून्सूदयते यतः ॥ अनिरुद्धः कृष्णपुत्रो प्रद्युम्नाद्योऽजनिष्ट ह ॥ ३९ ॥ संकर्षणादिरूपैस्तु त्रिभिराविष्ट एव सः ॥ एवं द्विरूपो विज्ञेयो ह्यनिरुद्धो महामतिः ॥ ४० ॥ कामभार्या रतिर्या तु द्विरूपा संप्रकीर्तिता ॥ रुग्मपुत्री रुग्मवती कामभार्या प्रकीर्तिता ॥ ४१ ॥ अतिप्रकाशयुक्तत्वात्तस्माद्रुग्मवती स्मृता ॥ दुर्योधनस्य या पुत्री लक्ष्मणा सा रतिः स्मृता ॥ ४२ ॥ काष्ठा सांबस्य भार्या सा लक्षणं संयुनक्त्यतः ॥ लक्ष्मणाभिधयाभूत्सौ दुष्टवीर्योद्भवा ह्यपि ॥ ४३ ॥ एवं द्विरूपा विज्ञेया कामभार्या रतिः स्मृता ॥ स्वायंभुवो ब्रह्मपुत्रो मनुस्त्वाद्यो गुरौ समः ॥ राजधर्मेण विष्णोश्च जातः प्रीणयितुं हरेः ॥४४॥ बृहस्पतिर्देवगुरुर्महात्मा तस्यावताराास्त्रय आसन् खगेंद्र ॥ रामावतारे भरताख्यो बभूव ह्यंभोजजावेशयुतो बृहस्पतिः ॥ ४५ ॥ देवावतारान्वानरांस्तारयित्वा श्रीरामक्रियाऽऽचरितान्यवादीत् ॥ अतो ह्यसौ नारनामा बभूव ह्यंगत्वमाप्तुं रामदेवस्य भूम्याम् ॥ ४६ ॥ कृष्णावतारे द्रोणनामा बभूव अंभोजजावेशयुतो बृहस्पतिः ॥ यस्माद्द्रोणात्संबभूव गुरुश्च तस्मादसौ द्रोणसंज्ञो बभूव ॥ ४७ ॥ भूभारभूताद्युद्धतौ ह्यंगभूतो विष्णोः सेवां कर्तुमेवास भूमौ ॥ बृहस्पतिः पवनावेशयुक्तः स उद्धवश्चेत्यभिधानमाप ॥ ४८ ॥ यस्मादुत्कृष्टो हरिरत्र सम्यगतो ह्यसौ बुधवन्नाम चाप ॥ सखा ह्यभूत्कृष्णदेवस्य नित्यं महामतिः सर्वलोकेषु पूज्यः ॥ ४९ ॥ दक्षिणांगुष्ठजो दक्षो ब्रह्मपुत्रो महामतिः ॥ कन्यां सृष्ट्वा हरेः प्रीणनाय भूमा प्रजापतिः ॥ पुत्रानुदपादयद्दक्षस्त्वतो दक्ष इति स्मृतः ॥ ५० ॥ शचीं भार्यां देवराजस्य विद्धि तस्या ह्यवतारं शृणु सम्यक् खगेन्द्र ॥ रामावतारे नाम तारा बभूव सा वालिपत्नी शचीसंज्ञका च ॥ ५१ ॥ रामान्मृते वालिसंज्ञे पतौ हि सुग्रीवसंगं सा चकाराथ तारा ॥ अतो नागात्स्वर्गलोकं च तारा क्व वा यायादंतरिक्षं च पापा ॥ ५२ ॥ कृष्णावतारे सैव तारा च वींद्र बभूव भूमौ विजयस्य पत्नी ॥ पिशंगदेति ह्यभिधा स्याच्च तस्याः सामीप्यमस्यास्त्वर्जुनेनैव चासीत् ॥ ५३ ॥ उत्पादयित्वा बभ्रुवाहं च पुत्रं तस्यां त्यक्त्वा ह्यर्जुनो वै महात्मा ॥ अतश्चोभे वाराचित्रांगदे च शचीरूपे नात्र विचार्यमस्ति ॥ ५४ ॥ पुलोमजा मंत्रद्युम्नस्य भार्या या काशिका गाधिराजस्य भार्या ॥

विकुक्षिभार्या सुमतिश्चेति संज्ञा कुशस्य पत्नी कांतिमतीति संज्ञा ॥ ५५ ॥ एता हि सत्र प्रवराश्च शच्या जानीहि वै नास्ति विचारणात्र ॥
शची रतिश्चानिरुद्धो मनुर्दक्षो बृहस्पतिः ॥ षडन्योन्यसमाः प्रोक्ता अहंकाराद्दशावमाः ॥ ५६ ॥ अथ यः प्रवहो वायुर्मुख्यवायोः सुतो
बली ॥ स वायुषु महानद्य स वै कोणाधिपस्तथा ॥ ५७ ॥ नासिकासु स एवोक्तो भौतिकस्तुल्य एव च ॥ अतिवाहः स एवोक्तः
यतो गम्यो मुमुक्षुभिः ॥ ५८ ॥ दक्षादिभ्यः पंचगुणादधमः संप्रकीर्तितः ॥ गरुड उवाच ॥ ॥ प्रवहश्चेति संज्ञां स किमर्थं प्राप तद्वद ॥ ५९ ॥
अर्थः कश्चास्ति तन्नाम्नः प्रतीतस्तं वदस्व मे ॥ गरुडेनैवमुक्तस्तु भगवान्देवकीसुतः ॥ उवाच परमप्रीतः संस्तूय गरुडं हरिः ॥ ६० ॥ कृष्ण
उवाच ॥ प्रहर्षेण हरेस्तुल्यान्सर्वदा वहते यतः ॥ अतः प्रवहनामासौ कीर्तितः पक्षिसत्तम ॥६१॥ सर्वोत्तमो विष्णुरेवास्ति नाम्ना ब्रह्मादयस्तदधीनाः
सदापि ॥ मयोक्तमेतत्तु सत्यं न मिथ्या गृह्णामि हस्तेनोरगं कोपयुक्तम् ॥ ६२ ॥ सर्वं नु सत्यं यदि मिथ्या भवेत्तु तदा त्वसौ मां दशतु
ह्यहीन्द्रः ॥ एवं ब्रुवन्नुरगं कोपयुक्तं समग्रहीन्नादशत्सोप्युरंगः ॥ ६३ ॥ एतस्य संधारणादेव वींद्र स वायुपुत्रः प्रवहेत्याप संज्ञाम् ॥ यो वा
लोके विष्णुमूर्तिं विहाय दैत्यस्वरूपा रेणुकाद्याः कुदेवाः ॥ ६४ ॥ तेषां तथा मतिपतॄणां च पूजा व्यर्था सत्यं सत्यमेतद्ब्रवीमि ॥ एतत्सर्वं यदि
मिथ्या भवेत्तु तदा त्वसौ मां दशतु ह्यहींद्रः ॥ ६५ ॥ पित्र्यं नयामि प्रविहायैव ये तु पितृुद्देशात्केवलं यः करोति ॥ स पापात्मा नरकान्वै
प्रयातीत्येतद्वाक्यं सत्यमेतद्ब्रवीमि ॥ ६६ ॥ न श्रीः स्वतंत्रा नापि विधिः स्वतंत्रो न वायुदेवो नापि शिवः स्वतंत्रः ॥ तदन्ये नो गौरिपुलोम
जाद्याः किं वक्तव्यं नात्र लोके स्वतंत्रः ॥ ६७ ॥ ब्रवीमि सत्यं पुरुषो विष्णुरेव सत्यं सत्य भुजमुद्धृत्य सत्यम् ॥ एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्व
सौ मां दशतु ह्यहींद्रः ॥ ६८ ॥ जीवश्च सत्यः परमात्मा च सत्यस्तयोर्भेदः सत्ये ए तत्सदापि ॥ जडश्च सत्यो जीवजडयोश्च भेदो भेदः सत्यः
किं च जडेशयोर्भिदा ॥ ६९ ॥ भेदः सत्यः सर्वजीवेषु नित्यं सत्या जडानां च भेदा सदापि ॥ एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ
दशतु मां ह्यहींद्रः ॥ ७० ॥ एवं ब्रुवन्नुरगं कोपयुक्तं समग्रहीन्नादशत्सोप्युरंगः ॥ एतस्य संधारणादेववींद्र स वायुपुत्रः प्रवहेत्याप संज्ञाम् ॥ ७१ ॥
द्वयं स्वरूपं प्रविदित्वैव पूर्वं त्वं स्वीकुरुष्व द्वयमेव नित्यम् ॥ स्नानादिकं च प्रकरोति नित्यं पापी स आत्मा नैव मोक्षं प्रयाति ॥ ७२ ॥ तस्मा
द्वयं प्रविचार्यैव नित्यं सुखी भवेन्नात्र विचार्यमस्ति ॥ एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ मां दशतु ह्यहींद्रः ॥७३॥ गरुड उवाच ॥ किं तद्वयं
देवदेवेश किं वा तत्कारणं कीदृशं मे वदस्व ॥ द्वयोस्त्यागं कीदृशं मे वदस्व त्यागात्सुखं कीदृशं मे वदस्व ॥ ७४ ॥ श्रीकृष्ण उवाच ॥ द्वयं चाहु

स्त्विन्द्रिये द्वे बलिष्ठे देहे ह्यस्मिन् श्रोत्रनेत्रे सुसृष्टे ॥ अवांतरे श्रोत्रनेत्रे खगेंद्र द्वयं चाहुस्तत्स्वरूपं च वक्ष्ये ॥ ७५ ॥ श्रोत्रस्वभावो लोक वार्ताश्रुतौ च ह्यतीव मोदस्त्वादरास्वादनेन ॥ हरेर्वार्ताश्रवणे दुःखजालं श्रोत्रस्वभावो जडता दमश्च ॥ ७६ ॥ नेत्रस्वभावो दर्शने स्त्रीनराणां ह्यत्यादरान्नास्ति निद्रादिकं च ॥ हरेर्भक्तानां दर्शने दुःखरूपो विष्णोः पूजादर्शने दुःखजालम् ॥ ७७ ॥ तयोः स्वरूपं प्रविदित्वैव पूर्वं पुनः पुनः स्वीकरोत्येव मूढः ॥ शिश्नं मौर्ख्याच्चैव कुत्रापि योनौ प्रवेशयेत्सर्वदा ह्यादरेण ॥ ७८ ॥ भयं च लज्जा नैव चास्ते वधूनां तथा नृणां वानितानां यती नाम् ॥ स्वसारं ते ह्यविदित्वा दिनेपि सुवाम यज्ञेन स्वभावश्च वींद्र ॥ ७९ ॥ रसास्वभावो भक्षणे सर्वदापि ह्यनर्पितस्यान्नभक्ष्यस्य विष्णोः ॥ तथो पहारस्य च तत्स्वभावः अभक्ष्याणां भक्षणे तत्स्वभावः ॥ ८० ॥ अलेह्यलेहस्य च तत्स्वभावः पातुं त्वपेयस्य च तत्स्वभावः ॥ द्वयोः स्वरूपं च विहाय मूढः पुनः पुनः स्वीकरोत्येव नित्यम् ॥ ८१ ॥ तस्य स्नानं व्यर्थमाहुश्च यस्मात्तस्मात्त्याज्यं न द्वयोः कार्यमेव ॥ अभिप्रायं ह्येतमेवं खगेंद्र जानीहि त्वं प्रहस्यैव नित्यम् ॥ ८२ ॥ भार्याद्वयं ह्यविदित्वा स्वरूपं स्वीकृत्य चैकां प्रविहायैव चैकाम् ॥ स्नानादिकं कुरुते मूढबुद्धिः व्यर्थं चाहुर्मोक्षभोगौ च नैव ॥ एतत्सर्वं यदि मिथ्या भवेत्तु तदा त्वसौ मां दशतु ह्यहींद्रः ॥ ८३ ॥ गरुड उवाच ॥ भार्याद्वयं किं वद त्वं ममापि तयोः स्वरूपं किं वद त्वं मुरारे ॥ तयोर्मध्ये ग्राह्यभार्यां वद त्वमग्राह्यभार्यां चापि सम्यग्वद त्वम् ॥ ८४ ॥ श्रीकृ ष्ण उवाच ॥ बुद्धिः पत्नी सा द्विरूपा खगेंद्र दुष्टा चैका त्वपरा सुष्टुरूपा ॥ तयोर्मध्ये दुष्टरूपा कनिष्ठा ज्येष्ठा तु या सुष्टुबुद्धिस्वरूपा ॥ ८५ ॥ कनिष्ठया नष्टतां याति जीवः सुतिष्ठन्त्या याति योग्यां प्रतिष्ठाम् ॥ कनिष्ठायाः शृणु वक्ष्ये स्वरूपं श्रुत्वा तस्यास्त्यागबुद्धिं कुरुष्व ॥ ८६ ॥ जीवं यं वै प्रेरयंती कनिष्ठा काम्यं धर्मं कुरुते सर्वदापि ॥ क्व ब्राह्मणाः क्व च विष्णुर्महात्मा क्व वै कथा क्व च यज्ञाः क्व गावः ॥ ८७ ॥ क्व चाश्वत्थः क्व च स्नानं क्व शौचमेतत्सर्वं नाम नाशं करोति ॥ मूढं पतिं रेणुकां पूजयस्व मायादेव्या दीपदानं कुरुष्व ॥ ८८ ॥ सुभैरवादीन् भज मूढ त्वमंध हारिद्रचूर्णधारयेः सर्वदापि ॥ ज्येष्ठाष्टम्यां ज्येष्ठदेवीं[1] भजस्व भक्त्या सूत्रं गलबंधं कुरुष्व ॥ ८९ ॥ मरिगंधाष्टम्यां मरिगंधं भजस्व तथा सूत्रं स्वगले धारयस्व ॥ दीपस्तंभं सुदिने पूजयस्व तत्सूत्रमेव स्वगले धारयस्व॥९०॥महालक्ष्मीं चाद्यलक्ष्मीं च सम्यक् पूजां कुरु त्वं हि भक्त्याथ जीव ॥ लक्ष्मीसूत्रं स्वगले धारयस्व महालक्ष्मीवान् भवसीत्युत्तरत्र ॥९१ ॥ विहाय मौञ्जीदिवसे भाग्यकामः सुगुग्गुलान्धारय

१ ज्येष्ठादेवीमित्यर्थः ।

स्वातिभक्त्या॥सुवासिनीः पूजयस्वाशु भक्त्या गन्धैः पुष्पैर्धूपदीपैः प्रतोष्य॥९२॥वरार्तिक्यं कांस्यपात्रे निधाय कुर्वार्तिक्यं देवतादेवतानाम् ॥ पिचु
मंदपत्राणि वितत्य भूमौ नमस्व त्वं क्षम्यतां चेति चोक्त्वा ॥ ९३ ॥ महादेवीं पूजयस्वाद्य भक्त्या सद्वैष्णवानां मा ददस्वाप्यथान्नम् ॥ सद्वैष्णवानां
यदि वान्नं ददासि भाग्यं च ते पश्यतो नाशमेति ॥ ९४ ॥ स्ववामहस्ते वेणुपात्रे निधाय दीपं धृत्वा सव्यहस्ते पते त्वम् ॥ उत्तिष्ठ भोः पंचगृहेषु
भिक्षां कुरुष्व सम्यक् प्रविहायैव लज्जाम् ॥ ९५ ॥ आदौ गृहे षड्रसान्नं च कृत्वा जगद्गोप्यं भोजनं त्वं कुरुष्व ॥ तच्छेषान्नं भोजयित्वा पते त्वं
तासां च रे शरणं त्वं कुरुष्व ॥ ९६ ॥ तासां हस्तं पुस्तके स्थापयित्वा त्राहीत्येवं तन्मुखैर्वाचयस्व ॥ त्वं खड्गदेवं पूजयस्वाद्यभर्तस्तत्सेवकान्पूजय
स्वाद्य सम्यक् ॥ ९७ ॥ तैः सार्धं त्वं श्वानशब्दं कुरुष्व हरिद्राचूर्णसर्वदा त्वं दधस्व ॥ कुरुष्व त्वं भीमसेनस्य पूजां पंचामृतैः षोडशभिश्चोपचारैः
॥ ९८ ॥ तत्कौपीनं रौप्यजं कारयित्वा समर्पयित्वा दीपमालां कुरुष्व ॥ तद्दासवर्यान् भोजयस्वाद्य भक्त्या गर्जस्व त्वं भीमभीमेति सुष्ठु ॥ ९९ ॥
तद्दासवर्यान्मोदयस्व स्ववस्त्रैर्मद्यैर्मांसद्रव्यजालेन नित्यम् ॥ महादेवं पूजयस्वाद्य सम्यग् महारुद्रैरतिरुद्रैश्च सम्यक्॥१००॥ हरेत्युक्त्वा जंगमान्पूजयस्व
शैवागमे निपुणाञ्छूद्रजातान् ॥ शाकंभरीं विवशः सर्वशाकान्सुपाचयित्वा च गृहे गृहे च ॥ १ ॥ ददस्व भक्त्या परमादरेण स्वलंकृत्य प्रास्तुवं
स्तद्गुणांश्च ॥ कुलालदेवं पूजयस्वाद्य भक्त्या त्वं दृग्भ्यां वै तद्दिने शंभुबुद्ध्या ॥ २॥ तद्भक्तवर्यान्पूजयस्वाद्य सम्यक् तत्पादमूले वंदनं त्वं कुरुष्व ॥
सुपंचम्यां मृन्मयीं शेषमूर्त्तिं पूजां कुरुष्व क्षीरलाजादिकैश्च ॥ ३ ॥ सुनागपाशं हि गले च बद्ध्वा तच्छेषान्नं भोजयेर्भोः पुनस्त्वम् ॥ दिने चतुर्थे भोज
यस्वाद्य भक्त्या नैवेद्यान्नं भोजयस्वाद्य सुष्ठु ॥ ४ ॥ इत्यादिकं प्रेरयित्वा पतिं सा जीवेन नष्टं प्रकरोत्येव नित्यम् ॥ तस्याः संगाज्जीवरूपः पतिस्त्वां
सम्यग्दृष्टामिहलोके परत्र ॥ ५॥ तस्याः संगं सुविदूरं विसृज्यचेष्टा समग्रं कुरु सर्वदा त्वम् ॥ सुबुद्धिरूपा त्वीरयंती जगाद भजस्व विष्णुं परमादरेण
॥ ६ ॥ हरिं विनान्यं न भजस्व नित्यं सा रेणुका त्वां तु न पालयिष्यति ॥ अदृष्टनामा हरिरेवं हि नित्यं फलप्रदो यदि न स्यात्खगेंद्र ॥ ७ ॥ जुगु
प्सितां श्रुत्यनुक्तां च देवीं पतिद्रुहां सर्वदा सेवयित्वा ॥ तस्याः प्रसादात्कुष्ठभगंदराद्यैर्मुक्त्वा दुःखं संयमिनीं प्रयाहि ॥ ८॥ तदा कुदेवी कुत्र गता वदस्व
मे ह्यतः पते त्वं न भजस्व देवीम् ॥ पते भज त्वं ब्राह्मणान्वैष्णवांश्च संसारदुःखात्तारकान्सुष्ठुरूपान्॥९॥ सेवादिकं प्रविहायैव स्वच्छं मायादेव्या भज
नात्किं वदस्व ॥ ज्येष्ठाष्टम्यां ज्येष्ठदेवीं ह्यलक्ष्मीं लक्ष्मीति बुद्ध्या पूजयित्वा च सम्यक् ॥ १० ॥ तस्याः सूत्रं गलबद्धं च कृत्वा नानादुःखं ह्यनु
भूयाः पते त्वम् ॥ यदा पते यमदूतैश्च पाशैर्बद्ध्वा च सम्यक् ताड्यमानैः कशाभिः ॥ ११ ॥ तदा ह्यलक्ष्मीः कुत्र पलायतेऽसावतो मूलं विष्णुपादं

भजस्व॥पते भज त्वं सर्वदा वायुतत्त्वं न चाश्रयेस्त्वं सूक्ष्मस्कंदं च मूढ ॥१२॥ तद्दत्तं त्वं नवनीतं च भक्त्या तदुच्छिष्टं भक्षयित्वा पते हि॥तस्याश्च सूत्रं
गलबद्धं च कृत्वा इहैव दुःखान्यनुभूयाः पते त्वम् ॥१३॥ यदा पते यमदूतैश्च पाशैर्बद्धा च सम्यक् ताड्यमानः कशाभिः ॥ तदा स्कंदः कुत्र पलायतेऽ
सावतो मूलं विष्णुपादं भजस्व ॥ १४ ॥ दीपस्तंभं दापयित्वा पते त्वं सूत्रं च बद्धा स्वगले च भक्त्या ॥ तदा बद्धा यमदूतैश्च पाशैर्दीप
स्तंभैस्ताडयमानस्तु सम्यक् ॥ १५ ॥ दीपस्तंभः कुत्र पलायितोभूदतो मूलं विष्णुपादं भजस्व ॥ लक्ष्मीदिने पूजयित्वा च लक्ष्मीं सूत्रं तस्याः
स्वगले धारय त्वम् ॥ १६ ॥ यदा पते यमदूतैश्च पाशैर्बध्वा सम्यक् ताडयमानः कशाभिः ॥ तदा लक्ष्मीः कुत्र पलायतेऽसावतो मूलं
विष्णुपादं भजस्व ॥ १७ ॥ विवाहमौंजीदिवसे मूढबुद्धे जुगुप्सितान्धारयित्वा सुभक्त्या ॥ वरारार्तिकं कांस्यपात्रे निधाय कृत्वार्तिक्यं उदउदेति
शब्दम् ॥ १८ ॥ तथैव दृष्ट्वा पिचुमंदस्य पत्रं सुनर्तयित्वा परमादरेण ॥ यदा तदा यमदूतैश्च पाशैर्बद्धाबद्धा ताडयमानश्च सम्यक् ॥ १९ ॥
तव स्वामिन्कुलदेवो महात्मन्पलायितः कुत्र मे तद्वदस्व ॥ स्वदेहानां पूजयित्वा च सम्यक्कण्ठाभरणैर्विधुराणां च केशैः ॥ २० ॥ संतिष्ठमाने यम
दूता बलिष्ठा संताडयमाने मुसलैर्भिंदिपालैः ॥ यदा तदा कुत्र पलायिता सा केशैर्विहीना लंबकर्णी च कृत्वा ॥ २१ ॥ स्ववामहस्ते वेणुपात्रं निधाय
दीपं धृत्वा सव्यहस्ते च मूढः ॥ गृहेगृहे भैक्षचर्यां च कृत्वा संतिष्ठमाने स्वगृहं चैव देवी ॥ २२ ॥ यदा तदा यमदूतैश्च मूढ दीपैः सहस्रैर्दह्यमानश्च
सम्यक् ॥ निर्नासिका रेणुका मूढबुद्धे पलायिता कुत्र सा मे वदस्व ॥ २३ ॥ सदा मूढं खड्गदेवं च भक्त्या तं भक्तवत्पूजयित्वा च सम्यक् ॥ तैः
सार्धं त्वं श्वानवद्गर्जयित्वा संतिष्ठमाने स्वगृहे चैव नित्यम् ॥ २४ ॥ यदा तदा यमदूतैश्च सम्यक् संताडयमानस्तत्र शब्दं प्रकुर्वन् ॥ संतिष्ठमाने भक्त
वर्यं विहाय तदा देवः कुत्र पलायितोभूत् ॥ २५॥ स पार्थक्याद्भीमसेनप्रतीकं पंचामृतैः पूजयित्वा च सम्यक् ॥ सुव्यंजने चान्नकौपीनमेव दत्त्वा मूढ
स्तिष्ठमाने स्वगेहे ॥ २६ ॥ यदा तदा यमदूतैश्च सम्यक् संताडयमाने यममार्गे च मूढः ॥ भीमः स वै कुत्र पलायितोभूदतो मूलं विष्णुपादं भजस्व
॥ २७ ॥ महादेवं पूजयित्वा च सम्यक् हरेत्युक्त्वा स्वगृहे विद्यमाने ॥ यदा गृहं दह्यते वह्निना तु तदा हरः कुत्र पलायितोभूत् ॥ २८ ॥ शाकं
भरीदिवसे सर्वमेव शाकंभरी सा च देवी महात्मन् ॥ पलायिता कुत्र मे त्वं वदस्व कुलालदेवं पूजयित्वा च भक्त्या ॥ २९ ॥ कार्पासं वै तेन दत्तं
गृहीत्वा संतिष्ठमाने यमदूतैश्च सम्यक् ॥ संहन्यमानस्तीक्ष्णधारैः कुठारैः कुलालदेवं च सुदंष्ट्रनेत्रम् ॥ विहाय वै कुत्र पलायितोभून्न ज्ञायतेऽन्वेष
णाद्यापि केन ॥ १३० ॥ यदा पंचम्यां मृन्मयीं शेषमूर्तिं संपूज्य भक्त्या विद्यमाने स्वगेहे ॥ तदा बद्धा यमदूताश्च सम्यक् संनह्यमाने नागपाशैश्च

बद्धा ॥ ३१ ॥ स्वभक्तवर्यं प्रविहाय नागः पलायितः कुत्र वै संवद त्वम् ॥ दूर्वांकुरैर्मोदकैः पूजयित्वा विनायकं पंचखाद्यैस्तथैव ॥ ३२ ॥ संति
ष्ठमाने यमदूतैश्च सम्यक् संताडचमाने तप्तदंडैश्च मूढ ॥ दंतं विहायैव च विघ्नराजः पलायितः कुत्र मे तं वदत्वम् ॥ ३३ ॥ विवाहकाले पिष्टदेवीं
सुभक्त्या संपूजयित्वा विद्यमानो गृहे स्वे ॥ यदा तदा यमदूतैश्च बद्धा संपीडचमानो यममार्गे स मूढः ॥ ३४ ॥ विष्टादेवी पीडचमानं च भक्तं
विहाय सा कुत्र पलायिताभूत् ॥ विवाहकाले रजकस्य गेहं गत्वा सम्यक् प्रार्थयित्वा च मूढः ॥ ३५ ॥ यस्तंभसूत्रं कलशे परीत्य पूजां कृत्वा
विद्यमानो गृहे स्वे ॥ यदा तदा यमदूतश्च सम्यक् तं स्तंभसूत्रं तस्य मुखे निधाय ॥ ३६ ॥ संताडचमाने स्तंभसूत्रस्थदेवी पलायिता कुत्र मे संवद
स्व ॥ विवाहकाले पूजयित्वा च सम्यक् चंडालदेवीं भक्तवश्यां च तस्याः ॥ ३७ ॥ तद्भक्तवर्यैः शूर्पमध्ये च तीरे संसेवयित्वा विद्यमानो गृहे
स्वे ॥ यदा तदा यमदूतैश्च बद्धा संताडचमानो यममार्गे महद्भिः ॥ ३८ ॥ चऊलदेवी क्व पलायिताभूत्सुमूढबुद्धे विष्णुपादं भजस्व ॥ ज्वरादिभिः
पीडचमाने स्वपुत्रे गृहे स्थितं ब्रह्मदेवं च सम्यक् ॥ ३९ ॥ धूपैर्दीपैर्भक्ष्यभोज्यैश्च पुष्पैः पूजां कृत्वा विद्यमानश्च गेहे ॥ यदा तदा यमदूतैश्च
बद्धा संताडचमाने वेणुपाशादिभिश्च ॥ ४० ॥ स ब्रह्मदेवः क्व पलायितोभूत्सुमूढबुद्धे विष्णुपादं भजस्व ॥ सन्तानार्थं बृहतीं पूजयित्वा गलेन
बद्धा बृहतीं वै फलं च ॥ ४१ ॥ संतिष्ठमाने यमदूतैश्च बद्धा संताडचमाने बृहतीकंटकैश्च ॥ तदा देवी बृहती मूढबुद्धे पलायिता कुत्र मे तद्वद त्वम्
॥ ४२ ॥ भजस्व मूढ परदैवतं च नारायणं तारकं सर्वदुःखात् ॥ सुक्षुद्रदेवेषु मतिं च मा कुरु न च शृणु त्वं फल्गुवाक्यं तथैव ॥ ४३ ॥
सुक्षुद्रदेवान् भिंदिपाले निधाय विसर्जयित्वा दूरदेशे महात्मन् ॥ संधार्य त्वं स्वकुलाचारधर्मं संपातने नरकं हेतुभूतम् ॥ ४४ ॥ पुनीहि
गात्रं सर्वदा मूढबुद्धे मंत्राष्टकैर्जन्मतीर्थे पवित्रे ॥ हृदि स्थितांमौर्ख्यमुद्रां विहाय कृत्वाभूषां विष्णुमुद्राभिरग्र्याम् ॥ ४५ ॥ सदा मूढो हरि
वार्तां भजस्व ह्यायुर्गतं व्यर्थमेवं कुबुद्ध्या ॥ सद्वैष्णवानां संगमो दुर्लभश्च क्षुब्धं ज्ञानं तारतम्यस्वरूपम् ॥ ४६ ॥ हरिं गुरुं ह्यनुसृत्यैव
सत्यं गतिं स्वकीयां तेन जानीहि मूढ ॥ दग्ध्वा दुष्टां बुद्धिमेवं च मूढ सुबुद्धिरूपं मा भजस्वैव नित्यम् ॥ ४७ ॥ मया सार्धं सद्गुरुं
प्राप्य सम्यग्वैराग्यपूर्वं तत्त्वमात्रं विदित्वा ॥ तेनैव मोक्षं प्राप्नुमो नार्जवैर्यत्तार्या विष्णोः संप्रसादाच्च लक्ष्म्याः ॥४८॥ इत्याशयं मनसा सन्निधाय तथा
चोक्तं भक्तवर्यो मदीयः ॥ अतो भक्तः प्रवहेत्येव संज्ञामवाप वींद्र प्रकृतं तं शृणु त्वम् ॥ ४९ ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे
ब्रह्मकांडे तारतम्यनिरूपणद्वारा विष्णोरेवोपास्यत्वमित्यर्थनिरूपणं नामाऽष्टाविंशतमोध्यायः ॥ २८ ॥ प्रवहानंतरान्वक्ष्ये शृणु पक्षींद्रसत्तम ॥

यो धर्मो ब्रह्मणः पुत्रो ह्यादिसृष्टौ त्वगुद्भवः ॥ १ ॥ सज्जनान्सौम्यरूपेण धारणाद्धर्मनामकः ॥ स एव सूर्यपुत्रोभूद्यमसंज्ञामवाप सः ॥ पापि
नां शिक्षकत्त्वात्स यम इत्युच्यते बुधैः ॥ २ ॥ श्रीकृष्ण उवाच ॥ प्रह्लादानंतरं गंगा भार्या वै वरुणस्य च ॥ प्रह्लादादधमा ज्ञेया महिम्ना वरुणा
धिका ॥ ३ ॥ स्वरूपादधमा ज्ञेया नात्र कार्या विचारणा ॥ ज्ञानस्वरूपदं विष्णुं यमो जानाति सर्वदा ॥ ४ ॥ अतो गंगेति सा ज्ञेया सर्वदा
लोकपावनी ॥ भक्त्या विष्णुपदीत्येव कीर्तिता नात्र संशयः ॥ ५ ॥ या पूर्वकाले यज्ञलिंगस्य विष्णोः साक्षाद्धरेर्विक्रमतः खगेंद्र ॥ वामस्य
पादस्य नखाग्रतश्च निर्भिद्य चोर्ध्वांडकटाहखण्डम् ॥ ६ ॥ तदुदरमतिवेगात्सम्प्रविश्यावहंतीं जगदघतातिहंतुः पादकिंजल्कशुद्धाम् ॥ निखि
लमलनिहंत्रीं दर्शनात्स्पर्शनाच्च सकृदवगहनाद्वा भक्तिदां विष्णुपादे ॥ शशिकरवरगौरां मीननेत्रां सुपूज्यां स्मरति हरिपदोत्थां मोक्षमेति क्रमेण ॥
॥ ७ ॥ इंद्रोपि वायुकरमर्दितवायुकूटबिंदुं च प्राश्य शिरसि ह्यसहिष्णुमानः ॥ भागीरथी हरिपदांकमिति स्म नित्यं जानन्महापरमभागवतप्र
धानः ॥ भक्त्या च खिन्नहृदयः परमादरेण धृत्वा स्वमूर्ध्नि परमो ह्यशिवः शिवोऽभूत् ॥ ८ ॥ भागीरथ्याश्च चत्वारि रूपाण्यासन्खगेश्वर ॥
महाभिषग्जनेंद्रस्य भार्या तु ह्यभिषेचनी ॥ ९ ॥ द्वितीयेनैव रूपेण गंगा भार्या च शंतनोः ॥ सुषेणा वै सुषेणस्य भार्या सा वानरी स्मृता ॥१०॥
मंडूकभार्या गंगा तु सैव मंडूकिनी स्मृता ॥ एवं चत्वारि रूपाणि गंगाया इति कीर्तितम् ॥ ११ ॥ आदित्याच्चैव गंगातः पर्जन्यः समुदाहृतः ॥ प्रव
र्षति सुवैराग्यं ह्यतः पर्जन्यनामकम् ॥ १२ ॥ शरंवराय पंचजन्याच्च पंच हित्वा जग्ध्वा गर्वकं षट्क्रमेण ॥ स्ववाणस्य स्वहृदि संस्थितस्य भजेत्सदा नैव
भक्तिं विषं च ॥ १३ ॥ लिंगं पुष्टं नैव कार्यं सदैव लिंगं पुष्टं कार्यमेवं सदापि ॥ योनौ सक्तिर्नैव कार्या सदापि योनौ मुक्तेऽसंगतो याति मुक्तिम् ॥ १४ ॥
वैराग्यमेवं प्रकरोत्येव नित्यमतःपर्जन्यस्त्वंतकः पक्षिवर्य ॥ एतावता शरभाख्यो महात्मा स चांतरो स तु पर्जन्य एव ॥ १५ ॥ शश्वत्केशा यस्य
गात्रे खगेंद्र प्रभास्यंते शरभाख्यो पयोतः ॥ यमस्य भार्या श्यामला या खगेंद्र यस्मात्सदा कलिभार्याप्रिया च ॥ १६ ॥ मत्वा सम्यक् मानसं या करोति
ह्यतश्च सा श्यामलासंज्ञकाभूत् ॥ मलं वक्ष्ये हरिभक्तेर्विरोधी सुलोहपात्रे सन्निधानं च तस्य ॥ १७ ॥ तद्वैष्णवैस्त्याज्यमेवं सदैव वस्त्रं दग्धं
सन्धिजं चैव जन्यम् ॥ १८ ॥ चिकित्सितं परदुःखं खगेंद्र हरेर्भक्तैस्त्याज्यमेवं सदैव ॥ १८ ॥ नोचाश्च ते हरिभक्तेर्विहीनास्तेषां संगो नैव कार्यः
सदापि ॥ पुराणसंपर्कविसर्जिनं च पुराणतालं च पुराणवस्त्रम् ॥ १९ ॥ सुजीर्णकंथाजिनमेखलं च यज्ञोपवीतं च कलिप्रियं च ॥ प्रियं गृहं चोर्णविता
नकं च सामित्कुशैः पूरितं कुत्सितं च ॥ २० ॥ सर्वं चैतत्कलिभार्याप्रियं च नैव प्रियं शार्ङ्गपाणेः कदाचित् ॥ कांस्ये सुपक्वं यावनालस्य

चान्नं तुषः पिण्याकं तुम्बबिल्वे पलांडुः ॥ २१॥ दीर्घं तक्रं स्वादुहीनं कटूष्णमेते सर्वे कलिभार्याप्रियाश्च ॥ सुदुर्मुखं निंदनं चार्यजानां सतोवमत्यात्म
जानां प्रसह्य ॥ २२ ॥ सुपीडनं सर्वदा भर्तृवर्गे गृहस्थितव्रीहिवस्त्रादिचौर्यात् ॥ प्रकीर्णभूतान्मूर्धजान्संदधानं करैर्युतं देवकलिप्रियं च ॥२३॥ इत्यादि
सर्वं कलिभार्याप्रियंच सुनिर्मलं प्रकरोत्येव सर्वम् ॥ अतश्च सा श्यामलेति स्वसंज्ञामवाप सा देवकी संबभूव ॥ २४ ॥ युधिष्ठिरस्यैव बभूव पत्नी
संभाविता तत्र च देवकी सा ॥ चंद्रस्य भार्या रोहिणी वै तदेयमश्विन्यादिभ्योऽह्यधिका सर्वदैव ॥ २५ ॥ रोणीं धृत्वा रोहति योग्यस्थानं तस्माच्च
सा रोहिणीति प्रसिद्धा ॥ आदित्यभार्या नाम संज्ञा खगेंद्र ज्ञेया सा नारायणस्य स्वरूपा ॥ २६ ॥ संजानातीत्येव संज्ञामवाप संज्ञेति लोके सूर्य
भार्या खगेंद्र ॥ ब्रह्माण्डस्य ह्यभिमानी तु देवो विराडिति ह्यभिधामाप तेन ॥ २७ ॥ गंगादिषट्कं सममेव नित्यं परस्परं नोत्तमं नाधमं च ॥ प्रधा
नाग्नेः पाविकान्यैव गंगा सदा शुभा नात्र विचार्यमस्ति ॥ २८ ॥ आसां ज्ञानात्पुण्यमाप्नोति नित्यं सदा हरिः प्रीयते केशवोलम् ॥ गंगादिभ्यो ह्यवरा
ह्यग्निजाया स्वाहासंज्ञाधिगुणा नैव हीना ॥ २९ ॥ स्वाहाकारो मन्त्ररूपाभिमानी स्वाहेति संज्ञामाप सदैव वींद्र ॥ अग्नेर्भार्यातो बुद्धिमान् संबभूव
ब्रह्माभिमानी चंद्रपुत्रो बुधश्च ॥३०॥ बुद्धयाहरद्धै राष्ट्रजातं च सर्वं धृतं त्वतो बुधसंज्ञामवाप ॥ एवं चाभूदभिमन्युर्महात्मा सुभद्राया जठरे ह्यर्जुनाच्च
॥ ३१ ॥ कृष्णस्य चंद्रस्य यमस्य चांशैः स संयुतस्त्वश्विनोर्वै हरस्य ॥ स्वाहाधमश्चंद्रपुत्रो बुधस्तु पादारविंदे विष्णुदेवस्य भक्तः ॥ ३२ ॥ नामा
त्मिका त्वश्विभार्या उषा नाम प्रकीर्तिता ॥ बुधाधमा सा विज्ञेया स्वाहा दशगुणाधमा ॥ ३३ ॥ नकुलस्य भार्या मागधस्यैव पुत्री शल्यात्मजा
सहदेवस्य भार्या ॥ उभे ह्येते अश्विभार्या ह्युषापि उपासते षड्गुणं विष्णुमाद्यम् ॥ अतोऽप्युषासंज्ञका सा खगेंद्र अनंतराञ्छृणु वक्ष्ये महात्मन् ॥
॥३४॥ततः शक्तिः पृथिव्यात्मा शनैश्चरति सर्वदा ॥ अतः शनैश्चरो नाम उषायाश्च दशाधमाः॥३५॥कर्मात्मा पुष्करो ज्ञेयः शनेरथ यमो मतः॥ नया
भिमानी पुरुषः किंचिन्नम्रो दशावरः ॥ ३६ ॥ हरिप्रीतिकरो नित्यं पुष्करे क्रीडते यतः ॥ अतस्तु पुष्कलो नाम लोके स परिकीर्तितः ॥ ३७ ॥ हरि
प्रीतिकरान्धर्मान्वक्ष्ये शृणु खगाधिप ॥ प्रातःकाले समुत्थाय स्मरेन्नारायणं हरिम् ॥ ३८ ॥ तुलसीवंदनं कुर्याच्छ्रीविष्णुं संस्मरेत्खग ॥ विण्मूत्रोत्स
र्गकाले च ह्यपानात्मककेशवम् ॥ ३९ ॥ त्रिविक्रमं शौचकाले गंगापानकरं हरिम् ॥ दंतधावनकाले तु चंद्रांतर्यामिणं हरिम् ॥ ४० ॥ मुखप्रक्षालने
काले माधवं संस्मरेत्खग ॥ गवां कंडूयने चैव स्मरेद्गोवर्धनं हरिम् ॥ ४१ ॥ सदा गोदोहने काले स्मरेद्गोपालवल्लभम् ॥ अनंतपुण्यार्जितजन्मकर्मणां
सुपक्वकाले च खगेन्द्रसत्तम ॥ ४२ ॥ स्पर्शे गवां चैव सदा नृणां वै भवत्यतो चार्यमस्ति ॥ यस्मिन् गृहे नास्ति सदोत्तमा च गौर्यगणे श्रीतु

लसी च नास्ति ॥४३॥ यस्मिन् गृहे देवमहोत्सवश्च यस्मिन् गृहे श्रवणं नास्ति विष्णोः ॥ तत्संसर्गाद्याति दुःखादिकं च तस्य स्पर्शो नैव कार्यः कदा
पि ॥ ४४ ॥ गोस्पर्शनविहीनस्य गोदोहनमजानतः ॥ गोपोषणविहीनस्य प्राहुर्जन्म निरर्थकम् ॥४५॥ गोग्रासमप्रदातुश्च गोपुष्टिं चाप्यकुर्वतः॥गतिर्ना
स्त्येव नास्त्येव ग्रामचांडालवत्स्मृतः ॥४६॥ वत्सस्यस्य स्तनपाने च बालकृष्णं तु संस्मरेत्॥दधिनिर्मथने चैव मंथाधारं स्मरेद्धरिम् ॥४७॥ मृत्तिकास्नान
काले तु वराहं संस्मरेद्धरिम्॥पुंड्राणां धारणे चैव केशवादींश्च द्वादश॥४८॥मुद्राणां धारणे चैव शंखचक्रगदाधरम्॥पद्मं नारायणीं मुद्रां कुद्धोलकादींश्च संस्म
रेत॥४९॥श्रीरामसंस्मृतिं चैव संध्याकाले खगोत्तम॥अच्युतानंतगोविंदाञ्छ्राद्धकाले च संस्मरेत् ॥ ५० ॥प्राणादिकपंचहोमेचाऽनिरुद्धादींश्च संस्मरेत्॥
अन्नाद्यर्पणकाले तु वासुदेवं च संस्मरेत ॥ ५१ ॥ अपोशनस्य काले तु वायोरंतर्गतं हरिम् ॥ वस्त्रधारणकाकाले तु उपेंद्रं संस्मरेद्धरिम् ॥ ५२ ॥
यज्ञोपवीतस्य च धारणे तु नारायणं वामनाख्यं स्मरेत्तु ॥ आर्तिक्यकाले च तथैव विष्णोः सम्यक् स्मरेत्पर्शुरामाख्यविष्णुम् ॥ ५३ ॥ अपोशने
वैश्वदेवस्य काले तदन्यहोमादिषु भस्मधारणे ॥ स्मरेत्तु भक्त्या परमादरेण नारायणं जामदग्न्याख्यरामम् ॥ ५४ ॥ त्रिवारतीर्थग्रहणस्य काले कृष्णं
रामं व्यासदेवं क्रमेण ॥ शंखोदकस्योद्धरणे चैव काले मुकुंदरूपं संस्मरेत्सर्वदैव ॥ ५५ ॥ ग्रासेग्रासे स्मरणं चैव कार्यं गोविंदसंज्ञस्य विशुद्धमन्नम् ॥
एकैकभक्ष्यग्रहणस्य काले सम्यक् स्मरेदच्युतं वै खगेंद्र ॥ ५६ ॥ शाकादीनां भक्षणे चैव काले धन्वंतरिं संस्मरेच्चैव नित्यम् ॥ तथा परान्नस्य
च भोगकाले स्मरेच्च सम्यक् पांडुरंगं च विष्णुम् ॥ ५७ ॥ हैयंगवीनस्य च भक्षणे वै सम्यक् स्मरेत्तांडवाख्यं च कृष्णम् ॥ दध्यन्नभक्षे परमं
पुराणं गोपालकृष्णं संस्मरेच्चैव नित्यम् ॥ ५८ ॥ दुग्धान्नभोगे च तथैव काले सम्यक् स्मरेच्छ्रीनिवासं हरिं च ॥ सुतैलसर्पिःषु विपक्वभक्षसंभोजने
संस्मरेद्व्यंकटेशम् ॥५९॥ द्राक्षासुजम्बूकदलीरसालनारिङ्गदाडिम्बफलानि चारु ॥ स्मरेत्तु रम्भोत्तमनारिकेलधात्रीसुभोगे खलु बालकृष्णम् ॥ ६० ॥
सुपानकस्यैव च पानकाले सम्यक् स्मरेन्नारसिंहाख्यविष्णुम् ॥ गंगामृतस्यैव च पानकाले गंगातातं संस्मरेद्विष्णुमेव ॥६१॥ प्रयाणकाले संस्मरेत्ता
र्क्ष्यवाहं नारायणं निर्गुणं विश्वमूर्तिम् ॥ पुत्रादीनां चुंबने चैव काले सुवेणुहस्तं संस्मरेत्कृष्णमेव ॥ ६२ ॥ सुसंगकाले स्वस्त्रियश्चैव नित्यं गोपी
कुचद्वन्द्वविलासिनं हरिम् ॥ तांबूलकाले संस्मरेच्चैव नित्यं प्रद्युम्नाख्यं वासुदेवं हरिं च ॥ ६३ ॥ शय्याकाले संस्मरेच्चैव नित्यं संकर्षणाख्यं
विष्णुरूपं हरिं च ॥ निद्राकाले संस्मरेत्पद्मनाभं कथाकाले व्यासरूपं हरिं च ॥ ६४ ॥ सुगानकाले संस्मरेद्वेणुगीतं हरिं हरिं प्रवदेत्सर्वदैव ॥

श्रीमत्तुलस्याश्छेदने चैव काले श्रीरामरामेति च संस्मरेत्तु ॥ ६५ ॥ पुष्पादीनां छेदने चैव काले सम्यक स्मरेदेत्कपिलाख्यं हरिं च ॥ प्रदक्षिणे गारुडांतर्गतं च हरिं स्मरेत्सर्वदा वै खगेंद्र॥६६॥प्रणामकाले देवदेवस्य विष्णोः शेषांतस्थं संस्मरेच्चैव विष्णुम्॥सुनोतिकाले संस्मरेन्नारसिंहं नारायणं संस्मरेत्सर्वदापि ॥ ६७ ॥ पूर्त्तिर्यदा क्रियते कर्मणां च सम्यक् स्मरेद्वासुदेवं हरिं च ॥ एवं कृतानि कर्माणि हरिप्रीतिकराणि च ॥ ६८ ॥ सम्यक् प्रकुर्वन्नेतानि पुष्करो हरिवल्लभः ॥ ६९ ॥ एतस्मादेव पक्षीश कर्म यत्समुदाहृतम् ॥ पुष्कराख्यानमतुलं शृणोति श्रद्धयान्वितः ॥ हरिप्रीतिकरे धर्मे प्रीतियुक्तो भवेत्सदा ॥ ७० ॥ इति श्रीगारुडे महापुराणे उत्तरखण्डे तृतीयांशे ब्रह्मकाण्डे कृष्णगरुडसंवादे तत्त्वरहस्यं नामैकोनत्रिंशोध्यायः ॥ २९ ॥ समाप्तमिदं गरुडमहापुराणम् ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥



इति श्रीगरुडमहापुराणं समाप्तम् ।

# श्रीगरुडमहापुराणम् : : श्लोकानुक्रमणी

[आ=आचार-खण्ड : : प्रे=प्रेत-खण्ड : : उ=उत्तर-खण्ड]

## ई

ऊ

## क

क्ष

## घ

### झ



### त

म

र

## ल

॥ इति शुभम् ॥